*Kendriya Sanskrit Vidyapeeṭha Series No. 20*

# TATTVACINTĀMANI

OF

## GANGEŚOPĀDHYĀYA

WITH

## PRAKĀŚA OF RUCIDATTAMIŚRA

AND

## NYĀYAŚIKHĀMAṆI ON PRAKĀŚA

OF

## RĀMAKṚṢṆĀDHVARIN

**VOLUME I — PRATYAKṢAKHAṆḌA**

CRITICALLY EDITED BY

N. S. RAMANUJA TATACHARYA

Reader, Kendriya Sanskrit Vidyapeetha, Tirupati.

with a Foreword by

Dr. V. RAGHAVAN

Ex. Chairman, Kendriya Sanskrit Vidyapeetha, Tirupati



KENDRIYA SANSKRIT VIDYAPEETHA,

TIRUPATI

1939

केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला—२०

गङ्गेशोपाध्यायविरचितः

# तत्त्वचिन्तामणिः

रामकृष्णाध्वरिकृतन्यायशिखामणिभूषितेन

रुचिदत्तमिश्रविरचितप्रकाशेन अलंकृतः

प्रत्यक्षखण्डात्मकः प्रथमो भागः

केन्द्रीयसंस्कृतविद्यापीठे स्नातकोत्तरसंशोधनविभागे रीडर्स्थानमधितिष्ठता

एन्. एस्. रामानुजताताचार्येण

पाठभेदादिभिः संशोध्य संपादितः

केन्द्रीयसंस्कृतविद्यापीठस्य भूतपूर्वाध्यक्षैः

डा० वे. राघवन् महाशयैः

अनुगृहीतेन आमुखेन स्वलंकृतः



केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति.

१९७९

# TABLE OF CONTENTS

# FOREWORD

It is a matter of satisfaction to the writer of this Foreword that the programme that he drew up during his chairmanship, for development of the Research and Publication work of the Central Sanskrit Institute, Tirupati, is being gradually implemented, despite delays and difficulties. The work, of which the first part is now being introduced, was among the rare and important texts in mss. selected for critical edition and study.

It was in the beginning of the thirties when I was in charge of the preparation of the new descriptive catalogues of the Sarasvati Mahal, Tanjore that I first noted the commentaries edited here. Dharmarājādhvarin and his son Rāmakṛṣṇādhvarin were wellknown for their work in Advaita, their *Vedānta Paribhāṣā* and its commentary having gained a secure place in the curriculum of studies in *Advaita* all over India, as a regular 'must' for those who begin the study of *Advaita*. The mss. in the Sarasvati Mahal Library showed that the father and son were equally reputed for their work in *Navya Nyāya* and what is more, that along with them, there were others like Vaidyanātha Dīkṣita and Tārkṣyanārāyaṇa, on the basis of whose works we may say that there flourished a Tanjore school of *Navya Nyāya*.

The contribution of Dharmarājādhvarin and Rāmakṛṣṇādhvarin to *Navya Nyāya* consists of their commentaries on the *Prakāśa* of Rucidatta on the *Tattvacintāmaṇi*. The son dealt with the *Pratyakṣa-khaṇḍa* in his *Nyāya-śikhāmaṇi* and the father with *Anumāna* etc., in his *Tarkacūḍāmaṇi*. Dharmarāja commented also on Śaśadhara and compiled a *Yuktisaṃgraha*, mss. of both of which are preserved in Tanjore. Not only does the present effort offer pandits and scholars editions of hitherto unpublished commentaries on *Maṇi* and *Prakāśa* but it offers also two of the best commentaries which display wide and deep erudition in *Navya Nyāya*. The citations of works and authors and the identifications of views referred to

anonymously by Gaṅgeśa and Rucidatta show that these South Indian commentators had a thorough mastery of *Navya Nyāya* and its development at the hands of the galaxy of Maithila and Gauḍa logicians. There are several rare names among the works and authors quoted or criticised here. Another aspect—a more noteworthy one—about these two commentators is their critical acumen and the freedom with which they criticise earlier commentaries on the *Maṇi* like the *Prakāśa* or the super-commentaries. Dharmarājādhvarin mentions with pride, in the introductory verses in his *Vedānta Paribhāṣā*, his commentary on the *Maṇi-Prakāśa* being a critique of ten previous commentaries (*Daśa-ṭīkā vibhañjanī*). Rāmakṛṣṇa shows the same critical flair as his father. Rucidatta himself has shown the path by criticising, where he found necessary, the commentary of his teacher Jayadeva, and Rāmakṛṣṇa, likewise, while elucidating Rucidatta, expresses his disapproval of certain arguments of Rucidatta. (See especially pp 577–8 : *Vastutastu Jayadeva-mata-niravadyatvāya Rucidattamiśrokto doṣanirāsaprakāro nānusartavyaḥ... Tasmād Jayadeva-matam niravadyam iti ayuktam*).

The *Navya Nyāya* literature is an extensive one ; study and appreciation of this have been hampered by lack of editions of the texts of this school or by their old editions from Calcutta or Banaras having become out of print or not easily available. From this point of view too, the present endeavour of the Central Sanskrit Institute, Tirupati, is a great help to the promotion of studies in this branch. The present edition has used for the *Prakāśa* two new mss. from the Sarasvati Mahal, Tanjore and the Madras Government Oriental Mss. Library; for Rāmakṛṣṇa's commentary on *Pratyakṣa*, four mss. have been utilised, from Mysore, Tanjore, Adyar and Baroda. The present publication, extending to 888 pages, gives only the *Pratyakṣa-khaṇḍa* of *Maṇi* and *Prakāśa* with Rāmakṛṣṇa's commentary. Subsequent volumes will give the *Anumāna* and other *Khaṇḍas* with Dharmarāja's commentary.

The emergence and development of *Navya Nyāya* has been dealt with by several scholars. The editor of the present text gives a brief account of the same, in his Sanskrit Introduction. Of Gaṅgeśa, his age and works, of his followers and commentators, and of Rucidatta, Dharmarāja and Rāmakṛṣṇa in particular,

the editor has furnished adequate historical and chronological information. The young editor, who has mastery of four *Śastras* to his credit, has already made a mark in different Pandit-gatherings and received high cash awards from Sri Sankaracharya of Kanchi Kāmakoṭi Pīṭha and the revered Acharyas of other Maths. The title of 'Tarka Vācaspati' conferred on him last year by the Head of the Dvaita Math at Mantrālaya is a befitting recognition of his proficiency in *Nyāya*. The editor has prepared separately a comparative and evaluatory study of the *Pratyakṣa-khaṇḍa*; it is hoped that he will prepare similar studies of the other *Khaṇḍas* and thus supplement and enrich his editorial work on the *Maṇi*, *Prakāśa* and its *commentaries*. In the new method followed by Gaṅgeśa, not only has the whole field of *Nyāya-Vaiśeṣika* been re-ordered under the four *Pramāṇas*, but the subjects are also cast in the form of a series of *Vādas*. In the course of the *Vadas*, a wide range of connected ideas, not merely of logical significance but also of philosophical value, crop up and are considered; and unless a full descriptive, critical and evaluatory study of these ideas and concepts are made, the contributions of Gaṅgeśa and his followers could not be fully understood and appreciated.

The edition of the whole *Maṇi* and *Prakāśa* and the two commentaries is a prodigious undertaking and the editor deserves to be congratulated for his laborious work on this. It is hoped that with experience gained in bringing out the first volume, and with greater facilities provided for the work, he will bring out the others more quickly. Indeed scholars, like the writer of this Foreword, are naturally looking forward eagerly to reading the famous Dharmarāja's *Tarkacūḍāmaṇi* on *Anumāna*, *Upamāna* and *Śabda Khaṇḍas* about which Dharmarāja himself has raised such high hopes.

V. RAGHAVAN

# विषयानुक्रमणिका

—: * :—

# उपोद्घातः

## विद्यास्थानानि

प्राक्तने काले अङ्गिभूताश्चत्वारो वेदाः, शिक्षादीनि षडङ्गानि, पुराणन्याय-मीमांसाधर्मशास्त्ररूपाणि चत्वारि उपाङ्गानि चेत्याहृत्य विद्यास्थानानि चतुर्दशतया पर्यगण्यन्तेति याज्ञवल्क्यस्मृत्यादिभ्योऽवगम्यते[1]। तत्र प्रधानभूतानां चतुर्णां वेदानामर्थावगमोपायतयैव अङ्गानामुपाङ्गानां च प्रवृत्तिरित्यपि प्रतीमः। तत्र षण्णामङ्गानां मध्ये आद्यानि त्रीणि प्राधान्येन वेदाक्षरानुपूर्वीसंरक्षणार्थं प्रावर्तन्त। तथा हि—एकैकस्याप्यक्षरस्य स्वरमात्रास्थानादिकं विविच्य प्रतिपादयितुं प्रवृत्ता शिक्षा। अस्या एव पर्यायः प्रातिशाख्यमिति। प्रकृतिप्रत्ययविवेचनपुरस्सरं पदानां निष्पादने व्याकरणं व्याप्रियत। मन्त्राः येषु वृत्तेषु निबद्धाः तेषां वृत्तानां निरूपणार्थं छन्दःशास्त्रं प्रववृते इति। निरुक्तं पदानामर्थविशेषनिर्धारणाय उपक्लृप्तम्। अनुष्ठानकालविशेषरूपार्थनिर्णयाय ज्योतिषं प्रावर्तत। कर्मणां अनुष्ठानक्रमबोधने कल्पः कल्पते। एवमिमानि षडङ्गानि भगवतो वेदस्य पदाक्षरादीनामर्थतः स्वरूपतश्च विपरिलोपो यथा न भवेत् तथा परिरक्षणार्थं प्राक्तनैर्महद्भिरवातारिषत।

एतावतामङ्गानां सहकारेणापि अर्थवादबहुलस्य अतिगम्भीरस्य वेदस्यार्थं यथावदल्पज्ञो न निश्चेतुं प्रभवतीति पर्यालोच्य अनुष्ठातव्यान् वेदनिगूढान् धर्मान् प्रकाशयितुमवतारितं धर्मशास्त्रम्। वेदस्तावत् प्रायः सर्वत्र किंचित्कर्म कर्तव्यत्वे-नोपदिश्य तत्र सन्तमसन्तं वा कंचन हेतुं प्रतिपादयति। 'यथा शूर्पेण जुहोति,

1. या. स्मृ. 1-3.

तेन ह्यन्नं क्रियते' इत्यादिः। तादृशस्य वेदभागस्य अर्थवाद इति संज्ञा। प्राधान्येन तस्मिन्नर्थवादभागे निगूढानर्थान् सुहृदुपदेशक्रमेण निरूपयितुं पुराणानि प्रादुरभूवन्। एवंरीत्या वेदप्रामाण्ये परंपरया रक्ष्यमाणेऽपि तत्प्रामाण्यमाक्षिपता-मवैदिकानां समुचितं प्रतिसमाधानमन्तरा वेदप्रामाण्यं सुस्थिरं न स्यादिति पर्यालोच्य प्राञ्चः प्रमाणाप्रमाणविवेचनार्थं न्यायविस्तराख्यं शास्त्रं प्रावीवृतन्। एतावत्यापि साधनपरंपरया वर्ण-पद-पदार्थविषयकसंशये अपाकृतेऽपि वेद-वाक्यार्थविषये यत्र संदेहः तत्र निर्णयोत्पादने समर्थानां न्यायानां प्रतिपादकं किमपि शास्त्रमावश्यकमिति मत्वा अस्मत्पूर्वपुरुषाः वेदवाक्यार्थनिर्णायकन्याय-कलापप्रथनात्मकं मीमांसाशास्त्रमपि प्रादुरभावयन्।

तथा च एतैर्दशभिः अङ्गोपाङ्गात्मकैरुपकरणैः सहकृता एव चत्वारो वेदाः गुरुमुखाद्यथावदधीताः सन्तः धर्ममात्मस्वरूपं च बोधयितुं प्रभवन्तीति पूर्वतनानां निश्चयो विश्वासश्च आसीत् अद्याप्यनुवर्तते च।

## विद्यास्थानानामनादित्वम्

यथा चत्वारो वेदाः अनादयः तथा अङ्गोपाङ्गान्यपि अनादीनि। न कदाप्यङ्गोपाङ्गविकलतया वेदा आसन्। तत्र वेदाः स्वरूपत एवानादयः, अङ्गोपाङ्गानि तु प्रवाहतोऽनादीनीति भेदः। पाणिनीयव्याकरणात्प्रागन्यदीयं व्याकरणं बभूव, ततः प्रागन्यदीयमित्येवं व्याकरणं सर्वदापि किमप्यभूदेव। एवमन्यान्यप्यङ्गानीत्येवं भारतीयानां सिद्धान्तः।

किं च वेदेष्वेव सर्वेषामपि विद्यास्थानानामुल्लेखो वर्तते। 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्' इति मुण्डकोपनिषदि[1], 'तस्यैतस्य महतो भूतस्य निःश्वसित-मेवैतत् ऋग्वेदो यजुर्वेदः सामवेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि' इति सुबालोपनिषदि[2] च श्रवणात्।

---

1. मु. उ. 1-1-5
2. सु. उ. 2-2

केचित्तु शिक्षाव्याकरणादयः इतिहासपुराणादीनि च वेदान्तर्गता एव भागविशेषा इत्याशेरते। अत एव तन्त्रवार्तिके[1]—

'वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः॥'

इति श्लोकेन उक्तं पक्षं प्रत्यपादयन्। तथापि तेषां वेदान्तर्गतत्वे ऋग्वेदः यजुर्वेद इत्यादिवेदवाचकशब्देनैव संग्रहसंभवात् पृथक् तेषां निर्देशो नातीवोपपन्नो भवति। अतो वेदातिरिक्तानि शिक्षादीन्यपि प्रवाहतः सर्वदा विद्यमानानीति पक्ष एव समीचीनः।

अत एव कल्पसूत्राधिकरणे (पू.मी. 1–3–6) कल्पसूत्राणां 'अहरहः स्वाध्यायमधीयीत' इत्युपक्रम्य 'यदृचोऽधीते यद्यजूंषि यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान्' इति [2]नित्यब्रह्मयज्ञविधिविषयत्वान्यथानुपपत्त्या वेदत्वं भवतु इति पूर्वपक्षं प्रापय्य, दृढकर्तृस्मरणेन पौरुषेयत्वनिश्चयान्न तेषां वेदत्वम्। प्रतिमन्वन्तरं चैवंविधानां ग्रन्थानां सत्त्वान्नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिरिति सिद्धान्तमाहुः। अयं सिद्धान्तः समानन्यायात् व्याकरणादीनामपि समानः। आहुश्च तस्मिन्नधिकरणे शास्त्रदीपिकायां पार्थसारथिमिश्राः[3]—

'एवंविधाश्च ग्रन्थाः प्रतिमन्वन्तरं येन केनचित्
क्रियमाणाः सर्वं कालमविच्छिन्नपारंपर्येण प्रवर्तन्ते' इति।

तत्र सोमनाथीया मयूखमालिका[4]—

'प्रवाहनित्यतया नित्यब्रह्मयज्ञविधिविषयत्वमुपपन्नमित्याह—एवंविधा इति' इति। तस्याधिकरणस्य न केवलं कल्पसूत्राण्येव विषयः, अपि तु वेदातिरिक्तानि सर्वाणि विद्यास्थानान्यपीत्ययं विषयोऽपि शास्त्रदीपिकायाम्[5]—

'तदेतानि चत्वार्यपि विचारस्थानानि सह विचार्यन्ते' इत्यनेन सूचितः। तत्रत्या मयूखमालिकापि—

---

1. त. वा. पृ. 265
2. तै. आ. 2-10
3. शा. दी. पृ. 39
4. शा. दी. व्या. म. मा. पृ. 39
5. शा. दी. पृ. 39

'चत्वारीति । कल्पसूत्र - मन्वादिवचन - अङ्ग - शाक्यादिग्रन्थरूपाणीत्यर्थः ' इति अत्रानुसन्धेया । भाट्टदीपिकादावपि क्षुण्णोऽयं विषयः ।

न्यायमञ्जरीकारा[1] अपि—

'नन्वक्षपादात्पूर्वं कुतो वेदप्रामाण्यनिश्चय आसीत् ?
अत्यल्पमिदमुच्यते । जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः ?
पाणिनेः पूर्वं केन पदानि व्युत्पादितानि ? पिङ्गलात्पूर्वं
केन च्छन्दांसि रचितानि ? आदिसर्गात्प्रभृति
वेदवदिमा विद्याः प्रवृत्ताः । संक्षेपविस्तरविवक्षया तु
तांस्तांस्तत्र कर्तॄनाचक्षते '

इति विद्यास्थानानां प्रवाहानादित्वं समर्थयांबभूवुः ।

विद्यास्थानमिति शब्दस्य पुरुषार्थसाधनज्ञानोपाय इत्यर्थः । तदुक्तं न्यायमञ्जर्याम्[2]—

'वेदनं विद्या, तच्च न घटादिवेदनम्, अपि तु
पुरुषार्थसाधनवेदनम् । विद्यायाः स्थानमाश्रयः
उपाय इत्यर्थः '

इति ।

## न्यायविस्तरस्य उपाङ्गान्तर्भावः

'शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥'

इति, 'षडङ्गमेके ' (आपस्तम्ब) इति, 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ' इति च शिक्षादिषु षट्सु 'अङ्गम्' इति शब्दस्य प्रयोग उपलभ्यते ।

---

1. न्या. म. पृ. 5

2. न्या. म. पृ. 4

'उपाङ्गम्' इति शब्दस्तु यद्यपि पुराणन्यायमीमांसाधर्मशास्त्रेषु न प्रयुज्यते प्राक्तनग्रन्थेषु, तथापि अङ्गानां षट्त्वकीर्तनेन एतेषामङ्गत्वे व्यावर्तिते अङ्गिभूतेभ्यो वेदेभ्यः पृथङ्निर्देशेन अङ्गित्वे च व्युदस्ते अर्थादुपाङ्गत्वमेषां सिध्यतीति उपाङ्गपदेन पुराणादीनि चत्वारि विद्यास्थानानि केचिद्व्यपदिशन्ति । अत एव विश्वनाथपञ्चाननः न्यायसूत्रवृत्तौ[1]—

'मीमांसान्यायतर्काश्च उपाङ्गः परिकीर्तितः ।'

इति पुराणवचनमुदाजहार । कथं केषांचिदङ्गत्वेन परिगणनं, केषांचिच्च उपाङ्गत्वेन परिगणनं क्रियत इति शङ्कायाम्, केचिदाहुः—यत् वेदस्य स्वरूपपरिज्ञाने तदर्थप्रमितौ वा साक्षादुपयुज्यते तदङ्गम्, यत्तु एतस्मिन् उभयस्मिन्नपि प्रयोजने औदासीन्यं बिभ्रत् वेदार्थोपबृंहणाय प्रवृत्तं पुराणादिकं तदुपाङ्गम् इत्यभिधीयत इति ।

परं तु मीमांसायामुपाङ्गत्वं दुर्घटं भवति । इतराणि हि सर्वाणि शिक्षादीन्यङ्गानि वैदिकपद-पदार्थप्रतिपादनोपरतानि भवन्ति । मीमांसा तु वेदवाक्येषु प्रसक्तान् शङ्काविशेषानपाकृत्य निर्विचिकित्सवाक्यार्थबोधने महान्तमुपकारमातनुते । अत एव धर्मप्रमाकरणभूतस्य वेदस्य मीमांसा इतिकर्तव्यता भवतीत्याह स्म कुमारिलः[2]—

'धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति ।

फलसाधने प्रवृत्तस्य करणस्य यदुपकारकं तत् इतिकर्तव्यता इति कथ्यते । वेदेन धर्मप्रमितिरूपे कार्ये जननीये मीमांसायाः उपकारकत्वकथनात् शिक्षादिभ्यो मीमांसा अतिशयिता इति ज्ञायते । सति चैवं तस्याः उपाङ्गमध्ये परिगणनं कथं संजाघटीति ? तस्मात् अङ्गेषु षट्त्वसंख्यायाः व्यवस्थितत्वात् तदनाक्रान्तानां मीमांसादीनां वेदोपजीवकानामुपाङ्गत्वव्यपदेशः समजनीति समाधानमेव युक्तरूपं प्रतिभाति । तत्सिद्धं न्यायदर्शनस्यापि उपाङ्गान्तर्भावः इति ।

---

1. न्या. सू. वृ. 1—1—1

2. अयं श्लोकः मनुस्मृतिव्याख्यायां कुल्लूकभट्टेन कुमारिलस्येति प्रोक्तः । मनुस्मृ. 12—109

## न्यायविस्तरस्य विद्यास्थानेषु स्थानम्

उक्तमस्माभिरेतावता अङ्गानामुपाङ्गानां च दशानां विद्यास्थानानां वेदोपकारकत्वेन प्रामाण्यं प्राचां संमतमिति । तत्र न्यायविस्तरः कया विधया वेदस्योपकरोतीति किंचिद्विचार्यते । न्यायमञ्जरीकाराः[1]–न्यायविस्तरस्तु 'मूलस्तम्भभूतः सर्वविद्यानां, वेदप्रामाण्यहेतुत्वात् । वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्तव्ययायासादिसाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः ? किं वा तदानीं स्वामिनि परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यम् ? तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम्' इति वदन्तः वेदाप्रामाण्यवादनिराकरणपूर्वकं वेदप्रामाण्यसमर्थनं कुर्वन् न्यायविस्तरः वेदस्योपकरोतीत्यावेदयन्ति । ननु मीमांसाशास्त्रेऽपि वेदप्रामाण्यस्य समर्थनात् कृतं न्यायविस्तरेण इति चेत्—सत्यम् । अर्थविचारः एव मीमांसायाः मुख्यं कृत्यम् । न तु प्रमाणविचारः । प्रमाणान्यधिकृत्य तु न्यायविस्तर एव विचारयितुमधिकरोति । पृथक्प्रस्थाना हि चतुर्दश विद्याः । तथा च मीमांसा वाक्यार्थविद्या न प्रमाणविद्या इति प्राहुः जयन्तभट्टाः[2] ।

न्यायभाष्यकाराः[3]—'सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥'

इति न्यायविस्तरस्योपयोगप्रकारमाहुः । एतच्छास्त्रव्युत्पादितानि प्रमाणादीन्युपव्यैव इतराणि विद्यास्थानानि प्रवर्तन्ते, अतः सर्वविद्यानां न्यायविस्तरः प्रदीपो भवति । इतरासां विद्यानां यानि कर्माणि प्रतिपाद्यानि अग्निहोत्रादीनि तेषां प्रमितौ न्यायशास्त्रमुपायः । एतच्छास्त्रव्युत्पादिततर्कपरिशोधितप्रमाणप्रकाशितान् हि धर्मान् इतरा विद्याः प्रतिपादयन्ति । एवं सर्वधर्माणामाश्रयः धर्मद्वारेण विद्यानामुपकारक इति अर्थशास्त्रे विद्योद्देशनामके प्रकरणे परिकीर्तितेत्यर्थः ।

---

1. न्या. म. पृ. 3
2. न्या. म. पृ. 4
3. न्या. भा. 1 - 1 - 1 पृ. 5

एतच्छास्त्रप्रतिपादितषोडशपदार्थान् सर्वा अपि विद्या उपजीवन्ति। अतः सर्वविद्यानां प्रदीपवत् प्रकाशाधायकमिदं शास्त्रमिति भाष्यकृतामाशयः।

## न्यायशास्त्रनामानि

इदं न्यायदर्शनम्, आन्वीक्षिकी, न्यायविस्तरः, न्यायशास्त्रम्, न्यायविद्या, तर्कशास्त्रम्, हेतुशास्त्रम्, प्रमाणशास्त्रम्, वाकोवाक्यम्, योगः इत्यादिशब्दैर्व्यपदिश्यते। अन्वीक्षिकी इति व्यपदेशमधिकृत्य भाष्यकारः[1]—

'प्रत्यक्षागमाश्रितमनुमानं सान्वीक्षा। तया
प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्'

इत्याह। प्रत्यक्षागमाश्रितमित्यस्य प्रत्यक्षागमाविरोधीत्यर्थः। तेन

'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥'

इति मनुस्मृतौ[2] तर्कपदेन अनुमानात्मिका अन्वीक्षा विवक्षितेति भाष्यकारोऽभिप्रैति। अयं चान्वीक्षिकीशब्दः 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती' इति कौटिलीये अर्थशास्त्रे,

'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥'

इति मनुस्मृतौ[3] च प्रयुक्तः। अनुमानप्रमाणव्युत्पादकं शास्त्रमान्वीक्षिकी इत्युक्तं भवति।

न्याय इति शब्दस्य 'प्रमाणैरर्थपरीक्षणम्' इति भाष्ये[4] विवरणं दृश्यते। 'समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः' इत्याह वार्तिककारः[5]। आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपमानमुपनयः इत्येवं सर्वेषां प्रमाणानां प्रवृत्तिरस्ति न्याये इति भावः।

---

1. न्या. भा. पृ. 8
2. मनुस्मृ. 12-106
3. मनुस्मृ. 7-43
4. न्या. भा. पृ. 3
5. न्या. वा. पृ. 15

'प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि तैरर्थस्य लिङ्गस्य परीक्षणं परीक्षा' इति टीकाकारः[1]। अन्यत्र च—

'पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः। प्रतिज्ञाद्यवयवसमूहो
वा न्यायः। नीयते विवक्षितार्थसिद्धिरनेनेति।'

इति टीका[2] दृश्यते। तथा च पञ्चावयवात्मकन्यायव्युत्पादकत्वादिदं शास्त्रं न्यायविस्तर इत्यादिभिः न्यायशब्दघटितैः पदैर्व्यपदेशं लभते।

तर्कः नाम प्रमाणप्रदर्शिते विषये युक्तायुक्तविचारः, स च प्रमाणानामुपकारकः। अयं तर्कः मीमांसाशब्देनापि व्यपदिश्यते। प्रमासाधनभूतानां प्रत्यक्षादीनामनुग्राहकत्वात् इतिकर्तव्यता भवति तर्कः। तदुक्तं तात्पर्यटीकायाम्[3]—

'प्रमाणं तत्त्वावधारणाय प्रवृत्तं करणतया इतिकर्तव्यतामपेक्षते। तर्कश्च प्रमाणविषययुक्तायुक्तविचारात्मा प्रमाणं युक्ते तत्त्वे प्रवर्तमानमनुजानन् प्रमाणमनुगृह्णाति'

इति। एवं च तर्कव्युत्पादकत्वादिदं शास्त्रं तर्कशास्त्रं भवति।

हेतुशास्त्रं इत्यपि अस्य व्यपदेश आसीदिति—

'योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः'

इति मनुस्मृतितो[4]ऽवगम्यते। हेतुशब्दस्य अनुमानमित्यर्थः, अथवा तर्क इति। तथा च अनुमानप्रधानमिदं शास्त्रं हेतुशास्त्रमिति व्यपदेशं भजते।

प्रत्यक्षादिप्रमाणचतुष्टयव्युत्पादकत्वात् अस्य शास्त्रस्य प्रमाणशास्त्रम् इत्यपि व्यपदेशोऽस्ति। अत एव शंकरभगवत्पादैः 'पदवाक्यप्रमाणज्ञेनाचार्येण' इति व्यासस्य विशेषणमुपात्तम्। पदम्—व्याकरणम्, वाक्यम्—मीमांसा, प्रमाणम्—न्यायशास्त्रम्।

---

1. ता. टी. पृ. 49
2. ता. टी. पृ. 47
3. ता. टी. पृ. 62
4. मनुस्मृ 2-11

'पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः ।
वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम् ।'

इति कल्पतरुवाक्यमप्यत्रानुसन्धानमर्हति[1] ।

तथा वाकोवाक्यम् इत्यपि अस्य दर्शनस्य व्यपदेशो वर्तते । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणम् .... वाकोवाक्यमेकायनम्' इति छान्दोग्योपनिषद्वाक्यम्[2] । तत्र 'वाकोवाक्यम् तर्कशास्त्रम्' इति शांकरं भाष्यम् । कैयटस्तु[3]—

'वाक्योवाक्यम्, इतिहासः, पुराणम्, वैद्यकम्
इत्येतावान् शब्दस्य प्रयोगविषयः'

इति भाष्यव्याख्यानावसरे 'वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो' ग्रन्थ उच्यते । यथा 'किंस्विदावपनं महत्, भूमिरावपनं महत्' इत्याह ।

तथा प्रतितन्त्रसिद्धान्तलक्षणसूत्रे न्यायभाष्ये[4]—

'पुरुषकर्मादिनिमित्तो भूतसर्गः इति योगानाम्'

इति कथनात् न्यायदर्शनस्य योग इति व्यपदेशोऽस्तीति ज्ञायते ।

'यथा भौतिकानीन्द्रियाणीति योगानाम्' इति तत्रत्यं वार्तिकमप्यत्रानुसन्धेयम् ।

## न्यायशास्त्रं बहिष्कार्यं वा स्वीकार्यं वा?

न्यायशास्त्रं केषुचित्पुराणेषु निन्दितमिति न स्वीकार्यमास्तिकैरिति कंचन वादमुत्थाप्य अतिविस्तरेण तद्विवेचनमकार्षुः विन्ध्येश्वरीप्रसादमहाभागाः न्यायवार्तिकभूमिकायाम् । तत्रानुक्ताः केचन विषया एतद्विषयका अधुना प्रस्तूयन्ते । ब्रह्मसूत्रकारैः—'तर्काप्रतिष्ठानादपि' (ब्र. सू. 2-1-11) इत्यादिसूत्रेण पुरुषोत्प्रेक्षामात्रनिबन्धनानां तर्काणामप्रतिष्ठितत्वदर्शनात् तर्को न प्रमाणमिति निरणायि । तत्र शंकरभगवत्पादैर्विस्तरेण तर्कस्याप्रतिष्ठितत्वमुपपादितम् । भर्तृहरिरपि[5]—

---

1. कल्पतरु. पृ. 806
2. छा. उ. 7-2-1
3. म. भा. व्या. पृ. 51 (पस्पशाह्निक)
4. न्या. भा. पृ. 503 (1-1-29)
5. वा. प. 1-34

'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥'

इत्याह । अतोऽप्रतिष्ठिततर्कप्रधानं शास्त्रमनादरणीयमिति वेदान्तिच्छायया शङ्का ।

अत्रेत्थं समाधानम् । प्रत्यक्षागमविरोधी यस्तर्कः स एवाप्रमाणम् । यस्तु प्रत्यक्षागमानुकूलः स प्रतिष्ठितत्वादुपादेय एव । अत एव तत्रैव शांकरं भाष्यम्[1]—'न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम्' इति । मनुरपि वेदशास्त्राविरोधिनं तर्कमनुमन्यते । न्यायभाष्यकारोऽपि[2]—

'प्रत्यक्षागमाश्रितमनुमानमन्वीक्षा' इति वदन् आगमानुकूलं प्रत्यक्षाविरोधिनं च तर्कमेव स्वशास्त्रव्युत्पाद्यं कथयति ।

'यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः सः'

इति स्पष्टमवादीन्न्यायभाष्यकारः[3] । अत आभासरूपतर्कसाम्यं समीचीनतर्के आरोप्य न्यायशास्त्रदूषणं न प्रामाणिकानां चेतो रञ्जयेत् । यदि तावत् आन्वीक्षिक्यपराभिधानं न्यायशास्त्रमपरिग्राह्यमभविष्यत् तर्हि—

'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥'

इति राजभिः अध्येतव्यासु विद्यासु त्रयीनिर्विशेषं आन्वीक्षिकीमपि कथं निरदेक्ष्यत् मनुः[4] ? व्यासोऽपि मोक्षधर्मे[5]—

'तत्रोपनिषदं तावत् परिशेषं च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥'

इति आन्वीक्षिक्यनुगृहीत उपनिषदर्थः ग्राह्य एवेत्युवाच ।

यद्यपि वेदान्तिनां विरुद्धाः केचिदंशाः न्यायविस्तरे भवेयुः, तावता तस्य बहिष्कारो न न्याय्यः, उपजीव्यानां बहूनामंशानां सद्भावात् । तदुक्तं न्यायपरिशुद्धौ देशिकचरणैः[6]—

---

1. शांकरभा. (ब्र. सू. 2-1-11)
2 न्या. भा. पृ. 3
3. न्या. भा. पृ. 3
4. मनुस्मृ. 7-43
5. म. भारत. मोक्षधर्म
6. न्या. प. पृ. 89

'यद्वा नातिबहिष्कारो नातीव च परिग्रहः ।
सांख्यादिवदिहापि स्यात्समाधिस्तौषतण्डुलः ॥

उपजीव्यबहुत्वेन विद्यास्थाननिवेशनम् ।
विरुद्धांशैकविषया सूत्रादिषु बहिष्क्रिया ॥' इति ।

## न्यायमीमांसाशास्त्रयोः भेदः

मीमांसाशब्दस्य युक्तायुक्तविचारात्मा तर्क एवार्थः इति तात्पर्यटीकायां[1] 'मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः' इति प्रमाणवचनप्रदर्शनपूर्वकं उपपादि । तथा च न्यायशास्त्रेऽपि तर्कः व्युत्पाद्यते तथा मीमांसाशास्त्रेऽपि इति कथमनयोः पृथग्विद्यास्थानत्वमिति काचिदाशङ्का अवतरति । अत्रेदं समाधानम्—न्यायशास्त्रे सामान्यतः तर्कस्य लक्षणम्, तदङ्गानि तदाभासाश्च व्युत्पाद्यन्ते । मीमांसायां तु विवादास्पदानि वेदवाक्यानि गृहीत्वा तत्तद्वाक्यार्थनिर्णयोपयुक्ताः तर्कविशेषाः प्रतिपाद्यन्ते । अतोऽनयोर्भेदः इति । तदुक्तं मीमांसापादुकायां वेदान्तदेशिकैः[2]—

"न्यायाख्यं धर्मविद्यास्थितिपदमुदितं तत्र तत्राप्तशास्त्रे
तेनैवालं तदन्यद्भवति कृतकरं नीतिमात्रप्रवृत्तेः ।
इत्येतन्नानुयोज्यं नयपथविषयो मानतर्कादिमात्रे
मीमांसायां तु तत्तच्छ्रुतिगतिविषया नीतिभेदा निरूप्याः ॥" इति ।

एवं सूक्ष्मभेदमवलम्ब्य विद्यास्थानभेदे सत्यपि उभयत्र न्यायप्रतिपादनमस्तीति शास्त्रद्वयेऽपि न्यायशब्दघटिताः ग्रन्थाः निरमायिषत, यथा—न्यायभाष्यम्, न्यायवार्तिकम्, न्यायभूषणम्, न्यायसारः इत्यादयो न्यायशास्त्रग्रन्थाः, न्यायमाला, न्यायरत्नमाला, न्यायसुधा इत्यादयो मीमांसाशास्त्रग्रन्थाश्चेति ।

## नव्यन्यायप्रादुर्भावः

गौतमोपज्ञमिदं न्यायशास्त्रं कालक्रमेण बहुभिः ग्रन्थनिर्माणादिना महतीं वृद्धिं प्रापितं विराजते । तदिदं प्राचीनन्यायः, नवीनन्याय इति द्वेधा अधुनातने-

---

1. ता. टी. पृ. 62    2. मी. पा. श्लो. 29

व्यपदिश्यते। गङ्गेशोपाध्यायात् प्राक्तनैर्विरचितानां न्यायशास्त्रग्रन्थानां प्राचीनन्याय इति शब्देन व्यपदेशः, गङ्गेशविरचिततत्त्वचिन्तामणिमारभ्य पश्चात्तनानां न्यायशास्त्रग्रन्थानां नवीनन्याय इति शब्देन व्यपदेशश्च वरीवर्ति। एवं द्वेधा व्यपदेशे निमित्तं किमिति पर्यालोचने व्यापृताः केचन अवच्छेदकावच्छिन्नादिशब्दप्रचुरत्वात् नव्यन्यायव्यपदेश इति समर्थयन्ति। वस्तुतस्तु प्राक्तना ग्रन्थाः प्रमाणादिषोडशपदार्थानामपि विस्तरेण विवेचका भवन्ति। गङ्गेशास्तु तं पन्थानमनादृत्य प्रमाणमात्रविवेचने प्रावर्तन्त। अत एव तदीयग्रन्थः नव्यन्यायमूलग्रन्थत्वेन व्यपदेशमलभत। युक्तं चैतत्। इदं हि शास्त्रं प्रमाणशास्त्रम्। प्रमाणनिरूपण एवैदंपर्यमस्य शास्त्रस्य। अत एव सूत्रकारेण प्रथमतस्तस्य निर्देशो व्यधायि। प्रमेयाविनाभूतत्वात् प्रमाणस्य प्रमेयमपि निरूपितमानुषङ्गिकतया। अतः शास्त्रस्य मुख्यप्रतिपाद्यं प्रमाणमधिकृत्य संभावितसमस्तविप्लवविध्वंसनपूर्वकं गङ्गेशोपाध्यायाः विवेचनं कर्तुं प्राक्तने मार्गे कंचन परिष्कारमाधातुं च तत्त्वचिन्तामणिनामकं पाण्डित्यप्रकर्षप्रख्यापकं लोकप्रसिद्धसकलग्रन्थातिशायिवैभवभासुरं ग्रन्थं न्यभान्त्सुः। एतद्ग्रन्थस्था विवेचनसरणिरपि प्राचीनग्रन्थेभ्यो विलक्षणा वर्तते। अतोऽपि नवीनत्वव्यपदेशः स्थाने।

## तत्त्वचिन्तामणेः प्रभावः

लक्षणपरिष्करणविषये अन्यादृशी रीतिरत्र लक्ष्यते। प्राचीनप्रोक्तेषु तत्तल्लक्षणेषु अव्याप्त्यादीन् दोषानुद्भाव्य यथा कोऽपि दोषः न भवेत् तथा नाम परिष्करणे चातुर्यं प्रकटयन्ति ग्रन्थकर्तारः। अत एव तत्त्वचिन्तामणिप्रादुर्भावानन्तरं तदीयरसास्वादनलम्पटाः सर्वेऽपि प्रचण्डाः पण्डिताः साक्षाद्वा परम्परया वा तद्व्याख्यानेन यशः प्राप्तुमैच्छन्। किं बहुना! इतरशास्त्रकारा अपि गङ्गेशानन्तरकालिकाः तदीयपरिष्काराकृष्टचेतसः स्वग्रन्थेषु तत्परिष्कारसदृशस्य परिष्कारस्य समावेशमकुर्वन्। ग्रन्थरचनशैलीमपि तादृशीमेवावालम्बन्त। अद्वैतसिद्धिप्रभृतयः प्रौढप्रबन्धाः अत्र निदर्शनभूताः। अद्वैतसिद्धौ बहुषु स्थलेषु चिन्तामणिग्रन्थः प्रमाणत्वेन उदाहियत। अस्मिंश्च मणिग्रन्थे ततः प्राक्तनानां न्यायशास्त्रग्रन्थानां मीमांसाग्रन्थानां तत्रापि विशिष्य प्राभाकरग्रन्थानां

पर्यालोचनपूर्वकं स्वयमपूर्वं निष्कर्षं कुर्वन्ति गङ्गेशोपाध्यायाः । अत एव ग्रन्थारम्भे[1]--

'अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ।'

इति प्रतिज्ञा कृता । उदयनाचार्येषु महानादरः ग्रन्थकर्तुर्विद्यते । अत एव बहुषु वादेषु तदादर्शितमेव पन्थानमवलम्ब्य परिष्करोति । अयं च विषयः प्रामाण्यवाद-प्रमालक्षणवादादिकं सुसूक्ष्ममवलोकयतां सुज्ञानः । प्राचीनग्रन्थेषु विस्तरेण उपपादितस्य विषयस्य सनिष्कर्षं मितेन वचसा प्रतिपादनं मणिग्रन्थस्य विशेषः । प्राचीनग्रन्थस्थत्रुटिपरिपूरणेन निर्दोषतया परिष्करणमपि अत्र विलक्षणत्वख्यापकम् । भाषापि नातिकठिना नातिसरला च । बहुषु स्थलेषु कुसुमाञ्जलिच्छाया-मनुसरन्त्यपि शैली लक्षणपरिष्करणविषये ततोऽप्यतिशयिनी विराजते । किं बहुना ! मणिग्रन्थस्य पुनःपुनरालोडनजनितानुभवैकवेद्यं महिमातिशयं स्ववाचा प्रकटयितुमसमर्था एव सः ।

## मणिकारस्य कालदेशादिकम्

गङ्गेशोपाध्यायस्य कालदेशावधिकृत्य विन्ध्येश्वरीप्रसादमहाशयाः एवं लिखन्ति[2]—गङ्गेशोपाध्यायश्च कस्मिन् देशे कस्मिन् काले आविरभूदिति इदानीं-पर्यन्तं तदीयेषूपलब्धेषु ग्रन्थेषु नोपलभ्यते । किं तु तत्त्वचिन्तामणौ अनुमानपरि-च्छेदे 'इति खण्डनकारमतमपास्तम्' इत्युक्त्या श्रीहर्षसमयात्पश्चात्कालभवः, 1293 शकाब्दे सुधामधुनिबन्धकर्त्रा वाचस्पतिमिश्रेण तत्त्वचिन्तामणिग्रन्थस्य व्याख्यातत्वात् उक्तशकाब्दपूर्वभावीति नात्र संदेहः । अपि च 1400 ईसवीय-वर्षे 1322 शकाब्दे वर्तमानस्य मैथिलकोकिलविद्यापतेः पक्षधरमिश्रापरनामधेयस्य तत्त्वचिन्तामण्यालोककारस्य जयदेवमिश्रस्य पितृव्याद्धरिमिश्राद्विद्यासंपादनं तमेव समयं द्रढयति इति ।

---

1. त. चि. पृ. 4
2. न्या. वा. भूमिका पृ० 167-170

डा. उमेशमिश्रा:—[1]असकृत् उदयनाचार्यग्रन्थानामुल्लेखस्य मणौ दर्शनात् तदनन्तरकालिको गङ्गेश इति निश्चप्रचम् । किं च विशेषणोपलक्षणवादे मणौ सप्तपदार्थीग्रन्थ उदाह्रियत । तेन शिवादित्यमिश्रानन्तरकालिको गङ्गेश इति निश्चीयते इत्याहुः । शिवादित्यमिश्राणां कालश्च 1150 A. D. इति निरटङ्कि प्राध्यापकैः दिनेशचन्द्रभट्टाचार्यैः[2] । अतस्तत्पश्चात्कालिकत्वमपि मणिकारस्य स्पष्टम् । अपि च न्यायरत्नकर्तुर्मणिकण्ठस्य मतमनेकेषु स्थलेषु मणिकारो निराकरोति । प्रायस्तन्नाम तदीयग्रन्थनाम वा नोल्लिखति । अन्ये तु, केचित्तु, नापि इत्यादि-रूपेण तन्मतमनुवदति । तथाहि—उपाधिवादान्ते 'अन्ये तु' इत्यादिना तस्य मतमनूदितम् । तत्र वासुदेवसार्वभौमः 'मणिकण्ठीयं मतमाह—अन्ये त्विति' इत्यवतरणिकां विन्यास्थत् । तत्रैव 'केचित्तु' इत्यादिना मणिकण्ठीयन्यायरत्न (पृ.९४) अन्तर्गतः भागः अनूदितः । एवं परामर्शप्रकरणे —'पृथग्वह्निमत्त्वस्मरणं तत्र नास्ति, किं तु व्याप्यत्वावच्छेदकतया इति चेन्न' इति मणिकण्ठमतं न्यायरत्ने (पृ. १२०) विद्यमानं निराकृतं मणौ । तथा सव्यभिचारप्रकरणे 'नापि पक्षाति-रिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति' इत्यादिलक्षणं खण्ड्यमानं न्यायरत्ने (पृ. १६६) उपलभ्यते । एवमादीन्यन्यान्यपि स्थलानि दिनेशचन्द्रभट्टाचार्यैरुदाहृतानि[3] । तस्मान्मणिकण्ठादनन्तरकालिकः गङ्गेशः । अयं च मणिकण्ठः न्यायचिन्तामणि-नामकमपरमपि प्रबन्धं प्राबध्नात् यः किल स्वकीये न्यायरत्ने उदलेखि इति ।

परं तु मणिकण्ठस्य कालनिर्णयार्थं गङ्गेशकालः प्रतीक्ष्यते । अतः निर्णीतः कालः को नाम गङ्गेशस्य इति जिज्ञासायां दिनेशचन्द्रभट्टाचार्यः[4] अधस्तनानि तत्त्वानि प्रकटीकरोति—

(1) गङ्गेशापेक्षया ईषत्प्राचीनत्वेन संभाविताः नारायणसर्वज्ञ–दिवाकर–मणिकण्ठ–हरिनाथाः त्रयोदशे शतके न्यवात्सुः । अतो गङ्गेशस्य पाण्डित्यप्रकर्षप्रचारः 1325 A.D. समये अभूदिति ज्ञायते ।

---

1. History of Indian philosophy पृ॰ 239 (Vol II)
2. History of Navyanyaya in Mithila पृ॰ 64
3. Do पृ॰ 83-85
4. History of Navyanyaya in Mithila पृ. 83-85

(2) गङ्गेशस्य नामोल्लेखकेषु तद्ग्रन्थपरामर्शकेषु च प्राचीनः मैथिलः वटेश्वरोपाध्यायः 1350—75 A.D. कालिकः । अतो गङ्गेशस्यान्तिमः कालः 1350 A.D. भवितुमर्हति ।

(3) तर्कभाषाव्याख्याता चिन्नभट्टः 1377–1404 A.D. कालिकः वरदराजं वादीन्द्रं च स्मरन्नपि गङ्गेशं नोल्लिखति । किं बहुना ! यः कोऽपि 1400 –A.D. तः पूर्वकालभवो विद्वान् गङ्गेशं तद्ग्रन्थं वा न निर्दिशति । 1460–1539 A.D. कालिकः मध्वमतानुसारी व्यासतीर्थः तर्कताण्डवे तत्र तत्र मणिग्रन्थं खण्डयति । अतः 1300 A.D. पश्चात्कालिक एव गङ्गेश इति । डा. उमेशमिश्रमहाशयोऽपि महता परिकरेण मैथिलपञ्जीविमर्शपूर्वकं गङ्गेशः कथमपि 1275 A.D. तः प्राचीनो न भवितुमर्हतीति न्यरूपयत्[1] ।

## इङ्गाल्स् महाशयस्य निर्णयः

प्राध्यापकः पाश्चात्यविद्वद्वरः एवं निर्णयति[2]—खण्डनखण्डखाद्यस्य मणौ उल्लेखात् तत्कर्तुः श्रीहर्षादर्वाचीनो गङ्गेशः । श्रीहर्षश्च राज्ञः जयचन्द्रस्य समानकालिकः । जयचन्द्रकालश्च A.D. 1170–1194 । किं च वङ्गदेशीयएषियाटिक् सोसाइट्यां गङ्गेशतनूजन्मना वर्धमानोपाध्यायेन कृतस्य कुसुमाञ्जलिप्रकाशस्य हस्तलिखितकोशो वर्तते । तस्य कालः A.D. 1300–1360 मध्यभवः इति अवगम्यते । अतः गङ्गेशस्य कालः त्रयोदशं शतकमिति ।

## गङ्गेशः उत गङ्गेश्वरः

मणिकारः 'गङ्गेश्वरः इति नाम्ना व्यवहृत इति ज्ञायते । अत्र च—

> 'यस्तर्कतन्त्रशतपत्रसहस्ररश्मि-
> र्गङ्गेश्वरः सुकविकैरवकाननेन्दुः'

---

1. History of Indian philosophy पृ. 241 (Vol II)
2. Materials for the study of Navyanyaya Logic पृ. 4-5

इति कुसुमाञ्जलिप्रकाशस्थितं वर्धमानकृतं पद्यं प्रमाणमिति डा. उमेशमिश्रा अभिप्रयन्ति। परं तु उदाहृतपद्ये छन्दःपूरणार्थं ईशशब्दस्थाने ईश्वरशब्दप्रयोग इत्यपि वक्तुं शक्यतया कथमेतत्प्रमाणं भवेदित्यालोचनीयम्। पञ्जीकारैः सुरक्षितायां कर्णाटदेशात् मिथिलां समुपगतानां ब्राह्मणानां कायस्थानां च वैशिष्ट्यप्रतिपादिकायां पञ्ज्यां 'गङ्गेश्वरः' इति नाम्नो निर्देशमपरं प्रमाणं प्रदर्शयन्ति डा. उमेशमिश्राः[1]।

## चरितसंग्रहः

गङ्गेशस्य जन्मग्रामः मिथिलास्थः 'छदन' इत्यपि पञ्जीतः अवगम्यते। परं तु स ग्रामोऽधुना अदर्शनं गतः। गङ्गेशस्य एकः पुत्रः एका पुत्री च आस्तामिति केचित। अन्ये तु गङ्गेशस्य द्वे पत्नी अभूताम्। ज्येष्ठपत्न्यां पुत्र एको वर्धमाननामा, एका पुत्री च उदपद्येताम्। द्वितीयायां पत्न्यां सूपनहरिनामकौ द्वौ सुतौ अजनिषातामिति वदन्ति।

गङ्गेशः बाल्ये विद्यावान्न बभूव। अनन्तरं कालीदेव्याः उपासनेन महाविद्वान् समपद्यत। तत्र 'चिन्तादिव्यविलोचनेन' इति गङ्गेशीयं वचनमेव प्रमाणमिति मिश्राः प्रत्यपादयन्। परं तु दिनेशचन्द्रभट्टाचार्याः[2]

'अनास्वाद्य गौडीमनाराध्य गौरीं
विना तन्त्रमन्यैर्विना शब्दचौर्यात्।
प्रसिद्धप्रबुद्धप्रबन्धप्रवक्ता
विरिञ्चिप्रपञ्चे मदन्यः कविः कः॥'

इति पद्यं कस्मिंश्चित्संदर्भविशेषे गङ्गेशो निरमासीदित्यशोचन्। तथा च उमेशमिश्रमतं न युक्तमिति प्रतीयते।

## मणिकारेण उल्लिखिता ग्रन्था ग्रन्थकाराश्च

(1) शिवादित्यमिश्र :—निर्विकल्पकवादे तत्त्वचिन्तामणौ एकं वाक्यमुद्धृत्य 'इति शिवादित्यमिश्राः' इति प्रोक्तम्। परं तु तद्वाक्यं सप्तपदार्थ्यां नोपलभ्यते। तदभिप्रायसूचिका कारिका तु—

---

1. History of Indian philosophy पृ. 240 ( Vol II )
2. History of Navyanyaya in Mithila पृ. 96

'व्यावर्तनीयमधितिष्ठति यद्धि साक्षा-
देतद्विशेषणमतो विपरीतमन्यत् ।
दण्डी पुमानिति विशेषणमत्र दण्डः
पुंसो न जातिरनुदण्डमसौ च तस्य ॥'

इति लभ्यते । अतः मणिकारोद्धृतं वाक्यं शिवादित्यमिश्रकृतात् ग्रन्थान्तरादुद्धृतं स्यादिति विमर्शकाः प्राहुः ।

(2) वाचस्पतिमिश्रः प्रथमः—ईश्वरानुमाने—'वाचस्पतिमिश्रास्तु' इति नामनिर्देशः कृतः । एवं श्रीकरः 12 A.D मण्डनमिश्रः 11 A.D. रत्नकोशकारः 12 A.D. आचार्य उदयनः, प्रभाकरमिश्रः, वल्लभाचार्यः, सौन्दडउपाध्यः, तरणिमिश्रः, महार्णवकारः इत्यादयः ग्रन्थकारास्तत्र तत्र मणौ निर्दिष्टाः ।

## तत्त्वचिन्तामणिव्याख्यानानि

न्यायशास्त्रस्य दीपतुल्यस्तत्त्वचिन्तामणिग्रन्थः यदा प्रादुर्बभूव तदाप्रभृति उत्तरे दक्षिणे वा प्रान्ते विद्यमानाः सर्वेऽपि प्रचण्डाः पण्डिताः साक्षाद्वा परम्परया वा तत्त्वचिन्तामणेर्व्याख्यानेन आत्मनः कृतकृत्यानमन्यन्त । तत्त्वचिन्तामणितुल्योऽन्यो मूलग्रन्थो नास्ति इत्येव ते अमन्यन्त । विवक्षितानां विषयाणां निष्कृष्टतया प्रतिपादनं चिन्तामणितोऽन्येषु ग्रन्थेषु दुर्लभम् । अत एव शास्त्रान्तरग्रन्थेष्वपि अद्वैतसिद्ध्यादिषु तच्छैल्या महान् प्रभावो दरीदृश्यते । मणेरेकं वाक्यमवलम्ब्य शताधिकैः पुटैर्विवरणं कुर्वन्ति व्याख्यातारः । तेनैव मणेर्माहात्म्यमवबोद्धुं शक्यते । तत्र मणिव्याख्यानान्यधिकृत्य आङ्गलभाषामयप्रबन्धेषु लिखितानि तत्त्वानि संस्कृतभाषया किंचिद्विवेचयामः विदुषां सौकर्याय ।

## चिन्तामणिप्रकाशः of वर्धमानोपाध्याय

### (चतुर्दशं शतकम्)

गङ्गेश्वरस्य पुत्रः न्यायकुसुमाञ्जल्यादेर्व्याख्याता वर्धमानोपाध्यायः चिन्तामणेरपि प्रकाशनामकं व्याख्यानं निरमादिति वाराणसीसरस्वतीभवनस्थहस्तलिखित-

पुस्तकविवरणपट्टिकातो[1]ऽवगम्यते । परं तु ग्रन्थान्तरव्याख्यानानीव विशिष्य स्वपितृकृतग्रन्थव्याख्यानमपि यदि वर्धमानेन कृतमभविष्यत् नूनं तत् अलुप्तम-भविष्यत् । यतस्तस्य कियानपि भागो न कुत्रापि लभ्यते अतस्तत्त्वचिन्तामणे-र्व्याख्या कापि न वर्धमानेन व्यरचि इति बहवः । परं तु अन्यैः कृतान् ग्रन्थान् व्याख्यया मण्डयन् वर्धमानः पितुर्ग्रन्थमुपैक्षिष्टेत्येतत् न संभाव्यते । अतः तत्त्वचिन्तामणिप्रकाशः वर्धमानकृतः कुत्राप्यन्वेषणीय इति मन्यन्ते डॉ० उमेशमिश्राः ।[2]

डा० दिनेशचन्द्रभट्टाचार्यास्तु—वर्धमानः स्वकृतेषु ग्रन्थेषु तत्र तत्र सति प्रसङ्गे स्वकृतानन्यान् ग्रन्थान् नाम्ना उल्लिखति । तत्त्वचिन्तामणिप्रकाशं तु न काप्युल्लिखति । अतस्तत्त्वचिन्तामणेर्व्याख्यानं वर्धमानो नैव कृतवानिति निरूपयन्ति ।

## त्वन्तोपाध्यायः (चतुर्दशं शतकम्)

पद्मनाभमिश्रः पक्षधरोद्धारकर्ता व्याप्तिसिद्धान्तलक्षणव्याख्यावसरे

'तथापि वह्निघटोभयवानसौ धूमादित्यत्रातिव्याप्तिं
वारयितुं यदवच्छिन्नाधिकरणत्वावच्छेदेन साध्य-
सामानाधिकरण्यस्यावश्यं वक्तव्यतया पूर्वप्रतीक-
वैयर्थ्यस्य त्वन्तमते दूषणत्वादिति विचारसंक्षेपः '[3]

इति लिखति स्म । किंच वङ्गदेशे शब्दत्वन्तनामा कश्चन हस्तलिखितकोशः लभ्यते । तेन त्वन्तोपाध्यायः चिन्तामणेः शब्दखण्डस्य व्याख्यानमरचयदिति ज्ञायते । किं च कृष्णदाससार्वभौमनामा षोडशशताब्द्याः द्वितीयपादे वास्तव्यः वङ्गदेशीयो विद्वान् स्वकीयायां प्रत्यक्षालोकव्याख्यायां प्रसारिण्याम्[4]—

---

(1) Catalogue of Sanskrit manuscripts, Saraswati Bhawan, Varanasi P. 193
(2) History of Indian Philosophy, P. 276-277
(3) उद्धृतं History of Navyanynya in Mithila, P. 128. इति प्रबन्धात् ।
(4) History of Navyanyaya in Mithi!a, P. 130

'अत्र त्वन्तोपाध्यायाः—नन्वनुमानं प्रवर्तकं वा परिशेषानुमानविशेषणी-भूतसफलत्वसाधकं वा........इति दूषणमाहुः'

इत्यवदन् । अनेन त्वन्तोपाध्यायः तत्त्वचिन्तामणिस्थमङ्गलवादस्यापि व्याख्यानं प्राणैषीदिति विज्ञायते । अयमेव न्यायकुसुमाञ्जलेर्मकरन्दनामकमपि व्याख्यानं कृतवान् यत् किल जयदेवमिश्रः स्वकीये आलोके स्मरति । तथा च त्वन्तोपाध्यायः जयदेवादपि प्राचीनः चतुर्दशशतकीयः इति निर्धार्यते ।

एवं च त्वन्तोपाध्यायः तत्त्वचिन्तामणेरपि व्याख्यानं अकरोदिति तच्चान्वेषणीयमिति च डॉ० उमेशमिश्राः लिखन्ति ।

## गङ्गादित्योपाध्यायः (चतुर्दशं शतकम्)

गङ्गादित्यनामापि कश्चित् तत्त्वचिन्तामणेष्टीकां प्रणिनायेति वाराणसीस्थ-सरस्वतीभवने रक्ष्यमाणात् विद्यानिवासभट्टाचार्यविरचितात् तत्त्वचिन्तामणिविवेचनात् अवगम्यते । तत्र हि—

'भट्टमुरारिन्यायमतेषु स्वग्राह्यप्रामण्याप्रासिद्ध्या-
पार्थकमिति च ज्ञेयमिति नञ्गर्भपाठो वर्धमान-
गङ्गादित्यानुमतः'

इति पङ्क्तिर्दरीदृश्यते । अत्र वर्धमानानन्तरं गङ्गादित्यनिर्देशात् अयमपि चतुर्दशशतकवास्तव्य इति प्रतीयते । अत्र वर्धमानग्रहणमपि वर्धमानोपाध्यायः तत्त्वचिन्तामणिं व्याचख्याविति सूचयति ।

## घटेशोपाध्यायः

विद्यानिवासमिश्रविरचिते चिन्तामणिविवेचन एव—

'अत एव घटेशोपाध्यायो नियममेतं तुच्छीकृत्य
दोषौत्कटयात् पीतादिभ्रम इति स्वीचक्रे'

इति पङ्क्तेर्दर्शनात् घटेशोपाध्यायनामापि कश्चित् चिन्तामणेर्व्याख्यानं निर्ममे इति ज्ञायते ।

## वाचस्पतिमिश्रः (पञ्चदशं शतकम्)

'द्वितीयवाचस्पतिः' इति नाम्ना विश्रुतः मैथिलः पञ्चदशशतकीयः चिन्तामणिप्रकाशनामकं ग्रन्थमग्रथ्नात्। अयं ग्रन्थः वाराणसेयसंस्कृतविश्वविद्यालयीयहस्तलिखितपुस्तकभाण्डागारे रक्ष्यमाणो विलसति। तत्र पुष्पिकायाम्—

'इति महामहोपाध्याय-सन्मिश्र श्रीवाचस्पतिकृतौ
चिन्तामणिपकाशे प्रत्यक्षपरिच्छेदः'

इति पङ्क्तिर्दृश्यते।

## वटेश्वरोपाध्यायः (पञ्चदशं शतकम्)

अयं यज्ञपत्युपाध्यायस्य पितामहः तत्त्वचिन्तामणेः दर्पणनामकं व्याख्यानं प्रबबन्ध। स ग्रन्थः बहुत्र पक्षधरमिश्रविरचिते मण्यालोके उल्लिख्यते।

## यज्ञपत्युपाध्यायः (पञ्चदशं शतकम्)

अयं वटेश्वरस्य पौत्रः मिथिलायां स्वकाले प्रचण्डपण्डितत्वेन प्रथां प्राप। अस्य मतं आलोकादिषु गदाधरीयान्तेषु सर्वेषु ग्रन्थेषु खण्डनार्थं भूषणार्थं वा अनूद्यते। अयं महामहोपाध्यायविरुदाङ्कितः प्रायः सर्वेषु पश्चात्तनेषु ग्रन्थेषु उपाध्याय इति नाम्ना व्यपदिश्यते। तत्त्वचिन्तामणेः प्रभानाम्नीं टीकामयं प्रग्रन्थ। अस्य ग्रन्थस्य हस्तलिखितप्रतिलिपयः तत्र तत्र पुस्तकभाण्डागारेषु संरक्ष्यन्ते। वङ्गदेशीयएषियाटिक् सोसाइट्यां कश्चन हस्तलिखितकोशः वर्तते। तत्र अस्य ग्रन्थस्यादौ—

कनकनिकषभासा सीतयालिङ्गिताङ्गो
नवकुवलयदामश्यामवर्णोऽभिरामः।
अभिनव इव विद्युन्मण्डितो मेघखण्डः
शमयतु मम तापं सर्वतो रामचन्द्रः॥

तातग्रन्थपरिप्राप्तसिद्धान्तशिवमुष्टिना ।
क्रियते यज्ञपतिना तत्त्वचिन्तामणेः प्रभा ॥

इति दृश्यते । अस्यानुमानखण्डः दर्भङ्गासंस्कृतविश्वविद्यालय उपलभ्यते । तत्र आदौ—

अनुसृत्य मतं सम्यक् पितुः शिवपतेर्मया ।
अनुमानपरिच्छेदे प्रभा संप्रति तन्यते ॥

इति श्लोकः दृश्यते । शब्दखण्डस्याप्येतदीया व्याख्या आसीदिति तर्कताण्डव-व्याख्यानात राघवेन्द्रकृतादवगम्यत इति डा. उमेशमिश्रा[1] निरूपयन्ति ।

यज्ञपत्युपाध्यायशिष्योऽपि सन् पक्षधरमिश्रः न सर्वत्रोपाध्यायमतं स्वीकरोति ।

## शंकरमिश्रः (पञ्चदशं शतकम्)

उपस्कारादिग्रन्थप्रणयनेन प्रसिद्धमहिमा शंकरमिश्रः तत्त्वचिन्तामणेः मयूखनाम्नीं टीकामकरोत् । तस्याश्च एकैव हस्तलिखिता प्रतिः Jammu catalogue of steni इत्यत्र निर्दिष्टा वर्तते । तत्र पञ्चपञ्चाशत् पत्राण्येवोपलभ्यन्ते । अयं च ग्रन्थः उपस्कारे—'एतद्रहस्यं चानुमानमयूखेऽन्वेषणीयम्' इति ग्रन्थकारेणैव उल्लिखितः ।

## प्रगल्भमिश्रः (पञ्चदशं शतकम्)

अयमपि मैथिलः तत्त्वचिन्तामणेः परिच्छेदचतुष्टयस्यापि व्याख्यानं चकार । प्रत्यक्षपरिच्छेदस्य कश्चन भागः मुद्राप्य प्रकाशितश्च वाराणसीसरस्वती-भवनात् 1939 संवत्सरे पण्डितसूर्यनारायणशुक्लैः ।

## जयदेवमिश्रः पक्षधरमिश्रापरपर्यायः (पञ्चदशं शतकम्)

गङ्गेश्वरादनन्तरं जयदेवमिश्रस्यैव प्रमुखं स्थानम् ।
'पक्षधरप्रतिपक्षो लक्षीभूतो न च क्वापि'

इति चास्य पाण्डित्यप्रकर्षः उद्घुष्यते । अनितरसाधारणस्य वैदुष्यस्य प्रख्यापकः

1. History of Indian philosophy P. 299. Vol II

एतदीयः चिन्तामण्यालोकः विलसति । कर्णाटदेशीयः द्वैतसिद्धान्तस्य प्रतिष्ठापकः तर्कताण्डवादिग्रन्थप्रणेता विद्वद्वल्लजः व्यासतीर्थः उत्तरदेशयात्रायां मिथिलां प्राप्तः तत्र विराजमानेन पक्षधरमिश्रेण सह शास्त्रार्थं कृत्वा तदीयेन वैदुष्येण प्रभावितः एवमभाणीत्—

'यदधीतं तदधीतं यदनधीतं तदप्यधीतम् ।
पक्षधरविपक्षो नावेक्षि विना नवीनव्यासेन ॥'

इति । अनेन प्रतिपक्षीभवितुमर्हतितमां पक्षधर इति कथयन् व्यासतीर्थः 'शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः' इति रावणेन स्तुतः श्रीरामचन्द्र इव प्रभावातिशयसंपन्न इति प्रकटयति । अन्येऽपि वृत्तान्ता एतद्वैदुष्यप्रकाशकाः डा. उमेशमिश्रप्रभृतिभिः सुनिपुणं प्रतिपादिताः । अनेन विरचितः तत्त्वचिन्तामण्यालोकः भागशः प्रकाशितः । समग्रोऽपि ग्रन्थो लभ्यते न वेति तु न जानीमः । अयं टिप्पणीनामकं किंचिल्लघुकायं व्याख्यानमपि तत्त्वचिन्तामणेरग्रन्थात् । तस्य प्रतिलिपिः वाराणसीस्थसरस्वतीभवने समुपलभ्यते । एवं विवेकनामकमपि किंचित्तत्त्वचिन्तामणेर्व्याख्यानमयं प्रणिनाय इति केचित् । तन्न समीचीनमिति मिश्राः न्यरूपयन्[1] । विवेकनिर्माता पक्षधरस्तु अन्य एवालोककर्तुः पक्षधरादिति तेषामाशयः । तथा आलोककर्ता पक्षधरमिश्रः प्रमाणपल्लवनामानमपि स्वतन्त्रं ग्रन्थमकरोत् यः किल वासुदेवसार्वभौमकृतायां तत्त्वचिन्तामणिटीकायाम् –'अत एव प्रमाणपल्लवेऽपि अन्योन्याभावगर्भ एव हेतुरिति सिद्धान्तित गुरुचरणेनापीति' इति उल्लिखितम् ।

अयं पक्षधरः स्वकाले मिथिलायां वसन्नपि सर्वजगत्प्रसिद्धिमुपगतः परःशतान् शेमुषीसम्पन्नान् शिष्यानध्यापयामास । सर्वेभ्योऽपि प्रान्तेभ्यः बहवश्छात्राः एतत्सकाशं न्यायशास्त्रमधिगन्तुमुपासर्पन् । एतच्छिष्याणां मध्ये स्वगुरोर्यज्ञपतेः पुत्रः नरहरिः, स्वस्य पुत्रः माधवः, वासुदेवमिश्रः, शुचिकरउपाध्यायः, रुचिदत्तमिश्रः, इत्येते मैथिलाः, वङ्गदेशीयौ वासुदेवसार्वभौमरघुनाथशिरोमणी च निर्देशमर्हन्ति । आलोकस्य औत्तरैर्दाक्षिणात्यैश्च विरचिता बह्व्यः टीका विलसन्ति या अधिकृत्य विवरणं डा. उमेशमिश्रग्रन्थादवगन्तुं शक्यते ।

1. History of Indian Philosophy Vol. II P. 333—334.

## गोपीनाथठक्कुरः (पञ्चदशं शतकम्)

अयं तत्त्वचिन्तामणेः सारसंग्रहरूपं मणिसारनामकं ग्रन्थं निर्ममे । अस्य अनुमानभागः तिरुअनन्तपुरे प्रकाशितः ।

## नरहरिमिश्रः (पञ्चदशं शतकम्)

अयं यज्ञपत्युपाध्यायस्य पुत्रः । स्वपितुरुपाध्यायस्य पक्षधरमिश्रस्य च सकाशे न्यायशास्त्रमध्यैष्ट । पक्षधरमिश्रः आलोके उपध्यायमतं तत्र तत्र अखण्डयत् । अतः स्वपितुः उपाध्यायस्य मतं तिष्ठापयिषुः नरहरिः दूषणोद्धार-नामकं चिन्तामणेर्व्याख्यानं व्यरचयत् । तत्र पक्षधरकृतानि दूषणानि खण्डयित्वा पितृकृतप्रभाग्रन्थं रक्षति स्म । इदं च—

'सूक्त्या पितृचरणानामधिगतसिद्धान्तसारेण ।
श्रीनरहरिणा क्रियते तातमते दूषणोद्धारः ॥'

इति तदीयपद्येनावगम्यते । अस्य नरहरिमिश्रस्य विवरणम् अधुना अस्माभिः प्रकाश्यमाने प्रकाशे रुचिदत्तः बहुत्रानूद्य खण्डयति ।

## माधवमिश्रः (पञ्चदशं शतकम्)

तत्त्वचिन्तामण्यालोककर्तुः पक्षधरमिश्रस्यायं पुत्रः । अयं च तत्त्वचिन्तामणेः कांचन टीकामररचत् यत्र नरहरिमतं खण्डयति । नरहरिः किल स्वपितुर्यज्ञपतेः संरक्षणाय जयदेवोक्तानि पितृदूषणानि उदधीधरत् । माधवोऽपि स्वपितुः पक्ष-धरस्य रक्षणाय नरहरिप्रदर्शितानि तद्दूषणान्युद्धर्तुं प्रावर्ततेत्येतत् स्थाने ।

## वासुदेवमिश्रः (पञ्चदशं शतकम्)

अयं पक्षधरस्य भ्रातुष्पुत्रः । अयमपि चिन्तामणेः न्यायसिद्धान्तसारनामकं व्याख्यानमलिखत् । पक्षधरीयालोके इतरैः प्रदर्शितानां दूषणानामुद्धरणार्थमयं प्रबन्धो विलिखित इति तदीयात्—

'जयदेवगुरोर्वाचि ये केचिद्दोषदर्शिनः ।
प्रबोधाय मया तेषां दीप्तिर्भूयोऽभिदीप्यते ॥'

इति पद्यादवगम्यते ।

## रुचिदत्तमिश्रः (षोडशं शतकम्)

अयं पक्षधरापराभिधजयदेवमिश्रस्य शिष्येष्वन्यतमः देवदत्तात् रेणुकायां लब्धजन्मा विद्वत्सु प्रख्यातिं प्राप्तः इति—

'अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥'

इति तदीयेन चिन्तामणिप्रथमपद्येन—

'श्रीदेवदत्ततनयो विनयोपगूढः
श्रीरेणुकाविरलगर्भपुटोपजातः ।
श्रीशक्तिदत्तमतिदत्तसहोदरो यः
सोऽमुं चकार रुचिदत्तकृती प्रकाशम् ॥'

इत्यन्तिमपद्येन चावगम्यते । अयं मिथिलायां 'सोदरपुर' इति ख्याते विद्वद्वंशे जनिमलभतेति—

'इति श्रीसोदरपुरकुलसंभूत-महामहोपाध्याय-
श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे'

इति प्रकाशपुष्पिकातः ज्ञायते । भक्कू इति कृतकनाम्नाप्ययं व्यपदिश्यते स्म । शक्तिधरः मतिदत्तश्चेति द्वावस्य सहोदरभ्रातरौ ।

(1) अयं तत्त्वचिन्तामणेः प्रकाशनामकं व्याख्यानमतनोत् । अयं बहूनां गुरूणां सकाशे शास्त्राण्यधिजगे । 'निशम्य सकलं शास्त्रं नानागुरुमुखाम्बुजात्' इति तदीयं पद्यमत्र प्रमाणम् ।

(2) वर्धमानोपाध्यायकृतस्य कुसुमाञ्जलिव्याख्यानस्य प्रकाशस्य मकरन्दनामकं टिप्पणमप्ययं न्यभान्त्सीत् ।

(3) वर्धमानकृतद्रव्यकिरणावलीप्रकाशस्य विवृतिनाम्नीं टीकामप्ययमकरोत् ।

(4) वर्धमानकृतस्य तर्कभाषाव्याख्यानस्य तर्कप्रकाशस्यापि व्याख्यानमयं प्राणैषीत् ।

अस्य कालः—एतत्कृतमकरन्दस्य काचित् प्रतिकृतिः काशीस्थसरस्वतीभवने उपलभ्यते । तत्र तस्याः प्रतिकृतेर्लेखनकालः 1542 or 1548 A.D.

इति निर्दिष्टः । रुचिदत्तेन आलोकस्य प्रतिकृतिः काचिल्लिखिता । तस्याः प्रतिकृतेर्लेखनकालः 1505 A.D. इत्यवगम्यते । अनेन च रुचिदत्तस्य कालः पञ्चदशशतकान्तिमभागः षोडशशतकाद्यभागश्च इति निर्णेतु पार्यते । दाक्षिणात्या बहवो विद्वांसः रुचिदत्तीयप्रकाशस्य व्याख्यामलिखन् । तेन च दक्षिणस्यां दिशि तत्त्वचिन्तामणिप्रकाशस्य महानादरोऽवर्तत इति ज्ञायते । अप्पय्यदीक्षिता अपि तत्र तत्र प्रकाशग्रन्थमनुवदन्ति ।

## रघुपतिमिश्रः (षोडशं शतकम्)

अयं रुचिदत्तमिश्रस्य पुत्रः । अयमपि तत्त्वचिन्तामणेः प्रकाशनामकं व्याख्यानं न्यभान्त्सीत् । तस्य शब्दखण्डः अनुमानखण्डश्च सरस्वतीभवनपुस्तकभाण्डागारे संरक्ष्येते ।

## कविरत्न (खगेश) (अष्टादशं शतकम्)

मिथिलाधिपतेः नरेन्द्रसिंहस्य (1743–70) समकालिकोऽयं तत्त्वचिन्तामणेः प्रत्यक्षखण्डस्य टीकां कांचिदरचयत् यस्याः प्रतिकृतिः दरभङ्गासंस्कृतविश्वविद्यालयीयपुस्तकालये संरक्ष्यते ।

## अथ वङ्गदेशीया मणिव्याख्यातारो विद्वांसः

## वासुदेवसार्वभौमः (पञ्चदशं शतकम्)

वङ्गदेशीयोऽयं पक्षधरमिश्रस्य शिष्यः सटीकं तत्त्वचिन्तामणिं सम्यगधीत्य नवद्वीपं गत्वा तत्र दीधितिकाररघुनाथशिरोमणिप्रभृतीन् बहून् कुशाग्रधिषणान् अन्तेवासिनः अध्यापयामास । अयं तत्त्वचिन्तामणेः सारावलीनामिकां व्याख्यां निरमासीत् यस्याः प्रतिमूर्तिः सरस्वतीभवनसंस्कृतपुस्तकभाण्डागारे उपलभ्यते ।

## रघुनाथशिरोमणिः (पञ्चदशं शतकम्)

महामहिमशालिनः अनितरसाधारणवैदुष्यवारांनिधेः अनल्पकल्पनाशक्तिमण्डितस्यास्य चरितं विस्तरेण डा० उमेशमिश्रादिभिः प्रतिपादितमास्ते । अयं वङ्गदेशीयः बाल्य एव वयसि पित्रा वियुक्तः मात्रा नवद्वीपमानीतः तत्र वासुदेव-

सार्वभौमस्य सकाशे कंचित्कालं न्यायमध्यैष्ट। ततः प्रख्यातस्य पक्षधरमिश्रस्य सकाशे न्यायशास्त्रमधिजिगांसुः मिथिलां प्राप्य पक्षधरमिश्रमुपससर्प। तदीयप्रश्नानां समुचितोत्तरदानेन तं तोषयामास। शिरोमणिनामकेन बिरुदेन संमानितश्च पक्षधरेण। अयं तत्त्वचिन्तामणेः दीधितिनामकं ग्रन्थं अग्रथ्नात्। अयं संक्षिप्तोक्तावतिदक्षः। प्रत्यक्षखण्डे प्रामाण्यवादस्य अनुमानखण्डस्य चैतदीया टीका उपलभ्यते। शब्दखण्डस्य तु नोपलभ्यते। परं तु शब्दखण्डस्यापि दीधितिरनेन कृतेति 'निपुणतरमुपपादयिष्यते चेदं शब्दमणिदीधितौ' इत्येतदीयवाक्यादेवावगम्यते।

## जानकीनाथभट्टाचार्यचूडामणिः (षोडशं शतकम्)

अयं प्रसिद्धो वङ्गदेशीयो नैयायिकः न्यायसिद्धान्तमञ्जरीनाम्नः ग्रन्थस्य प्रणेता। अयं तत्त्वचिन्तामणेः मणिमरीचिनिबन्धनामकं व्याख्यानं चकार।

## मथुरानाथतर्कवागीशः (षोडशं शतकम्)

अस्य नव्यनैयायिकविद्वत्सु असाधारणं स्थानं वर्तते। अयं तत्त्वचिन्तामणेः रहस्यनामकव्याख्यानस्य प्रणेता। इतरव्याख्यानानि न मूलार्थस्य प्रकाशकानि अपि तु मूलोपरि संभवतामाक्षेपाणां समाधानतत्पराण्येव प्रायो भवेयुः। एतदीयं तु व्याख्यानं मणेरर्थं सुस्पष्टया सुबोधया च शैल्या प्रकाशयतीति इतरापेक्षया अस्य व्याख्यानस्य वैशिष्ट्यं भवति।

## श्रीकृष्णकान्तविद्यावागीशः

अष्टादशशतकस्यान्ते संभाव्यमानसत्ताकः वङ्गदेशीयः शब्दशक्तिप्रकाशिकायाः व्याख्याता श्रीकृष्णकान्तविद्यावागीशः तत्त्वचिन्तामण्युपमानखण्डस्य दीपनीनाम्नीं व्याख्यां व्यरचयत्। 'तृतीयचिन्तामणिमाधुरी पुनः सुदुर्लभा चेति परिश्रमो मम' इति वदन्नयं उपमानखण्डस्य मथुरानाथीयव्याख्यानस्य दुर्लभत्वं स्वेन व्याख्याकरणे निमित्तं कथयति। सरलया सरण्या मूलार्थप्रकाशकोऽयं ग्रन्थः माधुरीप्रतिनिधित्वमर्हतितराम्।

## अथ दक्षिणदेशीयाः चिन्तामणिव्याख्यातारः

## राजचूडामणिमखिन् (सप्तदशं शतकम्)

अयं तञ्जापुरीयरघुनाथनायकमहाराजसभायामास्थानपण्डितः तत्त्वचिन्तामणेः दर्पणनामकं व्याख्यानं चकार ।

## धर्मराजाध्वरीन्द्राः (सप्तदशं शतकम्)

द्रविडदेशीयैः कण्डरमाणिक्काग्रहाराभिजनैः विख्यातैः वेदान्तपरिभाषाकारैः धर्मराजाध्वरीन्द्रैः चिन्तामणेः तर्कचूडामणिनामकं व्याख्यानं विरचितमिति वेदान्तपरिभाषास्थात्—

'येन चिन्तामणौ टीका दशटीकाविभञ्जिनी ।<br>तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥'

इति पद्यादवगम्यते । परं तु तर्कचूडामणिनामकानां तालकोशानां आमूलाग्रं परिशीलनेन स ग्रन्थः न चिन्तामणेः साक्षाद्व्याख्यानरूपः अपि तु रुचिदत्तमिश्रकृतस्य तत्त्वचिन्तामणिप्रकाशस्य व्याख्यानरूप इत्यस्माभिरवगतम् ।

## प्रकाशकारः रुचिदत्तमिश्रः

प्रकाशाख्यव्याख्यानस्य कर्तुः रुचिदत्तस्य अधुना अस्माभिः प्रकाश्यमानस्य कालादिकमधिकृत्य पूर्वमेवावोचाम । प्राध्यापकः इङ्गालसमहाशयः[1] एवं लिखति यत् रुचिदत्तः A. D. 1505 संवत्सरे कंचन आलोकस्य स्वहस्तलिखितकोशं सज्जीकृतवान् (Transcribed) इति । तेन च पञ्चदशशतकान्तिमभागादारभ्य षोडशाद्यभागान्तः रुचिदत्तस्य काल इत्यवगम्यते । अयं आलोककर्तुः पक्षधरमिश्रस्य शिष्यः सन्नपि स्वकीये चिन्तामणिप्रकाशे बहुत्र आलोकमनुसृत्य व्याख्यानं कुर्वन्नपि तत्र तत्र आलोकमतं खण्डयति । तेनास्य प्रतिभाप्रकर्षः उन्नीयते । प्राक्तनानि उपाध्यायादिकृतव्याख्यानान्यपि विमृशति । स्वयं स्वातन्त्र्येण विचारमनेकेषु स्थलेषु प्रवर्तयति । अतिविस्तरमकुर्वाणः मितैः पाण्डित्यगर्भैर्वचोभिः चिन्तामण्याशयं प्रकाशयति । कुसुमाञ्जलिप्रकाशव्याख्याने मकरन्दे असकृत्

---

1. Material for the study of Navyanyaya p. 7

स्वकृतं तत्त्वचिन्तामणिप्रकाशं रुचिदत्तः उल्लिखति । तेनोभयोः समानकर्तृकत्वमवसीयते । जयदेव-रघुनाथादिकृतानि मणिव्याख्यानान्यपूर्णानि । रुचिदत्तकृता इयं प्रकाशव्याख्यैव चतुर्णामपि खण्डानामविच्छिन्ना उपलभ्यते । अतः अस्य प्रकाशस्य प्रकाशनमावश्यकमुपकारकं च मत्वा तत्कर्मणि अहं प्रावर्तिषि ।

## न्यायशिखामणिकारस्य चरितादि

रुचिदत्तकृतस्य प्रकाशस्य त्रिचतुराणि व्याख्यानान्युपलभ्यन्ते । श्रीपेत्तादीक्षितकृता 'तत्त्वचिन्तामणिप्रकाशसार'नाम्नी व्याख्या समग्रा मद्रराजकीयपुस्तकागारे हस्तलिखितप्रतिरूपेण लभ्यते । वैद्यनाथदीक्षितकृता प्रत्यक्षानुमानप्रकाशव्याख्या, तच्छिष्येण तार्क्ष्यनारायणेन कृता शब्दखण्डप्रकाशव्याख्या च तञ्जापुरीयसरस्वतीमहाल्कोशालये लभ्येते । धर्मराजाध्वरिकृतः तर्कचूडामणिः तत्पुत्ररामकृष्णाध्वरिकृतः न्यायशिखामणिश्चेतीमानि प्रकाशव्याख्यानानि । तेषु वेदान्तपरिभाषाकारैः धर्मराजाध्वरीन्द्रैः कृतः अनुमानादिशब्दान्तपरिच्छेदव्याख्यानभूतः तर्कचूडामणिः, तत्पुत्रैः रामकृष्णाध्वरिभिः कृतः प्रत्यक्षखण्डप्रकाशस्य व्याख्यानभूतः न्यायशिखामणिश्च प्रमुखं स्थानं वहतः । अत एव प्राध्यापकैः डा० वि. राघवन् महाशयैरादिष्टोऽहं एतद्व्याख्यानसहितं प्रकाशं प्रकाशयितुमनाः अभवम् । पितापुत्रयोरनयोश्चरितादिकमधिकृत्य वेदान्तपरिभाषाभूमिकायाम् महामहोपाध्याय—अनन्तकृष्णशास्त्रिणः एवमलिखन्[1]—

## परिभाषाकारग्रामकुलकालादिनिर्णयः

वेदान्तपरिभाषाग्रन्थसम्पादकाः स्वनामधन्यश्रीधर्मराजाध्वरीन्द्राः श्रीकुम्भघोणसमीपस्थवेलाङ्गुडिग्रामाभिजनाः सांप्रतं मद्रपुरमधिवसतां ज्योतिर्विदग्रेसरपण्डितप्रवरश्रीयुतकडलङ्गुडिनटेशशास्त्रिणां मूलपुरुषाः (वृद्धप्रपितामहाः) श्रीवेंकटनाथानां जगद्गुरुत्वेन परिभाषायामुल्लिखितानामात्मजा इति सामान्यतः परिभाषोपक्रमगतश्लोकतः, विशिष्य श्रीनटेशशास्त्रिणां मुखाच्चावगच्छामः ।

एते हि—' निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥'

---

1. वे. प. भूमिका पृ. 125-126

इति श्लोकसंग्रहणात् कल्पतरुतः, अस्मदीयव्याख्यानप्रदर्शितया प्रणाल्या सिद्धान्तलेशसंग्रहमवष्टभ्यैव 'किं च धारावाहिकज्ञानस्थले' इत्यादिपरिभाषा-ग्रन्थप्रवृत्त्या ततोऽर्वाचीनाः, विठ्ठलमिश्रीये लघुचन्द्रिकाव्याख्याने यथास्मद्-व्याख्याननिर्देशं (Page 71) परिभाषानामानुवादात् ततः, ततः श्रीमद्भागवत-तोषणीसारभूमिकोक्तरीत्या सार्धशतसंवत्सरतः श्रीपुरुषोत्तमगोस्वामिभिः येषां श्रीवल्लभसंप्रदायाचार्याणां प्रादुर्भावकालः 1668 इति तदीया मन्यन्ते, स्वीये प्रस्थानरत्नाकरे परिभाषानामोपन्यासात् ततः, गङ्गाधरेन्द्रसंयमीन्द्रैः स्वीयस्वाराज्य-सिद्धिव्याख्यायां 41 तमे श्लोके परिभाषानामोल्लेखात् येषां तद्ग्रन्थविरचनकालः तदीयनिर्देशानुसारमेव 1692 तमः क्रैस्ताब्दः इति पण्डितप्रवरश्रीकडलङ्गुडि-नटेशशास्त्रिवर्याः तदीयभूमिकायां विलिखन्ति ततः, आचार्यश्रीनिवासदासकृत-यतीन्द्रमतदीपिकायां 'केचित्तु' इत्यादिना प्रमालक्षणप्रत्यक्षविचाराद्यवसरे परि-भाषाया एवानूद्य निरसनात्ततः, फलतः मार्किं त्रिशतवत्सरेभ्यः पूर्वतना इति निश्चिनुमः। यतीन्द्रमतदीपिकाकारास्तु तदीयद्वितीयमङ्गलश्लोकसंप्रदायाद्यनुसारेण श्रीमहाचार्याणां श्रीदोड्डयाचार्याणां पाराशर्यविजयादिग्रन्थप्रणेतॄणां ये खलु पाराशर्यविजये न्यायरक्षामणेरेव शब्दतोऽनूद्य निरसनात् ऐतिह्यविशेषादिभिश्च श्रीमदप्पय्यदीक्षितसमकालिकाः, तेषामन्तेवासिनः, क्रैस्तवसप्तदशशतकस्यारम्भ-कालमलमकार्षुरिति मैसूरुनगरनिवासिनः श्रीयुतगोविन्दाचार्यस्वामिनः स्वीयाङ्गल-भाषामये यतीन्द्रमतदीपिकानुवादे भूमिकायां विवेचयन्ति।

ततश्च वयमत्रेदं विश्वसिमः—यत् श्रीधर्मराजाध्वरीन्द्राः श्रीमदप्पयदीक्षित-समकालिकाः, अथवा यतीन्द्रमतदीपिकालेखनसमये वृद्धा आसन्निति सप्तदश-शतकस्योपक्रमसमय एव एतेषामपि समय इति। श्रीनटेशशास्त्रिणां पितृपिता-महौ मार्किं नवतिवर्षजीविन आस्ताम्। श्रीनटेशशास्त्रिणस्तु सांप्रतं त्रिपञ्चाश-द्वयस्तु वर्तन्ते। श्रीरामकृष्णदीक्षितानां श्रीधर्मराजाध्वरीन्द्रात्मजानामप्यन्ततो गत्वा सप्ततिर्वयसां नासंभाविता। ततश्च मार्किं त्रिशतवत्सरेभ्यः पूर्वमेतेषां जीवनमासीदिति संभावनायाः पूर्वतनसंभावनायाश्च ऐकरूप्यमपि सिद्धं भवति। इतः परं तु चरितविमर्शनचञ्चव ऐतिहासिका एव प्रमाणम्।" इति।

अस्मन्मित्रवर्यः अधीतशास्त्रः विद्वान् V. स्वामिनाथन्महाशयोऽपि स्वकीये 'रामकृष्णाध्वरिन्' इति शीर्षकाङ्किते आङ्गलभाषामये लेखे वक्ष्यमाणप्रकारेण

प्रतिपादयति— वेदान्तपरिभाषाव्याख्याने वेदान्तशिखामणौ नृसिंहाश्रमिविरचितां पञ्चपादिकाव्याख्यां भावप्रकाशिकां उदाहरति । स च नृसिंहाश्रमी धर्मराजाध्वरीन्द्रस्य गुरोर्गुरुः । नृसिंहाश्रमी स्वकीये तत्त्वविवेके स्वस्य कालः सं 1604 (A. D. 1547) इति निर्दिशति । किं च अप्पयदीक्षिताः सिद्धान्तलेशसंग्रहे नृसिंहाश्रमिकृतामद्वैतदीपिकां परामृशन्ति । अप्पय्यदीक्षितकालः (A.D. 1520—A.D. 1592) । अपि च रत्नप्रभाकारः रामानन्दः नृसिंहाश्रमटीकामुल्लिखिति । रामानन्दस्य कालस्तु षोडशशताब्द्याः उत्तरार्धम् । एतेन नृसिंहाश्रमकालः A.D. 1470—1550 भवितुमर्हति । अतः नृसिंहाश्रमप्रशिष्यस्य धर्मराजाध्वरिणः कालः षोडशशताब्द्याः उत्तरार्धम् इति तत्पुत्रस्य श्रीरामकृष्णाध्वरिणः कालोऽपि षोडशशताब्द्याः अन्तिमभागः सप्तदशशताब्द्याः आद्यभागश्चेति निश्चेतुं शक्यते इति । अयमेव सिद्धान्तः प्रकृतन्यायशिखामणावुद्धृतानां केषांचित् ग्रन्थानां कालपरामर्शेनापि प्रतिष्ठापितो भवति । तथा हि—यथा—जयदेवः (A.D. 15th), शशधरः (A.D. 12th), नरहरिमिश्रः (A.D. 15th), वर्धमानः (A.D. 14th), उपाध्यायः (A.D. 15th), रुचिदत्तमिश्रः (A.D. 16th), प्रभाकृत् (यज्ञपतिः) (A.D. 15th), मधुसूदनः (A.D. 16th), वटेश्वरः (A.D. 14th), प्रगल्भः (A.D. 15th), पक्षधरमिश्रः (A.D. 15th) भास्करः, खण्डनकृत्, शुचिकरः, भवस्वामिभट्टः, वाचस्पतिमिश्रः, इति । एतेषु मधुसूदनठक्कुरः षोडशशताब्द्याः अन्तिमभागनिवासीति डा. उमेशमिश्राः निर्णयं चक्रुः । अतः न्यायशिखामणिकारस्य कालः सप्तदशशतकस्य आद्यभागादारभ्य भवेदिति संभाव्यते ।

एवं बहवो ग्रन्था अपि न्यायशिखामणौ नाम्ना उल्लिखिताः । ते यथा—कुसुमाञ्जलिः, महार्णवः, न्याससिद्धान्तदीपः चरकग्रन्थः, सुश्रुतग्रन्थः आत्रेयग्रन्थः, द्रव्यप्रकाशः, प्रभा, आलोकः, प्रकाशः, उद्धारः, कालपरिशिष्टम्, निबन्धनम्, प्रमेयतत्त्वबोधः, किरणावली, खण्डनम्, तात्पर्यटीका, आत्मतत्त्वविवेकः इति ।

संक्षिप्तशब्दविन्यासरुची रुचिदत्तः स्वप्राक्तनानि सर्वाणि व्याख्यानानि दृष्ट्वा तत्रत्यत्रुटिपूरणं तत्र तत्र कुर्वन्नपि पूर्वव्याख्याननामादिकं नोल्लिखति । अतः शिखामणिकारः प्राक्तनानि सर्वाण्यपि व्याख्यानान्यालोक्य यत्र तदपेक्षया

वैलक्षण्यं प्रकाशे दृश्यते तादृशस्थलेषु पूर्वव्याख्यानेषु विद्यमानमसामञ्जस्यं प्रकटयति । 'जयदेवमतमाह' 'उपाध्यायमतमाह' इत्येवं तत्र तत्र ग्रन्थानां प्रदर्शनेन स्वस्य सर्वग्रन्थपर्यालोडयितृत्वं सूचयन्नत्यन्तमुपकारमप्यातनोति । स्वयं च बहुषु स्थलेषु प्रकाशमपि खण्डयन् स्वातन्त्र्येण निष्कर्षं करोति । अयं दीधितिकारं वा गदाधरभट्टाचार्यं वा न कुत्रापि निर्दिशति । अतस्तयोर्ग्रन्थावयं नापश्यदित्युन्नीयते । न केवलं न्याये अपि तु मीमांसायामप्यस्यान्यादृशं पाण्डित्यमासीदिति प्रकृतन्यायशिखामणौ तत्र तत्र सुसूक्ष्माणां मीमांसाविषयाणां विवेचनात् वेदान्तपरिभाषाव्याख्यानेऽपि बहुत्र तेषां विवेचनाच्च अवगम्यते । अयं शिखामणिकारः स्वपितृसकाश एव सर्वाणि शास्त्राण्यध्यैष्ट । अस्य स्वग्रामः कण्डरमणिक्कनामा तञ्जापुरप्रान्तान्तर्गतः कावेरीतीरे विराजते । अयं श्रोत्रियग्रामः बहूनां परंपरया विदुषां यायजूकानां च निवासस्थानमासीत् ।

## रामकृष्णाध्वरिकृता ग्रन्थाः

### (1) न्यायशिखामणिः—

अयं रुचिदत्तमिश्रविरचितस्य तत्त्वचिन्तामणिप्रत्यक्षखण्डप्रकाशस्य व्याख्यानरूपः । पित्रा धर्मराजाध्वरिणा अनुमानादिखण्डप्रकाशस्य तर्कचूडामणिनामकं व्याख्यानं कृतमिति तेन परित्यक्तस्य प्रत्यक्षखण्डप्रकाशस्य व्याख्यानं न्यायशिखामणिनामकं पुत्रेण रामकृष्णाध्वरिणा कृतम् । इतरथा हि पित्रा उपक्रान्तं महत्तमं कार्यमपूर्णमेवाभविष्यत् । अस्माभिर्बहुधा कृतेऽपि प्रयत्ने समग्रं प्रत्यक्षप्रकाशव्याख्यानं नोपलब्धम् । प्रत्यक्षखण्डे वायुप्रत्यक्षवादपर्यन्तस्यैव शिखामणिरुपलब्धः। तदुपरितनो भागः स्वल्प एवेति नातीव हानिः । यथोपलब्धं संस्कृत्य प्रकाशितः अधुना । ग्रन्थकर्तुः पाण्डित्यातिशयस्य निकषायमाणोऽयं ग्रन्थः ।

### (2) न्यायदर्पणः—

अयं पूर्वमीमांसासूत्राणां व्याख्यानरूपः । प्रशिथिलोऽस्य तालकोशः मद्रपुरीयहस्तलिखितपुस्तकभाण्डागारे उपलभ्यते ।

(3) वेदान्तसारटीका —

इयं सदानन्दकृतस्य वेदान्तसारस्य व्याख्यानरूपा । अस्या हस्तलिखित-प्रतिः दुर्लभा । अथाप्येतादृशो ग्रन्थोऽनेन विरचित इति काट्लग्स्काट्लाग्रमृतः अवगम्यते ।

(4) वेदान्तशिखामणिः—

वेदान्तपरिभाषायाः विस्तृतव्याख्यानरूपः । न्यायरीत्या विचारं परिष्कारं चात्र करोति । अपेक्षिताः सर्वेऽपि विषयाः सम्यग्विचार्य परिष्कृत्य चात्र प्रतिपादिताः ।

## मूलमातृकाणां परिशीलनम्

तत्त्वचिन्तामणेः प्रत्यक्षखण्डः आलोक - माथुरीभ्यां सह कलकत्तानगरे बहोः कालात्पूर्वं एषियाटिक्सोसाइट्या प्रकाशितः अधुना अप्रत्यक्षतां गतः । पुस्तकशालास्वपि तस्य प्रतिर्दुर्लभा वर्तते । प्रामाण्यवादमात्रं दीधिति - गादाधरीभ्यां सह काञ्चीपुर्यां पण्डितप्रवरैः अनन्ताचार्यैः प्रकाशितमासीत् । मङ्गलवाद-प्रामाण्यवादौ जयदेवमिश्रविरचितेन आलोकेन महेशठक्कुरकृतेन दर्पणेन च सह मिथिलायां डां. उमेशमिश्रैः प्रकाशमनीयेताम् । एतत्पुस्तकत्रयं तत्त्वचिन्तामणि-मूलसम्पादने उपयुक्तम् ।

प्रकाशस्य समग्रा हस्तलिखितप्रतिः तञ्जापुरीयसरस्वतीमहाल्कोशागारे सुरक्षिता वर्तते । सा प्रायः शुद्धा । तस्याः क. इति चिह्नं दत्तम् । अपरा प्रत्यक्ष-प्रकाशस्य प्रतिः तालकोशरूपा मद्रपुरीयहस्तलिखितपुस्तकभाण्डागारे वर्तते । सा तु प्रायोऽशुद्धा । तस्याः ख. इति चिह्नं दत्तम् । एतन्मातृकाद्वयमवलम्ब्य प्रकाशस्य सम्पादनमकार्षम् । तयोर्मातृकयोः क्रमशो विवरणं यथा—

## तत्त्वचिन्तामणिप्रकाशः

**6190. TATTVACINTĀMAṆIPRAKĀŚA**

Burnell's catalogue No. 2137. Page 115. Right column. Substance—Paper. Size—12×5 inches. Sheets—501. Lines—11 to a page. Script—Devanagari. No. of granthas—16580. Author—Rucidatta. Complete. Not printed.

**Beginning :**

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥

प्रारिप्सितप्रतिबन्धकविघ्नविघाताय कृतं नमस्कारं शिष्यशिक्षायै निबध्नाति-गुणातीतेति । सत्त्वरजस्तमोगुणातीत इत्यर्थः । अपिशब्दो विरोधाभासाय। ईशोऽप्रतिहतेच्छः ।

**End :—**

आर्षं च ज्ञानं पूर्वोक्तन्यायेन मानसमेव । एतच्च सर्वमभिसन्धाय सिद्धवदाह—सिद्धवदिति ।

सन्तः स्वभावसुभगाः सुजनोपहार-
संभारमात्रशरणाः करुणारसार्द्राः ।
अभ्यर्थये कृतिमिमां कृतिनो वहन्तः
प्रेमस्पृशा ननु दृशा परिशीलयन्तु ॥

**Colophon :—**

श्रीदेवदत्ततनयो विनयोपगूढः
श्रीवे(रे)णुकाविमलगर्भपुरोपजातः ।
श्रीशक्तिदत्तमतिदत्त(महोदयो)[सहोदरो] यः
सोऽयं चकार रुचिदत्तकृः(ती)प्रकाशः(शम्) ॥

इति श्रीरुचिदत्तविरचिते चिन्तामणिप्रकाशे शब्दखण्डः समाप्तः ।

**Subject :** Tattvacintāmaṇiprakāśa, known as Rucidattiya ;

Pratyakṣa, Anumana and sabda.

**Remarks :** The Ms. is in a fairly good condition.

Son of Devadatta and Reṇuka, Rucidatta was a Maithila and he studied under Pakṣadharamiśra. He wrote a commentary on the Tattvacintamani, known as Prakasa. One saktidatta also seems to be his teacher. The probable date of Rucidatta is the 13th century A.D.

### D. No. 4013 तत्त्वचिन्तमणिप्रकाशः

### TATTVACINTAMANIPRAKASAH

Substance, Palm leaf. Size $17\frac{7}{8} \times 1\frac{1}{2}$ inches. Pages 295. Lines, 7 on a page. Character, Grantha, condition, injured, Appearance, new.

Pratyakṣa-Pariccheda complete.

A commentary on the Tattvacintamani of Gangesa by Rucidatta.

*Beginning* :

कृष्णोत्तरच्छदपटार्धकृतान्तराल-
मुत्तालनिश्वसितनुन्नपयोधराग्रम् ।
ईशे स्फुटागसि विभिन्नतनोस्तनोतु
सुप्तं रुषा शयनसीम्नि शिवं शिवायाः ॥

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥

प्रारिप्सितविघ्नविघाताय कृतं नमस्कारं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—गुणातीत इति । सत्त्वरजस्तमोगुणातीत इत्यर्थः । अपिशब्दो विरोधाय । ईशोऽप्रतिहतेच्छः ।

*End* :

नन्वेवं पदार्थस्मृतेरपि यथार्थत्वाभावे तन्मूलकं ज्ञानमयथार्थं स्यादित्यत आह—प्रमुष्टेति । पदात्पदार्थस्मरणं प्रमुष्टतत्ताकमेवेति तन्नायथार्थमित्यर्थः । तत्तोल्लेखिस्मरणाभिप्रायेणाह—तदाहुरिति ।

*Colophon* :

इति श्रीमहोपाध्यायरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
प्रत्यक्षपरिच्छेदः समाप्तः

न्यायशिखामणेः मातृकाचतुष्टयं सम्पादनकर्मण्युपयुक्तम् ।

(1) मैसूर Oriental Research Institute पुस्तकशालायां No. 205 सङ्ख्याङ्कितः कन्नडमिश्रतेलुगुलिप्यां लिखितः सूक्ष्माक्षरयुतः तालपत्रमयः प्रायः

शुद्धः कोशः प्रथमः । आदित आरभ्य वायुप्रत्यक्षवादान्तो भागः अत्र विद्यते । अस्मिन्नेव तालकोशे धर्मराजाध्वरीन्द्रविरचितः अनुमानखण्डप्रकाशव्याख्यानभूतः तर्कचूडामणिग्रन्थोऽप्यस्ति । अस्मिन्नेव कोशे इतरकोशापेक्षया अधिकतरो भागो विद्यते । अस्य कोशस्य क. इति चिह्नम् ।

(2) तञ्जापुरस्थसरस्वतीमहाल्कोशागारस्थः ग्रन्थलिप्यां लिखितस्तालकोशो द्वितीयः । आदितः प्रामाण्यवादपर्यन्तो भागोऽत्र वर्तते । प्रायः शुद्धोऽयम् । परं तु मैसूरकोशतुल्या शुद्धिरत्र नास्ति । अस्य कोशस्य चिह्नं ख. इति । अस्याः विवरणं सरस्वतीमहाल् Descriptive Catalogue अनुसारेण यथा—

## तत्त्वचिन्तामणिप्रकाशव्याख्या — न्यायशिखामणिः

### 6228. TATTVACINTAMANIPRAKASAVYAKHYA—NYAYASIKHAMANI

Burnell's catalogue No. 10870. Page 115. Right column. Substance—Palm leaf. Size—15 × 1¼ inches. Leaves—216. Lines—7 to a page. Script—Grantha. No. of granthas—4320. Author—Ramakrishnadhvarin. Incomplete. From the beginning up to Pramanyavada. Not printed.

*Beginning* :

प्रारिप्सितप्रतिबन्धकविघ्नसंघातविघातकं स्वाभीष्टदेवतानमस्काररूपं मङ्गलमाचरितुं शिष्यानुग्रहाय ग्रन्थतो निबध्नाति—कृष्टोत्तरेति । इह स्वकृत्यनुवृत्तये स्वनामग्रन्थनामनी ख्यापयन् श्रद्धेयवचनत्वाय स्वस्य संप्रदायाभिज्ञगुरूपदिष्टसकलशास्त्रार्थसारतां दर्शयति—अधीत्येति ।

*End* :

तथा सति समूहालम्बनविशेषणताविशेष्यकत्ववर्णनवैयर्थ्यादित्याशङ्क्य विशिष्टबुद्धौ तस्याः प्रकाशकत्वाभावेन प्रकारशब्दस्य विषयपरत्वात् तच्छब्देनापि तथैव परामर्श इत्याशयेनाह——तथा चेति ।

*Colophon* :

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
न्यायशिखामणौ प्रामाण्यवादः समाप्तः

*Subject* :

**Tattvacintamaniprakasavyakhya otherwise known as Nyaya-sikhamani—Pramanyavada**

*Remarks* :—**The Ms. is in fairly good condition.**

**The author of this commentary on Prakasa is Ramakrisna-dhvarin. Son and Commentator of Dharmarajadhvarin of Kandaramanikkam referred to above. His date is the 17th Century A. D. This work of his in this Ms. runs up to the Pramanyavada and is called Nyayasikhamani.**

(3) मद्रपुर्याम् अडयारकोशालये विद्यमानस्तालकोशस्तृतीयः। अयं कोशः ग्रन्थलिपिमयः अतिसूक्ष्माक्षरः प्रायः शुद्धश्च। अत्र आदिमः मङ्गलवादो नास्ति। प्रामाण्यवादमारभ्य अनुपलब्धिवादे किंचिद्भागपर्यन्तं वर्तते। अस्य कोशस्य चिह्नं ग. इति। अस्याः मातृकायाः विवरणं यथा—

**No. 68555**

**तत्त्वचिन्तामणिप्रकाशव्याख्या—न्यायशिखामणिः।**

**Palm leaf. Grantha. No. of folls 139. Lines, 8 incomplete.**

*Beginning* :

ननु प्रमाणतत्त्वमत्र विविच्यत इत्यनेनैव प्रेक्षावत्प्रतिपित्सितार्थप्रतिज्ञासिद्धेः शेषवैयर्थ्यम्। न चान्वीक्षिकीप्रयोजनमोक्षाभिधानमुखेन तत्प्रतिपाद्यैकदेशप्रमाण-तत्त्वनिरूपकस्वग्रन्थस्यापि तत्प्रयोजनसिद्धेर्न शेषवैयर्थ्यमिति वाच्यम्।

*End* :

ननु तत्र नासीदित्येव सार्वत्रिकः पाठः। तथा चाभावपदस्य न गौणा-भावपरत्वम्। किं चैवं स्मरणाभावस्य मैत्राभावप्रमापकत्वे मैत्रविपर्ययानुप-पत्तिरित्युक्तं स्यात्। तच्चायुक्तम्, अन्यत्र विपर्यये विरोधाभावात्। न हि रूप-प्रमापकं चक्षुरिति रसे न विपर्यय इत्यरुचेराह—वस्तुत इति। ननु ज्ञाततानि-राकरणेऽपि प्रवृत्त्यादिलिङ्गात्तदनुमीयत इत्यत आह-एतच्चेति। ज्ञानातीन्द्रियत्व।

(P. 724)

(4) बडोदास्थप्राच्यहस्तलिखितपुस्तकभाण्डागारतः लब्धः ग्रन्थलिप्यां लिखितः 7802 संख्याङ्कितः प्रायः शुद्धः तालकोशश्चतुर्थः। आदित आरभ्य संनिकर्षवादे किंचिद्भागपर्यन्तमत्र विद्यते। अस्य कोशस्य चिह्नं घ. इति।

*Beginning* :

मुद्रितपुस्तकं द्रष्टव्यम्

*End* :

अन्यथा आलोकसंयोगादेरपीन्द्रिये विषये वावच्छेदकत्वापत्तिः । यदि च पृथगन्वयव्यतिरेकानुविधानात् तस्य पृथक् कारणत्वम्, तदा कर्णसंयोगेऽपि तुल्यमिति ब्रूमः । ननु गृह्यमाणशब्दस्य....

( P. 636 )

प्रकाशन्यायशिखामण्योः उपयुक्तानां कोशानां मध्ये यस्मिन् कोशे स्थितः पाठः शुद्ध इत्यस्माकं प्रत्यभात् स पाठः उपरि निवेशितः, अन्ये पाठाः पाठान्तरत्वेन अधस्ताद्दत्ताः । क्वचित् सर्वेषु कोशेष्वशुद्धता यत्र लक्ष्यते तत्र अशुद्धपाठः (     ) इति चिह्नमध्ये, अस्माभिः कल्पितः शुद्धपाठः [     ] इति चिह्नमध्ये च निवेशितः । क्वचित्कस्यचित्पदस्य पूरणं विना वाक्यमनन्वितमिति यत्र प्रतीतम् तत्र [     ] इति चिह्नमध्ये अधिकपदं संयोजितम् । यत्र विद्यमानं पदं वाक्यं वा अधिकमनन्वितं च प्रतिभातम् तत्र (     ) इति चिह्नमध्ये तादृशं पदं वाक्यं वा निवेशितम् । ईदृशेषु स्थलेषु पण्डिताः प्रमाणम् ।

## संपादनमार्गलाभः

यदा तिरुपतौ स्थापितस्य केन्द्रीयसंस्कृतविद्यापीठस्य मद्रपुरीयविश्वविद्यालये संस्कृतप्राध्यापकाः डॉ॰ राघवन् महाशयाः अध्यक्षा आसन् (1963-67) तदाहमेतत्सम्पादनकर्म कर्तुमादिष्टः । प्रतिदिनं विद्यापीठे विभागीयकार्यान्तरानुपरोधाय एकघण्टात्मकः काल एव एतत्कार्यस्य कृते अनुमतः आसीत् । प्रतिदिनं तस्मिन्नतिपरिमिते काले आदौ प्रकाशमातृकां तञ्जापुरीतः विद्यापीठनिदेशकानां डॉ॰ वी. आर. शर्मा महोदयानां द्वारा आनाय्य एकवर्षं यावत् तस्याः प्रतिकृतिलेखने व्यापृतोऽभवम् । ततः प्रकाशव्याख्यायाः न्यायशिखामणेः एकवर्षं यावत् प्रतिकृतिलेखनमकरवम् । ततः मद्रपुरीस्थकोशालयात् प्रकाशस्य मातृकां सम्पाद्य तया सह तोलनं कृत्वा पाठभेदादिकं न्यवेशयम् । ततः न्यायशिखामणेः तालकोशान् अडयार-मैसूर-बडोदापुस्तकालयेभ्यः सम्पाद्य तैः सह तोलनं कृत्वा पाठभेदान् अलिखम् । अन्यद्वारा प्रतिलिप्यादिकरणे विद्यापीठे संविधानाभावात् स्वयंकरणे परिशुद्धतातिशयसंभावनया च अहमेक एव सर्वमपि

कार्यभारमवहम् । विद्यापीठे अनुमतामेकघण्टामन्तरा स्वगृहे रात्रौ प्रातश्च एतत्कार्यं समपादयम् । ततः कः शुद्धः पाठ इत्यादिकं पर्यालोच्य मुद्रणोपयोगिप्रतिमूर्ति (Press copy) करणे प्रायः वर्षद्वयं व्यापृतोऽभवम् । आकृत्या विषयतश्च महतोऽस्य ग्रन्थस्य मुद्रणोपयोगिप्रतिकृतिसंपादने तावान् कालः एकाकिनो ममापेक्षित आसीत् । गृहकार्यान्तरादिकं सर्वमप्युपेक्ष्य पञ्चवर्षात्मकः कालः प्रत्यक्षखण्डमात्रसंपादनस्य मया स्वीकर्तव्योऽभवत् । स्वानुभवैकवेद्यान् क्लेशानहं न शब्दतो वर्णयितुं प्रभवामि । तदनन्तरं मुद्रणालयं प्रति प्रेषणं ततः मुद्रितपत्राणां स्वयमेव शोधनमित्यादयोऽप्यासन् क्लेशाः । 'क्लेशः फलेन हि पुनर्नवतामुपैति' इति वचनमनुचिन्त्य संतुष्टो भवाम्यधुना ।

## एतद्ग्रन्थसंपादनस्योद्देश्यम्

यदाहं बाल्ये वयसि न्यायशास्त्रमधीयान आसम् तदानीं कस्यचन प्रसिद्धस्य वृद्धस्य नैयायिकस्य मुखादश्रौषमिमां वाचम्—'तत्त्वचिन्तामणौ किं वर्तते ? पञ्चलक्षण्यां चत्वारि वाक्यानि, चतुर्दशलक्षण्यां पञ्चषवाक्यानि, सिद्धान्तलक्षणे एकमेव वाक्यम् एवंरीत्या अतिसंक्षिप्तो मणिः, तेन कियान् विषयोऽवगतो भविष्यति ? दीधितिगादाधरीभ्यामेव न्यायशास्त्रस्य माहात्म्यं प्रतिष्ठितमस्ति' इति । अहमप्येतच्छ्रवणेन तात्त्विकमिदं वचनम् इत्येव मन्यमानः आसम् । यदा तु मणिग्रन्थस्य समग्रमपि भागमद्राक्षम् तदानीं नूनमेते प्राचीनपण्डिताः समग्रं चिन्तामणिं न दृष्टवन्तः, केवलं पञ्चलक्षण्यादिबाधान्तग्रन्थपठनेनैव कालं यापितवन्तः इत्यज्ञासिषम् । समग्रस्य मणेरध्ययनं विना परिमितानां व्याख्योपव्याख्यानमण्डितानां मणिग्रन्थभागलेशानामध्ययनमात्रं न पर्याप्तमिति निरचिनवम् । तत्रापि प्रत्यक्षखण्डं प्रायः प्राञ्चो विद्वांसः न साक्षात्कृतवन्तः विशिष्य च दक्षिणदेशीयाः । प्रत्यक्षखण्डमणिग्रन्थोऽपि सकृत् बहुकालात्पूर्वं कलकत्तानगरे मुद्रापितः अधुना दुर्लभः । अतः सव्याख्यस्य तस्य भागस्य प्रकाशनमवश्यकर्तव्यं मत्वा तत्र च प्रकाशातिरिक्तव्याख्यानानामसमग्रतां पर्यालोच्य इतः प्राक् अप्रकाशितेन अप्रकाशितव्याख्यानयुक्तेन प्रकाशेन सह मुद्रणं संपादयितुं अधिकारिणां केन्द्रीयशासनस्य च अनुमतिं लब्ध्वा व्यापृतोऽभूवमिति तत्त्वम् । मन्ये एतत्प्रकाशनं महान्तमुपकारमाधास्यति विदुषामिति ।

## कृतज्ञतानिवेदनम्

कस्यापि प्रौढस्य ग्रन्थस्य सम्पादनं पाण्डित्यं विना न कर्तुं पार्यते । अतो बाल्य एव वयसि महत्या कृपया न्यायादिशास्त्राण्युपदिष्टवतां मद्ग्रामनिवासिनां विद्याशीलसम्पन्नानां श्रीदेवनाथताताचार्याणाम्, मत्पितृचरणानां श्रीकृष्णस्वामिताताचार्याणाम्, तर्कार्णववादिविरुदभूषितानां श्रीवीरराघवाचार्याणाम् अन्येषां च गुरूणां प्रथमतः कृतज्ञो भवामि ।

ततः एतद्ग्रन्थसम्पादने प्रथमप्रेरकाणां तथा आमुखलेखनेनानुगृहीतवतां पद्मभूषण० प्राध्यापक० भूतपूर्वैतद्विद्यापीठाध्यक्ष० डॉ० राघवार्याणां हार्दं कार्तज्ञ्यं प्रकटयामि ।

ततः एतद्ग्रन्थसम्पादनौपयिकीः मातृकाः तत्तत्पुस्तकालयादानाय्य दत्तवतां भूतपूर्व - एतद्विद्यापीठनिदेशकानाम् इदानीं पञ्जाब्विश्वविद्यालये संस्कृतप्रोफसर्पदमधितिष्ठतां नानाग्रन्थान् नवीनया पद्धत्या सम्पाद्य प्रकाशितवतां प्राच्यप्रतीच्यनानाभाषाविदुषां डा. बी. आर्. शर्ममहोदयानां संनिधौ नमोवाकप्रशासनं विना किमप्यन्यत् उचितं न पश्यामि । सर्वदा भवामि तेषां विषये कृतज्ञः ।

एवं भूतपूर्वाध्यक्षैरादिष्टमिदं कार्यं स्वानुमतिदानेन फलेग्रहि कृतवतां ज्ञानशीलवयोवृद्धानां भूतपूर्वबिहारराज्यपालानां विद्यावाचस्पतीनाम् अधुना तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठस्थानीयप्रबन्धकसमिति - सभापतीनाम् अनन्तशयनमय्यङ्गार्महाशयानां सविधे कृतज्ञतां निवेदयामि ।

तथा एतस्य सव्याख्यस्य तत्त्वचिन्तामणिग्रन्थप्रत्यक्षखण्डस्य मुद्रणौपयिकधनव्यवस्थां केन्द्रशासनात् सम्पाद्य मुद्रणाख्यं कर्म निष्पादितवतां भूतपूर्व - एतद्विद्यापीठप्रांशुपालानां श्रीवेङ्कटराघवाचार्याणां सविधे धन्यवादान् वितरामि । तथा निष्पन्नस्यास्य ग्रन्थस्य प्रकाशनं कुर्वताम् अधुना एतद्विद्यापीठस्य प्राचार्यपदमलंकुर्वताम् डा. मण्डनमिश्रमहोदयानां सविधे कार्तज्ञ्यं प्रकटयामि ।

ततः एतद्ग्रन्थमुद्रणमनुमत्य तदुचितधनादिप्रदानेन उपकृतवतां राष्ट्रियसंस्कृतसंस्थानाधिकारिणां डॉ० आर्. के. शर्माप्रभृतीनां सविधे आन्तं कृतज्ञो भविष्यामि ।

तथा अपेक्षितहस्तलिखितप्रतीनां प्रदानेन उपकृतवताम् मद्रपुरीयहस्त-लिखितपुस्तकालय-अडयारकोशालय–महीशूर अनुसन्धानालय-तञ्जापुरीयसरस्वती-महाल्कोशालय-बडोदाकोशालय—अध्यक्षाणां सविधे भवामि भविष्यामि च कृतज्ञः ।

ततः समीचीनया रीत्या मुद्रणं कृतवतां मद्रपुरीस्थरत्नमुद्रणालयाधिकृतानां सविधे कृतज्ञो भवामि । अस्य प्रथमप्रूफ्शोधनं मुद्रणालयाधिकारिप्रार्थनामनुसृत्य कृतवते मद्रपुरीयविश्वविद्यालये दर्शनविभागे प्रवक्तृपदमलंकुर्वते डा. वीलिनाथाय मङ्गलानि प्रयुञ्जे ।

इति विद्वज्जनविधेयः

**एन्. एस्. रामानुजताताचार्यः**

न्याय-व्याकरण-मीमांसा-वेदान्तशिरोमणि

शास्त्ररत्नाकरः, तर्कवाचस्पतिः ।

## वादार्थसंग्रहः

दुरूहे मणिग्रन्थे प्रत्यक्षखण्डे विद्यमानानां वादानां प्रतिपाद्या ये अर्थास्तेऽत्र संग्रहेण कथ्यन्ते अध्येतॄणां सौकर्यार्थम् ।

### (1) मङ्गलवादार्थसंग्रहः

सर्वेऽपि शिष्टाः ग्रन्थकाराः ग्रन्थारम्भसमये मङ्गलमाचरन्तीति सर्वसम्प्रतिपन्नम् । तत्र मङ्गलाचरणे किं प्रमाणम्? किं वा प्रयोजनम्? इत्ययं विषयः मङ्गलवादे सुनिपुणं निरूप्यते मणिकारैः । मङ्गलाचरणमधिकृत यो यावान् विषयो यथा मणौ विवेचितः, न तथा शास्त्रान्तरग्रन्थेषु विचारित इति निश्चप्रचं वक्तुं शक्यते ।

अस्मिन् मङ्गलवादे आदौ मङ्गलस्य समाप्तिकारणत्वं प्रतिज्ञाय ततः अन्वयव्यतिरेकव्यभिचाराभ्यां मङ्गलस्य समाप्तिकारणत्वे न संभवतीत्याक्षेपमुत्थाप्य शिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे प्रमाणम् । तथा च श्रुतिप्रमितस्य समाप्तिकारणत्वस्य संरक्षणाय जन्मान्तरीयमङ्गलकल्पनादिना व्यभिचारः परिहरणीय इति समाधानं प्राब्रवीत् । ततः आरब्धकार्यनिष्पत्त्युद्देशेन क्रियमाणत्वात् मङ्गलमारब्धकर्माङ्गमिति न्यरूपयत् ।

ततः विघ्नध्वंसद्वारा मङ्गलमारब्धकर्माङ्गम्, न तु प्रयाजादिवदपूर्वद्वारा इति व्यवास्थापयत् । ततः मङ्गलस्य विघ्नध्वंसद्वारा अङ्गत्वे स्फ्याश्लिष्टेज्याधिकरणविरोधमाशङ्क्य तत्परिहारं प्रत्यपादयत् । ततः अङ्गानां प्रधानविधिविधेयत्वात् मङ्गलस्य तदभावात् कथमङ्गत्वमित्याशङ्कां समादधे । ततो यागादिवत् प्रधानदेशकालान्वयो मङ्गले स्यादिति शङ्कां पर्यहार्षीत् । ततः स्वतःसिद्धविघ्नात्यन्ताभावस्थले मङ्गलं निष्फलं स्यादित्याक्षेपं समाहितवान् ।

ततः मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः व्यभिचारान्मङ्गलं नाङ्गम् । न च जन्मान्तरीयं तत्, जन्मान्तरीयग्रन्थादिकमुद्दिश्य शिष्टैस्तदकरणादिति पूर्वपक्षं प्रापयत् । ततः मङ्गलं प्रधानम्, अदृष्टद्वारा आरब्धकर्मसमाप्तिः फलमिति मतविशेषमनूद्य निरास्थत् । ततः मङ्गलं विघ्नसंसर्गाभावद्वारा आरब्धकर्मसमाप्ति-

जनकम् । स चाभावः सतो विघ्नस्य ध्वंसः, अनागतस्यानुत्पादः इति मतमनूद्य अखण्डयत् । तथा च मङ्गलं नाङ्गम्, न वा प्रधानमिति पूर्वपक्षमुपसमहरत् ।

ततः 'सिद्धान्तस्तु' इत्यादिना मङ्गलस्य न ग्रन्थसमाप्तिः फलम्, अपि तु विघ्नध्वंसः । समाप्तिस्तु लोकावगतस्वकारणादेव इति स्वमतं सयुक्तिकमसाधयत् ।

ततः मङ्गललक्षणार्थं विचारं प्रवर्त्य 'निर्विघ्नमारब्धं परिसमाप्यताम्' इति कामनया तद्विघ्नोपशमहेतुत्वेन वा वेदविहितत्वं मङ्गलत्वमिति निष्कर्षमकार्षीत् । ततः शिष्टत्वं परिष्करोति स्म । तथा च शिष्टाचारानुमिता श्रुतिरेव मङ्गलाचरणे प्रमाणमिति प्रतिपाद्य मङ्गलवादं समापयति स्म । एवमिमे मङ्गलवादचर्चिता विषयाः ।

## (2) प्रामाण्यवादार्थसंग्रहः

मणिकारः ग्रन्थारम्भे मङ्गलमनुष्ठाय स्वकृतस्य मङ्गलस्य वैफल्यं मा शङ्कीति तस्य समाप्तिहेतुत्वं विघ्नध्वंसहेतुत्वं च व्यवस्थापयितुं मङ्गलवादाख्यं प्रकरणं विधाय ततः स्वचिकीर्षिते ग्रन्थे प्रेक्षावतां प्रवृत्तिसिद्ध्यर्थं निःश्रेयसफलवदान्वीक्षिकीसंबन्धात् स्वग्रन्थस्यापि परमप्रयोजनवत्त्वं विवक्षुः तादृशान्वीक्षिकीसंबन्धश्च आन्वीक्षिकीप्रतिपाद्यपदार्थप्रतिपादकत्वरूपः स्वग्रन्थे सकलेतरपदार्थसिद्धिहेतुभूतप्रमाणाख्यपदार्थविवेचकत्वादस्तीति सूचनार्थम् आदौ 'तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते' इति प्रतिज्ञां कृतवान् ।

ततः प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं तत्त्वज्ञानादिपरम्परया निःश्रेयसेन संबध्यत इति न युज्यते, प्रमाणतत्त्वस्यावधारयितुमशक्यत्वात् । तद्धि प्रमातत्त्वावधारणाधीनम्, प्रमाकरणस्यैव प्रमाणत्वात् । प्रमातत्त्वं च स्वतः परतो वा न संभवति, पक्षद्वयेऽपि दोषसद्भावात् इत्याक्षेपसमाधानव्याजेन प्रामाण्यवादमुपाक्रंस्त ।

अयं प्रामाण्यवादः मतिमतामपि दुरूहैर्बहुभिर्विषयैर्गर्भित इति तत्रत्यविषयाणां बोधसौकर्यार्थं संग्रहं कुर्मः ।

(1) कस्मिंश्चिद्विषये ज्ञाते सति जाते ज्ञाने प्रामाण्यबुद्धिमन्तरा विषये प्रवृत्तिर्न भवतीति ज्ञानगतप्रामाण्यज्ञानमपि प्रवृत्तिहेतुरिति वक्तव्यम् । न च 'इदं

ज्ञानं प्रमा' इति ज्ञानं विनापि प्रवृत्तेरुत्पत्त्या व्यतिरेकव्यभिचारात् प्रामाण्यज्ञानस्य प्रवृत्तिहेतुत्वं नास्तीति वाच्यम्। बहुवित्तव्ययायाससाध्ये यागादौ प्रवृत्तेः प्रामाण्यनिश्चयं विना असंभवात्। न च तत्राप्यावश्यकादर्थनिश्चयादेव प्रवृत्तिरिति वाच्यम्। यस्य संशयः यद्व्यतिरेकनिश्चयश्च यत्प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरित्यवश्यं स्वीकरणीयम्। यथा व्याप्तिसंशये वा व्याप्तिव्यतिरेकनिश्चये वा सति अनुमितिर्न जायत इति व्याप्तिनिश्चयोऽनुमितिहेतुरित्यङ्गीक्रियते, तथा प्रामाण्यसंशये वा प्रामाण्यव्यतिरेकनिश्चये वा सति प्रवृत्तिर्न जायत इति प्रवृत्तिं प्रति प्रामाण्यनिश्चयः कारणमिति सिध्यति। तथा च ज्ञानप्रमात्वनिश्चयं विना प्रवृत्त्यसंभव इति।

न च ज्ञाने प्रामाण्यसंदेहे सति अर्थसंदेहात् अर्थनिश्चयरूपकारणाभावादेव प्रवृत्त्यभावोपपत्तौ प्रवृत्तिं प्रति प्रामाण्यसंदेहस्य प्रतिबन्धकत्वाभावेन उक्तनियमाप्रवृत्त्या प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रति हेतुत्वाभावात् प्रामाण्यस्वतस्त्वपरतस्त्वविचारः अनवसर इति वाच्यम्। यत्र ज्ञानविशेषे प्रमात्वसंदेहो जायते तत्र निष्कम्पप्रवृत्तिः इदमित्थमेवेत्यवधारणादेव सम्पादनीया। तच्चावधारणं ज्ञानस्य प्रमात्वनिश्चयं विना न संभवतीति प्रवृत्तिहेतुभूतार्थनिश्चयहेतुतया प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रति प्रयोजकत्वात् प्रामाण्यनिश्चयोऽपि सम्पादनीयः। स च स्वतः परतो वेति विचारः प्रस्तूयत इति आदौ उपोद्घातः प्रदर्शितः।

(2) ततः प्रामाण्यज्ञप्तिः स्वत एवास्तु इति मीमांसकमतमुपक्षिप्य पश्चानां विप्रतिपत्तीनां प्रस्तावव्याजेन ज्ञप्तौ स्वतस्त्वं परतस्त्वं च पञ्चधा निरुक्तम्।

(3) ततः ज्ञानविषयकज्ञाने ज्ञानप्रामाण्यं कथं विषयो भवितुमर्हति इत्याक्षेपमुत्थाप्य 'घटमहं जानामि' इत्यनुव्यवसाये व्यवसायात्मकज्ञानलक्षणप्रत्यासत्त्या यथा घटो घटत्वं च भासते तथा तयोः संबन्धोऽपि भासते, तद्विषयकव्यवसायरूपप्रत्यासत्तेरपि सद्भावात्। पुरोवर्तिनि प्रकारसंबन्धस्यैव प्रमात्वपदार्थत्वात् प्रमात्वविषयकत्वमनुव्यवसायस्येति समाधानमुक्तम्।

(4) ततः प्रामाण्यं यदि परतो ज्ञायेत तदा फलमुखी कारणमुखी चानवस्था स्यादिति पूर्वपक्षं प्रापय्य उदयनाचार्योक्तसांशयिकत्वलिङ्गेन प्रामाण्यस्य परतोज्ञेयत्वं सिद्धान्तितम्। तत उदयनाचार्योक्तानुमानमेव परिष्कृत्य प्रदर्शितम्।

(5) ततः प्रामाण्यस्यानुमेयत्वे अनुमितेः पूर्वं प्रामाण्यरूपसाध्यप्रसिद्ध्यभावेन व्याप्त्यग्रहात् कथमनुमानमित्याशङ्क्य तत्र सम्प्रदायमतानुसारेण स्वमतानुसारेण च समाधानं प्रत्यपादि ।

(6) ततः स्वतस्त्ववादिभिरापादितायाः द्विप्रकाराया अपि अनवस्थायाः परिहारः प्रोक्तः ।

(7) ततः अभ्यासदशायां प्रामाण्यं स्वतो गृह्यते अनभ्यासदशायां परत इति मतमनूद्य खण्डितम् । अयं ज्ञप्तिवादस्थप्रधानविषयसंग्रहः ।

ततः प्रामाण्योत्पत्तिवादे प्रामाण्यस्य परत एवोत्पत्तिरिति विस्तरेण शङ्कासमाधानपूर्वकं निरणायि ।

ततः प्रमात्वोपत्तौ दोषाभावमात्रं कारणं न तु गुण इति शङ्का समाधायि । ततः प्रमामात्रे नानुगतो गुणो हेतुः, किं तु तत्तत्प्रमायां तत्तद्गुणविशेष इति निरधारि ।

ततः प्रत्यक्षादिप्रमायामस्तु गुणजन्यत्वम्, वेदे तु भ्रमप्रमादविप्रलम्भाशक्त्यभावचतुष्टयमेव प्रमायां हेतुर्भवतु इत्याक्षेपसमाधानव्याजेन वेदे वक्तृयथार्थज्ञानं गुण इति सम्प्रदायविन्मतमनुसृत्य व्यवास्थापि ।

ततः 'अत्र ब्रूमः' इत्यादिना स्वमतेन यथार्थयोग्यताज्ञानं वैदिकप्रमाहेतुर्गुण इत्युपापादि ।

तदनन्तरं प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते चेति प्राभाकरमतं विस्तरेणानूद्य खण्डितम् । एवं प्रामाण्योत्पत्तिवादस्थमुख्यविषयाणां संग्रहः ।

## (3) प्रमालक्षणवादार्थसंग्रहः

अस्मिन् वादे प्रसङ्गसंगत्या प्राक्तनग्रन्थस्थानि बहूनि यथाश्रुतानि प्रमालक्षणानि अनूद्य दूषयित्वा तेषु कानिचिल्लक्षणानि निर्दोषतया परिष्कृत्य प्रादर्शिषत ।

## (4) अन्यथाख्यातिवादार्थसंग्रहः

पूर्वं प्रमालक्षणवादे 'तद्वति तत्प्रकारकोऽनुभवः प्रमा' इति प्रमायाः लक्षणमुक्तम् । तत्र चानुभवत्वमात्रं प्रमाया लक्षणमित्युक्ते अप्रमायामतिव्याप्तिः

स्यादिति तद्वारणाय तद्वति तत्प्रकारक इति विशेषणं दत्तम्। तन्न युक्तम्। सर्वेषामपि ज्ञानानां यथार्थत्वात् अप्रमात्मकज्ञानस्यैवाभावात् तद्वारकविशेषण-वैयर्थ्यादिति प्राभाकरमतेन आशङ्क्ये अन्यथाख्यातिपदवाच्यं अप्रमात्मकं ज्ञानं व्यवस्थाप्यतेऽत्र। अत्र अख्यातिवादिनां प्राभाकराणां मतं सम्यक् परिपोष्यानूद्य खण्ड्यते। अत्र यया प्रक्रियया प्राभाकरमतमनूदितं सा प्रक्रिया प्रकरणपञ्चिकादावपि दुर्दर्शा। एतद्दर्शनेनैव मणिकाराणां प्राभाकरमर्मज्ञत्वं स्पष्टीभवति। 'गुरुभिर्ज्ञात्वा गुरूणां मतम्' इति मङ्गलश्लोके प्रतिज्ञातं अन्वर्थीकृतमत्र वादेऽपि।

## (5) प्रत्यक्षलक्षणवादार्थसंग्रहः

अस्मिन् वादे सूत्रादिप्राचीनग्रन्थारूढानि प्रत्यक्षलक्षणानि दूषयित्वा 'ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्' इत्यादिना स्वाभिमतानि प्रत्यक्षलक्षणानि स्थापितानि। प्रसङ्गादिन्द्रियलक्षणमप्युक्तम्। 'साक्षाद्धीः प्रत्यक्षम्' इति प्राभाकरसंमतं लक्षणं च विस्तरेण दूषितम्।

## (6) संनिकर्षवादार्थसंग्रहः

संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावः इति षड्विधानामपि संनिकर्षाणां सयुक्तिकं संभावितााशङ्कानिरासपूर्वकं प्रत्यक्षं प्रति हेतुत्वं साध्यतेऽत्र वादे। तथा समवायसंनिकर्षप्रसङ्गात् कदम्बगोलकन्यायेन वा वीचीतरङ्गन्यायेन वा श्रोत्रदेशं प्रति आगतः शब्द एव श्रोत्रेण गृह्यत इति सयुक्तिकं प्रतिपाद्यते।

## (7) समवायवादार्थसंग्रहः

पूर्वस्मिन् संनिकर्षवादे शब्दप्रत्यक्षं प्रति समवायाख्यः संनिकर्षो हेतुरिति प्रतिपादितम्। तत्र समवायनामकपदार्थस्यैवाप्रामाणिकत्वात् कथं तस्य संनिकर्षत्वमिति प्रश्नमुपक्षिप्य विस्तरेण समवायाख्यः पदार्थः प्रसाध्यतेऽत्र वादे। एतं समवायपदार्थमधिकृत्य प्रायः शास्त्रान्तरकारैर्बहुधा दूषणानि प्रादर्शिषत। तेषां दूषणानां परिहारोऽस्माद्वादादवगन्तुं शक्यते। तथा गुणक्रियादिविशिष्टबुद्धिनिर्वाहकतया समवायपदार्थस्वीकारे अभावविशिष्टबुद्धिनिर्वाहकतया वैशिष्ट्याख्यपदार्थान्तरमपि कल्प्यतामित्याक्षेपः विस्तरेण खण्ड्यतेऽत्र वादे। मीमांसकादयः

गुणगुण्यादीनाम् अभेदं भेदाभेदं वा स्वीकृत्य तादात्म्यसंबन्धेनैव गुणादिविशिष्ट-बुद्धिं निर्वहन्तः समवायं निराकुर्वन्ति । तन्मतखण्डनाय गुणगुण्यादीनां भेदोऽपि समर्थ्यते । ततः समवायस्वीकारेऽपि तस्य संनिकर्षत्वं मास्तु इत्याक्षिप्य समाधीयते ।

## (8) विषयालोकसंनिकर्षवादार्थः

संनिकर्षवादे षड्विधानामिन्द्रियसंनिकर्षाणां प्रत्यक्षकारणत्वमुपपादितम् । तद्वत् विषयालोकसंयोगः, महत्त्वम्, उद्भूतरूपं च प्रत्यक्षकारणमिति अत्र वादे निरूप्यते ।

## (9) वायुप्रत्यक्षवादार्थः

बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षसामान्यं प्रति उद्भूतरूपस्य कारणत्वादेव वायोरुद्भूतरूपविरहात् न प्रत्यक्षगोचरत्वम्, अपि तु स्पर्शादिलिङ्गकानुमानैक-वेद्यत्वमिति अत्र वादे साध्यते ।

## (10) सुवर्णवादार्थसंग्रहः

वायुप्रत्यक्षवादान्ते 'वायुः बहिरिन्द्रियजन्यप्रत्यक्षाविषयः नीरूपद्रव्यत्वात् आकाशवत्' इत्यनुमानेन वायोरप्रत्यक्षत्वं साधितम् । तत्र च उद्भूतस्पर्शानाश्रय-त्वमुपाधिरित्याशङ्क्य, यदि हि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतस्पर्शस्य हेतुत्वं स्यात् तदा उद्भूतस्पर्शानाश्रयत्वमुपाधिर्भवेत् । तस्य तु तत्र हेतुत्वमेव न, तथा सति सुवर्णस्य प्रत्यक्षता न स्यात् । सुवर्णं हि तेजोद्रव्यं प्रभावत् उद्भूतरूपयुक्त-मपि उद्भूतस्पर्शाश्रयो न भवति इति समाधानमुक्त्वा, ततः उपलभ्यमानपीति-मगुरुत्वयोराश्रयात् पृथिवीतोऽन्यत तेजोरूपं सुवर्णं नास्त्येव । पार्थिवभागस्तु उद्भूतस्पर्शाश्रयत्वात् प्रत्यक्षो भवितुमर्हतीति शङ्कामुद्भाव्य अनुमानेन पार्थिव-भागातिरिक्तं तत्संयुक्तं तेजोरूपं द्रवद्रव्यं साध्यतेऽत्र वादे ।

## (11) अनुपलब्ध्यप्रामाण्यवादार्थः

संनिकर्षवादे यदुक्तम् विशेषणताख्यसंनिकर्षेण प्रत्यक्षविषयोऽभाव इति, तन्न संगच्छते, अभावस्यानुपलब्ध्याख्यप्रमाणगम्यत्वेन प्रत्यक्षवेद्यत्वाभावादित्याक्षेप-

मुद्भाव्य अनुपलब्धेः प्रमाणान्तरत्वं सयुक्तिकं निराकृत्य प्रत्यक्षगम्यत्वमभावस्य समर्थ्यतेऽत्र वादे ।

## (12) अभाववादार्थः

प्राभाकराः अभावाख्यस्यातिरिक्तस्य प्रमेयस्याभावात् न तत्प्रमितिसाधनमनुपलब्ध्याख्यमन्वेषणीयम् । भावात्मकस्याभावस्य भावग्राहकैरिन्द्रियादिभिरेव प्रमातुं शक्यत्वादिति न्यरूपयन् । तन्मतखण्डनपूर्वकं अभावाख्यमतिरिक्तपदार्थं स्थापयित्वा तस्य प्रागभावादिभेदेन चातुर्विध्यमपि प्रदर्श्यतेऽत्र वादे ।

## (13) मनोऽणुत्ववादार्थः

'इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्' इति प्रत्यक्षलक्षणपक्षे सुखादिसाक्षात्कारे चक्षुरादिप्रसिद्धेन्द्रियजन्यत्वाभावादव्याप्तिरिति शङ्कायाः परिहाराय अयं वादो मणाववतारितः । सुखादिसाक्षात्कारः इन्द्रियजन्यः साक्षात्कारत्वात् रूपसाक्षात्कारवत् इत्यनुमानेन सुखादिसाक्षात्कारसाधनं किंचिदिन्द्रियं सिध्यति । तत्र च चक्षुरादीनां सामर्थ्याभावात् तद्भिन्नम्, लाघवात् निरवयवं च मनस्संज्ञकमिन्द्रियं सिध्यति । तच्च न विभु, अपि त्वणु इत्यस्मिन् वादे प्रसाध्यते । न्यायकुसुमाञ्जलौ तृतीयस्तबके मनोवैभववादखण्डनप्रकरणे विद्यमाना एव विषयाः प्रायो मणावप्यत्र वादे विन्यस्ताः ।

## (14) अनुव्यवसायवादार्थः

मनोऽणुत्ववादान्ते आत्मविशेषगुणा ज्ञानसुखादयः मनोजन्यज्ञानविषयाः इत्युपसंहारः कृतः । तत्र ज्ञानस्य स्वयंप्रकाशत्वेन ज्ञानान्तरवेद्यत्वाभावात् मनोजन्यज्ञानविषयत्वं तस्य न संगच्छते इति प्राभाकरमतानुसारेण पूर्वपक्षमुत्थाप्य, ज्ञानं न स्वयंप्रकाशम्, किंतु 'अहमिदं जानामि' इत्याकारकानुव्यवसायसंज्ञकमानसप्रत्यक्षवेद्यमिति सयुक्तिकमत्र व्यवस्थाप्यते ।

## (15) निर्विकल्पकवादार्थः

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदेन द्विधा विभागं प्रदर्श्य निर्विकल्पकलक्षणं निर्विकल्पके प्रमाणं च अत्र वादे प्रदर्श्यते ।

## (16) विशेषणोपलक्षणवादार्थः

निर्विकल्पकस्य निष्प्रकारकं ज्ञानमिति लक्षणमुक्तं निर्विकल्पकवादे । तत्प्रसङ्गात् प्रकारो द्विविधः विशेषणमुपलक्षणं चेति द्वेधा प्रकारं विभज्य विशेषणोपलक्षणयोर्लक्षणे निष्कृष्य प्रतिपाद्येते अस्मिन् वादे ।

## (17) सविकल्पकवादार्थः

अस्मिन् वादे संक्षेपेण सविकल्पकस्य लक्षणं प्रमाणं चोक्त्वा प्रत्यभिज्ञायाः सविकल्पकेऽन्तर्भावः महता परिकरेण साधितः । तत्र प्रत्यभिज्ञा ज्ञानद्वयरूपेति पूर्वपक्षमुद्भाव्य तस्या एकज्ञानरूपत्वं च सिद्धान्तितम् । ततः प्रत्यभिज्ञाप्रकारभूतयोः तत्तेदन्तयोः स्वरूपे संभावितपक्षोद्भावनपूर्वकं विवेचिते ।

—: * :—

श्रीरस्तु

# तत्त्वचिन्तामणिः

## प्रत्यक्षखण्डः

### ॥ मङ्गलवादः ॥



गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
त्रिमूर्तिर्यः सृष्टिस्थितिविलयकर्माणि तनुते ।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥ १ ॥

---

### प्रकाशः

[1]कृष्णोत्तरच्छदपटार्धकृतान्तराल-
मुत्तालनिश्वसितनुन्नपयोधराग्रम् ।
ईशे स्फुटागसि विभिन्नतनोस्तनोतु
सुप्तं रुषा शयनसीम्नि शिवं शिवायाः ॥ १ ॥

---

### न्यायशिखामणिः

[2]पुष्णातु श्रियमष्टभानुकुलजः कोऽपि प्रवीराग्रणी-
र्येन स्कन्दगुरोः पुरत्रयभिदश्चापे समास्कन्दिते ।
रुद्राय स्थिरधन्वने नम इति व्यक्तं वदन्त्याः श्रुते-
रप्रामाण्यकलङ्कशङ्कि हृदयं चिन्ताकुलं वर्तते ॥ १ ॥

---

1. क. अयं श्लोको न दृश्यते ।
2. ख. आदौ पठिताः ' पुष्णातु ' इत्यादयः पञ्च श्लोकाः न सन्ति ।

**प्रकाशः**

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः ।
चिन्तामणौ ग्रन्थमणौ प्रकाशोऽयं प्रकाश्यते ॥ २ ॥

प्रारिप्सितप्रतिबन्धकविघ्नविघाताय कृतं नमस्कारं शिष्यशिक्षायै निबध्नाति—**गुणातीत** इति । सत्त्वरजस्तमोगुणातीत इत्यर्थः ।

---

**न्यायशिखामणिः**

यच्छिष्यैर्यत्प्रशिष्यैर्विदितनयगणैर्भासिता सर्वभूमि-
र्यल्लीलालेशमात्रात्सकलनयहितानेकटीकाप्रसूतिः ।
यत्कारुण्यस्य लेशादधिगतमधिकं शास्त्रजातं मया तान्
वन्दे श्रीतातपादान् सकलबुधगुरून् धर्मराजाध्वरीन्द्रान् ॥ २ ॥

श्रीगङ्गेशसुदुर्गयुक्तिकलुषश्रीतत्त्वचिन्तामणि-
व्याख्यानोपलधर्षितोऽपि विबुधैरीषत्प्रकाशोऽभवत् ।
सोऽहं न्यायशिखामणिं मणिगतन्यायावलीभासकं
कुर्वे संप्रति तत्प्रकाशविवृतिं श्रीरामकृष्णाध्वरी ॥ ३ ॥

यत्प्रत्यक्षप्रकाशस्य व्याख्यानं बहुभिः कृतम् ।
यज्ञपत्यादिभिर्मिश्रैर्मणेर्यानि कृतान्यपि ॥ ४ ॥

व्याख्यानानि प्रभादीनि तानि भञ्जन् क्वचित् क्वचित् ।
स प्रत्यक्षप्रकाशस्य विवृतिं करवाण्यहम् ॥ ५ ॥

प्रारिप्सितपरिसमाप्तिप्रतिबन्धकविघ्नसंघातविघातकं स्वाभीष्टदेवतानमस्काररूपं मङ्गलमाचरितं शिष्यानुग्रहाय ग्रन्थतो निबध्नाति—**कृष्णोत्तरेति** । इह स्वख्यात्यनुवृत्तये स्वनामग्रन्थनामनी ख्यापयन् श्रद्धेयवचनत्वाय स्वस्य संप्रदायाभिज्ञगुरूपदिष्टसकलशास्त्रार्थसारतां दर्शयति—**अधीत्येति** । नन्वावश्यकमानसनमस्कारेणैव प्रकृतकार्यसिद्धेर्वाचा [1]नमस्कारकरणं किमर्थमित्यत आह—**प्रारिप्सितेति** । यद्यपि नमस्कार्यपरमेश्वरलक्षणतत्प्रमाणजिज्ञासुं प्रति तत्प्रतिपादनमप्यत्राभिमतम् । तथा हि—यस्त्रिजगतां सर्गस्थितिविलयकर्ता स ईश्वर इति तल्लक्षणम्, कर्मपदो-

---

1. ख. घ. नमस्करणम्

## प्रकाशः

अपिशब्दो [1]विरोधाभासाय। ईशः अप्रतिहतेच्छः। इच्छाया गुणत्वमादाय विरोधभानम्। त्रिगुणसचिवः ज्ञानेच्छाप्रयत्नवानित्यर्थः। अकारोकारमकाररूप-त्र्यक्षरमयः ओंकारमय इत्यर्थः। तन्मयत्वं च तद्वाच्यत्वम्। तथा च वाच्यवाच-कभावसंबन्धेन [2]ओंकाररूपगुणवत्त्वलाभाद्विरोधाभासः। त्रिमूर्तिः ब्रह्मविष्णु-शिवात्मकमूर्तित्रयवान्। अत्र सन्निति शेषः। अथ च मूर्तिः अवच्छिन्नपरिमाण-

## न्यायशिखामणिः

वादानेन कार्यत्व[3]लिङ्गकानुमानम्, त्र्यक्षरेत्यनेन प्रणवघटितवेदोपलक्षणेन तत्प्र-माणकत्वं च सूचितम्। स [4]चैक एव न तु नाना, गौरवात्। स च सुखादि-गुणातीतोऽपि परमकृपालुः अतः [5]स्वप्रयोजनाभावेऽपि सर्गादिकं करोति। कृपा-लुश्चेत् [6]स्वर्गिणमेव सृजेन्न नारकिणमिति सर्वसर्गादिकर्तृत्वस्यासंभव इति न युक्तम्। तादृशस्यापि [7]त्रिजगद्वर्तिप्राणिकर्मरूपगुणसापेक्षत्वात्। न च तत्सापेक्ष-त्वमयुक्तम्, अन्यथा तेनैव सर्गादिसंभवे तदुपार्जितशरीरपरिग्रहवैयर्थ्यादिति वाच्यम्। तथापि त्रिषु सर्गस्थितिलयकालेषु स मूर्तिमानेव; अन्यथा वेदघटलि-प्यादिसंप्रदायप्रवर्तकत्वानुपपत्तेः। न च शरीरित्वमयुक्तम्। तथा सत्यस्मदादिवत् किंचिज्ज्ञत्वपरिमितशक्तिकत्वापत्तेरिति वाच्यम्। तथापि परमज्ञानी अपरिमित-महिमैव; अन्यथा अपरिमितजगन्निर्माणानुपपत्तेः। ततश्च लक्षणप्रमाणसद्भावादी-श्वरसिद्धिरित्येव[8] श्लोकार्थः;

तथाप्यालंकारिकरीत्या गुणातीतपदं अपिशब्दं च सर्वत्रानुषज्य [9]विरोधा-भासालंकारपरतया श्लोकं व्याचष्टे—सत्त्वेति। एतच्च सांख्यमतप्रसिद्धिमादाय। वस्तुतः सुखादिगुणातीत [10]इत्यर्थ इत्युक्तं न विस्मर्तव्यम्। [11]नन्वेतावता त्रिमूर्ति-त्वस्य एकत्वेन विरोधो न गुणातीतत्वेनेत्यत आह—[12]अथ चेति।

1. ख. विरोधाभावाय
2. ख. ओंकारशब्दरूप-
3. ख. °लिङ्गानुमानम्
4. क. 'च' नास्ति।
5. ख. सप्रयोजना-
6. क. ख. स्वर्गिणमेव
7. ख. त्रिजगत्प्राणि-
8. ख. °रित्येवं
9. ख. घ. विरोधालंकार-
10. ख. इत्यर्थ इत्युक्तनेपि विस्मर्थव्यम्।
11. ख. घ. 'ननु' नास्ति।
12. क. अत्रापीति।

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।

प्रकाशः

वत्त्वं गुणातीतस्य न [1]संभवतीति विरोधाभासः । यद्वा शरीरात्मकमूर्तिमादाय स बोध्यः । तनुत इत्यत्राख्यातार्थयत्नवत्त्वलाभात् विरोधाभासः । कृपा निरुपाधि-परदुःखप्रहाणेच्छा । [2]परमगतिः अत्यन्तहितकर्ता । अथ च [वा] परमगतिः परमज्ञान इति विरोधाभासः । एकः [3]समानजातीयद्वितीयरहितः । एकत्वसंख्या-वत्त्वमादाय विरोधाभासः । पुरभिदे पुरनामकदैत्यभेदनकर्त्रे[4] । एतेन [5]विघ्न-निवर्तनक्षमत्वमस्य सूचितम् ।

स्वनाम ग्रन्थनाम च स्वकीर्त्यनुवृत्तये प्रदर्शयन् परग्रन्थापेक्षया वैलक्षण्यं प्रवृत्त्यङ्गमाह—अन्वीक्षेति । अत्र न्यायशास्त्रप्राभाकरमतसिद्धान्तसाराभिज्ञ-

न्यायशिखामणिः

मूर्त्यात्मकत्वविवक्षायां विरोधमुक्त्वा तद्गत्त्वविवक्षायामाह— [6]यद्वेति । ननु तनुत इत्यनेन यत्नाभिधाने पौनरुक्त्यमित्याशङ्क्य [7]गुणरहितस्य गुणत्रयवत्त्वं विरुद्धमित्युक्तम् । संप्रति गुणरहितस्य तस्य यत्नरूपगुणवत्त्वं [8]विरुद्धमित्युच्यत इत्याह—तनुत इत्यत्रेति । नन्वीशपदोक्तार्थाभिधानात् पौनरुक्त्यमित्यत आह—निरुपाधीति । अत्यन्तेति । कर्तृत्वं कृतिरूपगुणाश्रयत्वमिति विरोधः । उक्तार्थे परमगतिशब्दस्याप्रयोगात् अर्थान्तरमाह—अथ वेति । ननु पुरभिद इत्यत्र भेदननिमित्तत्वोक्तौ गुणानभिधानेन विरोधासिद्धिरित्यत आह— [9]पुरनामकेति ।

ननु भवतु स्वकीर्त्यनुवृत्तये गङ्गेशश्चिन्तामणिमिति च नामप्रदर्शनम्, [10]तथाप्यन्वीक्षेत्यादि व्यर्थम् । न च [11]परग्रन्थवैलक्षण्यसिद्धये तदिति वाच्यम् । कुसुमाञ्जल्यादिग्रन्थस्यापि तदुभयाभिज्ञकृतत्वादित्याशङ्क्य तदुभयसाराभिज्ञकृत-

1. क. 'सं' नास्ति ।
2. क. 'परमगतिः...अथ च' इति भागः नास्ति ।
3. ख. समानजातीयविरहितः
4. ॰भेदकर्त्रे
5. ख. विघ्ननिवर्तकक्षमत्वमेतस्य
6. क. तद्वत्त्वेति ।
7. ख. गुणत्रयरहितस्य गुणक्रियावत्त्वम्
8. ख. घ. तथेत्युच्यते
9. घ. पुरनामकेति ।
10. क. तथाप्यन्वीक्षेति॰
11. क. पूर्वग्रन्थ॰

तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥ २ ॥
यतो मणेः पण्डितमण्डनक्रिया
प्रचण्डपाषण्डतमस्तिरस्क्रिया ।

---

प्रकाशः

कृतत्वं [1]दोषगणनिरासक्षमत्वम् अल्पवाक्यमयत्वं च प्रकर्षो दर्शितः। दीक्षा उपदेशः।

उद्देश्यग्रन्थस्य तत्त्वचिन्ता[2]मणिनामधेयकरणे बीजभूतं मणिसादृश्यं दर्शयति—यत इति। विपक्षेति। परव्यामोहनशक्तान्मणेरपि विपक्षसैन्यादौ विचारचातुरी न भवतीति मणिसादृश्यं बोध्यम्। स्वकृतस्य मङ्गलस्य व्यभि-

---

न्यायशिखामणिः

त्वमेव प्रकर्षो विवक्षितः। तत्र चोभयाकलनं हेतुरित्यभिप्रेत्याह—अत्रेति। अत्र [3]दोषनिरासकत्वमेव प्रकर्षः। अभयसाराभिज्ञकृतत्वं च तदुपपादकमिति ध्येयम्। नन्वेवमधिकार्थाभिधानायाधिकवाक्यत्वापत्तौ मितेनेत्यसंगतिः। न च मित[4]वाक्यमयत्वलक्षणप्रकर्षोऽत्र[5] न विवक्षित इति वाच्यम्। तथा सति महार्णव-ग्रन्थवैलक्षण्यासिद्धेः। तस्याप्युभय[6]साराभिज्ञकृतत्वेन सर्व[7]दूषणनिवर्तकत्वादित्यत आह—अल्पेति। [8]अनेकार्थपराल्पवाक्यप्रचुरत्वमित्यर्थः। महार्णवग्रन्थस्तु न तथेति भावः।

एतच्चापाततः। अनेकार्थपराल्पवाक्यमयग्रन्थस्य खरत्वेन दुर्बोधत्वाद-पकर्षस्यैव प्रसङ्गात्। [9]शशधरकृतन्यायसिद्धान्तदीपस्याप्युक्त[10]रूपतया तद्वैलक्ष-ण्यासिद्धेश्च। वस्तुत इतरवैलक्षण्यमत्र नाभिमतम्। संप्रदायाभिज्ञ[11]कृतत्वेनैवा-

---

1. क. दोषगुण-
2. ख. °मणिरूपनाम-
3. क. दोषनिरासक्षमत्व-
4. क. °वाक्यत्वलक्षण-
5. ख. 'अत्र' इति नास्ति।
6. ख. °साधनाभिज्ञ-
7. क. ख. °दूषणानिवर्तक-
8. ख. अनेनानार्थपरार्थवाक्य-
9. ख. शशाङ्कर-
10. ख. रूपया
11. क. °कृतत्वेनानापि

विपक्षपक्षे न विचारचातुरी
न च स्वसिद्धान्तवचोदरिद्रता ॥ ४ ॥

इह खलु सकलशिष्टैकवाक्यतया अभिमतकर्मारम्भसमये तत्समाप्तिकामा मङ्गलमाचरन्ति ।

---

**प्रकाशः**

चारेण वैफल्यं मा भूदिति उपोद्घातसंगत्या तस्य समाप्तिहेतुत्वं व्यवस्थापयितुमादौ[1] भूमिकामारचयति—इहेति । प्रसङ्ग एवात्र संगतिरित्यन्ये । इह जगति । खलुशब्दो[2] वाक्यालंकारे । एकवाक्यता अविप्रतिपत्तिः । एतेन भ्रममूलत्वशङ्का निराकृता । आरम्भसमये तत्पूर्वसमये । [3]आचरन्ति । विघ्नज्ञानवन्त इति शेषः ।

---

**न्यायशिखामणिः**

त्रापि प्रवृत्त्युपपत्तेः, उपायस्योपायान्तरादूषकत्वात् । अत एव चरकसुश्रुतात्रेयग्रन्थेषु प्रवृत्तिः ।

ननु मङ्गलानन्तरं प्रमाणतत्त्वमेव निरूप्यताम्, किं प्रकृतासंगतेन तत्साफल्यनिरूपणेन ? [4]किं च इहेत्याद्यसंगतम्, पूर्वपक्षिणा तस्य समाप्तिहेतुत्वानङ्गीकारेण तत्कामाचरितत्वाभिधानवैयर्थ्यादित्यत आह—स्वकृतस्येति । उपोद्घातेति । मङ्गलसाफल्यनिरूपणस्य प्रमाणतत्त्व[5]निरूपकग्रन्थप्रवृत्त्युपयोगित्वात् उपोद्घातत्वम् । अन्यथा मङ्गलवैफल्ये विफलानुष्ठातृकृतत्वेन प्रमत्तकृतत्वशङ्कया तत्र प्रवृत्त्यनुपपत्तेरिति भावः । समाप्तीति । एतच्च संप्रदायमतेन । भूमिकामिति । [6]धर्मिप्रसिद्धिरूपपीठिकामित्यर्थः । न चैवं शिष्टा मङ्गलमाचरन्तीत्यनेनैव मङ्गलरूपधर्मिणः प्रसिद्ध्युपपत्तेः शेषवैयर्थ्यम् । तस्यापि विचारोपयोगित्वात् । अन्यथा अकामकृतजलताडनवदिष्टसाधनत्वभ्रमकृत[7]कर्मवच्च निष्फलत्वापत्तौ समाप्तिहेतुत्व[8]विचारानवकाशापत्तेः ।

---

1. ख. 'आदौ' नास्ति ।
2. क. 'शब्दो' इति नास्ति ।
3. ख. आवसन्ति
4. ख. किं चेति व्योद्यसंगतम् । घ. किं चेति हेत्यासंगतम्
5. ख. °निरूपग्रन्थ-
6. ख. धर्मे°
7. क. °कर्मान्तरवच्च
8. क. °विचारानुपपत्तेः

तत्र यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्या,

प्रकाशः

मङ्गलं [1]समाप्तिजनकं न वेति विप्रतिपत्तिः। तत्र पूर्वपक्षमाह—तत्रेति। तत्र समाप्तौ। [2]तत्त्वनिर्णिनीषुविचारतया अन्यहेतुकोऽपि संशयः इत्यप्याहुः। प्रथमोद्दिष्टत्वेन पुरःस्फूर्तिकत्वेन प्रथमं प्रत्यक्षमाशङ्क्य निराकरोति—नान्वयेति। नान्वयव्यतिरेकसहचारज्ञानसचिवाध्यक्षगम्येत्यर्थः। यद्यपि कारणताशरीरप्रविष्टव्याप्तेरन्वयव्यप्तितया न व्यतिरेकसहचारज्ञानापेक्षा, अन्वयसहचार-

न्यायशिखामणिः

[3]नन्वस्य प्रवृत्त्युपयोगित्वेऽपि प्रकृतप्रमाणतत्त्वनिरूपणानुपयोगित्वान्नोपोद्घातत्वम्; प्रतिपाद्यार्थोपयोगिन एव तथात्वाभ्युपगमात्। अन्यथा गङ्गेशकृतकर्मान्तरवैफल्ये [4]तत्कृतग्रन्थाप्रवृत्त्यापत्त्या तत्साफल्यनिरूपणस्याप्युपोद्घातत्वापत्तेरित्यस्वरसात् जयदेवमतमाह— प्रसङ्ग इति। बुद्धिस्थस्योपेक्षानर्हत्वं प्रसङ्गः। [5]न चैतन्मते इहेत्यादिपूर्व[6]वाक्यवैयर्थ्यम्। मङ्गलं विफलं समाप्तीतराफलकत्वे सति समाप्त्यफलकत्वात् जलताडनवत्, समाप्तिकामाचरितत्वेन पश्वादिकामनया तस्याकृतत्वान्न विशेषणासिद्धिरित्यर्थपरत्वात्। [7]यद्वा तत्त्वनिर्णिनीषुविचारे साधारणासाधारणधर्मदर्शनजन्यसंशयोऽपि हेतुः। तादृशश्चात्र धर्मः समाप्तिकामाचरितत्वम्।[8]तथा चास्य धर्मस्य संशयद्वारा विचारोपयोगित्वमेवैतन्मते भूमिकात्वं बोध्यम्। ननु प्रतिपुरुषमुच्चार्यमाणस्य वाक्यस्य भेदात् कथमेकवाक्यत्वमित्याशङ्क्य एकजातीयं वाक्यं येषां ते तथा तद्भाव एकवाक्यतेत्यभिप्रेत्याह—एकेति। तत्कामस्य विघ्नाभावनिश्चयवतोऽ[9]प्रवृत्तेराह—विघ्नेति।

ननु पूर्ववाक्यस्य [10]धर्मिप्रसिद्धिरूपभूमिकापरत्वपक्षे विचारोपयोगिसंशयहे-[11]त्वलाभात् कथं तत्प्रवृत्तिरित्यत आह—मङ्गलमिति। नन्वस्मिन् पक्षे आचर-

1. ख. समाप्तिसाधकं
2. ख. तत्त्वनीतिषु
3. ख. ननु प्रवृत्त्युप-
4. क. तत्कृतग्रन्थप्रवृत्त्यनुपपत्त्या
5. ख. न चैवं तन्मते
6. क. °पूर्वग्रन्थ-
7. ख. यदा
8. क. घ. तथा च तस्य
9. ख. °प्रवृत्तेनाह
10. ख. धर्मि-
11. क. °हेत्वभावात्

**प्रकाशः**

सत्त्वे न तद्विलम्बेन विलम्बः; तथापि कारणाभावे कार्यसत्त्वसंशयो व्यभिचारसंशयत्वेन तद्ग्रहप्रतिबन्धक इति तन्निवृत्त्यर्थं तत्र कार्याभावज्ञानमनुसरणीयमेव, [1]तदेव व्यतिरेकसहचारज्ञानमित्याहुः। वस्तुत उभयस्यापि सहचारस्य एकेनानुगतेन रूपेण अन्वयव्याप्तिग्राहकत्वमिति न तदुपादानवैयर्थ्यम्। तच्चानु[2]गतं रूपं व्यतिरेकिणि वक्ष्यामः। **विनापीति**। तथा च व्यभिचारेण

**न्यायशिखामणिः**

न्तीत्यनन्तरं विप्रतिपत्ति[3]कल्पनं दोषः। मतान्तरे तु आद्यवाक्यस्य विचारोपयोगितादृशधर्मप्रदर्शकत्वात् तत्कल्पना आवश्यिकी। किं च संशयाभावे विचाराप्रवृत्तेस्तदर्थं विप्रतिपत्तिजन्यसंशये सतीत्यर्थपरत्वं तत्रेत्यस्यावश्यं वाच्यम्। तथा च समाप्ताविति [4]व्याख्यानमसंगतमित्यस्वरसात् जयदेवमतमाह—**तत्त्वेति**। **अन्येति**। साधारणादिधर्मदर्शनजन्य इत्यर्थः। तथा चैतन्मते तत्रेत्यस्य तादृशधर्मदर्शनजन्यसंशये सतीत्यर्थः। न चैवं मङ्गलस्येत्यत्र समाप्तावित्यध्या[5]हारापत्तिः। [6]तवापि तत्रेत्यस्य विप्रतिपत्तिजन्यसंशयपरत्वेन तदध्याहारस्यावश्यकत्वात्। न चैवमपि विप्रतिपत्त्यनभिधाने न्यूनता कथकसंप्रदायविरोधश्चेति वाच्यम्। विजिगीषुविचार एव विप्रतिपत्तिनियमात्। तदुक्तमन्यत्र सर्वहेतुक इति। [अन्यहेतुक इति]

नन्वन्वयव्यतिरेकसहचारयोः स्वरूपसत[सतो]स्तत्रागमकत्वात् तज्ज्ञानस्य चाप्रमाणत्वात् अप्रसक्तप्रतिषेध इत्यत आह—**नान्वयेति**। साक्षादजनकत्वेऽपि व्यभिचारसंशयनिवृत्तिद्वारा तदुपयोगीत्याह—**तथापीति**। नन्वेवं तुल्यतयोपादानमसंगतम्। यदि चैकरूपेणाग्रे हेतुत्वस्थापनात् तुल्यत्वम्, तदा [7]अन्यतरोपादानवैयर्थ्यम्; मिलितयोस्तयोरजनकत्वादित्यरुचेर्जयदेवमतमाह—**वस्तुत इति**। [8]**उभयस्यापीति**। तथा च नान्वयगम्या न व्यतिरेकगम्येति साध्यद्वयमिति भावः। ननु न व्यतिरेकसहचारज्ञानस्यापि तत्र हेतुत्वम्, उभयानुगत-

1. 'तदेव' इति नास्ति।
2. ख. ॰गतरूपं
3. ख. कल्पनदोषः
4. ख. व्याख्यानं संगत-
5. क. ॰हारानुपपत्तिः
6. क. घ. तथापि
7. क. अन्यतरवैयर्थ्यम्
8. ख. उपायस्यापीति।

**मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः। न च तत्र जन्मान्तरीयतत्कल्पनम्; अन्योन्याश्रयात्, लोकावगतकारणेनान्यथासिद्धेश्च।**

---

**प्रकाशः**

[1]ग्राह्यस्य कारणत्वस्याभावनिश्चयेनान्वयसहचारेण वा व्यतिरेकसहचारेण वा न तद्ग्रह इत्यर्थः। यद्यपि जन्मान्तरीयमङ्गलसंशयाद्व्यभिचार[2]निश्चयो नास्त्येव, तत्संशयश्च न विरोधी,तस्य ग्राह्यसंशयपर्यव[3]सन्नत्वेन प्रमाणापरिपन्थित्वात्। तथापि प्रत्यक्षेण व्याप्तिग्रहे अन्वयव्यतिरेकाभ्यां तादृशस्यापि तस्य प्रतिबन्धकत्वम्। अत एव व्यभिचारज्ञानमात्रस्य [4]तत्प्रतिबन्धकत्वमिति सिद्धान्त इति भावः। **अन्योन्याश्रयादिति।** क्लृप्ते [5]जन्मान्तरीयमङ्गले व्यभिचाराभावे सति [6]हेतुत्वग्रहः,

---

**न्यायशिखामणिः**

रूपाभावादिति **नरहरिमिश्रोक्तं** दोषमाशङ्क्याह—**तच्चेति। अनुगतमिति।** व्यभिचारज्ञानविरोधिसहचारज्ञानत्वमित्यर्थः। ननु साध्यद्वयपरत्वमयुक्तम्, प्रथमसाध्ये हेत्वलाभादित्याशङ्क्य न हि विनापि इत्यादिना व्यतिरेकरूपग्राहकाभावमाचक्ष्महे। किं तु यदा समाप्तिस्तत्पूर्वं मङ्गलमित्येवं[7]रूपव्याप्तिघटितकारणत्वरूपग्राह्याभावम्। [8]तद्ग्रहश्चोभयसाध्यसाधारण इत्याह—**तथा चेति।** ननु [9]सकारणकत्वेन तत्र मङ्गलानुमानान्नान्योन्याश्रय इत्याशङ्क्य प्रमत्त[10]नास्तिकानुष्ठितकर्मसमाप्तिर्मङ्गलजन्या समाप्तित्वात् इति सकारणिका कार्यत्वादिति वानुमानं विवक्षितम्। [11]तत्राद्यनिराकरणपरतया व्याचष्टे—**क्लृप्त** इति। द्वितीयेऽपि कार्यत्वं साक्षादेव मङ्गलजन्यत्वानुमापकम् उत सा मङ्गलजन्या तदसमवहितसामग्र्यजन्यत्वे सति सकारणकत्वादिति परिशेषानुमानद्वारा [12]वा। नाद्यः, कारणान्तर[13]विषयत्वेनार्थान्तरापत्तेरित्यभिप्रेत्यान्त्यमाशङ्कते—**नन्विति।**

---

1. ख. ग्राह्यकारणत्वस्य
2. ख. °संशयो
3. ख. °सन्नतया
4. ख. 'तत्' इति नास्ति।
5. क. जन्मान्तरमङ्गलव्यभिचार-
6. ख. हेतुग्रहः
7. ख. °रूपं व्याप्ति-
8. तद्ग्रहत्वोभय-
9. सकारणत्वेन तत्र तत्र
10. क. नास्तिकाद्यनु
11. क. तन्निराकरण°
12. ख. घ. 'वा' इति नास्ति।
13. क. °विषयत्वादर्थान्तरादित्य°

**नापि मङ्गलं सफलम्, अविगीतशिष्टाचारविषयत्वात् दर्शवदिति,**

---

### प्रकाशः

तद्ग्रहे च समाप्त्या तदनुमानमित्यर्थः। ननु [1]समाप्तेः कार्यतया[2]सकारणत्वेन परिशेषात् मङ्गलानुमानमस्त्वित्यत आह—लोकेति।

तथा च न परिशेष इति भावः। यद्वा न केवलमत्र व्यभिचारः, किं त्वन्यथासिद्धिरपीत्याह — **लोकेति**। अनुमानमाशङ्क्य निषेधति—**नापीति**। नापि परिशेषानुमानेन कारणताग्रह इति योजना कर्तव्या। परिशेषानुमाने विशेष्यासिद्धिमुद्धर्तुमाह—**मङ्गलं सफलमिति**। सफलमिष्ट[3]साधनमित्यर्थः।

---

### न्यायशिखामणिः

ननु पौनरुक्त्यम्। न चान्यथेति शब्दार्थो लोकेत्यनेन विवृत इति वाच्यम्। तथापीयं समाप्तिर्लोकावगतकारणादेव मङ्गलादपि वेति [4]संदेहेन कारणान्तरानवधारणादित्याशङ्क्य संदेहेऽपि लिङ्गानिश्चयेन परिशेषासिद्धिरेवेत्याह[5] —**तथा चेति**। एवं सति चकारासंगतिरित्यस्वरसान्नान्वयव्यतिरेकगम्येति व्यवहितान्वयपरतया व्याचष्टे—**यद्वेति**। **अन्यथासिद्धिरिति**। न चान्यथासिद्धिषु पञ्चसु नैतदन्तर्भावः। अन्यत्र क्लृप्तनियतपूर्व[6]वर्तिन इत्यादेः अवश्यकल्प्यपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वमित्यर्थ इति तत्रैवैतदन्तर्भावः। तथा च तद्घटितकारणत्वरूपग्राह्याभावनिश्चय इत्यर्थः। एतच्च आपाततः। मङ्गलस्य तत्सहभावनियमाभावात्। अन्यथा तत्सहभूतत्वमित्यस्य सहभावनियम [7]इत्यर्थानभ्युपगमेनासहादेरप्यन्यथासिद्धत्वापत्तौ कारणलक्षणे नियतपदवैयर्थ्यापत्तेः। वस्तुतो नियतपूर्ववर्तित्वमभ्युपेत्यैवान्यथासिद्ध्यभिधानमिति बोध्यम्।

ननु मङ्गलं सफलमित्यनुमानं न समाप्तिफलकत्वसाधकम्, फलान्तरविषयत्वेनार्थान्तरादित्याशङ्क्य परिशेषानुमानमत्राशङ्क्यत इत्याह—**अनुमानमिति**।

---

1. क. समन्व्याप्तेः
2. क. सहकारणत्वेन
3. ख. ०साधक
4. क. संदेहेऽपि न कारणान्तरावधारणमित्या-
5. क. इत्याशयेनाह
6. ख. 'वर्तिन इत्यादेः अवश्यकल्प्य' इति नास्ति।
7. घ. इत्यर्थानभ्युपगमे त्वसहादे-

### प्रकाशः

न तु बलवदनिष्टाननुबन्धीष्टसाधनमित्यर्थः, अर्थान्तरापत्तेः। विशेष्यासिद्ध्यु-द्धारस्य तावतैव संभवात्। न चैवं निष्फले कर्मणि भ्रमरहित[पर][1]शिष्टपदेनैव

### न्यायशिखामणिः

ननु नापीत्यस्य दर्शवदित्यनेनान्वये साफल्यानुमानं निराकृतं स्यादिति [2]फलसिद्धावित्यसंगतिरित्यत आह—**नापीति**। तर्हि सफलत्वानुमानं किमर्थम्। [3]न च तत्सिद्ध्यर्थम्। तस्यैव दृष्टान्ताभावेनासिद्धेरित्याशङ्क्य परिशेषानुमानस्वरूपमग्रे वक्ष्यते। विशेषव्याप्तौ [4]लोकावगतसमाप्तिकारणम्, सामान्यव्याप्तौ दर्शादिः दृष्टान्त इत्याशयेनाह—**कर्तव्येति**। जयदेवमतं दूषयति—**न त्विति**। ननु विशिष्टसाध्य[5]करणेऽपि इष्टसाधनत्वरूपविशेष्यसिद्धिरस्त्येवेति नार्थान्तरमित्याशङ्क्य तथापि यथाश्रुतसाध्यकरणेनैव तत्सिद्धिसंभवात् विवक्षावैयर्थ्यमित्याह—**विशेष्येति**।

केचित्तु प्रवर्तकं हि ज्ञानं बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानमित्यत्रापि [6]प्रवृत्त्यर्थं बलवदनिष्टाननुबन्धिसमाप्तिजनकत्वमेव साधनीयम्। तथा च तदननुबन्धिफलजनकत्वमेव तत्र हेतौ [7]निवेशनीयम् इति नार्थान्तरमित्याहुः।

तच्चिन्त्यम्। एवमपि लोकावगतसमाप्तिकारणे यथाश्रुतहेतोर्विवक्षितसाध्यं [8]प्रत्यपि व्याप्तिग्रहसंभवेन तत्र तत्प्रवेशानौचित्यात्। यत् यदितराफलकत्वे सति सफलं तत् बलवदनिष्टाननुबन्धितत्फलकमिति सामान्यव्याप्तिविवक्षायामपि न तत्प्रवेशावश्यकता। [9]विहितसुखातिरिक्तनरकजनके परदारगमनादौ सत्यन्ताभावेनैव व्यभिचाराभावात्। न चेतराफलकत्वे सतीत्यत्र [10]अफलपदमनुद्देश्यपरं वाच्यम्, अन्यथा मङ्गलस्यापि समाप्तिद्वारा ख्यातिपूजादिजनकत्वेन सत्यन्तासिद्धिप्रसङ्गात्, तथा च तदानीं नरकस्यानुद्देश्यत्वेन सत्यन्तसत्त्वाद्व्यभि-

1. ख. ०विशिष्ट
2. ख. फलसिद्धिरित्य-
3. ख. घ. न चैतत्सिद्ध्यर्थम्
4. क. लोकावगतकारणम्
5. ख. ०करणे विशिष्ट-
6. क. प्रथमं प्रवृत्त्यर्थं
7. ख. निवेशनीयं नार्थान्तरमित्याशङ्क्य तथापि यथाश्रुतसाध्यकरणेनैवाहुः।
8. क. प्रतिव्याप्ति
9. ख. घ. ऐहिकसुखा-
10. क. फलपद-

प्रकाशः

व्यभिचारवारणे हेतावविगीतपदवैयर्थ्यमिति वाच्यम् । अविगीताचारविषयत्व(स्य) [रूप]हेत्वन्तरसूचकत्वेन सार्थकत्वात् । न चात्र हेतौ निष्फलजलताडनादे[1]र्वेदा-निषिद्धतया तत्र व्यभिचार इति वाच्यम् । 'न विप्र' इत्यादिना तस्यापि वेद-निषिद्धत्वात् । अन्यथा विशिष्ट[2]साध्यकरणेऽपि तद्वैयर्थ्यात् ।

न चात्र पक्षे इष्टोपायतांशे भ्रमरहितः शिष्टपदार्थो वाच्यः, तथा च निषिद्धकर्मव्यभिचारवारणायाविगीतपदमिति वाच्यम् । एवमपि प्रमादकृतमधुविष-संपृक्तान्नभोजने व्यभिचारतादवस्थ्यात् ।

---

न्यायशिखामणिः

चार इति वाच्यम् । निषिद्धकर्मणः प्रमाणान्तरेण फलान्तरजनकत्वावगमेऽपि मङ्गलस्य लोकावगतकारणान्तरस्य वा समाप्त्युपक्षीणस्य फलान्तरजनकत्वे माना-भावात् । किं च न ह्यत्र प्रवृत्त्यर्थं समाप्तिकारणत्वानुमानम्, येन तद्घटितं साध्यं विवक्षणीयं स्यात् । किं तु [3]तत्कारणत्वनिर्णयाय ।

[4]जयदेवोक्तं साध्यविवक्षाबीजमाशङ्क्य निरस्यति—न चैवमिति । इष्ट-साधनत्वमात्रस्य साध्यत्व इत्यर्थः । विशिष्टसाध्यकरणे त्वविगीतपदं परदारगम-नादौ व्यभिचारवारकमिति भावः । भ्रमरहितेति । इष्टसाधनत्वांश इति शेषः । एवं सति हेतौ व्यर्थविशेषणत्वमुद्धर्तुं साध्ये विशेषणमुपात्तं स्यात् । तच्चासांप्रदा-यिकमयुक्तं च । हेतुद्वयपरतयैव तद्वाक्योपपत्तेरित्याह—अविगीतेति ।

अत्र हेताविति । (अविहितत्व) [अविगीतत्व] घटितहेतावित्यर्थः । व्यभिचार इति । शिष्टपदेन तदुद्धारे हेतुद्वयोक्तिरयुक्ता अविगीतपदवैयर्थ्यं च । तथा चानन्यगत्या विशिष्टमेव साध्यं वाच्यमित्याशयः । न विप्र इति । 'न विप्रः क्षणिको भवेत्' इत्यादिना निष्फलकर्मणः प्रतिषेधादित्यर्थः । तथा च हेतुवाक्यानुरोधान्न विशिष्टसाध्यकरणमिति [5]भावः । प्रत्युत विशिष्ट[6]साध्यकरण एव अविगीतपदवैयर्थ्यं दुर्वारमित्याह—अन्यथेति । किं च भ्रमरहितत्वं शिष्टत्वं वेदप्रामाण्याभ्युपगन्तृत्वं वा । तत्राद्ये सर्वस्यापि देहात्मभ्रमवत्त्वात्तद्रहितत्वं बलवद्-

---

1. क. र्वेदार्थतया
2. ख. साधनकरणेऽपि
3. ख. तत्प्रकारणत्व॰
4. क. जयदेवोक्तसाध्य-
5. क. अर्थः
6. क. 'साध्य' नास्ति ।

प्रकाशः

यत्तु [शिष्टपदं] वेदप्रामाण्याभ्युपगन्तृपरम्, तदाचारत्वं तन्नियताचारत्वम्, तदनभ्युपगमासंभाविताचारविषयत्वमिति यावत्। तद्ग्रहश्च सर्वैकवाक्यतया। एवं च रात्रि[1]श्राद्धादावेव व्यभिचार इति अविगीतपदमिति।

न्यायशिखामणिः

निष्टाननुबन्धीष्टसाधनत्वांशे इष्टसाधनत्वांशे [2]वेत्यवश्यं वाच्यम्। तत्राद्यं निराकरोति—तद्वैयर्थ्यादिति। शिष्टपदेनैव परदारगमनादौ व्यभिचारवारणादिति भावः। द्वितीयमाशङ्क्य निरस्यति—न चेति। अत्र पक्ष इति। विशिष्टसाध्यपक्षेऽपीत्यर्थः। ननूद्बन्धनवत् बुद्धिपूर्वकृतत्वे सविषान्नभोजनस्यात्महिंसात्वेन विगीतत्वान्न व्यभिचार इत्यत आह—[3]प्रमादेति। एतच्चोपलक्षणम्, भ्रमकृतदूरस्थसरोवगाहनादौ व्यभिचार इत्यपि बोध्यम्।

जयदेवोक्तमन्त्यपक्षमनुवदति—यत्त्विति। तन्नियतेति। [4]सविषान्नभोजनसरोव[5]गाहनादिकं तु तदभ्युपगन्तृनियतमिति नोक्तदोष इति भावः। आचारस्य तन्नियतत्वं हि वेदप्रामाण्याभ्युपगन्तृमात्रनिष्ठत्वम्। तच्च तदनभ्युपगन्त्रसंभावितत्वगर्भमित्यावश्यकत्वा[6]त्तदनभ्युपगन्त्रसंभाविताचारविषयत्वमेव तदिति विवक्ष्यतां लाघवात्, न त्वन्यत् गौरवादित्यनुशयेनाह—तदिति। यदि तन्नियतेत्यत्र तत्पदं तदभ्युपगमपरं तदा तद्व्याप्याचारविषयत्वमितोऽपि लभ्यतेति तदेवोपादेयमिति द्रष्टव्यम्। रात्रिश्राद्धादाविति। 'रात्रौ श्राद्धं न कुर्वीत' इति स्मृत्या तन्निषेधादिति भावः। आदिपदेन च श्राद्धसंध्याभोजनादिपरिग्रहः। 'आहारं मैथुनं निद्रां संध्याकाले विवर्जयेत्' इति [7]स्मृत्या तन्निषेधादिति भावः।

नन्वश्वसंरक्षणं बौद्धस्यापि संभावितमिति न व्यभिचार इत्यत आह—विहित इति। तथा चाश्वमेधीयाश्वसंरक्षणे [8]अहर्गणकृतयजमानकर्तृकानशनव्रतादौ च व्यभिचार इत्यर्थः।

---

1. ख. °श्राद्धादेरेव
2. ख. एवेत्यवश्यं
3. क. प्रमादादिति
4. ख. घ. सविषयान्न-
5. ख. घ. °गाहनादिकरणं तु
6. ख. घ. 'तदनभ्युपगन्तृ' इति नास्ति
7. ख. स्मृत्यादिनिषेधात्
8. ख. अहर्भक्षणार्हकर्तृयजमानकानशनव्रतादौ

## प्रकाशः

तच्चिन्त्यम् । दैवान्मरणफलके विहितेऽश्व[1]रक्षादौ व्यभिचारादिति दिक् ।

वस्तुतोऽविगीतपदं क्वाचित्कं कल्पितम् । शिष्टाचारविषयत्वादित्येव[2] हेतुः । अत एव द्रव्यप्रकाशे वर्धमानचरणैस्तथैवोक्तमिति ध्येयम । अभ्रान्तत्वं च सर्वैकवाक्यतया सुग्रहम् । तदर्थमेव प्राक् तदुत्कीर्तनमित्याहुः ।

---

## न्यायशिखामणिः

नन्विह जीवनादृष्टोपरमो लोकान्तरप्रापकादृष्टसमुद्बोधश्च [3]मृतिहेतुः नाश्वसंरक्षणादि । अन्यथान्यस्यापि तद्रक्षकस्य तत्प्रसङ्गात् । तथाप्यनिष्टानुबन्धित्वमस्तीति चेत् — न । निषिद्धकर्मणोऽपि सद्योऽनिष्टासंबन्धितया तत्पदेन तत्स्वरूपायोग्यत्वस्यावश्यं विवक्षणीयत्वात् । अस्तु वा तत्र साध्याभावः, तथाप्यविगीतत्वं बलवदनिष्टाननुबन्धित्वमिति मिश्रैरेवाभिधानेन हेत्वभावस्यापि सत्त्वादिति चेन्न । एवमपि निष्फले यूपहस्तिवैसर्जनीयवासोदानादौ व्यभिचारात् । न च 'न विप्र' इत्यादिना [4]यूपपरिव्याणशाटकादिदानस्यापि विगीतत्वान्न दोष इति वाच्यम् । तथा सति निष्फलजल[5]ताडनचैत्यवन्दनादिवारकशिष्टपदवैयर्थ्यापत्तेः ।

यदि च निष्फले वैधरागजप्रवृत्त्योरप्रसङ्गेन तस्य निषेधाविषयत्वात् 'न विप्र' इत्येतत् पर्युदासपरमेवेति चैत्यवन्दनादेरप्यविगीतत्वं, तदा यूपहस्तिदानादावपि तुल्यम् । [6]नन्विष्टसाधनत्वांशे भ्रमरहितः शिष्ट इति विवक्षितम्, तेन नोक्तदोषः । न चैवं निष्फले रात्रिश्राद्धादावनेनैव दोषनिरासादविगीतपदवैयर्थ्यम् । तथापि [7]सविषान्नभोजनादौ तद्वारकत्वात् । बलवदनिष्टाननुबन्धित्वरूपाविगीतत्वस्य तत्राभावादिति चेन्न । एवमपि विशिष्टसाध्ये व्यर्थविशेषणत्वानुद्धारात् । [8]तदेतदभिसंधायाह[9] — दिगिति ।

---

1. ख. ॰रक्षणादौ
2. ख. ॰दित्येक एव
3. ख. भृति-
4. क. यूपपरिव्याणकादितस्यापि
5. क. ॰ताडनादिवारक-
6. ख. निविष्ट-
7. ख. विषयान्न- घ. सविषयान्न-
8. क. तदिदमभि-
9. क. ख. 'आह' इति नास्ति ।

प्रकाशः

यद्यप्याचारः कृतिरेव, तद्विषयत्वं च फलेऽपीति[1] व्यभिचारः, तथापि साध्यत्वेन तद्विषयत्वं हेतुः। फलं तु[2] उद्देश्यतया कृतिविषय इति बोध्यम्।

---

न्यायशिखामणिः

नन्वेवं हेतुद्वयपक्षे [3]अविगीतत्वहेतोर्निष्फले कर्मणि दोषतादवस्थ्यम्। तस्योक्तरीत्या वेदानिषिद्धत्वादित्यस्वरसादाह—वस्तुत इति। ननु [4]मङ्गलगतेष्टसाधनत्वांशे भ्रमरहितत्वं तत्र तन्निश्चयाधीनावगमम्। तस्य चेदानीं संदिग्धत्वादिदमप्यशक्यावगममेवेत्यत आह—अभ्रान्तत्वं चेति। अत्र चैकवाक्यताशब्देनाविगानं विवक्षितम्। तथा चाविगीतत्वादिष्टसाधनत्वग्रहे तत्राभ्रान्तत्वनिश्चय इत्यर्थः। नन्वविगीतत्वमनुमानविधयैव [5]तन्निश्चायकं वाच्यम्। तच्चायुक्तम्, निष्फले व्यभिचारस्य दर्शितत्वादि[6]त्यस्वारस्यं सूचयति—आहुरिति।

अत्र ब्रूमः। समीहीतराफलकत्वे सतीत्यत्र तदितरफलं द्विविधम्—बलवदनिष्टाननुबन्धि तदनुबन्धि च। तत्र मङ्गलं न तदितरतदननुबन्धिग्रामपश्वादिफलकम्। तत्कामनया वेद[7]प्रामाण्याभ्युपगन्तृभिरक्रियमाणत्वात् इति 'फलान्तरस्यातथाभावा'दित्यत्र विवक्षितत्वेन च तेनैव तदनुबन्धिफलकत्वाभावोऽपि साधयितुं शक्यः। तस्य निषिद्धे व्यभिचारात् यद्यपि नेदं तदनुबन्धिफलकमविगीतत्वादित्यनुमानान्तरेण साधयितुं शक्यते, तथापि एकेनैवानुमानेन [8]सफलत्वस्यापि साधने लाघवम्। [9]तथा चात्र बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव साध्यम्। हेतुश्च फलोद्देशेन शिष्टाचरितत्वे लोकावगतफलकत्वाभावे च सति वेदानिषिद्धत्वम्। निष्फले [10]च जलताडनचैत्यवन्दनयूपहस्तिदानादौ प्रथमसत्यन्ताभावात् सविषान्नभोजने द्वितीयाभावाद्रात्रिश्राद्धादौ विशेष्याभावान्न व्यभिचार इति दिक्।

नन्विष्टसाधनत्व[11]मात्रस्य साध्यत्वे [12]बलवदनिष्टानुबन्धितदितरफलकत्व-

---

1. ख. 'इति' नास्ति।
2. ख. 'तु' नास्ति।
3. ख. अविगीतत्वघटितहेतोः
4. क. मङ्गले इष्ट-
5. ख. 'तत्' नास्ति।
6. क. घ. इत्यस्वरसं
7. ख. ॰प्रामाण्यानभ्युपगन्तृभिरगीयमाणत्वादिति
8. ख. सफलकत्वस्यापि
9. ख. तथात्र
10. क. 'च' नास्ति।
11. ख. ॰मात्रसाध्यत्वे
12. क. बलवदनिष्टाननुबन्धि-

फलसिद्धौ प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वात् फलान्तरस्यातथाभावात् विश्वजिन्न्यायेन फलकल्पने गौरवात् परिशेषानुमानेन तत्कारणताग्रहः ।

---

प्रकाशः

तदानीम् मङ्गलाचारसमये । अपेक्षितत्वेनेति । मङ्गलाचारप्रवृत्तस्य कामनाविषयत्वेनोपस्थितत्वादित्यर्थः । अतथाभावात् नियमेनानुपस्थितत्वात् । तथा चान्येषां [1]फलत्वाभावे सिद्धे परिशेषानुमानेन समाप्तीतराफलकत्वे सतीति विशेषण सिद्धमिति भावः । ननु मा भूदन्यन्नियतोपस्थितिकम्, स्वर्गस्तु सकलकामनाविषयत्वेन नियतोपस्थितिकः फलं स्यादित्यत आह—[2]विश्वजिदिति ।

---

न्यायशिखामणिः

व्यतिरेको न साधितः, तत्कामनया शिष्टाचरितत्वाभावस्य हेतोर्निषिद्धकर्मणि व्यभिचारेणासाधकत्वात् । अस्तु वा तद्व्यतिरेकः, तथापि समाप्तीतरफलकत्वसामान्याभावो न सिद्ध इत्याशङ्क्य[3] अविगीतत्वरूपहेत्वन्तरेण तत्सिद्धिः । [4]ततो विशेषाभावद्वयेन सामान्याभावः साधनीयः । नेदं समाप्तीतरफलकम्, तत्त्वे मानाभावादित्यनुमानेनैव तत्सिद्धिः । सफलत्वानुमानस्यानुपस्थितकल्पनागौरवपराहतस्य तत्राप्रमाणत्वादित्याशयेनाह—तथा चेति । अन्येषामिति । समाप्त्यतिरिक्तानामनिष्टाननुबन्धिनां तदनुबन्धिनां चेत्यर्थः ।

ननु स्वर्गस्याप्यनेनैव न्यायेन निराकृतत्वात् पुनस्तदाशङ्कानवकाश इत्याशङ्क्य जयदेवोक्तमाह—नन्विति । सकलेति । सकलपुरुषीयकामनाविषयत्वेनेत्यर्थः । अत एव ग्रामजन्यसुखं कामयमान एव तं कामयते । प्रकृते च [5]समाप्तेः स्वतोऽसुन्दरत्वेन तत्कामनाप्रयोजकत्वेन स्वर्गकामना आवश्यिकीति भावः । 'विश्वजिता यजेत' इत्यादिचोदनासु अश्रुतफलासु फलमस्ति न वेति संदेहे नास्त्येव तत्, अश्रवणात् । न चाध्याहृतपदात्तदवगमः । श्रुतफल[6]पदसार्थत्वाय

---

1. ख. फलाभावे
2. क. विश्वजितमिति
3. क. 'इत्याशङ्क्य' इत्यनन्तरं 'उक्तरीत्या' इत्यधिकपाठः ।
4. ख. इत आरभ्य 'तथा च' इति पर्यन्तं ग्रन्थपातः ।
5. ख. घ. तस्य समाप्तेः
6. क. 'पद' नास्ति ।

प्रकाशः

यथा 'विश्वजिता यजेत' इत्यत्र विशेषतः फलोपस्थितिं विना विधेः प्रवर्तकत्वानुपपत्त्या विशेषतः फले कल्पनीये ग्रामपश्वादीनां गौणप्रयोजनतया स्वर्गापवर्गयोरेव तथात्वेन तयोरप्यपवर्गस्याभावरूपतया लघुः स्वर्ग एव फलं कल्प्यते तथेहापीत्यर्थः ।

गौरवात् अधिकारिद्वयकल्पनागौरवात्, न [1]त्वनुपस्थितकल्पनागौरवात् । ग्राम[2]पश्वादिसाधारणतया पृथक् शङ्कानुदयात् । विश्वजिद्वत् स्वर्गफलकत्वे हि प्रधानतया अधिकारिभेदः । समाप्तिफलकत्वे च मङ्गलस्यारब्धकर्माङ्गत्वेन प्रधानाधिकारिकर्तव्यत्वेनाधिकाराभेद इत्यर्थः ।

---

न्यायशिखामणिः

भिन्नपदोपात्तफलान्तरभाव्यकत्वेऽप्यत्र[3] भावनाया धात्वर्थरूपभाव्यान्वितत्वेन परिपूर्णतया तदध्याहारायोगादिति प्राप्ते, चतुर्थे राद्धान्तितम् । तत्सिद्धान्तन्यायं दर्शयति—यथेति । विशेषत इति । तथा च प्रवर्तनात्मको विधिः क्लेशात्मकत्वेनापुरुषार्थं धात्वर्थं न स्वभाव्यभावनाभाव्यत्वेनाङ्गीकरोतीत्यतिरिक्तफलावश्यकत्वे तदुपस्थित्यर्थं तद्वाचिपदं कल्पनीयमिति भावः । एवं स्थिते किमेकफलस्य कल्पनम् अनेकस्य वेति विशये विशेषानिर्देशात् सर्वार्थत्वे प्राप्ते, लाघवादेकस्यैव कल्पनम्, तावतैव फलाकाङ्क्षानिवृत्तेरिति निर्णीते ; किं तदेकमिति संशये विशेषानध्यवसाया[4]दप्रामाण्ये, प्रामाण्यसिद्ध्यर्थं पुनः [5]सर्वार्थत्वमेवेति प्राप्ते, तत्रैव [6]सिद्धान्तितम् । तदाह—ग्रामेति । गौणेति । 'चित्रया यजेत' इत्यादौ गौणस्यापि पश्वादेः श्रुतत्वात् फलत्वम् । प्रकृते च कल्पनीये फले मुख्यमेव तत्कल्पनीयम् । तथा च सफलत्वानुमितौ स्वर्ग एव विषय इति भावः ।

ननु गौरवान्नानुमितिविषय इत्युक्तमयुक्तम् । मुख्यप्रयोजनत्वभावत्वाभ्यां स्वर्गस्यैव लाघवमित्युक्तत्वादित्याशङ्क्य तदुक्तमेवाह—अधिकारीति । [7]रात्रिसत्रेऽप्युपस्थितैव प्रतिष्ठा फलं कल्प्यते न स्वर्गः, अनुपस्थितकल्पनागौरवादिति तत्रैव निर्णीतम् । तथा च विश्वजि[8]न्न्यायेनाशङ्किते रात्रिसत्रन्यायेन समाहित-

---

1. क. त्वनुपस्थिति°
2. ख. °पश्वादीनां साधा°
3. ख. 'अत्र' नास्ति ।
4. ख. घ. °दप्रामाण्यम् ।
5. क. घ. सर्वार्थत्वं वेति
6. क. राद्धान्तितम्
7. क. रात्रिसत्रे ह्युप°
8. क. °न्न्याये शङ्किते

प्रकाशः

**परिशेषानुमानेनेति** । मङ्गलं समाप्तिफलकं समाप्तीतराफलकत्वे सति सफलत्वादित्यनुमानेनेत्यर्थः । न च गौरवेण [1]सफलकत्वानुमितौ स्वर्गाविषय-

---

न्यायशिखामणिः

मिति व्याख्यानं **नरहरिमिश्राणामभिमतम्** । तदेतद्दूषयति—**न त्विति** । **साधारणतयेति** । कामनाविषयत्वेनानुपस्थितस्येति[तत्वस्येति]शेषः । **पृथगिति** । तथा चानेनैव ग्रामपश्वादिवत् स्वर्गस्यापि फलत्वनिराकरणेन पुनस्तस्यैव तदाशङ्कानुत्थानादित्यर्थः । एतच्चोपलक्षणम् । वस्तुतः स्वर्गो नियतोपस्थितिक इत्युक्तं [2]मा भूदत्रेति द्रष्टव्यम् ।

यदत्र **नरहरिमिश्रै**रुक्तम्—न तावत् आशङ्कानुदयः, समाप्तीतरफलं [3]मङ्गलाजन्यं तदाचारकालीनकामनाविषयत्वाभावादिति सामान्याकारेण निराकृतस्यापि स्वर्गस्य विश्वजिन्न्यायेन स्वर्गत्वपुरस्कारेण तदाशङ्कोत्थितौ विरोधाभावात् । नापि तस्य नियतोपस्थितिकत्वम् । तथाप्यधिकारिविशेषणकामनाविषयत्वेन तस्यानुपस्थितत्वात् तादृशकामनाविषयत्वस्यैव फलत्वप्रयोजकत्वेन तद्विरहस्याफलत्वप्रयोजकत्वात् । अन्यथा पश्वादि[4]कामनाप्रयोजककामनाविषयतज्जन्यसुखस्यापि पशुकामकर्तव्यकर्मफलत्वापत्तेः । तद्विशेषणं चात्र समाप्तिकामनैव । अन्यथा स्वर्गस्यापि काम्यमानाधिकारिविशेषणत्वे मङ्गलजन्यत्वस्य ब्रह्मणापि दुरपनेयत्वापत्तेरिति ।

नैतत्सारम् । पशुकामस्यैवात्र समाप्तिकामस्याधिकारित्वे प्रत्यक्षश्रुत्यभावेन तस्यास्तादृशकामनाविषयत्वाभावेनाफलत्वप्रसङ्गात् । प्रत्युताश्रुतफलेषु कर्मसु स्वर्गकाम एवाधिकारीति विश्वजिदधिकरणोक्तन्यायेनात्रापि स एव तथा स्यात् । न च मङ्गलस्य स्वर्गफलकत्वे तत्कामस्याधिकारित्वापत्तौ अधिकारिद्वयकल्पनागौरवप्रसङ्गरूपबाधकतर्कपराहतं तत्कल्पनमिति न तत्कामोऽधिकारीति वाच्यम् । तदावश्यकत्वादधि[5]कारिद्वयकल्पनस्यैव दोषत्वापत्तेरिति दिक् ।

---

1. ख. फलत्वानुमितौ
2. घ. मा भूदित्यत्रेति ।
3. ख. घ. न मङ्गलजन्यं
4. क. ०कामनाप्रयोजककामनाप्रयोजककामनाविषय-
5. क. ०कारिकल्पनद्वयस्यैव
   घ. ०कारद्वयकल्पनस्यैव

प्रकाशः

कत्वेऽपि न स्वर्गफलकत्वाभावसिद्धिः, तत्कुतो हेतुसिद्धिरिति वाच्यम्। स्वर्गो न मङ्गलफलम्, समाप्त्यपेक्षया [1]गुरुत्वादिति गौरवलिङ्गत्वे [2]पूर्वतात्पर्यादित्याहुः।

यत्तु समाप्तिफलकत्वे लाघवम्, अन्यफलकत्वे गौरवमिति लाघवप्रतिसंधाने तत्प्रतिसंधानोपनीतं समाप्तिमात्रफलकत्वमेव सफलकत्वानुमितिविषय इति युक्तः

न्यायशिखामणिः

ननु [3]परिशेषेणेत्यस्य समाप्तिः मङ्गलजन्या तदसमवहिताजन्यत्वे सति जन्यत्वादित्यनुमानपरत्वे पूर्वोक्तसफलत्व[4]साधकानुमानवैयर्थ्यमित्यत आह— मङ्गलमिति। अत्र सत्यन्तासिद्धिमाशङ्क्य जयदेवोक्तेन निरस्यति—न चेति।

ननु मङ्गलस्य स्वर्गफलकत्वाभावो मानाभावादेव सिद्धः। [5]न च सफलत्वानुमानं तथा। गौरवेण तस्य तदविषयत्वात्। न च स्वर्गो मङ्गलजन्यः तदाचारकालीनकामनाविषयत्वात्, समाप्तिकामनाप्रयोजकत्वेन तत्कामनावश्यकत्वा[6]न्नासिद्धिरिति वाच्यम्। ऐहिकपूजालाभादिकामनयापि ग्रन्थादिकरणसंभवेन तस्यास्तत्प्रयोजकत्वासिद्धेः। एतदनुमानस्याप्युक्तगौरवपराहतत्वाच्च। तथा च स्वर्गफलकत्वाभावसिद्ध्यर्थं न गौरवलिङ्गानुमानमादरणीयम्। अत एव क्षित्यादेर्मानाभावादेव गुर्वनेककर्तृकत्वाभावसिद्धौ न तदर्थमनुमानान्तरापेक्षेत्यस्वरसं सूचयति—आहुरिति।

तदीयं मतान्तरमाह—यत्त्विति। अन्येति। यद्यप्येवं सति गौरवसहकृतसफलत्वानुमानेनैव तदितर[7]सर्वफलकत्वाभावसिद्धौ तत्साधकानुमानपरफलान्तरस्येत्यादिग्रन्थवैयर्थ्यम्। तथाप्येतन्मते स्वर्गांशे निरुक्तगौरवमन्यांशे अनुपस्थितफलत्वकल्पनागौरवं चेति विवक्षितम्। तथा चैतद्ग्रन्थस्यापि गौरवपरत्वमिति भावः। अत एव परिशेषानुमानवैयर्थ्येनैव दूषयति—तन्नेति।

अत्र केचित्। गौरवमात्रप्रतिसंधानदशायां समाप्तीतराफलकत्वसिद्धावपि तत्फलकत्वासिद्धेः परिशेषानुमानं सावकाशमित्याहुः।

---

1. क. गूढत्वादिति
2. ख. पूर्वे तात्पर्या०
3. ख. परिशेषणेत्यस्य
4. ख. घ. 'साधक' नास्ति।
5. ख. न च फलत्वानुमानम्
6. ख. ०न्न सिद्धि०
7. क. 'सर्व' नास्ति।

व्यभिचारेण कारणत्वस्याभावात् उपायसहस्रेणापि ग्रहीतुमशक्यत्वात्। तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानम्।

---

### प्रकाशः

परिशेष इति - तन्न। समाप्तिफलकत्वस्यापि तत एव सिद्धौ परिशेषानुमानवैयर्थ्यापातात्। इतराफलकत्वे सति समाप्तिफलकत्वमेव हि समाप्तिमात्रफलकत्वमिति।

व्यभिचारेणेति। व्यतिरेकव्यभिचारेणेत्यर्थः। तथा च [1]बाध इति भावः। यद्यप्यत्र व्यभिचारनिश्चयो नास्त्येव, तत्संशयश्चाविरोधी, संदिग्धे न्यायः प्रवर्तत इति न्यायात्, प्रत्युतानुगुणः। अन्यथा वेदोऽपि मूकः स्यात्। योग्यता-[2]संशयात्तस्य चेदनुकूलत्वं तदेहापि तुल्यम्। तथाप्यन्धपरंपरामात्रभिया प्रकारान्तरोपादानम्। अत एव श्रुत्यनुमानाभ्यामित्यग्रे तत्रापि विभावयिष्यति।

---

### न्यायशिखामणिः

तच्चिन्त्यम्। इदमस्माद्गुरु इति ज्ञानस्य [3]गौरवप्रतियोग्यंशे अवश्यं [4]लाघवविशेषणकत्वात्। न चोभयप्रतिसंधानदशायां वस्तुतः पश्चादिभिन्नायाः समाप्तेः फलत्वसिद्धावपि [5]तत्फलकत्वप्रकारकप्रतीत्यसिद्धेः तदर्थे [6]परिशेषानुमानापेक्षेति वाच्यम्। तर्हि तदितराफलकत्वप्रकारकप्रतीत्यनुत्पादेन सत्यन्तासिद्धितादवस्थ्यात्।

[7]परे तु सफलत्वसाधकमिदमेव सामान्यतोदृष्टानुमानं लाघवगौरवप्रतिसंधानदशायां इतरबाधकसहकृतं पुनरनुसंधीयमानं समाप्तिफलकत्वस्यापि [8]साधकमित्येतदेवानुमानं परिशेषशब्दार्थः परिशिष्यतेऽनेनेति [9]व्युत्पत्तेरित्याहुः।

तदपि चिन्त्यम्। तत्फलकत्वस्य [10]व्यापकतानवच्छेदकतया तत्प्रकारकप्रतीत्यसिद्धेः। अत एव लाघवोपनीतं कर्तुरेकत्वमनुमानान्तरादेवेति वक्ष्यते।

---

1. ख. बाधक
2. ख. °संशयाद्यदि तस्य वेदानुकूलं
3. ख. गौरवे प्रति°
4. ख. घ. लाघवविषयत्वात्
5. ख. तत्फलवत्त्व°
6. ख. घ. परिशेषापेक्षेति।
7. क. घ. अपरे तु
8. क. साधकमिति तदेवानुमानं
9. क. व्युत्पत्तेरिति भाव इत्याहुः।
10. क. व्यापकतावच्छेदकतया
घ. व्यापकतयानवच्छेदकतया

**प्रकाशः**

श्रुत्यनुमानं चैवम्—मङ्गलं वेदमूलकम्, अलौकिक[1]शिष्टाचारविषयत्वात् दर्शवदिति। अत्र लौकिकत्वं शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणप्रमापितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वम्, तद्रहितत्वमलौकिकत्वम्। एतच्च भोजनादौ व्यभिचारवारणाय। अगम्यागमने व्यभिचारवारणाय शिष्टपदमभ्रान्तपरम्। तद्ग्रहश्च सामान्यतो महाजनपरिग्रहादिति ध्येयम्।

केचित्तु अलौकिकाविगीतशिष्टाचारविषयत्वादित्येव हेतुः। शिष्टपदं चेष्टसाधनतांशे भ्रमरहितपरम्, निष्फले चैत्यवन्दने व्यभिचारवारणाय। न च विगीतत्वादेव न तत्र व्यभिचार इति वाच्यम्। विगीतत्वं हि वेदनिषिद्धत्वम्, तच्च तत्र नास्ति। सर्वथा दृष्टफलाभावेन तत्र प्रसङ्गाभावात्[2] वैदिकनिषेधाभावात्। निषेधस्य कथंचित् प्राप्तविषयत्वनियमात्। [3]न च लौकिकत्वादेव न तत्र व्यभिचार इति वाच्यम्। लौकिकत्वं ह्यन्वयव्यतिरेकादिप्रमापितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वम्। न च [4]तत्र तदस्ति, दृष्टफलाभावात्। अविगीतपदं

---

**न्यायशिखामणिः**

ननूक्तानुमानस्य साध्यव्याप्यत्वाद्यभिचारेणेत्यसंगतिः। कारणत्वविरोधिव्यभिचारस्य च [5]प्रकृतव्याप्तिग्रहाविरोधित्वादित्यत आह—**व्यतिरेकेति**। **तुल्यमिति**। तथा चानुमानस्यादुष्टत्वाच्छ्रुत्युपादानवैयर्थ्यमिति भावः। **तथापीति**। तथा च [6]विश्वासानास्पदत्वमनुमानदोष इति भावः। ननूक्तस्याविगीतशिष्टाचारस्य तथाविधशब्देन परामर्शे तस्य च भोजनादिसाधारण्यान्न वेदमूलत्वलिङ्गतेत्यत आह—**श्रुतीति**। **शब्देति**। अत्र साध्याविशेषपरिहाराय [7]नञ्द्वयोपादानम्। अगम्यागमनादिसाधारणालौकिकत्वलाभाय बलवदनिष्टाननुबन्धीति। तदर्थमेव च प्रमापितेत्यपि। **अभ्रान्तेति**। तदननुबन्धीष्टसाधनत्वांशे भ्रमरहितेत्यर्थः।

---

1. ख. °शिष्टाचारत्वात्
2. क. प्रसङ्गाभावादिति
3. ख. न चालौकिक-
4. ख. 'तत्र' इति नास्ति
5. ख. प्रकृते व्याप्ति
6. क. अविश्वासास्पदत्व-
7. क. सत्यन्ते नञ्द्वयो-

प्रकाशः

चागम्यागमनादौ व्यभिचारवारणाय। न च शिष्टपदादेव तन्निरासः। तत्रापि [1]सुखजनकत्वसत्त्वेन उक्तशिष्टाचारविषयत्वादित्याहुः।

तन्न। [2]प्रमादकृतमधुविषसंपृक्तान्नभोजने गलभ्रमतया मरणसाधने [3]सुखसाधनान्नभोजने व्यभिचारात्। न च [4]प्रमापितपदस्थाने बोधितपदकरणे अलौकिकपदेनैव तद्व्यभिचारवारणमिति वाच्यम्। अगम्यागमनादावपि तत एव व्यभिचारवारणे अविगीतपदवैयर्थ्यापत्तेः[5]। न च रात्रिसंध्याश्राद्धादौ व्यभिचारवारणाय तदिति वाच्यम्। तस्य निष्फलत्वेन शिष्टपदेनैव तद्वारणात्।

---

न्यायशिखामणिः

उपाध्यायमतमाह—केचित्त्विति। न चेति। 'निष्फलानि च कर्माणि नारभेत विचक्षणः' इति निषेधस्य निष्फलविषयत्वादिति भावः। 'न विप्र' इत्यादिवत्तदपि पर्युदासपरमित्याशयेनाह—तच्चेति।

जयदेवोक्तेन दूषयति—तन्नेति। अत्रेदं चिन्त्यम्—

[6]ननु बलवदनिष्टाननुबन्धित्वाघटितमेवालौकिकत्वं हेतौ प्रवेश्यं लाघवात्। न च शिष्टपद[7]व्यावर्त्यपरदारगमनादिसाधारण्याय तत्प्रवेशावश्यकतेति वाच्यम्। [8]तावताप्यविगीतपदस्यैव तत्र प्रवेशौचित्यात्। अविगीताचारस्यैव [9]पूर्वत्र हेतावुपात्ततया तद्घटितस्यैव हेतोरत्र तथाविधशब्दार्थत्वात्। किं चाविगीत[10]पदाप्रवेशे रात्रिश्राद्धादौ व्यभिचारः। न च शिष्टपदात्तन्निरासः। तस्येष्टसाधनत्वांशे भ्रम[11]रहितपरत्वेनागम्यागमनादौ दोषतादवस्थ्यात्। तदननुबन्धीष्टसाधनत्वे तद्रहितपरत्वे तस्य च दुर्ग्रहतया हेतोरज्ञानासिद्धेः। [12]न च महाजनपरिग्रहात् बलवदनिष्टाननुबन्धित्वघटितधर्मग्रहे तद्भ्रमरहितत्वग्रह इति वाच्यम्। बौद्धानामपि

---

1. ख. सुखजनकत्वेन
2. ख. 'प्रमादकृत' इति नास्ति
3. क. सुखसाधने व्यभि°
4. क. प्रमापितस्थाने
5. ख. °व्यर्थतापत्तेः
6. ख. घ. 'ननु' नास्ति।
7. क. °व्यावृत्य
8. ख. तावता अवि-
9. ख. पूर्वहेतौ
10. क. °शब्दाप्रवेशे
11. क. °रहितत्वेऽगम्या घ. रहितपरत्वेऽगम्या
12. ख. 'न च महाजनपरिग्रहात्......चैत्यवन्दनसाधारण्यात्' इति ग्रन्थस्त्रुटितः।

## न्यायशिखामणिः

महाजनतया तत्परिग्रहस्य चैत्यवन्दनसाधारण्यात्। न च महाजनपदं वेदप्रामाण्याभ्युपगन्तृपरमिति वाच्यम्। तर्हि तदेवास्तु शिष्टत्वम्, किं तद्ग्रहाधीनग्रहेण। न च तदपि, रात्रिश्राद्धादौ दोषानतिवृत्तेः। न चैतावता क्वचिदुक्तमिश्रमतनिरासेऽपि प्रभालोककृतोर्मतं [1]नायुक्तम्, अविगीतपददानादिति वाच्यम्। [2]मतद्वयेऽपि [3]दुरवगमाभ्रान्तत्वघटिततया हेतोः संदिग्धासिद्धेः। प्रभाकृदुक्तस्य प्रमापितत्वगर्भस्य [4]सविषान्नभक्षणे व्यभिचारेण, बोधितत्वघटितस्य आलोककृदुक्तस्य च हेतोरविगीतपदवैयर्थ्यदोषेण प्रकाशकृतैव निराकृतत्वाच्च।

[5]अत्र उद्धारकृतस्तु—बलवदनिष्टाननुबन्धिपदेन नरकाननुबन्धित्वं विवक्षितम्। तथा च नरकाजनकत्वे सति लोकप्रमापितेष्टसाधनताकत्वं लौकिकत्वम्, तद्रहितत्वमलौकिकत्वम्। न तु लोकप्रमापितनरकाजनकेष्टसाधनताशून्यत्वम्, येन नरकाजनकत्वस्य लोकप्रमाणागम्यतया [6]हेत्वप्रसिद्धिरिति मधुसूदनोक्त्यवकाशः स्यात्। एवं च न [7]प्रमादकृतसविषान्नभोजने व्यभिचारः। यद्वा अविगीतपदं बलवदनिष्टाजनकत्वपरमिति वदन्ति।

तन्न। तथापि प्रथमदोषानतिवृत्तेः।

अत्र केचिदालोके रात्रिश्राद्धादावित्यनेन अतद्गुणसंविज्ञान[8]बहुव्रीहिणा श्येनयागादिकं विवक्षितम्। तत्र च वेदबोधितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वरूपसाध्याभावाद्व्यभिचार इति तद्वारणायाविगीतपदमित्याहुः।

तदपि न। लाघवेन वेदबोधितेष्टसाधनताकत्वस्यैव साध्यत्वात्। तावतैव [9]तस्य समाप्तिकारणत्वेऽन्धपरंपराशङ्कानिरासात् तस्यैव विप्रतिपत्तिविषयतया निर्णेतव्यत्वात्। अत एव परिशेषादपि तदेव साधितम्। किं चैवमपि प्रथमदोषानतिवृत्तिः।

---

1. ख. अनायुक्तम्।
2. क. ख. तद्द्वयेऽपि
3. ख. घ. दुरवगमात् भ्रान्तत्व-
4. ख. घ. सविषयान्न-
5. घ. 'अत्रोद्धारकृतस्तु ........ न तु लोकप्रमापित—' इति भागः त्रुटितः।
6. क. घ. हेत्वसिद्धि-
7. ख. प्रमाकृत-
8. क. ०बहुव्रीह्याश्रयणेन यागादिकम्
9. क. तत्र

**न च व्यभिचारः, निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति**

प्रकाशः

**निष्परिपन्थीति ।** अयोग्यतासंशयो न विरोधी, तन्निश्चयश्च नास्त्येवेत्यर्थः ।

न्यायशिखामणिः

ननु मतद्वयेऽपि शिष्टपदं वेदप्रामाण्याभ्युपगन्तृपरम् । तथा च तत्पदात्तदनियतसविषान्नभोजनचैत्यवन्दनयोः, अविगीतपदाद्वेदानिषिद्धपराद्रात्रि[1]श्राद्धादेश्च निरास इति चेत्—न । एवमप्यलौकिकत्वनिरुक्तौ बलवदनिष्टाननुबन्धित्वांशवैयर्थ्यात् । अविगीतपदस्य रात्रिश्राद्धादिवारकतया सार्थक्योपपत्तौ तद्व्यावर्त्यागम्या[2]गमनादिसाधारणालौकिकत्वलाभाय तदुपादानमित्यस्यासंभवदुक्तिकत्वात् । किं चैवं यूपहस्तिदानादौ व्यभिचारः, तस्य 'यूपहस्तिनो दानमाचरन्ति' इत्यादिलोभमूलकस्मृत्यवगम्यस्य वेद[3]मूलकत्वाभावादिति ।

अत्र ब्रूमः । बलवदनिष्टाननुबन्धीष्टसाधनत्वे यदेव लिङ्गं तदेवात्रापि विवक्षितम् । तच्च यथा न दुष्टं तथोपपादितमस्माभिस्तदनुमानव्याख्यावसरे । तदिदमुक्तं **तथाविधाचारानुमितेति ।**

यद्वा मङ्गलसमाप्ति[4]कारणत्वनिर्णयफलको ह्येष विचारः । तन्निर्णयश्च न प्रमाणं विना । न च श्रुतिस्तथा ; तस्याः प्रत्यक्षेणेदानीमनाकलनात् । नाप्यनुमिता, सा हि आनुपूर्व्यादिविशेषविशिष्टत्वेनाप्रतिसंहिता न तद्बोधिका इत्यनुपदमेव स्फुटत्वात् । तथा चानुमानमेव तत्प्रमाणं वाच्यम् । अत एव फलविशेषनिश्चयः परिशेषानुमानादिति वयं ब्रूम **इत्यालोककृता** उक्तम् । न चानुमानस्य स्वतन्त्रप्रमाणत्वाभावादनाश्वास इति युक्तम् । व्याप्तिपक्षधर्मतासत्त्वे तस्यापि तथात्वात् । न च प्रमत्तानुष्ठितस्थले [5]व्यभिचारग्रहात् कथमनुमानप्रवृत्तिरिति वाच्यम् । स च ग्राह्यसंशयपर्यवसन्नो न विरोधीत्युक्तत्वात् । तथा चोक्तपरिशेषादेव तस्य समाप्तिकारणत्वनिर्णयः । वेदानुमानं [6]च तादृशाचारस्य वेदमूलत्वेनाविनाभावादेवेत्यनुपदमेव स्फुटमिति न तद्वैयर्थ्यम् ।

1. क. श्राद्धादेर्निरासादिति
2. ख. घ. °गमनसाधा–
3. ख. घ. °मूलत्वाभावा–
4. ख. '-कारणत्वनिर्णयफलको......व्याप्ति-' इति भागः त्रुटितः ।
5. क. व्यभिचारात्
6. क. ख. 'च' नास्ति ।

प्रमापिते तत्रापि तयैव लिङ्गेन जन्मान्तरीयतदनुमानात् ।

---

प्रकाशः

न च तादृशवेदस्य नाना[1]प्रकारकत्वसंभवाद्विशेषतो व्याप्त्यभावेन [2]विशिष्यानुमानात् सामान्यतो[ज्ञातो] वेदः आनुपूर्व्यादिविशेषविशिष्टत्वेनाप्रतिसंहितः[3] कथमिदानीं मङ्गलस्य समाप्ति[4]साधनत्वं बोधयिष्यतीति वाच्यम् । न ह्यनुमितो वेद इदानीमेव बोधयिष्यतीति ब्रूमः । किं तु पूर्वमेव प्रत्यक्षतादशायां यः तद्बोधको

---

न्यायशिखामणिः

नन्वविनाभाव एवासिद्ध इत्युक्तमिति चेत्— न । मङ्गलनिष्ठा समाप्तिरूपेष्टसाधनता वेदबोधिता अलौकिकेष्टसाधनतात्वात् दर्शेष्टसाधनतावत् । [5]तत्कर्तव्यता वेदबोधिता तादृशकर्तव्यतात्वात् दर्शकर्तव्यतावदिति वानुमानस्य विवक्षितत्वात् । तत्र च [6]मङ्गलकर्तव्यतायाः साधितत्वान्नाश्रयासिद्धिः ।

अलौकिकत्वं चात्र शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयत्वम् । तच्च भोजनेष्टसाधनताकर्तव्यतयोर्व्यभिचारवारणाय । निष्फले चेष्टसाधनताविरहादेव न तत्प्रसङ्गोऽपि । तत्र कर्तव्यत्वसत्त्वेऽपि तस्यालौकिकत्वाभावान्न द्वितीयहेतोर्व्यभिचारः । विगीतश्येनादीष्टसाधनत्वकर्तव्यत्वयोश्च [7]साध्यसत्त्वान्न व्यभिचारः । ततश्चाविनाभावाद्वेदानुमानमिति [8]युक्तमिति संक्षेपः ।

किं 'समाप्तिकामो मङ्गलमाचरेत्' इत्याद्यानुपूर्वीविशेष[9]विशिष्टत्वेन रूपेण वेदस्य साध्ये प्रवेशः उत वेदत्वेन । तत्राद्यं निराकृत्यान्त्यं निराचष्टे—सामान्यत इति । प्रतिसंहित इति शेषः ।

किमनुमितवेदस्येदानीं तद्बोधकत्वम्, उत [10]प्रत्यक्षताकालेऽपि । तत्राद्य इष्टापत्तिमुक्त्वान्त्यं [11]निरस्यति—किं तु पूर्वमिति । विशिष्टेति । अलौकिकावि-

---

1. क. °प्रकारत्व-
2. ख. विशिष्यानन्नुगमात्
3. क. °नाप्रमितः
4. ख. °साधकत्वं
5. क. ख. 'तत्' नास्ति ।
6. ख. मङ्गलसमाप्तिकारणतायाः ।
7. ख. साध्यत्वान्न
8. ख. 'युक्तमिति' इति नास्ति ।
9. ख. °विशिष्टत्वरूपेण
10. ख. प्रत्यक्षकाले
11. क. निराचष्टे

तच्चेदमारब्धकर्माङ्गम्, कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात्,

प्रकाशः

वृत्तः स इदानीमनुमीयते । इदानीं च विशिष्टशिष्टाचारविषयत्वरूपलिङ्गादेव [1]तज्ज्ञानम् । किमर्थं तर्हि वेदानुमानम्, स्वतन्त्रप्रमाणमूलकत्वेनान्धपरंपराशङ्का-निरासायेत्यादि [2]शब्दखण्डे स्फुटम् ।

तत्रापीति । इदं त्वनुमानसौकर्यादुक्तम् । तदनुमानाभावेऽपि शब्देन तज्जनकताबोधने बाधकाभावात् । न चाव्यभिचारज्ञानार्थं तत्, शब्दादेव [3]तद्भानादित्याहुः ।

ननु मङ्गलं यदि कर्माङ्गं स्यात् तदा अधिकारैक्ये लाघवं स्यात्, तदेव

न्यायशिखामणिः

गीतत्वे सति फलोद्देशेन शिष्टाचरितत्वादित्यर्थः । नन्वनुमानमपि व्याप्त्यादिसत्त्वे स्वतन्त्रप्रमाणमेव । [4]अन्यथा वेदानुमानमपि न स्यात् । तथा च न तच्छङ्का-निरासो वेदानुमानप्रयोजनमित्यस्वरसादाह—इत्यादीति । प्रथमं कर्तव्यताज्ञानेऽपि वेदानुमानमविनाभावादेवेत्युच्छिन्नशाखावादोक्तमादिपदग्राह्यम् । एतच्चोपलक्षणम्, अङ्गत्वानुमाने वेदबोधितत्वघटितलिङ्गसिद्धिरेतत्प्रयोजनमित्यपि बोध्यम् ।

अनुमानसौकर्यादिति । एतच्च प्रमत्तानुष्ठितकर्मसमाप्तिमात्रपक्षकम् अनु-मानमित्यभिप्रेत्य । तेन श्रुत्या सामान्यतः [5]समाप्तौ तज्जन्यत्वसिद्धावपि विशिष्या-ज्ञानान्न सिद्धसाधनम् । शब्देनेति । यद्यप्यनुमितो वेदो न बोधकः, तथाप्य-नाश्वासवारकत्वेन [6]बोधकत्वनिर्देशः । वस्तुतो गुरुमतेनेदम् । आनुपूर्व्यादिविशिष्ट-त्वेनाज्ञातस्यापि अर्थज्ञापकतया ज्ञातत्वमात्रेण तैर्बोधकत्वाभ्युपगमात् । अत एव वादिभेदेनोभयोपन्यास इत्यग्रे विभावयिष्यति ।

[7]प्रसङ्गसंगत्या अङ्गत्वानुमानपरं मूलमिति केचित् । तत्संगत्यन्तरसंभवाद-युक्तमित्यभिप्रेत्याह—नन्विति । कुत इति । तथा च कर्मोपकारलक्षणफलान्तर-

1. क. तद्ज्ञानम्
2. ख. शब्दे स्फुटम्
3. क. तद्भावा-
4. ख. घ. अन्यथा ततो वेदा-
5. ख. समाप्ततज्जन्यत्व-
6. ख. घ. बोधकत्वेन बोधकत्व-
7. ख. प्रसङ्गत्यागत्वानुमानपरं

प्रकाशः

कुत इत्यत आह—तच्चेति । ग्रन्थसमाप्तिरूपफलजनकावान्तरवाक्यरचनादिरूपकर्माङ्गमित्यर्थः । [1]कर्मार्थितयेति । कर्मनिष्पत्त्युद्देश्यतयेत्यर्थः । [2]एतच्चारम्भणीयायां व्यभिचारवारणाय । शिष्टैरिति । अभ्रान्तैरित्यर्थः । इदं च [3]भ्रान्तेनाङ्गत्वभ्रमेण प्रधानार्थतया क्रियमाणे अनङ्गीभूते कर्मणि व्यभिचारवारणाय । प्रधानस्यापि प्रधान[4]निष्पत्त्यर्थतया [5]क्रियमाणत्वात् तत्र व्यभिचारवारणाय—तत्पूर्वमिति । तत्कालान्यकाल इत्यर्थः । न तु तत्प्रागभावावच्छिन्नकाल इत्यर्थः । उत्तराङ्गेऽपि साध्यसत्त्वेन प्राक्त्वस्य व्यर्थत्वात् ।

यत्तु पूर्वाङ्गत्वमेवात्र साध्यम् । तथा चोत्तराङ्गे व्यभिचारवारणाय तत्पूर्वमिति । तन्न । पूर्वाङ्गत्वसाधनस्यार्थान्तरत्वात्, अङ्गत्वमात्रस्य प्रकृतोपयोगित्वात्

---

न्यायशिखामणिः

स्यासंभावितत्वान्निरुक्तगौरवं प्रामाणिकमिति विश्वजिन्न्यायेन स्वर्गकल्पने परिशेषासिद्धिरित्याक्षेपसंगतिरिति भावः ।

ननु चरमवाक्यरचना तद्घटितमहावाक्यरचना वा समाप्तिः । कर्मशब्देन च तदभिधाने फलजनकत्वलक्षणं प्रधानत्वमुक्तं स्यात् । तच्च प्रमाणाभावादुच्यमान[6]प्रमाणविरोधाच्चायुक्तम् । प्रत्युत फलवत्कर्मोपकारकत्वरूपं शेषत्वमभिमतं न सिध्येदित्यत आह—ग्रन्थादिति । [ग्रन्थेति] । कर्मेति । कर्मजन्य[7]फलार्थितयेत्यर्थः । अभ्रान्तैरिति । अङ्गत्वभ्रमरहितैरित्यर्थः । अत एव तद्भ्रमेण क्रियमाणे दोषवारण[8]मेतत्प्रयोजनमित्याह — इदं चेति । [9]प्रधानार्थतयेति । प्रधानजन्यफल[10]निष्पत्त्यर्थतयेत्यर्थः । अत एव प्रधाने व्यभिचारवारणाय तत्पूर्वपदमित्याह—प्रधानस्यापीति । अन्यथा प्रधानस्य स्वनिष्पत्त्यहेतुतया [11]तदर्थतया क्रियमाणत्वासिद्धेः ।

---

1. ख. कर्मार्थतयेति ।
2. ख. एतच्चान्वारम्भणीयायां
3. ख. भ्रान्तेनान्यत्राङ्गत्व-
4. क. °निष्पत्त्यर्थितया
5. क. क्रियमाणकत्वात्
6. ख. °प्रमाणाविरोधाच्च
7. ख. °फलार्थतयेत्यर्थः
8. क. °मेव तत्प्रयोजन-
9. क. घ. प्रधानार्थितयेति ।
10. क. घ. निष्पत्त्यर्थितयेत्यर्थः ।

**फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च, दर्शे प्रयाजादिवत् ।**

### प्रकाशः

उक्तेनैवोपपत्तेश्च । [1]न चानेककारणताकदर्शादेः प्रधानस्य प्रथमकारणभागे व्यभिचार इति वाच्यम् । तत्पूर्वमित्यनेन यावति प्रधानत्वं विश्राम्यति तत्पूर्वत्वस्य विवक्षितत्वात् । ननु [2]घटार्थतया तत्पूर्वं दण्डो विधीयते, न च घटं प्रति दण्डोऽङ्गमिति चेत्—न । वेदबोधितत्वेन तदर्थतया शिष्टैः तत्पूर्वं क्रियमाणत्वादित्यत्र तात्पर्यात् । तत्र तस्याङ्गत्वमिष्टमेवेत्यप्याहुः ।

**फलान्तराभाव** इति । प्रधानत्वाभिमतफलत्वेन यदभिमतफलं तदन्यफलोद्देशेन (क्रियमाणत्वे) [अक्रियमाणत्वे]सतीत्यर्थः । तेन मङ्गलत्वाभिमतनमस्कारादीनां फलान्तरश्रुतेरिदमसिद्धमिति परास्तम् ।

### न्यायशिखामणिः

**दर्शादेरिति** । आग्नेयादेरित्यर्थः । **प्रथमेति** । प्रथमावदानादावित्यर्थः । **प्रधानत्वमिति** । फलजनकत्वमित्यर्थः । तथा च फलजनकतावच्छेदकावच्छिन्नं विवक्षितम् इति [3]तदेकदेशकालस्यापि तत्कालत्वात् न तत्र व्यभिचारः । यद्यप्याग्नेययागे व्यभिचारः, तस्य द्वितीयादिप्रधानकालान्यकालीनत्वात् । तथापि तत्पूर्वशब्देन प्रधानकालत्वावच्छिन्नान्यकालो विवक्षित इति न दोषः । [4]**दण्डः** दण्डक्रिया, [5]**विधीयते** क्रियते । दण्डस्य सिद्धस्य तदा क्रियमाणत्वाभावात् यथाश्रुतासंगतिः । **घटमिति** । घटजनक[6]मृत्पिण्डकरणलक्षणप्रधानकर्म प्रतीत्यर्थः । **वेदबोधि(तत्व) [तत्वेन]** इति । वेदबोधितकर्तव्यता(कत्व) [कत्वेन] इत्यर्थः । नन्वधिकारैक्यसिद्ध्युपयोगि[7]तार्तीयशेषत्वं प्रकृते विचार्यम् । तच्च श्रुत्यादिप्रमाणकं दण्डादावयुक्तमित्यस्वरसं सूचयन् मतान्तरमाह—**तस्येति** ।

नन्वङ्गमात्रस्य प्रधानोपकारलक्षणफलवत्त्वा[8]द्विशेषणासिद्धिः । फलान्तरपदेन प्रधानजन्यफलातिरिक्तस्वतन्त्रफलविवक्षायां चैत्यवन्दनादेः प्रधानस्य फलाभावेन

1. क. न चानेककरणात्मक-
2. ख. घटार्थितया घटपूर्वम्
3. ख. 'तदेकदेशकालस्यापि......विवक्षितः' इति भागस्त्रुटितः ।
4. ख. दण्डे
5. ख. विधत्ते
6. ख. °मृत्पिण्डीकरण-
7. ख. °तायशेषत्वं
8. ख. °विशेषणासिद्धः

### प्रकाशः

मङ्गलीभूत[1]नत्यादिव्यक्तिविशेषाणां न फलान्तरमिति [2]यथाश्रुत एव हेतुरित्यप्याहुः । फलान्तरवत्यारम्भणीयादौ व्यभिचारवारणाय सत्यन्तम् । चैत्यवन्दनादिपूर्वं नियमतः क्रियमाणे व्यभिचारवारणाय फलवदिति । चैत्यवन्दनादिकं (फलमिति) [न फलवदिति] भावः । न च तत्र तस्याङ्गत्वमेव । [3]'फलवत्संनिधावफलं तदङ्गम्' इत्यादिना फलवत्कर्मान्वित[4]स्यैवाफलस्याङ्गत्वव्यवस्थापनात् । प्रधानत्वाभिमतपूर्वं केनचिदङ्गत्वभ्रमेण कृते निष्फले कर्मणि व्यभिचारवारणाय नियमत इति । प्रधाने कर्मणि व्यभिचारवारणाय तत्पूर्वमिति ।

---

### न्यायशिखामणिः

प्रधानजन्यफलाप्रसिद्ध्या तन्नियतपूर्ववर्तिनि सत्यन्ताभावेनैव व्यभिचारवारणे तद्वारकफलवत्पदवैयर्थ्यापत्तेः । हरिस्मरणादेः स्वतन्त्रफलान्तरवत्त्वेन भागासिद्धेश्चेत्यत आह—प्रधानत्वाभिमतेति । यद्यपि चैत्यवन्दनादिस्थले तादृशफलत्वाभिमान[5]प्रसिद्धावप्यभिमतफलाप्रसिद्धेरुक्तदोषतादवस्थ्यम् । हरिस्मरणादेः 'हरिर्हरिः' इति स्मृत्या अनुद्देश्यफलान्तरावगमेऽपि दुर्गास्तवपाठादेस्तादृशफलान्तरवत्त्वात् भागासिद्ध्यनतिवृत्तिश्च । तथापि स्वसंनिहितकर्मजन्यफलातिरिक्तस्वतन्त्रफलोद्देशेनाक्रियमाणत्वं विवक्षितम् । अन्वारम्भणीयादौ च प्रसिद्धस्य तादृशफलान्तरस्याभावो बाह्यकृतकर्मणि [6]सुग्रह इति न फलवत्पदवैयर्थ्यम् । ग्रन्थादिकार्यारम्भसमयान्यसमये क्रियमाणनत्यादेः मङ्गलत्वाभावादुक्तविशेषणवत एव पक्षत्वाद्वा नोक्तदोष इति भावः । [7]उद्देशपदस्य प्रयोजनमाह—तेनेति ।

ननु मङ्गलमात्रस्य पक्षत्वे [8]भागासिद्धिः । तद्विशेषस्य तथात्वे तस्य फलान्तररहितत्वेन यथाश्रुतहेतोरेव [9]सामञ्जस्ये उद्देशेनाक्रियमाणत्वमिति (च) व्यर्थमित्यस्वरसाज्जयदेवमतमाह—मङ्गलीभूतेति । ननु नियमत इति व्यर्थम् । न चाङ्गत्वभ्रमकृते निष्फले दोषवारणाय तदिति वाच्यम् । तत्र प्रधानकर्मणो

---

1. क. °नत्यादिविशेषव्यक्तीनां
2. क. यथाभूत
3. क. फलवत्त्वं निधाय फलं तदङ्गम्
4. क. °स्यैवाङ्गत्वं -
5. ख. 'प्रसिद्धावप्य......प्रसिद्धस्य' इति ग्रन्थस्त्रुटितः ।
6. ख. संग्रह
7. ख. घ. उद्देश्यपदस्य
8. ख. भागासिद्धः ।
9. क. घ. सामञ्जस्यात्

प्रकाशः

ननु व्यक्त्यपेक्षया नियमविवक्षायामुक्त एव व्यभिचारः, जात्यपेक्षया नियमोक्तौ स्वरूपासिद्धिः। ग्रन्थाद्यारम्भसमयेऽपि क्वचि[1]न्मङ्गलाकरणस्य संभवात्। आरम्भणीया[2]मज्ञात्वा तां विनापि दर्शादिकरणे तत्र तादृशनियमगर्भहेत्वभावे सत्यन्तवैयर्थ्यं चेति चेत्;

अत्राहुः। नियमत इत्यस्य [3]वेदबोधितत्वे सतीत्यर्थः। तथा च फलान्तराभावे सति वेदबोधितत्वे सति फलवत्कर्मारिप्समाणेन क्रियमाणत्वादित्येको हेतुः। फलान्तराभावे सति वेदबोधितत्वे सति तत्पूर्वं क्रियमाणत्वादित्यपरो हेतुः इति हेतुद्वये तात्पर्यम्।

---

न्यायशिखामणिः

[4]यथोक्ताङ्गानुष्ठानराहित्येन निष्फलतया तस्य फलवत्कर्मारम्भेच्छावता क्रियमाणत्वाभावेनैव दोषनिरासादित्याशङ्क्य फलवत्पदेन प्रधानत्वाभिमतं विवक्षितमित्याह—**प्रधानत्वाभिमतेति**।

ननु यथाश्रुते नियमत इति व्यर्थम्। प्रधानत्वाभिमतविवक्षायां पूर्वोक्त[5]बाह्यकृतकर्मणि व्यभिचार इति दोषे सत्येव [6]दोषान्तरमाह—**नन्विति**। **व्यक्तीति**। प्रधानत्वाभिमतव्यक्तीत्यर्थः। **उक्त** इति। भ्रमकृतनिष्फलकर्मणीत्यर्थः। जात्यपेक्षयेत्यत्र सर्वफलवत्कर्माभिधाने दोषमुक्त्वा प्रधानत्वाभिमतसर्वकर्मविवक्षायामाह—**आरम्भणीयामिति**। एतच्चोपलक्षणम्। प्रधानकर्मणः कर्मारिप्समानकार्यत्वाभावादेव निरासे तत्पूर्वपदवैयर्थ्यमित्यपि बोध्यम्। अत एव तत्पूर्वपदघटितं हेत्वन्तरमेवेति परिहरति—**अत्राहुरिति**।

नन्वत्राद्यो हेतुरयुक्तः, फलवत्पदेनैव निष्फलकर्मणि व्यभिचारनिरासे [7]सत्यन्तवैयर्थ्यात्। न चास्मिन् पक्षे फलवत्पदेन प्रधानत्वाभिमतमेव विवक्षितम्। तथा च चैत्यवन्दनादिनियतपूर्ववर्तिनि दोषवारणाय तदिति वाच्यम्। तथाप्यारम्भणीयादेः क्रतुसंकल्पात्पूर्वं क्रियमाणस्य तदिच्छया क्रियमाणत्वेऽपि प्रयाजादे-

---

1. ख. मङ्गलकरणस्य
2. ख. °मज्ञातवता
3. ख. वेदबोधितस्येत्यर्थः।
4. ख. यथोक्तानुष्ठान-
5. ख. °बाहुकृत
6. ख. घ. 'दोषान्तरं' नास्ति।
7. क. द्वितीयसत्यन्त -

आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्फलकर्तव्यत्वबोधनात् तत्फलकत्वबोधनाच्च ।

प्रकाशः

न चाद्यहेतौ प्रधाने व्यभिचारः, तद्धि न कर्मारिप्समानकार्यम्, किन्तु कर्म कुर्वाणस्येति तत एव तद्वारणादिति । न चोभयहेतावङ्गाङ्गे व्यभिचारः, तस्याङ्गत्वादित्याहुः । तदन्यत्वेन विशेषणान्नोक्तदोष इत्यन्ये ।

न्यायशिखामणिः

स्तथात्वाभावेन दृष्टान्ते साधनवैकल्यात् । न चारम्भपदं [1]निष्पत्तिपरम्, [2]स्वरूपोपकार्यङ्गं च दृष्टान्त इति वाच्यम् । तर्हि कर्मानिष्पादकस्यारम्भणीयादेरनेनैव वारणे प्रथमसत्यन्तवैयर्थ्यादिति चेत्;

अत्र ब्रूमः । फलवत्पदं प्रधानत्वाभिमतपरम् । तथा च वेदबोधितत्वे सति प्रधानत्वाभिमतकर्मनिष्पत्तीच्छया क्रियमाणत्वा[3]दित्येवाद्यो हेतुः, न तु तत्र फलान्तराभावपदप्रवेशः । द्वितीये त्वारम्भणीयादेर्व्यावर्त्यस्य सत्त्वात्तदुपादेयम् ।

ननु मङ्गलस्य कर्मनिष्पादकत्वे कर्मजन्यफलनिष्पत्तीच्छागर्भहेत्वसिद्धिः । कर्मजन्मफलनिष्पादकत्वे कर्मनिष्पत्तिघटितैतद्धेत्वसिद्धिरिति चेत्; न ह्युभयत्र मङ्गलमात्रस्य पक्षता, येनासिद्धिः स्यात् । किं तु यत्र ग्रन्थकरणसमर्थेनापि विघ्नबाहुल्यवशान्न किमपि वाक्यं रच्यत इत्याद्यवाक्यरचनामारभ्य सर्वापि वाक्यरचना विघ्नध्वंससाध्या, तत्र मङ्गलेन [4]विघ्नविघातद्वारा अवान्तरवाक्यरचनारूपप्रधानकर्मैव क्रियते । यागस्वरूपमिवावघातादिद्वारा व्रीहिभिः । तन्मङ्गलपक्षकाङ्गत्वसाध्ये कर्मनिष्पत्तीच्छाघटितो हेतुर्विवक्षितः । (येन मङ्गलेन तद्विघातद्वारावान्तरवाक्यरचनारूपप्रधानकर्मैव क्रियते, यागस्वरूपमिवावघातद्वारा व्रीहिभिः । तन्मङ्गलपक्षकाङ्गत्वसाध्ये कर्मनिष्पत्तीच्छाघटितो हेतुर्विवक्षितः।) येन मङ्गलेन तद्विघातद्वारावान्तरवाक्यरचना[5]जन्या समाप्तिः कीर्त्यादिफलवती स्वर्गफलवत्परमापूर्वमिवाङ्गापूर्वद्वारा प्रयाजादिना क्रियते तन्मङ्गलं फलोपकार्यङ्गमिति तत्र फलनिष्पत्तीच्छाघटितो हेतुः ।

[6]नन्वेवमप्यत्रोभयहेतौ निष्फले विपरीतानुष्ठिताङ्गे व्यभिचारः, स्वरूपतस्त-

1. घ. निवृत्ति-
2. क. पूर्वोपकार्यङ्गं
3. क. इत्याद्यो
4. क. विघ्नविनाश-
5. ख. °जन्यसमाप्तिः
6. क. नन्वेवमप्यत्र हेतौ निष्फले

दर्शारम्भसमये नियमेन क्रियमाणाया अप्यारम्भणीयायाः तदर्थितया अक्रियमाणत्वात् फलान्तरश्रवणाच्च प्रधानत्वमिति न तया व्यभिचारः।

---

**प्रकाशः**

प्रथमहेतौ प्रथमविशेषणासिद्धिं परिहरति—**आचारेति**। अत्रानुमानमेव मानत्वेनाभिमतम्। तस्य [1]स्वतन्त्रप्रमाणमूलकत्वोपदर्शनाय श्रुतेरुपादानम्, [2]इदानीमनुमितायास्तस्या अर्थाप्रतिपादकत्वादिति ध्येयम्।

वादिभेदेनोभयोपन्यास इति केचित्। द्वितीयहेतौ प्रथमविशेषणासिद्धिं परिहरति—**तत्फलकत्वेति**। समाप्तिफलकत्व[3]बोधनादित्यर्थः।

उभयहेतौ प्रथमविशेषणप्रयोजनं दर्शयति—**दर्शेति**।

---

**न्यायशिखामणिः**

स्यापि वेदबोधितत्वादिति चेत् — न। वेदबोधितपदेन सफलत्वस्य विवक्षितत्वादिति दिक्।

ननु श्रुत्यनुमानयोरुभयोरपि बोधकत्वेऽन्यतरेणैव विशेषणसिद्धावन्यतरोपादानवैयर्थ्यम्। तत्र [4]श्रुतेरबोधकत्वे तदुपादानं किमर्थमित्याशङ्क्य **नरहरिमिश्रोक्तमाह—अत्रेति**। एतच्चापाततः। व्याप्त्यादिसत्त्वे अनुमानस्यापि स्वतन्त्रप्रमाणत्वात्। वस्तुतस्तु प्रत्यक्षतादशायां श्रुतिरेव बोधिकेति तदभिप्रायेण तदुपादानमिति मन्तव्यम्।

एवं च न्यायमतेनैवोभयोपादानसंभवात् गुरुमतानुसारेण श्रुतेः, न्यायमतानुसारेण चानुमानस्योपादानमित्ययुक्तमित्यपरितोषं सूचयन् मतान्तरमाह—**वादीति**।

ननु न तावत्प्रथमहेतौ प्रथमविशेषणसिद्धौ हेत्वन्तराभिधानम्, तत्फलकत्वस्य हेतावप्रविष्टत्वात्। अत एव न द्वितीयहेत्वभिप्रायं तदित्यपि, फलान्तराभावस्यैव तत्र प्रविष्टत्वादित्यत आह—**द्वितीयेति**। **समाप्तीति**। [5]समाप्तीतरा-

---

1. ख. 'स्वतन्त्र' नास्ति।
2. ख. तदानीम्
3. ख. बोधादित्यर्थः
4. ख. 'श्रुतेरबोधकत्वे....गुरुमतानुसारेण' इत्यन्तो भागः त्रुटितः।
5. क. समाप्तीतराफलकत्वे सतीत्यर्थः।

नन्‌ु मङ्गलमलौकिकं लौकिके नाङ्गं भवति,

प्रकाशः

अत्र बाधं स्वरूपासिद्धिं च शङ्कते—नन्विति ।

न्यायशिखामणिः

फलकत्वेत्यर्थः । तथा च परिशेषानुमान[1]लिङ्गनिश्चायकानुमानेन समाप्तीतराफलकत्वबोधनादिति मूलार्थः ।

नन्वारम्भणीयायाः प्रधानत्वमयुक्तम्, अङ्गत्वाभ्युपगमविरोधात् । अत एवारम्भणीया प्रयाजवदावर्तेतेत्यादिविचारोऽपि सावकाशः । न च फलान्तरश्रवणात् प्रधानत्वम्, तच्च [2]गुर्वेकदेशिमतमादायेति न सिद्धान्तविरोध इति वाच्यम् । स्ववाक्ये फलाश्रवणात्, सकृतनुष्ठिताया एवारम्भणीयायाः पुरुषसंस्कारद्वारा दर्शाद्युपकारलक्षणफलान्तरवत्त्वेन विश्वजि[3]न्न्यायानवकाशाच्चेत्याशङ्क्य [4]यत्कर्म फलान्तरवत्त्वेन दर्शादिपूर्वकर्तव्यत्वेन च वेदबोधितं तदेवाग्निहोत्रादि मूले विवक्षितम् । तावतैव विशेषणप्रयोजनसिद्धेरित्यभिप्रेत्याह—उभयहेताविति ।

ननु न तावदस्य प्रतिरोधपरत्वमित्यनुपदमेव स्फुटम् । नाप्यलौकिकत्वावच्छिन्न[5]साध्यव्यापकलौकिककर्माङ्गत्वरूपोपाधिपरत्वम् । तदवच्छिन्नसाधनव्यापकत्वात् । यदवच्छिन्नसाध्यव्यापकत्वं तदवच्छिन्नसाधनाव्यापकस्यैवोपाधित्वात् अन्यथातिप्रसङ्गादित्याशङ्क्य नरहरिमतमाह—अत्रेति । न च विश्वजिन्न्यायादित्यतः प्राक्तनग्रन्थेनैव बाधोपपादनात् तद्वैयर्थ्यं स्यादिति वाच्यम् । अस्तु [6]कर्मानङ्गत्वम्, तथापि समाप्तिफलकत्वे को दोष इत्याशङ्कायां सिद्धे कर्माङ्गत्वे [7]ह्यधिकारैक्यकल्पनलाघवात् समाप्तिः फलं कल्प्येत । फलान्तरं [8]चाधिकारिभेदकल्पनागौरवान्निराक्रियेत[9] । तद्बाधे तु मङ्गलस्य प्रधानस्य फलभेदावश्यकत्वे प्रामाणिकतया गौरवमवधूय विश्वजिन्न्यायात् स्वर्गः फलं स्यादित्यर्थपरत्वात् ।

1. ख. °लिङ्गनिश्चायकानु-
2. ख. कुर्वैकदेशि-
3. क. घ. °न्यायानवताराच्च
4. ख. यत्फलान्तर -
5. ख. 'साध्यव्यापक.......व्यापकत्वं तदवच्छिन्न' इति ग्रन्थः लुप्तः
6. ख. कर्मान्यङ्गत्वम्
7. ख. ह्यतिकारैक्य-
8. ख. घ. चाधिकार-
9. क. घ. निराक्रियते ।

लोकावगतकारणत एव तदुपपत्तेः । अत एव गृहरथादौ 'आरे भग्ने इन्द्रबाहुर्बद्धव्यः' 'पागसं ब्राह्मणो भोजयितव्यः' इत्यत्र तदुभयं नाङ्गम्, किं तु नैमित्तिकम् । तद्वदिदमप्यारम्भसमयनिमित्तकमस्तु, विश्वजिन्न्यायात् स्वर्गः फलमिति चेत्—न ।

---

प्रकाशः

यत्तु मङ्गलं नाङ्गमलौकिकत्वादिति [1]सत्प्रतिपक्षं शङ्कते—नन्वितीति । तन्न । 'विश्वजिन्न्यायात् स्वर्गः फलमस्तु' इत्युत्तरग्रन्थविरोधात् । न ह्यसिद्धेन प्रतिरोधः तुल्यबलत्वाभावात् । लौकिक इति । [2]आरब्धकर्मणीत्यर्थः ।

[3]नन्वेव मङ्गलस्याकरणत्वे आरब्धग्रन्थाद्युत्पत्तिः कथमित्यत आह—लोकेति । [4]आर इति । लोहकीलक इत्यर्थः । गृहरथादिचक्र इत्यन्ये । इन्द्रबाहुः [5]लोहकाकः । आरम्भेति । [6]आरम्भसमयनियतकर्तव्यताकमित्यर्थः । न तु नैमित्तिकमेव अकरणे (प्रत्यवायश्रवणात्) [प्रत्यवायाश्रवणात्] । न च

---

न्यायशिखामणिः

जयदेवमतमाह—स्वरूपासिद्धिमिति । एतच्चापाततः, [7]उत्तरांशेनैव फलान्तराभावागर्भहेत्वसिद्ध्युपपादनात् पूर्वांशवैयर्थ्यापत्तेः ।

केचित्तु पूर्वांशेन बाधः उत्तरांशेन स्वरूपासिद्धिः प्रतिपाद्यत इति अस्य ग्रन्थस्योभयपरत्वम्, अत एव [8]स्वरूपासिद्धिं चेति पाठः सार्वत्रिक इत्याहुः । तच्चिन्त्यम् । स्वरूपासिद्धेः स्वसिद्धौ [9]बाधोपजीवनेनावश्यकबाधस्यैव दोषत्वौचित्यात् ।

जरन्मतमाह—यत्त्विति । नाङ्गमिति । [10]न लौकिककर्माङ्गमित्यर्थः । न केवलं बाधितो हेतुः अप्रयोजकोऽपीत्युक्तम् 'अत एव' इत्याकरे[11] । तत्र

---

1. ख. प्रतिरोध
2. ख. आरब्धकर्मनिवृत्त्यर्थम्
3. क. नन्वेवं सति
4. क. आरब्ध इति । ख. दूर इति ।
5. क. लोहिकारकः
6. ख. दूरं हि नियतसमयकर्तव्यताक-
7. ख. उत्तरं स्वेनैव
8. ख. घ. स्वरूपासिद्धं
9. ख. बाधोप-
10. ख. 'न लौकिके' त्यारभ्य 'अलौकिकस्येति' इत्यन्तभागस्थाने केवलमक्षरराशिर्वर्तते । न कोऽप्यर्थस्ततोऽवगम्यते ।
11. घ. 'आकरे' इति नास्ति ।

तस्यापूर्वरूपोपकारजनकाङ्गविषयत्वात् । अयं तु प्रतिबन्धकाभाव-रूप उपकारः । तस्य च लोकावगतकारणसहकारित्वेन, प्रतिबन्धके सति तस्मात्तदनुत्पत्तेः । अपूर्वं तु न तथा ।

---

**प्रकाशः**

'मङ्गलाचारयुक्ताना' मित्यादिना विनिपाताभावपदेन प्रत्यवायाभावप्रदर्शनमिति वाच्यम् । तत्र मङ्गलपदस्य आदर्शदर्शनपरत्वात् ।

तस्य—'अलौकिकं लौकिके नाङ्गम्' इत्यस्येत्यर्थः । अलौकिकस्य लौकिकानङ्गत्वे लौकिककर्मसहकारिभूतोपकाराजनकत्वं तन्त्रम् । अपूर्वं तु न लौकिककर्मसहकारि, तत्साकल्ये सत्यपूर्वं विना कार्यव्यतिरेकाभावात् । तेनापूर्व-[1]जनकमेवालौकिकं कर्म [2]न लौकिकाङ्गम्, न त्वन्यादृशमपीति भावः । अन्यादृशत्वमेव दर्शयति—अयं त्विति । मङ्गलजन्य इत्यर्थः । न तथेति । न लोकावगत[3]कारणसहकारीत्यर्थः । तथा च [4]तद्रूपोपकारजनकस्यैव परं लौकिकानङ्गत्वमिति भावः ।

---

**न्यायशिखामणिः**

आरशब्दार्थमाह—लोहेति । ननु मङ्गलस्य नैमित्तिकत्वेऽपि कर्माङ्गत्वे [5]विरोधाभावादिदमपि [6]तथास्तु । तथा च नैमित्तिकशब्दस्यार्थान्तरपरतया व्याख्यानमसंगतमित्यत आह—न त्विति । अकरण इति । एतच्चोपलक्षणम् । आरे भग्न इतिवत् निमित्तसप्तम्यश्रुतेरित्यपि द्रष्टव्यम् ।

[7]नन्वत्रापूर्वरूपोपकारजनकत्वमुपाधिरित्युक्तमयुक्तम् । सफले लौकिककर्मणि निष्फले च जलताडनादौ साध्याव्याप्तेरित्याशङ्क्य, न ह्यपूर्वजनकत्वमुपाधिरित्यभिमतम् । किं तु लौकिककर्मसहकारिभूतोपकाराजनकत्वम् इत्युपाध्याय-र्व्याख्यातम् । तदाह—अलौकिकस्येति । तन्त्रमिति प्रयोजकमित्यर्थः । तथा च तदेवोपाधिरिति भावः । अन्यादृशत्वमिति ।

तादृशोपकारजनकत्वमित्यर्थः । तथा च साधनाव्यापकत्वप्रदर्शनाय 'अपूर्वं तु'

---

1. क. ॰जनकमेव लौकिकं
2. क. 'न' नास्ति
3. क. 'कारण' नास्ति
4. क. तत्र तद्रूपो-
5. क. विरोधादिदमपि
6. क. 'तथास्तु' इति नास्ति।
7. क. नन्वपूर्व-

### प्रकाशः

न च पुत्रेष्ट्याद्यपूर्वस्य लोकावगतकारणसहकारित्वमेवेति वाच्यम्। तद्भिन्नस्थले तन्नियमस्योक्तत्वादित्याहुः।

---

### न्यायशिखामणिः

इति मूलमिति भावः। नन्वेतदयुक्तम्, साधनवत्युपाधिव्यतिरेकाप्रदर्शनादित्यत आह—मङ्गलेति। तथा च समानवित्तिवेद्यत्वान्मङ्गले तादृशोपकारजनकत्वमपि प्रदर्शितमिति भावः। साध्यव्यापकत्वप्रदर्शनायापूर्वं त्विति मूलम्। तत्र तथाशब्दस्य प्रतिबन्धकाभावपरत्वं वारयति—न लोकेति।

नन्वेवमपि साध्यवत्युपाध्यनभिधानात् कथं साध्य[1]व्यापकत्वग्रह इत्याशङ्क्य इन्द्रबाहुबन्धनादिजन्यमिति पदाध्याहारेण तत्सिद्धिरित्याशयेनाह—तथा चेति। एतच्चापाततः। अध्याहारेऽपि इन्द्रबाहुबन्धनादौ समानवित्तिवेद्यतया तादृशसहकारिभिन्नोपकारजनकत्वसिद्धावपि उक्तोपाध्यप्रदर्शनात्। वस्तुतस्त्वपूर्वजनकं कर्म तादृशोपकारजनकं न भवतीति[2] मूलार्थो बोध्यः।

नन्वदृष्टस्य साक्षात् जनकत्ववत् साक्षात् प्रतिबन्धकत्वमप्यसंभवि। न हि दृष्टसंपत्तावदृष्टस्य प्रतिबन्धकत्वं पश्यामः। तथा [3]चादृष्टरूपप्रतिबन्धकाभावो न लौकिककर्मसहकारीति मङ्गलं न तादृशोपकारजनकमिति नोपाधिः साधनाव्यापकः। न च सहकारिपदमपेक्षणीयपरम्, तथा च [4]प्रतिबन्धकादृष्टस्याभावः परंपरयापेक्ष्यत इत्युपाधिः साधनाव्यापक एवेति वाच्यम्। तथाप्यग्निहोत्रादिजन्यापूर्वस्य सुखविशेष[5]रूपस्वर्गे जनयितव्ये लौकिकशरीरव्यापारसापेक्षत्वेन पुत्रेष्ट्यादिभिन्ने तत्र साध्याव्याप्तेः। न च लौकिककर्मानपेक्षणीयोपकारजनकत्वं साध्यतावच्छेदकम्, तादृशोपकाराजनकत्वं चोपाधिरिति विवक्षितम्, तथा चाग्निहोत्रादौ न साध्याव्याप्तिः, तद्व्यापकताग्रहश्चेन्द्रबाहुबन्धनादाविति वाच्यम्। उक्तावच्छेदकापेक्षया[6] अङ्गत्वस्य, [7]तादृशोपकारजनकत्वापेक्षया अपूर्वजनकत्वस्य च लघुत्वेनाङ्गत्वावच्छिन्नसाध्यव्यापकस्य तस्य जयदेवोक्तस्यैवोपाधित्वौचित्यात्। [8]तस्माल्लौकिककर्मापेक्षणीयोपकाराजनकत्वमुपाधिरिति न युक्तमित्यस्वरसं सूत्रयति—आहुरिति।

---

1. क. ॰ व्यापकत्वाग्रह
2. ख. 'इति' नास्ति
3. ख. च दृष्ट
4. क. प्रतिबन्धकस्याभावः
5. क. ख. ॰स्वरूप-
6. ख. घ. कत्वापेक्षया
7. घ. तादृशोपकाराजनकत्व-
8. ख. 'तस्मात्' नास्ति।

विघ्नध्वंसद्वारा चेदमङ्गम्, न तु 'इडो यजति' इत्यादिविधिबोधित-प्रयाजाद्यङ्गयागवददृष्टद्वारा। मङ्गलजन्यादृष्टं विनापि स्वतःसिद्धविघ्नविरहवत आरब्धनिर्वाहात्। न चैवं विघ्नध्वंसद्वारापि नेदमङ्गम्, तत्रैव व्यभिचारादिति वाच्यम्। सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वात्।

न चैवं प्रयाजादेरपि दुरितध्वंस एव द्वारम्, कल्प्यदुरितध्वंसतः अपूर्वस्य लघुत्वात्।

---

प्रकाशः

नन्विन्द्र[1]बाहुबन्धनादिवत् [2]मङ्गलस्यापूर्वरूपोपकारजनकत्वमेव, तत्कथमस्यापि लौकिकाङ्गत्वमित्यत आह—विघ्नेति। यद्वा प्रसङ्गादाह—विघ्नेति। [3]सतीति। ननु सति विघ्ने [4]अपूर्वद्वारेदमङ्गं मङ्गलमिति नोक्तव्यभिचार इत्यपि सुवचम्। किं चात्र मते जन्मान्तरमङ्गलस्य समाप्तिहेतुत्वात् मङ्गलजन्यादृष्टव्यतिरेको दुर्ग्रह इति चेत्—न।

---

न्यायशिखामणिः

नन्विति। तथा चोपाधिः साधनव्यापक इति भावः। नन्वलौकिकत्वं हि लोकावगतेष्टसाधनताशून्यत्वम्। तथा च मङ्गलस्यापूर्वजनकत्वेऽपि जलताडनादौ साधनाव्यापकत्वं सुग्रहमित्यरुचेराह—यद्वेति। वस्तुत इदमप्यापाततः। मङ्गलं न लौकिकाङ्गम् अपूर्वजनकत्वात् आयसवायसबन्धनवदित्यनुमान[5]मङ्गत्वानुमानबाधकं पूर्वपक्ष्यभिमतम्। [6]तदत्र निराक्रियत इति प्रकृतसंगतिसंभवे प्रासङ्गिकसंगतेरयुक्तत्वात्।

किं विघ्नस्थलीयसमाप्तौ विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वम्, समाप्तिमात्रे वा। तत्राद्यं निराकृत्यान्त्यं निराचष्टे—किं चेति। अत्र मत इति। मङ्गलस्य समाप्तिमात्रहेतुत्वमिति संप्रदायमत इत्यर्थः। दुर्ग्रह इति। प्रमत्तानुष्ठितस्थले जन्मान्तरीयमङ्गलसंशयान्न व्यभिचारनिश्चय इत्यर्थः।

---

1. ख. 'बाहु' नास्ति।
2. क. मङ्गलं स्यात्पूर्व-
3. ख. 'सतीति' नास्ति।
4. ख. अपूर्वद्वारे द्विमङ्गलव्यभिचार इत्यपि
5. ख. °मनङ्गत्वा-
6. क. तत्र

वस्तुतस्तु प्रायशो विघ्नसंशये तन्निश्चये वा नियमेन शिष्टानां मङ्गलाचरणे विघ्नाभाव एव द्वारत्वेनाभिमतः ।

निर्विघ्नं समाप्यतामिति कामनया तत्करणपक्षे श्रुतित एव (द्वारत्व) [तद्द्वारत्व] निर्णयः ।

---

प्रकाशः

तद्धि अपूर्वं [1]प्रतिबन्धकं विघ्नं विनाश्य आरब्धसमाप्तिजनकम्, अविनाश्य वा । नान्त्यः, असंभवात् । न हि सति प्रतिबन्धके कुतोऽपि समाप्तिसंभवः । नाद्यः, विघ्नध्वंसस्यावश्यकत्वे तस्यैव तद्द्वारत्वौचित्यात् । न त्वन्तरा अपूर्वं जनयित्वा तद्द्वारा विघ्नध्वंसो द्वारम्, गौरवादिति भावः । कल्प्येति । यद्यप्येवं लाघवात् तत्राप्यपूर्वमेव द्वारं स्यात् [2]न विघ्नध्वंसः, तथाप्युक्तयुक्त्या [3]वक्ष्यमाणयुक्त्या च प्रामाणिकं गौरवमिति भावः । विघ्नाभाव एवेति । अन्यथा विघ्नज्ञानशून्यस्यापि मङ्गलाचरणप्रसङ्ग इति भावः ।

श्रुतित इति । 'निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत्' इति कल्पनीयवेदादेवेत्यर्थः । पूर्वत्र कल्पे व्यापारः कल्पनीयः अत्र [4]शाब्द इति भेदः । तद्द्वार-

---

न्यायशिखामणिः

प्रथमपक्षमाश्रित्य जयदेवोक्तेन समाधत्ते— [5]अपूर्वमिति । नन्वेवमप्यत्रावश्यकत्वं लाघवम्, तत्र (भवत्वमिति) [द्वारत्वमिति] लाघवतौल्ये विघ्नध्वंस एवेत्यवधारणा न सिध्यति इत्यत आह—वक्ष्यमाणेति । वस्तुत इत्यत्रेति शेषः ।

ननु मङ्गलं विघ्नकादाचित्कतदभावान्यतरजनकं विघ्नज्ञानवता क्रियमाणत्वादिति सामान्यतो ज्ञायते । ततः समाप्तिकामप्रवृत्त्यनुपपत्त्या विघ्नजनकत्वे, प्रागभावस्याजन्यतया तज्जनकत्वे च निरस्ते विघ्नध्वंसजनकत्वे व्यवस्थापिते समाप्तिकामप्रवृत्त्यनुपपत्त्यैव तस्य मुख्यफलत्वे बाधिते परिशेषात् द्वारत्वं कल्प्यत इत्युक्तं वस्तुतः इत्यत्र । तदयुक्तम् । तत्र प्रथमानुमानस्यैवाप्रयोजकत्वादित्यत आह— अन्यथेति । ननु 'समाप्तिकामो मङ्गलमाचरेत्' इत्याकारश्रुत्या कथं विघ्नध्वंस-

---

1. ख. 'प्रतिबन्धकं' इति नास्ति ।
2. ख. 'न' इति नास्ति ।
3. ख. वस्तुत इत्यादिवक्ष्यमाण-
4. ख. शास्त्रमिति
5. ख. नापूर्वमिति

किं चापूर्वे द्वारत्वे लौकिकाङ्गत्वविरोधः, क्लृप्तकारणादेव तदुत्पत्ते-रिन्द्रबाहुबन्धनवत् । ननु विघ्नसंदेहे कथं तन्नाशार्थं प्रवृत्तिः, दुरितध्वंसार्थि-

प्रकाशः

त्वेति । [1]तद्द्वारोप[त्वोप]स्थितिरित्यर्थः । तज्जन्यत्वे सति तज्जन्यजनकत्वस्य व्यापारत्वस्य क्लृप्तवेदादनुपस्थितेरिति ध्येयम् । तादृशशिष्टाचारानुमितवेदात्तद-प्युपतिष्ठतैवेत्यप्याहुः ।

किं चेति । [2]लौकिकारब्धत्वं कर्माङ्गत्वं च साधितमेवेति भावः । विघ्नध्वंसस्य [3]द्वारत्वे बाधकमाशङ्कते—नन्विति ।

न्यायशिखामणिः

रूपद्वारोपस्थितिरित्यत आह—निर्विघ्नेति । ननु पूर्वत्राप्यनुमितया उक्ताकार-श्रुत्या द्वारोपस्थितिसंभवात्कथमत्र श्रुतित इत्युक्तमित्याशङ्क्य, [4]यदा विघ्नाभाव-मनन्तर्भाव्यैव श्रुत्यनुमानम्, तदा परिशेषादेव द्वारकल्पनमित्यभिप्रायः पूर्वस्येत्याह—पूर्वत्रेति । यद्यपि [5]व्यापारत्वमत्रापि कल्प्यमित्यभेदः; तथापि व्यापारांशमा-दायैव भेद इति सूचयितुं व्यापार इत्युक्तम् । कथं तर्हि द्वारत्वनिर्णय इत्युक्त-मित्यत आह—(द्वारेति) [तद्द्वारेति] द्वारत्वस्यापि शाब्दत्वे को दोष इत्यत आह—तज्जन्यत्व इति ।

तादृशवेदादिति । 'निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत्' इत्याकारकश्रुत्या न विघ्नध्वंसोपलक्षिता समाप्तिर्बोध्यते । विशेषणत्वे संभवत्युपलक्षणत्वस्यान्याय्य-त्वात्[6] । तथा च विशिष्टसमाप्तौ मङ्गलजन्यत्वभाने विशेषणेऽपि तद्ध्वंसे [7]तद्भातमिति तद्घटितं व्यापारत्वमप्युपस्थितमिति भावः ।

नन्वेतावता तत्र मङ्गलजन्यत्वोपस्थितावपि समाप्तिहेतुत्वानुपस्थितेर्न द्वार-त्वबोधः । न च विघ्नध्वंसजन्या समाप्तिर्मङ्गलजन्यत्वेन बोध्यते न [8]तद्विशिष्टेति

1. ख. तद्द्वारोऽस्त्वित्यर्थः ।
2. ख. लौकिकाङ्गत्वकर्माङ्गत्वं च बाधित-
3. क. द्वारत्वबाधक-
4. ख. यदि
5. ख. द्युपरत्व-
6. ख. ०स्यान्यत्वात्
7. क. तद्भानमिति
8. क. ख. तद्विशिष्ट इति

प्रवृत्तौ तन्निश्चयस्य हेतुत्वात् प्रायश्चित्तवदिति चेत् — न। विघ्नसंशये निश्चये वा नियमेन शिष्टानां मङ्गलाचारात् विघ्नज्ञानं प्रवर्तकम्। तादृशाचारानुमितविधिनापि विघ्नज्ञानवानारब्धसमाप्तिकामोऽधिकारी बोध्यते।

---

प्रकाशः

विघ्नज्ञानवानिति। अत्र विघ्नज्ञानमधिकार इति न विवक्षितम्, तथा सति तज्ज्ञानस्य प्रवर्तकत्वापत्तेः। अग्रिमग्रन्थपर्यालोचनया स्वरूपसत एव ज्ञानस्य प्रवर्तकत्वनिश्चयात्। किं तु विघ्नज्ञानवान् यः समाप्तिकामः सोऽधिकारी। [1]तथा च [2]विघ्नज्ञानवतां समाप्तिकामनाधिकार इत्यत्र तात्पर्यम्। केचित्तु विघ्नज्ञानवान् समाप्तिकामोऽधिकारी बोध्यत इत्याहुः।

---

न्यायशिखामणिः

तत्र समाप्तिजनकत्वोपस्थितिः संभवतीति वाच्यम्। [3]तथाप्यत्र पक्षे तत्तन्मङ्गलजन्यत्वानुपस्थितेः। तथा च वेदात् द्वारत्वमप्युपतिष्ठत इत्ययुक्तमित्यस्वरसं सूचयति — अपीति।

इष्टापत्तिमाशङ्क्याह—लौकिकेति। साधितमिति। [4]तत्साधनं च प्रबलमिति नानेन बाधप्रतिरोधाविति भावः। नन्वपूर्वजनकत्वासाधनात् नन्विति चोद्यं प्रकृतासंगतमित्याशङ्क्य विघ्नध्वंसस्य द्वारत्वे बाधिते परिशेषादपूर्वद्वारत्वसिद्धिरित्याशयवतः शङ्केत्याह— विघ्नेति।

किमस्य द्वारत्वे अधिकारिविशेषणनिश्चयरूपकारणाभावादप्रवृत्तिः प्रतिबन्धकसत्त्वाद्वा। तत्राद्येऽपि एतद्दूषणं विघ्नज्ञानवत्त्वमधिकारिविशेषणमिति मते उत विघ्नवत्त्वं तथेत्यत्र तत्संदेहवत्त्वमित्यत्र वा। तत्राद्ये विघ्नज्ञानवान् समाप्तिकामोऽधिकारी बोध्यत इत्युक्तम् विघ्नसंशय इत्यादिना। तर्हि तदुभयमप्यधिकारः स्यादित्यत आह—[5]अत्रेति। तज्ज्ञानस्येति। विघ्नज्ञाननिश्चयस्येत्यर्थः।

---

1. ख. 'तथा च' इति नास्ति। 2. ख. विघ्नज्ञानं
3. ख. 'तथाप्यत्र पक्षे तत्तन्मङ्गलजन्यत्वानुपस्थितेः' इत्यस्य स्थाने 'प्रतिबन्धकामावत्वेन कारणत्वानुमितावपि श्रुत्या तदनुपस्थितेः। न च तद्विशिष्टत्वमेव विवक्षितम्, प्रतिबन्धकाभावपरानिर्विघ्नपदात् समाप्तिहेतुत्वमप्यवगतमिति वाच्यम्। प्रतिबन्धकाभावत्वेन कारणत्वानुमितावपि श्रुत्या तदनुपस्थितेः' इति पाठो दृश्यते। 4. क. तत्साधकं
5. क. तत्रेति

प्रायश्चित्ते तु तन्निश्चयवान्, तथैव विधिबोधनात्। अत एवाधिकारिविशेषणं विघ्न इति तत्संदेहे कथं प्रवृत्तिः, वैदिकेऽधिकारनिश्चयादेव प्रवृत्तेरित्यपास्तम्। यतः प्रधानाधिकारिण एवाङ्गेऽधिकारो न स्वतन्त्रः, अङ्गत्वभङ्गप्रसङ्गात्। न च प्रधाने प्रारिप्सिते दुरितमधिकारिविशेषणम्, विरोधात्। किं तु समाप्तिकामना, सा च निश्चितैव।

---

**प्रकाशः**

प्रायश्चित्त इति। तत्र निश्चयस्यैव प्रवर्तकत्वम्, न तु ज्ञानमात्रस्येत्यर्थः। विरोधादिति। फलजनकस्याधिकारतया अधिकारित्वं प्रतिबन्धकत्वं च विरुद्धमिति भावः।

---

**न्यायशिखामणिः**

विघ्नज्ञानवत [वतां] इति। तथा च विघ्नज्ञानं स्वरूपसत् प्रवर्तकमिति नाधिकारः। समाप्तिकामना तु ज्ञायमाना तथेत्यधिकार इति भावः।

नन्वत्रैकविशेषणं स्वरूपसत् प्रवर्तकम्, अन्यत्तु ज्ञायमानमित्येतत् श्रुतिप्रत्यक्षतादशायां [1]तया प्रवर्तमानस्येत्यभिमतम्, इदानीमाचारात् [2]प्रवर्तमानस्येति वा। नाद्यः, यदधिकारिविशेषणं [3]श्रुतिबोधितं तन्निश्चयस्य प्रवर्तकत्वनियमेन तया [4]प्रवर्तमानपुरुषस्योभयनिश्चयस्यैव तथात्वापत्तेः। अन्यथा श्रुतिजन्यतद्बोधवैयर्थ्यात्। न च यत् पुरुषविशेषणतया निश्चितं प्रवृत्तिद्वारा फलजनकं तदेवाधिकार इत्युच्यते, विघ्नज्ञानवत्त्वं तु तद्बोधितमपि स्वरूपसदेव तथेति नाधिकार इति वाच्यम्। एवं सति फलकामनायाः अप्यधिकारत्वानुपपत्तेः। लोके तन्निश्चयस्य प्रवर्तकत्वादर्शनात्। श्रुतिजन्यतद्बोधसार्थक्यायात्रैव प्रवर्तकत्वकल्पनस्य विघ्नज्ञानेऽपि तुल्यत्वात्। नान्त्यः, तादृशाचारात् [5]निर्विघ्नसमाप्तिहेतुतां मङ्गलस्यानुमाय प्रवर्तमानस्योभयविशेषणज्ञानापेक्षत्वात्। [6]तस्मात [7]समाप्तिकामवत् विघ्नज्ञानवान-

---

1. ख. तया
2. क. प्रवर्तमानस्य वा
3. ख. श्रुतिचोदितं
4. क. प्रवर्तमानस्य
5. ख. निर्विघ्नसमाप्तिहेतुकस्य मङ्गलानुमानस्योभय-
6. ख. 'तस्मात्.......धिकारी' इति भागो नास्ति।
7. क. समाप्तिकामो विघ्न-

यत्त्वन्यत्र निश्चिताधिकारकर्तृत्वेऽपि मङ्गलं संदिग्धाधिकारकर्तृकमेव, विघ्नसंदेहवतां शिष्टानामाचारानुमितवेदेन तथैव बोधनादिति। तन्न। विघ्नवत्त्वेनाधिकाराभावात्। क्वचित्तन्निश्चयेऽपि प्रवृत्तेश्च।

---

**प्रकाशः**

सा चेति। यद्यपि कामना स्वरूपसती प्रवर्तिका न तु निश्चिता; तथापि कामनाभिलापं विना काम्यकर्मानिर्वाहात् कामनाज्ञानस्य तत्रोपयोग इत्याहुः। लाघवादधिकारनिश्चयत्वेनान्यत्र प्रवर्तकत्वावधारणात्तन्निश्चयः प्रवर्तक इत्यन्ये।

विघ्नवत्त्वेनेति। प्रधाने पूर्वोक्तविरोधादधिकाराभावेनाङ्गेऽपि तत्त्वादिति भावः। एतेन मङ्गलमज्ञाताधिकारिकर्तृकमिति निरस्तम्। व्यभिचारमाह—क्वचिदिति।

---

**न्यायशिखामणिः**

प्यधिकारी। किं चास्य ग्रन्थस्य विघ्नज्ञानवतोऽधिकारित्वमित्यर्थपरत्वाभावे 'मङ्गले तु विघ्नज्ञानवानधिकारीत्युक्तम्' इत्यग्रिमग्रन्थविरोधः। ततश्चैतन्मतमयुक्तमित्यस्वरसान्मतान्तरमाह—केचित्त्विति।

नन्वत्र विघ्नज्ञानवत् प्रायश्चित्तस्थलेऽपि पापज्ञानमेव विशेषणम् किं न स्यादित्यत आह—तत्रेति। ननु विघ्नवत्त्वं तथेति मतेऽपि किं तन्मङ्गलाधिकारिविशेषणम्, प्रधानप्रारिप्सितकर्माधिकारिविशेषणं [1]वा। तत्राद्यं निराकृत्यान्त्यं न चेत्यत्र निराकृतम्, तदयुक्तम्। प्रतिबन्धकत्वपुरुषविशेषणत्वयोरविरोधादित्यत आह—फलेति। प्रवृत्तिद्वारेति शेषः।

(प्रवर्तकेति) [प्रवर्तिकेति]। इष्टसाधनताज्ञानद्वारेति शेषः। लोके कामनायास्तथात्वाभावेऽपि अमुककामोऽनेन यक्ष्य [2]इत्यभिलापरूपक्रतुसंकल्पद्वारा तदुपयोगमात्रेण प्रवर्तकत्वोक्तिरित्याह—तथापीति। अन्यत्र यागस्थले स्वर्गकामनानिश्चयस्येति शेषः। उक्तरीत्या [3]क्रतूपयोगसंभवे प्रवर्तकत्वमयुक्तमित्यस्वरसं सूचयति—अन्य इति। एतेनेति। समाप्तिकामनावतोऽधिकारिणो ज्ञातत्वेनेत्यर्थः।

---

1. ख वेति
2. क. इत्यभिलापस्य क्रतु-
3. क. क्रतूपयोगित्वसं-

अपि च शङ्कितानिष्टवारणार्थमपि प्रवर्तन्ते परीक्षकाः, यथा सर्पादिदंशजन्यविषसंशये तन्नाशाय भेषजपानादौ ।

किं च फलस्य संशयेऽप्युपायत्वनिश्चयाद्यथा कृष्यादौ प्रवृत्तिस्तथा मङ्गलेऽपि । यदि च वृष्ट्यादौ सति कृष्यादितोऽवश्यं फलमिति तर्कात्तत्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्तिः ।

---

प्रकाशः

न केवलं नाश्यसंशये मङ्गले प्रवृत्तिः, किं त्वन्यत्रापीत्याह—अपि चेति । प्रायश्चित्ते तु न संशये प्रवृत्तिः, तथैव विधिबोधनादिति भावः । किं चेति । विघ्नसंशये विघ्नध्वंसविशिष्टसमाप्तिरूपफल[1]संदेहो न प्रवृत्तिप्रतिबन्धक इत्यर्थः । न च [2]वैदिके फलनिश्चयादेव प्रवृत्तिरिति वाच्यम् । शिष्टाचारानुमितवेदेन [3]तत्संशयेऽपि तद्बोधनादिति भावः ।

---

न्यायशिखामणिः

ननु 'यत्तु' इत्यादिना एकदेशिमतमनूद्य निराकृतमयुक्तम् । विघ्ननिश्चयस्थले विघ्नस्यापि सत्त्वेन [4]व्यभिचाराभावादित्याशङ्क्य विघ्नसंदेहस्याधिकारिविशेषणत्वमिति मते दोषपरतया व्याचष्टे—व्यभिचारमिति ।

ननु प्रतिबन्धकपक्षेऽपि फलसंशयः तथा, द्वारसंशयो वा । तत्राद्येऽपि किं विघ्नध्वंसः फलमिति पक्षे तत्संशयस्य प्रतिबन्धकत्वम्, उत समाप्तिरित्यत्र । तत्राद्यं निराकृतम् 'अपि चे' त्यत्र । तदयुक्तम्, (विषयसंशयस्य) [विषसंशयस्य] दुरितसंशयत्वाभावेन तन्न्यायेनात्र प्रवृत्त्युपपादनायोगादित्याशङ्क्य अनिष्टनाशसंशयत्वेन [5]साम्यमभिप्रेत्याह—न केवलमिति । ननु किं चेत्यत्र द्वितीयनिराकरणमयुक्तम्, कृष्यादौ भावरूपफलसंशयोऽत्र तु विघ्नध्वंससंशय इति वैषम्यादित्यत आह—विघ्नेति ।

---

1. ख. ०संदेहेन
2. ख. वैदिकफल-
3. क. 'तत्' इति नास्ति ।
4. ख. घ. व्यभिचारादित्या-
5. क. सामान्य-

ननु स्फ्यस्य भक्ताश्लेषनिमित्तेज्यायामिष्टित्वेन दर्शधर्मत्वे सत्यतिदेशागतपूर्वदिनकर्तव्यदेवतावाहनस्याङ्गस्य स्फ्याश्लेषद्वारसंशयेऽननुष्ठानमुक्तम्, यथा कृष्णले द्वारबाधे। अतो विघ्नसंशयात्तद्ध्वंसद्वारसंशये कथं मङ्गलानुष्ठानमिति चेत्;

---

**प्रकाशः**

स्फ्याश्लिष्टेज्याधिकरणविरोधमाशङ्कते—नन्विति। 'यत् स्फ्य आश्लिषेत्तदपि मृज्याद्विष्णव उरुक्रमाय निर्वपेत्' इत्यादिना बोधितस्फ्याश्लिष्टेज्यादेर्दर्शपूर्णमास[1]प्रकृतिकत्वेन 'प्रकृतिवद्विकृतिः' इत्यतिदेशप्राप्तदर्शपूर्णमास[2]धर्मतदङ्गदेवतावाहनस्य पूर्वदिनेऽननुष्ठानमित्यर्थः।

---

**न्यायशिखामणिः**

ननु स्फ्याश्लेष[3]द्वारसंशयदृष्टान्तावष्टम्भेन [4]द्वारसंशयस्य प्रवृत्तिप्रतिबन्धकत्वपक्ष उत्थापितो न युक्तः, [5]तदप्रतिबन्धकत्वेऽप्यनिष्टाभावादित्याशङ्क्य तथा सति दशमाध्यायगताधिकरणविरोधः स्यादित्याह—स्फ्याश्लिष्टेति।

ननु 'प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात्' इत्यत्र तृतीयवर्णके 'वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेत् इदमहममुं चामुं चाभ्यूहामीति यं द्विष्यात्तं ध्यायेत् यदघोऽवमृज्यते यच्च स्फ्य आश्लिषेत्तद्विष्णव उरुक्रमायावद्यति' इति विषयः। तत्र वैश्वदेविकदेवतावाहनकाले विष्णोरावाहनं कर्तव्यं न वेति विशये [6]अतिदेशतः कर्तव्यमिति प्राप्ते, तदा स्फ्याश्लेषरूपनिमित्तानिश्चयान्न [7]कर्तव्यमिति सिद्धान्तितम्। तदयुक्तम्। तत्र यजतिनिर्वपत्यश्रवणेनावाहनस्य[8] च होमसाधारणत्वेन वैष्णवकर्मणो यागत्वानिश्चयात् औषधद्रव्यकत्वेन ऐष्टिकत्वे वा तस्यैकदेवताकत्वेनाग्नेयविकारस्य तदङ्गदेवतावाहनप्रयोजकत्वेऽपि नैमित्तिकत्वेन [9]पृथक्तन्त्रतया वैश्वदेविकावाहनकाले तदावाहनस्याप्राप्तेः पूर्वपक्षानवकाशादित्याशङ्क्य तन्त्रमध्यनिपातात् सर्वाण्यङ्गानि प्रसङ्गेनोप-

---

1. क. °प्रवृत्तिकत्वेन
2. ख. 'धर्म' नास्ति
3. ख. घ. °द्वारा संशय-
4. ख. घ. द्वारसंशयप्रतिबन्धकत्व-
5. क. तत्र प्रतिबन्धक-
6. ख. अतिदेशः
7. ख. 'कर्तव्यमिति' इति नास्ति।
8. क. °नावदानस्य
9. क. अपृथक्तन्त्र-

प्रकाशः

अत्र द्वारपदं [1](प्रवृत्त्यौपाधिक) [प्रवृत्त्यौपयिक] परम् । आश्लेषस्य निमित्तत्वेन द्वारत्वाभावात् । अत एव दृष्टान्तदार्ष्टान्तिकयोर्न विरोधः । मध्यवर्तित्वसाम्येन द्वारत्वोक्तिरित्यन्ये ।

प्रसक्तस्याप्यननुष्ठाने दृष्टान्तमाह—यथेति । यथा 'व्रीहीनवहन्ति' इत्यत्र व्रीहिपदस्य यवादिसाधारण्यार्थं अजहत्स्वार्थलक्षणया नियोगसाधनीभूतद्रव्यमात्रपरत्वे 'कृष्णलं श्रपयेत्' [2]इत्यादिश्रुत्या नियोगसाधनत्वेन बोधितकृष्णलस्याप्यवघातप्राप्तौ, वैतुष्यद्वारबाधेऽवघाताननुष्ठानमुक्तं, तथा आश्लेषद्वारसंशये अतिदेशप्राप्तदेवतावाहनाननुष्ठानमुक्तमित्यर्थः ।

---

न्यायशिखामणिः

कुर्वन्तीति न पृथक् क्रियन्ते । विष्णुदेवतावाहनं तु अकृतत्वात् कर्तव्यमित्यस्ति पूर्वपक्षावकाश इत्याशयवान् सिद्धान्तमाह—यदिति । 'यत् स्फ्य आश्लिषेत् तदधो अवमृज्यात् विष्णव उरुक्रमाय निर्वपेत्' इति पाठः प्रामादिको नोपादेयः ।

दर्शेति । अत्रोभयत्र दर्शपूर्णमासपदमाग्नेयपरम् । पूर्वदिन इति । नन्विदमयुक्तम्, प्रकृतावावाहनस्य यागदिनकर्तव्यस्य पूर्वदिने विकृतावप्यनुष्ठानाप्राप्तेरिति चेत्—न । तेन वैश्वदेविकदेवतावाहनकालस्य विवक्षितत्वात् ।

केचित्तु प्रकृतौ पूर्वदिने देवतापरिग्रहो विहितः । 'वसून् रुद्रानादित्यानिन्द्रेण सह देवतास्ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया' इति मन्त्रलिङ्गात् । तथा च विकृतावपि पूर्वदिन एवातिदेशतस्तत्प्राप्तिरित्याहुः ।

तच्चिन्त्यम् । तथा [3]विध्यनुपलम्भात् । तेन विधिकल्पनेऽपि विशिष्य देवतापरिग्रहस्य मन्त्रतोऽप्रतीत्या विधानासिद्धेः । सामान्यदेवतापरिग्रहस्य चात्रापि पूर्वं कृतत्वेन [4]विचारानवकाशात् । अत एव 'यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वोभूते यजते' इति प्रत्यक्षब्राह्मणवचनं तद्विधायकमित्यपास्तम् । वर्तमानापदेशत्वेनास्याविधायकत्वात् । तथात्वे वा ततोऽपि [5]विशिष्य देवतापरिग्रहविधानासिद्धेः ।

---

1. ख. प्रवृत्तौपाधिक-
2. ख. इति श्रुत्या
3. ख. सिद्धानुपलम्भात्
4. ख. विचारावकाशात्
5. ख. विशिष्टदेवता-

### प्रकाशः

एतेन कृष्णले द्वारबाधः, इह तु तत्संशय इति [1]तद्वैषम्यमित्यपास्तम्। [2]प्राप्तानुष्ठानोक्तिमात्रे दृष्टान्तत्वात्। व्यतिरेकज्ञानविषयतया समानत्वेन दृष्टान्तत्वमित्यन्ये। कृष्णलं स्वर्णमाषः।

ननु नियोगसाधनीभूतसतुषद्रव्यत्वेनैवाजहत्स्वार्था लक्षणास्तु। तथा च कृष्णले अप्रसङ्ग एव न तु बाधः, तस्य प्रसङ्गपूर्वकत्वादिति चेत्;

---

### न्यायशिखामणिः

नन्वाश्लेषस्य निमित्तत्वात् द्वारपदं [3]तत्परमस्त्वित्यत आह—अत एवेति। [4]प्रवृत्त्यौपयिकपरत्वादेवेत्यर्थः। नन्वेवं कृषितत्फलमध्यवर्तिवृष्टिसंशया[5]त्तत्राप्रवृत्तिप्रसङ्गः। [6]तादृशकर्मध्वंससंशयाद्वैदिकेऽपि तत्प्रसङ्ग इत्यस्वरसं सूचयति—अन्य इति।

ननु तत्रैव द्वितीयवर्णके 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यायुष्कामेष्टिराम्नाता। तत्र कृष्णलद्रव्यस्यावघातः कर्तव्यो न वेति संशये लुप्तार्थोऽप्यवघातः [7]श्रपणवत् कर्तव्यः। अन्यथा चरुधर्मविधानार्थचरुशब्दानुपपत्तेरिति प्राप्ते, राद्धान्तितम्। तदयुक्तम्। 'व्रीहीनवहन्ति' इति विहितस्यावघातस्य व्रीहेरन्यत्रातिदेशतोऽप्यप्राप्तेः पूर्वपक्षानवकाशादित्यत आह—यथा व्रीहीनिति।

ननु [8]शक्याशक्यसाधारणलक्ष्यतावच्छेदकाभावा[9]न्नाजहल्लक्षणेत्यत आह—नियोगेति। एवं [10]पूर्वपक्षमुपपाद्य सिद्धान्तमाह—सतुषेति। [11]अयं भावः। न तावच्चरुशब्दानुपपत्त्या अवघातानुष्ठानम्, [12]अलुप्तार्थकधर्मान्तरानुष्ठानेन तदुपपत्तेः। न च लुप्तार्थकत्वेऽपि श्रपणवत्तदनुष्ठानं न विरुद्धमित्युक्तमिति वाच्यम्। श्रपणस्य 'घृते श्रपयति' इति श्रुत्या साक्षाद्विहितत्वेन वैषम्यादिति।

---

1. ख. 'तद्' नास्ति
2. ख. प्राप्तानुष्ठानमात्रे
3. ख. तत्पद-
4. ख. प्रवृत्त्यौपाधिक-
5. ख. घ. तत्राप्यप्रवृत्ति-
6. ख. तादृशकर्मत्वसंशयात्
7. क. श्रपणादिवत् ख. भवणवत्
8. ख. शक्यसाधारण-
9. क. नाजहत्स्वार्थेत्यतः
10. ख. 'पूर्व' नास्ति।
11. ख. अयमेवेति।
12. क. अलुप्तार्थकर्मान्तर-

## प्रकाशः

अत्राहुः । 'व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' 'व्रीहीन् प्रोक्षति' इत्यत्र यागावघातप्रोक्षणानां सामानाधिकरण्यमनुभूयते । तच्च तुल्यप्रकारोपस्थितिं विना न [1]भवतीत्येकप्रकारोपस्थितिर्वाच्या । न च प्रोक्षणादावपि सातुष्यं तन्त्रमित्येकत्र सातुष्याप्रवेशे अवघातेऽपि न तत्प्रवेश इति प्रसङ्गसंभवे बाध एवेति ।

यत्तु आश्लेषो न द्वारमित्यपरितोषात् प्रकृत एव द्वितीयदृष्टान्तोऽयं [2]यथेतीति ।

तन्न । तथा सति सिद्धान्ते द्वितीयदृष्टान्तस्याप्युपदर्शनप्रसङ्गात् । न हि नैमित्तिकेत्यादिना द्वितीयदृष्टान्तस्य किंचिद्दूषितम् । अत एव [3]यथावेति क्वाचित्कः पाठः प्रामादिक इति वयमालोचयामः ।

---

## न्यायशिखामणिः

एतच्छब्दार्थमेवाह—प्राप्तेति । सतुषेति । न च गौरवात् सतुषत्वस्य नावच्छेदक[4]प्रवेश इति युक्तम् । विशेषणान्तरेऽपि तुल्यत्वात् । गुरुत्वेऽप्यतिप्रसङ्गभञ्जकतया तत्प्रवेश आवश्यक इत्येतत् सातुष्येऽपि तुल्यमिति भावः ।

जयदेवसमाधिमाह—अत्रेति । न चेति । न हीत्यर्थः । कृष्णलादिव्यावृत्ति[5]प्रयोजनाय 'व्रीहीनवहन्ति' इत्यत्र व्रीहिपदलक्षणया अपूर्वसाधनद्रव्ये सातुष्यं प्रवेश्यमिति हि ते मतम् । प्रोक्षतीत्यत्र तु [6]न तदावश्यकम्, कृष्णलादावपि प्रोक्षणसंभवेन तद्व्यावृत्तिप्रयोजनाभावादिति भावः ।

जरन्मतमाह—यत्त्विति । तन्नेति । एतच्चापाततः । द्वितीयदृष्टान्तवैषम्यस्य स्पष्टत्वात् । प्रथमे तत्प्रदर्शनस्य वैषम्योपलक्षकत्वाद्वा । वस्तुतस्तज्जन्यत्वादिघटितं द्वारत्वं न वैतुष्येऽपि, प्रवृत्त्यौपयिकत्वरूपं [7]त्वाश्लेषेऽपि संभवतीति न पूर्वापरितोष इत्यत्र तात्पर्यम् ।

नन्वेवमपि विषयव्याप्त्यर्थं द्वितीयदृष्टान्ताभिधानमस्त्वित्यत आह—अत

---

1. ख. संभवती-
2. क. यथेति ।
3. ख. यथा चेति ।
4. क. प्रवेशनं युक्तम् ।
5. क. •प्रयोजिका ख. •प्रयोजना
6. ख. 'न' नास्ति ।
7. ख. घ. चाश्लेषे

न। नैमित्तिके हि निमित्तवानधिकारी, यथा 'भिन्ने जुहोति' इत्यत्र पात्रभेदवान्। तथेहाश्लेषवानधिकारीति पूर्वदिने आश्लेषनिश्चयाभावात् युक्तमननुष्ठानम्।

---

प्रकाशः

अत इति। तथा च प्रवृत्त्यौपयिकस्पयाश्लेषसंशये यथा [1]आवाहनाननुष्ठानं तथा प्रवृत्त्यौपयिकविघ्नध्वंससंशये मङ्गलाननुष्ठानं स्यादित्यर्थः।

[2]प्रवृत्त्यौपयिकसंशयत्वाविशेषेऽपि निमित्तसंशयत्वेनाश्लेषसंशयस्य प्रतिबन्धकत्वम्, [3]विघ्नध्वंससंशयस्य च फलसंशयपर्यवसन्नतया शिष्टाचारानुमितश्रुत्या विघ्नज्ञानवत एव [4]मङ्गले प्रवृत्तिबोधनाच्च तत्प्रतिबन्धकत्वमित्याशयेनाह—**नैमित्तिके हीति।**

---

न्यायशिखामणिः

**एवेति।** **प्रामादिक इति।** इदमप्यापाततः। पाठकलहापत्तेः। किं च क्वाचित्कोऽपि नायं प्रामादिकः, अर्थासाधुत्वे [5]तस्याप्यसाधुत्वादिति।

ननु विघ्नसंशयात्तद्द्वारध्वंससंशय इति न युक्तम्। विघ्नसंशयस्यैव तद्ध्वंसकोटिकत्वादित्याशङ्क्य तदुभयकोटिकसंशय एव तात्पर्यमाह—**तथा चेति।** नन्वेवमपि विघ्नसंशयोऽपि प्रतिबन्धकः स्यात्, [6]प्रवृत्त्यौपयिकसंशयत्वाविशेषादित्याशङ्क्याह—**प्रवृत्तीति।** [7]**निमित्तसंशयत्वेनेति।** न तु प्रवृत्त्यौपयिक[8]संशयत्वेन, तथा सति कृष्यादावपि फलसंशयात् प्रवृत्त्यनापत्तेरिति भावः। तर्हि निमित्तसंशयत्वेन आश्लेषसंशयस्य प्रतिबन्धकत्वे विघ्नसंशयोऽपि तथा प्रतिबन्धकोऽस्त्वित्यत आह—**विघ्नेति। फलेति।** तथा चास्य निमित्तसंशयत्वाभावान्न प्रतिबन्धकत्वमिति भावः। अनुकूलत्वादपि न प्रतिबन्धकत्वमित्याह—**शिष्टेति।**

---

1. 'आवाहन' इति नास्ति।
2. ख. प्रवृत्त्यौपाधिक-
3. ख. 'ध्वंस' नास्ति।
4. ख. मङ्गलविषयप्रवृत्ति-
5. क. घ. तस्यापि साधुत्वा-
6. घ. प्रवृत्त्यौपाधिक-
7. क. निमित्तत्वसंशय-
8. ख. "संगत्वेन

प्रकाशः

**भिन्न** इति । यद्यप्युपपदविभक्तेः कारकविभक्तिर्बलीयसी, तथापि भेदस्याधिकरणत्वासंभवान्निमित्तसप्तम्येवेति तद्भेदवानधिकारीत्याहुः ।

**आश्लेषनिश्चयाभावा**दित्यत्र निश्चयग्रहण[1]मधिकारनिश्चयार्थम् । यत्तु वस्तुतो निश्चयपदमयुक्तम्, अधिकाराभावस्यैव प्रतिबन्धकत्वसंभवादिति । तन्न । स्वरूपतोऽधिकाराभावस्य प्रवृत्त्यप्रतिबन्धकत्वात् । अग्रिमदिने स्फयाश्लेषो यत्र [2]तत्राधिकाराभावाभावात् ।

नन्वेवं क्षयाहनिमित्तकश्राद्धादावपि पूर्वदिने निरामिषभोजनस्याननुष्ठानं स्यादिति चेत्—न । [3]तत्र तादृशसंशये प्रागुत्पन्नेऽपि तर्कादिना मानसकर्त-

---

न्यायशिखामणिः

नन्वेवमाश्लेषाभावादिति वक्तव्ये निश्चयपदं किमर्थमित्यत आह—**निश्चयेति । अधिकारेति** । अधिकारनिश्चयाभावस्यैवाननुष्ठानप्रयोजकत्वादिति भावः ।

ननु सत्यप्यधिकारनिश्चये यत्र राजोपद्रवादिना अननुष्ठानं तत्र [4]तन्निश्च-याभावो व्यभिचारीति चेत् न । अन्यप्रयुक्ताननुष्ठानस्यैव तत्प्रयोजयत्वात् । अन्यथा मणिप्रयुक्तदाहानुत्पादे मन्त्रादेरप्रयोजकतया तदप्रतिबन्धकत्वापत्तेः ।

जयदेवमतमाह—**यत्त्विति । स्वरूपसत इति** । यस्य [5]कार्यप्रयोजकत्वं तदभावस्यैव तदभावप्रयोजकत्वौचित्यादिति भावः । अस्त्वधिकाराभावस्तत्प्रयोजक-स्तथापि प्रकृते स न संभवतीत्याह—**अग्रिमेति** । एतच्चापाततः । [6]तथाप्यग्रिम-काले निमित्तनिश्चयसत्त्वेनाधिकार[7]निश्चयाभावाभावात् आवाहनकाले तदभावादन-नुष्ठानमित्यस्य मतान्तरेऽपि तुल्यत्वात् । वस्तुतः पूर्वदोष एव तात्पर्यम् ।

किं तत्रापि निमित्तसंशयादननुष्ठानमापाद्यम्, उत [8]आशौचसंशयस्थलेऽपि तन्निश्चयसत्त्वात्तस्याहेतुत्वम् । तत्राद्य आह—**तत्रेति** । यद्यपि पित्रादिक्षयकाले

---

1. ख. अधिकारिनियमार्थम्
2. ख. तत्राधिकाराभावात्
3. क. तत्तत्तादृश
4. ख. घ. 'तद्' नास्ति ।
5. ख. प्रकार्य-
6. ख. घ. तथाप्यग्रिम-
7. क. °निश्चयाभावात् घ. °निश्चयभावाभावात्
8. ख. 'आ' नास्ति ।

प्रकाशः

व्यता निश्चयादित्याहुः । [1]केचित्तु आशौचसंशयाधीनकर्तव्यतानिश्चयाभावातिरिक्तस्थले तन्निश्चयो [2]हेतुरित्याहुः ।

ननु यत्राप्तवाक्यादिना पूर्वदिने भक्ताश्लेषनिश्चयस्तत्रावाहनप्रसङ्ग इति चेत्—न । [3]इष्टापत्तेरिति ।

न च संशयस्थले तदकरणे कथं यागसिद्धिरङ्गहानेरिति वाच्यम् । नित्यवन्नैमित्तिकेऽपि किंचिदङ्गहानावपि फल[4]सिद्धेरित्यन्ये । संशयेन कर्तव्यताया अप्यभावान्न [5]तस्याङ्गत्वमित्यप्याहुः ।

---

न्यायशिखामणिः

बालकस्येदानीं तर्केण तन्निश्चयासंभवः । तथापि तत्कालस्थितासैस्तस्य तन्निश्चयो भवत्येव । [6]तदभिप्रायेणैव तर्कादिनेत्युक्तम् । अन्त्ये त्वाह—केचित्त्विति । आशौचेति । शुचित्वनिश्चयस्थले निमित्तनिश्चयो हेतुरित्यर्थः । तथा च शुचित्वनिश्चयोऽपि सहकारीति भावः ।

ननु [7]यथा श्राद्धाङ्गनिरामिष[8]भोजने क्षयाहनिमित्तवान्नाधिकारी, किं तु पूर्वदिनकर्तव्यत्वेनैव तदनुष्ठानम्, तथा देवतावाहनमपि यागपूर्वकालकर्तव्यत्वेनैव तत्रानुष्ठेयम् । तथा च यत्र हविःप्रचारकाले स्फ्यस्य तदाश्लेषो भविष्यतीत्याप्तवाक्यात्तन्निश्चयः तत्र तत्करणं स्यादिति शङ्कते—नन्विति । आवाहनेति । सफलेति शेषः । एतेनानधिकारिकृतत्वेन निष्फलं स्यादिति मूलमाक्षिप्तम् । पूर्वदिनकृतश्राद्धाङ्गवत् सफलत्वसंभवादिति भावः ।

नन्वत्रेष्टापत्तिरयुक्ता । यत्र पूर्वकाले भाविनिमित्तसंशयः हविरवदानकाले च तन्निश्चयान्नैमित्तिकानुष्ठानम्, तत्र व्यभिचारेणावाहनस्याङ्गत्वाभावेनान्यत्राप्यनुष्ठानायोगात्[9] । अन्यथा [10]तदकरणेन नैमित्तिकयाग[11] वैफल्यापत्तेरित्याशङ्क्य

---

1. ख. 'केचित्तु' नास्ति ।
2. ख. 'हेतुः' नास्ति ।
3. ख. इष्टापत्तेरिति केचित् ।
4. ख. सिद्धिः
5. ख. अस्याङ्गत्व-
6. ख. एतदभि-
7. ख. 'यथा' नास्ति ।
8. क. ०भोजनेच्छयाह
9. क. ०ष्ठानाभावात्
10. ख. घ. तदधिकरणेन
11. क. ०निष्फलत्वापत्ते-

अपि चेज्याकर्तव्यतानिश्चये तदनुष्ठानम्। न चाश्लेषसंशये तन्निश्चयः पूर्वदिने। अतः प्रधानेऽधिकाराभावान्नाङ्गेऽधिकार इति नावाहनं पूर्वदिने। यदि च 'यदि न स्यात्' इति न्यायेन कुर्यात् तदा अनधिकृतकर्तृकत्वेन निष्फलं स्यात्। स्फ्याश्लेषे सतीज्याकर्तव्यतानिश्चयेऽपि नावाहनम्, पूर्वदिनस्याङ्गस्याभावादिति इज्यायामावाहनबाध एव।

---

**प्रकाशः**

स्फ्याश्लेषोत्तरमपि कथं नावाहनमिति शिष्यजिज्ञासायामाह—स्फ्याश्लेषे सतीति। न च नित्ये किंचिदङ्गहानवदत्रापि पूर्वदिनाङ्गबाधेऽपि तत्स्यादिति

---

**न्यायशिखामणिः**

निरस्यति—न चेति। (यागसिद्धिरिति) [फलसिद्धिरिति]। [1]यागफलसिद्धिरित्यर्थः।

नन्वङ्गं द्विविधम् अर्थकर्म प्रतिपत्तिकर्म चेति। तत्राद्यं प्रयाजादि। द्वितीयं कृष्णविषाणाक्षेपणादि। तत्र प्रतिपत्तिकर्माङ्गविकलयोः नित्यनैमित्तिकयोः कथंचित्साफल्येऽपि तादृशप्रयाजादिवैफल्ये वैफल्यमेवेति सकलमीमांसकव्यवस्थितिः। तथा चावाहनमप्यर्थकर्मेति तदकरणे वैफल्यमेव। अन्यथा एकाङ्गेन [2]प्रधानोपकारसंभवेनेतराङ्गानुष्ठानवैयर्थ्यात्। अत एवाग्रे 'किंचिदङ्गहानेऽपि' इत्यादिना तथैव विभावयिष्यति। [3]तस्मादेतदयुक्तमित्यस्वरसान्मतान्तरमाह—संशयेनेति। इदमप्यापाततः। [4]पूर्वकाले, भाविनिमित्तसंशयेऽपि हविरवदानकाले [5]तन्निश्चये नैमित्तिकेज्याकर्तव्यतायाः संभवात्।

ननु द्वितीयाघारकाल एव प्रकृतौ आवाहनस्य विहिततया आश्लेषोत्तरकाले तदाशङ्कानवकाशात् स्फ्याश्लेष इति ग्रन्थासंगतिरित्याशङ्क्य तदनभिज्ञशिष्यप्रश्नोत्तरपरतया व्याचष्टे—स्फ्याश्लेषेति। आक्षेपसमाधानपरं वा मूलमित्याशयेनाक्षिपति—न चेति। [6]पूर्वदिनाङ्गबाध इति। यथा हविरासा-

---

1. क. सफलयागसिद्धि-
2. ख. घ. प्रयाजोप-
3. ख. तस्मात्तदयुक्त-
4. ख. पूर्वकालभावि-
5. ख. 'तन्निश्चये......आश्लेषोत्तर' इति ग्रन्थस्त्रुटितः घ. तन्निश्चयेन
6. ख. पूर्वदिनाङ्गत्व-

मङ्गले तु विघ्नज्ञानवानधिकारीत्युक्तम् । तच्च संशयेऽप्यस्ति । प्रधाने कर्तव्यतानिश्चयोऽस्त्येवेति द्वारसंदेहेऽपि युक्तमनुष्ठानम् । भविष्यद्विवाहादावाभ्युदयिकेऽपि तज्ज्ञानवानधिकारी, तथैवाचारात् ।

---

**प्रकाशः**

वाच्यम् । कालान्तरस्याविहितत्वाविशेषेण [1]विनिहन्तुमशक्यत्वात् । यत्किंचिदङ्गहानेऽपि कर्मनिष्पत्त्यभ्युपगमे तत एव यागनिष्पत्तिसंभवे प्रयत्नगौरवाच्चेति भावः ।

मङ्गले त्विति । [2]स्ववृत्तिविघ्नज्ञानवान् [3]समाप्तिकामोऽधिकारीत्यर्थः । ननु नैमित्तिके हि निमित्तनिश्चयवानधिकारीत्युक्तम् । तथा च कथं विवाहनिमित्तसंशये नैमित्तिकश्राद्धानुष्ठानमित्यत आह—भविष्यदिति । [4]आचारादिति । इदानीं प्रत्यक्षवेदाभावेन तादृशाचारानुमितश्रुत्या विवाहज्ञानवान् फलकामोऽधिकारी

---

**न्यायशिखामणिः**

दनोत्तरकालं प्राप्तानां प्रयाजानां पशौ कालान्तरेऽनुष्ठानम्, यथा वा सवनीयेऽनूयाजानाम्, तथावाहनं कालान्तरे क्रियमाणं न विरोत्स्यत इति भावः ।

किं कालान्तरमङ्ग(ल)मित्यभिमतम्, उत किंचिदङ्गवैकल्येऽपि कर्मसाफल्यमिति । नाद्यः, अत्र कालान्तरस्याविहितत्वात् । प्रयाजानूयाजयोस्तु 'तिष्ठन्तं पशुं [5]प्रयजति' 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति विधानात्तस्याङ्गत्वम् । अन्यथा यागोत्तरमपि तत्प्रसङ्गात्, तस्याविहितत्वाविशेषादित्याह—कालान्तरस्येति । नान्त्य इत्याह—[6]यत्किंचिदिति ॥

ननु पूर्वत्र समाप्तिकामस्याप्यधिकारितयोक्तत्वात् विघ्नज्ञानवानधिकारीत्युक्त[7]मसंगतमित्यत आह—स्ववृत्तीति । तर्ह्यत्रैव व्यभिचारात् उक्तनियमभङ्गः स्यादित्यत आह—तथा चेति । विवाहातिरिक्तेति । एतच्चापाततः । एवमप्युपनयनादावाभ्युदयिके तद्रूपनिमित्तनिश्चयाभावेन व्यभिचारात् । न च विवाहपदं स्मार्तकर्मपरम्; तथाप्यग्न्याधानादौ तत्सत्त्वेन दोषतादवस्थ्यात् । यदि चासति

---

1. ख. विनिर्गन्तुम्
1. ख. स्वप्रवृत्तिविघ्न-
2. ख. फलकामो
3. ख. 'आचरादिति' इति नास्ति ।
3. क. ख. प्रतियजति ।
4. क. घ. किंचिदिति
5. ख. °असंगतिरित्यत

नन्वङ्गानां प्रधानविधिविधेयत्वम् । न च ग्रन्थादिसमाप्तौ प्रधानविधिरस्ति । न च तत्कर्तव्यताबोधकस्य लौकिकप्रमाणस्य शास्त्रमेकदेशो युज्यते । तस्य तन्निरपेक्षत्वादिति चेत्—

---

प्रकाशः

बोध्यत इत्यर्थः । एतेन विवाहज्ञानस्याधिकारत्वे तज्ज्ञानस्य प्रवर्तकतापत्तेर्गौरवमिति परास्तम् । फलकामनाया [1]एवाधिकारत्वात् । तथा च विवाहातिरिक्तस्थले 'नैमित्तिके ही'त्यादिनियम इति हृदयम् ।

तच्चेत्यत्र व्यापकानुपलब्धिं शङ्कते—**नन्विति** । **प्रधानेति** । प्रधानकर्तव्यताबोधकविध्येकवाक्यतापन्नशब्दबोध्यकर्तव्यताकत्वमित्यर्थः । **समाप्ताविति** । [2]विधिसमाप्तिस्थल इत्यर्थः । ननु प्रधानकर्तव्यताबोधकप्रमाणापेक्षणीयशब्दबोध्यकर्तव्यताकत्वमेवाङ्गत्वे तन्त्रम्, न तु तादृशप्रमाणस्य विधित्वं विवक्षितम्, गौरवात् । तच्च प्रकृतेऽप्यस्तीत्याशङ्क्य निराकरोति—**न चेति** । **शास्त्रं** शब्दः । **एकदेशः** अपेक्षणीयः । **तस्य** लौकिकप्रमाणस्य । **तन्निरपेक्षत्वात्** शास्त्रमनपेक्ष्यैव कर्तव्यताबोधनक्षमत्वादित्यादि ।

---

न्यायशिखामणिः

दृष्टादृष्टप्रतिबन्धके अवश्यमिदं कर्म समाप्तिं गमिष्यतीति निश्चयसत्त्वान्न व्यभिचार इति, तदा वैवाहिकेऽप्याभ्युदयिके तादृशनिश्चयसंभवाद्विवाहातिरिक्तेति विशेषणवैयर्थ्यम् ।

ननु विघ्नज्ञानवानधिकारीत्यत्र दूषणानभिधानादाशङ्कानुपपत्तिः । न चाङ्गत्वानुमानोपाधिपरं तदिति युक्तम् । लौकिकाङ्गे प्रधानविधिविधेयत्वाभावेन साध्याव्याप्तेरित्याशङ्क्य वैदिक[3]रूपाङ्गत्वव्यापकं तदिति विवक्षितम् । तथा च व्यापकाभाव[4]लिङ्गकाङ्गत्वाभावसाधकानुमानपरं तदित्याह—(तच्चेदमिति) [तच्चेत्यत्रेति] । ननु वैदिकाङ्गत्वव्यापकं तदित्यपि न युक्तम्, प्रयाजादौ तदभावात् । न हि प्रधानविधिरङ्गं विधत्त इत्यत आह—**प्रधानेति** । **शब्देति** । [5]विधीत्यर्थः ।

---

1. ख. 'एव' नास्ति ।
2. क. 'विधिसमाप्ति' इति नास्ति
3. ख. °निरूपाङ्गत्व-
4. ख. °लिङ्गाङ्गत्वबाधकानुमान-
   घ. लिङ्गकाङ्गत्वबाधकानुमान-
5. क. विधिरित्यर्थः ।

न। अपूर्वजनकाङ्गानां तथात्वात्, आचारानुमितश्रुत्या प्रधानविधिं विनापि तदङ्गत्वविधानाच्च।

अपि च प्रधानकर्तव्यताबोधकबोध्यकर्तव्यताकत्वं प्रयोजकम्, तच्चेहाप्यस्ति, प्रतिबन्धकाभावस्य सकलकार्यहेतुत्वेन लौकिकप्रमाणस्यापि तत्सापेक्षत्वात्।

प्रकाशः

अपूर्वेति। तथा चाङ्गमात्रं वैदिकाङ्गमात्रं वा न प्रधानविधिविधेयत्वव्याप्य[1]कर्तव्यताकमिति भावः। आचारेति। यद्यपि श्रुत्या नाङ्गत्वं विधीयते, तथापि श्रुत्या कारणत्वबोधनादर्थादङ्गत्वमिति भावः।

न्यायशिखामणिः

समाप्तिरूपफलस्याविधेयत्वादाह—[2]समाप्तिस्थल इति। तथा च समाप्ति[3]फलककर्मणीत्यर्थः। ननु न चेत्यत्र न तावद्विधिपर[4]शब्दपदघटितोक्तव्यापकस्य मङ्गले सद्भावशङ्का, लौकिकेति विरोधात्। नापि [5]तदघटितस्य, शास्त्रमित्यनुपपत्तेरित्यत आह—(नन्विति)। [न त्विति] प्रयोजके शास्त्रपदानुपादानात् एकदेशपदानुपादानाच्च व्याचष्टे —शब्द इति। प्रधानकर्तव्यताबोधकस्य शब्दसापेक्षत्वे निराकर्तव्ये तच्छब्दस्य [6]शास्त्रपरत्वमयुक्तमित्यत आह—लौकिकेति।

नन्वेवमप्यनुमाने दूषणं नोक्तमित्याशङ्क्य उक्त[7]धर्मस्य व्यापकत्वनिराकरणपरमित्याह—तथा चेति। ननु न तावत्पापनाशकाङ्गे [8]तस्याव्यापकत्वम्, तत्रापि तत्सत्त्वात्। नापि मङ्गले, [9]तत्रेदानीमङ्गत्वस्य संदिग्धत्वात्। न च तत्र प्रबलप्रमाणान्तरेण तन्निश्चितमिति वाच्यम्। तथा सत्यावश्यकबाधस्यैव दोषत्वापत्तेरित्यस्वरसात् आचारेत्युक्तम्। तत्र शङ्कते—यद्यपीति। विधीयते (ज्ञायते) [ज्ञाप्यते]। [10]तथा च बाध इति भावः। अर्थादिति। लाघवसहकृतप्रमाणान्तरादित्यर्थः।

1. क. °कर्तव्यताङ्ग-
2. क. समाप्तिफल
3. ख. °फलकर्मणि
4. क. ख. °शब्दघटितोक्त-
5. ख. तदघटितशास्त्र-
6. घ. शास्त्रपरत्वं युक्त°
7. क. धर्मव्यापकत्व°
8. ख. तस्य व्यापकत्वं
9. क. तत्रेदानीं मङ्गलत्वस्य
10. क. ख. तथा च न बाध

**ननु यागादिवत् प्रधानदेशकालान्वयस्तदङ्गे मङ्गले स्यादिति चेत्—न। असाधारणेऽपूर्वजनके चाङ्गे तदन्वयात्।**

---

**प्रकाशः**

उभयत्रापि [1]गौरवेण विधित्वं त्याज्यमित्याह—**प्रधानेति**। प्रधानकर्तव्यताबोधकमानापेक्षणीयमानबोध्यकर्तव्यताकत्वमित्यर्थः। **तत्सापेक्षत्वादिति**। विघ्नविध्वंसकारणीभूतमङ्गलकर्तव्यताबोधकशब्दसापेक्षत्वादित्यर्थः।

**यागादिवदिति**। अत्र विशेषविधिं विनेति शेषः। तेनाधिवासनादेर्नाङ्गत्वविरोध इति भावः। क्वचिद्यागादीति पाठः। तत्र यागादि [2]यत् प्रधान-

---

**न्यायशिखामणिः**

ननु मङ्गलं यदि कर्माङ्गं स्यात् तदा [3]अधिकारैक्यकल्पनालाघवं स्यात्। तदेवासिद्धम्, उक्तानुमानेन प्रतिरोधादित्याशङ्कयोक्तम् **अपि चेति**। तत्र विधिपदद्वयपरित्यागे हेतुमाह—**उभयत्रेति**। नन्विदं प्रधानातिव्याप्तं प्रयाजाद्यव्याप्तं चेत्यत आह—**प्रधानेति**। समाप्त्यर्थं वाक्यरचना कर्तव्येति तत्कर्तव्यताबोधकलौकिकप्रमाणस्य प्रतिबन्धके सति कार्यानुत्पत्तेस्तदभावापेक्षायां तत्संपादकं मङ्गलं कर्तव्यमित्याचारलिङ्गकानुमानसापेक्षत्वादिदमङ्गत्वप्रयोजकं मङ्गलेऽप्यस्ति इत्याशयेन तच्चेहाप्यस्तीत्युक्तम्। तत्र यदि द्वितीयमानपदस्थाने शब्दपदं तथापि नाङ्गत्वानुपपत्तिरित्याशयेनोक्तं **प्रतिबन्धकेति**। तत्र तच्छब्दस्यानुमानपरत्वं वारयति—**विघ्नेति**।

[4]प्रधानदेशान्वयित्वं प्रधानकालान्वयित्वं च प्रत्येकमङ्गत्वव्यापकम्। तथा च मङ्गले तदभावेनाङ्गत्वाभावोऽनुमीयत इत्यभिप्रायेण यागादिवदित्युक्तम्। तत्र तत्प्रयोजकं विशिनष्टि—**अत्रेति**। **अधिवासनादेरिति**। आदिपदादन्वाधाननिरामिषभोजनादिपरिग्रहः। महादानदर्शपूर्णमासश्राद्धाङ्गानां तेषां पूर्वेद्युरेव विधानादिति भावः।

---

1. ख. 'गौरवेण' नास्ति।
2. ख. 'यत्' नास्ति।
3. क. अधिकार्यैक्य-
4. ख. प्रधानदेशान्वयीत्वम्

**प्रकाशः**

मित्यर्थः । [1]अत्र मते जन्मान्तरीयमङ्गलस्यापि हेतुत्वात् [2]तस्य च न तदन्वय इति भावः ।

**असाधारण** इति । असाधारणत्वमात्रं योगाङ्गभूतासनप्राणायामादौ अपूर्वजनकत्वमात्रं शिखाबन्धनस्य, मन्त्रविशेषविशिष्ट[3]शिखायामङ्गत्वं चास्ति । (तत्त्वेना)[तस्याश्चास्थिरत्वेना]पूर्वजनकत्वात् प्रधानकालानन्वयाच्च तत्र (व्यभिचारीति) [व्यभिचार इति]विशिष्टेति नियमः ।

---

**न्यायशिखामणिः**

ननु यागादिवदिति पाठो युक्तः । तत्रोभयविधेऽपि मङ्गले प्रधानदेशकालान्वयापादनसंभवात् । वतिरहितस्तु पाठो न युक्तः, लौकिककर्माङ्गमङ्गलस्य वैदिककर्माङ्गत्वाभावेन यागादिरूपप्रधानदेशकालान्वयापादनासंभवादित्याशङ्क्य अत्र पाठे मङ्गलपदं वैदिककर्माङ्गमङ्गलपरमित्याशयेन व्याचष्टे—**क्वचिदिति** ।

[4]केचित्तु यागपदस्याङ्गयागपरत्वकल्पनागौरवात् यागवदिति पाठो न युक्त इत्याहुः । तच्चिन्त्यम् । वतिरहितपाठेऽपि मङ्गलपदस्य [5]तद्विशेषपरत्वकल्पनावश्यकत्वात् ।

पाठद्वयेऽपीष्टापत्तिमाशङ्क्याह—**अत्रेति** । संप्रदायमत इत्यर्थः ।

ननु प्रधान[6]कालान्वयित्वे नाङ्गत्वं प्रयोजकम्, किं तु अपूर्व[7]जनकासाधारणाङ्गत्वमित्युक्तं न युक्तम् । लाघवेनासाधारणाङ्गत्वापूर्व[8]जनकाङ्गत्वयोरन्यतरस्यैव तत्प्रयोजकत्वात् । तावतैव मङ्गले [9]तदन्वयापादनानवकाशात् । न हि मङ्गलमसाधारणापूर्वजनकम्, तस्य विघ्ननिवर्तकस्य क्रियामात्राङ्गत्वादित्याशङ्क्य जयदेवोक्तमाह—**असाधारणत्वमात्रमिति** । न त्वपूर्वजनकत्वम्, तादृशप्राणायामादेः पातकरोगनिवर्तकत्वादिति भावः । **योगाङ्गेति** । न च स्वतन्त्रपापनिवृत्ति-

---

1. ख. तत्र
2. ख. तस्य तदवयव इति
3. क. ०शिखाया वामगत्वं चास्थिरत्वेन पूर्व-
4. क. 'केचित्तु' नास्ति ।
5. ख. घ. तद्विशेषपरत्वस्यावश्यकत्वात्
6. क. ०देशकलान्वयित्वे
   ख. ०कालानन्वयित्वे
7. क. ०जनकाङ्गत्व-
   ख. जनकसाधारणाङ्गत्व-
8. ख. घ. जनकत्वाङ्गत्वयो.
9. क. तदापादना-

प्रकाशः

न च 'विशिख' इति [1]स्मरणात् 'सदा बद्धशिखेन च' इति स्मरणात् शिखाया एवाङ्गत्वप्रतीत्या तस्याश्च परमापूर्वोत्पत्तिकालावस्थायितया नापूर्वाङ्गत्वमिति वाच्यम् । शिखायाः [2]प्रधानान्वयनियमेन 'अत एव' इत्यग्रिमग्रन्थविरोधात् । तथा च यस्य प्रधानकालानन्वयः तस्य तत्राङ्गत्वमिति न शिखायास्तथात्वम्; किं

न्यायशिखामणिः

[3]फलजनकत्वात् कथमङ्गत्वमिति वाच्यम् । [4]योगप्रतिबन्धकपापनिवृत्तिद्वारा तदङ्गत्वे विरोधाभावात् । नन्वासीनेन योगस्य कर्तव्यत्वात् आसनं [5]तत्समयान्वयीत्यत उदाहरणान्तरमाह—**प्राणायामादेरिति** । आदिपदात् मृद्ग्रहादिपरिग्रहः । [6]तस्य प्रतिबन्धकाधर्मध्वंसरूपशुद्धिजनकत्वादिति भावः । **मन्त्रविशेषेति** । 'गायत्र्या च शिखां (बुद्ध्वा)[बद्ध्वा]' इत्यादिस्मरणादिति भावः । [7]प्राणायामशिखाबन्धनयोः साध्याभावं दर्शयति—**प्रधानेति** । **तत्रेति** । आद्यविशेषणं प्राणायामादौ द्वितीयं शिखाबन्धने व्यभिचारीत्यर्थः । **विशिष्ट इति** । न च गङ्गाजलाचमनेन शुद्धिं [8]जनयताप्यानुषङ्गिकमदृष्टं जन्यत एवेति तत्र [9]विशिष्टस्य व्यभिचार इति वाच्यम् । अपूर्वद्वाराङ्गत्वस्य विवक्षितत्वात् ।

'सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
[10]विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् ॥'

इति स्मृतावुत्तरार्धेन विशिखनिन्दायाः पूर्वार्धेन तदावश्यकत्वस्य चावगमेनाङ्गत्वप्रतीतेः सैवाङ्गं न तु तद्बन्धनमित्याशङ्क्य निरस्यति—**न चेति** । यद्यपीदं दूषणं शिखाङ्गत्वेऽपि तुल्यम्; तथाप्यजानानस्य, तस्या उभयरूपत्वान्न तत्रायं दोष [11]इत्याशयवतो वा शङ्केति ध्येयम् । अत एवाशयमुद्घाट्य निरस्यति—**अन्यथेति** । **द्वैरूप्येति** । अत्रानुपपत्तिपदं विरोधपरम् । तथा च क्रत्वर्थपुरुषार्थत्वलक्षणविरुद्धद्वैरूप्यापत्तेरित्यर्थः । विरोधमेवाह—**फलान्तरेति** ।

1. ख. श्रवणात्
2. ख. प्रधानदेशकालस्वानियमेन
3. क. ॰फलकत्वात्
4. क. योगप्रवृत्तिप्रति-
5. ख. तत्समन्वयि॰
6. क. सत्यप्रतिबन्धकं धर्मस्वरूप-
7. क. प्राणायामादिशिखा
8. क. जनयित्वाप्यानु-
   ख. जयताप्यानु
9. ख. विशिष्टव्यभि-
10. क. विशिखोऽनुप-
11. क. इत्याशयवतः शङ्केति

प्रकाशः

तु तस्यैव । न चैवमदृष्टोत्पत्त्यनन्तरं शिखाधारणस्यानावश्यकतापत्तिः, अङ्गीभूतशिखाबन्धनक्रियायास्तावता निर्वाहेऽपि प्रधानीभूतसार्वकालिकशिखा[1]धारणस्यानिर्वाहात् । अन्यथा शिखाया एव द्वैरूप्यानुपपत्तेः । फलान्तरसत्त्वासत्त्वयोः प्रधानाङ्ग[2]भावप्रयोजकयोरेकत्रासंभवात् । न च द्वैरूप्यानुपपत्तिरिष्टैवेति वाच्यम् । अपसिद्धान्तादित्याहुः ।

केचित्तु 'विशिख' इत्यादिना श्रवणेन शिखाया एवाङ्गत्वम् । तस्याश्च न प्रधानकालान्वयः । तदन्वयित्वं हि प्रधानकालसमीपोत्पत्तिकत्वम्, प्रधानकाल-

न्यायशिखामणिः

**न चेति ।** खादिरत्वादेरेकस्याप्युभयरूपत्वदर्शनेन विरोधासिद्धेरिति भावः । 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (पू. मी. सू. ४ - ३ - ५) इत्यत्र खादिरत्वादेर्वचनद्वयवशादुभयरूपत्वमिति सिद्धान्तितम् । तदिह शिखायास्तदभावेऽप्युभयरूपत्वाभ्युपगतौ विरुध्येतेत्याह—**अपसिद्धान्तादिति** । तथा च द्वैरूप्यापत्तिदोषाभावात् शिखाबन्धनमङ्गमिति [3]तद्व्यभिचारवारणं विशेषणान्तरप्रयोजनमिति युक्तमिति भावः ।

तदेतज्जयदेवोक्तमन्योक्तेन दूषयति—**केचित्त्विति । विशिख इति ।** यद्यप्यनेन निन्दैव प्रतीयते, तथापि तदुन्नीतवचनादङ्गत्वमिति भावः । एतच्चोपलक्षणम्, 'सदा' इति वचनात् प्रधानत्वमित्यपि बोध्यम् । **शिखाया एवेति ।** न तु तद्बन्धनस्याङ्गत्वं प्रमाणाभावात् । तथा च वचनद्वयसत्त्वात् शिखाया, उभयरूपत्वमिति भावः ।

यद्यपीदमापाततः । 'बद्धशिखेन' इति स्मरणात् बन्धनमेवाङ्गम् । अन्यथा सशिख इति वचनव्यक्तिप्रसङ्गात् । किं च शिखायाः कर्माङ्गत्वे मन्त्रोपयोगो न स्यात्, द्रव्ये तदन्वयानभ्युपगमात् । अपि च स्मृतेर्नार्थभेदपरत्वम् । वाक्यभेदप्रसङ्गात् । न चेष्टापत्तिः, अनुदितहोमनिन्दावत् विशिख इति निन्दायाः विधेयबन्धनस्तावकत्वेन एकवाक्यत्वसंभवे तद्भेदस्यान्याय्यत्वात् ।

---

1. क. ०धारणानिर्वाहात्
2. ख. ०भावयोरेकत्र संभवात् ।
3. ख. तदभिचार-

अत एव बद्धशिखत्वादौ न प्रधानदेशकालान्वयः। न च दुरिताभावे स्वतःसिद्धे साङ्गमङ्गलानुष्ठानं निष्फलमिति तद्वेदाप्रामाण्यम्। लोकावगतकारणे हि दुरिते सति वेदेन तस्य तद्ध्वंसजनकत्वं बोध्यते, न तु तदुल्लङ्घ्यम्। अत एव तत्त्वज्ञानवतो भोगार्थं निषिद्धानुष्ठानं दोषाभावान्नाधर्मजनकमिति न तद्वेदाप्रामाण्यम्।

---

**प्रकाशः**

मात्रावधित्वं वा। तथा च नोत्तरग्रन्थविरोधः। न चैवमपूर्वजनकत्वमात्रे तन्नियमोऽस्तु, शिखायाः स्थिरत्वेनापूर्वाकल्पनादिति वाच्यम्। [1]अधिवासादौ व्यभिचारात्। न च तस्यासाधारण्याद्दोषतादवस्थ्यम्। विशेषविधिं विनेत्यस्य [2]तदर्थत्वेनाभिप्रेतत्वादित्याहुः।

---

**न्यायशिखामणिः**

[3]तथापि शिखाबन्धनव्यभिचारवारणं विशेषणान्तरप्रयोजनमित्ययुक्तमेव। [4]तस्य वामागमादावनन्वयेनासाधारणतया दोषतादवस्थ्यात्। न च किंचिद्वैदिककर्ममात्रान्वयित्वमसाधारण्यम्, [5]बन्धनस्याप्यौर्ध्वदैहिककर्मानन्वयात्। न चैतदेव दैवत्वविशेषितं तदिति युक्तम्। दैवेऽपि कर्मणि सत्रयागादावनन्वयात्। एवं सत्यत एवेति ग्रन्थविरोधं परिहरति—तस्या इति। स्थिरत्वेनेति। न च मन्त्रविशेषविशिष्टायास्तस्या [6]न स्थायित्वमिति वाच्यम्। केवलशिखाया एवाङ्गत्वस्मरणात् विशिष्टशिखायास्तत्त्वे मानाभावादिति भावः।

नन्वेवमपि शिखाबन्धने विशिष्टप्रयोजकसत्त्वात् व्यभिचारो दुर्वारः। न ह्यन्वाधानादाविव[7] तस्य प्रधानान्यकालकर्तव्यत्वे विशेषविधिरस्तीत्यस्वरसं सूचयति—आहुरिति।

केचित्तु यद्याचमनादिवत् शिखाबन्धनमपि शुद्धिजनकं तदा तत्र [8]विशिष्टाभावान्न व्यभिचार इत्याहुः।

---

1. क. अथवा समन्तादौ
2. ख. तदर्थकत्वेन
3. ख. तथा च विशिखा-
4. क. तस्याः
5. ख. °प्यूर्ध्वदैहिक-
6. ख. घ. अनवस्थायित्वं
7. घ. °दावपि
8. क. विशिष्टाभावसत्त्वात्

प्रमाणान्तरात् स्वतःसिद्धदुरिताभावावगतौ मङ्गलाकरणे नित्यवदनुष्ठानं शिष्टानां भज्येतेति चेन्न। विघ्नज्ञानवतो नित्यवदनुष्ठानादिति संप्रदायः।

नैवम्। मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः। न च तेन विनापि सिध्यतस्तदङ्गम्। न च जन्मान्तरीयं तत्, जन्मान्तरीयग्रन्थादिकमुद्दिश्य शिष्टैस्तदकरणात्।

---

### प्रकाशः

चोदयति—प्रमाणान्तरादिति। तथा [1]चापूर्वद्वारत्वे परं नित्यवदनुष्ठानमुपपद्यत इति भावः। [2]विघ्नज्ञानवत इति। तथा च स्वतस्सिद्धदुरिताभावावगतौ मङ्गलाननुष्ठानमिष्टमेव। प्रत्युतापूर्वद्वारत्वे तत्रापि तदनुष्ठानापत्तिरिति भावः। प्रमत्तेति।

---

### न्यायशिखामणिः

वयं तु असाधारणेत्यादि न प्रयोजकान्तरपरम्, येन तत्र व्यभिचारः स्यात्। किं तु अङ्गत्वं न प्रधानदेशकालान्वयित्वव्याप्यम्, [3]अपूर्वजनकासाधारणाङ्गे तदन्वयित्वसत्त्वेऽप्यन्यत्र पापरोगनिवर्तके साधारणाङ्गे च व्यभिचारादित्यर्थपरम्। अत एव अत एवेति [4]ग्रन्थस्याङ्गत्वस्य तत्प्रयोजकत्वाभावात् शिखा[5]बन्धनादौ न प्रधानकालान्वय इत्यर्थपरत्वात् सोऽपि संगच्छते। अन्यथा पूर्वग्रन्थस्य तत्र प्रयोजकान्तरपरत्वे शिखाबन्धनादौ विशिष्टप्रयोजकसत्त्वेन [6]तदन्वयावश्यकत्वापत्तौ तद्विरोधापत्तेरिति ब्रूमः।

नन्वेवमप्यङ्गत्वं न निराकृतम्, द्वारान्तरमादायापि तस्याङ्गत्वसंभवादित्याशङ्क्य, न ह्यङ्गत्वप्रद्वेषिण इदं चोद्यम्। किं त्वपूर्वद्वारत्ववादिन [7]इत्याशयेनाह—चोदयतीति।

ननु मा भूदुक्तबाधकाद्विघ्नध्वंसस्य द्वारत्वम्। तथाप्यपूर्वस्य कथं द्वारत्वम्, मानाभावादित्याशङ्क्य मङ्गलस्यास्थिरतया द्वारापेक्षायां विघ्नध्वंसबाधे परिशेषात्

---

1. ख. चापूर्वद्वारत्वपरं
2. ख. विघ्नज्ञानवदिति।
3. क. ०जनकाङ्गासाधारणाङ्ग
4. क. ग्रन्थस्याङ्गत्वप्रयोजकाभावात्
5. ख. ०बन्धादौ
6. ख. तदन्वयार्पकत्वापत्तौ
7. क. इत्याह

ननु यथा पुत्रेष्टौ कर्मसादुगुण्ये ऐहिकफलाभावे आमुष्मिकं फलं तथा साङ्गेऽपि मङ्गले यत्र न फलं तत्रामुष्मिकफलमिति चेत्—न। तत्र पुत्रमात्रस्य कामनाश्रवणात्। इह तु प्रारिप्सितसमाप्तिकामनया मङ्गलाचार इति तथैव वेदानुमानात् कारीरीवदासन्नसमयारब्धसमाप्तिः फलम्।

नन्वासन्नसमयस्तत्संबन्धो वा न मङ्गलजन्य इति समाप्तिमात्रं जन्यम्। तच्चैहिकामुष्मिकसाधारणमिति चेत्—न। आसन्नसमयस्य स्ववृत्तिसमाप्त्युपलक्षकत्वात्। अन्यथा कारीर्यपि नासन्नसमयफला स्यात्। तस्मात् व्यभिचारान्न तदङ्गमिति।

---

प्रकाशः

ननु 'सति विघ्ने तद्ध्वंसद्वारा [1]तस्याङ्गत्व'मिति ग्रन्थपर्यालोचनया विघ्नस्थलीयसमाप्तित्वावच्छेदेन मङ्गलजन्यत्वप्रतीतेः स्वतस्सिद्धविघ्नाभावस्थले व्यभिचारोऽप्यदोषः। न चैवं समाप्त्या जन्मान्तरीयमङ्गलानुमानमिति ग्रन्थ-विरोधः। विघ्नध्वंसपूर्वकत्वविशेषणनिश्चयस्यापि क्वचित्संभवादिति चेत्—न।

यत्र मङ्गलरूपे विघ्ननाशहेता[2]वल्पायाससाध्ये सत्यपि प्रमत्तेन बह्वायास-साध्यप्रायश्चित्तेन विघ्नो विनाशितः तदनन्तरं समाप्तिः तदभिप्रायेणास्योक्तत्वात्। न च तत् प्रायश्चित्तं [3]मङ्गलमेवेति वाच्यम्। मङ्गलव्यवहाराभावेन [4]अतथात्वात्।

---

न्यायशिखामणिः

बाधकाभावाच्चापूर्वद्वारत्वसिद्धिरित्याशयेनाह—[5]तथा चेति। तर्ह्युक्तदोषतादव-स्थ्यमित्याशङ्क्य किं विघ्नध्वंसस्य द्वारत्वं निराचिकीर्षितं उतापूर्वस्य [6]तत् सिषाध-यिषितम्। तत्राद्य आह—तथा च सत्त इति। द्वितीये त्वाह—प्रत्युतेति। किं मङ्गलमङ्गं प्रधानं वा। तत्राद्यं नैवमित्यादिना निराकृतम्। तत्र शङ्कते—नन्विति। विघ्नस्थलीयेति। विघ्नध्वंसपूर्वकेत्यर्थः। समाप्त्येति। न चास्य सामान्यशब्दस्य विघ्नध्वंसपूर्वकसमाप्तिपरत्वान्न विरोध इति वाच्यम्। तद्विशेषणस्य निश्चेतुमशक्यत्वादिति भावः। विघ्नेति। आप्तवाक्यादिनेति शेषः।

---

1. क. अस्याङ्गत्व-
2. ख. °अल्पाल्पायास-
3. ख. अमङ्गल-
4. क. तथात्वात्
5. ख. चोदयतीति।
6. क. द्वारत्वं

अन्ये तु मङ्गलं प्रधानम्, अदृष्टद्वारा आरब्धकर्मसमाप्तिः फलम्, तत्कामोऽधिकारी। क्वचित्तु फलाभावः कर्मादिवैकल्यात् कारीरीवत्। न चान्यदापि करणम्। नियतकालीनतादृशाचारेण फलवत्कर्मारिप्समानस्तत्समाप्तिकामो मङ्गलमाचरेदिति श्रुत्या आरम्भसमयकर्तव्यताबोधनात्। यथा 'आग्नावैष्णवमेकादशकपालं चरुं निर्वपेद्दर्शपूर्णमासावारिप्समानः' इति श्रुत्या आरम्भणीयेष्टेः प्रधानायाः दर्शारम्भसमयकर्तव्यत्वम्।

प्रकाशः

अत एव [1]तत्र विघ्ननिश्चयस्य प्रवर्तकत्वम्, मङ्गले तु [2]तज्ज्ञानमात्रस्येत्याहुः।

**फलमिति**। फलत्वेन [3]वाच्या। तत्र चोक्तव्यभिचार एवेति भावः। **तच्चेति**। तथा च जन्मान्तरीयमङ्गलस्यैव हेतुत्वान्न व्यभिचार इति भावः। **तस्मादिति**। पूर्वोक्तप्रमत्तानुष्ठितसमाप्ताविति शेषः।

**अन्ये त्विति**। न च प्रधानीभूतग्रन्थादि[4]परिसमाप्त्या फलवत्त्वाभ्युपगमेऽङ्गत्वमेव स्यादिति वाच्यम्। दण्डचक्रादिवत् परस्परसहकारित्वं [5]न त्वङ्गाङ्गिभाव इत्याशयात्। **प्रधानाया** इति। न चाङ्गत्वमेव तस्या इति वाच्यम्। स्वर्गरूपफलश्रवणेनाङ्गत्वाभावात्।

न्यायशिखामणिः

विघ्नध्वंसफलत्ववादिगङ्गेशमते समाप्तेः फलत्वाभावादाह—**फलत्वेनेति**। त्वयेति शेषः। ननु कृतेऽपि मङ्गले यत्र न समाप्तिस्तत्राङ्गवैकल्यस्य निवर्त्यविघ्नबाहुल्यस्य वा कल्पनान्नान्वयव्यभिचार इत्याशङ्क्य व्यतिरेकव्यभिचारपरतया व्याचष्टे—**पूर्वोक्तेति**।

प्रधानत्वेऽपि किं मङ्गलस्य समाप्त्यर्थमदृष्टापेक्षा विघ्नध्वंसादिव्यापारार्थं वा। तत्राद्यम् 'अन्ये तु' इत्यादिना उत्थापितम्। तत्र शङ्कते—**न चेति**। मूले 'प्रधानीभूतायाः' इति पाठः क्वाचित्कोऽपि साधुः। 'प्रधानायाः' इति पाठस्त्वसाधुरेव। नित्यनपुंसकस्य [6]स्त्रीलिङ्गत्वप्रयोगात्। अत एव कोशकारवचनम्—'क्लीबे प्रधानं प्रमुख' इति। न चेतरलिङ्गत्वस्याप्रतिषिद्धतया प्रधान-

1. क. अत्र
2. क. 'तद्' नास्ति।
3. ख. वाच्यम्।
4. क. °फलसमाप्त्या
5. ख. न त्वङ्गत्वमित्या-
6. क. स्त्रीलिङ्गत्वेनाप्रयोगात्। ख. स्त्रीलिङ्गत्वेन प्रयोगात्।

कामनोपाधिकार्यत्वेऽप्यारम्भसमये नित्यमनुष्ठानम् । आरब्धकर्मसमाप्त्यर्थिनोपायत्वेनावश्यं तदनुष्ठानात् । न च काम्यत्वे परिसमाप्तिकामनां विना फलवत्कर्मारम्भेऽपि तदनुष्ठानं न स्यादिति वाच्यम् । समाप्तं कर्म फलायालमिति फलार्थिनः समाप्तौ कामनावश्यंभावादिति ।

तन्न । कारीरीजन्यातिशयवत् विहितप्रधानजन्यातिशयत्वात् मङ्गलजन्यापूर्वस्यापि फलासंपादकाशेषकारणसंपादकतया आरब्धकर्मसमाप्त्यवश्यंभावापत्तेः फलावश्यंभावनिश्चयं विना वैदिककर्माननुष्ठानात् ।

---

### प्रकाशः

ननु मङ्गलस्य समाप्तिकार्यत्वे कामनाया अनियमात् [1]नियमतः (तत्कारणं) [तत्करणं] न स्यादित्यत आह—**कामनेति**। ननु समाप्तावेव न कामनानियम इत्याशङ्क्य निराकरोति—**न चेति**। विशिष्टहेतुत्वावगमे विशेषणीभूतसमाप्ताविष्टसाधनतावगमनियमात् कामनाया अवश्यंभावनियम इत्यर्थः ।

---

### न्यायशिखामणिः

शब्दस्य स्त्रीलिङ्गत्वमपि युक्तमिति वाच्यम् । क्लीब इत्यस्येतरलिङ्गत्वप्रतिषेधार्थत्वात् । अन्यथा सर्वलिङ्गत्वे क्लीब इति वैयर्थ्यात् । अत एव 'आपः स्त्री शपथः पुमान्' इत्यादौ लिङ्गविशेषनिर्देशादेवान्यलिङ्गप्रतिषेधः । न चैवं कालपरिशिष्टे प्रधाना हरिता इत्यादिप्रयोगो [2]विरुद्ध इति वाच्यम् । तद्वचनस्येतिहासपुराणादिवदपशब्दबहुलत्वेन तद्विरोधेऽप्यनिष्टाभावादिति ।

[3]ननु समाप्त्युपलक्षितं कर्म कीर्त्यादिफलसाधनं तत्साधनं मङ्गलमिति ज्ञानेनैव कीर्त्याद्यर्थिप्रवृत्तिसंभवेन समाप्तिहेतुताज्ञानानवश्यंभावान्न [4]तत्कामनानियम इत्याशङ्क्य चरमवाक्यरचना हि समाप्तिः, तद्विशिष्टस्यैव महावाक्यभूत[5]ग्रन्थस्याभिमतफलहेतुत्वमित्याशयेनाह—**विशिष्टेति** ।

जरन्मतमाह—**अत्रेति** । [6]ननु 'तथा वैश्यः कृषिं कुर्यात्' इत्यादिना कृषिविधानात् दोषतादवस्थ्यमित्याशङ्क्य न हि विधिविषयत्वं विहितत्वम्, भोजन-

---

1. ख. न नियतं तत्कारणं स्यात्
2. क. विरुध्येतेति
3. ख. 'ननु' नास्ति ।
4. क. तत्कामनाविषयः
5. ख. °ग्रन्थस्यापि मत-
6. क. 'ननु' नास्ति ।

### प्रकाशः

विहितेति। अत्र प्रधानपदं साङ्गप्रधानपरम्। तेन यत्रोत्तराङ्गदक्षिणादि न कृतम् प्रधानेन चातिशयो जनितः तत्र न व्यभिचारः। कृषिजन्यपाकजविशेषे व्यभिचारवारणाय विहितपदम्। कृषिस्तु भोजनादिवद्रागप्राप्तत्वान्न विहितेत्याहुः।

अङ्गजन्यातिशये व्यभिचारवारणाय प्रधानपदम्। [1]फलेतरनाशकानाश्यत्वे सतीत्यपि विशेषणं द्रष्टव्यम्। तेन कर्मनाशापारगमनादिनाशितयागाद्यपूर्वे न व्यभिचारः। अत एव [2]कृत्याजनितापूर्वे प्रतिकृत्यानाशिते न व्यभिचारः। यदि चापूर्वयोः सत्प्रतिपक्षवत् प्रतिबन्धकत्वम्, तदा अप्रतिबन्धकत्वेनापि विशेषणीयम्।

---

### न्यायशिखामणिः

स्यापि 'प्राङ्मुख' इत्यादि[3]विधिविषयत्वात्। किं तु तद्बोधितकर्तव्यताकत्वम्। तद्वचनं [4]चेतरोपायवर्जनार्थमित्याशयेनाह—**कृषिस्त्विति**।

आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु प्रधानपदं साङ्गप्रधानपरमित्ययुक्तम्, प्रधानपदस्य व्यर्थत्वात्। न चाङ्गजन्यापूर्वे दोषवारणाय। तत्र न तावत् साङ्गप्रधानानुष्ठानस्थले तज्जन्यापूर्वे व्यभिचारः। तत्र प्रधानेन फलोत्पत्तावङ्गेन तदपेक्षितोपकारलक्षणफलजननावश्यंभावात्। न च फलपदं स्वतन्त्रफलपरम्, गौरवात्। हेतुविशेषणप्रयोजनाय साध्ये [5]विशेषणोपादानस्यासांप्रदायिकत्वा-[6]दधिकत्वाच्च। प्रतिबन्धकादिवशात् [7]फलानुत्पत्तौ वा आवश्यकवक्ष्यमाणविशेषणेनैव तन्निरासात्। [8]अत एव प्रधानानुष्ठानस्थलेऽपि न दोषः। प्रधानप्रतिबन्धकेन तदुपकारस्यापि [9]प्रतिबद्धत्वेन अप्रतिबन्धकत्वविशेषणेन तद्वारणात्। तत्राङ्गापूर्वस्य निष्फलतया फलेतरनाश्यत्वाच्च। अस्तु वा स्वतन्त्रफलसाधनत्वं साध्यम्। तथापि यत्र कृषिजन्यातिशयेन फलानुत्पत्तिस्तत्र वृष्ट्यभावस्य [10]नाशकस्यान्यस्य वा प्रतिबन्धकस्यावश्यं कल्पनेन वक्ष्यमाणविशेषणेनैव तद्वारणे विहितपदवैयर्थ्यादिति।

---

1. ख. फलेतरनाशत्वे
2. ख. स्तुत्याजनिता-
3. ख. 'विधि' नास्ति।
4. क. चेतरोपादान-
5. क. विशेषणान्तरोपा-
6. ख. घ. 'अधिकत्वाच्च' नास्ति।
7. क. फलानुपपत्तावावश्यक-
8. ख. 'अत एव......तद्वारणात्' इति ग्रन्थः नास्ति।
9. घ. प्रतिबन्धकत्वेन
10. क. नाशकस्य सत्त्वात्। 'अन्यस्य......वैयर्थ्यादिति' इति भागस्त्रुटितः।

प्रकाशः

केचित्तु अतिशयत्वमदृष्टत्वम् । तेन कृष्यादिजन्यातिशये न व्यभिचारः । न चैवं विहितपदवैयर्थ्यम् । फलपदस्येष्टरूपफलपरतया दुरितापूर्वे व्यभिचारवारकत्वादित्याहुः ।

न्यायशिखामणिः

कर्मनाशेति । आदिपदात्तत्त्वज्ञानकीर्तनादि[1]परिग्रहः । कृत्येति । आभिचारिकं कर्म प्रायेण कृत्यादेवताकतया तत्पदाभिधेयम् । तज्जनिपमपूर्वं शत्रोः ज्वरादिव्याधिजनकम् । तद्यत्र शान्तिकर्मजनितापूर्वेण स्वफलमदत्त्वैव नश्यति तत्रेत्यर्थः ।

ननु कर्मनाशापारगमनानन्तरमपूर्वाभावादेव न व्यभिचारः । [2]तत्पूर्वमेतच्छरीरेण [3]प्रतिबद्धतया वक्ष्यमाणविशेषणेन तन्निरासः । अत एव कृत्यापूर्वेऽपि न व्यभिचारः । प्रतिकृत्यापूर्वोत्पत्तेः पूर्वं तस्यावश्यं फलजनकत्वात् । तदुत्पत्तौ च तस्य प्राबल्ये तेन विनाशितस्यासत्त्वादेव न दोषः । समबलत्वे च तत्प्रतिरुद्धफले कृत्यापूर्वे व्यभिचारतादवस्थ्यमित्यस्वरसादाह—यदि चेति । सत्प्रतिपक्षवदिति ।

एतच्चोपलक्षणम् । एतच्छरीरपातानन्तरमेकस्यैवादृष्ट[4]स्योद्बोधो न सर्वस्येति [5]सर्वसिद्धम् । एकदा कायव्यूहं विना सर्वभोगानुपपत्तेः । तथा च तत्रोद्बुद्धकर्मण इतरकर्मप्रतिबन्धकत्वमित्यपि बोध्यम् । न च प्रतिकृत्यापूर्वात् कृत्यापूर्वस्य नाश एव युक्तः । अन्यथा तस्य कीर्तनादिना नाशे पुनः कृत्या बाधेतेति वाच्यम् । इष्टापत्तेः । अत एव भोगेन प्रतिबन्धकोद्बुद्धकर्मोपरमे कर्मान्तरात्फलोदयः । अप्रतिबन्धकत्वेनापीति । अत्रापिशब्दः [6]एवकारार्थः । विशेषणान्तरस्योक्तरीत्या अनावश्यकत्वेन समुच्चयायोगादिति बोध्यम् ।

जयदेवमतमाह—केचित्त्विति । कृष्यादीति । आदिपदात् घृतपानादिपरिग्रहः । ननु विहितपदेनैव कृषिवारणेऽदृष्टपरातिशयपदवैयर्थ्यम् । [7]न च विहितघृतपानादिजन्यातिशये व्यभिचारवारणाय तदिति युक्तम् । घृतपाने सति

1. ख. घ. ०संग्रहः
2. क. ततः पूर्वम्
ख. तत्पूर्वमेव तच्छरीरेण
3. ख. घ. प्रतिबद्धया
4. क. स्योच्छेदो
5. क. 'सर्वसिद्धम्' इति नास्ति ।
6. ख. एवकारणार्थः
7. क. न चाविहित-

**प्रकाशः**

ननु मङ्गलजन्यापूर्वासिद्धौ[1] पक्षासिद्ध्या कथमापादनमिति चेत्—न। मङ्गलं यदि साङ्गप्रधानत्वे सति शब्दबोधितनाशकानाश्यापूर्वद्वारकं स्यात् तदा अवश्यं फलजनकं स्यादित्यापादनार्थत्वात्। अप्रयोजकत्वं निरस्यति—**फलेति**।

---

**न्यायशिखामणिः**

धातुवैषम्य[2]निवृत्तौ तत्साम्यम्, ततः पुष्टिः, अन्यथा नेत्यन्वयव्यतिरेकाभ्यां तस्य पुष्टिहेतुत्वावगमेन कृषितुल्यत्वात्। किं च घृतपानादिना फलोत्पत्तौ साध्यसत्त्वात् अनुत्पत्तावुक्तविशेषणाभावान्न व्यभिचारः। तद्विशेषणस्य च कृत्याद्यपूर्वे दोषवारकस्य तवाप्यावश्यकत्वात्। तथा विहितपदमपि व्यर्थम्। दुरितापूर्वेऽपि साध्यसत्त्वात्। न च फलपदस्येष्टपरत्वात्तत्र साध्याभावः। प्रयोजनाभावेन तद्विवक्षानुपपत्तेः। न हि हेतौ व्यर्थविशेषणत्वोद्धाराय [3]साध्ये विवक्षा युक्तेत्यस्वरसं सूचयति—**आहुरिति**।

[4]यद्यप्यस्थिरमङ्गले विघ्नध्वंसापूर्वान्यतरस्य [5]द्वारत्वावश्यकत्वान्मङ्गलजन्यातिशयत्वेन युक्तः पक्षनिर्देशः, तथापि शिखोपवीतधारणाद्यपूर्वे व्यभिचारः। तस्याङ्गप्रधानोभयरूपत्वेन [6]तज्जन्यक्रतूपकारापूर्वस्य प्रधानजन्यत्वात्। प्रधानत्वावच्छिन्नजन्यत्वस्य तद्वृत्तिजातिविशेषावच्छिन्नजन्यत्वस्य विवक्षायां गौरवप्रसङ्गात् [7]वक्ष्यमाणरीत्या लघुसाध्यसंभवे तस्यान्याय्यत्वादित्याशयेनाह—**मङ्गलमिति। शब्दबोधितेति।**

नन्वेतद्व्यर्थम्, अपूर्वद्वारकत्वविशेषणेनैव कृष्यादिवारणात्। किं च मङ्गलस्यावश्यकद्वाररूपफलजनकत्वेनेष्टापत्तिः। न चापूर्वद्वारा फलजनकत्वमापाद्यम्। अनेकक्रियात्मकमङ्गलस्य दर्शादिवदवान्तरापूर्वद्वारा परमापूर्वजनकत्वेन दोषतादवस्थ्यात्। प्रयाजाद्यङ्गस्यापि प्रधानोपकारलक्षणफलजनकत्वेन तद्द्वारकविशेषणवैयर्थ्याच्चेति चेत्—न।

---

1. क. °अपूर्वसिद्धौ
2. ख. °निवृत्त्या
3. ख. घ. साध्यविवक्षा
4. ख. यद्यस्य स्थिर°
5. ख. द्वारस्यानावश्यक- घ. द्वारत्वेनावश्यक
6. ख. घ. तज्जन्यतदुपकारा°
7. ख. घ. 'वक्ष्यमाणरीत्या ........ तस्यान्याय्यत्वात्' इति ग्रन्थः नास्ति।

**न चैवम्, भूयसि साङ्गेऽपि मङ्गले क्वचिदारब्धसमाप्त्यभावात्। न च तत्रामुष्मिकं फलम्, ऐहिकमात्रफलत्वात्। वैदिककर्मणः फलावश्यं-भावेनागन्तुकदुरितेनाप्यप्रतिबन्धात्।**

---

प्रकाशः

इष्टापत्तिमाशङ्क्याह — **न चैवमिति। ऐहिकेति।** उक्तयुक्तेरिति शेषः। **आगन्तुकेति।** यद्यपि कृत्याजनितापूर्ववत् मङ्गलजन्यापूर्वस्यापि [1]प्रतिबन्धक-दुरितेन नाशः प्रतिबन्धो वा संभवति, तद्वदेव फलानवश्यंभावोऽपि; [2]तथापि यथा तत्र प्रमाणं तथात्र नास्तीति भावः।

---

न्यायशिखामणिः

न ह्यपूर्वद्वारकत्वमापादके विवक्षितम्, [3]किं तु आपाद्ये। तथा चापूर्वद्वारा स्वतन्त्रफलसाधनत्वाभावेन कृष्यादौ व्यभिचार इति तद्वारणाय **शब्दबोधितेति। प्रयाजादिवारणाय प्रधानपदम्।** अङ्गानुष्ठानरहितप्रधाने दोषवारणाय **साङ्गेति।** न च प्रतिबन्धकासमवहितपरेण [4]कृत्यावारकतया आवश्यकेन नाशकानाश्यपदेनैव तत्र दोषवारणमिति वाच्यम्। अङ्गापूर्वरूपकारणाभावेन फलानुत्पत्त्युपपत्तेः प्रति-बन्धकाकल्पनात्। यद्वा स्वतन्त्रफलसाधनत्वमेव साध्यम्। तेनापूर्वमादाय नार्थान्तरम्। तस्य व्यापारतया फलान्तरसापेक्षत्वेन स्वातन्त्र्याभावात्। हेतुश्च साङ्गप्रधानत्वे सति शब्दबोधित[5]प्रतिबन्धकासमवहितापूर्वद्वारकत्वम्। अत्र पूर्वोक्तकृत्याकर्मणि दोषवारणाय प्रतिबन्धकासमवहितत्वमपूर्वविशेषणम्। मङ्ग-लेऽप्यनुमानेन प्रतिबन्धकस्य कल्पनात् स्वरूपासिद्धिरिति तद्वारणाय शब्दबोधि-तत्वं प्रतिबन्धकविशेषणम्। [6]फलप्रतिबन्धस्थलेऽपि तत्समवधानमपूर्वस्यैव न तु चिरध्वस्तकर्मण इति दोषतादवस्थ्यमिति तद्वारणाय अपूर्वद्वारकत्वमित्युक्तम्।

**उक्तेति।** 'इह तु प्रारिप्सितसमाप्तिकामनये' त्यत्रेत्यर्थः।

---

1. ख. प्रतिबन्धकनाशः
2. ख. 'तथापि' नास्ति।
3. ख. किं च
4. क. कृत्यादि-
5. ख. 'प्रतिबन्धकासम ... दोषवारणाय' इति ग्रन्थः त्रुटितः।
6. क. फलप्रतिबन्धक-

**किं च यथा कारीर्यादिकमग्निमपुरुषव्यापारं विनैव फलहेतुः, तथा मङ्गलमपि तेन विनैव हेतुः स्यात्। न चैवम्। लोकावगतकारणत्वात्तद्पेक्षेति चेत्, तर्हि स एव हेतुरस्तु, किमनेन। आरब्धकर्मजनकादृष्टकारणसंपत्तौ पुत्रेष्टिवत्तत्समाप्तिसाधनत्वं श्रुत्या बोध्यत इति चेत्—न। तत्र दृष्टकारणसंपत्तौ पुत्रानुत्पादाददृष्टद्वारा पुत्रेष्टेस्तज्जनकत्वमस्तु। न च कर्मनिर्वाहे दृष्टसकलहेतुसंपत्तौ विलम्बः, येन मङ्गलजन्यादृष्टापेक्षा स्यात्।**

---

प्रकाशः

यद्वा एतदस्वरसादाह—किं चेति। न च प्रश्नरपाठ्यस्तवादावदृष्टं विना का गतिरिति वाच्यम्। [1]तत्तच्छब्दाव्यवहितपाठक्रमेण चरमवर्णोच्चारणस्यैव तत्र तथात्वादित्याहुः।

---

न्यायशिखामणिः

ननु तद्वदत्र वचनाभावेऽपि समाप्त्यनुत्पादः किंचित्प्रयोज्यः कार्यानुत्पादत्वादित्यनुमानात् [2]भवान्तरकृतविघ्नबाहुल्येनागन्तुककृत्यापूर्वेण वा प्रतिबन्धः कल्प्यत इत्यस्वरसादाह—यद्वेति। एतदिति। एतस्मिन् हेतौ स्वरूपासिद्धिदोषादित्यर्थः। यद्यप्यत्रानुमान[3]कल्पितप्रतिबन्धकसत्त्वेऽपि शब्दबोधितत्वघटितहेतोर्नासिद्धिः, तथापि कारीरिवत् फलाभावप्रयोजकत्वेनात्राप्यङ्गवैकल्यमेव कल्प्यम्। तदिदमन्यैरेवोक्तम्—'क्वचित्फलाभावः कर्मादिवैगुण्यात्कारीरिवत्' इति। तथा च [4]साङ्गत्वविशेषणासिद्ध्या विशिष्टहेत्वसिद्धिरिति भावः।

'न च कर्मनिर्वाहे' इत्यत्र न मङ्गलजन्यादृष्टापेक्षेत्युक्तम्। तत्र शङ्कते—**न चेति।** तत्राद्यस्तवस्यान्त्यस्तवसमये नष्टत्वेन साक्षाद्विघ्नध्वंसाहेतुत्वात् तदर्थमदृष्टापेक्षा दुर्वारेति भावः। किं [5]यत्रान्त्यमपि प्रधानं तत्रेयमाशङ्का, उत यत्र तदङ्गम्। तत्राद्यं निरस्यति—तत्तच्छब्देति। तथात्वादिति। विघ्ननिवर्तकत्वादित्यर्थः। द्वितीयं शङ्कते—नन्विति। चरमेति। तथा चाद्यमध्यमव्यापारयोस्तद्धेतुत्वस्यैवाभावादङ्गप्रधानभावोऽसिद्ध इति भावः।

---

1. ख, तत्र तच्छब्दा-
2. ख. भावान्तर-
   घ. भवान्तरविकृत-
3. ख. ०कल्पितकल्पित-
4. ख. घ. अङ्गत्व-
5. क. यत्रान्यदपि

अपि च मङ्गलं विनापि प्रमत्तनास्तिकानुष्ठितसमाप्तेः न तत्तत्र कारणम्। जन्मान्तरीयपुण्यसंपत्तिस्तत्र हेतुरिति चेत्—न। तथापि व्यभिचारात्। क्वचित् पुण्यसंपत्तिः क्वचिन्मङ्गलं हेतुरिति व्रीहियववद्विकल्प एवेति चेत्—

---

### प्रकाशः

ननु यत्रोत्तराङ्गेन प्रधानं [1]मङ्गलं साङ्गं तत्र प्रधानस्यादृष्टव्यापारं विना चिरनष्टस्य कथं हेतुत्वमिति चेत्—न। तत्तद्व्यापारोत्तरचरमव्यापारस्यैव विघ्नध्वंसहेतुत्वमित्येके। अनन्यगत्यापूर्वकल्पनमित्यन्ये।

ननु यथा [2]भोगजनकादृष्टं भोजनादिपुरुषव्यापारमुत्पाद्य भोगमुत्पादयति तथा मङ्गलजन्यापूर्वमप्यग्रिमपुरुषव्यापारमुत्पाद्य [3]समाप्तिमुत्पादयेदित्यनुशयेनाह—अपि चेति। तथा च मङ्गलस्य प्रधानत्वेऽप्यपूर्वद्वारत्वेऽपि पूर्वोक्तव्यभिचारो

---

### न्यायशिखामणिः

ननु प्रहरपाठस्थलेऽनेकक्रियास्थले चान्त्यव्यापारस्य तथात्वमिति न युक्तम्। इतरव्यापारवैयर्थ्यप्रसङ्गात्। न चेष्टापत्तिः, व्यापारसमुदाये मङ्गलपदप्रयोगेण आचारानुमितश्रुत्या तस्यैव फलसाधनतया [4]बोधितत्वेन विघ्ननिवर्तकत्वौचित्यात्। न चेतरव्यापाराणां स्वध्वंसद्वारा तन्निवर्तकत्वम्, तथा सति प्रतिबन्धकत्वापत्तेरित्यस्वरसादाह—अनन्यगत्येति। अपूर्वेति। विघ्नध्वंसार्थमिति शेषः। न चैतत् [5]समाप्त्यर्थमपि कल्प्यताम्, आवश्यकत्वादिति वाच्यम्। यत्र दृष्टं न [6]लभ्येत तत्रादृष्टकल्पनम्। विघ्नध्वंसजनने च मङ्गलस्य दृष्टद्वारासंभवात् तदपेक्षा। समाप्तौ तु विघ्नध्वंसद्वारसंभवात् न तदपेक्षा। तदेतदभिप्रेत्योक्तम् अनन्यगत्येति।

मेघसंचारवदग्रिमपुरुषव्यापारमप्यदृष्टमेव घटयेदित्यस्वरसात् अपि चेत्युक्तमिति **जयदेवेन** व्याख्यातम्। तदयुक्तम्। तस्य पुरुषव्यापारत्वाभावादित्यभि-

---

1. क. मङ्गलस्याङ्गं प्रधानस्य
2. ख. भोजकादृष्ट-
3. ख. समाप्तित्वेऽप्यदृष्टद्वारमुत्पा-
4. ख. बोधितेन
5. क. फलार्थमपि
6. क. कल्प्येत

तर्हि तत्संभावनया नियतं मङ्गलानुष्ठानं न स्यात्, यवप्रयोगे व्रीहेरिव । विकल्पे चोभयस्याशास्त्रार्थत्वात् ।

---

**प्रकाशः**

नापहृत इति तत एवास्य न हेतुत्वमित्यर्थः । **विकल्प एवेति** । [1]यद्यप्येवमपि न व्यभिचारोद्धारः, तथापि तद्व्याप्येतरसकलसमवधाने यदुदये कार्योदयस्तदेव कारणं लाघवात्, न तु यदभावे कार्याभाव इत्यपि विशेषणं गौरवात् । तदत्राप्यक्षतमेवेति न व्यभिचारोऽत्र परिपन्थी इत्याशय इत्याहुः ।

वस्तुतस्तृणारणिमणिन्यायेन वैजात्यकल्पने न [2]व्यभिचारः । न चैवं जात्यपेक्षया हरिस्मरणाश्वमेधयोरपि स्वर्गजनकत्वे किं न विकल्प इति वाच्यम् । यत्रान्यतरसत्त्व[3]मपरकार्योत्पत्तिप्रतिबन्धकं तत्र विकल्पात् । अत एव तदनुसारेण[4] दूषयति—**तर्हीति** । ननु वैकल्पिकं कारणद्वयं कथमेकत्र न युज्यत [5]इत्यत आह

---

**न्यायशिखामणिः**

प्रेत्य स्वयं प्रकारान्तरेण [6]तमाह—**नन्विति** । नन्वेवमात्मादेर्नित्यस्याकारणत्वप्रसङ्गः । यदुदय इत्यनेन यत्सत्त्व इति विवक्षायामाकाशादेः सर्वकार्यहेतुत्वापत्ति[7]रित्यरुचेराह—**वस्तुत इति** । **अन्यतरसत्त्वमिति** । एतच्च [8]न लक्षणपरम् । अस्य मुख्यानुकल्पप्रतिनिधिसाधारण्यात् । किं तु समत्वे सत्येकजातीयकार्योद्देशेन विहितत्वम् । यथा व्रीहियवयोः, तयोरेकाधिकारिकत्वेन एकप्रमाणकत्वेन च साम्यात् । मुख्यानुकल्पयोस्तु शक्ताशक्ताधिकारितया समशिष्टत्वाभावान्न विकल्पः ।

ननु व्रीहियवयोरेकजातीयकार्यजनकत्वे व्रीहिप्रयोगे यवस्याप्यनुष्ठानं स्यादिति शङ्कते—**नन्विति** । **परस्परानपेक्षरूपेणेति** । व्रीहिजन्ययागे यवस्य

---

1. क. यद्यपि न
2. ख. दोषः
3. ख. ॰मन्यकार्य-
4. ख. ॰सारेणैव
5. ख. इत्यत्राह
6. क. तदाह
7. क. ॰रित्यस्वरसादाह
8. ख. 'न' नास्ति

**ननु विधिवाक्यं न फलनियतपूर्वसत्त्वं बोधयति, किं तु मङ्गलात् फलावश्यंभावमिति चेत्—न। इष्टसाधनत्वस्य विध्यर्थत्वात्। अथान्वय-व्यतिरेकाभ्यां तद्ग्रहे व्यभिचारो दोषाय, न त्वागमेन तद्ग्रहे। तदुक्तम्—'आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाये'ति। अत एव यागादेः स्वर्गसाधनतेति चेत्—न।**

---

**प्रकाशः**

—**विकल्पे** इति। तत्कारणद्वयस्य (परस्पर[1]प्रतिक्षेपेणैव) [परस्परानपेक्षरूपेणैव] प्राप्ततया परस्पराभाववत एव जनकत्वादित्यर्थः। तृणादौ[तु] न तथा जनकत्व-मित्यत्र [2]स्वभाव एव शरणम्।

**नन्विति**। यद्यपि भूयसि [3]साङ्गेऽपीत्यादेरुक्तत्वादिदमप्यसिद्धम्। तथापि व्यतिरेकव्यभिचारमात्रोद्धाराय शङ्केयमिति ध्येयम्। [4]**इष्टेति**। [5]साधनत्वं च नियतप्राक्सत्त्वघटितमिति तद्ग्रहे [6]व्यतिरेकव्यभिचारग्रहो विरोध्येवेति भावः।

---

**न्यायशिखामणिः**

स्वरूपयोग्यत्वेऽपि निरपेक्षसाधनत्वबोधकतृतीयाश्रुतिविरोधात् मिश्रानुष्ठानमयुक्त-मिति [7]भावः।

ननु व्रीहियवयोर्व्रीहित्वेन यवत्वेन कारणत्वे व्रीहिप्रयोगे तदभावाद्व्यभिचारः स्यादिति चेत्—न। अनन्यगत्या व्रीहियवान्यतरत्वस्यैवात्र कारणतावच्छेदकत्वात्।

नन्वेवं तृणादीनां तृणाद्यन्यतमत्वेनैव वह्निकारणत्वापत्तिरित्याशङ्क्य प्रत्यक्ष-सिद्धजातिविशेषावच्छिन्नवह्नीन् प्रति तेषां तत्तद्रूपेण कारणत्वसंभवान्न तथा जनकत्वमित्याशयेनाह—**तृणादौ त्विति**।

ननु **साङ्ग** इत्यत्रान्वयव्यभिचारः **अपि** चेत्यत्र व्यतिरेकव्यभिचारश्चोक्त इति तदुभयं निराकार्यम्। तच्चात्र न निरस्तमित्याशङ्कते—**यद्यपीति**। न हि

---

1. ख. ॰प्रत्याक्षेपेण प्राप्त-
2. ख. स्वाभाव
3. ख. साङ्गेऽपीत्युक्त-
4. ख. 'इष्टेति' इति नास्ति।
5. क. कारणत्वं
6. ख. 'व्यतिरेक' इति नास्ति।
7. क. 'भावः' नास्ति।

नियतपूर्वसत्त्वस्य ग्राह्यस्याभावादागमेनापि बोधयितुमशक्यत्वात् । यागजनितस्वर्गे कारीरीजनितवृष्टौ च जातिविशेष एवास्ति ।

अपरे तु मङ्गलस्यारब्धनिर्वाहकत्वं विघ्नसंसर्गाभावद्वारा, तथैव प्रतिबन्धकाभावस्य हेतुत्वात् । स चाभावः सतो विघ्नस्य ध्वंसोऽनागतस्यानुत्पादश्च कर्मनिर्वाहसमयस्थायी ।

---

प्रकाशः

अथेति । व्यभिचारादर्शनं [1]प्रत्यक्षकारणताग्रहहेतुसहचारज्ञानसहकारि, न तु शब्दे, तेन तज्ज्ञानेऽपि स्वर्गादिसाधनताग्रहादिति भावः ।

अशक्यत्वादिति । [2]अयोग्यत्वनिश्चयस्य [3]शाब्दग्रहपरिपन्थित्वादित्यर्थः । नन्वेवं यागादिबोधकश्रुतौ का गतिरित्यत आह—यागेति । स्वर्गादिविशेष इव

---

न्यायशिखामणिः

यत्र फलं तत्पूर्वसमयेऽवश्यं तत्साधनमिति विधिर्बोधयति, किं तु साधने सत्यवश्यं फलमिति । तथा च व्यतिरेकव्यभिचारो न दोषः, तत्सत्त्वेऽपि [4]विध्यार्थाविरोधादित्यर्थपरा शङ्क्याह—तथापीति । वस्तुतो मङ्गलात् फलावश्यंभाव इत्येतत् फलपूर्वसत्त्वं विधिर्बोधयतीत्येतत्परम् । तथा चास्य विध्यर्थस्य नियतान्वयव्यतिरेकानपेक्षत्वादुभयव्यभिचारेऽप्यविरोध इत्युभयव्यभिचारनिरासपरैव शङ्क्याभाति । स्वर्गादीति । आदिपदाद्वृष्ट्यादिपरिग्रहः । कारीरिदर्शादेर्वृष्टित्वस्वर्गत्वावच्छिन्नहेतुत्वमित्यभिमानः ।

ननु ग्राह्याभावस्यायोग्यतारूपत्वेऽपि स्वरूपसतो न प्रतिबन्धकत्वमित्यत आह—अयोग्यतेति । तथा चाभावपदं तन्निश्चयपरमिति भावः । एवमिति । अयोग्यतानिश्चयस्य प्रतिबन्धकत्व इत्यर्थः ।

विघ्नध्वंसादिव्यापारार्थमदृष्टापेक्षेति मतम् 'अपरे तु' इत्यादिनोत्थापितमयुक्तम् । विघ्नस्य प्रतिबन्धकतया [5]मण्यभाववत्तदभावस्य तत्संसर्गाभावत्वेन समाप्ति-

---

1. ख. अध्यक्ष-
2. ख. अयोग्यता-
3. ख. शाब्दपरि-
4. क. विध्यर्थविरोधाभाव-
5. क. तदभावस्य मण्यभाववत्संसर्गा-

विघ्नकारणविनाशद्वारा प्रागभावस्य साध्यत्वम्। यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वम्, तदेव तस्य तज्जन्यत्वं न त्वसतः सत्त्वं गौरवात्। अस्ति च विघ्नकारणनाशे सति विघ्नप्रागभावस्य तथात्वम्। तावति समये दुरितानुत्पादश्च न साक्षान्मङ्गलजन्य इत्यदृष्टद्वारा तथा।

---

**प्रकाशः**

समाप्तिविशेषे यथा न हेतुत्वं तथा वक्ष्यते। विघ्नसंसर्गाभावेति। येन हि रूपेण विघ्नसंसर्गाभावस्य हेतुता तेन मङ्गलकार्यतापि। न च कार्याकार्यवृत्तितया कथं तस्य कार्यतावच्छेदकत्वमिति वाच्यम्। यद्धर्माश्रयस्यासत इति मतेन [1]प्रमात्ववददोषात्।

यस्मिन्निति। असत्त्वाघटितमपि पारिभाषिकमिदं [2]प्रवृत्त्यौपयिकमिति भावः। न चैवं रासभादावतिप्रसक्तमिति वाच्यम्। यद्व्यतिरेके असत्त्वमेवेति नियमस्य विवक्षितत्वात्। न च घटजातीयस्य रासभादिव्यतिरेके असत्त्वमेवेति। दण्डरूपादावतिव्याप्तिवारणायानन्यथासिद्धत्वमिति बोध्यम्।

---

**न्यायशिखामणिः**

हेतुत्वेऽपि तेन रूपेण तस्य न तत्कार्यत्वं मानाभावादित्याशङ्क्य सामान्यतया लघुत्वात्तदेव कार्यतावच्छेदकं न तु विघ्नध्वंसत्वादीत्याशयेनाह—येनेति। न चेति। यद्यपि कार्यत्वं प्रागभावसाधारणमित्यनुपदमेव स्फुटमिति विघ्नसंसर्गाभावत्वमनतिप्रसक्तमेव। तथाप्यत्यन्ताभावस्याकार्यत्वात् तदभिप्रायेणाशङ्केति द्रष्टव्यम्। 'यद्धर्माश्रयस्यासतः सत्त्वं यद्धेत्वधीनं तत्कार्यतावच्छेदकम्' इत्युत्पत्तौ वक्ष्यते। [3]तदिहापि संभवतीत्याह—यद्धर्मेति। नन्वेवं शब्दाद्यावाकाशादिजन्यत्वव्यवहारो न स्यादित्यत आह—[4]असत्त्वेति। प्रवृत्तीति। नित्यं तु न प्रवृत्तिविषय इति भावः। अतिप्रसक्तमिति। तथा च तत्रापि घटार्थिप्रवृत्तिप्रसङ्ग इति भावः।

---

1. ख. प्रमात्ववद्दोषत्वात्
2. ख. प्रवृत्त्यौपाधिक-
3. क. तथेहापि
4. क. असेति। ख. सत्त्वेति।

**प्रकाशः**

नन्वेवं विघ्नप्रागभावस्य मङ्गलसाध्यता न स्यात्, तद्व्यतिरेकेऽपि[1] तस्यानादित्वेन पूर्वक्षणे सत्त्वादिति चेत्—

अत्र वदन्ति। साध्यत्वेन यदभिमतं तत्प्रतियोग्यनुयोगिभावरूपसंबन्धाश्रयो यः प्रागभावः तन्नाशकस्वस्वव्याप्येतर[2]समवधाने सति यस्मिन् सतीत्यादि विवक्षणीयम्। तादृशश्च घटादिस्थले साध्यत्वाभिमतघटादिप्रतियोगिकः प्रागभावः। प्रकृते तु साध्यत्वाभिमत एव प्रागभावः। उक्त[3]रूपेणानुगमः। एवं च न रासभादावतिप्रसङ्गः।

---

**न्यायशिखामणिः**

**साध्यत्वेनेति।** अत्र साध्यत्वाभिमतप्रतियोगिकत्वतदनुयोगिकत्वयोरन्यतरोपादाने विघ्नप्रागभावप्रतियोगिक[4]घटानुयोगिकप्रागभावयोरप्रसिद्धिरिति तद्वारणाय विशिष्टोपादानम्। **प्रागभाव इति।** एतच्च घटादावव्याप्तिवारणाय। अन्यथा तादृशसंबन्धाश्रयनाशकेत्युक्तौ तादृशघटनाशकसकलसमवधाने दण्डसत्त्वेऽपि घटासत्त्वादव्याप्तेः। स्वव्याप्येतरसकलसमवधाने स्वसमवधानस्यावश्यकत्वात् स्वव्यतिरेका[5]सिद्धेराह—**स्वेति।** स्वेतरसकलसमवधाने स्वव्याप्यसमवधानस्यावश्यकत्वेन स्वव्यतिरेककार्यव्यतिरेकयोरसिद्धेराह—स्वव्याप्येति। [6]**इत्यादीति।** तादृशसकलसमवधाने यत्सत्त्वेऽग्रिमक्षणे यस्य सत्त्वम् यद्व्यतिरेके चासत्त्वं तत् साध्यमित्यर्थः।

ननु तादृशप्रागभावनाशकत्वस्यानुपादाने स्वस्वव्याप्येतरसकल[7]समवधानासंभवात् तद्घटितलक्षणस्यासंभवः स्यात्। उपादाने घटादावव्याप्तिः। तस्यापि स्वध्वंसप्रागभावतया तादृशसंबन्धाश्रयप्रागभावरूपघटनाशकतादृशसकलसमवधाने दण्डसत्त्वेऽपि घटासत्त्वात्। न च मुख्याभावरूपप्रागभावो विवक्षितः। तथा सति घटध्वंसप्रागभावस्य घटस्य मुख्याभावत्वाभावेन तद्घटितलक्षणस्य [8]ध्वंसाव्या-

---

1. ख. 'अपि' नास्ति।
2. ख. सकलसमवधाने
3. ख. रूपेण त्वनुगमः।
4. क. 'घटानुयोगिक' इति नास्ति।
5. क. °सिद्धेरित्यत आह
6. क. इत्यादिरिति
7. ख. समवधानसंभवात्
8. क. तद्ध्वंसा°

**प्रकाशः**

रासभतद्व्याप्येतरसकलघटप्रागभावनाशकयावद्घटोत्पादकसमवधाने रासभव्यतिरेकेण घटव्यतिरेकासिद्धेः । [1]दण्डादौ तथेति [2]तत्साध्यत्वम् ।

ननु मङ्गलतद्व्याप्येतर[3]सकलविघ्नप्रागभावनाशकसकलसमवधाने सति मङ्गलव्यतिरेके विघ्नप्रागभावव्यतिरेको भवतु । तद्दशायां मङ्गले सत्यग्रिमक्षणे विघ्नप्रागभावसत्त्वं कथं भवतु । विघ्नप्रागभावनाशकसकलस्यैव [4]विघ्नोत्पादनसामग्रीत्वेन तत्समवधाने [5]विघ्नोत्पादनियमेन [6]विघ्नप्रागभावासत्त्वात् । न च मङ्गलमेव साक्षात्प्रतिबन्धकमिति वाच्यम् । तथा सति मङ्गलसत्त्वेन मङ्गलाभावरूपकारणाभावात् तादृशसमवधानस्यैवासिद्धेरिति चेत्—न ।

[7]स्वस्वाभावस्वव्याप्तेतरतन्नाशकसमवधाने सतीत्यर्थात् । तथा च [8]मङ्गलाभावेतरविघ्नप्रागभावनाशकसमवधानेऽपि मङ्गलसत्त्वे अग्रिमक्षणे विघ्नप्रागभावसत्त्वं स्यादेव, मङ्गलाभावरूपकारणाभावेन विघ्नानुत्पत्तेरिति ।

एतेन समानकालोत्पत्तिकसव्येतरविषाणयोः परस्परसाध्यतापत्तिर्निरस्ता ।

---

**न्यायशिखामणिः**

र्सेरित्याशङ्क्य, मुख्याभाव [9]एव विवक्षितः । घटध्वंसपागभावो घटो घटप्रागभावश्च, तन्नाशो घटो घटध्वंसश्चेत्यभ्युपगमान्नोक्तदोष इत्याशयेनाह—**तादृश इति** । ननु तादृशप्रागभावनाशकेति स्थाने साध्यत्वाभिमतनाशकेति तत्कारणेति वास्तु, लाघवादित्यत आह—**उक्तेति** । अन्यथा आद्यस्य घटादौ द्वितीयस्य विघ्नप्रागभावादावसंभवेनाननुगमापत्तेरिति भावः । व्यतिरेकांशस्य प्रयोजनमाह—**एवं चेति** । **तद्दशायामिति** । तादृशविघ्नप्रागभावनाशकसकलसमवधानदशायामित्यर्थः । **कथमिति** । तथा च विघ्नप्रागभावे लक्षणमिदमव्यापकमिति भावः ।

नन्वन्वयांशो लक्षणे न प्रवेश्यः गौरवात् । तेन विनापि रासभातिप्रसङ्गनिरासात् । प्रत्युतान्वयांशाप्रवेशे स्वाभावो न [10]प्रवेश्य इत्यपरमप्यनुकूलमित्यत

---

1. ख. म दण्डादौ
2. ख. तत्र तत्साध्य-
3. ख. 'सकल' नास्ति ।
4. ख. विघ्नोत्पादक°
5. ख. विघ्नोत्पादकनि-
6. ख. °प्रागभावसत्त्वात्
7. ख. स्वस्वाभावव्याप्येतर-
8. ख. मङ्गलाभावेन विघ्न
9. क. 'एव' नास्ति ।
10. क. घ. प्रवेशनीयः

प्रकाशः

अन्यच्च दूषणं [1]स्वस्वव्याप्येतरेत्यादिकारणतालक्षणवत् [2]निराकरणीयम् ।

---

न्यायशिखामणिः

आह—एतेनेति । अन्वयांशेनेत्यर्थः । समानकालेति । तथा च स्वस्य कारण-सकलसंपत्तिसमये सव्येतरविषाणयोरसत्त्वान्नातिप्रसङ्ग इति भावः ।

नन्वन्वयांश[3]स्यावश्यकत्वे तद्घटितमेवास्तु लक्षणम् । अन्यथा घटोत्पत्त्य-नन्तरं मृत्पिण्डादौ प्रागभावव्यतिरेकेऽपि घटसत्त्वात्तत्राव्याप्तेरित्याशङ्क्य, तथा सति घटादेराकाशादिसाध्यत्वापत्तेः । अनित्यत्वेन विशेषणे च रासभातिप्रसङ्ग-तादवस्थ्यात् । तथा च प्रागभावसाध्याव्याप्तिपरिहारायोत्पत्त्यवच्छिन्नप्रतियोगि-कत्वेन (कार्यभावो)[कार्याभावो]विवक्षणीय इत्याशयेनाह—अन्यच्चेति ।

नन्वस्य प्रायश्चित्तसाध्यदुःखप्रागभावेऽव्याप्तिः । एतच्छरीरपातोत्तरकालं नरकसामग्रीकाले प्रायश्चित्ताभात् । न च व्यापारिव्यापारान्य[4]तरसत्त्वं विवक्षितम् । तथा च [5]पापध्वंसस्य तदा सत्त्वान्नोक्तदोष इति वाच्यम् । पापस्य तदा विनष्टत्वेन दुःखसामग्र्यसिद्धेः । किं च स्वस्वव्याप्येतरेत्यादि व्यर्थम् । वक्ष्यमाण-रीत्या [6]तदनन्तर्भावेणैव सामञ्जस्यात् ।

केचित्तु अत्र व्यतिरेकोपादानं प्रवर्तकं विवक्षितम् । यदि दण्ड इदानीं न स्यात् तदा अनन्तरक्षणे घटो न स्यादित्यापादनेन दण्डे [7]घटार्थिप्रवृत्तिदर्श-नात् । तथा च यदि प्रायश्चित्तं न क्रियेत तदावश्यं दुःखं स्यादित्यापादनं तत्र संभवतीति न प्रवृत्त्यनुपपत्तिरित्याहुः ।

तच्चिन्त्यम् । तथा सत्यन्वयांशवैयर्थ्यप्रसङ्गात् । किं चैतदभावेऽपि निरुक्तकार्यताज्ञानादपि प्रवृत्तिदर्शनेन व्यभिचार इति चेत्—

अत्र ब्रूमः । यावतीषु तादृश[8]प्रागभा(वा)[व]नाशकव्यक्तिषु सतीषु यत्र यत्सत्त्वे अग्रिमक्षणे यत्सत्त्वम् तावतीष्वेव सतीषु [9]तत्र तद्व्यतिरेके तस्यासत्त्वं

---

1. क. स्वव्यापारेत्यादि॰
2. क. निरसनीयमेव ।
3. क. ॰स्याप्यसत्त्वे
4. ख. ॰तरत्वं
5. ख. प्रागध्वंस॰
6. ख. तदन्तर्भा-
7. ख. घटार्थि॰
8. क. प्रागभावनाशव्यक्ति-
9. क. 'तत्र' नास्ति ।

एवं निर्विघ्नं समाप्यतामिति कामनया तदाचारोऽपि संगच्छते। अत एव यत्र विघ्नाभावः स्वतः सिद्धः तत्र मङ्गलस्याकिंचित्करत्वेन वेदाप्रामाण्यमिति निरस्तम्। अनागतविघ्नाभावस्य तत्रापि साध्यत्वात्।

'सर्वे विघ्नाः शमं यान्ति' इति यत्र विनायकस्तवपाठादौ श्रुतमस्ति तत्र तत एव प्रमत्तानुष्ठितसमाप्तेरनादौ संसारेऽवश्यं तदाचारात्।

---

प्रकाशः

एवं निर्विघ्नमिति। संसर्गाभावमात्रं निश्शब्दार्थः, न तु ध्वंस एवेति भावः।

व्यतिरेकव्यभिचारं निरस्यति—सर्व इति। यद्यपि विकल्पेऽपि व्यभिचारतादवस्थ्यम्, तथापि पूर्ववदेव तदुद्धार इति भावः। अन्वयव्यभिचारं

---

न्यायशिखामणिः

तत्कार्यत्वम्। तथा च तादृशरासभान्वयाग्निमक्षणे घटसत्त्वेऽपि तावतीषु व्यक्तिषु सतीषु रासभव्यतिरेकेऽपि घटव्यतिरेकाभावान्नातिप्रसङ्गः। एवं च स्वस्वाभावस्वव्याप्येतरेति विशेषणं न देयम्। न चैवमपि दुःखप्रागभावाव्याप्तिरित्युक्तमिति वाच्यम्। न हि दुःखप्रागभावः साक्षात् प्रायश्चित्तफलम्, किं तु पापध्वंसद्वारा। तथा च प्रायश्चित्तसाध्यस्तद्ध्वंसस्तत्साध्यो दुःखप्रागभावः। तत्र च ध्वंसे नाव्याप्तिशङ्कापि। तत्साध्ये प्रागभावेऽपि न दोषः, एतच्छरीरादिप्रतिबन्धकाभावादिव्यक्तिषु सतीष्वपि सति पापध्वंसे दुःखानुत्पादादसति तदुत्पादात्। अत एव यागसाध्यस्वर्गादौ नाव्याप्तिः। [1]साक्षाज्जन्यस्यैवात्र लक्ष्यत्वादिति दिक्।

न तु ध्वंस एवेति। तथा सति स्वतःसिद्धविघ्नाभावस्थले मङ्गलानर्थक्यप्रसङ्गादिति भावः।

ननु प्रमत्तानुष्ठितसमाप्तौ जन्मान्तरकृतसुकृतमेव कारणं न तु मङ्गलम्। अतो न [2]व्यतिरेकव्यभिचार इत्युक्तमयुक्तम्। तथा सत्यदृष्टदोषदुष्टविकल्पापत्तेः। पूर्वजन्मकृतमङ्गलस्यैव तत्र कारणत्वसंभवे [3]तस्यान्याय्यत्वादित्याशङ्क्य मङ्गलस्य

---

1. क. साक्षाज्जन्यत्वस्य
2. क. 'व्यतिरेक' नास्ति।
3. ख. तस्य न्याय्य-

तथा च तेन समं मङ्गलस्य विकल्प एव। यत्र च साङ्गे मङ्गले सत्यपि न फलं तत्र विघ्नभूयस्त्वादिति।

तन्न। विघ्नानुत्पादस्य व्यापारत्वे मानाभावात्। संसर्गाभावत्वेन हेतुत्वात् तथैव व्यापारत्वम्, तच्च प्रागभावेऽप्यस्तीति चेत् न। अत्यन्ता-

---

**प्रकाशः**

निरस्यति—यत्र चेति। न च साङ्गाद्वैदिककर्मणः फलावश्यंभाव इति वाच्यम्। बहुतरविघ्नवत्समाप्तौ बहु[1]तरमङ्गलस्य हेतुत्वादिति भावः।

नन्वत्यन्ताभावे उक्तरूप[2]मङ्गलसाध्यत्वाभावेन द्वारत्वाभावेऽपि प्रागभावस्योक्तरीत्या तत्साध्यत्वमस्तीति [3]कादाचित्काभावत्वेन द्वारत्वमस्तु इत्यत आह—

---

**न्यायशिखामणिः**

कारीरीवदैहिकफलकत्वनियमादगत्या तेन सुकृतस्य विकल्प इत्याशयेनाह—[4]व्यतिरेकव्यभिचारमिति। कार्यवैजात्येन तद्द्वारे वाजपेयाश्वमेधयोरिव विकल्पानुपपत्तेरिति भावः। व्रीहियवयोरिवैकजातीयकार्यजनकत्वेऽप्यन्यतरत्वस्य कारणतावच्छेदकत्वान्न व्यभिचार इत्युक्तम्। तत्स्मारयति—तथापीति।

[5]ननु बहुमङ्गलेन बहुप्रतिबन्धकदुरितनिवृत्तावपि यत्र दृष्टेन राजोपद्रवादिना ग्रन्थादि[6]समाप्तिप्रतिबन्धस्तत्रान्वयव्यभिचारतादवस्थ्यमित्याशङ्क्य दृष्टद्वारैवादृष्टस्य प्रतिबन्धकत्वात्तत्राप्यस्ति दुरितमित्याशयेनाह—अन्वयेति।

किमस्य विघ्नसंसर्गाभावत्वेन व्यापारत्वम्, कादाचित्क[7]तदभावत्वेन वा। तत्राद्यम् अत्यन्ताभावस्येत्यत्र निरस्तम्। द्वितीयमाशङ्कते—नन्विति। ननु 'न तत्र नियमेन' इति स्वारस्यात् क्वचिद्विघ्नकारणमस्तीति सूचितम्। अन्यथा तत्र विघ्नकारणं नास्तीति वचनव्यक्तिप्रसङ्गात्। तथा च यत्र विघ्नकारणं तत्र

---

1. क. 'तर' नास्ति।
2. ख. 'मङ्गल-' नास्ति।
3. ख. कदाचिद्विघ्नाभावेन द्वारत्वमस्तीत्यतः
4. व्यतिरेकेति। व्यभिचारेति।
5. क. 'ननु' नास्ति।
6. क. ०परिसमाप्ति-
7. क. 'तद' नास्ति।

भावस्यापि व्यापारत्वापत्तेः। स्वतस्सिद्धस्य न हेतुत्वं यदि, तदा प्रागभावेऽपि तुल्यम्।

किं च यत्र मङ्गलं न तत्र नियमेन विघ्नकारणमस्ति, येन तन्नाशद्वारा प्रागभावस्य साध्यत्वम्। एवमपि यत्र विघ्नानुत्पादोऽपि स्वतस्सिद्धस्तत्र मङ्गलमकिंचित्करमेव।

विघ्नध्वंसानुत्पादयोरारब्धनिर्वाहकालावस्थायिनोर्मङ्गलादेवोत्पत्तेर्न तदर्थमदृष्टद्वारता। मङ्गलस्य विकल्पेनान्वये शिष्टैर्नियमतो मङ्गलानुष्ठानं न स्यादित्युक्तम्।

---

प्रकाशः

किं चेति। यत्र समाप्तिपर्यन्तं विघ्नकारणं न जातं तत्रेदं बोध्यम्। तदेव स्पष्टयति—एवमपीति। एवं सतीत्यर्थः।

किं च मङ्गलसमानकालीन[1]विघ्नकारणविनाशद्वारा प्रागभावस्य साध्यत्वम्, तदनन्तरोत्पन्नविघ्नकारणविनाशद्वारापि वा। आद्ये—विघ्नध्वंसेति। अन्त्ये त्वाह—किं चेति। एवं सति [2]मङ्गलानन्तरोत्पन्नविघ्नकारणेन कुत्रापि समाप्तिप्रतिबन्धो न स्यात्। तज्जनितादृष्टेन विघ्नकारणविनाशात्तदनुत्पत्तेरित्यर्थः। अन्वय-

---

न्यायशिखामणिः

प्रागभावस्य साध्यत्वं न [3]विरोत्स्यत इत्यत आह—यत्रेति। स्पष्टयतीति। न चैवमनेनैव वाक्येन पूर्ववाक्यार्थस्य स्पष्टीकृतत्वात् [4]तद्व्याख्यानवैयर्थ्यमिति वाच्यम्। [5]एवमव्याकृतौ पूर्ववाक्यं विघ्नकारणस्थलपरमिति भ्रमापत्तेरिति भावः। प्रागभावसाध्यत्वस्यात्र निराक्रियमाणत्वादङ्गीकारानुपपत्तेराह—एवमिति। अनियमे सतीत्यर्थः।

नन्वनन्तरोत्पन्नविघ्नप्रतियोगिकनाशस्य तादृशविघ्नकारण[6]नाशद्वारकतत्प्रागभावस्य च समाप्तिसमयावस्थायित्वेऽपि साक्षान्मङ्गलाजन्यत्वेनादृष्टापेक्षा दुर्वारेत्याशङ्क्य विकल्पपरतया व्याचष्टे—किं चेति। ननु समानकालीनविघ्न-

---

1. ख. 'विघ्नकारण' इति नास्ति।
2. ख. मङ्गलान्तरोत्पन्नविघ्नेन
3. क. विरुध्यते
4. क. तद्व्याख्यानमयुक्तमिति
5. ख. एवं व्याकृतौ
6. क. °नाशक-

किं च प्रधानत्वे साङ्गमङ्गलमात्रं न समाप्तिहेतुः, तस्मिन् सत्यपि तदभावात्। प्रचितं तथेति चेत्—न। अप्रचितादपि फलसत्त्वात्। नोभयम्, अननुगमात्।

गुरुकर्मारम्भे प्रचितम् अल्पकर्मारम्भेऽल्पमिति चेत्—न। क्वचित्ता-दृशादपि फलासत्त्वात् वैपरीत्येऽपि फलसत्त्वाच्च।

एतेन बहुविघ्नशङ्कया बहुतरम्, अल्पविघ्नशङ्कया अल्पतरं च हेतुः, तादृशाचारेण तादृशश्रुत्युन्नयनादिति निरस्तम्। तादृशादपि प्रारि-प्सितासमाप्तेः, वैपरीत्येऽपि समाप्तेश्च। बहुत्वस्य त्रिचतुरादिभावेन अल्प-त्वस्य चैकद्व्यादिरूपतया अननुगमेन तादृशशिष्टाचारेण तादृशश्रुत्या बोध-यितुमशक्यत्वाच्च। तस्मान्मङ्गलं नाङ्गं न वा प्रधानमिति पूर्वपक्षसंक्षेपः॥

इति मङ्गलवादपूर्वपक्षः

---

प्रकाशः

व्यभिचारमुद्धरति—प्रचितमिति। एवं सति व्यतिरेकव्यभिचार इत्याह—अप्रचितादपीति।

गुर्विति। तृणारणिवत् कार्यतावच्छेदकभेदान्न व्यभिचार इत्यर्थः। अत्राप्युभयतो व्यभिचार इत्याह—नेति। बहुत्वस्येति। यद्यप्येकत्वद्वित्वभिन्न-संख्यात्वादिना अनुगमः संभवत्येव, तथापि व्यभिचार इत्यत्र तात्पर्यम्।

—: * :—

न्यायशिखामणिः

[1]तत्कारणस्थलेऽपि प्रहरपाठस्तवादावनन्यगत्या अदृष्टापेक्षेत्युक्तमित्यपरितोषान्मूले 'मङ्गलस्य' इत्याद्युक्तमिति द्रष्टव्यम्। तदनुत्पत्तेरिति। विघ्नानुत्पत्तेरित्यर्थः। तथा चेतरकारणसत्त्वेऽपि तत्र समाप्त्यभावादन्वयव्यभिचार इति भावः।

नन्वेवमपि कार्यतावच्छेदक[2]भेदानुपन्यासात् दोषतादवस्थ्यमित्याशङ्क्य उभयत्रारम्भपदं समाप्तिपरमित्याशयेनाह—तृणेति। उपाध्यायोक्तमाह—अत्रेति।

इति मङ्गलवादपूर्वपक्षः

—: * :—

1. क. 'तत्' नास्ति    2. क. 'भेद' नास्ति।

# अथ मङ्गलवादसिद्धान्तः

सिद्धान्तस्तु—आरब्धकर्मसमाप्तौ मङ्गलं नाङ्गम्, न वा प्रधानम्, अहेतुत्वात्। किं तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंसः फलम्। आरब्धकर्मनिर्वाहे विघ्नो मा भूदिति कामनया तदनुष्ठानात्। विघ्नस्य संशये निश्चये वा शिष्टानां तदाचरणाद्विघ्नाभावस्याकाङ्क्षितत्वाच्च।

यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणं, तदापि नागृहीतविशेषणन्यायेन अहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव

---

प्रकाशः

आरब्धकर्मनिर्वाह इति। अत्र वदन्ति। आरब्धनिर्वाहविशेषितस्यैव विघ्नध्वंसस्य प्रकृतकामनाविषयत्वात् न केवलस्यैव विघ्नध्वंसस्य फलत्वं युक्तम्, किं तु तद्विशिष्टस्यैव। विशेषणस्य त्यागे बीजाभावात्। केवलस्य गङ्गास्नानादितोऽपि भावेन मङ्गलव्यभिचाराच्चेति। तन्न। तस्य विशेषणतया फलान्तर्भावे बाधकस्य वक्तव्यत्वात्। तथा च तदुपलक्षितविघ्नध्वंसस्यैव फलत्वम्। न च व्यभिचारः, यागादेः स्वर्गविशेष इव विघ्नध्वंसविशेषे तस्य हेतुत्वात्। अन्यथा प्रायश्चित्तगङ्गास्नानादिना विघ्नध्वंसे सति यत्र समाप्तिस्तत्र तवापि व्यभिचारात्। मा भूदिति। मा वर्ततामित्यर्थः।

---

न्यायशिखामणिः

किं केवलविघ्नध्वंसस्य [1]कामनानुरोधात् फलत्वम्, व्यभिचाराभावाद्वा। तत्राद्य आह—आरब्धेति। अन्त्ये त्वाह—केवलस्येति। आरब्धनिर्वाहस्येत्यर्थः। वक्तव्यत्वादिति। न समाप्तिरुभयतो व्यभिचारादित्यत्रेत्यर्थः। ननु मा भूदित्यनेनानुत्पादोक्तौ [2]ध्वंसे कामना नोक्ता स्यादित्यत आह—मा वर्ततामिति।

---

1. ख. कामानुरोधात्  2. ख. ध्वंसकामना

**फलं न समाप्तिः, उभयतो व्यभिचारात्। समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लोकावगतस्वकारणादेव।**

---

प्रकाशः

**यदि चेति।** पूर्वं समाप्तेरुपसर्जनतया कामनाविषयत्वमत्र तु प्राधान्येनेति ततो भेदः। **नागृहीतेति।** यद्यप्ययं लाघवमूलको न्यायः। इह तु समाप्तौ व्यभिचारेण विशेष्य[1]बाधो मूलमिति 'सविशेषणे हि' इति वक्तुमुचितम्। अत एव द्रव्यप्रकाशादौ तथैव लेखनम्। तथापि विघ्नध्वंसविशिष्टसमाप्तेः फलत्वे गौरवाल्लाघवमस्त्येवेत्युभयन्यायावतारसंभव इति भावः। **न समाप्तिरुभयतो व्यभिचारादिति।** अत्र वदन्ति—

ननु समाप्तिं प्रति मङ्गलत्वेन हेतुत्वं श्रुतिर्न बोधयति, येन साङ्गाद्वैदिककर्मणः फलावश्यंभावनियमेन तस्मिन् सत्यपि समाप्त्यभावेनान्वयव्यभिचारः स्यात्। किं तु बहुविघ्नशङ्कया बहुमङ्गलस्य अल्पविघ्नशङ्कया अल्पस्य। शिष्टानामाचारेण तादृशशिष्टाचारानुमितश्रुत्या च मङ्गलसमसंख्याकविघ्नस्थलीयसमाप्तिं प्रति समाप्तिस्थलीयविघ्नसमसंख्यमङ्गलत्वेन, स्वसमसंख्यविघ्नसहितकर्मस्थलीयमङ्गलत्वेन वा तत्र तस्य हेतुत्वं बोध्यते। एतदेवाभिसंधाय आचार्यचरणैरुक्तम्—

---

न्यायशिखामणिः

[2]**वटेश्वरोक्तं** दोषमाशङ्कते—**यद्यपीति।** **लाघवेति।** प्रथमोपस्थितिरूपेति शेषः। स च न्यायः प्रकृते न संभवति, विघ्नध्वंसस्य व्यभिचारादिति भावः। यद्यप्युक्तरीत्या तदुद्धारः संभवत्येव, तथापि मूलासंगतिरित्याह—**इह त्विति।** **लाघवमिति।** वस्तुलाघवमित्यर्थः। **उपाध्यायोक्तं** दोषमाह—**अत्रेति।** **मङ्गलसमसंख्येति।** ननु स्वतस्सिद्धविघ्नाभावस्थलीयसमाप्तेः मङ्गलं विनैव भावाद्व्यभिचार इति तद्वारणाय भवतु विघ्नस्थलीयेति विशेषणम्। तथापि मङ्गलसमसंख्येति व्यर्थम्। [3]तस्य न्यूनसंख्यविघ्नध्वंसजन्यसमाप्तिस्थले तादृशमङ्गलसत्त्वेन [4]व्यभिचाराभावात्। न चाधिकसंख्य[5]विघ्नस्थलीयसमाप्तिवारणं

---

1. ख. °बाधाया मूल-
2. ख. वागीश्वरोक्तं
3. क. तस्यान्यून-
4. क. अव्यभिचारात्
5. ख. घ. 'विघ्न' नास्ति।

## प्रकाशः

[1]'प्रचितस्य तस्य बलवत्तरविघ्नवारणे कारणत्वात्' इति। तथा च नान्वयव्यभिचारः। अत एव न व्यतिरेकव्यभिचारोऽपि। समाप्तिमात्रं प्रति तस्य हेतुत्वानभ्युपगमात्। 'सति विघ्ने [2]तस्याङ्गत्वात्' इति ग्रन्थपर्यालोचनयापि समाप्तिविशेषफलकत्वलाभात्।

न चैवं 'जन्मान्तरीयमङ्गला[3]नुमानात्' इति ग्रन्थविरोधः। तस्य यत्र केनचित्प्रमाणेन समाप्तिविशेषनिश्चयः तदभिप्रायकत्वात्। न चेदं समाप्यतामिति कामनया तदाचारात्तदनुमितापि श्रुतिः 'समाप्तिकामो मङ्गलमाचरेत्' इत्याकारि-

---

## न्यायशिखामणिः

तत्प्रयोजनमिति वाच्यम्। तादृशविघ्नस्थले समाप्तेरेवाभावादिति चेत्—न। विघ्नबाहुल्यस्थले मङ्गलजन्या गङ्गास्नानादिजन्या च यत्र विघ्ननिवृत्तिः तत्र तज्जन्यसमाप्तेर्व्यावर्त्यत्वात्।

समाप्तिस्थलीयेति। [4]अत्राधिकविघ्ननिवर्तकगङ्गास्नानादिजन्यसमाप्तिस्थलीयमङ्गलवारणाय विघ्नसमसंख्येति पदमन्यूनसंख्यपरम्। तदप्यपरविघ्नध्वंसजन्यकार्यान्तरसमाप्ति[5]स्थलीयमङ्गलवारणाय। पुरुषान्तरकृतमपि कार्यान्तरस्थलीयविघ्नसमसंख्यमिति दोषतादवस्थ्यवारणाय समाप्तिस्थलीयेति पदं स्वकर्तृपुरुषाभिमत[6]कार्यसमाप्तिस्थलीयपरम् उद्देश्यकार्यप्रतिबन्धकपरं वा।

स्वसमेति। अत्र विघ्नभ्रमकृतमङ्गलवारणाय [7]विघ्नसहितेत्यादि। विघ्नबाहुल्यस्थलीयमङ्गलवारणाय स्वसमसंख्येति पदं स्वानधिकसंख्यपरम्। बोध्यत इति। यद्यपि [8]श्रुतिरित्थं न बोधयति, तत्र शब्दासामर्थ्यात्, तथाप्यर्थात् [9]तद्बोध इत्याशयः। कारणतावच्छेदकस्य विवक्षायाः प्रयोजनमुक्त्वा कार्यतावच्छेदकस्याह—अत एवेति। न केवलं सांप्रदायिकग्रन्थालोचनेन तस्य तद्विशेषहेतु-

---

1. ख. प्रचितस्यैव तस्य
2. क. तस्याङ्गत्वम्
3. ख. ॰नुमानम्
4. घ. 'अत्राधिक......समाप्तिस्थलीयपरम्' इति भागो नास्ति।
5. ख. 'स्थलीय......कार्यान्तर—' इति ग्रन्थस्त्रुटितः।
6. क. 'कार्यसमाप्ति' इत्यस्य स्थाने 'समाप्तिकार्य' इति पाठः
7. क. विघ्नसंगतेत्यादि
8. क. ख. श्रुतिरर्थं
9. क. तद्बुध्यते

प्रकाशः

कैव, ततः समाप्तित्वावच्छेदेन मङ्गलजन्यत्वप्रतीतिरिति वाच्यम्। निर्विघ्नं [1]परिसमाप्यतामिति कामनया तदाचारात् 'निर्विघ्न[2]परिसमाप्तिकामो मङ्गलमाचरेत्' [3]इत्याकारकश्रुतेरुन्नयनेन विघ्नध्वंसपूर्वकसमाप्तित्वावच्छेदेनैव तज्जन्यताप्रतीतेः। अस्तु वा 'समाप्तिकामः' इत्याकारकश्रुत्यनुमानम्, तथापि न समाप्तित्वावच्छेदेन ततस्तज्जन्यत्वप्रतीतिः, किं तु तत्सामानाधिकरण्येन, यथा स्वर्गकामो यजेतेत्यत्र। अन्यथा यागं विनापि स्वर्गे इति व्यभिचारसत्त्वेन स्वर्गेऽपि [4]न यागजन्यता प्रतीयेत।

अथ यागजन्यस्वर्गे जातिभेदोऽस्तीति तत्र तदवच्छेदेन यागस्य स्वर्गसाधनत्वं श्रुत्या बोध्यत इति चेत्—तर्हि ममापि मङ्गलजन्यसमाप्तौ [5]उपाधिभेदोऽस्तीति तदवच्छेदेन तत्र मङ्गलकारणत्वं श्रुत्या बोध्यत इति तुल्यम्।

---

न्यायशिखामणिः

त्वम्, किं तु तन्मतानुवादक[6]मणिदर्शनादपीत्याह—सतीति। तथा च नापसिद्धान्त इति भावः।

आशयमविद्वान् शङ्कते—[7]न चेदमिति। 'तुष्यतु दुर्जनः' इति न्यायेन [8]तस्याः साक्षात्तद्बोधकत्वमभ्युपेत्यैवाभि[9]मतासिद्ध्या दूषयति—निर्विघ्नमिति। [10]एतच्चाचारविशेषप्रतिसंधानदशामभिप्रेत्य। तद्विरहदशायामाह—अस्तु वेति।

केचित्तु ननु मङ्गलश्रुतिर्न प्रत्यक्षा किं त्वनुमेया। सा च लाघवात् समाप्तिकाम इत्याद्याकारिकैव कल्प्यताम् [11]इत्यनुशयात्—अस्तु वेत्युक्तमिति। तत्तुच्छम्। ततोऽपि लाघवात् 'मङ्गलं कुर्यात्' [12]इत्याकारिकायाः श्रुतेः कल्प-

---

1. ख. 'परि' नास्ति।
2. ख. 'परि' नास्ति।
3. ख. इत्याकारिकाया एव श्रुते-
4. ख. 'न' नास्ति।
5. ख. उपायभेदो
6. ख. °मन्त्र-
7. क. न चैवमिति
8. क. तस्य साक्षाद्बोधकत्व-
9. क. मतसिद्ध्या
10. ख. एतच्चाचार-
11. क. इत्यस्वरसात्
12. क. इत्याकारकतया

## प्रकाशः

वस्तुतः साधनताबोधात्पूर्वं स्वर्गे जातिभेदोपस्थितौ न मानमस्ति, येन [1]तमादाय कारणताबोधः स्यात् । किं तु प्रथममतिप्रसक्तेन कार्यतानवच्छेदकेनापि स्वर्गत्वेन रूपेणोपस्थितं स्वर्गविशेषं प्रति श्रुत्या यागस्य साधनत्वं [2]बोध्यते । तद्बोधानन्तरं कारणभेदप्रतिसंधानेन तत्र जातिभेदः कल्प्यते ।

एवं समाप्तित्वेनातिप्रसक्तेनापि रूपेणोपस्थितं [3]समाप्तिविशेषं प्रति मङ्गलस्य साधनत्वं श्रुत्या बोध्यते । तदनन्तरं कारणभेदप्रतिसंधानेन[4] तत्र कार्यतावच्छेदको विघ्नस्थलीयसमाप्तित्वादिरूप उपाधिः कल्प्यते ।

ननु यदि कार्यतावच्छेदकाप्रतीतावपि अतिप्रसक्तधर्मसामानाधिकरण्येन कारणता शब्दादिना बोध्यते तदा प्रत्यक्षेणापि बोध्यतामविशेषादिति चेत्—न । ग्राहकाभावात् । अन्वयव्यतिरेकौ हि तत्र ग्राहकौ । न चातिप्रसक्तेन द्रव्यत्वादिना दण्डान्वयव्यतिरेकग्रहः । यत्र दण्डाभावस्तत्र [5]द्रव्याभावाभावात् , यत्र द्रव्यं तत्र दण्डनियमाभावाच्च । अत एव यत्र ग्राहकं तत्रातिप्रसक्तधर्मसामानाधिकरण्येन तज्जन्यता प्रत्यक्षेणापि गृह्यत एव तृणारणिमणिस्थले । समानप्रकारकं

---

## न्यायशिखामणिः

नापत्तेः । यदि च तथाविधाचारानुरोधात् गुर्व्यपि मूलभूता श्रुतिरवश्यं कल्प्येति मतम् , तदा प्रकृतेऽपि तुल्यम् ।

जातिभेद इति । अन्यथा अग्निहोत्रदर्शपूर्णमासादीनामेकरूपफलकत्वे बहुवित्तव्ययायाससाध्याप्रवृत्त्यापत्तेरिति भावः । एतच्च शब्दस्य साक्षाज्जातिविशेषोपस्थितिसामर्थ्यमभ्युपेत्योक्तम् । वस्तुतस्तन्नेत्याशयमुद्घाटयति—वस्तुत इति । न हि शब्दादिवत् केवलमेव प्रत्यक्षं तद्ग्राहकम् , किं तु अन्वयादिसहकृतम् । तत्र च किं नियतान्वयादिग्रहः सहकारीत्यभिमतम् , व्यभिचारादर्शनसहकृततद्ग्रहो वा । तत्राद्य आह—ग्राहकाभावादिति । अन्वयेति । नियतेति शेषः । अन्त्ये त्वाह—अत एवेति । प्रयोजकसत्त्वे प्रयोज्यसत्त्वस्यावश्यकत्वादेवेत्यर्थः ।

---

1. क. तत्त्वमादाय
2. क. प्रतीयते
3. ख. 'समाप्ति' नास्ति ।
4. ख. °संधानात्
5. ख. द्रव्याद्रव्याभावात्

प्रकाशः

हि विरहज्ञानं [1]समानप्रकारकान्वयज्ञानविरोधि। तथा च स्वर्गत्ववह्नित्वावच्छेदेन व्यभिचारात् तदवच्छेदेन नियतपूर्ववृत्तित्वं मा ज्ञायि। तदाश्रये धर्मिणि हेतुताग्रहे किं बाधकम्।

किं च तवापि मते प्रायश्चित्तादिना विघ्नध्वंससंभवेनातिप्रसक्तेन विघ्नध्वंसत्वेनोपस्थितं विघ्नध्वंसविशेषं प्रत्येव हेतुता वेदेन बोध्यते। यदि च नमस्कारादिकमाचरेदित्यादिना प्रत्येकमेव विधिकल्पनम्, तदा सुतरामतिप्रसक्तिः, विघ्नध्वंसत्वस्य स्तुत्यादिजन्यविघ्नध्वंसेऽपि सत्त्वादिति चेत्—

मैवम्। विघ्नध्वंसविशिष्टसमाप्तेः फलत्वे विशेषणीभूतविघ्नध्वंसफलत्वस्यावश्यकत्वाल्लाघवाच्च स एव फलं न समाप्तिरपि, गौरवात्। न चैवं यागादेरपूर्वमेव फलं स्यादिति वाच्यम्। तस्य प्रथममनुपस्थितत्वात्। प्रतीतस्वर्गसाधनतानुपपत्त्या च तत्कल्पनादशायामुपजीव्यविरोधेन [2]स्वर्गफलकत्वानपवादकत्वात्।

---

न्यायशिखामणिः

ग्राहकमिति। व्यभिचारज्ञानाभावसहचारज्ञानसहकृतप्रत्यक्षमित्यर्थः। तृणेति। एतच्चोपलक्षणम्। यत्र द्रव्यत्वादिना घटस्य दण्डान्वयादिग्रहस्तत्र [3]व्यभिचाराग्रहे तज्जन्यता गृह्यत एवेत्यपि बोध्यम्।

ननु मन्मते विघ्नध्वंसत्वमनतिप्रसक्तमिति तदवच्छेदेन प्रथमत एव मङ्गलकार्यताग्रह इति लाघवम्। त्वन्मते तु गौरवमित्याशङ्क्य तवापि समानमित्याह—किंचेति। मङ्गलसमसंख्यविघ्नस्थलीयसमाप्तित्वं वा विघ्नध्वंसविशिष्टसमाप्तित्वं वा [4]तद्द्वारकसमाप्तित्वं वा कार्यतावच्छेदकमिति विकल्पयिष्यति। तत्र द्वितीये दोषमाह—विघ्नेति। उपस्थितिलाघव[5]मुक्त्वा वस्तुलाघवमाह—लाघवादिति। एतच्चोपलक्षणम्। विशिष्टपूर्ववर्तित्वग्रहस्य विशेषणपूर्ववर्तित्वग्रहाधीनत्वादाकाशवदन्यथासिद्धेर्न तद्धेतुत्वमित्यपि बोध्यम्। किमुपस्थितिलाघ-

---

1. ख. 'समानप्रकारक-' इति नास्ति।
2. ख. स्वर्गफलकत्वानुपपादक-
3. क. व्यभिचारग्रहे
4. ख. तदद्वारक-
5. ख. 'उक्त्वा वस्तुलाघवम्' इति नास्ति।

प्रकाशः

इह तु विघ्नसंशये निश्चये वा शिष्टानां मङ्गलाचरणात् विघ्नाभावस्यावश्यं कामनाविषयत्वेनोपस्थित[1]त्वाल्लाघवावतारात्। यत्रापीदं समाप्यतामिति कामना, तत्रापि विघ्नध्वंसो हृदि चेष्टते। अन्यथा विघ्नज्ञानशून्यस्यापि मङ्गलाचरणप्रसङ्गात्।

किं च विघ्नध्वंसस्य समाप्तिपूर्ववर्तित्वग्रहानन्तरं मङ्गलस्य तत्पूर्ववर्तित्वग्रहात् कुलालपितृवत्तस्यान्यथासिद्धिः। अन्यथा मणिध्वंसजन्यवह्निदाहादौ मण्यवयवविभागस्यापि हेतुत्वापत्तेः। अत एव कारीरितः प्रत्यग्रावग्रहनिवृत्तिमात्रम्, वृष्टिस्तु स्वकारणादेवेति सिद्धान्तः। अन्यथा तत्राप्युक्तरीत्यापातः।

न चैवं समाप्तेः कामनाविषयत्वानुपपत्ति[2]रिति वाच्यम्। इष्टसाधनताज्ञानस्य कामनाहेतोः ([3]ग्रहः यत्र) [उभयत्र] सत्त्वेनोभयत्र [4]तदविरोधात्। न हि पाकप्रवृत्तिकाले तृप्तिकामनास्तीति तस्य तृप्तिजनकत्वमपि।

---

न्यायशिखामणिः

वादपूर्वस्य फलत्वम् वस्तुलाघवाद्वा। आद्य आह–तस्येति। द्वितीये त्वाह–प्रतीतेति।

[5]इदमुपलक्षणम्। यत्रोभयमपि कल्प्यं तत्रोक्तलाघवावतारेऽपि स्वर्गे प्रत्यक्षश्रुत्यवगतयागफलत्वं ब्रह्मणापि दुरपनेयमिति द्रष्टव्यम्। अत एव स्वर्गसाम्यमाशङ्क्य विशिष्टसमाप्तेरनुमेयश्रुत्यवगम्यत्वेन कल्पनीयतुल्यत्वादित्याह—[6]इह त्विति। विघ्नध्वंसद्वारकसमाप्तित्वमवच्छेदकमिति पक्षे दोषमाह—किं चेति। अन्यथासिद्धिरिति। जनकपूर्ववर्तित्वेन गृहीत इत्याद्यन्यथासिद्धिरित्यर्थः। न च विघ्नध्वंसस्य व्यापारत्वान्न तेनान्यथासिद्धिरिति वाच्यम्। व्यापारिणो यदवच्छिन्ने जनकत्वम्, तदवच्छिन्नजनकस्यैव व्यापारत्वाभ्युपगमात्। न हि विघ्नध्वंसजन्यतायां तद्द्वारकसमाप्तित्वमवच्छेदकमिति युज्यत इति भावः।

---

1. ख. ०त्वादुक्तलाघवा-
2. ख. 'इति वाच्यम्' इति नास्ति।
3. क. 'ग्रहः यत्र सत्त्वेन' इति नास्ति।
4. ख. तदा विरोधात्
5. क. इदमप्युप-
6. ख. 'इह' नास्ति

### प्रकाशः

अपि च विघ्नसमसंख्यमङ्गलत्वेन न हेतुत्वम्, अधिकसंख्यमङ्गलात् समाप्त्यभावापत्तेः। न च विघ्नान्यूनसंख्यमङ्गलत्वेन हेतुत्वम्। यत्राङ्गेन ग्रन्थे आरब्धे समसंख्यं वा अधिकसंख्यं वा मङ्गलं कृतं तत्र समाप्त्यभावेनान्वय-[1]व्यभिचारात्। न च तत्र त्वन्मतेऽपि विघ्नाभावे सत्यपि कथं समाप्त्यभाव इति वाच्यम्। ज्ञानादिरूपलौकिकसहकार्यभावेन समाप्त्यभावसिद्धेः। न हि विघ्नाभावश्चरमकारणम्, येन तत्र [2]विघ्नसंभवात्समाप्तिर्न जायेतेति चोद्येत। तथात्वे तेषां सहकारित्वप्रसङ्गात्।

अत एव वक्ष्यति—'क्वचिल्लोकावगकारणाभावात्' इति। न च लोकावगतकारणवदत्रापि अन्वयव्यभिचारो न दोषायेति वाच्यम्। साङ्गाद्वैदिक-

---

### न्यायशिखामणिः

नन्वेवं कारीरीष्टिरपि न वृष्टिहेतुः स्यात्। सा हि न वृष्टिमात्रे, व्यभिचारात्। न च प्रत्यग्रावग्रहनिवृत्तिजन्य[3]वृष्ट्याम्। मण्यवयवविभागवदन्यथासिद्धत्वादित्याशङ्क्य इष्टापत्तिरित्याह—**अत एवेति**। एतच्चापाततः। [4]कारीरीष्टेः प्रत्यक्षश्रुत्या वृष्टिहेतुत्वावगमात्। न चान्यथासिद्ध्या तद्बाधे श्रुतिः प्रतिबन्धकनिवृत्तौ [5]पर्यवस्यतीति वाच्यम्। जातिविशेषावच्छिन्नवृष्टावेव हेतुत्वाभ्युपगमात्। अत एव कारीरीजनितवृष्टौ जातिविशेष एवास्तीति ग्रन्थकृतैवोक्तम्। **कामनेति**। मङ्गलानुष्ठानसमय इति शेषः।

ननु मङ्गलसमसंख्यविघ्नस्थलीयसमाप्तित्वमवच्छेदकमित्याद्यपक्ष एवाभिमतः। तत्र चोक्तदोषानवकाश इत्यत आह—**अपि चेति**। समपदमनधिकपरम् अन्यूनपरं वा। तत्राद्यं निराकृत्यान्त्यं निरस्यति—**न चेति**। **अन्वयव्यभिचारादिति**। न च [6]यथा कारीरीजन्यमदृष्टं मेघसंचारादिदृष्टकारणमपेक्ष्यैव फलहेतुस्तथेदमपि ज्ञानादिसापेक्षमेव तथेति तद्विलम्बादेव कार्यविलम्ब इति वाच्यम्।

---

1. ख. ०व्यभिचाराभावात्
2. ख. विघ्नसद्भावादेव समाप्तिर्जातेति
3. क. घ. ०वृष्टौ
4. क. 'कारीरीष्टेः' नास्ति।
5. ख. पर्यवस्येदिति
6. क. 'यथा' नास्ति।

प्रकाशः

कर्मणः फलावश्यंभाव इति सिद्धान्तात् । अन्यथा विघ्नसमसंख्य[1]मङ्गलत्वेन हेतुतापि न कल्प्येत । न च तत्राङ्गवैगुण्यात्तथा । नमस्कारादिरूपत्वेनाल्पाङ्गतया सावधानं कृते तस्मिंस्तदभावात् ।

किं च प्रमत्तानुष्ठितसमाप्तौ मङ्गलं विनैव विघ्नसंसर्गाभावो हेतुः । तथा च [2]तत्र क्लृप्तपूर्ववर्तिन एवान्यत्रापि समाप्तिसंभवेन तत्सहभूतमङ्गलस्यान्यथा-[3]सिद्धिरिति निश्चये वेदेनापि कारणताबोधनमशक्यम् ।

अपि च मङ्गलसमसंख्याकविघ्नस्थलीयसमाप्तित्वं [4]वा विघ्नध्वंसविशिष्टसमाप्तित्वं वा विघ्नध्वंसद्वारकसमाप्तित्वं वा कार्यतावच्छेदकम् । नाद्यः, यत्र केचिद्विघ्नाः प्रायश्चित्तादिना नाशिताः, केचिच्च मङ्गलेन, तत्र समाप्तौ मङ्गल-[5]स्याहेतुतापत्तेः । तत्र [6]विघ्नस्य मङ्गलाधिकसंख्यत्वात् । यदि च तत्र मङ्गलेन विघ्नध्वंसमात्रं जन्यते, समाप्तिस्तु स्वकारणादेवेति मन्यसे, तदान्यत्रापि तुल्यम् ।

---

न्यायशिखामणिः

तद्वदिदमपि दृष्टं [7]संपाद्यैव फलं जनयेदिति भावः । तथात्वे चरमकारणत्वे । तेषाम् ज्ञानादीनाम् ।

नन्वज्ञस्थले सावधानकृतकारीर्यादाविवाङ्ग[8]वैगुण्यं विघ्नबाहुल्यं वा फलाभावानुरोधात् कल्प्यते । किं च समर्थ एव सर्वत्राधिकारी । तथा च ग्रन्थकरणसमर्थ एव तत्समाप्तिजनकमङ्गले अधिकारीत्यसमर्थाज्ञकृत[9]मङ्गलवैफल्येऽपि नानिष्टमित्यपरितोषात् लोकावगतकारणेनान्यथासिद्धेरिति पूर्वपक्ष्युक्तं दोषमाह—किं चेति । क्लृप्तेति । लोकावगतकारणादिति शेषः । वेदेनेति । अयोग्यतानिश्चयस्य[10]शाब्दज्ञानमात्रप्रतिबन्धकत्वादिति भावः । न चैवं तस्याप्रामाण्यप्रसङ्गः, विघ्नध्वंसपरतया तदुपपत्तेः । अहेतुत्वापत्तेरिति । यद्यपि न तावदन्वयव्यभिचारः, तत्र कारणतावच्छेदकावच्छिन्नत्वाभावात् । नापि व्यतिरेकव्यभिचारः, समाप्तेस्तत्र

---

1. ख. 'मङ्गल-' नास्ति ।
2. ख. 'तत्र' नास्ति ।
3. ख. °सिद्धिनिश्चये
4. क. 'वा' नास्ति ।
5. ख. °स्य हेतुता-
6. ख. मङ्गलविघ्नस्य
7. ख. आपाद्यैव
8. क. °वैकल्यं
9. क. 'मङ्गल-' नास्ति ।
10. ख. शब्दज्ञान-

### प्रकाशः

न द्वितीयः, गङ्गास्नानादिना यत्र विघ्नध्वंसस्तत्र तद्विशिष्टसमाप्तेर्मङ्गलं विनाप्युपपत्तेर्व्यतिरेकव्यभिचारात्। तस्य सर्वपापक्षयहेतुत्वेन समाप्तिप्रतिबन्धकविघ्नो [1]मङ्गलेनैव नाश्यत एवेत्यत्र मानाभावात्। नीलघटत्ववदर्थसमाजमहिम्नैवोपपत्तेश्च। न तृतीयः, अन्योन्याश्रयात्। सिद्धे [2]हि मङ्गलस्य हेतुत्वे विघ्नध्वंसद्वारत्वसिद्धिः, तत्सिद्धौ तदवच्छेदेन मङ्गलस्य हेतुत्वसिद्धिरिति।

किं च विघ्नध्वंसस्य द्वारत्वं न समाप्तित्वावच्छेदेन ग्राह्यम्, व्यभिचारात्। नापि समाप्तिविशेषत्वावच्छेदेन, तस्य निर्वक्तुमशक्यत्वात्। शक्यत्वे वा तदवच्छे-

---

### न्यायशिखामणिः

कार्यतावच्छेदकावच्छिन्नत्वाभावात्। तथाप्यभिमतफलाभावात्तत्र मङ्गलवैफल्यमित्यत्र तात्पर्यम्। अत एव साफल्यमेव शङ्कते—यदि चेति।

ननु गङ्गास्नानेन सर्वपाप[3]निवृत्तावनन्तरं दुःखानुपपत्तिः पुण्यशापायच्चैतच्छरीरधारणानुपपत्तिश्च। यदि च देहधारणाद्यनुरोधादेतज्जनकातिरिक्तपापनिवर्तकं तदिति कल्प्यते, तदा आचारानुमितश्रुत्यवगतविघ्नध्वंसविशिष्टसमाप्तिहेतुत्वानुरोधात् तत्प्रतिबन्धकातिरिक्तत्वेनापि पापं विशेष्यताम्। अन्यथा गङ्गास्नानानन्तरकृतेन मङ्गलेन विघ्ननिवृत्त्यजननात्तवाप्यन्वयव्यभिचारादित्यस्वरसादाह— नीलेति। तृतीयेऽपि किं द्वारभूतविघ्नध्वंसजन्यत्वं समाप्तौ विवक्षितम्, उत मङ्गलजन्यतादृशध्वंसजन्यत्वम्, आहोस्वित्[4] तज्जन्यविघ्नध्वंसमात्र[5]व्यापारकत्वम्। नाद्यः, मङ्गलं विनैव प्रायश्चित्तजन्यविघ्ननिवृत्त्या यत्र समाप्तिस्तत्र व्यभिचारात्। न द्वितीयः, प्रायश्चित्तमङ्गलजन्यविघ्ननिवृत्तिभ्यां यत्र समाप्तिस्तत्र विशिष्टमङ्गलाभावादित्यभिप्रेत्यान्त्यं दूषयति—अन्योन्येति।

ननु मङ्गलजन्यविघ्नध्वंसमात्रजन्यसमाप्तित्वमवच्छेदकम्, न तु द्वारत्वघटितम्, येनान्योन्याश्रयः स्यात्। मङ्गलप्रायश्चित्तस्थलीय[6]समाप्तिश्च प्रायश्चित्त-

---

1. ख. मङ्गलेन विनाश्यते
2. क. अपि instead of हि
3. क. °निवृत्त्यनन्तरम्
4. ख. 'स्वित्' नास्ति।
5. ख. °व्यापकत्वम्
6. क. 'समाप्तिश्च......प्रायश्चित्तस्थलीय' इति ग्रन्थस्त्रुटितः।

**प्रकाशः**

देनैव मङ्गलस्य हेतुतास्तु। अन्यथा मणिध्वंसद्वारकदाहत्वावच्छिन्नं प्रति मण्यवयवविभागस्यापि हेतुतापत्तेः। अन्यथासिद्ध्यादिना न तस्य हेतुत्वमिति यदि, तदा प्रकृतेऽपि तुल्यमिति संक्षेपः।

---

**न्यायशिखामणिः**

जन्ययापि विघ्ननिवृत्त्या जन्यत इति न व्यभिचार इत्यनुशयादाह—**किं चेति**। द्वारत्वं जनकत्वम्। ननु विघ्नस्थलीयसमाप्तित्वं तदवच्छेदकमिति शक्यं वक्तुमित्यत आह—**शक्यत्वे वेति**। [1]नन्वेतन्न मङ्गलजन्यतावच्छेदकम्, प्रायश्चित्तस्थलीयसमाप्तिसाधारणत्वात्। किंतु मङ्गलजन्यविघ्नध्वंसमात्रजन्यसमाप्तित्वमित्यस्वरसादुक्तदोषमेव स्मारयति—**अन्यथेति**। कुलालपितृवदन्यथासिद्धिः प्रकृतेऽपि समानेत्याह—**तदेति**।

अत्र उद्धारकृतस्तु—आद्यपक्ष एवाभिमतः, तत्रोक्तदोषाभावात्। न चैवमप्यन्यत्र क्लृप्तनियतपूर्ववर्तिन इत्याद्यन्यथासिद्ध्या प्रायश्चित्तस्थलीयमङ्गलवैफल्यप्रसङ्गेन [2]च सोऽपि दूषित एवेति वाच्यम्। यथा यागस्य स्वर्गकारणत्वं बोधयन्त्या नियमो बोधित इति व्यभिचारपरिहाराय जातिविशेषावच्छिन्नस्वर्गजनकत्वं कल्प्यते, तथा आचारानुमितमङ्गलकारणत्वबोधकश्रुत्या तदनन्यथासिद्धत्वं बोधितमिति तद्रक्षाय स्वतस्सिद्धविघ्नाभावस्थलीयसमाप्तौ सुकृतसंपत्तेः तादृशविघ्नस्थलीयसमाप्तौ विशिष्टमङ्गलस्य हेतुत्वं कल्प्यते। तथा च न तत्र निरुक्तं मङ्गलं विना किंचिन्नियतपूर्ववर्तित्वेन क्लृप्तम्, येनान्यथासिद्धिः स्यात्। न चैवमष्टदोषदुष्टविकल्पापत्तिः। एकजातीयकार्यस्थल एव तदभ्युपगमात्। सुकृतमङ्गलयोस्तु[3] वाजपेयाश्वमेधयोरिव विजातीयकार्य[4]जनकत्वस्योक्तत्वात्।

यत्तु आचारस्य प्रयोजकत्वमात्रबोधकश्रुत्याक्षेपकत्वमिति मङ्गलस्य समाप्ति[5]कारणत्व एव न मानम्, कुतोऽवच्छेदककल्पनेति। तन्न। इष्टसाधनत्वं विध्यर्थ इत्यग्रे विधौ निरूपितम्। तदेवं सति विरुध्येत। किं चैवं प्रत्यक्षविधेरप्याचारजनकज्ञानविषयशक्ततया यागादेरपि स्वर्गकारणत्वाभावप्रसङ्गः। न च

---

1. ख. ग. नन्वेवं न
2. क. 'च' नास्ति।
3. क. 'तु' नास्ति।
4. क. ०जनकत्वाभ्युपगमात्
   घ. ०जनकस्योक्तत्वात्
5. क. ०हेतुत्व एव

## न्यायशिखामणिः

नियतपूर्ववर्तित्वरूपं प्रयोजकत्वमेव विध्यर्थः, न त्वनन्यथासिद्धत्वमपि, गौरवात् । यागादेश्च विधिना प्रयोजकत्वमात्रावगमेऽपि प्रमाणान्तरेण [1]अन्यथासिद्ध्यभावावगमात् कारणत्वं पर्यवस्यति । मङ्गलस्य त्वन्यथासिद्धत्वान्नैवमिति वाच्यम् । मङ्गलेऽप्यन्यथासिद्धिविरहस्य प्रदर्शितत्वात् ।

नन्वस्त्विष्टसाधनत्वं विध्यर्थः, तथापि विघ्नध्वंस एव मङ्गलफलं न समाप्तिः । कार्यकारणतावच्छेदकयोर्गुरुत्वादिति चेत्, मैवम् । वैदिककर्मफलत्वे हि अधिकारिविशेषणकामनाविषयत्वं तन्त्रम् । तत्र च प्रत्यक्षश्रुत्यभावादनुमितश्रुत्या योऽवगम्यते स एवाधिकारी । तादृशी च श्रुतिः 'समाप्तिकाम' इत्याकारैव लाघवात्, न तु 'विघ्नध्वंसकाम' इत्याकारा । तस्याभावत्वेन तत्कामश्रुतेर्गुरुत्वात् । यदि चानुमेयो वेदो यथाचारमनुमीयते । तत्र लाघवाद्यकिंचित्करमिति मतम्; तदा 'उभयकाम' इत्याकारश्रुत्युन्नयनापत्तौ विघ्नध्वंसमात्रफलकत्वानुपपत्तेः ।

न च विघ्नध्वंससमाप्तिकामस्याधिकारित्वे गौरवमित्यन्यतरकामस्य तत्त्वे पाकफलौदनजन्यतृप्तिकामनावत् फलजन्यविषयतयापि[2] समाप्तिकामनोपपत्तेः न तत्कामोऽधिकारीति वाच्यम् । [3]कारीर्यादिप्रवृत्तिकाले मेघसंचारादिकामनावद्विघ्नध्वंसकामनोपपत्तेर्न तत्कामोऽधिकारीति वैपरीत्यस्यापि [4]सुवचत्वात् । तथा चोभयकामस्य विघ्नध्वंसकामस्य चाधिकारित्वे गौरवात् 'समाप्तिकाम' इत्याकारिकैव श्रुतिर्लाघवसहकृताचारेणानुमेया । एवं च तया [5]समाप्तित्वसामानाधिकरण्येन तत्र मङ्गलजन्यत्वे बोधितेऽन्यथासिद्धिपरिहाराय गुर्वप्यवच्छेदकं कल्प्यते । [6]फलमुखत्वेन तस्यादोषत्वात् ।

यदप्युक्तम् एवं सति प्रायश्चित्तस्थलीयमङ्गलवैफल्यप्रसङ्ग इति । [7]तदयुक्तम् । तवापि विघ्नभ्रमकृतनिर्विघ्नस्थलीयमङ्गलस्य [8]विघ्नानिवर्तकत्वेन दोषसाम्यात् । यदि च वर्तमानविघ्नस्थलीयमङ्गलस्य तत्कारणत्वमित्यन्यत्र तद्वैफल्येऽपि नानिष्टम्,

---

1. ख. अन्यथासिद्धमावा-
2. क. 'अपि' नास्ति ।
3. ख. कार्यादि-
4. ख. सुवचकत्वात्
5. ख. समाप्तित्वासा-
6. क. फलमुखगौरवस्यादोषत्वात् ।
7. क. तदप्ययुक्तम्
8. ख. 'विघ्नानिवर्तकत्वेन ... ॰स्थलीय मङ्गलस्य' इति ग्रन्थस्त्रुटितः ।

प्रकाशः

केचित्तु विघ्नध्वंसोऽपि न फलम्, किं तु विघ्नानुत्पादः। विघ्नो मे मा भूदित्युद्दिश्य प्रवृत्तेः, न तु विघ्नो मे निवर्ततामिति। अत एव दुःखं मे मा भूदिति कामनया क्रियमाणस्य प्रायश्चित्तस्य दुःखानुत्पाद एव फलमित्याहुः।

---

न्यायशिखामणिः

तदास्यापि मङ्गलस्य स्वोद्देश्यकार्यप्रतिबन्धकवर्तमानविघ्नसमसंख्य[1]मङ्गलत्वरूपावच्छेदकानवच्छिन्नत्वाद्वैफल्येऽपि न दोष इति तुल्यमित्याहुः।

तच्चिन्त्यम्। यदीष्टसाधनत्व[2]बोधार्थं श्रुत्यनुमानं तदेवं भवेत्। न चैवम्, अविनाभावादेव तदनुमानमि[3]त्यस्याग्रे स्फुटत्वात्। तथा चाचारादेव मङ्गलस्य फले कल्पनीये यत्र लाघवं तदुपादेयम्। विघ्नस्थलीयमङ्गलस्य च प्रायश्चित्ताजन्यविघ्नध्वंसं प्रति हेतुत्वे लाघवमिति स एव फलम्, न तु समाप्तिरुक्तगौरवात्। एवं च प्रायश्चित्तस्थलीयमङ्गकृतं च मङ्गलमनुगृहीतं भवति। तयोर्विशिष्टसमाप्त्यजनकत्वेऽपि विघ्ननिवर्तकत्वेन सफलत्वात्।

किं चास्मन्मते समाप्तिमात्रे लोकावगतमेव कारणमिति लाघवम्। त्वन्मते तु [4]मङ्गलाप्रयुक्तविघ्नाभावस्थलीयसमाप्तौ सुकृतसंपत्तेर्विघ्नस्थलीयसमाप्तौ तादृशमङ्गलस्य कारणत्वमिति गौरवम्।

अपि च यत्र बहुभिर्मङ्गलैर्बलवत्तरैरेकविघ्ननिवृत्तिः, यत्र च बलवत्तरैकमङ्गलेन बहुविघ्ननिवृत्तिस्तत्रोभयत्र तादृशमङ्गलाभावाद्व्यभिचारः। न चैतन्निरासाय अवच्छेदके विशेषणान्तरं दीयत इति वाच्यम्। तथा सत्यतिगौरवप्रसङ्गात्। तस्माद्विघ्नध्वंस एव मङ्गलफलमिति युक्तम्। तदेतत्सर्वमभिसंधायाह— संक्षेप इति।

ननु विघ्नध्वंसो न फलम्। निर्विघ्नस्थले सत्यपि मङ्गले तदभावात्। न च स्वोद्देश्यकार्यप्रतिबन्धकदुरितसमानकालीनमङ्गलत्वं कारणतावच्छेदकमिति न व्यभिचार इति वाच्यम्। तथा सति गौरवप्रसङ्गात्। न चानन्यगत्या गुर्वपि तथा-

---

1. ख. °मङ्गलरूपा-
2. क. °बोधनार्थम्
3. ख. घ. °इत्यग्रे
4. ख. मङ्गलप्रयुक्त-

प्रचिताप्रचितदेवतास्तुत्यादिसाङ्गमङ्गलात् प्रत्येकं विघ्नध्वंसो भवत्येव। अतो वैदिके फलनिश्चयान्मङ्गले प्रवृत्तिः। न च वेदाप्रामाण्यम्।

---

**प्रकाशः**

प्रचितेति। तथा च [1]तत्तद्विघ्नध्वंसं प्रति तत्तन्मङ्गलस्य हेतुत्वमिति भावः। न चैवं मङ्गले प्रवृत्तिर्न स्यादिति वाच्यम्। प्रायश्चित्ताद्यनाश्यविघ्नध्वंसं प्रति सामान्यत एव कारणता, विशेषतोऽपरा। तथा च सामान्यकारणताज्ञानात्प्रवृत्तिरिति भावः।

---

**न्यायशिखामणिः**

स्त्विति युक्तम्। विघ्नप्रागभावः फलम्, तज्जनकतायां मङ्गलत्वं [2]लाघवादवच्छेदकमिति गतिसत्त्वात्। न च तत्त्वज्ञानिकृतमङ्गले सत्यपि विघ्नानुत्पादादर्शनाद्व्यभिचार इति वाच्यम्। सर्वत्र तत्त्वज्ञान[3]शून्यत्वस्याधिकारिविशेषणत्वेन तद्वैफल्यस्येष्टत्वात्। अन्यथा तत्कृतज्योतिष्टोमादा[4]वप्यगतेः। न च तत्त्वज्ञानाव्यवहितपूर्वसमये मङ्गलं क्रियत इत्यत्र मानमस्ति, येन व्यभिचारः स्यादित्यस्वरसात् जयदेवमतमाह—केचित्त्विति। अन्यथा सर्वत्र मङ्गलस्थले विघ्नो निवर्ततामिति कामनापत्तेरिति भावः।

आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु, विघ्नानुत्पादस्यैव फलत्वे विघ्नो निवर्ततामिति कामनया मङ्गले प्रवृत्तिः कदापि न स्यादिति। वस्तुतस्तु विघ्नध्वंसोऽपि फलम्। तथा च द्वय्यपि कामना उपपद्यते। न चाननुगमः, प्रायश्चित्ताजन्यविघ्नकादाचित्काभावत्वस्य कार्यतावच्छेदकत्वात्। एवं च मूले विघ्नध्वंस [5]इत्येतत् प्रागभावस्य, मा भूदिति च [6]निवर्ततामित्यस्योपलक्षणम्। तथा च न विघ्नध्वंसफलत्वप्रतिज्ञाविरोधः। अत [7]एव विघ्नाभावस्याकाङ्क्षिततया विघ्नाभावः [8]फलमित्यनुपदमेव विभावयिष्यति।

ननु न मङ्गलस्य विघ्नमात्रनिवर्तकत्वम्, मङ्गलान्तरवैयर्थ्यात्। नापि [9]स्वसमसंख्यविघ्ननिवर्तकत्वम्। प्रशस्तदेशकालविद्याश्रद्धाद्यङ्गसचिवदेवतास्तुत्यादि-

---

1. क. 'तत्तद्' नास्ति
2. घ. लघ्ववच्छेदक-
3. ख. °शून्यत्वाधिकारि-
4. क. °वगतेः
5. ख. इत्येव
6. क. मा वर्तताम्
7. ख. एवम्
8. ख. घ. फलमिति चानुपदं तथैव
9. क. स्वसमविघ्न-

**समाप्त्यभावश्च क्वचित् प्राचीनविघ्नभूयस्त्वात्, क्वचिन्मङ्गलानन्तरोत्पन्नविघ्नात्, क्वचिल्लोकावगतकारणाभावात्। प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विना। न च प्रायश्चित्तेन शङ्कितविघ्नविनाशः। विघ्नसंशये तदनुपदेशात्। न च कामनोपाधिकर्तव्यत्वे नियतमनुष्ठानं न स्यादिति वाच्यम्। आरब्धकर्मकारणप्रतिबन्धकाभावोपायत्वेनावश्यं तदनुष्ठानात्। तेन विना प्रतिबन्धकाभावाभावात् कर्मानुत्पत्तेः। न च प्रधानत्वेनान्यदापि तत्करणम्। नियतसमयशिष्टाचारानुमितश्रुत्या कर्मारम्भसमये तत्कर्तव्यत्वबोधनात् दर्शारम्भसमये आरम्भणीयावत्। विघ्नसंसर्गाभावश्च समाप्तिहेतुः।**

---

**प्रकाशः**

ननु विघ्नध्वंसोऽपि मङ्गलव्यभिचारी कथं तत्फलं स्यादित्यत आह—**प्रारिप्सितेति**। (नतु) [ननु] प्रारिप्सितं विघ्नध्वंसे विशेषणमुपलक्षणं वा। आद्ये प्रारिप्सितस्यापि फलत्वापत्तिः। अन्त्ये व्यभिचारतादवस्थ्यम्। कर्मारम्भकालीनगङ्गास्नानादिना प्रारिप्सितसमाप्त्युपलक्षितविघ्नध्वंससंभवादिति चेत् न। तस्योपलक्षणत्वात्। न च व्यभिचारः। प्रायश्चित्ताद्यनाश्यविघ्नध्वंसे तात्पर्यात्। **आरम्भणीयावदिति**। तथा च दर्शारम्भसमयस्तदङ्गमिति भावः। ननु मङ्गलवत्तज्जन्यविघ्नध्वंसस्य व्यभिचारेण कथं समाप्तिहेतुत्वमित्यत आह—**विघ्नेति**। विघ्नध्वंसत्वेन

---

**न्यायशिखामणिः**

रूपमङ्गलस्यैकस्यापि बलवत्तरत्वेन बहुविघ्ननिवर्तकत्वात्। अन्यादृशस्य च दुर्बलबहुमङ्गलस्य बलवत्तरैकविघ्ननिवर्तकत्वादित्याशङ्क्य, अस्तु तादृशमङ्गलस्य प्रत्येकमेव बहुविघ्ननिवर्तकत्वम्। अन्यादृश[1]बहुमङ्गलस्यैकविघ्ननिवर्तकत्वमित्युक्तमयुक्तम्, उक्तदोषानुद्धारादित्याशङ्क्य, किमेतावतावच्छेदकाभावः अनुगततदभावात् प्रवृत्त्यनुपपत्तेर्वा। तत्राद्यं निरस्यति—**तथाचेति**।

द्वितीयं [2]निराचष्टे—**न चेति**। **सामान्यकारणतेति**। मङ्गलत्वावच्छिन्नतत्कारणतेत्यर्थः। तथा च अत इति मूलमेतत्परमिति भावः।

उपाध्यायोक्तदोषमाह—**नन्विति**। **व्यभिचारेणेति**। विघ्नध्वंसत्वेन

---

1. क. 'बहु' नास्ति    2. क. निरस्यति

स च क्वचित् स्वतःसिद्धः क्वचिन्मङ्गलसाध्यः। अत एव मङ्गलं विनापि जन्मान्तरानुवर्तमानविघ्नात्यन्ताभावात् प्रमत्तनास्तिकानुष्ठितसमाप्तिः। न चानध्यवसायः। शङ्कितविघ्नवारणार्थं प्रवृत्तिरतो यावद्विघ्नशङ्कं तदाचरणात्। अत एव तच्छङ्कया मध्येऽपि तदाचरन्ति। गुर्वारम्भेऽपि बहुविघ्नशङ्कया बहुमङ्गलाचरणम्। यथा च विघ्नसंशयेऽपि प्रवृत्तिस्तथोक्तमेव।

स्यादेतत्। मङ्गलमाचरेदिति विधौ किं मङ्गलत्वम्। न तावद्देवतास्तुत्यादित्वम्, अननुगमात्। नापि प्रारिप्सितप्रतिबन्धकविघ्नोपशमहेतुक्रियात्वम्, विघ्नोत्सारणासाधारणकारणत्वं वा। क्रियाविशेषस्य तदसाधारणकारणस्य वा स्तुत्यादेर्वेदाद्विशिष्टापरिचये प्रवृत्तिविषयालाभात्।

---

प्रकाशः

तस्य न हेतुत्वम्, किं तु विघ्नसंसर्गाभावत्वेन। तथैव प्रतिबन्धकाभावस्य हेतुत्वात्, तथा च नोक्तदोष इति भावः।

लाघवान्मङ्गलमाचरेदित्येव श्रुतिकल्पनमिति ये मन्यन्ते तन्मतं दूषयितुमाह—स्यादेतदिति। नापीति। वृष्टिप्रतिबन्धकदुरितनाशककारीर्यामतिव्याप्तिवारणाय—प्रारिप्सितेति। प्रारिप्सितगमनप्रतिबन्धककुडयोपशमहेतु-

---

न्यायशिखामणिः

तस्य न समाप्तिहेतुत्वम्। तत्प्रागभावादपि तदुत्पत्तेर्व्यभिचारात्। न च तत्संसर्गाभावत्वेन, मानाभावादिति भावः। तत्र मानमाह—तथेति। ननु मङ्गलत्वाक्षेपो न युक्तः, 'देवतास्तुतिमाचरे'दित्यादिप्रत्येकमेव विधिरिति पक्षे तस्य प्रकृतासंगतत्वात्। [1]स्तुत्यादेर्वेदाद्विशिष्यापरि[2]चयात् इत्यग्रिमदूषणासंगतेश्चेत्यत आह—लाघवादिति। ननु प्रारिप्सितेति व्यर्थम्। विघ्नपदेनैव प्रारिप्सितप्रतिबन्धकदुरितपरेण कारीर्यां दोषवारणादित्याशङ्क्यात्र विघ्नपदं दुरितपरमित्यभिप्रेत्याह—वृष्टीति। सा च कृत्यसाध्यत्वान्न प्रारिप्सितेति भावः।

---

1. ख. तुत्यादेः 2. घ. ०चयः

नापि निर्विघ्नं समाप्यतामिति कामनया शिष्टाचारविषयत्वम्; वेदस्याचारानुपजीवकत्वात्, वेदाद्याचारानुपपत्तेश्च, अन्योन्याश्रयात्।

---

प्रकाशः

क्रियायामतिव्याप्तेराह—विघ्नेति। विघ्नोपशमहेतुक्रियात्वं तदुपशमार्थितया क्रियमाणत्वम्। तेन प्रतियोगिनि विघ्ने अदृष्टादौ च नातिप्रसङ्गः। यदि च विघ्नं निश्चित्य तादृशविघ्नोपशमार्थितया प्रायश्चित्ताचरणं संभवति, तदा तदन्यत्वेनापि विशेष्यम्। विघ्नोत्सारणेति। विघ्नत्वं च प्रारिप्सितप्रतिबन्धकदुरितत्वम्। तेन कारीर्यां नातिप्रसङ्गः। अदृष्टादावतिव्याप्तेराह—असाधारणेति। तथा च तादृशविघ्नध्वंसमात्रनिष्ठकार्यताप्रतियोगिककारणतावच्छिन्नत्वमिति फलितार्थः। एवं च ध्वंसत्वावच्छिन्नं प्रति स्वप्रतियोगित्वेनैव यन्मते हेतुता तन्मते इदं बोध्यम्। तेन प्रतियोगिनि विघ्ने नातिप्रसङ्गः। यन्मते तत्तद्ध्वंसत्वावच्छिन्नं प्रति तत्तत्प्रति-

---

न्यायशिखामणिः

न चैवमपि प्रतिबन्धकपदवैयर्थ्यम्। तदनुपादाने दुरितपदेन [1]प्रारिप्सितपदस्य षष्ठीसमासे तादृशनिषिद्धकर्मप्रवर्तकपापनिवर्तकप्रायश्चित्तेऽतिप्रसङ्गात्। कर्मधारये दुरितस्य दुःखजनकत्वेन कृत्यसाध्यत्वेन च प्रारिप्सितत्वाभावात् तद्घटितलक्षणाप्रसिद्धेरिति भावः। अदृष्टादाविति। आदिपदाद्दुरितप्रयुक्तसमाप्ति[2]प्रतिबन्धकदुःखात्मकभोगपरिग्रहः। ननु विघ्नपदस्यात्रापि दुरितपरत्वे [3]कारीर्यादावतिव्याप्तिरित्यत आह—विघ्नत्वं चेति।

ननु न तन्मात्रजनकत्वमसाधारणत्वम्। [4]स्वध्वंसादावपि मङ्गलस्य जनकत्वात्। न च विघ्नध्वंसत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम्। प्रायश्चित्तजन्यविघ्नध्वंसेऽपि तस्य सत्त्वेन तत्कार्यतानवच्छेदकत्वादित्यत आह—तथा चेति। तादृशविघ्नध्वंसमात्रनिष्ठेति। प्रारिप्सितप्रतिबन्धकदुरितध्वंसेतरावृत्ती-

---

1. ख. 'प्रारिप्सितपदस्य......कृत्यसाध्यत्वेन च' इति ग्रन्थस्त्रुटितः।
2. ख. •प्रतिबन्धजन्यदुःखाकरमाग-
   घ. प्रतिबन्धकजन्यदुःखात्मक-
3. ख. कारीर्यामति-
4. ख. घ. 'स्व' नास्ति।

नापि तत्कामनया वेदविहितत्वम्, प्रारिप्सितकर्मनिर्वाहकत्वे सति कर्मारम्भकाले विहितवैदिककर्मत्वं वा, तादृशवेदान्तगभावात्। नापि स्मृत्यादौ मङ्गलत्वेनोत्कीर्तितत्वम्। वेदस्य स्मृत्यनुपजीवकत्वात्। स्मृतिकर्तुरेव वेदादाद्याचारानुपपत्तेश्च।

---

प्रकाशः

योगिनो हेतुत्वं तदा तदन्यत्वेनापि विशेषणीयम्। अत एव द्रव्यप्रकाशादौ 'प्रतिबन्धकान्यस्य सत' इति विशेषणं संगच्छते। न च प्रायश्चित्तेऽतिप्रसङ्गः, तस्य निरुक्तविघ्नभिन्नपापध्वंसेऽपि योग्यत्वादित्येके। प्रारिप्सितप्रतिबन्धकविघ्नो न प्रायश्चित्तनाश्यः, किं तु नरकजनक एव [1]विघ्न इत्यप्याहुः।

अन्योन्याश्रयादिति। वेदे प्रवृत्ते ततो मन्वाद्याचारः, तदाचारविषयतया च सिद्धं मङ्गलत्वमादाय वेदप्रवृत्तिरित्यन्योन्याश्रयादित्यर्थः।

प्रारिप्सितेति। आरम्भणीयायामतिव्याप्तेराह सत्यन्तम्। गङ्गास्नानादा[2]वतिव्याप्तेराह—कर्मारम्भेति। लेखनप्राक्कालिकपत्रमर्दनादावतिव्याप्तिवारणाय—विहितेति। विहितत्वं च स्वातन्त्र्येण बोध्यम्। तेन [3]प्रयाजादौ नातिप्रसङ्गः। यदि वैदिकपदमस्ति तदा तत एवोक्तातिव्याप्ति[4]वारणात् विहितपदं बोधितपरं बोध्यम्। तादृशेति। यन्निबन्धनं विहितत्वमादाय मङ्गलत्वपुरस्कारेण

---

न्यायशिखामणिः

त्यर्थः। न च तादृशदुरितनिवृत्त्यर्थतया क्रियमाणत्वविवक्षयात्रापि [5]दोषनिवारणे गुरुविवक्षावैयर्थ्यमिति वाच्यम्। तथा सत्यसाधारणपदवैयर्थ्यापत्तेः। तदनुपादाने पूर्वाभेदप्रसङ्गात्। न चैवं भोगेऽतिव्याप्तिः। तदन्यत्वेनापि विशेषणीयत्वादिति भावः। तदन्यत्वेनेति। दुरितान्यत्वेनेत्यर्थः।

गङ्गास्नानादाविति। आदिपदात् स्वरूपोपकार्यङ्गपरिग्रहः। स्वातन्त्र्येणेति। एतच्चापाततः। कर्मारम्भेत्यादिविशेषणेनैव प्रयाजादिवारणात्। ननु 'मङ्गलमाचरे'दिति वेदस्याचारानुमितस्य सत्त्वात् कथं तदभाव इत्याशङ्क्य न

---

1. ख. 'विघ्न' नास्ति।
2. ख. °वतिव्याप्तिवारणाय कर्मा-
3. ख. प्रयोजनादौ
4. क. °वारणं
5. ख. 'विघ्ने दोष'

उच्यते । मङ्गलमाचरेदिति न विधिः । किं तु निर्विघ्नसमाप्तिकामो देवतास्तुतिमाचरेदित्यादि प्रत्येकमेव विधिः । तथैव शिष्टाचारात् । तदुपजीव्य निर्विघ्नमारब्धं परिसमाप्यतामिति कामनया तद्विघ्नोपशमहेतुत्वेन वा वेदविहितत्वं मङ्गलत्वमित्यधिगम्य देवतास्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानामिति ।

---

प्रकाशः

वेदान्तरेऽपि प्रवृत्तिरिति शेषः । भावे [1]वा किमनेनेति भावः । वेदादिति । न चेश्वरेण स्मृतिप्रणयनं, मानाभावादिति भावः ।

निर्विघ्नमिति । एतच्च संप्रदायमते । स्वमते तु प्रारिप्सित[2]प्रतिबन्धकविघ्नध्वंसकाम इति बोध्यम् । तथैवेति । प्रत्येकमेवेत्यर्थः । तदुपजीव्येति । प्रत्येकविधानानन्तरमेवेत्यर्थः । [3]मङ्गलत्वपुरस्कारेणापि न वेदान्तरकल्पनं वैयर्थ्यादिति भावः ।

---

न्यायशिखामणिः

ह्येतदभावोऽत्र विवक्षितः । किं त्वस्य वेदस्य [4]यद्वेदघटितमङ्गलत्वपुरस्कारेण प्रवृत्तिः तद्वेदाभाव इत्याह—यन्निबन्धनमिति । ईश्वरेणेति न तु मन्वादिना, येन वेदात् स्मृतिघटितमङ्गलत्व[5]ज्ञानासंभवेन मङ्गलाद्याचारानुपपत्तिः मन्वादिकर्तृकतद्विषयस्मृतिप्रणयनानुपपत्तिश्च स्यादिति भावः । मानाभावादिति । न च—

'धर्मशास्त्रादिविद्यानां श्रुतीनां प्रवर्तिनाम् ।
आदिकर्ता शिवः साक्षात्'

इत्यादिवचनं प्रमाणमिति वाच्यम् । तस्य धर्मात्मपरश्रुतिकर्तृत्वपरत्वात् । अन्यथा—

'मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥'

---

1. क. च
2. ख. 'प्रतिबन्धक' नास्ति ।
3. ख. मङ्गलपुर-
4. क. यद्वेदत्वघटित-
5. ख. ज्ञानसंभवेन

अत एव दुरितनाशकमपि गङ्गास्नानादि न मङ्गलम्। तथा अविधानात्।

'मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्।
जपतां जुह्वतां चैव विनिपातो न विद्यते॥'

इत्यनेन बोधितादर्शदर्शनादेः पृथगेव मङ्गलत्वम्, न तु विघ्ननिवर्तकतया, तत्र नानार्थतैव। अन्यथा ग्रन्थारम्भे नमस्कारतुल्यतया तत्करणप्रसङ्गः।

---

### प्रकाशः

[1]**तथेति**। [2]निर्विघ्नं समाप्यतामिति कामनयेत्यर्थः। अत एव प्रायश्चित्तादावपि नातिप्रसङ्ग इति भावः। नन्वादर्शदर्शनादिकमपि मङ्गलम्, न [3]तु तस्य विघ्नोपशमहेतुत्वमित्यत आह—**मङ्गलेति**। **पृथगिति**। पारिभाषिकमित्यर्थः। ननु 'विनिपातो न विद्यत' इति स्वरसाद्विघ्न[4]निवर्तकत्वमेवेत्यत आह—**अन्यथेति**। तथा च प्रत्यवायपरिहारार्थमेवेत्यर्थः [ र्थत्वमेवेत्यर्थः ]।

---

### न्यायशिखामणिः

इत्यादिस्मृतिविरोधापत्तेरिति भावः। ननु मङ्गलत्वनिरुक्तिसंभवे तत्पुरस्कारेणापि श्रुतेः कल्पयितुं शक्यत्वात् प्रत्येकमेव विधिरित्यसंगतिरित्यत आह—**मङ्गलत्वेति**। **वैयर्थ्यादिति**। आवश्यकप्रत्येकविधिनैव देवतास्तुत्यादौ प्रवृत्तिसंभवादिति भावः। ननु तथाशब्देन विघ्नोपशमकामनापरामर्शे सर्वपाप[5]निवृत्त्यर्थतया विहितगङ्गास्नानादेस्तत्कामनयापि विहितत्वात् [6]तथा विधानाभावादित्ययुक्तमित्यत आह—**निर्विघ्नमिति**। एतच्च प्रथमलक्षणाभिप्रायेण। द्वितीयलक्षणे तु विघ्नत्वप्रकारकतन्निवृत्तिकामना बोध्या। [7]**न त्विति**। विघ्ननिवृत्तिकामनया तस्य [8]शिष्टैरक्रियमाणत्वादिति भावः। ननु फलान्तराभावाद्विघ्नध्वंसः फलं कल्प्यत इत्यत आह—**तथा चेति**।

---

1. ख. तयेति
2. क. निर्विघ्नसमाप्तिकामनया
3. क. 'तु' नास्ति।
4. ख. °निवर्तकमेव
5. ख. °निवृत्त्यर्थितया
6. क. तया
7. क. ख. नन्विति।
8. ख. घ. विशिष्टै-

अथशब्दो विघ्ननिवर्तकत्वान्मङ्गलमेव ।
'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥'
इति स्मृतेः ।

न च शुभसूचकत्वमेव तस्य, शास्त्रारम्भे महर्षिणा तदनुपादानप्रसङ्गात् । गुणवत्तया ज्ञापनं स्तुतिः ।

---

प्रकाशः

जुहुतामिति हि न होमान्तरविधिः, वाक्यभेदापत्तेः । तथा च प्राप्तपापानुत्पादफलस्याग्निहोत्रस्यैवायमर्थवाद[1] इति निश्चीयते । तदनुरोधेन च प्रागभावपरस्य नपदस्य ध्वंसपरत्वे वाक्य[2]भेदापत्तिरिति भावः ।

अथशब्द इति । यद्यप्यथशब्दो ग्रन्थान्तर्गतः तत्कथं मङ्गलम्, तस्य तज्जन्यत्वात्; तथापि तदुच्चारणहेतुज्ञानं तत्र मङ्गलम्, तद्बहिर्भावेनैव वा ग्रन्थ इति वदन्ति ।

---

न्यायशिखामणिः

ननु घटनाशानन्तरं कपालमालायां घटो नेति [3]नञ्पदप्रयोगस्य ध्वंसेऽपि [4]दर्शनात् स एवात्रापि तेनाभिधीयतामित्याशङ्क्य किं जपहोमादेरपि तद्ध्वंसफलकत्वम्, उतादर्शदर्शनादेरेव । तत्राद्येऽपि किमेष फलविशिष्टकर्मान्तरस्य विधिरनुवादो वा, तत्राद्य आह—जुहुतामिति । वाक्येति । विशिष्टविधानलक्षणेति शेषः । स चानुवादसंभवे न युक्त इति भावः । अस्तु तर्ह्यनुवाद इत्याशङ्क्य तथापि न त्वदभिमतफलविशिष्ट[5]कर्मानुवाद इत्याह—तथा चेति । अर्थवाद इति । अनुवादरूप इति शेषः । अन्त्यं दूषयति—तदनुरोधेनेति । अनुवादानुरोधेनैकस्यैव नञ्पदस्य जपहोमाद्यंशे प्रत्यवायप्रागभावपरस्यादर्शदर्शनाद्यंशे तद्ध्वंसपरत्वेऽङ्गीक्रियमाणेऽनेकार्थत्वेन वाक्यभेदापत्तेरित्यर्थः ।

---

1. क. अनुवादः
2. क. ॰भेदापत्तेः
3. ख. तन्त्रपद
4. क. सत्त्वात्
5. ख. ॰कामानुवादः

**प्रकाशः**

**ओंकार** इति । पुरा सिसृक्षोर्ब्रह्मणो मङ्गलानुष्ठानकाले इमौ शब्दौ निर्यातौ । ततस्तत्कालानुष्ठानविषयत्वेन माङ्गलिकावित्यर्थः । **गुणवत्तयेति** । गुणवत्तया ज्ञानजननस्वरूपयोग्यशब्दत्वमित्यर्थः ।

यद्यपि दान[1]दाक्षिण्यादिसाधारणस्य गुणत्वस्याभावादननुगमः, तथापि चेतने उत्कृष्टशब्दविषयताप्रयोजकत्वेन दानादेरनुगम इत्याहुः ।

---

**न्यायशिखामणिः**

वदन्तीत्यस्वरसोद्भावनम्, तद्बीजं तु न तावत्तदुच्चारणहेतुज्ञानस्य मङ्गलत्वं मानाभावात् । ओंकार इत्यादेश्च [2]तत्प्रमाणत्वे लक्षणापत्तेः । नापि ग्रन्थबहिर्भूतस्याथशब्दस्य तथात्वम् । अथशब्दमात्रस्य मङ्गलत्वस्मरणात्, [3]बाधकाभावेन तद्विशेषपरत्वकल्पनायोगात् । न च [4]तदन्तर्भूताथशब्दस्य मङ्गलत्वे [5]तज्जन्यत्वानुपपत्तिर्बाधिकेत्युक्तमिति वाच्यम् । न ह्यथशब्दोच्चारणेऽपि मङ्गलापेक्षा, किं तु महावाक्यरचनायाम् । तत्र च [6]तदन्तर्भूतसर्ववाक्यानां कारणत्वाभ्युपगमेनाथशब्दस्यापि तत्त्वे विरोधाभावादिति ।

**मङ्गलानुष्ठानेति** । यद्यपि तदनुष्ठानकालोऽत्र न प्रतीयते । शब्दस्य तत्रासामर्थ्यात् । तथापि तस्मादिति हेतुवाक्यानुरोधात् तदवगमः । अन्यथा कार्यपूर्वकालीनत्वस्य मङ्गलत्वव्यभिचारिणस्तेन [7]परामर्शानुपपत्तेः । ननु [8]स्तुतित्वादेरनिर्वचनात् कथं तत्पुरस्कारेण श्रुतिकल्पनमित्याशङ्क्य गुणवत्तयेत्यत्र स्तुतित्वं निरुक्तमयुक्तम् अतिप्रसङ्गात्, [9]गुणाज्ञानदशायामव्याप्तेश्चेत्यत आह – **गुणेति** । [10]**उत्कृष्टेति** । उत्कर्षपदप्रवृत्तिनिमित्तत्वेनेत्यर्थः ।

ननु लोके नगनगर्यादि, वेदे च विधेययागाद्यचेतनं स्तूयते । तत्रेदमव्याप्तम् । न च तत्र स्तुतेर्भाक्तत्वम्, मुख्यत्वे बाधकाभावात् । न चात्र स्तुतिव्यवहारोपयोगि स्तुतित्वं न प्रकृतम्, किं तु विघ्नध्वंसजनकतावच्छेदकरूपमिति

---

1. ख. °दाक्षिण्यसा-
2. क. प्रमाणत्वेन
3. क. बाधकाभावे तद्भिन्नपरत्व-
4. क. तदन्तर्गत-
5. क. तज्जनकत्वा-
6. क. घ. तदन्तर्गत-
7. ख. घ. परामर्शापत्तेः
8. ख. स्तुतित्वादेरिति निर्व-
9. ख. गुणज्ञान-
10. ख. उत्कर्षेति ।

यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलो व्यापारविशेषः स तस्य नमस्कारः। व्यापारे च कायिकवाचिकमानसिकरूपे विशेषो जातिविशेष एवानुभवसाक्षिकः। करशिरस्संयोगमात्रे तद्व्यवहारात्, भवतोऽहमपकृष्ट इत्यादिवचने तद्व्यवहाराच्च।

---

प्रकाशः

यमुद्दिश्येति। तथा च ज्ञानत्वादिव्याप्यजातीनां स्वापकर्षबोधानुकूलत्वावच्छेदकत्वेनानुगतीकृतानां नमस्कारपदप्रवृत्तिनिमित्तत्वम्। यथा सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातित्वेनानुगतीकृतानां [जातीनां] तारपदप्रवृत्तिनिमित्तत्वम्। न तु कायिकादिष्वेकैव जातिरभिमता, [1]जातिसंकरापत्तेरिति भावः।

---

न्यायशिखामणिः

नोक्ताव्याप्तिर्दोष इति वाच्यम्। येन शब्देन देवदत्तः स्तूयते तस्यापि विघ्ननिवर्तकत्वापत्तेः। न च यच्चेतनव्यक्तिविशेषस्तुत्या विघ्ननिवृत्तिस्तच्चेतनविशेषो विवक्षित इति युक्तम्। ततोऽपि लाघवात् यद्व्यक्तिविशेषस्तुत्या तन्निवृत्तिस्तद्विशेष इति विवक्ष्यताम्। तस्मात् स्तुतिसामान्यनिर्वचने तद्विशेषनिर्वचने [2]वा चेतनपदान्तर्भावो नावश्यक इत्यस्वरसं सूचयति—आहुरिति।

ननु मूले नमस्कार[3]विशेषलक्षणमयुक्तम्, सामान्यलक्षणानभिधानात्। न च यमुद्दिश्येति पदान्तर्भावबहिर्भावाभ्यामिदमेवोभयलक्षणम्। तथापि स्तुतावतिव्याप्तेः। न च मात्रपदान्तर्भावः, स्तुत्या चोत्कर्षस्यापि बोधनान्नातिव्याप्तिरिति वाच्यम्। तथापि यत्र वाचिकनमस्कारे तदुभयाभिधानं तत्राव्याप्तेः। किं च [4]मानसनमस्कारस्य बोधात्मकत्वेन तज्जनकत्वघटितलक्षणाव्याप्तिः। न च तस्य द्वितीयादिबोधस्वरूपयोग्यत्वान्न दोष इति वाच्यम। मानसे यत्रोत्कर्षापकर्षोल्लेखस्तत्र तथाप्यव्याप्तेः। अपि च कायिकेऽव्याप्तिः, [5]तत्र तस्यासामर्थ्यादित्याशङ्क्य स्तुत्यवृत्तिस्वापकर्षबोधजनकतावच्छेदकजातिमान् व्यापारो नमस्कार इति विवक्षितम्। तथा च स्तुतौ नातिव्याप्तिः। तदवृत्तिजात्यभावात्। यमुद्दिश्य यः

---

1. ख. 'जाति-' नास्ति।
2. क. च
3. ख. °विशेषणमयुक्तम्
4. क. मानसिक-
5. ख. 'तत्र तस्यासामर्थ्या .... नातिव्याप्तिः' इति भागः नास्ति।

यद्वा कायिकादौ प्रत्येकमेव विधिकल्पनमतो नानार्थतैव ।

---

**प्रकाशः**

नमस्कारपदस्य प्रत्येकजातिप्रकारकज्ञानजनकत्वात् नानार्थतैव । अन्यथा अक्षादिपदेऽपि सा न स्यात् । तदन्यान्यत्वादिना कथंचित्तत्राप्यनुगमसंभवात् । यदि च तत्प्रकारक[1]ज्ञानाभावान्न तथा, तदा प्रकृतेऽपि तुल्यमिति ये मन्यन्ते तन्मतमाह—**यद्वेति** । वस्तुतो वाचिकादिनमस्कारेषु देवदत्तीयत्वानुमापकानन्तजातिमनुमायानन्तवेदकल्पनापत्त्या प्रत्येक[2]जातिप्रकारकज्ञानजनकत्वमसिद्धम् । न ह्यनन्ततज्जातिप्रकारकज्ञानजनकत्वं शक्याभ्युपगमम् । अन्यथा तारादिपदानामपि नानार्थतापत्तिरिति पूर्व एव कल्पः साधुरिति ध्येयम् । न चैवं नमस्कारभेदसिद्धिः कथमिति वाच्यम् । उपाधिभेदात्तदुपपत्तेरित्याहुः ।

---

**न्यायशिखामणिः**

शिरस्यञ्जलिं बध्नाति स ततोऽपकृष्ट इति प्रतीतेः कायिकेऽपि तादृशजातिसत्त्वान्नाव्याप्तिः । यद्यपि लिङ्गविधया तस्य ज्ञापकत्वाद्दोषतादवस्थ्यम्, तथापि लिङ्गकारणतावादिमते तत्सत्त्वादित्यभिप्रेत्य । एवं सति नानार्थत्वशङ्कां निरस्यति—**तथा चेति** । **स्वापकर्षेति** । स्तुत्यवृत्ति इति शेषः ।

ननु तादृशजातिमद्व्यापारत्वमेव नमस्कारपदप्रवृत्तिनिमित्तमस्तु, उपाधित्वेऽप्येकत्वेन लाघवादित्याशङ्क्य उक्तयुक्त्या जातेरेवावच्छेदकत्वे सिद्धेऽननुगमपरिहाराय तत्रानुगमकधर्मकल्पनैव युक्तेत्याशयेनानुरूपदृष्टान्तमाह—**यथेति** । उक्तप्रकारेणैकार्थत्वसंभवे नानार्थत्वपक्षानुत्थितिरित्याशङ्क्य तात्पर्यमाह—**नमस्कारपदस्येति** । **उपाधीति** । तादृशजातिविशेषवत् करशिरस्संयोगत्वादिरूपोपाधिभेदादित्यर्थः ।

ननु संयोगत्वादिना [3]संकरपरिहाराय वाचिकवृत्तिजातिः कायिकवृत्तिजातेरन्येत्यभिमतं न युक्तम् । वक्ष्यमाणयुक्त्या तस्याश्चरमवर्णवृत्तित्वाभ्युपगमात् । तस्य च क्वचित्ककारता क्वचिद्गकारतेत्यनेकवर्णात्मकत्वात्तद्वृत्तिजातेर्गकारत्वादिना संकरापत्तेरित्याशङ्क्य भवतु तस्याश्चरमवर्णवृत्तित्वम् । तथापि न संकरः । गत्वादि-

---

1. ख. °ज्ञानासंभवात्
2. ख. 'जाति' नास्ति
3. क. संकरप्रसङ्गवारणाय

यत्तु—बुद्धिविशेषपूर्वकत्वज्ञानं विना कायिकादौ न तद्व्यवहार इति स एव वाच्योऽन्यत्र लक्षणेति—तन्न। कायिकादिव्यापारविशेषमनवगम्य बुद्धिविशेषपूर्वकत्वाज्ञानात्।

---

**प्रकाशः**

अत्र च वाचिकनमस्कारे चरमवर्ण[1]वृत्तिरेव नमस्कारत्वजातिः। न च विनिगमनाविरहः। [2]मध्यादिवर्णवृत्तित्वे चरमवर्णज्ञानं विनापि [3]तत्प्रत्यक्षताप्रसङ्गात्। [4]तदपेक्षायां मध्यवर्णनाशादप्रत्यक्षताप्रसङ्गात्। चरमवर्णवृत्तित्वे च पूर्वपूर्ववर्णसंस्कारसहकृतचरमवर्णस्य तद्ग्राहकत्वमिति वदन्ति।

न चैवमेव स्तुतित्वमपि जातिरिति वाच्यम्। देवदत्तीयत्वादिना संकरापत्तेः। नानात्वकल्पने मानाभावात्। भावे वा तत्पुरस्कारेण वेदकल्पने अनन्तवेदकल्पनापत्तेः। पूर्वोक्त[5]कल्पने नैव तत्कल्पनमिति भावः।

**न्यायशिखामणिः**

[6]व्याप्यजातेर्नानात्वाभ्युपगमादित्याशयेनाह—अत्र चेति। न चात्राद्यादिवर्णस्यापि [7]क्वचिच्चरमतया सा जातिः [8]सर्ववर्णवृत्तिरिति चरमवर्णवृत्तिरेवेत्ययुक्तमिति वाच्यम्। प्रत्युच्चारणं वर्णभेदाभ्युपगमात्। नन्वस्याश्चरमवर्णमात्रवृत्तित्वे तेनैव एतद्ग्रहोपपत्तेः पूर्ववर्णवैयर्थ्यम्। अनुभवस्यापि नष्टत्वेन तद्द्वारा जातिग्रहोपयोग [9]इत्यस्याप्यसंभवादित्यत आह—चरमेति। न चैवमिति। यथापकर्षबोधकत्वं स्तुतावतिव्याप्तमिति तदवृत्तितादृशजातिविशेषो नमस्कारत्वं तथोत्कर्षपदप्रवृत्तिनिमित्तज्ञानस्वरूपयोग्यत्वं वाचिकनमस्कारेऽतिव्याप्तमिति नमस्कारावृत्त्युत्कर्षबोधजनकतावच्छेदकजातिविशेषस्तुतित्वं संकरपरिहाराय नानेत्यप्यवश्यं वाच्यमिति स्तुतिपदस्य नानार्थत्वापत्तिरित्याशयः।

1. ख. °व्यक्तिरेव
2. क. मध्यवर्ण-
3. ख. 'तत्' नास्ति
4. ख. 'तदपेक्षायां....प्रसङ्गात्' इति ग्रन्थस्त्रुटितः।
5. ख. °कल्पनैव
6. क. 'व्याप्य' नास्ति।
7. क. क्वचिच्चरमवर्णतया
8. ख. सर्वचरमवर्ण°
9. ख. इत्यस्यापि संभवा°

## प्रकाशः

नमस्कार्यानमस्कार्यविषयसमूहालम्बने च नमस्कारत्वं न जातिः, अव्याप्यवृत्तितापत्तेः। तथा च नमस्कार[1]पदं तत्र भाक्तमित्याहुः।

कायिकादीति। न चोन्मादाद्यहेतुकत्वेन विशेषितस्य कायिकादिव्यापारस्य स्वस्मिन् बुद्धिविशेषपूर्वकत्वेन व्याप्तिग्रहादनुमानं स्यादिति वाच्यम्। तदज्ञानेऽपि करशिरस्संयोगमात्रविशेषदर्शनात् [अनुतिमिदर्शनात्] जातिविशेषस्यानुभविकत्वाच्च। न चान्यतरकर्मजत्वादिना सांकर्यम्। वाचिकवन्नानात्वेऽप्युपपत्तेरिति दिक्।

---

## न्यायशिखामणिः

ननु संकरपरिहारार्थमेव [2]नानार्थत्वं कल्प्यत इत्यत आह—भावे वेति। स्तुतौ नानाजातिस्वीकारेऽपि तासां न प्रत्येकरूपेण प्रवृत्तिनिमित्तत्वम्। किं तु यथा स्तुत्यवृत्तितादृशजातित्वेनानुगतीकृतजातीनां नमस्कारपदप्रवृत्तिनिमित्तत्वं, तथा नमस्कारावृत्तितादृशजातित्वेनानुगतीकृतजातीनां स्तुतिपदप्रवृत्तिनिमित्तत्वं कल्प्यते। अन्यथा उक्तरूपेणानुगमानङ्गीकारे तत्तत्पुरस्कारेणानन्तवेदकल्पनापत्तेः। तथा च नानार्थत्वानवकाश [3]इत्यर्थः।

ननु मानसे ज्ञानत्वव्याप्या नमस्कारत्वजातिरेकेति न युक्तम्। त्वत्तोऽहमपकृष्टो मत्तस्त्वमुत्कृष्ट इति ज्ञानस्य शब्दानुमानजन्यस्यापि संभवेन साक्षात्त्वादिना संकरापत्तेरिति चेत्—न। साक्षात्त्वादिव्याप्यजातेरपि नानात्वाभ्युपगमात्। तदेतदभिसंधायाह—दिगिति।

वयं तु ब्रूमः। एवं सति स्तुत्यादेर्विघ्नध्वंसहेतुता न स्यात्। स्तुतित्वादेर्नानात्वेनानुगतावच्छेदकाभावात्। ननूक्तधर्मेणानुगतीकृतानां स्तुतित्वनमस्कारत्व[4]रूपजातीनां स्तुतिनमस्कारनिष्ठकारणतावच्छेदकत्वं न विरोत्स्यत इति चेत्—[5]हन्त तर्हि विघ्ननिवर्तकतावच्छेदकत्वेनानुगतीकृतजातीनामेतासामेव मङ्गलपदप्रवृत्तिनिमित्तत्वमस्तु न तूक्तोपाधेः। अन्यथा तस्यैकत्वेन तत्प्रवृत्तिनिमित्तत्वे तादृशजातिमद्व्यापारत्वस्यैव नमस्कारपदप्रवृत्तिनिमित्तत्वापत्तेः। तथा

---

1. ख. °पदप्रयोगस्तत्र भाक्त इत्याहुः
2. ख. घ. नानात्वम्
3. क. इति भावः।
4. क. 'रूप' नास्ति।
5. क. 'हन्त' नास्ति।

स्वीकृतवेदप्रमाणभावः शिष्टः ।

---

**प्रकाशः**

स्वीकृतेति । ननु यावद्वेदप्रामाण्याभ्युपगन्तृत्वं विवक्षितम्, यत्किंचिद्वेदप्रामाण्याभ्युपगन्तृत्वं वा । नाद्यः, किंचिद्वेदाज्ञानात् तत्प्रामाण्यमनभ्युपगच्छतोऽपरसकलवेदप्रामाण्यमभ्युपगच्छतः शिष्टत्वानापत्तेः । नान्त्यः, 'न हिंस्यात्सर्वा भूतानि' इत्यादिवेदप्रामाण्याभ्युपगन्तृत्वात् बौद्धस्यापि शिष्टत्वापत्तेरिति चेत्—न । विशिष्य तत्तद्वेदप्रामाण्यानभ्युपगमेऽपि स्वतात्पर्यविषये सर्वे वेदाः प्रमाणमिति सामान्यतो यावत्त्वस्य विवक्षितत्वात् ।

ननु नाभ्युपगमो विशेषणम् । सुषुप्त्यादिदशायामपि शिष्टत्वा[ना]पत्तेः । न चेष्टापत्तिः, तदानीमपि [1]शिष्टत्वव्यवहारात् । नाप्युपलक्षणम्, बौद्धातिव्याप्तेः । अनादौ संसारे कदापि तेन तदभ्युपगमात् । न च तज्जन्माभ्युपगमो विवक्षितः । एकस्मिन् [2]जन्मनि शिष्टतानन्तरं बौद्धतादशायामतिव्याप्तेरिति चेत्—न । वेद-

---

**न्यायशिखामणिः**

चैतत्पुरस्कारेणैव श्रुतिकल्पनं युक्तं लाघवात्, न तु देवतास्तुतिमाचरेदित्यादिप्रत्येकं तत्कल्पनम्, गौरवात् । न च देवतास्तुतित्वप्रकारकप्रवृत्त्यनुरोधात् प्रत्येकविधिकल्पनमावश्यकमिति वाच्यम् । न ह्यनुमितश्रुतेः [3]प्रवर्तकत्वम्, बोधकत्वाभावात् । [4]किं त्वाचारस्यैव, तथैवाभ्युपगमात् । अन्यथा नमस्कारत्वरूपनानाजातिप्रकारकप्रवृत्त्यनुरोधादनन्तवेदकल्पनापत्तेः । एवं च दधिदूर्वादिदर्शनमपि यदि विघ्ननिवर्तकम्, तदा तत्संग्रहाय न श्रुत्यन्तरं कल्पनीयमित्यपरमपि लाघवम् । त्वन्मते तु तत्र तत्कल्पनं वज्रलेपायितमेव । तस्मात् प्रत्येकमेव विधिरिति न युक्तमिति संक्षेपः ।

विशेषणत्वपक्षमादाय समाधत्ते—न वेदेति । शिष्टतासमयवर्तिनः कस्यचिद्वेदप्रामाण्यविरोध्यभ्युपगमप्रागभावस्य बौद्धतादशायामपि सत्त्वात्तदापि [5]शिष्टत्व-

---

1. क. शिष्टव्यव°
2. क. 'जन्मनि' नास्ति ।
3. ख. प्रवर्तकत्वबोधकत्वामावत् ।
4. ख. किं चाचार-
5. ख. विशिष्टत्व°

आचारे च वेदानिषिद्धत्वमविगीतत्वं विशेषणं देयम् ।

---

प्रामाण्याभ्युपगमसमानकालीनयावत्तद्विरोध्यभ्युपगमसंसर्गाभाव[व]त्त्वस्य विवक्षितत्वात् ।

आचार इति । अविगीतत्वं यद्विशेषणं तद्वेदानिषिद्धत्व[1]रूपमित्यर्थः ।

व्यवहारवारणाय—यावदिति संसर्गाभावविशेषणम् । तद्विरोध्यभ्युपगमध्वंसश्च न वेदत्वप्रकारकसकलवेदविशेष्यकतात्पर्यविषयार्थप्रमाजनकत्वलक्षणप्रामाण्याभ्युपगमकालीन इति न यावद्धर्मलक्षणातिप्रसङ्गः । समानाधिकरणत्वं चात्र विशेषणमिति न पुरुषान्तरीयाभ्युपगममादाय [2]बौद्धतादशायां दोषतादवस्थ्यम् ।

ननु यस्य पुरुषस्य बौद्धग्रन्थालोचनया सच्छास्त्रपूर्वपक्ष[3]तद्वाक्याद्वा [4]विरोध्यभ्युपगमस्ततो व्यासङ्गादिना यावज्जीवं वेदप्रामाण्याभ्युपगमो न जातः, तत्र [5]यावत्तत्संसर्गाभावस्य तत्कालीनत्वाभावादव्याप्तिः । किं च यत्र बौद्धतादशायामपि स्वप्ने वेदप्रामाण्या[6]भ्युपगमः, जागरणेऽपि पूर्वपक्षलिखितवैदिकशास्त्रवाक्यात् तदवगमः, ततो व्यासङ्गादिना यावज्जीवं न तद्विरोध्यभ्युपगमस्तत्रातिव्याप्तिरिति चेत्—न । अप्रामाण्यशङ्काशून्यत्वस्योभयाभ्युपगमविशेषणत्वात् । बौद्धतादशायां तदभ्युपगमस्य शिष्टतादशायां [7]तद्विरोध्यभ्युपगमस्य च [8]तदाशङ्काकबलितत्वान्नोक्तदोषः । अन्यथा तत्कार्यवेदार्थप्रवृत्ति[9]परित्यागापत्तेरिति दिक् ।

नन्वाचार इति मूलमयुक्तम् । तत्र हि न तावदविगीताचारवत्त्वमपि शिष्टलक्षणे विवक्षितम्, व्यर्थत्वात् । नापि लक्षणान्तरम्, तादृशचैत्यवन्दनकर्तरि बौद्धेऽतिव्याप्तेरित्याशङ्क्य न हीदं शिष्टलक्षणं व्यवहारायैव, किं तु वेदानुमानायापि । तत्र चाविगीतत्वविशेषणमावश्यकमित्याशयेन [10]तत्र तदुपात्तमित्याह—अविगीतत्वमिति ।

1. ख. 'रूप' नास्ति ।
2. ख. बद्धता०
3. क. 'तद्' नास्ति ।
4. क. विरोधाभ्यु०
5. क. यावत्संस०
6. ख. ०ण्यावगमः
7. क. तद्विरुद्धाभ्युप०
8. क. अप्रामाण्यशङ्काकलङ्कित०
9. क. घ. ०तत्परि०
10. ख. 'तत्र' नास्ति ।

यद्वा अलौकिकविषयशिष्टाचारत्वमेव हेतुः। शिष्टाचारत्वं च भ्रमाजन्याचारत्वम्। आस्तिकनास्तिकयोरगम्यागमनचैत्यवन्दनाद्याचारजनकज्ञानस्य भ्रमत्वात् बलवदनिष्टानुबन्धित्वादिष्टासाधनत्वाच्च।

लोके च पाखण्डव्यावृत्तशिष्टव्यवहारो वेदप्रामाण्याभ्युपगमनिबन्धनः। तैर्थिकत्वेऽपि शिष्टाशिष्टव्यवहारो वेदनिषिद्धाकर्तृत्वतत्कर्तृत्व-

---

प्रकाशः

ननु वेदानुमापकहेतुप्रविष्टं शिष्टत्वमभ्रान्तत्वरूपम्, न तूक्तरूपम्। अन्यथा अलौकिकपदप्रक्षेपे भोजनादौ व्यभिचारवारणेऽपि शिष्टकृतनिष्फलकर्मणि व्यभिचारापत्तेः। अलौकिकादिपदेनैव कथंचिद्वारणेऽपि निष्फलचैत्यवन्दनव्यभिचारवारणार्थोपात्तशिष्टपदवैयर्थ्यापत्तेः। तथा चागम्यागमनादौ तत एव व्यभिचारवारणादविगीतपदं न देयमेवेत्याशयेनाह— यद्वेति।

---

न्यायशिखामणिः

नन्वभ्रान्तत्वरूपशिष्टत्वालौकिकत्व[1]घटितं हेत्वन्तरमुक्तम्। तत्र निरुक्तशिष्टत्वाविगीतत्वपरित्यागे कारणमाह—नन्विति। ननु लोकावगतेष्टसाधनत्वाभावरूपमलौकिकत्वं न विवक्षितम्, येन व्यभिचारः स्यात्। किंतु [2]तदनवगतेष्टसाधनताकत्वमित्यत आह—अलौकिकेति।

ननु पाषण्डस्यापि बलवदनिष्टाननुबन्धीष्टसाधनत्वभ्रमरहितत्वाद्दोषतादवस्थ्यमित्याशङ्क्य प्रथमलक्षणमेवोपयोगीत्याह—एतेनेति।

वयं तु लोक इत्यतः पूर्वं निरुच्यमानं [3]द्विविधमपि शिष्टत्वं वेदानुमानोपयोग्येव। न च सामान्यतः [4]सकलवेदप्रामाण्याभ्युपगमविवक्षायां चैत्यवन्दने दोषाभावेऽपि भोजनादौ स दुर्वार इति वाच्यम्। तदाचारपदेन तदभ्युपगमनियता[5]चारस्य विवक्षितत्वात्। नन्वेवं रात्रिश्राद्धादौ व्यभिचार इत्यत आह—आचारे चेति। नन्वविगीतशिष्टाचारत्वं यूपहस्तिदानादौ व्यभिचारीत्यस्वरसादाह

---

1. ख. 'घटितं...... ... यद्वेति। अत्रालौकिकत्वम्' इति ग्रन्थः लुप्तः।
2. क. तदवगतेष्ट॰
3. घ. 'द्विविधमपि' नास्ति।
4. क. सकलवेदाभ्युपगमे चैत्य॰
5. घ. ॰चारत्वस्य

निबन्धनः । यद्वा वेदप्रामाण्याभ्युपगन्तृत्वे सति यो यदा वेदनिषिद्धाकर्ता स तदा शिष्टः तत्कर्ता त्वशिष्टः । अत एव वेदनिषिद्धाकर्तृत्वेऽपि बौद्धो न शिष्टः ।

पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वं यस्य नास्ति स शिष्ट इति तु न । तैर्थिकस्यापि कस्यचित् पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वात् ।

---

प्रकाशः

नन्वेवं भ्रमरहितः शिष्ट इति पर्यवसितम् । तथा च तादृशे पाषण्डे शिष्टपद[1]व्यवहारः स्यादित्यत आह—लोक इति । एतेन शिष्टव्यवहारप्रयोजकत्वेन प्राथमिकं शिष्टलक्षणं कृतमिति ध्वनितम् ।

नन्वेवं वेदनिषिद्धाकर्तृत्वं शिष्टव्यवहारप्रयोजकमिति पर्यवसितम् । तच्च सार्वकालीनं न कस्यापि । कादाचित्कं तु बौद्धस्यापि दशाविशेषे । तस्यापि

---

न्यायशिखामणिः

—यद्वेति । [2]अत्रालौकिकत्वं शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणप्रमापितबलवदनिष्टाननुबन्धीष्टसाधनताशून्यत्वं विवक्षितम्, अतो न भोजनादौ व्यभिचारः । नन्वेवमपि यत्किंचिद्वेदप्रामाण्याभ्युपगन्तृबौद्धकृतचैत्यवन्दनादौ व्यभिचारः । पूर्वोक्तशिष्टत्वविवक्षायामास्तिककृते परदारगमनादौ निष्फलजलताडनरात्रिश्राद्धयूपहस्तिदानादौ व्यभिचार इत्यत आह—शिष्टाचारत्वं चेति । भ्रमेति । तदननुबन्धीष्टसाधनत्वभ्रमेत्यर्थः । एतच्चालौकिकशिष्टाचारत्वम् 'अगम्यागमन' इति 'बलवदनिष्टाननुबन्धित्वात्' इति च मूलदर्शनादित्थं विवक्षितम् । वस्तुतस्तादृशप्रमाणप्रमापितेष्टसाधनत्व[3]शून्यत्वे सतीष्टसाधनत्वभ्रमाजन्याचारत्वं तद्विवक्षणीयम्, लाघवादिति ब्रूमः ।

ननु वेदप्रामाण्याभ्युपगमस्य विशेषणतोपलक्षण[4]ताविकल्पेनाव्याप्त्यतिव्याप्ती इत्यस्वरसाल्लक्षणान्तरमुक्तम् । तत्राप्ययं दोषस्तुल्य इत्याह—नन्विति ।

---

1. ख. °व्यवहारप्रसङ्ग इत्यतः
2. घ. अत्र लौकिकत्वं
3. ख. °शून्यत्वे
4. क. °ताभ्युपगमविक०

यत्तु रागद्वेषहीनः शिष्टः। स च सर्वज्ञत्वान्मन्वादिरेव। अविगीततदाचारादेव वेदानुमानमिति।

तन्न। एवं हि मन्वाद्याचारादर्शिनामाधुनिकानां मङ्गले प्रवृत्तिर्न स्यात्। आधुनिकानामाचारेण मन्वाद्याचारमनुमाय तेन च वेदमनुमाय

---

प्रकाशः

[1]तत्त्वं स्यादित्यत आह—यद्वेति। इदमपि व्यवहारोपयोगि, न त्वनुमानोपयोगीति बोध्यम्। अविगीतेति। सर्वज्ञस्यापि कर्मक्षयार्थनिषिद्धाचरणे व्यभिचारवारणायेदम्। न चैवं रागादिहीनत्वं तस्यासिद्धम्, तेन विना प्रवृत्त्यभावादिति वाच्यम्। रागादिपदस्य तद्विशेषपरत्वात्। अत ([2]एवासक्तो) [एवानासक्तो] विषयं भुङ्क्त इति भावः।

तर्हीति। व्याप्यव्याप्यस्य सुतरां व्याप्यत्वादिति भावः। नन्वनुमानोपयोगि मास्तु, व्यवहारोपयोगि स्यादित्यत आह—आधुनिकानामपीति। सदाचार इति। सत्त्वं शिष्टत्वम्।

---

न्यायशिखामणिः

नन्वेवं सर्वेषामपि यत्किंचिद्वदनिषिद्धानुष्ठानं संभवतीति तत्काले शिष्टत्वव्यवहारो न स्यादित्यस्वरसादाह मूले—पापेति। आस्तिकानां [3]च सत्येव [4]पापजनकत्वज्ञाने तदप्रामाण्य[5]शङ्कया निषिद्धानुष्ठानमिति तत्कालेऽपि विशिष्टाभावरूपलक्षणसत्त्वान्नाव्याप्तिः। बौद्धस्य तु नास्तिकस्य तदा [6]तज्ज्ञानाभावान्नातिप्रसङ्ग [7]इति भावः।

ननु रागहीनो द्वेषहीन इति लक्षणद्वयम्। रागहीनत्वं च समानाधिकरणरागासमानकालीनतद्ध्वंसवत्त्वम्। द्वेषहीनत्वं च तादृशद्वेषध्वंसवत्त्वम् विवक्षितमिति नातिप्रसङ्गः। मन्वादेरेवात्र लक्ष्यत्वान्नास्मदाद्यव्याप्तिर्दोषः। [8]तदाचार एव वेदानुमापक इति न हेतोर्भागासिद्धिदोष इत्येकदेशिनां मतं यत्त्वित्यत्रानुदित-

---

1. क. तद्वत्त्वं
2. क. एवासक्ते विषयभूते
3. क. 'च' नास्ति।
4. क. पापादिजनक॰
5. क. ॰शङ्कायां
6. क. ख. तज्ज्ञानाभावाति॰
7. क. 'इति भावः' नास्ति।
8. ख. न चाचारः

बालः प्रवर्तेत इति चेत्—तर्हि यादृशाचारेण मन्वाद्याचारानुमानं स एव वेदानुमापकोऽस्तु, किमनुमितानुमानेन । आधुनिकानामपि शिष्टत्वेन व्यवह्रियमाणत्वाच्च । तथा च स्मृतिः—

'यस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥'

---

**प्रकाशः**

[1]चन्द्रे कलङ्कः सुजने दरिद्रता
विकासलक्ष्मीः कमलेषु चञ्चला ।
सुखाप्रसादः सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम् ॥

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
प्रत्यक्षखण्डे मङ्गलवादः समाप्तः

---

**न्यायशिखामणिः**

मयुक्तम् । अविगीतत्वविशेषणस्य व्यर्थत्वात् । रागाभावेन मन्वादेर्विगीताचाराभावात्, शिष्टपदेनैव [2]तादृशाधुनिकाचारवारणादित्यत आह—सर्वज्ञस्येति ।

किमेतद्वेदानुमानोपयोगि व्यवहारोपयोगि वा । तत्राद्यम् 'एवं हि' इत्यत्र निराकृतम् । द्वितीयं शङ्कते—नन्विति । ननु लोके तत्र शिष्टत्वव्यवहारो भाक्त इत्याशङ्क्य तथा [3]चेत्युक्तमयुक्तम् । स्मृतौ सदाचार इत्यत्र आधुनिकाचारे [4]शिष्टाचारत्वानभिधानादित्यत आह—सत्त्वमिति ।

ननु [5]यदा आधुनिकाचारविशेषस्य मन्वाद्याचारं प्रत्येव व्याप्तिग्रहः तस्य च वेदमूलकत्वं प्रति, [6]तदा प्रणाड्यैव वेदानुमानमि[7]त्यपरितोषादाद्यपक्षे दूषणान्तरमाह—मूले सर्वज्ञस्येति । किमारब्धकार्यनिर्वाहानुपपत्तिर्मङ्गलसद्भावे मानं प्रत्यक्षं वा । नाद्यः, तस्य स्वत एव निरस्तसमस्तविघ्नतया तत एव समाप्त्युपपत्तेः ।

---

1. ख. अयं श्लोको नास्ति ।
2. क. 'तादृश-' नास्ति ।
3. ख. चेत्युक्तं युक्तम् ।
4. ख. शिष्टाचारत्वाभि°
5. क. यथा
6. क. 'तदा' इति नास्ति ।
7. क. इत्यस्वरसा°

सर्वज्ञस्य मङ्गलाचारे मानाभावाच्च। मन्वादिप्रणीतस्मृतौ मङ्गलं दृश्यत इति चेत्—तन्न। स्मृतिकर्तुरसर्वज्ञत्वेऽपि वेदादर्थं प्रतीत्य स्मृतिप्रणयनसंभवात्।

यत्तु शिष्टाचारत्वेन कर्तव्यतैवानुमीयतां किं वेदेनेति तत्र वक्ष्यामः।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे मङ्गलवादः समाप्तः

---

न्यायशिखामणिः

न च विघ्नभ्रमादनुष्ठानम्, तत्त्वज्ञानितया भ्रमाभावादित्यभिप्रेत्याह—मानाभावादिति। द्वितीयमाशङ्कते—मन्वादीति। विघ्नाभावनिश्चयेऽपि लोकानुग्रहार्थं मङ्गलाचरणमिति भावः।

अस्तु मङ्गलम्, तथापि न तदाचारो वेदानुमापकः। मन्वादेरसदादिवत् संसारितया रागद्वेषादिकल्पनात् निरुक्तशिष्टत्वाभावेन तदाचारस्य शिष्टाचारत्वाभावात्। न चैवं सर्वज्ञत्वानुपपत्तिः। तत्र मानाभावेनेष्टत्वात्। न च स्मृतिप्रणयनानुपपत्त्या तत्कल्पनम्। तावता स्मृतिरचनानुकूलज्ञानकल्पनेऽपि सर्वविषयकज्ञानासिद्धेरित्याशयेनाह—स्मृतिकर्तुरिति। तत्रेति। अन्धपरंपराशङ्कानिरासार्थं स्वतन्त्रप्रमाणवेदानुमानमिति शब्दखण्डे वक्ष्याम इत्यर्थः।

[1]इति [2]श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरीन्द्रविरचिते
तत्त्वचिन्तामणिप्रकाशव्याख्याने न्यायशिखामणौ
मङ्गलवादः समाप्तः

—: * :—

---

1. ख. इदं colophon नास्ति।   2. श्रीधर्म॰

॥ श्रीः ॥

# अथ प्रामाण्यवादः

## तत्र ज्ञप्तिवादः

अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रेक्षावत्प्रवृत्त्यर्थं 'प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या. सू. 1-1-1) इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।

---

### प्रकाशः

प्रेक्षावत्प्रवृत्त्यर्थं स्वग्रन्थं निश्रेयसफलवदान्वीक्षिक्या संगमयन् तस्याभिधेयमाह—**अथेति**। अथ मङ्गलनिरूपणानन्तरम्। 'प्रमाणतत्त्वमत्र (ग्रन्थे) विविच्यते' इत्यनेन संबध्यते। तेनावसरलक्षणा संगतिर्दर्शिता। अथशब्दो मङ्गलार्थ इत्यन्ये। अभ्यर्हिततमत्वं सर्वविद्यासाध्य[1]तत्त्वनिर्णयप्रयोजकतर्कव्युत्पादकतया। तदुक्तम्—'प्रदीपः सर्वविद्यानाम्' इत्यादि।

---

### न्यायशिखामणिः

ननु प्रमाणतत्त्वमत्र विविच्यत इत्यनेनैव प्रेक्षावत्प्रतिपित्सितार्थप्रतिज्ञासिद्धेः शेषवैयर्थ्यम्। न च आन्वीक्षिकीप्रयोजनमोक्षाभिधानमुखेन तत्प्रतिपाद्यैकदेश-[2]प्रमाणतत्त्वनिरूपकस्वग्रन्थस्यापि तत्प्रयोजनसिद्धेः [3]शेषवैयर्थ्यमिति वाच्यम्। 'यतो मणे'रित्यादिनैव [4]स्वग्रन्थप्रयोजनस्योक्तत्वादित्याशङ्क्य, प्रेक्षावत आस्तिकस्य ऐहिकप्रयोजनमात्रेण गहनक्लेशात्मकग्रन्थप्रवृत्त्यनुपपत्तेः युक्तं [5]परमप्रयोजनाभिधानमित्यभिप्रेत्याह—**प्रेक्षावदिति**। यद्यप्यथशब्दस्य [6]चत्वारोऽर्था वृद्धव्यवहारप्रसिद्धाः, तथाप्यानन्तर्यस्यान्वययोग्यत्वात् तदभिधाने संगतिसिद्धेश्च तदेवात्र विवक्षित[7]मित्याह—**मङ्गलेति**।

---

1. क. 'तत्त्व' नास्ति।
2. क. ख. ग. •प्रमाणत्व-
3. ख. घ. 'शेष-' नास्ति।
4. ग. स्वगूढ-
5. क. ख. अपरं प्रयो-
6. ख. नानार्थाः
7. क. इत्याशयेनाह

ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परंपरया निश्रेयसेन संबध्यत इति न युक्तम्, प्रमाणतत्त्वावधारणस्याशक्यत्वात्। तद्धि प्रमातत्त्वावधारणाधीनम्। तच्च स्वतः परतो वा न संभवति, वक्ष्यमाणदूषणगणग्रासात्।

---

प्रकाशः

माध्यमिकः प्रत्यवतिष्ठते—**नन्विति**। **वक्ष्यमाणेति**। परस्परं मीमांसकनैयायिकाभ्यामिति शेषः।

---

न्यायशिखामणिः

उपाध्यायमतमाह—**अथशब्द इति**। **अन्य** इत्यस्वरसोद्भावनम्। तद्बीजं तु, अथशब्दस्य न मङ्गलाभिधायित्वम्। तस्योच्चार्यमाणस्य दधिदूर्वादिदर्शनवत् स्वरूपेण मङ्गलतया तद्वाचकत्वायोगात्। 'ओंकारश्च' इत्यादिना स्वरूपेणैव तस्य मङ्गलत्वस्मरणात्। आनन्तर्यपरत्वाभावे संगत्यसिद्धेर्वाक्यार्थे समन्वयाभावप्रसङ्गाच्च। [1]न च मङ्गलार्थकमथशब्दं [2]प्रयुञ्जानस्य गङ्गेशस्यानन्तर्येऽपि [3]तात्पर्यमिति संगतिसमन्वययोः [4]सिद्धिरिति वाच्यम्। तस्योभयतात्पर्यकल्पनायां गौरवप्रसङ्गात्। 'गुणातीत' इत्यनेन मङ्गलस्य कृतत्वाच्चेति।

'[5]अथ जगदेवे'त्यादिमणेरेषोऽर्थः। ननु न्यायशास्त्रस्यातिविततगहनन्यायबहुलत्वात् तत्करणासामर्थ्यमाशङ्क्याह—**मुनिरिति**। मननशील इत्यर्थः। नन्वेवमप्यान्वीक्षिकी प्रयोजनाभावात् प्रेक्षावदनुपादेयेत्यत आह—**जगदिति**। अत्र जगच्छब्दस्त्रैवर्णिकपरः। एवकारश्च भिन्नक्रमः। तथा चैकविंशतिप्रभेदभिन्नदुःखपङ्कनिमग्नं त्रैवर्णिकमुद्दिधीर्षुरेवान्वीक्षिकीं प्रणिनाय, न तु स्वप्रयोजनायेत्यर्थः। एवं चात्यन्तिकदुःखनिवृत्तिः 'दुःखेनात्यन्तविमुक्तश्चरति' इत्यादिश्रुतिसिद्धा मुक्तिः शास्त्रप्रयोजनमिति भावः।

केचित्तु जगच्छब्देन संसार्यात्मजातमेव विवक्षितम्। तथा च स्त्रीशूद्रादेरप्यधि[6]कार इति सूचितमिति।

---

1. ग. मङ्गलात्मक- 'न च' नास्ति।
2. ख. ग. घ. प्रयुञ्जतो
3. ग. तात्पर्ये संगति-
4. ग. सिद्धत्वे तस्योभय-
5. ख. ग. घ. जगदित्यादि-
6. क. ॰कारः सूचित इति।

**अथ किं प्रामाण्यज्ञानेन ? प्रवृत्तिमात्रे तस्य व्यभिचारात्। बहुवित्तव्ययायाससाध्ये प्रवृत्तिश्चावश्यकार्थनिश्चयादेव।**

---

**प्रकाशः**

ननु प्रामाण्यग्रहो न प्रवृत्तिहेतुः, व्यभिचारात् अन्यथासिद्धेश्चेति तटस्थः शङ्कते—**अथेति**।

---

**न्यायशिखामणिः**

[1]तत्तुच्छम्। न्यायशास्त्रस्याष्टादशविद्यास्थानान्तर्भावकीर्तनेन तदधिकारिणस्त्रैवर्णिकस्यैवात्राप्यधिकारलाभेन संसारिमात्रविवक्षानुपपत्तेः। स्त्रीशूद्रादेरप्यधिकारं बोधयतस्तस्यानाप्तत्वेनाश्रद्धेयवचनत्वापत्तेश्च।

नन्वस्तु विद्यास्थानान्तरादप्येतन्निश्रेयसमिति प्रयोजनस्यान्यथासिद्धिमाशङ्क्याह — **अष्टादशेति**। वेदाङ्गपुराणमीमांसान्यायविस्तरधर्मशास्त्रायुर्वेदधनुर्वेद-[2]गान्धर्वार्थशास्त्राणामष्टादशतत्त्वनिर्णयसाधनानां मध्य इत्यर्थः। ननु स्वप्रयोजनाभावे कथमस्य शास्त्रकरणे प्रवृत्तिरित्यत आह—**परमेति**। निरुपाधिकपरदुःखप्रहाणेच्छावानित्यर्थः।

ननु प्रमेयसत्तावादिमते तत्सत्तानिश्चयस्य प्रमाणतत्त्वावधारणाधीनत्वादाक्षेपानुपपत्तिरित्याशङ्क्य, प्रमेयसत्ताप्रद्वेषिणः शून्यवादिनः शङ्केयमित्याह—**माध्यमिक इति**। एतच्चापाततः। तन्मते शून्यमिति ज्ञानस्य प्रमाणतया तदवधारणस्यावश्यकत्वात्।

ननु मीमांसकमतेऽपि प्रामाण्यनिश्चयस्य प्रवर्तकत्वाभ्युपगमा[3]दथेत्याशङ्का न युक्तेत्यत आह—**ननु प्रामाण्येति**। केचित्तु प्रामाण्यावधारणं प्रवृत्त्यर्थं त्वयापि वाच्यमिति अस्मदाशङ्कामनुसृत्य माध्यमिक एवाह—**अथेति**। अथ चेत्यर्थ इत्याहुः। तच्चिन्त्यम्। तन्मतेऽपि प्रामाण्यावधारणमावश्यकमित्युक्तत्वात्।

वयं तु—तटस्थः प्रत्यवतिष्ठते—**नन्विति**। **प्रमाणतत्त्वेति**। तद्धि शास्त्र[4]प्रवृत्तेनावधारणीयम्। तत्प्रवृत्तिश्च न प्रमात्वनिश्चयं विना। स च वक्ष्य-

---

1. ग. तन्न।
2. क. ख. घ. ०गन्धर्वशास्त्रा-
3. क. अथेत्यादिशङ्कानुपपन्नेत्यतः
4. क. ०प्रवृत्त्याव-

न च यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्तेरिवेति वाच्यम्। तत्संदेहे सत्यर्थसंदेहेनार्थानिश्चयादेवाप्रवृत्तेस्तत्र तयोरप्रतिबन्धकत्वादिति चेत्;

---

**प्रकाशः**

न चेति। अत्र यस्य संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति सामान्यव्याप्तिरभिमता। प्रवृत्तिपदं प्रकृताभिप्रायेण। अत एवानुमितौ व्याप्तेरिवेति दृष्टान्तः।

---

**न्यायशिखामणिः**

माणदूषणगणग्रासान्न संभवतीत्यर्थः। ननु प्रामाण्यनिश्चयो न प्रवृत्तिमात्रहेतुः संशयजन्यकृष्यादिप्रवृत्तौ व्यभिचारात्। नापि निष्कम्पप्रवृत्तौ, आवश्यकार्थनिश्चयादेव तदुपपत्तौ अन्यथासिद्धत्वात्। तथा च प्रमात्वनिश्चयाभावेऽपि शास्त्रे प्रवृत्तिः संभवतीति न [1]प्रमाणतत्त्वावधारणानुपपत्तिरित्याशयवता नैयायिकेन 'अथ' इत्यादिना शङ्किते, तथापि प्रवृत्ति[2]विशेषप्रयोजकत्वेन तन्निश्चयस्यावश्यकत्वात्तदभावे शास्त्र[3]प्रवृत्त्यनुपपत्तिरेवेत्याशयेन 'प्रामण्यसंशयानन्तरम्' इत्यादिना तटस्थेन समाहितम्। तदेतच्चोद्यं स्वतस्त्वपरतस्त्वाभ्यां प्रत्येकं शक्यं निराकर्तुम्। नैयायिकेन स्वतस्त्वं निराकुर्वता अनुमानस्य प्रामाण्यग्राहकत्वमभ्युपेत्यैवानुव्यवसायादेस्तद्ग्राहकत्वस्य निराकृतत्वात्। मीमांसकेन च परतस्त्वं निराकुर्वता सर्वस्यैव [4]ज्ञानग्राहकस्य [5]तद्विरोध्यग्राहकस्य प्रामाण्यग्राहकत्वस्वीकारादनुमानं तद्ग्राहकत्वेनोभय[6]वादिसंमतमिति तेन प्रामाण्यग्रहे विरोधाभावादित्याशयेन स्वतस्त्वपक्षमुत्थापयति—ननु [7]स्वत इति इति—ब्रूमः।

ननु यत्पदस्य संशयादिपदेन कर्मधारयाभ्युपगतौ[8] संशयादिगोचरनिश्चयस्यैव प्रवर्तकत्वं साधितं स्यात् न प्रामाण्यनिश्चयस्येत्यर्थान्तरं, दृष्टान्ते साध्यवैकल्यं

---

1. ख. घ. प्रमाणत्वाव-
2. क. 'विशेष' नास्ति।
3. ग. ॰प्रवृत्तिरेव नेत्याशयेन
4. ग. ज्ञानकारकस्य
5. क. ग. 'तद्विरोध्यग्राहकस्य' इति नास्ति।
6. ख. ग. घ. 'वादि' नास्ति।
7. ख. स्वतन्त्र इति।
8. क. ॰गमे

**प्रकाशः**

अत्र ग्राह्यव्यतिरेकनिश्चयो ग्राह्यनिश्चयप्रतिबन्धकः, तन्निश्चयो न तद्धेतुरित्यत उक्तम्—**संशयेति** । तथा च ग्राह्यसंशयस्याप्रतिबन्धकतया संशयपदोपादानेन ग्राह्यभिन्नस्य [1]यस्य व्यतिरेकनिश्चय इत्यर्थे तात्पर्यम् । **एतेन यथाश्रुते** व्याप्तिव्यतिरेक[2]ज्ञानमात्रप्रतिबध्ये व्याप्तिनिश्चये व्यभिचारः । ग्राह्यभिन्नत्वेन [3]निश्चय-

**न्यायशिखामणिः**

चेत्यत आह—[4]**अत्रेति** । अत्र प्रतिबन्धकत्वं न कारणीभूताभावप्रतियोगित्वम्, व्याप्तिव्यतिरेकज्ञानाभावस्यानुमित्यहेतुतया[5] दृष्टान्ते साधनवैकल्यात् । अप्रामाण्यज्ञानाभावस्य प्रवृत्त्यहेतुत्वेन स्वरूपासिद्धेश्च । किंतु प्रयोजकीभूताभावप्रतियोगित्वम्, कार्यानुत्पादव्याप्यत्वं वा । न च प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वानङ्गीकारवादिमतेऽपि तत्संशयादेः निरुक्तप्रतिबन्धकत्वाभ्युपगमेन 'तत्र तयोरप्रतिबन्धकत्वादि'ति ग्रन्थविरोधः । विवक्षितप्रतिबन्धकत्वाज्ञानेन तदुपपत्तेः ।

नन्वेवमुक्तव्याप्तिबलात् प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वसंभवे तयोरप्रतिबन्धकत्वाङ्गीकारेण तस्य संशयोत्तरप्रवृत्तिप्रयोजकत्वसाधनं न युक्तम् । न च प्रतिबन्धकत्वाभ्युपगमेऽप्यावश्यकार्थसिद्धावन्यथासिद्धत्वादेव प्रयोजकतोक्तिरिति वाच्यम् । उक्तव्याप्तिमूलकानुमानात् प्रामाण्यावधारणस्य कारणत्वसिद्धावर्थसत्ता[6]निश्चयस्य व्यापारत्वकल्पनेन तद्व्यवधायकत्वाभावादिति चेत्— न । अप्रयोजकत्वेन तादृश[7]व्याप्तिरेवासिद्धेत्युत्तर[8]ग्रन्थतात्पर्योन्नयनात् । **अत एव लिङ्गपरामर्शे** वक्ष्यति—'ग्राह्यभिन्नत्वविशेषितापि नेयं व्याप्तिः अप्रयोजकत्वात्' इति । **सामान्यव्याप्तिरिति** । यत्संशयव्यतिरेकनिश्चयप्रतिबध्यं यत् तत् तन्निश्चयसाध्यमिति सामान्य[9]व्याप्तिर्विवक्षिता । अन्यथा साध्यसाधनयोर्वैयधिकरण्यं स्यादिति ध्येयम् । सामान्यव्याप्ति[10]विवक्षायाः प्रयोजनमाह—**अत एवेति** ।

1. क. 'यस्य' नास्ति
2. ख. °निश्चय-
3. क. निश्चयविषयव्यतिरेकप्रतियोगिविशेषणे-
4. क. यस्येति
5. ख. °हेतुत्वात्
6. ग. °निश्चयव्यापारत्व-
7. क. °व्याप्तेरेवासिद्धिरित्युतर-
8. ख. 'ग्रन्थ' नास्ति ।
9. ग. °व्याप्तेर्विवक्षितत्वात्
10. क. ख. घ. °विवक्षायां

प्रकाशः

विशेषणे संशयपदोपादानवैयर्थ्यमिति निरस्तम् । संशयपदोपादानमहिम्नैव ग्राह्य-भिन्नत्वलाभात् ।

यत्तु अयोग्यतानिश्चयप्रतिबध्ये शाब्दज्ञाने फलव्यतिरेकनिश्चयप्रतिबध्य-कृष्यादिप्रवृत्तौ च व्यभिचारवारणाय संशय[1]पदमिति । तन्न । उभयत्र निश्चय-स्यापि हेतुत्वेन व्यभिचाराभावात् । निश्चयत्वेन हेतुत्वं विवक्षित्वा तदुपादान-स्यासंभवदुक्तिकत्वात् ।

केचित्तु निश्चयत्वेन जनकत्वाविवक्षायामपि योग्यतासंशयजन्ये शाब्द-ज्ञानविशेषे व्यभिचार एव । तन्निश्चयाभावेऽभावस्य साध्यत्वेनाभिमतस्य तत्रा-भावादिति संशयपदोपादानमित्याहुः ।

---

न्यायशिखामणिः

**निश्चयविशेषण** इति । निश्चयविषयव्यतिरेकप्रतियोगिविशेषण इत्यर्थः । जयदेवमतमाह—**यत्त्विति** । **अयोग्यतेति** । बाधकप्रमाणाभावो योग्यता । सा च ग्राह्यभिन्नेति तद्विरहनिश्चयप्रतिबध्ये तन्निश्चयत्वेन तदजन्ये शाब्दज्ञाने व्यभिचारः । तथा च ग्राह्यभिन्नत्वविवक्षायामपि [2]संशयपदं सार्थकमिति भावः । ननु केवलान्वयिवाक्यानुरोधेन लाघवेन च वाक्यार्थस्यैव योग्यतारूपतया वक्ष्य-माणत्वेन तस्या ग्राह्यभिन्नत्वाभावात् शाब्दज्ञाने न व्यभिचार इत्यस्वरसादाह—**फलेति** । अत्र प्रतिबध्यत्वाभिमत[3]प्रवृत्तिविषयत्वं ग्राह्यत्वम् । तथा च तादृश-प्रवृत्तिविषयकृष्यादिभिन्नत्वेन फलस्य ग्राह्यभिन्नत्वादिति भावः । तन्निश्चयस्य हेतुत्वमात्रं विवक्षितम्, तत्त्वेन हेतुत्वं वा । तत्राद्यं निराकृत्य द्वितीयं निरस्यति—**निश्चयत्वेनेति** । **असंभवदिति** । यद्यपि व्यापके न व्यर्थविशेषणता । तथापि [4]अनुपयोगवादिनं प्रति प्रामाण्य[5]निश्चयस्य प्रवृत्तिहेतुत्वमात्रस्योद्देश्यतया तत्त्वेन तदुपयोगसाधनं न युक्तमिति भावः ।

---

1. ख. °पदोपादानमिति
2. ख. संशयस्य सार्थक-
3. क. ख. °फलविषयत्वं
4. ख. अनुपयोगाद्वादिनं
5. ग. °निश्चयप्रवृत्ति-

**प्रकाशः**

असाधुत्वनिश्चयो न प्रतिबन्धक इति मतेनेदं बोध्यम् ।

---

**न्यायशिखामणिः**

तदीयं मतान्तरमाह—**केचित्त्विति** । योग्यतासंशयजन्य इत्यापाततः । योग्यताया ग्राह्यरूपतया तत्संशयजन्य[1]शाब्दज्ञाने व्यभिचाराभावात् । वस्तुतः फलसंशयजन्यकृष्यादिप्रवृत्तौ व्यभिचारवारणाय तदुपादानमित्यत्र तात्पर्यम् । ननु तत्रापि फलनिश्चयस्य स्वरूपयोग्यत्वसत्त्वान्न व्यभिचार इत्याशङ्क्य, तदभावव्यापकाभावप्रतियोगित्वं ग्राह्यभिन्नव्यतिरेकनिश्चयप्रतिबध्यत्वं प्रति व्यापकत्वेन विवक्षितमित्याशयेनाह[2]—**तन्निश्चयेति** । यद्यपि इदमन्यथासिद्धसाधारणमिति न तन्निश्चयस्य प्रवृत्तिहेतुत्वसिद्धिः, तथाप्यत्यन्तानुपयोगे चोदिते तत्प्रयोजकत्व[3]मात्रस्य प्रकृतत्वादिति भावः ।

ननु प्रयोजकत्वं न साध्यत्वेनाभिमतम् । अन्यथासिद्ध्युद्धारायानन्यथासिद्धिगर्भकारणत्वस्यैवावश्यवाच्यत्वात् । किं च [4]प्रयोजकत्वमात्रस्य [5]साध्यत्वेऽपि नोक्तरूपं [6]तद्युक्तम् । [7]तस्याभावगर्भत्वेन गुरुत्वात् । किं तु [8]नियतपूर्ववर्तित्वम् । तच्च वनस्थदण्डवत् संशयजन्य[9]प्रवृत्त्यनुपहितफलनिश्चयेऽप्यस्तीति न व्यभिचार इत्यस्वरसं सूचयति—**आहुरिति** ।

असाधुत्वनिश्चयप्रतिबध्ये शाब्दज्ञानसामान्ये व्यभिचारवारणाय तदुपादानमिति **जयदेवमिश्राः** प्राहुः । तेषामयमाशयः—प्रयोजकत्वस्य निश्चयत्वेन हेतुत्वस्य चाविवक्षायामपि साधुत्वस्य ग्राह्यभिन्नतया [10]तद्व्यतिरेकनिश्चयप्रतिबध्ये सकलशाब्दज्ञाने व्यभिचारः । [11]व्याकरणसंस्कारशून्यानामन्वयबोधेन तद्व्युत्पाद्यत्वलक्षणसाधुत्वनिश्चयस्य व्यभिचारेणाहेतुत्वात् । ततश्च तद्वारणाय [12]संशयपदोपादानम् ।

---

1. क. °शाब्दस्थले
2. ख. ग. घ. °इत्याह
3. क. °मात्रस्यैव
4. ग. 'प्र' नास्ति । ख. प्रयोजकत्वस्य
5. ख. साध्येऽपि
6. ख. 'तद्' नास्ति ।
7. ग. तदभाव-
8. ग. घ. तन्नियत-
9. ख. 'प्रवृत्ति' इत्यतः प्राक् 'शाब्दज्ञानाजनकयोग्यताज्ञाने' इत्यधिकपाठः ।
10. ख. तद्व्यतिरिक्त-
11. ख. व्याकार-
12. ख. संशयोपा-

**प्रकाशः**

'तन्निश्चयस्तद्धेतु'रित्यत्र ज्ञानमात्रे तात्पर्यम् ।

---

**न्यायशिखामणिः**

तत्संशयस्य च न प्रतिबन्धकत्वम् । तत्सत्त्वेऽप्यन्वय[1]बोधदर्शनात् । साधुत्वसंशयश्च न प्रतिबन्धक इति योगरूढिग्रन्थे तथैव मणिकृता वक्ष्यमाणत्वाच्च । [2]तथा च संशयपदोपादाने न व्यभिचार इति । तदेतन्मतं [3]निराकरोति—असाधुत्वेति । तन्निश्चयसत्त्वेऽप्यपभ्रंशादन्वय[4]बोधेन तस्याप्रतिबन्धकत्वादिति भावः । प्रतिबन्धकत्वमते च तन्निश्चयस्य हेतुतया साध्यसत्त्वान्न [5]व्यभिचारः । अन्यथा साधुत्वव्यतिरेकनिश्चयस्य प्रतिबन्धकत्वानुपपत्तेः, साक्षादविरोधिज्ञानस्य जनकज्ञानं विघटयत एव प्रतिबन्धकत्वात् ।

न च जनकविघटकत्वमेव लाघवात्, [6]तच्च तद्व्यतिरेकनिश्चयाभावकारणत्वमादायापि संभवतीति वाच्यम् । अभावकारणत्वापेक्षया साधुत्वज्ञानहेतुत्वे लाघवात् । अन्यथा अयोग्यतानिश्चयाभावस्य कारणत्वापत्तौ योग्यता[7]ज्ञानस्य शाब्दज्ञान[8]हेतुत्वानुपपत्तेः ।

न च [9]शब्दसाधुत्वमजानतामप्यन्वयबोधात् व्यभिचारः । उक्तयुक्त्या [10]तद्धेतुत्वसिद्धौ साधुत्वभ्रमसंशयान्यतरकल्पनात्, व्युत्पन्नस्य च साधुशब्दस्मरणादेव तत्रान्वय[11]बोधादिति भावः ।

नन्वेवमपि साधुत्वसंशयजन्यशाब्द[12]ज्ञानविशेषे व्यभिचार एव, तन्निश्चयाभावे अभावस्य साध्यत्वेनाभि[13]मतस्य तत्राभावादित्यत आह—**तन्निश्चय** इति । वाशब्दोऽनास्थायाम् । ज्ञानमात्राविवक्षायामपि संशयजन्यशाब्दज्ञाने साधुत्वनिश्चयस्य वनस्थदण्डवत् स्वरूपयोग्यत्वान्न व्यभिचारः । [14]अभावगर्भप्रयोजकत्वस्य गुरुतया साध्यत्वेन विवक्षानुपपत्तेः ।

---

1. ख. 'बोध' नास्ति. ।
2. ख. ग. घ. 'तथा च' नास्ति
3. क. ग. दूषयति ।
4. क. °बोधदर्शनेन
5. क. व्यभिचार इत्याहुः ।
6. ख. 'तच्च तद्व्यतिरेक....लाघवात्' इति ग्रन्थस्त्रुटितः ।
7. क. 'ज्ञानस्य शाब्द' इति नास्ति ।
8. क. °कारणानुप-
9. ख. शाब्द-
10. ग. तद्धेतुसिद्धौ
11. क. °बोध इति
12. ग. °ज्ञाने
13. क. ख. °मानस्य
14. ख. तदभाव-

## न्यायशिखामणिः

ननु [1]साध्याभावव्यतिरेकनिश्चयप्रतिबध्यायामनुमितौ व्यभिचारः। न च ग्राह्यभिन्नयत्संशयः प्रतिबन्धक इत्यर्थे [2]तात्पर्यान्न व्यभिचार इति वाच्यम्। तथापि तादृशव्यभिचारसंशयप्रतिबध्ये [3]तन्निश्चयाजन्ये [4]व्याप्तिनिश्चये व्यभिचारात्। न च व्यभिचारनिश्चयस्याव्यभिचारगर्भव्याप्तिग्रहे प्रतियोगिज्ञानत्वेन हेतुत्वान्न व्यभिचारः इति वाच्यम्। अव्यभिचाररूपविशेषणज्ञानोपक्षीणत्वेन तत्र तस्याहेतुत्वात्। किं च [5]तादृशानौपाधिकत्वव्यतिरेकोपाधिसंदेहे सत्यौचित्यावर्जितमानसव्यभिचारसंशयात् व्याप्तिग्रहानुत्पादेन [6]तदनुत्पत्तिनियमलक्षणप्रतिबन्धक[7]त्वसत्त्वात् अनौपाधिकत्वज्ञानाजन्ये व्याप्तिग्रहे व्यभिचारः। न च ग्राह्यभिन्नयद्व्यतिरेकसंशयनिश्चययोः[8]प्रतिबन्धकत्वमित्यभिमतम्। उपाधिनिश्चये सत्यपि व्यभिचारानुमितौ व्याप्तिनिश्चयोत्पादेन तस्याप्रतिबन्धकत्वान्न दोष इति सांप्रतम्। तन्निश्चये सत्यौचित्यावर्जितमानसव्यभिचारनिश्चयात् व्याप्तिग्रहानुत्पत्तेर्व्यभिचारतादवस्थ्यात्। अत एव वक्ष्यति—'उपाधेर्निश्चयाद् व्यभिचारनिश्चयः तत्संशयात्तत्संशयः' इति।

उपाधिना व्यभिचारानुमानं च नानुमितिप्रतिबन्धार्थम्। किं तु अविनाभावात्, यथा अष्टकादिस्मृत्या प्रवर्तकज्ञानोत्पत्तावपि श्रुत्यनुमानमविनाभावादेव। न चैवमुपाधेरनुमित्यनुत्पादव्याप्ययथार्थज्ञानविषयत्वाद्धेत्वाभासत्वापत्तिः। ज्ञायमानदोषान्तरासहकृतानुमितिदोषस्यैव हेत्वाभासत्वात्, उपाधेश्च [9]नियमेन व्यभिचारज्ञानसंकीर्णतया तथात्वाभावात्। अत एव बाधस्य हेत्वाभासत्वसिद्धये [10]दोषान्तरासंकरायासंकीर्णोदाहरणप्रयासः।

अथ [11]यदभावत्वप्रकारकतानियतयोः संशयव्यतिरेकनिश्चययोः प्रतिबन्धकत्वं विवक्षितम्। उपाधिज्ञानस्य च लाघवेन साध्यव्यापकत्वादिप्रकारकज्ञानत्वेनैव तथात्वम्, न त्वनौपाधिकत्वाभावत्वप्रकारकज्ञानत्वेन गौरवात्। तदनुल्लेखेऽपि

---

1. ख. साध्यव्यतिरेक-
2. ख. ग. घ. तात्पर्यमिति न
3. ग. तन्निश्चयजन्ये
4. क. व्याप्तिग्रहे
5. ख. ग. तादृशानानौपाधिक-
6. ख. घ. 'तद्' नास्ति।
7. ख. °त्वासत्त्वात्
8. क. प्रतिबन्धकत्वं विवक्षितम्।
9. ग. नियमेनाव्यभि-
10. क. दोषान्तरासंकीर्णो-
11. ख. घ. यदा भावत्व-

न। प्रामाण्यसंशयानन्तरमिदमित्थमेवेत्यवधारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात्।

---

**प्रकाशः**

दृष्टार्था प्रवृत्तिः प्रामाण्यावधारणं विनापि यथा तथास्तु। अदृष्टार्था तु वैदिकी प्रवृत्तिः [1]प्रामाण्यसंशये सत्यभवन्ती प्रामाण्यावधारणसाध्यैवेत्याह—नेति।

---

**न्यायशिखामणिः**

तावता व्याप्तिग्रहप्रतिबन्धाच्च। अत एवाऽव्यभिचारसंशयेन तदभावनिश्चयेन च प्रतिबध्ये अव्यभिचारनिश्चये तन्निश्चयाजन्ये न व्यभिचारः। लाघवेन [2]तस्य व्यभिचारज्ञानत्वेनैव प्रतिबन्धकत्वादिति चेत्—न। ग्राह्यभिन्नत्वविशेषणानुपादाने व्याप्तिव्यतिरेकत्वविषयतानियतव्याप्तिव्यतिरेकज्ञानमात्रप्रतिबध्ये व्याप्तिग्रहे व्यभिचारात्। तदुपादाने च संशयपदोपादानवैयर्थ्यापत्तेरिति।

अत्र ब्रूमः। यदभावत्वप्रकारकतानियतस्य ग्राह्यभिन्नयद्व्यतिरेकनिश्चयस्य प्रतिबन्धकत्वं विवक्षितम्। उपाधिनिश्चयस्योक्तविधया प्रतिबन्धकत्वाभावान्न तत्प्रतिबध्ये [3]व्याप्तिनिश्चये व्यभिचारः। व्याप्तिव्यतिरेकस्य च ग्राह्यविरहरूपत्वान्न तत्प्रतिबध्ये तस्मिन् व्यभिचारः। अत एव सिद्धसाधनप्रतिबध्यानुमितौ व्यभिचार इति निरस्तम्। न च साध्याभावानुमितिस्थले सिद्धेस्तदभावत्वप्रकारकतानियमात् व्यभिचारतादवस्थ्यमिति[4] वाच्यम्। प्रतिबध्यमात्रे तथा नियमस्य विवक्षितत्वात्। [5]साध्याभावसिद्धेस्तथात्वेऽपि साध्यानुमितौ [6]साध्यसिद्धेस्तदभावत्वप्रकारकत्वेनाप्रतिबन्धकतया प्रतिबध्यानुमितिमात्रे तथा नियमाभावात्।

अत एव गोत्वविरहव्यतिरेकनिश्चयप्रतिबध्ये [7]गोत्वविरहनिश्चयाजन्ये अश्वत्वनिश्चये व्यभिचार इत्यपास्तम्। गोत्वनिश्चये [8]सत्यश्वत्वाभावव्याप्यत्वाप्रतिसंधानदशायामश्वत्व[9]निश्चयोत्पादेन निरुक्तप्रतिबन्धकत्वाभावात्, प्रतिबन्धकत्वे वा तस्य गोत्वनिश्चयत्वेनैव तथात्वाच्चेति संक्षेपः।

---

1. ख. प्रमाणसंशये
2. ग. तद्व्यभिचार-
3. ख. ग. घ. व्याप्तिग्रहे
4. ख. ग. घ. 'इति वाच्यम्' नास्ति।
5. क. अत्र साध्याभाव-
6. क. ख. घ. 'साध्य' नास्ति।
7. ग. तद्विरह-
8. क. ग. 'सति' नास्ति
9. क. °निश्चयेन

**ननु स्वत एवास्तु तन्निरूपणम् । तथा हि तत्र विप्रतिपत्तयः । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा ।**

---

### प्रकाशः

[1]एवं सति निरस्ते तटस्थे मीमांसकमतमुत्थापयति—**नन्विति** । यद्यपि माध्यमिकनिराकरणपूर्वकमेतदुत्थापनं [2]युक्तम्, तथापि प्रामाण्यपरतस्त्वव्यवस्थापनेनोभयमतनिराकरणमेव भावीत्याशयेन माध्यमिकमनिराकृत्यैवैतदुत्थापनमिति ध्येयम् । मीमांसकत्रितयसाधारणीं वादाङ्गसंशयबीजभूतां विप्रतिपत्तिं दर्शयति—**ज्ञानप्रामाण्यमिति** ।

---

### न्यायशिखामणिः

ननु [3]प्रामाण्यावधारणस्य व्यभिचारान्यथासिद्धिभ्यां प्रवृत्तिसामान्यतद्विशेषहेतुत्वाक्षेपे [4]तदनुपपाद्यार्थसत्तानिश्चयं प्रति हेतुत्ववर्णनमसंगतमित्यत आह—**दृष्टार्थेति** । तन्निश्चयप्रयोज्यत्व[5]मत्र साध्यम् । तत्र हेतुमाह—**प्रामाण्येति** । ग्राह्यभिन्नप्रामाण्यव्यतिरेकनिश्चये [6]सत्यनिष्पाद्येत्यर्थः । तथा च निष्कम्पप्रवृत्तिः प्रामाण्यावधारणप्रयोज्या ग्राह्यभिन्नतद्व्यतिरेकनिश्चयप्रतिबध्यत्वादनुमितिवदित्यनुमानं प्रवृत्तिविशेषस्य तत्प्रयोज्यत्वे मानमिति भावः ।

ननु स्वतस्त्वस्थापनावादी न तटस्थः, तस्य स्थाप्याभावात् । तन्निश्चयस्य प्रवृत्तिहेतुत्वे [7]दूषणानभिधानेन [8]प्रकृतासंगतेश्च । नापि नैयायिकमाध्यमिकौ, [9]स्वतस्त्वानङ्गीकारादित्यत आह—**एवमिति** । **तथापीति** । यद्यपि स्वतस्त्वस्थापकमीमांसकमुखेनापि माध्यमिको निराकर्तुं शक्यः; तथाप्यग्रे मीमांसकनिराकरणे तन्मतावष्टम्भेन निराकृतस्य माध्यमिकस्य पुनरुत्थानापत्तौ [10]परतस्त्वसाधकयुक्तिरेव तन्निराकरणा[11]योपन्यसनीयेत्यावश्यकत्वात् तद्व्यवस्थापकग्रन्थस्यो-

---

1. ख. एवं च सति
2. ख. अयुक्तम्
3. क. प्रामाण्यनिश्चयस्य
4. ख. तदनुपपत्त्यार्थ-
5. ख. ॰मात्रं साध्यम् ।
6. क. सति निष्पाद्येत्यर्थः
7. ग. दूषणाभिधानेन
8. ग. प्रकृतासंगतत्वाच्च ।
9. ग. स्वतस्त्वास्वतस्त्वानङ्गी-
10. क. परतस्त्वव्यवस्थापक-
11. ख. ॰योपायनीया
    घ. ॰योपासनीया

## प्रकाशः

अत्र अप्रामान्यज्ञानत्वादिकमेकं पक्षत्वेन नाभिसंहितम् । मीमांसकैरपि अप्रामान्यत्वादेर्व्यवसायानुपनीतत्वेनानुव्यवसायादिना ग्रहणानभ्युपगमात् ।

---

## न्यायशिखामणिः

भयमतनिराकरणपरत्वं युक्तमिति भावः । उभयेति । यद्यप्यग्रे मीमांसक[1]मतनिराकरणमेव प्रतीयते [2]न माध्यमिकमतनिराकरणम्, तथाप्यर्थान्माध्यमिकनिराकरणमिति भावः । ननु प्रत्येकविप्रतिपत्तौ गुरुमते स्वाश्रयग्राह्यमित्येवोपपत्तेः ग्राहकपदवैयर्थ्यमित्यत आह—मीमांसकेति । तथा च भट्टगुरुमुरारिसंमतज्ञातताल्लिङ्गकानुमितिव्यवसायानुव्यवसायानां ज्ञानग्राहकत्वेनानुगतीकरणेन एतद्विप्रतिपत्तेस्त्रितयसाधारण्यान्न तत्र ग्राहकपदवैयर्थ्यमिति भावः ।

[3]वादाङ्गेति । यद्यपि [4]समानधर्मदर्शनादपि संशयसंभवस्तथापि विप्रतिपत्तिजन्यसंशय एव [5]वादाङ्गमिति भावः ।

ननु किमर्थमत्र विप्रतिपत्त्यभिधानम् । न च वादप्रवृत्तये; वेदपौरुषेयत्ववादादावपि तत्प्रसङ्गात् । यदि च पूर्वपक्षसिद्धान्तानुमानसाध्यद्वयनिर्देशेन कोटिद्वयस्य स्पष्टतया तत्र विप्रतिपत्तेरूहितुं शक्यत्वान्न तदभिधानमिति, तदा प्रकृतेऽपि तुल्यमिति चेत्—न । तच्च ज्ञानग्राहकसामग्रीग्राह्यमेवेति [6]पूर्वपक्षानुमानसाध्यपर्यालोचनया प्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्रतिपत्तेः सिद्धसाधनबाधग्रस्तायाः सुलभोहत्वेऽप्यदुष्टायास्तदप्रामाण्याग्राहकयावत्पदगर्भायास्तस्या दुरूहत्वात् ।

ननु 'स्वाश्रयेण गृह्यत एव न वेति प्रत्येकमेव [7]वे'त्यग्रिमग्रन्थपर्यालोचनया प्राक्तनविप्रतिपत्तीनां त्रितयसाधारण्यावगमोपपत्तेस्तत्प्रतिपादनमत्रासंगतमिति चेत्—न । अग्रेतनग्रन्थालोचनासमर्थपुरुषानुग्रहायात्र तदभिधानोपपत्तेः ।

ज्ञानप्रामाण्यमित्यत्र प्रामाण्यपदस्य न प्रमाणवृत्तिधर्मपरत्वम् । तथा सति अप्रामान्यत्वादेरपि [8]पक्षत्वापत्तेः । न च ज्ञानपदमहिम्ना ज्ञानेतरा[9]वृत्तित्वलाभान्न

---

1. ख. ग. घ. 'मत' नास्ति ।
2. ख. ग. घ. 'न माध्यमिकमतनिराकरणम्' इति नास्ति ।
3. क. ग. विवादाङ्गेति ।
4. ग. समानदर्शनादेः संशय°
5. क. ग. विवादाङ्ग°
6. क. पूर्वपक्षसाध्य°
7. क. विप्रतिपत्तिरित्यग्रिम°
8. ख. ग. घ. पक्षत्वापत्तिः ।
9. क. °वृत्तिप्रामाण्यलाभान्न

### प्रकाशः

किं तु रजतत्ववति रजतत्वप्रकारकज्ञानत्वादिकं प्रामाण्यत्वेनानुगतं तत्त्वेनाभिसंहितम् । न च गुरुमते रजतत्ववतीति व्यर्थम्, पक्षे उपरञ्जकस्यापि दानादिति ।

---

### न्यायशिखामणिः

दोष इति वाच्यम् । तथापि [1]भ्रमान्यज्ञानत्वादेः पक्षत्वापत्तेः । न च तत् तत्त्वेनाभिमतमित्यत आह—अत्रेति । एकमित्यापाततः, तदभाववद्विशेष्यकतत्प्रकारकज्ञानलक्षणभ्रमान्यज्ञानत्वस्यापि नानात्वात् । न च दोषजन्यज्ञानत्वं भ्रमत्वम्, तच्चैकमिति वाच्यम् । दोषत्वस्य जातित्वाभावात् । उपाधेरपि तस्यानुगतस्यानिर्वचनात् । तथा [2]विशेष्यावृत्तिप्रकारकत्वमपि तत्पदगर्भत्वान्नाना । अन्यथा घटज्ञानस्य यत्किंचिद्विशेष्यावृत्तिघटत्वप्रकारकत्वेनाप्रामाण्यापत्तेरिति[3] । अनभिमतत्वे हेतुमाह—मीमांसकैरिति । तद्वति तत्प्रकारक[4]ज्ञानत्वमपि न प्रामाण्यपदनिर्देश्यम्, नानात्वेनाननुगमादिति शङ्कते—किं त्विति । प्रामाण्यपदेन समर्थप्रवृत्तिजनकतावच्छेदकमेव[5] विवक्षितम् । तच्च न भ्रमान्यत्वादि, गौरवात् । किं तु [6]रजतत्ववतीत्यादि लाघवात् । तथा च नाननुगमः । न चात्र पक्षत्वे विमतिरित्याशयेनाह—रजतत्ववतीति । प्रामाण्यत्वेन—समर्थप्रवृत्तिजनकतावच्छेदकत्वेन । तत्त्वेन—पक्षत्वेन । न चेति ।

यद्यपि उक्तपक्षतावच्छेदके [7]तद्वतीति विशेषणस्यानुपात्तत्वेन वैयर्थ्यशङ्कानवकाशः । न चैतदनुरोधेन प्रामाण्यत्वेन इत्यस्य तद्वति तत्प्रकारकज्ञानत्वेनेत्यर्थ इति [8]विवक्षितमिति वाच्यम् । तस्य तत्पदघटितत्वेनाननुगततया पक्षतावच्छेदकत्वायोगात् । न हि यत्त्वतत्त्वादिकमनुगतमस्ति । अनुगतव्यवहारस्य स्वरूपसद्बुद्धिस्थत्वेनोपपत्तेः । [9]तथाप्यत्र कदाचिद्रजतज्ञानप्रामाण्यमात्रस्य पक्षतया विवक्षिततया तन्निष्ठपक्षतावच्छेदके रजतत्ववति रजतत्वप्रकारक[10]ज्ञानत्वत्वे रजतत्व-

---

1. ग. भ्रमान्यत्वज्ञान॰
2. ख. ग. घ. विशेष्यावृत्त्यप्रकार॰
3. ख. ग. घ. ॰पत्तिरिति
4. ग. 'ज्ञान' नास्ति ।
5. ख. 'एव' नास्ति ।
6. ख. रजतत्ववदित्यादि
7. क. तद्वद्विशेषण॰
8. ग. 'विवक्षितमिति' इति नास्ति ।
9. क. घ. तथापि यद्वेत्यत्र
10. ख. ॰ज्ञानतत्वे

**प्रकाशः**

[1]अत्र ज्ञानपदं करणप्रामाण्यभ्रमनिरासायेति केचित्। तन्न। ज्ञानपदसत्त्वेऽपि तत्सत्त्वात्, पदज्ञानादेरपि करणत्वात्, ज्ञायतेऽनेनेति व्युत्पत्त्या चक्षुरादेरपि ज्ञानत्वात्। यदि च प्रामाण्यपदस्य विशेषपरत्वम्, तदा भ्रमासंभव एवेति।

अन्ये तु प्रामाण्यपदं तद्वति तत्प्रकारकत्वमात्रपरम्। तच्च इच्छावृत्ति न यथोक्तसाध्यवदिति बाधवारणाय ज्ञानपदम्।

---

**न्यायशिखामणिः**

वतीति विशेषणस्य भवत्येव वैयर्थ्यशङ्का। अत एवाह—रजतत्ववतीति। अन्यथा तद्वतीति स्यादिति।

**करणेति**। करणनिष्ठस्य प्रमाकरणत्वरूपप्रामाण्यस्य पक्षत्व[2]भ्रमवारणायेत्यर्थः। न च प्रामाण्यपदस्य समर्थप्रवृत्तिजनकतावच्छेदकपरत्वात् भ्रमासंभव इति वाच्यम्। एतन्मते प्रामाण्यपदस्य प्रमाणवृत्तिधर्मपरत्वादिति भावः। **ज्ञानपदमिति**। तथा च चक्षुरादिप्रामाण्यस्य [3]ज्ञाननिष्ठत्वाभावान्नोक्तदोष इति भावः। किमत्र प्रामाण्यपदं प्रमाणवृत्तिधर्मपरम्, तद्वति तत्प्रकारकज्ञानत्वपरं वा। तत्राद्यं दूषयति—**तन्नेति**। ननु ज्ञानपदमहिम्ना ज्ञानमात्रवृत्तिप्रामाण्यं लभ्यत इत्यत आह—**ज्ञायत इति**। न च ज्ञानपदस्य [4]भावव्युत्पत्तौ प्रसिद्धत्वात् ज्ञप्तिरेवात्र विवक्षिता। तथा च करणप्रामाण्यस्य ज्ञप्तिमात्रवृत्तित्वाभावान्न [5]भ्रमसंभव इति वाच्यम्। तथापि भ्रमान्य[6]ज्ञानत्वादेर्भ्रमानिवारणादिति भावः। द्वितीयं निरस्यति—**यदि चेति**।

**अन्ये त्विति**। मात्रपदेन तादृशज्ञानत्वव्यवच्छेदः। **तच्चेति**। ननु ज्ञानेच्छयोर्नैकं प्रामाण्यम्। परमते सामान्य[7]प्रत्यासत्त्यभावेन [8]सिद्धज्ञानादसिद्धगोचरेच्छाभ्युपगमादिति चेत्—न। ज्ञानेच्छयोर्विशेष्यभेदेऽपि प्रकारैक्यात्। न च तयोः सिद्धत्वासिद्धत्वप्रकारकत्वात् तदैक्यमप्यसिद्धमिति वाच्यम्। तथापि

---

1. ख. 'अत्र' नास्ति।
2. ख. घ. °भ्रमावधारणाय°
3. ख. 'ज्ञाननिष्ठत्वाभावात्.........ननु ज्ञानपदमहिम्ना' इति ग्रन्थस्त्रुटितः।
4. क. ग. घ. भावव्युत्पत्तेः
5. ग. भ्रमसंशयः
6. क. °ज्ञानत्वभ्रमा°
7. क. °प्रत्यासत्त्यनङ्गीकारेण
8. ख. सिद्धज्ञानासिद्धि°
   घ. सिद्धिज्ञानादसिद्धि°

प्रकाशः

तेन तद्वति तत्प्रकारकज्ञानत्वं पर्यवस्यति । न च घटत्ववतीत्यादेः ज्ञानेच्छासाधारण्येऽपि इच्छावृत्तित्वेन ग्रहेऽपि यावज्ज्ञानग्राहकग्राह्यत्वमस्त्येवेति नोक्तदोष इति वाच्यम् । यावज्ज्ञानग्राहकग्राह्यत्वं हि यावत्स्वाश्रयग्राहकग्राह्यत्वम् । यथाश्रुते असंभवात् ।

---

न्यायशिखामणिः

सुखत्वमादाय तदुपपत्तेः । वस्तुतस्तु इदं सुखं सुखपूर्ववर्ति इदानींतनसुखत्वादित्यनागतसुखानुमानस्य विधौ वक्ष्यमाणत्वादसिद्धत्वप्रकारगर्भमपि प्रामाण्यं तदुभयसाधारणमिति भावः । तथापि तत्र ज्ञानग्राहकग्राह्यत्वसत्त्वान्न बाध इत्यत आह—[1]**न यथोक्तेति** । न विवक्षितसाध्यवदित्यर्थः । ननु ज्ञानपदोपादानेऽपि नेच्छावृत्तिप्रामाण्ये बाधनिरासः, तस्य ज्ञानेऽपि सत्त्वादित्याशङ्क्य ज्ञानपदस्य भावप्रधानत्वात् सति सप्तम्याश्चाश्रयणात् तद्व्यावृत्तप्रामाण्यसिद्धिरित्याशयेनाह — **तेनेति** । यद्वा ज्ञानपदमहिम्ना प्रामाण्यपदमेव तद्वति तत्प्रकारकज्ञानत्वपरम् । तथा च ज्ञानपदस्य तात्पर्यग्राहकत्वान्न वैयर्थ्यमित्यभिप्रेत्याह—**तेनेति** । युक्तं चैतत् । अन्यथा [2]ज्ञानवृत्तित्वे सति तद्वद्विशेष्यकतत्प्रकारकत्वस्य सिद्ध्यापत्तौ तद्वति तत्प्रकारकज्ञानत्वं पर्यवस्यतीत्यनुपपत्तेः । उक्तपदस्याकरोक्तसाध्यपरत्वं मन्वानस्याशङ्का[3]मुद्भाव्य [4]निराकरोति—**न चेति** । नन्विच्छायां तद्वति तत्प्रकारकत्वाग्रहणे [5]तदेव तत्राप्रामाणिकमिति क्व बाधविचार इत्याशङ्कां [6]वारयितुं **साधारण्येऽपी**त्यपिशब्दः । तस्येच्छावृत्तितयानुव्यवसायेनाग्रहेऽप्यनुमानादिना [7]ग्रहसंभवादिति भावः । नन्विच्छायाः प्रत्यासत्तित्वाभावेऽपि तद्धेतुज्ञानस्य प्रत्यासत्तितया तत एवेच्छावृत्तित्वेनापि प्रामाण्यग्रहः संभवतीति विवक्षितसाध्यस्यापि न बाध [8]इति सूचयितुं [9]**ग्रहेऽपी**त्युक्तम् ।

साध्यविवक्षाया आवश्यकत्वं प्रतिपाद्य तत्साध्यस्येच्छावृत्ति[10]प्रामाण्ये बाधमुपपादयति—**तथा चेति** । ननु मानसज्ञाने विषयस्य स्फुरणे व्यवसायविषयत्व-

---

1. ग. न चेति ।
2. ख. ज्ञानत्वे सति
3. ग. °मुत्थाप्य
4. क. निरस्यति
5. ख. तदेतत्राप्रा°
6. क. निराकर्तुं
7. ख. ग. घ. ग्रहणसं°
8. ख. घ. इत्याशयं
9. क. ग. अग्रहेऽपि
10. ग. °प्रामाण्योपायमुप°

### प्रकाशः

तथा च ज्ञानपदानन्तर्भावे बाध एव । स्वाश्रयीभूतेच्छाग्राहकेण तदाग्रहात् । न हि व्यवसायवदिच्छाया अपि [1]उपनायकत्वं कश्चिदभ्युपैति, येन तथा स्यादित्याहुः ।

तच्चिन्त्यम् । तत्प्रकारीभूतप्रकारकत्वतद्विशेष्यभूतविशेष्यकत्वादिना स्वाश्रयग्राहकसामग्री विशेषणीया न वा । आद्ये नोक्तदोषः । तेन रूपेण स्वाश्रयीभूतेच्छाग्राहकेण तद्वति तत्प्रकारकत्वस्यावश्यं ग्रहात् । अन्त्ये ज्ञानपदान्तर्भावेऽपि बाध एव, ज्ञानपदादिना तदग्रहादिति ।

वस्तुतस्तु प्रामाण्यमात्रपक्षत्वे अननुव्यवसितनष्टज्ञानप्रामाण्यांशे बाध एवेति ज्ञानपदं तद्विशेषपरम् ।

---

### न्यायशिखामणिः

वत् इच्छाविषयत्वस्यापि नियामकतया तद्वशाद्विषयघटितप्रामाण्य[2]भानमिच्छाग्रहेऽ[3]प्यस्त्वित्यत आह—न हीति । व्यवसायविषयत्ववदिच्छाविषयत्वस्य न विषयभाननियामकत्वम् । 'व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वा'दित्यग्रिमग्रन्थे व्यवसायविषयत्वस्यैव नियामकतया वक्ष्यमाणत्वात् । अन्यथा [4]अपसिद्धान्तादिति भावः । अवश्यंग्रहादिति । [5]तत्रापि व्यवसायविषयत्वसत्त्वात् विषयघटितप्रामाण्यभानमविरुद्धम् । न च तदनुव्यवसायानन्तरमिच्छा, ततस्तदनुव्यवसायसमये [6]व्यवसायस्य विनष्टत्वात् कथं तद्विषयत्वमत्र नियामकमिति वाच्यम् । इच्छासामग्र्याः प्रबलतया व्यवसायानन्तरमिच्छोत्पत्तेस्तदनुव्यवसायपूर्वक्षणे विनश्यदव[7]स्थस्य व्यवसायस्य सत्त्वादिति भावः ।

उपाध्यायमतमाह—वस्तुतस्त्विति । प्रामाण्यमात्रेति । समर्थप्रवृत्तिजनकतावच्छेदकमात्रेत्यर्थः । [8]ननु तद्वस्तुनश्चैत्रादिवदेकव्यक्तित्वेऽपि स्थायितया तत्पुरुषे पुरुषान्तरे वा कालान्तरे तद्विषय[9]ज्ञानानन्तरं तदनुव्यवसायसंभवेन

---

1. क. उन्नायकत्वं
2. ख. ग. °ज्ञान-
3. ख. घ. °प्यस्तीत्यत
4. क. अपसिद्धान्त इति ।
5. क. अत्रापि
6. क. व्यवसायस्यापि नष्ट-
7. ग. घ. °स्थव्यवसायस्य
8. ग. नन्वस्तु नैश्चल्यादिवदेक-
9. क. घ. °ज्ञानान्तरतदनु-

## न्यायशिखामणिः

तत्प्रामाण्ये [1]साध्यसत्त्वान्न बाध इत्यत आह—[2]नष्टेति। तत्कालोत्पन्नविनष्टेत्यर्थः।

ननु [3]विनष्टविषयकज्ञानप्रामाण्यस्यानुव्यवसायेनाग्रहणे तस्यैवाप्रामाणिकत्वान्न बाधावकाशः। न च प्रवृत्ति[4]लिङ्गकानुमानं तत्र प्रमाणमिति वाच्यम्। तस्योक्तरूपेण स्वाश्रयाग्राहकतया तत्र प्रमाणत्वासंभवात्। अन्यथा प्रामाण्यस्य तद्ग्राह्यत्वेन बाधाभावप्रसङ्गात्। अत एवाहं [5]तद्व्यक्तित्वप्रकारकज्ञानवान् इदानीं तादृशस्मृतिमत्त्वादित्यनुमानं [6]तत्र प्रमाणमिति निरस्तम्। तज्ज्ञानस्य [7]स्मृत्यजनकत्वेनापि विवक्षणीयत्वाच्च। अन्यथा तत्प्रामाण्यस्य स्मृतावपि संभवेन तदनुव्यवसायेन ग्रहणापत्तौ बाधाभावप्रसङ्गात्।

एतेन प्रमात्वं अननुव्यवसितज्ञानवृत्ति सकल[8]प्रमावृत्तित्वात् ज्ञानत्ववदित्यनुमानं प्रमाणमिति निरस्तम्। न चोक्तरीत्या [9]संभाविते तज्ज्ञानप्रामाण्ये परमेश्वरीयज्ञानं प्रमाणम्। न ह्यस्मदज्ञातत्वमात्रेण तस्यासद्भावः, [10]संभावनाविषयमेरुगुहान्तर्वर्तिपदार्थानामप्यसिद्धिप्रसङ्गादिति वाच्यम्। परमते परमेश्वरानभ्युपगमात्। अभ्युपगमे वा तादृशज्ञानग्राहकपरमेश्वरीयज्ञानग्राह्यतया साध्यसत्त्वेन बाधाभावप्रसङ्गात्। [11]न च तस्य सर्वविषयतया पक्षीभूतप्रामाण्यविरोध्यग्राहकत्वाभावान्न तदादाय साध्यसत्त्वमिति वाच्यम्। अन्यत्र तद्ग्राहकत्वेऽपि पक्षीभूतप्रामाण्याश्रये तस्य तद्ग्राहकत्वाभावात्। अन्यथा तस्य भ्रमत्वप्रसङ्गात्।

किं च भट्टमते [12]सर्वज्ञानानामतीन्द्रियतया प्रामाण्यमात्रस्याननुव्यवसितज्ञानवृत्तितया व्यावर्तनीयप्रामाण्यासिद्धिः। गुरुमते तु स्वाश्रयस्यैवानुव्यवसायतया तादृशप्रामाण्यमेव दूरापास्तमिति क्व बाधवार्तावकाशः। तस्मादेतदसंगतमिति चेत्—

---

1. क. साध्यस्य सत्त्वान्न
2. ग. विनष्टेति।
3. क. विनष्टव्यक्तिविषयक-
4. क. ख. ग. लिङ्गानुमानं
5. ग. तद्वृत्तित्व-
6. ख. ग. घ. 'तत्र' नास्ति।
7. ग. स्मृतिजनक-
8. ख. ०प्रमाणवृत्ति-
9. ग. संभावितोत्पन्नज्ञान-
10. ख. ग. असंभावनाविषय-
11. ग. न चास्य
12. ख. ग. घ. सर्वज्ञानस्याती-

## न्यायशिखामणिः

अत्र ब्रूमः। अस्ति किंचिद्वस्तुविषयकज्ञानम्। तच्चानुव्यव[1]सायेनाविषयीकृतम्। न हि ज्ञानं सुखादिवदवश्यवेद्यमिति [2]नियमः। न चैवं तज्ज्ञानप्रामाण्ये [3]प्रमाणाभावः। अननुव्यवसितपदादनुव्यवसायविषयत्वप्रतिषेधेन तत्प्रामाण्ये प्रमाणान्तरानुमितिप्रतीतेः। अन्यथा अज्ञातेति वचनव्यक्तिप्रसङ्गात्। न चैवमपि साध्यसत्त्वाद्बाधानुपपत्तितादवस्थ्यम्। प्रामाण्यग्राहकत्वेन विप्रतिपन्नस्य ज्ञाततालिङ्गकानुमितिरूपस्य प्रत्यक्षज्ञानलक्षणस्य चानुव्यवसायस्य प्रतिषिद्धतया तद्व्यतिरिक्तस्य सर्वस्य प्रवृत्तिलिङ्गकानुमानादेर्विवक्षितस्वाश्रयग्राहकरूपस्य न्यायनयेऽपि प्रामाण्यग्राहकत्वस्वीकारेण विधिकोटौ सिद्धसाधनम्, निषेधकोटौ बाध इत्यस्य विवक्षितत्वात्। न चैवमपि गुरुमते ज्ञानपदवैयर्थ्यम्, तत्रोक्तप्रकारस्यासंभवदुक्तिकत्वादिति वाच्यम्। तथापि तद्व्यतिरिक्तमत एव [4]तत्साध्यस्याभिप्रेतत्वात्। तथा च तन्मते रजतत्ववतीति विशेषणवदुपरञ्जकं तदिति बोध्यम्।

**तद्विशेषेति।** अज्ञायमानेतरज्ञान[5]परमित्यर्थ इत्याहुः। तच्चिन्त्यम्। उक्तज्ञानस्याननुव्यवसितत्वेऽप्यनुमितिविषयत्वाभ्युपगमेन दोषतादवस्थ्यात्।

अन्ये तु अस्मदादिलौकिकप्रत्यक्षज्ञानविषयीकृतज्ञानपरमित्यर्थ इति। तदपि चिन्त्यम्। भट्टमते प्रत्यक्ष[6]ज्ञानाप्रसिद्ध्या पक्षस्यान्यतरासिद्धिप्रसङ्गात्। अत एव ज्ञानपदं ज्ञाततालिङ्गकानुमितिविषयीकृतज्ञानपरमित्यपास्तम्। [7]भट्टमतव्यतिरिक्तसर्वमते ज्ञाततायाः एवानङ्गीकारेण[8] तद्घटितपक्षस्य सर्वसाधारण्याभावप्रसङ्गात्।

**नरहरिमिश्रास्तु**—अननुव्यवसितज्ञानप्रामाण्ये अनुमानरूपायाः स्वाश्रयग्राहकसामग्र्या [9]एकत्वेन तत्र यावद्धर्मसाध्याभावात् [10]बाध इति तद्वारणाय ज्ञानपदम्, वक्ष्यमाणानेकसामग्रीग्राह्यज्ञानपरमित्यर्थ इत्याहुः। तन्न। यावत्पदस्याशेष[11]परतया बाधाप्रसङ्गात्। ज्ञानपदप्रयोजनायैव तस्यानेकाशेषपरत्वमित्यस्यासंभवदुक्तिकत्वात्।

---

1. ख. घ. ०सायेन विषयी-
2. ख. ग. घ. 'नियमः' इति नास्ति।
3. ग. प्रामाण्याभावः
4. ग. तत्साध्यस्या-
5. क. 'पर' नास्ति।
6. ख. ग. ०ज्ञानप्रसिद्ध्या
7. ख. ग. घ. भट्टव्यतिरिक्तमते।
8. क. ०कारात्
9. क. अग्राहकत्वेन
10. ख. साधन इति
11. ख. ०परत्वेन बाध-
    घ. ०परत्वेन बाधा-

## न्यायशिखामणिः

वयं तु यत् ज्ञानं [1]तत्प्रका(रि)[री]भूतधर्मप्रकारत्वादिना स्वाश्रयग्राहकम् उभयवादिसिद्धप्रामाण्यग्राहकभिन्नं तद्विषयीकृतज्ञानं ज्ञानपदेन विवक्षितम्। तथा चोक्तज्ञानस्य नैयायिकमीमांसकसंमततादृशानुमितिविषयत्वेऽपि अन्यतरासिद्धतादृशानुव्यवसायज्ञाततालिङ्गकानुमितिविषयत्वाभावात् तज्ज्ञानप्रामाण्यनिरास इति ब्रूमः।

यत्तु ज्ञानपदस्य तद्विशेषपरत्वे पक्षसंकोचापत्तिः। [2]असंकोचेनैवोपपत्तौ संकोचकल्पनानौचित्यात्। यदि च एकत्र संकोच इत्यन्यत्रापि तत्कल्पना। तदा अप्रामाण्याग्राहकपदमपि त्यज्यताम्। यज्ज्ञाने कदापि नाप्रामाण्यग्रहः तज्ज्ञानप्रामाण्यमात्रपक्षत्वेनैव बाधव्यवच्छेदादिति।

तन्न। [3]प्रामाण्यमात्रे स्वतस्त्वप्राप्तौ बाधकेन पक्षतावच्छेदकस्य करणप्रामाण्यभ्रमान्यत्वादिव्यावृत्तिकल्पनवत् समर्थप्रवृत्तिजनकतावच्छेदकमात्रस्य तत्प्रसक्तौ बलवता बाधादिना बाधकेनोक्तज्ञानवृत्तितदवच्छेदक[4]मात्रकल्पनस्यापि न्याय्यत्वात्।

यदपि [5]यदि चेत्यादि। तदपि न। व्यावर्तनीयप्रामाण्यसाधारण[6]साध्यासंभवेन पक्षसंकोचेऽप्यप्रामाण्याग्राहकत्वघटिततत्साधारणसाध्यसंभवे [7]तत्संकोचकल्पनस्यायुक्तत्वात्। तर्हि साध्यानुरोधात् पक्षपरिच्छेदे तादृशसामग्रीग्राह्यजातीयत्वमेव साध्यमस्त्विति तदनुरोधात् समर्थप्रवृत्तिजनकतावच्छेदकत्वेनानुगतं सर्वप्रामाण्यं पक्ष [8]इति स्यात्। तथा च तत्रापि साध्यसत्त्वात् बाधवारकं ज्ञानपदं व्यर्थमेवेति चेत्—तर्हि प्रसिद्धानुमानेऽपि वह्निमज्जातीयत्वसाध्यकरणेनैव बाधादिव्यवच्छेदे द्रव्यजातीयमहाह्रदादेरपि पक्षत्वापत्तेः। यदि च तेन रूपेण तत्र विवादाभावात् न तज्जातीयत्वं साध्यम्, तदा तादृशग्राहकग्राह्यत्वेनैवात्रापि अविवादात् न तज्जातीयत्वमपि तथेति तुल्यम्।

किं च येन केनचिद्धर्मेण तत्साजात्यस्य करण[9]प्रामाण्यादावपि सत्त्वेन तस्यापि पक्षत्वापत्तिः। समर्थप्रवृत्तिजनकतावच्छेदकत्वेन साजात्यस्याप्रामाण्यग्रह-

---

1. ग. तत्प्रकारभूत-
2. क. असंकोचोप-
3. घ. प्रामाण्यस्वतस्त्व-
4. ख. ग. घ. °मात्रवृत्तित्वकल्पन-
5. ग. यदित्यादि
6. ख. °साध्यसंभवेन
7. क. तत्संकोचस्यायु-
8. क. 'इति' नास्ति।
9. ग. °प्रामाण्यादपि

प्रकाशः

तदिति। तत्र ग्राह्यप्रामाण्याश्रयत्वेनाभिमते ज्ञाने अप्रमाण्याग्राहिका यावती तज्ज्ञानग्राहिका सामग्री तावद्ग्राह्यं तत्प्रामाण्यमिति त्रितयसाधारणविधिकोटयर्थः। अत्र पक्षान्तर्भूतयत्प्रामाण्याश्रये दोषवशादप्रामाण्यग्राहिका काचित्सामग्री तत्र बाधवारणायाप्रामाण्याग्राहकेत्युक्तम्। न च गुरुमते अप्रामाण्याप्रसि-

न्यायशिखामणिः

स्थलेऽपि सत्त्वेनाप्रामाण्याग्राहकपदवैयर्थ्यापत्तिः। किं चैवं न्यायमते [1]प्रामाण्यमात्रे साध्यसत्त्वेन यावत्पददानेऽपि सिद्धसाधनम्। अपि च तादृशग्राहकग्राह्यजातीयत्वस्याल साध्यत्वेऽप्यननुव्यवसितनष्टज्ञानप्रामाण्ये तत्सत्त्वेन विधौ सिद्धसाधनम्, निषेधे बाधश्च नातिवर्तत इति दिक्।

अन्ये तु प्रामाण्यपदं प्रामाणपदप्रवृत्तिनिमित्तपरम्। तन्निमित्तं च ज्ञाने [2]तद्वद्विशेष्यकत्वम्, तत्करणे प्रमाकरणत्वम्, चैत्रादौ चैत्रत्वादिजातिश्चेति [3]त्रयं योगरूढिभ्यां समधिगतम्। [4]तत्र ज्ञानपदात् [5]चैत्रत्वादेः, ज्ञानमात्रवृत्तित्वविवक्षया करणप्रामाण्यस्य च निरासः। प्रमान्यज्ञानत्वादिकं च गौरवादेव [6]न निमित्तमिति।

तन्न। [7]अननुव्यवसितप्रामाण्यसंग्रहापत्तेः। यदि च तन्निरासार्थं ज्ञानपदस्योक्तज्ञानपरत्वम्, तदा तद्व्यावर्तकत्वेनैव तदुपपत्तौ तत्प्रयोजनाय प्रामाण्यपदस्य तत्प्रवृत्तिनिमित्तपरत्वकल्पनावैयर्थ्यमिति।

ननु तदप्रमाण्येत्यत्र तत्पदेन प्रामाण्यपरामर्शे[8] तत्राप्रामाण्याग्रहात् विशेषणेऽपि बाधः। तदाश्रयपरामर्शे तस्याप्रामाण्यमिति न युक्तम्, [9]विरोधात्। किं च यावत्त्वस्य ज्ञानविशेषणत्वे मीमांसकमतेऽप्यनु[10]व्यवसायादेः सर्वज्ञानग्राहकत्वाभावादसंभवः। न्यायमते तादृशप्रमात्वादिप्रत्यासत्त्या [11]तद्ग्रहात् सिद्ध-

1. ग. प्रमाणस्य साध्यत्वेन
2. क. ख. तद्विशेष्य-
3. ख. त्रययोग-
4. ख. तत्तज्ज्ञान-
5. क. चत्रादेः
6. क. ग. 'न' नास्ति।
7. ख. अनुव्यवसित-
8. ग. तत्राप्रामाण्यग्रहात्
9. क. 'विरोधात्' इत्यतःप्राक् 'तस्याप्रामाण्यमिति' इत्यधिकपाठः।
10. ख. व्यवसायादेव सर्व-
11. ग. तदग्रहात्

## प्रकाशः

(द्धया)[द्धेः]तदग्राहकाप्रसिद्धिरिति वाच्यम् । अप्रामाण्यस्य व्यधिकरणप्रकारकत्वस्य इच्छायां तन्मते प्रसिद्धेः, ततः स्मर्यमाणस्य तस्य भ्रमसंभवात् । भ्रमस्तु तन्मते असंसर्गाग्रहः, [1]अस्मन्मते अन्यथाख्यातिरित्यन्यदेतत् ।

एवमप्यप्रामाण्यवत्यप्रामाण्यप्रकारकज्ञानत्वरूपस्य प्रामाण्यस्य अप्रामाण्यग्राहकसामग्र्यैव परं ग्रहणादंशतो बाध इत्यत उक्तम्—तदिति । तत्राप्रामाण्याग्राहिकेत्यर्थः । वस्तुतस्तु तत्प्रमाण्यविरोध्यग्राहिकेत्यर्थः । तेन यत्र पक्षान्तर्भूतप्रामाण्याश्रये प्रामाण्याभावभ्रम एव जातः, तत्र न बाध इति ध्येयम् ।

---

## न्यायशिखामणिः

साधनम् । ग्राहकविशेषणत्वे घटज्ञान[2]प्रामाण्यग्राहकेण पटज्ञानप्रामाण्याग्रहात् बाध इत्याशङ्क्य, तत्पदस्याश्रयपरत्वात् यावत्त्वस्य [3]च ग्राहकविशेषणत्वात् ज्ञानेत्यत्र तत्पदानुषङ्गाच्च न दोष इत्याह—तत्रेति । अप्रसिद्धेरिति । तस्य सर्वबीयाथार्थ्यवादित्वादिति भावः । [4]ज्ञानत्वाघटितमेव तत्र तत्प्रविष्टमित्यभिप्रेत्याह—[5]अप्रामाण्यस्येति । तन्मते अन्यथाख्यात्यप्रसिद्धेराह—भ्रमस्त्विति । असंसर्गेति । विद्यमानासंसर्गेत्यर्थः । [6]तर्ह्यननुगम इत्याशङ्क्य विसंवादिप्रवृत्तिजनकत्वमनुगमकम् , तदपि नेह प्रतिपाद्यते, [7]वादान्तरप्रमेयत्वादित्याह—इत्यन्यदिति ।

तदप्रामाण्येत्यत्र तत्पदस्य प्रयोजनमाह—एवमिति । तत्रेति । यद्यपीदं [8]सप्तम्यर्थपरतया पूर्वमपि[9] व्याख्यातम् । तथाप्यग्रिमव्याख्यानाद्बेदं सूचयितुं तत्स्मारणमिति भावः । ननु किं तद्वद्विशेष्यकत्वम् प्रामाण्यम् तदभाववद्विशेष्यकत्वमप्रामाण्यम् , उतोभयं तत्प्रकारकत्वघटितम् । नाद्यः, रजतत्वाभावप्रकारकज्ञानप्रामाण्यस्य रजतत्वाभाववद्विशेष्यकत्वस्य रजतत्वप्रकारकज्ञानाप्रामाण्यरूपतया तदग्राहकग्राह्यत्वाभावेन बाधप्रसङ्गात् । न द्वितीयः, प्रमेयत्वाभाववद्विशेष्यकत्व-

---

1. ख. अस्मिन्मते
2. क. 'प्रामाण्य-' नास्ति ।
3. क. 'च' नास्ति
4. क. ज्ञानत्वाद्यघटित-
5. ग. प्रामाण्यस्येति ।
6. क. तस्याननुगमादित्या-
   ग. तस्याननुगम इत्या-
7. ग. वादान्तरत्वादित्याह
8. क. सप्तम्यर्थतया
9. क. 'अपि' नास्ति ।

न्यायशिखामणिः

रूपाप्रामाण्याप्रसिद्ध्या प्रमेयत्वप्रकारकज्ञानप्रामाण्ये तद्घटितसाध्याप्रसिद्धेः। [1]नापि तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वाभावरूपमप्रामाण्यमिह विवक्षितम्, तच्च तत्र प्रसिद्धमिति वाच्यम्। तदग्राहिकया [2]प्रागभावरूपाप्रामाण्यग्राहिकया प्रामाण्यवदन्योन्याभावग्राहिकया च [3]तदग्रहेण बाधात्। किं च तदभाववद्विशेष्यकत्वलक्षणाप्रामाण्यैकदेशग्राहकेणोभयविधाप्रामाण्याग्राहकेण तदग्रहात् बाधतादवस्थ्यमित्यरुचेर्जयदेवमतमाह—वस्तुतस्त्विति।

यद्यप्यभाव एव नञो मुख्यार्थः। तथाप्युक्तबाधकेन प्रकृते तद्विवक्षानुपपत्तेः लक्षणया विरोधिपरत्वम्। विरोधित्वं च तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वम्। तच्चाप्रामाण्ये प्रामाण्याभावे तद्घटके तदभाववद्विशेष्यकत्वे चाविशिष्टम्। [4]प्रमेयत्वादिप्रकारकज्ञानेऽपि तद्विरोधिप्रामाण्याभावः प्रसिद्ध इति नोक्तदोषः।

ननु गुरुमते इदं ज्ञानमप्रमेत्यप्रामाण्यारोपस्थले ज्ञानानुभवस्याप्रमास्मृत्यन्यत्वेन तदग्राहकतया तेन प्रामाण्याग्रहात् बाधः। किं च प्रामाण्याप्रामाण्य[5]व्याप्यत्वावगाहिलिङ्गपरामर्शस्थले विरोधिशब्दद्वयस्थले च [6]प्रामाण्याग्रहात् बाधः। न च तद्विरोधिग्रहसामग्र्यसमवहितत्वं तेन विवक्षितम्, तथा च गुरुमते ज्ञानानुभवस्याप्रामाण्यस्मृतिसमवहितत्वात्, विरुद्ध[7]परामर्शस्थले च तद्विरोधिग्राहकसामग्रीसमवधानात् नोक्तदोषावकाश इति वाच्यम्। तत्सामग्र्यसमवहितत्वं न तावत्तदसामानाधिकरण्यम्। कदाचित्तत्पुरुषे तद्विरोधिग्रहसंभवेन [8]तद्वैयधिकरण्यासिद्धेः। नापि तदसमानकालीनत्वम्, [9]स्वात्मवृत्तिघटादिज्ञाने प्रामाण्यग्रहकाले तद्विषयज्ञानान्तरे पुरुषान्तरस्याप्रामाण्यारोपसंभवेन तत्सामग्र्याः [10]समानकालीनत्वात्। न हि तदा पुरुषान्तरे न तदारोप इत्यत्र प्रमाणमस्ति। न च स्वसमानाधिकरणतद्विरोधिग्राहकसामग्र्यसमान[11]कालीनत्वमभिमतमिति वाच्यम्। यस्य पुरुषस्य [12]यत्प्रामाण्यविरोधिभ्रमः कदापि न जातः तत्पुरुषे तादृशसामग्र्य[13]प्रसिद्ध्या

---

1. क. नहि ख. नापि तद्विशेष्यक-
2. क. प्रागभावरूपप्रामाण्य-
3. ख. ग. घ. तदग्रहणे
4. क. प्रमेयत्वप्रकारक-
5. क. ०व्याप्यावगाहि-
6. क. प्रामाण्याग्रहात्तथा बाधः ख. प्रामाण्यग्रहात्
7. ख. ०परामर्शादिस्थले
8. क. 'तद्' नास्ति।
9. ख. स्ववृत्ति-
10. ख. घ. समानकालत्वात्
11. ख. ग. घ. ०कालत्व-
12. ग. 'यत्' नास्ति
13. क. प्रसिद्धौ

प्रकाशः

अनुमितिग्राह्यत्वेन सिद्धसाधनवारणाय—यावदिति । ज्ञानग्राहकेत्यत्र स्वरूपयोग्यता विवक्षिता । तथा च तादृशस्यात्ममनस्संयोगादेः सर्वस्य प्रामाण्याग्राहकत्वात् बाध इत्यत उक्तं सामग्रीति ।

ननु ज्ञानपदादिना [1]प्रामाण्याग्रहे यथाश्रुते बाधः । न च सविषयकज्ञानग्राहकसामग्री विवक्षिता । घटज्ञानमित्यादिशब्देनापि तद्ग्रहात् । न च तेन तद्ग्रहो भवत्येवेति वाच्यम् । घटत्वप्रकारकत्वस्य घटविशेष्यकत्वस्य च ततः सर्वथा अप्रतीतेः । अपदार्थत्वादवाक्यार्थत्वाच्चेति चेत् ;

---

न्यायशिखामणिः

तत्प्रामाण्ये तद्घटितसाध्याप्रसिद्धेः । किं चैवमप्रामाण्यारोपहेतुधर्मिज्ञानजनकसामग्र्या तादृश्या प्रामाण्याग्रहे बाध इति चेत्—न ।

तज्ज्ञानप्रतिबन्धकासमानकालीनत्वस्य ग्राहकविशेषणस्य विवक्षितत्वात् । अप्रामाण्यारोपहेतुधर्मिज्ञानसामग्री च तादृशदोषसमानकालीनेति तया प्रामाण्याग्रहेऽपि न बाधः । व्यधिकरणा तु तद्विरोधिग्रहसामग्री न प्रतिबन्धिकेति नोक्तदोष इति दिक् ।

स्वरूपयोग्यतेति । फलोपधानविवक्षायां तादृशमनस्संयोगादेः प्रामाण्यग्राहकतया बाधानवकाशेन सामग्री[2]पदवैयर्थ्यापत्तेरिति भावः । ग्राह्यमित्यत्र फलोपधानमेव विवक्षितम् । अन्यथा सिद्धसाधनापत्तेरिति बोध्यम् । न च यावत्तद्ग्राह्यत्वं यावत्तज्जन्यग्रहविषयत्वम्, [3]तच्च यावत्तज्जन्य[4]ग्रहाणामप्रसिद्धेरप्रसिद्धमिति वाच्यम् । तावत्प्रत्येकजन्यग्रहविषयत्वस्य तदर्थत्वात् ।

नन्विति । आदिपदादनुमानपरिग्रहः । न च तेनेति । घटज्ञानमित्यत्र षष्ठीसमासे घटविषयकज्ञानयोरभेदान्वयस्तावदनुभूयते । तत्र न ज्ञानमात्रे घटविषयकाभेद इति तत्र घटत्वप्रकारकत्वमन्वयितावच्छेदकम् । एवं घटविषयकमपि सर्वं न घटत्वप्रकारकाभिन्नमिति तत्र घटत्ववद्विशेष्यकत्वमन्वयितावच्छेदकम् । तथा च गुरुनये घटत्वप्रकारकत्वं [5]तद्वद्विशेष्यकत्वं च शब्दानुपस्थितमपि

---

1. ख. प्रामाण्यग्रहे
2. ख. 'पद' नास्ति ।
3. क. तद्वि
4. ख. घ. °ग्रहणाप्र-
5. ख. घ. तद्विशेष्यकत्वं च

## प्रकाशः

अत्र वदन्ति । ज्ञानग्राहिका सामग्री सैवात्र विवक्षिता या [1]तत्प्रकारीभूतधर्मप्रकारकतया तत्प्रकारविशेष्यभूतधर्मिविशेष्यकतया च तज्ज्ञानं ग्राहयति । अनुव्यवसायादेस्तु सामग्री तथैव । तत्र तथात्वेनैव व्यवसायस्य भानात् । इदं रजतत्वेन जानामीत्यादौ ज्ञाने विशेष्यत्वेनैवेदंपदार्थस्य, प्रकारत्वेनैव रजतत्वादेर्भानात् ।

---

## न्यायशिखामणिः

छिद्रेतरत्ववत् योग्यताबलाच्छाब्दबोधविषयः । भट्टनये तु 'शाब्दी ह्री'ति न्यायेन रात्रौ भुङ्क्त इति वाक्य[2]वदन्यथानुपपत्त्या घटत्वप्रकारकं घटत्ववद्विशेष्यकमिति वाक्यस्यावश्यकल्पनीयतया शब्दात्तदुपस्थितिरपि न दुर्लभा । [3]न च भट्टमते मुरारिमते चान्यथाख्यात्यभ्युपगमात् न घटत्वप्रकारकत्वमन्वयितावच्छेदकमिति वाच्यम् । अन्वयनियतं ह्यन्वयितावच्छेदकम् । नियमश्च द्विविधः बाधकैकापोद्यः असंभवद्बाधकश्च । तत्राद्यो नियमो भट्टमिश्रयोः । अन्त्यो गुरोरभिमतः । तत्र यदि बाधकाभावः, तदा गुरुवत्तयोरपि तदेवान्वयितावच्छेदकम् । अथ बाधकसद्भावः, तदा तद्विरोधिग्राहकम् । तथा च न [4]बाध इति भावः ।

एवं घटज्ञानं न प्रमेत्यत्र घटत्ववद्विशेष्यकत्वस्यान्वयितावच्छेदकस्याप्रतीत्या घटविषयकज्ञानयोरभेदानन्वयप्रसङ्गात् । यदि [5]च व्यक्तिवचनानां सर्वपरत्वे गां दद्यादित्यादावनन्वयप्रसङ्गेन व्यक्तिविशेषपरत्वव्यवस्थितौ ज्ञानपदस्यापि ज्ञानव्यक्तिविशेषपरतया तत्र घटविषयकाभेदसंभवान्नान्वयितावच्छेदकापेक्षा, तदा प्रकृतेऽपि तुल्यम् । किं चानुमानेन घटज्ञानग्रहे उक्त[6]प्रकाराभावेन उपनीतभानप्रतिषेधेन च तत्र प्रामाण्याग्रहात् बाध एवेत्याशयवानाह—घटत्वेति । सर्वथेति । विशेष्यतया विशेषणतया संसर्गविधया चेत्यर्थः । तत्राद्यद्वितीयनिरासे हेतुमाह—अपदार्थत्वादिति । उक्तरीत्या मुख्यार्थान्वयानुपपत्त्यभावेन [7]लक्षणापदाध्याहारयोर[8]भावादिति भावः । तृतीयनिरासे हेतुमाह—अवाक्यार्थत्वादिति ।

---

1. ख. तज्ज्ञानप्रकारी-
2. ख. °दन्वया-
3. ख. ग. घ. 'न च भट्टमते......तदा तद्विरोधिग्राहकम्' इति ग्रन्थस्त्रुटितः ।
4. क. विरोधः
5. ख. ग. 'च' नास्ति ।
6. ख. °प्रकारकाभावेन
7. ख. ग. लक्षणपदा-
8. क. °रसंभवादिति

### प्रकाशः

ननु तत्प्रकारोपलक्षितधर्मिविशेष्यक[1]तया तत्प्रकारविशिष्टधर्मिविशेष्यक[2]-तया वा । नाद्यः, घटत्वप्रकारकं किंचिद्विशेष्यकमिदं ज्ञानमित्यनया तद्ग्राहक-सामग्र्या प्रामाण्याग्रहात् । नान्त्यः, [3]सिद्धसाधनात् । न हि तादृश्यापि साम-ग्र्या प्रामाण्यं न गृह्यत इति नैयायिकाभ्युपगमः, किं तु अनुव्यवसायादिरूप-सामग्री तादृश्येव नेत्यभ्युपगमः इति चेत्—न । अनुव्यवसायादिसामग्र्यास्त-थात्वेऽपि तद्वत्त्वस्य स्वातन्त्र्येणाग्रहेण नैयायिकानां [4]ततः प्रामाण्यग्रहास्वीकारेण सिद्ध[5]साधनानवकाशादिति ।

अत्रेदं चिन्त्यम् । एवं हि तदप्रामाण्याग्राहकपद[6]वैयर्थ्यम् । तदप्रामाण्य-ग्राहकसामग्र्या[7]स्तद्वद्विशेष्यकत्वेन ज्ञानाग्राहकतया बाधासंभवात् । अन्यथा तदभाववद्विशेष्यकत्वगर्भाप्रामाण्यग्राहक[8]त्वासंभवात् । न च प्रकारत्ववित्तिवेद्यतया

---

### न्यायशिखामणिः

उपाध्यायमतमाह—अत्रेति । नन्विति । वस्तुतो यद्रजतत्ववत् तद्विशे-ष्यत्वेन ज्ञानग्राहकेत्यर्थः । तत्प्रकारविशिष्टेति । रजतत्ववद्विशेष्यकमिदमित्याकारेण तद्ग्राहकेत्यर्थः । [9]तद्वद्विशेष्यकत्वेन [10]ज्ञानग्राहकस्य [11]विशेष्ये यत्तत्प्रकार-वैशिष्ट्यग्राहकत्वं तत् स्वातन्त्र्यास्वातन्त्र्यसाधारणमिह विवक्षितम्, न तु स्वात-न्त्र्येण [12]तद्ग्राहकत्वम्, येन सिद्धसाधनं स्यादित्याशयेन द्वितीयं पक्षमाश्रित्य परिहरति—नेति । तथात्वेऽपीति । तद्वत्त्वग्राहकत्वेऽपीत्यर्थः ।

[13]प्रगल्भोक्तेन दूषयति—अत्रेति । अप्रामाण्यग्रहः [14]परनयेऽपि नानु-व्यवसायसामग्र्या, किं तु शब्दानुमानादिना । तत्र [15]तद्वद्विशेष्यकत्वस्य किं पदार्थविधया भानम्, उत[16]प्रकारत्ववित्तिवेद्यतया । तत्राद्यं दूषयति—अप्रामाण्य-

---

1. ख. ०कता तद्विशिष्ट-
2. ख. ०कता वा ।
3. क. 'सिद्धसाधनात्' इति नास्ति
4. क. 'ततः' नास्ति ।
5. ख. ०साधनतानव-
6. ख. ०वैयर्थ्यापत्तेः
7. ख. ०स्तद्विशेष्य-
8. ख. ०त्वसंभवात्
9. ख. तद्विशेष्य-
10. घ. ज्ञानाग्राहकस्य
11. क. 'विशेष्ये यत्' नास्ति
12. क. तद्ग्राहकत्वं विवक्षितम्
13. क. प्रगल्भमतेन
14. ख. परनये नानु- ग. परताया अनु-
15. क. ख. ग. तद्विशेष्यक-
16. क. प्रकारवित्ति-

## प्रकाशः

[1]विशेष्यत्वभाननैयत्यं तत्रेति वाच्यम् । तथा सति तत्पददानेऽपि घटत्वप्रकारकज्ञानमिति शाब्दानुमित्यादिना [2]प्रामाण्याग्रहेण बाधापत्तेः । यदि च तत्र तद्वत्त्वेन विशेष्यस्याभानान्न तथा, तदा अप्रामाण्य[3]ग्राहकसामग्र्यामपि तुल्यमिति ।

---

## न्यायशिखामणिः

**ग्राहकेति** । बाधकादपि [4]न तद्ग्रह इत्याह—**अन्यथेति** । एतच्च स्वातन्त्र्येण [5]तद्वत्त्वग्रहमभिप्रेत्य । तस्यैव तदभावगर्भाप्रामाण्यग्रहविरोधित्वात् । वस्तुतः [6]पूर्वोक्ते बाधकाभाव एव तात्पर्यम् । अत एव तदेवाशङ्क्य निषेधति—**न चेति** । तद्वद्विशेष्यकत्वेन [7]ज्ञानग्राहकस्य किं विशेष्ये तत्प्रकारवैशिष्ट्यग्राहकत्वं स्वातन्त्र्यास्वातन्त्र्यसाधारणं विवक्षितम्? उत स्वातन्त्र्येण [8]तद्ग्राहकत्वम्? तत्राद्यं निरस्यति—**तथा सतीति** । तत्प्रकारकत्वभानमात्रेण [9]तद्वद्विशेष्यकत्वस्यापि भानमिति द्वितीयपक्षाङ्गीकार इत्यर्थः । [10]**तत्पदेति** । तदप्रामाण्याग्राहकपदेत्यर्थः । द्वितीयमनूद्य निराकरोति—**यदि चेति** । **तद्वत्त्वेनेति** । स्वातन्त्र्येणेति शेषः । **तुल्यमिति** । अत्रापि पुरोवर्तिनि घटत्ववैशिष्ट्यस्य भानमात्रम्, न तु स्वातन्त्र्येणेति निरुक्तसामग्रीविरहादेव न बाध इत्यप्रामाण्याग्राहक[11]विशेषणवैयर्थ्यमित्यर्थः । एतच्च सिद्धसाधनस्याप्युपलक्षणम् ।

केचित्तु पुरोवर्तिनि स्वातन्त्र्यास्वातन्त्र्यसाधारणमेव तद्वत्त्वग्राहकत्वमभिमतम् । एवं चाप्रामाण्यग्राहकमपि तथेति न तद्वारकविशेषणवैयर्थ्यम् । घटत्वप्रकारकमित्यत्र तु स्वातन्त्र्येण तद्वत्त्वग्रहे बाधकाभावात् प्रामाण्यं गृह्यत एवेति न बाध इत्याहुः ।

तच्चिन्त्यम् । [12]तत्र प्रकारत्वभानानुरोधेनैव तद्वद्विशेष्यकत्वभानं वाच्यम् । तच्च न स्वातन्त्र्येण, [13]तद्भानमात्रेण प्रकारत्वभानोपपत्तेः । यदि स्वातन्त्र्येण तद्वत्त्व-

---

1. ख. विशेष्यमान-
2. ख. प्रामाण्यग्राहकेण
3. ख. ॰ग्राहकेऽपि
4. ख. नातद्ग्रहः
5. ग. तद्वत्त्वममि-
6. ग. पूर्वोक्तबाधका-
7. क. 'ज्ञान' नास्ति
8. ख. 'तद्' नास्ति
9. ख. तद्विशेष्यक-
10. क. तदिति
11. क. ॰पदवैयर्थ्य-
12. ख. तत्र प्रकारकत्व-
ग. तत्प्रकारकत्व-
13. ग. तद्मानमात्रेण

प्रकाशः

एतेन विशेषोल्लिखिततत्तत्प्रकाराश्रयविशेष्यकज्ञानग्राहकत्वं विवक्षितमिति निरस्तम्। वस्तुतस्तत्प्रकाराश्रयविशेष्यकं यज्ज्ञानं तद्ग्राहकत्वविवक्षायां बाधापत्तेः। तत्तत्प्रकाराश्रयविशेष्यकत्वेन तद्ग्राहकत्वविवक्षायां [1]तदप्रामाण्याग्राहकपदवैयर्थ्यापत्तेरिति।

अन्ये तु या सामग्री विषयालिङ्गितमेव ज्ञानं [2]ग्राहयति, विषयमविषयीकुर्वती ज्ञानग्रहे न समर्था, ज्ञानग्राहकत्वप्रयुक्तमेव यस्या विषयग्राहकत्वमिति

---

न्यायशिखामणिः

भाननियतं प्रकारत्वभानम्, तदा घटत्वप्रकारकं तदभाववद्विशेष्यकमित्यत्र [3]प्रकारत्वभाने सति व्यापकीभूततादृशतद्वत्त्वनिश्चयावश्यंभावात् [4]अप्रामाण्याग्रहप्रसङ्गः।

किं चैवं तत्प्रकारविशेष्यभूतधर्मिविशेष्यतयेत्यस्य वैयर्थ्यापत्तिः। तत्प्रकारकतया ज्ञानग्राहकस्यैव प्रकारत्वविविवेचतावादिमते तद्वद्विशेष्यकत्वग्राहकतया [5]तद्व्यावर्तनीयस्यानेनैव [6]व्यावर्तितत्वात्। यदि प्रकारत्वभाने सति किंचिद्विशेष्यकत्वभानेऽपि [7]न तद्वद्विशेष्यकत्वभानमिति तत्प्रकारकत्वविशेषणेन [8]तद्वद्विशेष्यकत्वविशेषणस्य नान्यथासिद्धिरिति मतम्, तदा घटत्वप्रकारकमिति [9]शाब्दानुमित्यादौ तद्वद्विशेष्यकत्वग्रह एव नेति [10]स्वातन्त्र्यशङ्कानवकाशात्। ततश्च तद्वद्विशेष्यकत्वेन ज्ञान[11]ग्राहकविवक्षायामप्यप्रामाण्याग्राहकविशेषणवैयर्थ्यमेवेति दिक्।

प्राचीनरुचिदत्तमतमाह—एतेनेति। घटत्वप्रकारकं किंचिद्विशेष्यकमित्यादिकया सामग्र्या प्रामाण्याग्रहेऽपि न बाध इति भावः। आलोककृन्मतमाह—अन्ये त्विति। ननु ज्ञानपदमपि वस्तुतो विषयावच्छिन्नज्ञानस्य ग्राहकमित्यत आह—विषयमिति। ननु घटज्ञानपदमपि विषयं गृह्णदेव ज्ञानं गृह्णातीत्यत

---

1. ख. अप्रामाण्यग्राहक-
2. ख. गृह्णाति
3. ख. घ. प्रकारकत्वभाने
4. ख. अप्रामाण्यग्रह-
5. क. तद्व्यावर्त्यस्य तेनैव
6. क. व्यावृत्तत्वात्
7. ग. 'न' नास्ति
8. ख. तद्विशेष्यक-
9. ख. शब्दानु-
10. क. घ. क स्वातन्त्र्यशङ्कावकाशः
11. ख. ग. घ. •ग्राहकत्व-

### प्रकाशः

यावत्; तद्ग्राह्यत्वं साध्यम्। घटज्ञानमित्यादिशब्दात्मिकायास्तु [1]सामग्र्या न तथात्वम्। तत्र विषयग्राहकत्वस्य घटपदसमभिव्याहारप्रयुक्तत्वात्। ज्ञानग्राहकत्वप्रयुक्तत्वे च तस्य, केवलज्ञानपदस्यापि [2]विषयग्राहकत्वापत्तेः। अनुव्यवसायस्वप्रकाशादिरूपा च सामग्री तथैव।

यद्धि येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमात्। तथा च यस्या विषयग्रहार्थमन्यापेक्षा नास्ति तादृशसामग्रीग्राह्यत्वं पर्यवस्यतीत्याहुः।

---

### न्यायशिखामणिः

आह—ज्ञानेति। ज्ञानग्राहकत्वप्रयुक्तं विषयग्राहकत्वमित्यनेन ज्ञानग्राहकविषयग्राहकसामग्र्योरैक्यं [3]साहित्यनैयत्यं [4]वा विवक्षितम्, न तु जन्यत्वं [5]जनकत्वं व्याप्यत्वं व्यापकत्वं [6]वा। ज्ञानग्राहकतां प्रति विषय[7]ग्राहकतायाः [8]जन्यत्वाद्यनुपपत्तेः। तथा च घटज्ञानमित्यत्र घटपदज्ञानपदयोः [9]तद्ग्राहकयोर्भिन्नत्वात् ज्ञानमित्यत्र व्यभिचारेण तन्नियमाभावाच्च न बाध इत्याह—घटेति। [10]स्वप्रकाशादिरूपेति। तेन रूप्यते निरूप्यते इति तज्जनकेत्यर्थः। तस्या एव सामग्र्या [11]विषयग्राहकभिन्नत्वं न [12]शब्दाद्यात्मिकाया इत्यत्र किं विनिगमकमित्यत आह—यद्धीति। यत् स्ववृत्तिवर्तमानज्ञानं [13]तद्विषयेण विना यस्मान्न भासते अतस्तद्बोधकस्यैव विषयबोधकत्वमिति नियमः। न तु शब्दादिरूपतद्ग्राहकस्य, तस्य स्ववृत्तिवर्तमानज्ञान[14]भासकत्वाभावादित्यर्थः। यद्वा [15]ज्ञानग्रहसामग्री [16]यद्विषया विषयत्वेन [17]ज्ञानविषयतया आपादयितुं [18]न शक्यते [19]सैव तद्विषयगर्भे प्रामाण्य

---

1. ख. तत्सामग्र्या
2. ख. विषयत्वापत्ते.
3. क. साहित्यं वा
4. ख. 'वा' नास्ति।
5. ख. 'जनकत्वं' नास्ति।
6. क. 'वा' इत्यनन्तरं 'विवक्षितम्' इत्यधिकपाठः।
7. ख. ॰ग्राहकतया
8. ग. जन्यतात्वाद्यनुपपत्तेः
9. ख. तद्ग्राहकत्वयोः। ग. तत्त्वग्राहकयोः।
10. ख स्वप्रकाशादिरूपे तेन
11. ख. विषयग्राहकं भिन्नत्वं
12. क. शाब्दाद्यात्मिकायाः
13. क. यद्विषयेण
14. क. भासकत्वादित्यर्थः
15. ख. घ. या ज्ञानग्राहकसामग्री
16. ख. यद्विषयत्वेन
17. ख. घ. ज्ञानाविषयतया
18. ख. घ. 'न' नास्ति।
19. ख. तस्यैव

प्रकाशः

तन्न । एवं हि यावत्पदवैयर्थ्यापत्तेः । प्रामाण्यानुमितेर्ज्ञानग्राहकत्वप्रयुक्त-विषयग्राहकत्वाभावेन तदनन्तर्भावेण सामञ्जस्यात् । प्रामाण्यानुमितौ व्यापकतावच्छेदकत्वेन[1] विषयभानम् । एवं च प्रमाणशब्दादावपि शक्यतावच्छेदकत्वेन[2]

---

न्यायशिखामणिः

बोधयतीति नियमः । तादृशी चानुव्यवसायादिरूपैव, स्ववृत्तिवर्तमानज्ञान-ग्राहकत्वात् । न तु घटज्ञानमिति [3]शब्दादिरूपेति नोक्तदोषः । तथा च [4]विषयाविषयत्वप्रसञ्जनप्रयुक्त[5]ज्ञानाविषयत्वप्रसञ्जनयोग्यज्ञानग्राहकसामग्रीग्राह्यत्वं साध्यं पर्यवस्यतीत्यभिप्रेत्याह—यद्वीति ।

[6]अथ वा यत् ज्ञानं येन विषयेण विना न प्रत्यक्षज्ञानविषयः तद्गोचर-प्रत्यक्षग्रहजनिकैव सामग्री तद्विषयगर्भप्रामाण्यं बोधयति, न तु घटज्ञानमित्यादि-सामग्रीति न बाधः । तथा च ज्ञानप्रत्यक्षग्रहजनकसामग्रीग्राह्यत्वं पर्यवस्यतीत्याह —यद्वीति । न चैवं सति यावत्पदवैयर्थ्यम्, अनुमानादेः प्रत्यक्षग्रहाहेतुत्वादिति वाच्यम् । प्रामाण्यस्य तादृशप्रमात्वप्रत्यासत्तिग्राह्यतया तस्यार्थान्तरवारकत्वात् । न चाप्रामाण्यग्राहकस्य सर्वमतेऽप्यनुमानादिरूपतया तद्वारकविशेषणवैयर्थ्यमिति शङ्क्यम् । मानसोपनी[7]ताप्रामाण्यभ्रमसामग्र्यास्तथात्वेन बाधसंभवादित्याशयः ।

पक्षान्तरमाह—तथा चेति । यस्या ज्ञानग्रहसामग्र्याः विषयग्रहार्थं ज्ञानग्रहसामग्र्यनन्तर्भूतकारणापेक्षा नास्ति सा सामग्री [8]प्रकृतेऽभिमता । तथा च तादृशसामग्रीग्राह्यत्वं साध्यं पर्यवस्यतीत्यर्थः । [9]व्यवसायश्च स्वग्रहे विषयत्वेन हेतुरिति न तद्बहिर्भावः । घटज्ञानमित्यादौ ज्ञानग्रहसामग्र्यनन्तर्भूतघटपदापेक्ष-त्वमिति न बाधः । अप्रामाण्यग्राहकस्याप्रमाशब्दस्यैकया विशिष्टशक्त्या ज्ञान-तद्विषयोपस्थापकत्वेन विषय[10]ग्रहेऽन्यानपेक्षत्वात् न तद्वारकविशेषणवैयर्थ्यमिति भावः ।

---

1. ख. ०त्वेनैव
2. ख. ०त्वेनैव
3. ख. ग. शब्दादि-
4. ख. विषयविषयत्व-
5. ख. ०ज्ञानविषयत्व-
6. ख. अथ यावत् ज्ञानं
7. ख. ०नीतप्रामाण्य-
8. ख. प्रकृते मता
9. ख. व्यवसायस्य
10. ख. ०ग्रहेऽन्यापेक्षत्वात्

## प्रकाशः

विषयभानम्, न तु ज्ञानग्राहकत्वप्रयुक्तं तस्य [1]विषयग्राहकत्वम्। एवं च 'गन्धवति पृथिवीत्वोपनयानन्तरं इयं पृथिवीति पृथिवीत्वप्रकारकानुभव उपनीत' इत्यादिवक्ष्यमाणप्रामाण्य[2]ग्रहस्यापि स्मृत्युपनीतत्वेन[3] विषयग्राहकत्वम्।

किं च ज्ञानग्राहकत्वप्रयुक्तं विषयग्राहकत्वमिति कोऽर्थः। किं ज्ञानविषयग्राहकसामग्र्योरैक्यम्, किं वा तयोः साहित्यम्। नाद्यः, अनुव्यवसायादिस्थले तदभावात्। संयुक्तसमवायेन ज्ञानस्य व्यवसायोपनीतत्वेन विषयस्य भानात्।

## न्यायशिखामणिः

ज्ञानग्राहकत्वप्रयुक्तं विषयाग्रहकत्वमित्येतद्यथाश्रुतमेवाभिमतं मत्वा दूषयति—**तत्रेति**। **यावत्पदेति**। इदं चोपलक्षणम्। अप्रामाण्याग्राहकविशेषणवैयर्थ्यापत्तेश्चेत्यपि बोध्यम्। **व्यापकतेति**। अन्यथा ज्ञानवानहमात्मत्वादित्यनुमानादपि तद्ग्रहापत्तेरिति भावः। **न त्विति**। अन्यथा ज्ञानपदादपि तद्ग्रहप्रसङ्गादिति भावः। **एवं चेति**। गन्धवति पृथिवीत्वोपनयानन्तरं तदनुव्यवसायः, पुनः सा पृथिवीति स्मृतिः, ततो व्यवसायस्मरणं, ततः स्मृत्युपनीते व्यवसाये तृतीयज्ञानोपनीततद्वत्त्वघटितं प्रामाण्यं गृह्यत इति वक्ष्यते। [4]तत्रापि न ज्ञानग्राहकत्वप्रयुक्तं तत्, [5]अन्यथा प्रथमानुव्यवसायेनापि तद्ग्रहापत्तेरिति भावः।

नन्विदं दूषणं यथाश्रुत एव न विवक्षितार्थे। तत्र च प्रमाशब्दादिना सिद्धसाधनादिसंभवेन वैयर्थ्यशङ्कानवकाशादित्यरुचेराह—**किं चेति**। **कोऽर्थ इति**। विवक्षितोऽर्थः क इत्यर्थः। आद्येऽपि सामग्रीपदेन कारणमात्रं विवक्षितं सामग्री वा। नान्त्यः, घटज्ञानमित्यत्र घटपदज्ञानपदजन्यवाक्यार्थज्ञानरूपकार्यस्यैकत्वेन सामग्रीभेदाभावादित्यभिप्रेत्य आद्यं प्रतिक्षिपति—[6]**नाद्य इति**। **तदभावादिति**। विषयांशे ज्ञानांशे च ज्ञानकारणस्य परस्परमैक्याभावादित्यर्थः। **व्यवसायेति**। यद्यपि ज्ञानोपनीतत्वमात्रं नासत्तिः, किं तु संयुक्तसमवेतज्ञानविषयत्वमिति [7]विषयांशग्रहे संयुक्तसमवायः प्रविष्ट एव। तथापि कारणतावच्छेदक-

---

1. क. तद्ग्राहकत्वम्
2. ख. °ग्राहकस्यापि
3. ख. °त्वेनैव
4. ख. तथापि
5. ख. ग. 'अन्यथा' इति नास्ति।
6. घ. 'नाद्य इति' इति नास्ति।
7. क. विषयग्रहे

### प्रकाशः

नान्त्यः, घटज्ञानमित्यादिशब्दादिसामग्र्या अपि तथात्वेन बाधापत्तेः । [1]ज्ञानमित्यादिशब्दान्तरे व्यभिचाराद्विषयग्राहकसामग्र्याः साहित्यनियमो नास्तीति चेत्—न । हन्तैवमयं ज्ञानवानिच्छावत्त्वादित्यनुव्यवसायान्तरे व्यभिचारात् अनु[2]व्यवसायसामग्र्या अपि न तत्साहित्यनियम इति तुल्यम् । यदि च [3]प्रत्यक्षानुव्यवसायत्वावच्छिन्ने तत्साहित्यनियम इति मन्यते, तदा घटज्ञानशब्दत्वावच्छिन्ने तत्साहित्यनियम इति तुल्यमिति संक्षेपः ।

---

### न्यायशिखामणिः

कोटिप्रविष्टतया स न हेतुः । ज्ञानमेव च [4]स्वग्रहे विषयग्रहे तु घटादिनिष्ठं तद्विषयत्वमपीति कारणस्य परस्परं भेद [5]इति भावः । द्वितीयेऽपि किं साहित्यमात्रं विवक्षितम्, उत तन्नियमः । तत्राद्यं निराकृत्यान्त्यमुत्थापयति—ज्ञानमिति । [6]सः नियमः किं सामान्यावच्छेदेन उत व्यक्तिविशेषे । आद्य आह—[7]हन्तेति । द्वितीयमनुवदति—यदि चेति ।

ननु यद्वीत्यत्र विवक्षितपक्षद्वये, [8]यस्या विषयग्रहार्थमन्यापेक्षा नास्तीत्यत्र च किमपि दूषणं नोक्तमिति चेत्—तत्र न तावदाद्यः (कल्प्यः) [कल्पः]। ज्ञानं सविषयं ज्ञानत्वादित्यनुमितिसामग्रीविशेषे घटज्ञानमिति शब्दविशेषे च तदापादनसंभवेन [9]बाधानतिवृत्तेः । न द्वितीयः, प्रत्यक्षग्रहाप्रसिद्ध्या भट्टमते साध्याप्रसिद्धेः । यदपि यस्या इत्यादि तदपि न । ज्ञानग्रहे ज्ञानमेव हेतुः न घटादिनिष्ठं तद्विषयत्वमपीत्युक्तत्वेनानुव्यवसायस्थले तदभावात् ।

किं च तदिति सर्वनाम्ना बुद्धिस्थ[10]मात्रशक्तेन प्रकरणवशात् बुद्धिस्थघटज्ञानोपस्थापकेन [11]प्रामाण्याग्रहाद्बाधः । किं च यत्र ज्ञानपदस्य घटज्ञाने शक्तिभ्रमो जातः, तत्र ज्ञानपदेनोभयोपस्थापकेन प्रामाण्याग्रहात् बाधः । अपि च घटपदेन लक्षणया घटतज्ज्ञानबोधकेन तदग्रहाद्दोषतादवस्थ्यम् ।

---

1. ख. ननु ज्ञान-
2. ख. ॰व्यवसायरूपसामग्र्या
3. ख. प्रात्यक्षिकानु-
4. ख. ग. स्वग्रहे तु न घटादि-
5. क. इत्यर्थः
6. क. 'सः' नास्ति ।
7. ख. न हन्तेति ।
8. क. यस्य
9. ग. बाधानतिप्रसक्तेः
10. क. 'मात्र' नास्ति
11. ख. प्रामाण्यग्रहात्

प्रकाशः

अन्ये तु उभयवादिमता तत्र प्रामाण्याग्राहिका या सामग्री तद्भिन्ना यावती ज्ञानग्राहिका [1]सामग्री तया तत्प्रामाण्यं गृह्यत इत्यर्थः। एवं च यथाश्रुतमेव साधु। यदंशे ज्ञानग्राहकसामग्रीत्वं तदंशे उभयवादिसिद्धप्रामाण्याग्राहकभिन्नत्वं बोध्यम्। तेन ज्ञानज्ञानं प्रमेत्यत्र विषयीभूतज्ञाने प्रामाण्याग्रहेऽपि न दोषः।

---

न्यायशिखामणिः

नन्वसर्वनामत्वं [2]अलाक्षणिकत्वं भ्रमाघटितत्वं च सामग्रीविशेषणम्। अतो नोक्तदोष इति चेत्—न। अप्रामाण्यभ्रमानुमितेर्व्याप्ति[3]पक्षधर्मतान्यतरभ्रमघटितसामग्रीजन्यत्वेन तद्वारकविशेषणवैयर्थ्यापत्तेः। किं च ज्ञानं सविषयं ज्ञानत्वादित्यनुमितिसामग्र्या तादृश्यापि [4]प्रामाण्याग्रहादुक्तदोषानतिवृत्तिः। तस्माज्जयदेवोक्तं सर्वं समाधानं न युक्तमिति। तदेतत्सर्वमभिसंधायाह—संक्षेप इति।

प्रगल्भमतमाह—अन्ये त्विति। एतन्मते अप्रामाण्याग्राहके[5]त्यस्याद्यनञ्व्यत्यासेन प्रामाण्याग्राहकभिन्नेत्यर्थः। तथा च घटज्ञानमित्यादेः प्रामाण्याग्राहकत्वेन तद्भिन्नत्वाभावान्न बाधः। ननु तादृशसामग्री शब्दादिरूपैव नानुव्यवसायरूपेति[6] यावत्पददानेऽपि सिद्धसाधनतादवस्थ्यमित्यत आह—उभयेति। इदं च न ग्राहकविशेषणम्। तथा सति प्रामाण्याग्राहकभिन्नत्वेन उभयवादिसंमतमनुमानादिकमेवेति दोषतादवस्थ्यात्। किंतु अग्राहकविशेषणम्। तेनानुव्यवसायसामग्र्या उभय[7]वादिसिद्धप्रामाण्याग्राहकभिन्नया न्यायनये प्रामाण्याग्रहान्न सिद्धसाधनमिति भावः। एवं सत्याकरोक्तसाध्ये किंचिद्विशेषणदानेनैव सर्वसामञ्जस्ये ज्ञानपदादिनिबन्धन[8]बाधनिरासाय बहुविशेषणोपादानं न युक्तमित्याह—एवं चेति। ज्ञानज्ञानं प्रमेत्यनेन स्वाश्रयव्यवसायोपस्थापकेन तद्गोचरज्ञाने प्रामाण्यग्राहकतया तदग्राहकभिन्नेन व्यवसायप्रामाण्याग्रहात् बाधः। अप्रामाण्यगर्भे

---

1. क. 'सामग्री' इति नास्ति।
2. ख. अलक्षणिकत्वं
   घ. लाक्षणिकत्वं
3. ग. पक्षता-
4. ख. प्रामाण्यग्रहात्तद्दोषां-
   घ. प्रामाण्यग्रहादुक्तदोषा-
5. क. °त्यस्य नञो व्यत्यासेन
   ख. त्यस्याद्य व्यत्यासेन
6. क. °धायादिरूपेति
7. ख. ग. घ. °वादिमत-
8. क. °बाधवारणाय

प्रकाशः

नापि [1]तत्तत्पदवैयर्थ्यम्, उक्तार्थे तात्पर्यात्। वादिपदं च तत्तद्वादिपरम्। तात्पर्यवशादेतादृशाननुगमस्यादोषत्वादित्याहुः।

---

न्यायशिखामणिः

प्रामाण्ये [2]बाधाप्रसङ्गेन तत्पदवैयर्थ्ये चेति यद्दोषद्वयं यथाश्रुते समजनि, तदंशभेदविवक्षया निराकृतमित्याह—तेनेति। न दोष इति। प्रथमज्ञानप्रामाण्य इति शेषः। स्वाश्रयीभूतप्रथमज्ञानांशे [3]तज्ज्ञानग्राहकसामग्र्या उभयवादिमतप्रामाण्याग्राहकभिन्नत्वाभावेन तत्र विवक्षितसामग्रीविरहादिति भावः।

ननु गुरुनैयायिकसिद्धप्रामाण्याग्राहकभिन्नव्यवसायरूपज्ञानेन भट्टमते मुरारिमते च प्रामाण्याग्रहाद्बाध इत्यत आह—वादीति। येन मीमांसकेन नैयायिकस्य विवादः तन्मीमांसकनैयायिकपरमुभयवादिपरम्। तत्परत्वं चात्र तत्प्रतीतिजनकत्वम्। तत्र हेतुः—तात्पर्यवशादिति। [4]वक्त्रभिप्रायादित्यर्थः। अतो न साध्याविशेषः[5]। एतादृशेति। यत्त्वतत्त्वप्रयुक्ताननुगमस्येत्यर्थः। दोषत्वे सामान्यव्याप्तिमूलकानुमानं न स्यादिति भावः।

आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु यद्यप्रामाण्याग्राहकेत्यस्य [6]प्रामाण्याग्राहकभिन्नेत्यर्थः, तदोभयवादि[7]मतेत्यस्य वैयर्थ्यापत्तिः। [8]तथा हि न तावदिदं बाधनिरासाय। तदग्राहकभिन्नत्वविशेषणेनैव ज्ञानपदनिबन्धनबाधव्यवच्छेदात्। न च यावत्पददानेऽपि सिद्धसाधनतादवस्थ्यमिति [9]तद्वारणाय तदिति वाच्यम्। अनुव्यवसायस्यापि न्यायनये कथंचित्प्रामाण्यग्राहकतया तेन स्वातन्त्र्येण तदग्रहेण दोषानवकाशात्।

ननु स्वातन्त्र्येण तदग्राहकभिन्ना सामग्री प्रकृतेऽभिमता। तादृशी चानुमानादिरूपैवेति [10]सिद्धसाध्यता तदवस्थेति तन्निरासाय तदुपादानमिति चेत्।

---

1. ख. तत्पद
2. ग. बाधप्रसङ्गेन
3. घ. तद्ग्राहक
4. क. वक्तुरभि-
5. क. एतदनन्तरं 'इति भावः' इत्यधिकपाठः।
6. ख. प्रामाण्यग्राहक-
7. क. ॰संमतेत्यस्य
8. ख. तथापि न तदापादितं बाध॰
9. क. 'तद्वारणाय' नास्ति।
10. क. सिद्धसाधनतादवस्थ्यमिति

## न्यायशिखामणिः

सोऽयं बकबन्धः यत् स्वातन्त्र्येति विशेषणं दत्त्वा विशेषणान्तरमुपादीयत इति। न हि तदपि प्रयोजनं विना युक्तम् [1]प्रक्षेप्तुम्। न वा [2]विशेषणान्तरसार्थक्यमेवास्यापि प्रयोजनमिति शक्यते वक्तुम्। तद्वैयर्थ्येऽप्यनिष्टाभावात्।

नन्वेतद्विशेषणानभ्युप[3]गताप्रामाण्यग्रहसामग्र्याः [4]प्रकारत्वभानानुरोधेन [5]तद्वद्विशेष्यकत्वग्राहकतया पारतन्त्र्येण प्रामाण्यग्राहकत्वेन तद्ग्राहकभिन्नतया स्वातन्त्र्येण तद्ग्रहात् बाधो [6]दुर्वार इति चेत्—न। [7]प्रकारत्वे भासमाने किंचिद्विशेष्यकत्वभानेऽपि न प्रामाण्यघटक[8]तद्वद्विशेष्यकत्वभानमित्युक्तत्वात्।

न चैवमनुव्यवसायेऽपि घटत्ववद्विशेष्यकत्व[9]भानं कथं स्यादिति वाच्यम्। 'व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वा'दिति ग्रन्थपर्यालोचनया पुरोवर्तिनि [10]प्रकारवैशिष्ट्यस्य व्यवसायोपनीतत्वेनैवानुव्यवसाये भानाभ्युपगमात्। न च तथा अप्रामाण्यग्रहस्थले नियमेन तद्वत्तोपनयोऽस्ति, येन तथा स्यात्। तदुपनये वा अनुमितिः शाब्दी वा तत्प्रतीतिर्न तद्वत्त्वं विषयीकर्तुमीष्टे। तयोर्व्यापकतावच्छेदकपदार्थवाक्यार्थमात्रविषयत्वमर्यादातिक्रमापत्तेः। तस्माद्व्यर्थमेवोभय[11]वादिसंमतेति विशेषणम्। ततश्च साध्ये निष्प्रयोजनं विशेषणं प्रक्षिपन् प्रगल्भोऽप्यर्भक एवेति।

वस्तुतस्तु तत्प्रामाण्याग्राहकभिन्नयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वम्। घटत्ववद्विशेष्यकं ज्ञानमित्यनेन प्रामाण्याग्रहात् बाधवारणाय [12]प्रामाण्याग्राहकपर्यन्तमुपात्तम्। ज्ञानज्ञानं प्रमेत्यनेन प्रामाण्यान्तरग्राहकेण [13]प्रामाण्यान्तराग्रहाद्बाध इत्यत उक्तं तदिति। स्वातन्त्र्यास्वातन्त्र्यसाधारणतद्ग्राहकत्वं सूचयितुं [14]नञ्द्वयोपादानम्। तावद्ग्राह्यत्वं च स्वातन्त्र्येण विवक्षितमिति नानुव्यवसायादिना सिद्धसाधनम्। [15]घटज्ञानपदस्याप्रामाण्यग्राहकस्य च कथंचिदपि प्रामाण्यग्राहकत्वाभावेन तेन तद्ग्रहेऽपि न बाध इति सर्वमनवद्यमिति संक्षेपः।

---

1. ख. प्रक्षेपं
   ग. प्रतिक्षेप्तुं
2. ख. विशेषणसार्थक्य-
3. क. ॰गताप्रामाण्यग्राहकसामग्र्याः
4. ख. घ. प्रकारकत्व-
5. ख. ग. तद्विशेष्य-
6. क. दूषणमिति
7. ख. घ. प्रकारकत्वे
8. ख. ग. घ. ॰घटत्ववद्विशेष्यक-
9. ॰भानेऽपि कथं
10. ख. ग. घ. तत्प्रकार-
11. ख. ग. घ. ॰वादिमतेति
12. ख. ग. घ. प्रामाण्यपर्यन्त-
13. ग. प्रामाण्यान्तरग्रहात्
14. ख. तन्त्रद्वयो-
15. क. घटज्ञानमित्यस्याप्रामाण्य-

### प्रकाशः

प्रसिद्धिश्च निषेधकोटेः घटत्वादौ, विधिकोटेश्च [1]तत्तज्ज्ञानप्रकारीभूतरजतत्वादौ। प्रामाण्यग्राहकत्वाभिमतविवक्षितज्ञानग्राहकसामग्र्यास्तद्ग्रहावश्यंभावात्। ज्ञानग्राहकेत्यत्र ज्ञानपदस्य स्वाश्रयपरत्वेन विधिकोटेर्वस्तुतो [2]नानार्थत्वपर्यवसानात्।

यत्तु ज्ञान एव प्रसिद्धिरिति, तन्न। यावत्स्वाश्रयग्राहकग्राह्यत्वस्य प्रत्येकं सर्वज्ञानव्यक्तावसंभवात। ज्ञानत्वेऽपि न प्रसिद्धिः। यत्प्रामाण्यं घटत्ववति घटत्वप्रकारिकानुमितिरित्यादिशब्देन कदाचिद्बोध्यते तदाश्रयीभूतज्ञानग्राहकयावत्सामग्रीग्राह्यत्वस्य ज्ञानत्वे विरहात्। तादृशशब्देनैव तज्ज्ञानग्राहकेण तस्याबोधनादिति वदन्ति।

इति प्रथमा विप्रतिपत्तिः

—: ✱ :—

---

### न्यायशिखामणिः

ननु ज्ञानपदस्य स्वाश्रयपरत्वेऽपि तद्गर्भसाध्यस्य घटज्ञानप्रामाण्यसाधारण्यमवश्यं वाच्यम्। अन्यथा [3]अवच्छेदकवति तस्मिन् साध्यासिद्धावंशतो बाधापत्तेः। तथा च घटत्वे निषेधप्रसिद्धिवर्णनमसंगतमित्याशङ्क्य, साध्यस्य [4]शब्दत एकरूपस्य सर्वप्रामाण्यसाधारण्येऽपि स्वपदस्य तत्तत्प्रामाण्यव्यक्तिपरतया तदर्थतो नानैव। तच्च [5]तत्तत्प्रामाण्यवत्तद्घटकमात्रवृत्तीति तत्तत्प्रामाण्यघटकप्रकारे विधिप्रसिद्धिः। तत्तदघटकधर्मे निषेधप्रसिद्धिश्चेत्यभिप्रेत्याह—**ज्ञानग्राहकेत्यत्रेति**। **वस्तुत इति**। अर्थत इत्यर्थः।

जयदेवमतमाह—**यत्त्विति**। [6]यत्प्रामाण्यग्राहिका सामग्री एक[7]ज्ञानव्यक्तावेव तदभिप्रायेण ज्ञानव्यक्तौ तत्प्रसिद्धिरुक्तेत्यप्याहुः। तदीयमतान्तरं दूषयति—**ज्ञानत्वेऽपीति**।

एतच्चापाततः। [8]प्रामाण्याग्राहकभिन्नेत्यत्र ज्ञानत्व[9]गर्भतदग्राहकभिन्नत्वमवश्यं वाच्यम्। अन्यथा पक्षीभूतप्रामाण्यस्य ज्ञानत्वगर्भस्यानुमितित्वप्रकारक-

---

1. क. तत्तत्प्रकारीभूत-
2. ख. नानार्थपर्यव-
3. घ. व्यवच्छेदक-
4. ख. शब्द एक-
5. ख. ग. घ. तत्तत्प्रामाण्यतत्तद्घटक-
6. ख. ग. घ. यत्र प्रामाण्य-
7. क. 'ज्ञान' नास्ति।
8. ख. ग. प्रामाण्यग्राहक-
9. ख. ग. ॰गर्भतद्ग्राहक-

न्यायशिखामणिः

ज्ञानग्राहकशब्दाग्राह्यत्वेन बाधप्रसङ्गात्। तथा चानुमितित्वप्रकारकज्ञानग्राहकस्य शब्दस्य विवक्षितरूपत्वाभावेन ज्ञानत्वस्य तदग्राह्यत्वेऽपि तत्र न तत्प्रसिद्धि-विरोधः। न च प्रामाण्याग्राहकेत्यत्र गौरवेण ज्ञानत्वगर्भस्याविवक्षितत्वाल्लाघवेन बाधकाभावेन च ज्ञानेच्छासाधारणस्य ज्ञानत्वाघटितस्यैव प्रामाण्यस्य पक्षत्वमभि-मतमिति न तत्र साध्यासिद्धिरिति वाच्यम्। ज्ञानत्वाघटितस्य [1]तस्य प्रवृत्तावपि सत्त्वेन तज्जनकतावच्छेदकत्वविरोधात्। किं च ज्ञानत्वे प्रसिद्धिवर्णनं परमताभि-प्रायेण। अत एव परमते [2]ज्ञानत्वे तत्प्रसिद्धिरित्यालोके तथैवाभिहितम्। तथा च तन्मते [3]गुणगतजात्यनङ्गीकारादनुमितित्वमुपाधिरूपं वाच्यम्। तच्च व्याप्तिज्ञान-त्वावच्छिन्नकारणतानिरूपित[4]कार्यताश्रयज्ञानत्वमिति ज्ञानत्वमपि [5]तद्ग्राहकग्राह्य-मेवेति।

इति प्रथमा विप्रतिपत्तिः

—: * :—

1. ख. 'तस्य' नास्ति
2. ख. ज्ञातत्वे
3. ख. गुणत्वजात्य-
4. ख, घ. ॰कार्याश्रय-
5. क. तद्ग्राहकाग्राह्य-

॥ श्रीः ॥

# अथ द्वितीया विप्रतिपत्तिः

—: * :—

## तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वा

---

### प्रकाशः

**तज्ज्ञानविषयकेति** । तज्ज्ञानं पक्षीभूतप्रामाण्याश्रयो ज्ञानम्, तद्विषयकं गुरुमते तदेव, भट्टमते तदनुमितिः, मिश्रमते तदनुव्यवसायः [1]तदजन्यं यत् ज्ञानं तदेव, तद्ग्राह्यमित्यर्थः । अत्र ज्ञानाजन्यज्ञानग्राह्यमिति कृते भट्टमते मिश्रमते च बाधः, अनुव्यवसायस्य ज्ञाततालिङ्गकानुमितेश्च ज्ञानजन्यत्वात्, गुरुमतेऽप्यनुमित्यादिप्रामाण्यांशे बाध इत्यत उक्तम् **ज्ञानविषयकेति** ।

ननु तथापि भट्टमते बाधः, ज्ञाततालिङ्गकानुमितेर्ज्ञानविषयकव्याप्तिज्ञानजन्यत्वात् । मिश्रमतेऽप्यनुव्यवसायप्रामाण्यांशे बाधः । गुरुमतेऽपि लिङ्गज्ञानस्यास्वप्रकाशत्वेन ज्ञानविषयत्वनियमात् [2]अनुमितिप्रामाण्यांशे बाध इत्यत उक्तं **तदिति** । भट्टमते व्याप्तिज्ञानं न तद्विषयकम्, सामान्यलक्षणानभ्युपगमात् । प्रथमज्ञानपदं केवलतत्पदस्य प्रामाण्यमात्रप्रत्यवमर्शकतया [3]सिद्धसाधनादिवारणाय ।

---

### न्यायशिखामणिः

**तद्ग्राह्यमिति** । तद्विषय इत्यर्थः । **अनभ्युपगमादिति** । ननु तदनभ्युपगमेऽप्यहं घटत्ववद्विशेष्यकज्ञानवानित्यनुमितिहेतुव्याप्तिज्ञानं पक्षीभूतप्रामाण्याश्रयज्ञान[4]विषयकमेवेति चेत्—न । अहं ज्ञानवान् ज्ञाततावत्त्वादित्यनुमानेनापि प्रामाण्यग्रहस्य वक्ष्यमाणतया तद्धेतुव्याप्तिज्ञानस्य पक्षीभूत[5]प्रामाण्यानाश्रयज्ञानेऽपि

---

1. क. तदजन्यं तदेव तज्ज्ञानग्राह्यमित्यर्थः
2. ख. 'अनुमितिप्रामाण्यांशे' इति नास्ति
3. क. सिद्धसाधनादिप्रसङ्गवारणाय
4. क. विषयकमाकाराभेदेन प्रामाण्याभेदादिति चेन्न ।
5. ग. ॰प्रामाण्याश्रय-

**प्रकाशः**

द्वितीयज्ञानपदं चाप्रसिद्धिवारणाय । व्यापारानुबन्धितया तज्ज्ञानविषयकैरात्मादिभिः तज्जननात् । ज्ञानपदसंनिधौ [1]प्रतीत्यनुबन्धिता लभ्यते । तृतीयज्ञानपदमपि ग्राह्यत्वस्य [2]विषयत्वपर्यवसन्नतया व्यापारानुबन्धिताकैस्तैरेव सिद्धसाधनवारणाय ।

---

**न्यायशिखामणिः**

**संभवेनोक्तदोषानवकाशात्** । **प्रामाण्यमात्रेति** । तस्य प्राधान्यादिति भावः । **सिद्धसाधनेति** । घटत्वप्रकारकमिदं ज्ञानं घटत्ववद्विशेष्यकमित्यनुमानस्य वक्ष्यमाणमानसप्रामाण्यग्रहस्य च प्रामाण्यविषयक[3]ज्ञानाजन्यत्वाद्विधौ सिद्धसाधनं निषेधे बाध इति तदुभयवारणायेत्यर्थः । दत्ते तु ज्ञानपदे मानसग्रहस्य तज्ज्ञानविषयकानुव्यवसायजन्यत्वात् अनुमानस्य च तादृशपक्षज्ञानजन्यत्वान्न दोष इति भावः । **व्यापारेति** । विषयत्वं द्विविधं व्यापारानुबन्धेन [4]प्रतीत्यनुबन्धेन च । तत्र चक्षुरादिविषयत्वं रूपादेर्ज्ञानरूपव्यापारद्वारेण । प्रतीत्यनुबन्धश्च व्यापारव्यवधानं विनैव संबन्धित्वम् । तच्च रूपादेर्ज्ञानं प्रत्येव । तथा च ज्ञानसंबन्धेनात्मनोऽपि [5]ज्ञानविषयकत्वेन स्वप्रकाशानुव्यवसायादिज्ञानानां तज्जन्यज्ञानत्वेनाप्रसिद्धिरिति तद्वारणाय ज्ञानपदमित्यर्थः ।

नन्वेवमपि ज्ञायतेऽनेनेति व्युत्पत्त्या आत्ममनोयोगादेरपि ज्ञानत्वात् भावव्युत्पत्त्याश्रयणे व्याप्तिज्ञानस्य व्यवसायस्य च व्यापारानुबन्धेन तज्ज्ञान[6]विषयकत्वात् ज्ञानत्वाच्च भट्टमिश्रमतयोरप्रसिद्धिः । गुरुमतेऽपि धूमादिज्ञानस्य व्यापारद्वारा वह्न्यनुमितिविषयकत्वात् अनुमितिप्रामाण्यांशे बाध इत्यत आह—**ज्ञानेति** । **तैरिति** । आत्मादिभिरित्यर्थः ।

नन्वेवमपि मानसप्रामाण्यग्रहस्थलीयप्रथमानुव्यवसायेन तज्ज्ञानविषयक[7]ज्ञानाजन्येन व्यापारद्वारा प्रामाण्यस्य विषयीकृततया सिद्धसाधनमिति चेत्—न । अत्रापि प्रतिपत्त्यनुबन्धितारूपविषयतायाः विवक्षितत्वात् ।

---

1. ख. प्रतिपत्त्यनु-
2. क. विषयपर्यव-
3. ख. ॰ज्ञानजन्य-
4. ग. घ. प्रतिपत्त्यनु-
5. क. ख. घ. ज्ञानविषयत्वेन
6. क. ख. घ. ॰विषयत्वात्
7. ग. ॰ज्ञानजन्येन

प्रकाशः

ननु सर्वं ज्ञानं गुणः इत्यादिशाब्दज्ञानानुव्यवसायः तज्ज्ञानविषयकज्ञान-जन्य एव। तथा च मुरारिमते तादृशज्ञानप्रामाण्ये नोक्तरूपं स्वतस्त्वम्। [1]अतस्तत्प्रामाण्यज्ञानांशे बाध इति चेत्—न। प्रामाण्यविशेषस्यैव पक्षतया तादृश-ज्ञानप्रामाण्यस्यापक्षत्वात्। अत्र तादृशज्ञानेनैव गृह्यते, गृह्यत एवेत्येवंरूपो नियमो न विवक्षितः। किं तु संभवमात्रं साध्यम्। मीमांसकैरपि नैयायिकाभिमतानु-

न्यायशिखामणिः

**नन्विति।** आदिपदात् सर्वं प्रमेयमभिधेयमित्यादिपरिग्रहः। ननु [2]सर्वं ज्ञानं गुण इति शाब्दज्ञाने सर्वत्वज्ञानत्वगुणत्वघटितप्रामाण्येषु न बाधः। सर्वो घटो द्रव्यं घटज्ञानं रूपं गुण इत्यादिव्यवसायस्थले तादृशज्ञानाग्राह्यत्वात्। नापि सर्वत्वादित्रितयघटितैकप्रामाण्ये दोषः। तस्यैवामानकत्वात्। एतेन सर्वज्ञानत्व-गर्भप्रामाण्ये [3]बाधोऽभिमत इति निरस्तम्। तस्यैवासिद्धेः, गुणपदवैयर्थ्याच्च। अत एव [4]सर्वं प्रमेयमभिधेयमित्यादिशाब्दज्ञानप्रामाण्येऽपि न बाधः। तस्मादत्र बाध इत्यविचारितसुन्दरमिति चेत्—न।

किं सर्वत्वज्ञानत्वादिघटितधर्मान्तराभावात्त[5]द्गर्भप्रामाण्यमपह्नूयते, तत्सत्त्वे-ऽपि पूर्वं तदनुपस्थित्या प्रकारत्वाभावाद्वा। नाद्यः, [6]सर्वं ज्ञानमिति च प्रत्येक-व्यवहारात् सर्वज्ञानमित्यादिविशिष्टव्यवहारस्य विशिष्टज्ञानसाध्यस्य विलक्षणत्वेन तत्र तस्य प्रमाणत्वात्। अन्यथा विशिष्टधर्ममात्रोच्छेदापत्तेः। नान्त्यः, परनये अनुपस्थितस्यापि प्रकारत्वाभ्युपगमात्। न्यायनये नीलो घटो द्रव्यमित्यत्र नील-घटत्ववदवान्तरवाक्यार्थज्ञाने संसर्गविधया अवगतस्य सर्वज्ञानत्वादेर्महावाक्यार्थज्ञाने प्रकारत्वे विरोधाभावात्। [7]अत एव न गुणपदवैयर्थ्यम्। अन्यथा [8]महावाक्यार्थज्ञा-नासंभवेन [9]तत्प्रकारत्वासिद्धेः। **मुरारीति।** गुरुमते स्वस्य स्वाजन्यत्वात्, भट्टमते [10]अनुमितेर्विषयाजन्यत्वाच्च न बाध इति भावः।

1. ख. अतस्तत्त्वांशतो बाध इति
2. ख. सर्वंज्ञानं
3. ग. बाध इति।
4. ख सर्वप्रमेय-
5. क. ॰त्तद्घटित-
6. ख. सर्वज्ञान-
7. क. तत एव
8. ग. ॰वाक्यार्थासंभवेन
9. क. तत्प्रकारकत्वासिद्धिः
10. ग. तदनुमितेः

प्रकाशः

मित्या प्रामाण्य[1]ग्रहस्वीकारात् । घटज्ञानप्रामाण्यस्य [2]पटज्ञानादिना तादृशेनाप्यग्रहाच्च ।

नन्वीश्वरज्ञानमादाय सिद्धसाधनम् । व्यतिरेकसाधने चाप्रसिद्धिः । न च तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्यसमानाधिकरणज्ञानग्राह्यत्वं विवक्षितमिति वाच्यम् । परमते व्यर्थविशेषणत्वात्, सामान्यलक्षणादिजन्यज्ञानग्राह्यत्वेन तथापि पूर्वोक्तदोषानतिवृत्तेश्च ।

नापि तज्ज्ञानविषयकजन्यज्ञानाजन्यसामान्यलक्षणाद्यजन्यजन्यज्ञानग्राह्यत्वं साध्यमिति वाच्यम् । परस्य व्यावर्त्याप्रसिद्धेः । जन्यपदान्तर्भावेणाप्रमाभिधानं

---

न्यायशिखामणिः

**प्रामाण्यविशेषस्येति** । न चैवं पक्षसंकोचापत्तिः । अननुव्यवसितज्ञान[3]प्रामाण्यवदस्यापि [4]तज्ज्ञानविषयकज्ञानाजन्यज्ञानविषयकत्वनियमेन [5]तस्य न्याय्यत्वात् । तथा च वक्ष्यमाणज्ञानग्राह्य[6]ज्ञानवृत्तित्वे सति समर्थप्रवृत्तिजनकतावच्छेदकत्वमत्र विप्रतिपत्तौ पक्षतावच्छेदकमिति भावः । उभयत्र क्रमेण हेतुमाह—**मीमांसकैरित्यादिना** । **न चेति** । अत्र भेदगर्भं सामानाधिकरण्यं विवक्षितम् । तच्च पक्षीभूतप्रामाण्याश्रयज्ञानेन । तथा चेश्वरज्ञानमादायाप्रसिद्धिवारणाय प्रथमसमानाधिकरणपदम् । द्वितीयं [7]तदादाय सिद्धसाधनवारणाय । अन्यथा [8]तदुपादानेऽप्यप्रसिद्धिसिद्धसाधनयोरनिवृत्तिप्रसङ्गादिति बोध्यम् ।

नन्वेवमुभयसिद्धत्वाभावेन सिद्धसाधनाभावेऽप्यन्यतरसिद्धत्वमात्रेणार्थान्तरं निषेधसाधने बाधश्चेति तदुभयवारणाय विशेषणं सार्थकमित्यत आह—**सामन्येति** । [9]अभिधेयत्वादीत्यर्थः । आदिपदाद्योगज[10]धर्मपरिग्रहः । किमुक्तविशेषणं व्यावर्तकमुतोपरञ्जकम् । आद्य आह—**परस्येति** । यद्यप्यन्यतरसिद्धिमात्रेणार्थान्तरसंभवान्न विशेषणवैयर्थ्यम् । तथापि सामान्यलक्षणादिजन्यत्वस्य प्रतियोगिन-

---

1. ख. °ग्रहास्वीकारात्
2. ख. घटज्ञानादिना
3. ग. °प्रामाण्यस्यापि
4. ख. तज्ज्ञानविषयज्ञानजन्य-
5. ख. तस्यान्याय्यत्वात्
6. क. 'ज्ञान' नास्ति ।
7. ग. तु instead of तदादाय
8. ग. तदुपपादने
9. क. ग. अभिधेयत्वादित्यर्थः ।
10. ख. °धर्मादि-

प्रकाशः

वस्तुगतिमभिप्रेत्य। अन्यथा [1]परं प्रति व्यावर्त्याप्रसिद्धेरिति अग्रिमग्रन्थाभिधानविरोधात्। साध्ये चोपरञ्जक[2]विशेषणोपादानस्यासंप्रदायिकत्वादिति।

यत्तु ईश्वरज्ञानादिना सिद्धसाधनं न दोषः। तन्निराकरणाभिप्रायेणैव परेणैतादृशसाध्यकरणादिति। तन्न। अर्थान्तरस्य वारयितुमशक्यत्वात्, निषेधसाधने बाधाच्चेति चेत्;

अत्र वदन्ति। तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगिज्ञानप्रकारो न वेत्यर्थः। ईश्वरज्ञानं च न व्यतिरेकप्रतियोगीति न तदादाय सिद्धसाधनम्। न च प्रकारत्वविवक्षया अभिधेयत्वसामान्यप्रत्यासत्तिनिबन्धनसिद्ध-

---

न्यायशिखामणिः

स्तन्मतेऽप्रसिद्धेस्तदजन्यत्वघटितं साध्यमप्रसिद्धमित्यत्र तात्पर्यम्। [3]नन्वेवं 'तज्ज्ञानविषयकजन्य[4]ज्ञानाजन्ये'त्यादिमानसप्रामाण्यग्रहस्थलीयग्रन्थविरोध इत्यत आह—जन्येति। अग्रिमेति। अव्यवहिताग्रिमेत्यर्थः। अन्त्ये त्वाह— साध्ये चेति। तन्निराकरणेति। ईश्वर[5]ज्ञाननिराकरणेत्यर्थः। एतादृशेति। अन्यथा परमेश्वराभ्युपगमे तज्ज्ञानविषयकज्ञानाजन्यत्व[6]विशेषणदानानुपपत्तेरिति भावः। एतावता सिद्धसाधनाभावेऽप्यर्थान्तरं दुर्वारमित्याह—तन्नेति। जयदेवसमाधिमाह—अत्रेति। व्यतिरेकपदमुभयत्र प्रागभावपरम्। अप्रयुक्तपदं तदन्वयाद्यनुविधाय्युत्तरसमयसंबन्धिभिन्नपरम्।

वारणेपीति। तत्राभिधेयत्वस्यैव [7]प्रकारत्वादित्यर्थः। सिद्धसाधनमिति। व्यतिरेकसाधने अप्रसिद्धिरपि बोध्या। न च सामान्यप्रत्यासत्तेरुभयवादिसिद्धत्वाभावात् न सिद्धसाधनमिति वाच्यम्। प्रमा इच्छाव्यभिचारिणी न वेति संशयानुपपत्तिबलेन तेनापि तत्प्रत्यासत्तित्वस्यावश्या[8]भ्युपगमनीयत्वात्। तस्य चाज्ञातस्यापि प्रतियोगित्वादिवत् प्रकारत्वसंभवादिति भावः। प्रमात्वमिति। भवतु प्रमात्वं

---

1. क. 'परं प्रति' इति नास्ति।
2. क. ०विशेषणस्यासांप्र-
3. ग. नन्वेतज्ज्ञान-
4. ख. घ. ०ज्ञानजन्ये-
5. ख. ग. प्र. 'ज्ञान' नास्ति।
6. ख. ग. घ. ०विशेषणानुपपत्ते-
7. ख. प्रकारकत्वादिति भावः।
8. क. ०भ्युपेयत्वात्

प्रकाशः

साधनवारणेऽपि प्रमेति सामान्यलक्षणाजन्यज्ञानविषयत्वेन [1]सिद्धसाधनमिति वाच्यम्। प्रमात्वं हि नाज्ञातं प्रत्यासत्तिः, संशयानुपपत्तेः। किं तु ज्ञातम्।

---

न्यायशिखामणिः

प्रत्यासत्तिः, [2]व्यभिचारसंशयानुपपत्तेः, तथापि नाज्ञातं प्रत्यासत्तिः। किं तु ज्ञातम्। अन्यथा तज्जन्यज्ञानस्य तत्प्रकारकत्वानुपपत्तेरित्यर्थः।

यद्यपि मीमांसकमते [3]अभावविवित्तिवेद्यप्रतियोगित्वादिवत् [4]ज्ञानवित्तिवेद्य-प्रमात्वस्याज्ञातस्यैव प्रकारत्वमिति वक्ष्यते, तथापि सिद्धसाधनवादिनैयायिकमते प्रतियोगित्वाभावत्वातिरिक्तस्य सर्वस्य ज्ञातस्यैव प्रकारत्वं वक्तव्यमित्याशयः।

केचित्तु अज्ञात[5]सामान्यस्य प्रत्यासत्तित्वे तत एव तत्प्रकारकनिश्चयरूप-विशेषदर्शनापत्तौ प्रमा नवेति संशयानुपपत्तेरित्यर्थः इत्याहुः।

तच्चिन्त्यम्। ज्ञातासत्तित्वेऽपि संशयानुपपत्तितौल्यात्। दोषात् प्रमात्व-निश्चयप्रतिबन्धश्चाज्ञातासत्तित्वेऽपि (तुल्यमिति।) [तुल्य इति]

अन्ये तु सामान्यमात्रस्य [6]प्रत्यासत्तित्वे रसत्वादेरपि चक्षुरादिप्रत्यासत्ति-त्वापत्त्या तत्तदिन्द्रिययोग्यत्वं प्रत्यासत्तितावच्छेदकं वाच्यमिति ज्ञातासत्ति[7]नियम इत्याहुः।

तदपि चिन्त्यम्। कादाचित्कज्ञानविशेष्यत्वमात्रेण तादृशयोग्यतासिद्धौ तत्काले [8]ज्ञातत्वालाभात्।

अपरे तु बाष्पे धूमभ्रमाद्यत्र सर्वोपसंहारेण [9]व्याप्तिभ्रमस्तत्र धूमत्वस्य [10]पुरोवर्त्यवृत्तितया ज्ञातमेव सामान्यमासत्तिरिति ज्ञातस्यैवासत्तित्वमित्याहुः।

तन्न। इन्द्रियसंबद्धं सामान्यमासत्तिः। स च संबन्धः संयुक्तसम-

---

1. ख. सिद्धसाधनं स्यादिति
2. ग. 'व्यभिचार' इति नास्ति
3. ख. अभाववृत्ति-
4. ख. ज्ञानवृत्ति-
5. ख. °सामान्यस्यैव
6. ख. ग. घ. प्रत्यासत्तित्वेन सत्वादेरपि
7. ख. °नियमितमित्याहुः।
8. ख. ज्ञातत्वाज्ञातत्वालाभात् ग. ज्ञानत्वालाभात्
9. ख ग. घ. व्याप्तिग्रहः
10. ख. पुरोवर्तिवृत्तित्वात् तद्वृत्तितया ज्ञातमेव ग. पुरोवृत्त्यवृत्तित्वात् ज्ञानमेव

## प्रकाशः

तज्ज्ञानं च प्रमात्वाश्रयज्ञानं विना न संभवति, तस्य क्वचित् पक्षत्वात्, क्वचित् सामान्यप्रत्यासत्तिक्रोडीकृतत्वात्। योगिज्ञानमादायापि न सिद्धसाधनम्। तज्ज्ञानस्यातीतानागतादिसकलज्ञानप्रामाण्यादिगोचरस्य स्वग्राह्यप्रामाण्याश्रयीभूतज्ञानविषयकनिदिध्यासनादिजन्यत्वात्। ज्ञातप्रत्यासत्तिस्थलेऽपि विषयीभूतप्रामाण्यविशिष्टधीजन्यत्वात् अनुव्यवसायस्य तदजन्यज्ञानग्राह्यताशङ्कैव नास्तीति किमनुपपन्नम्।

न च प्रामाण्यस्य पूर्वज्ञानाविषयत्वादनुव्यवसायादौ प्रकारत्वाभावाद्विधिकोटौ बाध [1]एवैवमिति वाच्यम्। ज्ञानवित्तिवेद्यतया तादृशस्यापि तस्य परैरपि प्रकारत्वाभ्युपगमात्, अभाववित्तिवेद्यप्रतियोगित्वाभावत्वयोरिव। अत एवानुपदं तथैव विभावयिष्यतीति।

---

## न्यायशिखामणिः

वायादिः। तदभावे वैज्ञानिकसंबन्ध इति संबन्धान्तरविरहे सामान्यस्य ज्ञातत्वसंभवेऽपि प्रत्यासत्तिभूतसकल[2]सामान्ये [3]ज्ञातत्वालाभादिति।

यदपि इन्द्रियसंबद्धसामान्यप्रत्यासत्तौ ज्ञानमेवेन्द्रियसंबन्धो लाघवात्। संयुक्त[4]समवायादीनामनेकत्वादिति ज्ञातस्यैवासत्तित्वमिति।

तदपि न। ज्ञानव्यक्तीनामप्यनेकत्वेन दोषसाम्यात् इन्द्रियसंबन्धत्वेनैकीकरणं संयुक्त[5]समवायादावपीति न [6]ज्ञातासत्तिनियम इति।

ननु प्रमात्वस्य ज्ञातस्य प्रत्यासत्तित्वेऽपि [7]तज्जन्यज्ञानस्य प्रमात्वाश्रयज्ञानविषयकज्ञानजन्यत्वाभावात् सिद्धसाधनतादवस्थ्यमित्याशङ्क्य, किं प्रमात्वप्रत्यासत्तिजन्यज्ञानस्य तादृश[8]ज्ञानाजन्यत्वम्, उत तज्जनकस्य प्रत्यासत्तिगोचरज्ञानस्य। नाद्यः, आनुमानिकप्रमात्वसामान्यज्ञानस्यावश्यं [9]प्रमाव्यक्तिविषयकत्वेन तद्रूपप्रत्यासत्तिजन्यज्ञानस्य तज्ज्ञानविषयक[10]ज्ञानजन्यत्वादित्यभिप्रेत्यान्त्यं प्रत्याह—तज्ज्ञानं

---

1. ख. एवेति
2. क. °सामान्यस्य
3. क. ज्ञातत्वाभावा-
4. क. °समवायादिति तु न अनेक-
5. ख. °समयवायादपीति
6. ग. अज्ञातासत्ति-
7. क. तज्ज्ञानस्य
8. ख. घ. °ज्ञानजन्यत्वम्
9. ग. प्रमावृत्ति-
10. ख. ज्ञानाजन्यत्वमित्यभिप्रेत्य

**प्रकाशः**

निषेधप्रसिद्धिस्तु तज्ज्ञाने [1]तद्धटितोपाधौ वा । अज्ञातस्याप्रकारत्वेन तस्य तज्ज्ञानविषयकज्ञानजन्यज्ञान एव प्रकारत्वात् । [2]विधिप्रसिद्धिर्घटत्वादावेवेति ।

---

**न्यायशिखामणिः**

**चेति** । प्रमात्वप्रत्यासत्तिगोचरज्ञानमित्यर्थः । **प्रमात्वेति** । प्रमात्वाश्रय[3]विषयकज्ञानं विनेत्यर्थः । **तस्य** प्रमात्वाश्रयस्य । **क्वचिदिति** । इदं ज्ञानं [4]प्रमा समर्थप्रवृत्तिजनकत्वादित्यादावित्यर्थः । **क्रोडीकृतत्वादिति** । अयं प्रमावान् तादृशप्रवृत्तिमत्त्वादित्यनुमितिस्थले [5]तद्धेतुव्याप्तिज्ञानेन सामान्यप्रत्यासत्त्याक्रान्तसर्वप्रमाविषयेण पक्षीभूतप्रामाण्याश्रयस्यापि विषयीकृतत्वादित्यर्थः । **अनुव्यवसायस्येति** । प्रामाण्यानुमित्यनन्तरं प्रमाणज्ञानवानहमित्यनुव्यवसायस्येत्यर्थः ।

**तज्ज्ञान** इति । प्राह्य[6]प्रामाण्याश्रय इत्यर्थः । नन्वत्र निषेध[7]प्रसिद्धिवर्णनमयुक्तम्, तज्ज्ञानस्य तादृशानुव्यवसायप्रकारत्वात् । न च तद्गोचरनिर्विकल्पकजन्यत्वा[8]त्तत्र निषेधप्रसिद्धिसंभव इति वाच्यम् । तन्मते निर्विकल्पकानभ्युपगमात् । अभ्युपगमे वा तज्ज्ञानविषयक[9]ज्ञानाजन्येति विशेषणानुपपत्तिप्रसङ्गात् । न च द्वितीयज्ञानपदस्य [10]सविकल्पकपरत्वम् । परमते व्यावर्त्याप्रसिद्धेः । न च [11]मध्ये घटज्ञानमिति तद्विशेष्यकज्ञानं प्रकारत्वानुपपत्त्या कल्प्यत इति वाच्यम् । तन्मते प्रकारत्व[12]निर्वाहकज्ञानानभ्युपगमेनोभयमते तज्ज्ञाने निषेध[13]प्रसिद्ध्यनुपपत्तेः । न च तज्ज्ञानपदं तद्विशेष्यघटादिपरम्, तस्य तादृशानुव्यवसायविशेष्यत्वेन [14]प्रकारत्वगर्भसाध्याभावात् । अत एव धर्मिण्येव व्यतिरेकप्रसिद्धिरित्यालोके तथैवाभिहितमिति वाच्यम् । व्यवसायोपनीतस्य घटादेस्तादृशानुव्यवसायप्रकारत्वेन तत्र

---

1. ख. तज्ज्ञानघटितो-
2. ख. प्रसिद्धिश्च घट॰
3. क. 'विषयक' इति नास्ति ।
4. क. ख. घ. प्रमाणं
5. ग. 'तद्धेतु' इति नास्ति ।
6. ख. ॰प्रामाण्यत्वाश्रय
7. ख. 'प्रसिद्धि' नास्ति ।
8. क. 'तत्र' नास्ति ।
9. क. ॰ज्ञानजन्येति
10. क. सविकल्पकज्ञानपरत्वम्
11. ख. मिति घट
    ग. मयि घट
12. ख. ॰निर्वाहज्ञान-
13. ख. ॰प्रसिद्धानुपपत्तेः
14. ख. ग. घ. 'प्रकारत्वगर्भ' इति नास्ति ।

### प्रकाशः

अत्रेद चिन्त्यम् । इच्छायां गृहीतं तद्वति तत्प्रकारकत्वं स्मृतं ज्ञानत्वेन गृह्यमाणे रजतत्वभ्रमे यत्रारोप्यते, यत्र वा रजतत्ववति रजतत्वप्रकारत्वेन गृह्यमाणायामिच्छायां ज्ञानत्वमारोप्यते तत्रोभयत्र प्रमात्वाश्रयज्ञानं विनापि रजतत्ववति रजतत्वप्रकारकज्ञानत्वरूपं प्रामाण्यं ग्रहीतुं शक्यते । ततश्च ज्ञातया तद्रूपसामान्यप्रत्यासत्त्या जनितं ज्ञानमादाय सिद्धसाधनं दुर्वारमेव ।

---

### न्यायशिखामणिः

तन्निषेधायोगात् । ततश्च तज्ज्ञाने (निषेधप्रसिद्ध्यनुपपत्तेः । न च तज्ज्ञानपदं तद्विशेष्यघटादिपरम् । तस्य तादृशानुव्यवसायप्रकारत्वेन तत्र तन्निषेधायोगात् । ततश्च तज्ज्ञाने) निषेधप्रसिद्धिरित्यसंगतमित्यरुचेरुपाध्यायमतमवलम्बते—[1]तद्घटितोपाधौ वेति । तज्ज्ञाननिरूपणाधीननिरूपणे तज्ज्ञानाभावे तज्ज्ञानजन्यत्वादावित्यर्थः । घटत्वादाविति । तस्य तादृशानुव्यवसायाजन्यव्यवसाय[2]प्रकारत्वादिति भावः ।

प्रगल्भोक्तेन दूषयति—अत्रेदमिति । तद्वतीति । [3]नन्विच्छायाः प्रत्यासत्तित्वेऽपि तज्ज्ञानेन पुरोवर्तिनि स्वातन्त्र्येण [4]तन्न ग्रहणयोग्यम् । मनसो बहिर्विशेष्यकज्ञानासामर्थ्यात् । अन्यथा रजतज्ञानानुव्यवसायेन व्यवसाये तद्ग्रहापत्तेरिति चेत्—न । रजतमिति ज्ञानस्येच्छा[5]जनकस्यागृह्यमाणेच्छावृत्तिप्रामाण्यघटक[6]तद्वत्त्वोपनायकत्वात् मानसप्रामाण्यग्रहस्थलीयप्रत्यासत्तिवदित्याशयात् ।

[7]यत्र वेत्यनास्थायाम् । 'अज्ञाने अविषये च ज्ञानत्वविषयत्वयोर[8]भाना'-दिति मणिदर्शनेनेच्छायां ज्ञानत्वारोपाभावात् । न च तत्पदं [9]तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वमात्रपरम्, ज्ञानपदं चाश्रयपरमितीच्छागोचरज्ञानस्यापि तदाश्रयगोचरतया तदजन्यत्वाभावान्न सिद्धसाधनमिति वाच्यम् । यत्र रजतगोचरद्रव्यत्व-

---

1. ख. तद्घटितेति ।
2. ख. °प्रकारकत्वादिति ।
3. ख. नन्विच्छायां
4. ख. न तद्ग्रहयोग्यमनसो
5. क. जनकस्य गृह्य-
6. ख. 'तद्वत्त्वोशाया सामर्थ्यात् । अन्यथा रजतज्ञापनयकत्वात्'
7. ख. यत्र चेत्यना-
8. ग. °रभावा-
9. क. तद्विशेष्यक-

## प्रकाशः

किं च काशीमरणादिजन्यं योगजं ज्ञानमादाय सिद्धसाधनम्। न हि तदपि निदिध्यासनादिजन्यम्, मानाभावात्। अत एव तत्तत्कर्मणां तत्तज्ज्ञान विशेष एव जनकत्वमित्यनुमानखण्डे वक्ष्यति।

---

## न्यायशिखामणिः

प्रकारकेच्छायां गृहीतं [1]तद्वद्विशेष्यकत्वमात्रं रजतत्वप्रकारकत्वेन गृह्यमाणे रजतभ्रम आरोप्यते, तत्रेच्छाज्ञानस्य [2]भ्रमगोचरज्ञानस्य च तदाश्रयगोचरत्वाभावेन सिद्धसाधनतादवस्थ्यात्। न च तत्पदं [3]तद्वद्विशेष्यकत्वमात्रपरम्, तथा चेच्छाज्ञानस्यापि तदाश्रयगोचरज्ञानतया तज्जन्यत्वाभावान्न सिद्धसाधनमिति वाच्यम्। एवमपि यत्र [4]रजतभ्रमानन्तरं तदनुव्यवसायः पुनरपि पुरोवर्तिनि रजतभ्रमस्तत्र स्मृत्युपनीते रजतभ्रमे द्वितीयभ्रमोपनीततद्वद्विशेष्यकत्वं यत्र मनसा गृह्यते तत्र भ्रमनिष्ठतया ज्ञातया सामान्यप्रत्यासत्त्या जनितं ज्ञानमादाय सिद्धसाधनस्य दुर्वारत्वात्। **तद्रूपेति**। प्रमात्वरूपेत्यर्थः।

ननु तत्पदं प्रामाण्यघटकतत्प्रकारकत्वपरम्। ज्ञानपदं चाश्रयपरम्। तथा च [5]रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वं रजतत्वप्रकारकत्वाश्रयविषयकज्ञानाजन्यज्ञान[6]प्रकारः इति साध्यम्। रजतभ्रमरजतेच्छागोचरज्ञानमपि तदाश्रयविषयकमेवेति नोक्तदोष इत्यरुचेराह—**किं चेति**। **योगजं** [7]योगजजातीयम्। सर्वविषयत्वेनेति शेषः। क्वचित्समस्तमेकं पदं **काशीमरणादिजन्ययोगजमिति**। तत्र काशीमरणादितो जनिरस्येति काशीमरणादिजनि तदेवायोगजमिति तत्तथा। **न हीति**। अयोगजेऽपि ज्ञाने निदिध्यासनस्य हेतुत्वे [8]काशीमरणवैफल्यापत्तेरिति भावः।

---

1. क. तद्विशेष्यक-
2. ग. 'भ्रमगोचरज्ञानस्य च' इति नास्ति।
3. ख. न तद्विशेष्यकत्व-
4. क. रजतज्ञानानन्तरं
5. क. 'रजतत्व....प्रकारत्वं' इति ग्रन्थस्त्रुटितः।
6. ख. ०प्रकारकः
7. ग. योगजातम्
8. क. काशीमरणा-

न्यायशिखामणिः

नन्वेवं [1]द्रष्टव्य इति दर्शनानुवादेन तत्साधनतया श्रवणादिविधानानुपपत्तिः । काशीमरणजन्यज्ञाने तेषामहेतुत्वादित्याशङ्क्य, ज्ञानविशेषहेतुत्वमेव श्रवणादीनाम्, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति वाक्यविहित[2]कर्मविशेषाणामिवेत्याशयेनाह—अत एवेति ।

ननु काशीमरणस्य नात्यन्तिकदुःखनिवृत्तिलक्षणमोक्षहेतुत्वम्, येन तत्त्वज्ञानहेतुत्वं स्यात् । किं तु सारूप्यलक्षणौपचारिकमोक्षहेतुत्वम् । अत एव [3]तदुत्तरं अर्धनारीश्वरादि[4]रूपप्राप्तिरेव स्मर्यते । न चैवं 'ये वै [5]तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते' इति श्रुतिविरोधः । 'अपाम सोममममृता अभूम' इतिवत् [6]तस्या महाप्रलयकालपर्यन्तस्थायिफलाभिप्रायत्वात् । अस्तु वा तस्य मोक्षहेतुत्वम्, तथापि न तत्त्वज्ञानद्वारा तद्धेतुत्वम् ।

यदि च तत्त्वज्ञानस्य मुक्तिहेतुत्व[7]प्रतिपादकश्रुतिविरोधेन 'नान्यः पन्था विद्यतेऽयनाय' इति कारणान्तरप्रतिषेधेन च 'अमृतत्वं भजन्ते' इति श्रुतेस्तत्त्वज्ञानरूपव्यापारकल्पनेऽपि संभवेन तस्यास्तद्द्वारकमुक्तिजनककाशीमरणपरत्वावगमात् [8]तद्द्वारा हेतुत्वमिति मतम्; तदा 'द्रष्टव्यः' इति दर्शनानुवादेन 'निदिध्यासितव्यः' इति श्रुत्या [9]ध्यानस्य तत्त्वज्ञानमात्रकारणत्वावगमात् तदविरोधेन तस्य [10]ध्यानद्वारैव तत्त्वज्ञानहेतुत्वमपि कल्प्यताम् ।

अत एव यज्ञादिश्रुतिविहितानां कर्मणामपि न साक्षात् तत्त्वज्ञानहेतुत्वम् । निदिध्यासनं विना तत्त्वज्ञानप्रतिबन्धकविपरीतभावनानिवृत्तेरसंभवेन तस्यावश्यापेक्षिततया यज्ञादिश्रुतेः श्रवणादिप्रतिबन्धकपापनिवृत्तिद्वारा श्रवणादिजन्यतत्त्वज्ञान[11]हेतुत्वपरत्वात् । ततश्च काशीमरणजन्यमपि तत्त्वज्ञानं स्वग्राह्यप्रामाण्याश्रयीभूतज्ञानविषयकनिदिध्यासनादिजन्यमेवेति चेत्—न ।

---

1. ख. द्रष्टव्य इति
2. क. कर्मविशेषणामेव
3. ख. घ. अनन्तरं
4. क. 'रूप' इति नास्ति
5. ग. तान् विसृज्यन्ति
6. ख. तस्य
7. ग. 'प्रतिपादक' इति नास्ति
8. ख. तद्वारहेतुत्व-
9. ख. निदिध्यासनस्य
10. ख. ध्यानद्वारा तत्त्व-
11. ग. ॰हेतुपरत्वात्

प्रकाशः

न च तत्रापि प्रमात्वस्य प्रकारत्वार्थं पूर्वमुपस्थित्यपेक्षायां प्रमात्वाश्रयज्ञानमावश्यकमिति तज्ज्ञानविषयकज्ञानजन्यज्ञानप्रकारत्वमेवेति नोक्तदोष इति वाच्यम् । (पूर्वन्यायेन)[पूर्वोक्तन्यायेन]प्रमात्वाश्रयज्ञानं विनापि संसर्गविधया प्रमात्वग्रहसंभवादिति ।

---

न्यायशिखामणिः

तत्त्वज्ञानमात्रस्य निदिध्यासनजन्यत्वेऽपि तस्य चित्तैकाग्र्यलक्षणव्यापाररूपतया ज्ञानत्वासिद्धेः । अन्यथा तस्य कृत्यसाध्यत्वेन विधेयत्वानुपपत्तेः । ज्ञानरूपत्वे वा द्वितीयादिज्ञानानां सर्वविषयकज्ञानजन्यत्वेऽपि प्रथमध्यानात्पूर्वं सर्वविषयज्ञानाभावेन तस्य स्वग्राह्यप्रामाण्याश्रयज्ञानाजन्यत्वेन सिद्धसाधनं [1]दुर्वारमिति भावः ।

ननु न्यायमते विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमात् प्राथमिक[2]सर्वविषयकज्ञानात्पूर्वं जन्मभेदेनानुभूतसर्वपदार्थानां फलबलेन काशीमरणजन्यादृष्टोद्बुद्धसंस्कारैर्युगपत् स्मरणकल्पनात् तस्य च प्रमात्वाश्रयविषयकत्वान्न सिद्धसाधनमित्याशङ्क्य, सर्वसंस्काराणां विनष्टत्वेनेदानीं सर्वस्मरणायोगात् [3]अनुभवरूपमेव प्रमात्वादिविशेषणज्ञानं वाच्यम् । तच्च पूर्वोक्तरीत्या [4]प्रमात्वानाश्रयेऽपि भ्रान्तिज्ञाने संभवतीति दोषतादवस्थ्यमित्यभिप्रेत्य निराकरोति—न चेति । पूर्वोक्तेति । एतच्चापाततः । काशीमरणेन तस्य [5]निरस्तसमस्तदोषतया भ्रमासंभवात्, संभवे वा तस्य तत्प्रकारकत्वाश्रयविषयकत्वेन तज्जन्य[6]ज्ञानग्राह्यतया सिद्धसाधनानवकाशात् । तस्मात् प्रतियोगित्वादिप्रकारकज्ञानभिन्न इव प्राथमिकसर्वविषयकज्ञानभिन्ने[7] विशिष्टज्ञाने यदि विशेषणज्ञानस्य कारणत्वं कल्प्येत तदैव सिद्धसाधनम् ।

वस्तुतस्तु घटोऽस्य [8]विशेष्यः घटत्वमस्य प्रकार इति विसंवादिवाक्यात् पटगोचरद्रव्यत्वप्रकारकज्ञाने [9]घटत्ववद्विशेष्यकत्वं घटत्वप्रकारकत्वं [10]चावगम्यते ।

---

1. ख. 'दुर्वारं' नास्ति ।
2. ग. 'सर्व' नास्ति ।
3. क. अनुभय-
4. क. प्रमात्वानाश्रयीभूतज्ञाने
5. ख. निमित्तरस्तसमस्त-
6. क. 'ज्ञान' नास्ति ।
7. क. भिन्नविशिष्ट-
8. ग. विषयः
9. ग. घटत्वद्विशेष्यकत्वमवगम्य तत्परादेव
10. क. चावगच्छति

प्रकाशः

तस्मादनागताविषयकेत्युभयत्र ज्ञानपदं विशेषितं बोध्यमित्येके।

वस्तुतस्तु तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगितदेकज्ञानमात्रविषयकज्ञानग्राह्यमित्यर्थः। ज्ञानज्ञानप्रामाण्यं न पक्षः। तेन तत्र बाधो न दोष इति। एवं च विधिप्रसिद्धिस्तु तज्ज्ञाने, निषेधप्रसिद्धिस्त्वतीन्द्रिये विशेष्यावृत्त्य[1]-प्रकारकत्वादावित्याहुः।

---

न्यायशिखामणिः

[2]तत्रैव मनसा तदुभयवैशिष्ट्यपरादेव घटत्ववद्विशेष्यकस्यास्य घटत्वं प्रकार इति वाक्यान्तराद्यत्र घटत्व[3]प्रकारकत्वमवगच्छति तत्र [4]विशिष्टप्रमात्वस्यापि संसर्गविधया अवगतत्वेन तद्रूपसामान्यप्रत्यासत्तिजन्यज्ञानमादाय सिद्धसाधनम्। [5]शाब्दज्ञानस्य घटत्वप्रकारकत्वाश्रयविषयकत्वाभावेनास्य [6]तज्ज्ञानविषयकज्ञानाजन्यत्वादिति दिक्।

नवीनमतमाह—तस्मादिति। उभयत्रेति। द्वितीयतृतीय[7]ज्ञानयोरनागताविषयकत्वं विशेषणमित्यर्थः। तथा च तादृशज्ञानविषयत्वमेव साध्यम्। अभिधेयत्वादिनिबन्धनार्थान्तरस्यानागताविषयकत्वविशेषणेनैव निरासात्। तत एव न योगिज्ञानमादाय दोषः, न वा परमेश्वरज्ञानमादायार्थान्तराप्रसिद्धी इति भावः।

नन्वेवमपि वर्तमानघटप्रमात्वप्रत्यासत्त्या दोषतादवस्थ्यम्। अनागतवृष्ट्यादिज्ञान[8]वृत्तिप्रामाण्ये बाधश्चेत्यपरितोषादाह—वस्तुत इति। ननु तदेकमात्रेति विशेषणेन सामान्यप्रत्यासत्तिजन्यज्ञानयोगिपरमेश्वरज्ञानवारणेऽपि [9]ज्ञानज्ञानप्रामाण्यस्य तद्भिन्नव्यवसायगोचरज्ञानविषयतया तदेकज्ञानमात्रविषयकत्वाभावात् बाध इत्यत आह—ज्ञानज्ञानेति। एवं चेति। प्रकारत्व[10]विवक्षाविरहे सतीत्यर्थः।

---

1. ख. °प्रकारकत्वादावपीत्यर्थः।
2. क. 'तत्रैव मनसा...अवगच्छति'
3. ख. °प्रकारमवगच्छति
4. ख. प्रविष्ट-
5. क. 'शाब्दज्ञानस्य....इति दिक्' इति ग्रन्थस्त्रुटितः।
6. ख. अतज्ज्ञानविषयकज्ञानजन्य-
7. क. °ज्ञानयोरित्यर्थः। घ. ज्ञानयोरनागतविषयकत्वं
8. ग 'वृत्ति' इति नास्ति।
9. ग. ज्ञानाज्ञान-
10. क. 'विवक्षा' इति नास्ति।

### प्रकाशः

ननु प्रमावानयं समर्थप्रवृत्तिमत्त्वादित्यादिना सिद्धसाधनम्। मीमांसकमते सामान्यप्रत्यासत्त्यभावेन ग्राह्यप्रमाव्यक्तेरनुमितिजनकज्ञानागोचरत्वादिति चेत्—न। तद्भिन्नप्रामाण्यस्यैव पक्षत्वात्। न हि सर्वप्रामाण्यानामेवंविधानुमितिविषयतानियम इत्याहुः।

केचित्तु नैयायिकमतेन सिद्धसाधनशङ्का। तस्य च सामान्यलक्षणप्रत्यासत्तिस्वीकारात् [1]तत्प्रमाव्यक्तेरनुमितिजनकज्ञानविषयत्वेनोक्तदोषाभावादित्याहुः।

---

### न्यायशिखामणिः

**नन्विति**। ननु साध्यशरीरप्रविष्टप्रमात्वं यदि विशेष्यावृत्त्यप्रकारकत्वम्[2], तदा पक्षीभूतरजतत्ववद्विशेष्यकत्वादेस्तदविषयतया न सिद्धसाधनावकाशः। यदि [3]रजतत्ववद्विशेष्यकत्वं तदा [4]रजतविशेष्यकप्रवृत्तिमत्त्वं हेतुः। तथा च व्याप्तिग्रहस्यैव पक्षीभूतप्रामाण्याश्रय[5]रजतज्ञानगोचरतया [6]तदनुमितेस्तादृशज्ञानजन्यत्वादेव न सिद्धसाधनमिति चेत् न। प्रमापदस्य समर्थप्रवृत्तिजनकतावच्छेदकाश्रयपरत्वात्, रजतत्ववद्विशेष्यकत्वादेश्च तदवच्छेदकतयानुमितिविषयत्वमित्यवकाशः सिद्धसाधनस्येति भावः।

जयदेवसमाधिमाह—**तद्भिन्नेति**। ननु [7]अनुमितिविषयभिन्नत्वं यद्यर्थः, तदा अप्रसिद्धिः। आत्मपक्षकानुमितिविषयभिन्नत्वविवक्षायां संदिग्धाश्रयासिद्धिः। सर्वप्रामाण्यानामात्मप्रवृत्त्यन्यतर[8]पक्षकानुमितिविषयत्वसंशयात् भट्टमते सर्वप्रामाण्यानामात्मपक्षकज्ञाततालिङ्गकानुमितिग्राह्यत्वनियमेनाश्रयस्यान्यतरासिद्धिश्चेत्यस्वरसं सूचयति—**आहुरिति**।

केचित्तु उभयवादिसिद्धं [9]तज्ज्ञानविषयकज्ञानाजन्यज्ञानं प्रामाण्यविषयकमिति विवक्षितम्। योगिज्ञानादेरुभयासिद्धत्वान्न पक्षता। उभयसिद्धत्वस्य पक्षे उपरञ्जकत्वाच्च न वैयर्थ्यमित्याहुः। तच्चिन्त्यम्। घटज्ञानादेरुक्तपक्षतावच्छेदकावच्छिन्नस्य [10]पटज्ञानप्रामाण्याग्राहकतया बाधापत्तेः।

---

1. ख. ग्राह्यप्रमा°
2. ख. °प्रकारत्वं
3. ख. रूपतत्त्ववद्वि-
4. क. रजतत्ववद्विशेष्यक- ख. रजतविशेष्यकाप्रवृत्ति-
5. ख. °रजतत्वज्ञान-
6. क. 'तद' इति नास्ति।
7. ग. अनुमितिभिन्नविषयत्वं यद्यर्थः ख. अनुमितिविषयभिन्नत्वमित्यर्थः
8. ख. °पक्षानुमिति-
9. ख. तज्ज्ञानज्ञानविषयकज्ञानाजन्य-
10. क. घटज्ञानं- ख. पदज्ञान- ग. 'पट' इति नास्ति।

न्यायशिखामणिः

[1]उभयवादिसिद्धत्वे हि सिद्धसाधनम् । न चेह तदित्यतो न पक्षसंकोच इत्याशयेनाह—केचित्त्विति । तथापि मीमांसकमतानुसारेणोक्तानुमितेस्तादृशज्ञानतया तद्विषयत्वेनैव पक्षे साध्यसिद्धौ [2]स्वानुव्यवसायादिग्राह्यत्वस्याभिमतस्यासिद्धावर्थान्तरं दुर्वारमित्यस्वरसं सूचयति—आहुरिति ।

अत्राहुः । उभयवादिसिद्धतज्ज्ञानविषयकज्ञानाजन्यज्ञानत्वं प्रामाण्यविषयकवृत्ति न वेति विवक्षितम् । अथ वा उभयवादिसिद्धतज्ज्ञानविषयकज्ञान[3]व्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगिज्ञानविषयत्वं स्वतस्त्वम् । मीमांसकमतानुसारेण तस्य प्रमावानित्यनुमिति[4]ग्राह्यतया न्यायमतानुसारेण [5]तस्य योगिज्ञानग्राह्यतया अर्थान्तरवारणायोभयवादिसिद्धेति तृतीयज्ञानविशेषणम् । घटज्ञानवानह[6]मित्याकारकमनुव्यवसायरूपं ज्ञानं तज्ज्ञानविषयकज्ञानाजन्यत्वेन गुरुमुरारिभट्टनैयायिकसंमतम् । प्रमावानित्यनुमितिश्च न्यायमते तज्ज्ञानविषयकज्ञानजन्यतया तदजन्यत्वेन रूपेण नोभयवादिसिद्धेति भवति तद्व्युदासः । एवं चानागतज्ञानप्रामाण्यं [7]ज्ञानज्ञानप्रामाण्यं प्रमावानित्यनुमितिग्राह्यप्रामाण्यं च पक्ष एवेति न पक्षसंकोचः ।

यद्वा उभयवादिसिद्धं तज्ज्ञानविषयकज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगितज्ज्ञानविषयकज्ञानं तत्प्रामाण्यविषयकमिति विवक्षितम् । घटज्ञानस्य तादृशस्य पटज्ञानप्रामाण्याविषयत्वेऽपि पक्षीभूतप्रामाण्याश्रयविषयत्वाभावेन पक्षत्वाभावान्न [8]बाधः । अहं प्रमावान्, इयं प्रवृत्तिः प्रमाजन्या इत्यात्मप्रवृत्तिपक्षकानुमित्योः तज्ज्ञानविषयकयोः तत्प्रामाण्यविषयत्वेऽपि तज्ज्ञानविषयक[9]ज्ञानाजन्यत्वेन रूपेणोभयासिद्धतया पक्षत्वाभावान्न सिद्धसाधनम् । तथा च योगिज्ञानस्य प्रामाण्यविषयत्वेऽपि उभयवादिसिद्धत्वाभावादेव न पक्षतेति नोक्तदोष इति ।

तच्चिन्त्यम् । प्रमात्वाश्रयज्ञानं विनापि [10]घटगोचरद्रव्यत्वप्रकारकज्ञाने घटत्वादिघटितप्रामाण्यग्रहस्योक्तत्वात् ।

---

1. ख. उभयसिद्धत्वे
2. ख. घ. सानुव्यव-
3. क. °व्यतिरेकप्रयुक्त-
4. क. °विषयतया
5. ख. ग. घ. 'तस्य' नास्ति ।
6. ख. °इत्याकारव्यवसाय-
7. क. 'ज्ञानज्ञानप्रामाण्यं' इति नास्ति ।
8. ग. 'न बाधः ।······पक्षत्वाभावात्' इति ग्रन्थस्त्रुटितः ।
9. क. ख. घ. °ज्ञानजन्यत्वेन
10. ग. घ. पटगोचरद्रव्यत्व°

परतःपक्षे ज्ञात एव ज्ञाने प्रामाण्यग्रहः। स्वतस्त्वे प्रामाण्यवत एव ज्ञानस्य ग्रहात् ॥

### प्रकाशः

[1]न्यायनये निषेधकोटिमुपपादयति—परतःपक्ष इति। [2]मीमांसकमते विधिकोटिमुपपादयति—स्वतस्त्व इति।

### न्यायशिखामणिः

वयं तु ब्रूमः। तज्ज्ञानविषयकज्ञानग्राह्यत्वं त्रितयसाधारणं स्वतस्त्वम्। [3]तज्ज्ञानजन्यज्ञानग्राह्यत्वं भट्टमते स्वतस्त्वम्। इदमेव नञ्पदबहिर्भावेण मिश्रमते। तत्राद्यविप्रतिपत्तौ तत्पदं प्रामाण्यपरम्। ज्ञानपदमाश्रयपरम्। विषयकत्वं चोभयान्वयि। यावत्पदस्यात्राप्यनुषङ्गः। तथा च प्रामाण्यविषयकयावत्स्वाश्रयविषयकज्ञानेन स्वातन्त्र्येण ग्राह्यत्वं स्वतस्त्वम्। द्वितीयविप्रतिपत्तौ [4]तज्ज्ञानजन्यज्ञानपदं ज्ञानत्वावच्छिन्नव्यापकताकानुमितिपरम्। तज्ज्ञानजन्येत्यत्र तज्ज्ञानपदं प्रामाण्याश्रयपरम्। [5]यथा चैतदुभयं तथानुपदं [6]वक्ष्यामः। एवं चात्र गुरुमते प्रत्येक[7]विप्रतिपत्त्यनभिधानादग्रे तन्मात्राभिधानम्। अन्यथा [8]मतान्तरेऽपि प्रत्येकं तदभिधानप्रसङ्गादिति संक्षेपः।

ननु मीमांसकमते परतस्त्वानभ्युपगमेन परतःपक्ष इत्यनुपपन्नम्। तस्य न्यायमताभिप्रायत्वे [9]साध्यानिर्देशात् पञ्चम्या अनन्वयः। न च निषेधकोटिसंभव [10]इत्यध्याहारान्नानन्वयः। तावता द्वितीयविप्रतिपत्तौ निषेधोपपादनेऽ[11]प्याद्यविप्रतिपत्तौ तदनुपपादनादित्यत आह—न्यायनय इति। द्वितीयविप्रतिपत्ताविति शेषः। एतच्छङ्काव्यावृत्त्यर्थमेव मीमांसकनये [12]इत्यपीति द्रष्टव्यम्।

इति द्वितीया विप्रतिपत्तिः

—:०:—

1. ख. न्यायमते
2. ख. मीमांसकमतमुपपादयति
3. क. ग. घ. तज्ज्ञानाजन्य°
4. ग. तज्ज्ञानजन्य-
5. ख. तथा च
6. ख. वक्ष्यमाणः
7. ग. °विप्रतिपत्त्यभि°
8. ग. अर्थान्तरेऽपि
9. ख. साध्यनिर्देशात्पञ्चम्यन्वयः
10. ख. इत्यध्याहारानान्वयः
11. ख. 'आद्यविप्रतिपत्तौ··· द्रष्टव्यम्'
12. क. घ. इत्यत्रापि इति ग्रन्थः त्रुटितः।

॥ श्रीः ॥

# अथ तृतीया विप्रतिपत्तिः

—: * :—

## स्वाश्रयग्राहकेण गृह्यत एव न वा ।

### प्रकाशः

ननु स्वाश्रयग्राहकसामग्र्यास्तज्ज्ञानप्रकारीभूतप्रकारत्वादिना विशेषणे तदप्रामाण्याग्राहकपदवैयर्थ्यम्, अविशेषणे बाध इति तदनन्तर्भावेणैव [1]त्रितय-साधारणं विप्रतिपत्त्यन्तरमाह—स्वाश्रयग्राहकेणेति । स्वाश्रयग्राहकं च पूर्ववदेव तज्ज्ञानप्रकारीभूतधर्म[2]प्रकारित्वादिना विशेषणीयम् । तेन घटज्ञानमित्यादिना शब्देन [3]प्रामाण्याग्रहान्न बाधः ।

### न्यायशिखामणिः

[4]उपाध्यायमतानुसारेणाद्यविप्रतिपत्ता[5]वस्वरसमाह—नन्विति । गुरुमते स्वाश्रयग्राह्यत्वेनैव सामञ्जस्ये व्यर्थविशेषणत्वात् पूर्वविप्रतिपत्त्यभेदप्रसङ्गाच्च एतद्वि-प्रतिपत्तेर्भट्टमुरारिसाधारण्यमेवेत्युपाध्यायमतम्, [6]अप्रामाण्याग्राहकविशेषणाघटित-त्वेनाभेदशङ्कानवकाशात् विशेषणवैयर्थ्यस्य [7]चानुपदं निराकरिष्यमाणत्वादयुक्तमि-त्याशयेनाह—तदनन्तर्भावेणेति । घटज्ञानमित्यादिनेति । एतच्चोपलक्षणम् । अप्रामाण्यग्राहकस्य घटत्वप्रकारकमिति शब्दस्य च प्रकारत्वभानानुरोधात् किंचि-द्विशेष्यकत्वग्राहकत्वेऽपि न तद्वद्विशेष्यकत्वेन ज्ञानग्राहकत्वमित्युक्तत्वान्न बाध इत्यपि बोध्यम् ।

एतेनाप्रामाण्य[8]भ्रमस्थलीयप्रामाण्यस्यात्र विप्रतिपत्तावपक्षत्वादेव न बाधः । अन्यथा साध्यस्य तत्साधारण्यायात्रापि विशेषणान्तरोपादानापत्तेरिति जयदेवो-क्तमपास्तम् । अत्रापि पक्षासंकोचसंभवे तत्संकोचस्यान्याय्यत्वात् । अन्यथा अप्रामाण्यग्रहाविषयज्ञान[9]प्रामाण्यस्य पक्षत्वे [10]सर्वज्ञानमप्रमेत्यप्रामाण्यभ्रमस्य सर्व-

1. ख. त्रितयमतसाधा-
2. ख. °प्रकारत्वादिना
3. ख. प्रामाण्यग्रहात्
4. ख. 'उपाध्यायमतानुसारेण' इति नास्ति ।
5. ख. ग. घ. °वपरितोषमाह
6. ग. प्रामाण्यग्राहक-
7. ख. 'चानुपदं····प्रकारत्वभान°' इति भागस्त्रुटितः ।
8. ग. °ग्रहस्थलीय-
9. ख. °प्रामाण्यपक्षत्वे
10. ख. सर्वज्ञानं प्रमा-

## प्रकाशः

एवं च न[1] यथा सिद्धसाधनं तथोक्तम् । एवकारो यावदर्थकः । तेन यावत्स्वाश्रयग्राहक[2]ग्राह्यमित्यर्थः । तेन क्रियासंगतैवकारस्यात्यन्तायोगव्यवच्छेदार्थकतया न सिद्धसाधनम् ।

यत्तु वाक्यार्थभूतस्य स्वाश्रयग्राहककर्तृकग्रहणकर्मत्वस्य विशेषणस्यायोगव्यवच्छेद [3]एवकारतात्पर्यम् । तथा च सर्वेषु प्रामाण्येषु तद्विशेषणयोगलाभान्न स्वतस्त्वासिद्धिरिति । तन्न । सर्वप्रामाण्यानामनुमितिग्राह्यत्वेन परतस्त्वेऽपि साध्यपर्यवसानेन स्वतस्त्वासिद्धेः ।

---

## न्यायशिखामणिः

प्रामाण्याश्रय[4]विषयतया पक्षालाभप्रसङ्गात् । न च विशेषणान्तरापत्तिः । तस्य घटज्ञानपदनिबन्धनबाधवारणाय तवाप्यावश्यकत्वादिति ।

एवं [5]सति तद्वद्विशेष्यकत्वेन ज्ञानग्राहकस्य सर्वस्यानुमानादेः प्रामाण्यग्राहकत्वात् सिद्धसाधनं [6]परमवशिष्यते । तच्च स्वातन्त्र्यास्वातन्त्र्यसाधारणतद्वत्त्वग्राहकत्वस्य विवक्षितत्वान्न संभवतीत्याह—एवं चेति । ननु यावत्पदानुपादाने सिद्धसाधनम्, उपादाने एवकारवैयर्थ्यमित्यत आह—एवकार इति । अत्यन्तेति । तादृशानुमितिग्राह्यत्वात् यत् सिद्धसाधनं तन्नेत्यर्थः ।

सर्वेष्विति । यथा घटत्वं चक्षुर्ग्राह्यमेवेत्युक्तेऽपि न सकलचक्षुर्ग्राह्यता [7]तथेत्यर्थः ।

यदत्र नरहरिमिश्रा वदन्ति— प्रामाण्यं स्वाश्रयग्राहकेण गृह्यत एवेत्यत्र स्वाश्रयग्राहके [8]प्रामाण्यकर्मकग्रहणकर्तृत्वस्य विधेयतया नियमे एवकारतात्पर्यात् स्वाश्रयग्राहकं प्रामाण्यग्राहकमेवेत्यर्थपर्यवसाने 'कुमुदं श्वेतमेव' इत्यत्र सकलकुमुदव्यक्तौ श्वैत्यस्येव सर्वस्वाश्रयग्राहकव्यक्तौ प्रामाण्यग्राहकत्वस्य लाभात् स्वतस्त्वसिद्धिरिति ।

---

1. ख. यथा न
2. ख. °ग्राहकत्वमित्यर्थ:
3. क. 'एव°' नास्ति
4. ख. °विषयतापक्षा-
5. ख. यदि तद्विशेष्य-
6. क. ख. परं विशिष्यते
7. ख. तथेति भावः
8. ग. प्रामाण्यं ग्रहण-

प्रकाशः

न च गुरुमते ग्राहकपदवैयर्थ्यान्न त्रितयसाधारण्यमत्रेति वाच्यम् । [1]यथोक्तविशेषणविशेष्यभावे साध्ये (च) वैयर्थ्याभावात् । अन्यथा पूर्वविप्रतिपत्तावपि तथात्वापत्तेः । पूर्वाभेदस्य विशेषणानुपादानेनैव निरासात् ।

---

न्यायशिखामणिः

तन्न । ज्ञानप्रामाण्यपक्षकस्वतस्त्वासिद्धिप्रसङ्गात् । न च प्रामाण्यं [2]स्वग्राहकताव्याप्यस्वाश्रयग्राहकताकमिति विवक्षितमिति वाच्यम् । व्याप्यत्वविवेचने [3]यावत्स्वाश्रयग्राहकत्वाश्रयाश्रितप्रामाण्यग्राहकत्वसमानाधिकरणस्वाश्रयग्राहकताकत्वस्य पर्यवसितस्य [4]यावत्स्वाश्रयग्राहकग्राह्यतापेक्षया गुरुशरीरतया साध्यत्वेन विवक्षायोगात् । न ह्येतदुद्देश्यं, येन गुरुशरीरमपि साध्यं स्यादिति ।

**यथोक्तेति** । यदि स्वाश्रयग्राह्यत्वे सति ग्राहकग्राह्यत्वमित्युच्येत तदा स्वाश्रयग्राह्यत्वस्यैव तथात्वे शेषवैयर्थ्यं स्यात् । न चेह तथा विशेषणविशेष्यभावः । किं तु स्वाश्रयस्य ग्राहकविशेषणता ग्राहकस्य च ग्राह्यविशेषणतेत्यन्यादृश एव । तत्र च न व्यर्थत्वम् । अत एवात्मनोऽनणुत्वे साध्ये इन्द्रियग्राह्यत्वं तद्ग्राह्य[5]गुणाधिकरणत्वं च हेतुरिति भावः । इतोऽपि न व्यर्थतेत्याह— **साध्ये चेति** । साध्यविशेषणानामुद्देश्यसिद्धि[6]प्रयोजनकतया त्रितयसाधारण्यसिद्धिरिहाप्युद्देश्यत्वादिति भावः । **विशेषणेति** । [7]अप्रामाण्याग्राहकविशेषणेत्यर्थः ।

इति तृतीया विप्रतिपत्तिः

—: * :—

---

1. ख. यथोक्तविशेषणाभावे साध्यवैयर्थ्याभावात्
2. ख. स्वग्राह्यताव्याप्य-
3. ग. ‘ यावत्स्वाश्रय……यथोक्तेति ’ इति ग्रन्थो लुप्तः
4. क. यावत्स्वाश्रयग्राह्यग्राहकत्वापेक्षया
5. क. ख. ॰गुणाधिकारत्वम्
6. क. ख. घ. ॰प्रयोजकतया
7. क. ग. अप्रामाण्यग्राहक-

॥ श्रीः ॥

# अथ चतुर्थी विप्रतिपत्तिः

—: * :—

**स्वाश्रयेण गृह्यत एव न वेति प्रत्येकमेव वा ।**

---

**प्रकाशः**

एकदा त्रिभिर्न विवाद इत्याशयेनाह—स्वाश्रयेणेति । यावत्स्वाश्रयग्राह्यमित्यर्थः । न च [1]यावत्पदवैयर्थ्यम् । योगिज्ञानस्य सर्वविषयत्वेन सर्वप्रकारकत्वेन च सर्वप्रामाण्याश्रयतया तद्ग्राह्यत्वेन सिद्धसाधनतापत्तेः । एवं चैवकारः साध्ये न विवक्षित इति कस्यचिद्व्याख्यानमनादेयम्[2] । इतिशब्दः [3]प्रकारार्थः । तथा चानेन प्रकारेण प्रत्येकमेव वा विप्रतिपत्तिर्बोध्येति भावः ।

ननु मिश्रमते स्वानुव्यवसायेनैव गृह्यत इति विधिकोटिरस्तु । भट्टमते च किंचिदनुमितिग्राह्यत्वं तथा, यावदनुमितिग्राह्यत्वं वा, ज्ञाततालिङ्गकानुमितिग्राह्यत्वं वा । [4]आद्ये सिद्धसाधनम् । द्वितीये असंभवः । तृतीये अप्रसिद्धिरिति चेत्—न ।

---

**न्यायशिखामणिः**

ननु सामान्यप्रत्यासत्तिजन्यज्ञानवत् योगिज्ञानस्य सर्वविषयत्वेऽपि न सर्वप्रामाण्याश्रयतेत्यतो हेत्वन्तरमाह—सर्व[5]प्रकारकत्वेनेति । प्रत्येकमेवेत्यस्य साकाङ्क्षत्वात् आनर्थक्यमाशङ्क्य अनुषङ्गाध्याहाराभ्यां पूरयति—तथा चेति ।

मिश्रमत इति । नन्वनुमिति[6]रूपस्वानुव्यवसायग्राह्यत्वात् सिद्धसाधनम् । न चैवकारेण यावदर्थकेन यावत्स्वाश्रयानुव्यवसायविषयत्वं पर्यवस्यतीति न [7]दोष

---

1. ख. यावत्पदं व्यर्थम्
2. ख. •अनादरणीयम् ।
3. ख. प्रकारार्थे
4. क. नाद्यः, सिद्धसाधनात्
5. ख. प्रकारत्वेनेति
6. ख. रूपस्यानु-
   ग. रूपव्यवसाय-
7. ख. दोषज्ञानपदं अन्यानु-

## प्रकाशः

ज्ञानानुमितिग्राह्यत्वस्य तथात्वात् । तच्चोभयमते[1] प्रसिद्धमेव । न चैवमपि प्रमावानित्यनुमितिग्राह्यत्वेन सिद्धसाधनम् । ज्ञानत्वावच्छिन्नव्यापकतालिङ्गकानुमितिग्राह्यत्वस्य तदर्थत्वात् । ज्ञानवित्तिवेद्यत्वेन तादृशानुमितावपि परैः प्रामाण्यभानस्वीकारादित्याहुः ।

---

## न्यायशिखामणिः

इति वाच्यम् । ज्ञानपदजन्यानुव्यवसायेन, पुरोवर्तिनि बाधावतारकालीनानुव्यवसायेनाप्रामाण्यानुमित्या च प्रामाण्याग्रहात् बाधापत्तेः । न चैवकारस्य क्रियासंगतत्वम्, अनुव्यवसायपदस्य च स्वाश्रयगोचरप्रत्यक्षपरत्वम्, तेन स्वाश्रयगोचरप्रत्यक्षज्ञानविषयत्वं साध्यमिति नानुमित्यादिना सिद्धसाधनमिति वाच्यम् । स्मृत्युपनीतव्यवसाये मानसप्रामाण्य[2]ग्रहाभ्युपगमेन दोषतादवस्थ्यादिति चेत्—न ।

एवकारो न यावदर्थकः, किं तु क्रियान्वयी । स्वानुव्यवसायपदं च स्वाश्रयजन्यप्रत्यक्षपरम् । तथा च स्वाश्रयजन्यप्रत्यक्षविषयत्वं साध्यम् । तेन परमेश्वरज्ञानस्य जन्यत्वाभावादेव न तेनार्थान्तरम् । जन्यत्वेऽपि सामान्यप्रत्यासत्तिजन्य[3]ज्ञानयोगिज्ञानयोस्तज्जन्यत्वाभावान्न दोषः । [4]वक्ष्यमाणमानसप्रामाण्यग्रहस्य च स्मृत्युपनीतव्यवसाय[5]गोचरस्य स्मृतिजन्यत्वेन स्वाश्रयजन्यत्वाभावात् । अप्रसिद्धिरिति । ज्ञाततायाः न्यायमतेऽप्रसिद्धेरिति भावः ।

नन्वेवं व्यापकतानवच्छेदकं प्रामाण्यं कथमनुमितौ भासेतेत्यत आह—ज्ञानवित्तीति । स्ववृत्तिवर्तमानज्ञानग्राहकसामग्र्याः प्रामाण्यग्राहकत्वाभ्युपगमादिति भावः ।

ननु ज्ञानवानहमित्यनुमितौ उपनीतप्रामाण्यस्य न्यायनयेऽपि कदाचिद्भानात् सिद्धसाधनम् । न च ज्ञानत्वावच्छिन्नव्यापकताकयावदनुमितिग्राह्यत्वं साध्यमिति नोक्तदोष इति वाच्यम् । कदाचित् [6]ज्ञानान्तरोपनीतप्रामाण्यस्यापि ज्ञानवानह-

---

1. ख. मतसिद्धमेव
2. ख. ०ग्राह्याभ्युप-
3. ख. 'ज्ञान' इति नास्ति ।
4. क. वक्ष्यमाणस्व प्रामाण्य-
5. ख. ०गोचरस्य तत एव सिद्धसाधनम्
6. ग. मानान्तरोप-

यत्तु योगजधर्मसामान्यलक्षणप्रत्यासत्त्या स्वाश्रयप्रामाण्यं तेनैव गृह्यत इत्यंशतः सिद्धसाधनम्, अतो योगजधर्माद्यजन्यत्वं विशेषणमिति। तन्न। परं प्रत्यसिद्धेः।

---

प्रकाशः

अंशत इति। यद्यपि यावत्पदोपादाने स्वाश्रयीभूतासदादिज्ञानग्राह्यत्वाभावात् तदनुपादाने च योगिज्ञानमादाय प्रामाण्यमात्र एव साध्यपत्त्वात् अंशतः सिद्धसाधनमुभयथापि न संगतम्[1]। तथापि सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्यविशेषे यावत्स्वाश्रयग्राह्यत्वस्य सत्त्वात् अंशत इत्युक्तमिति ध्येयम्। योगजेति। एतच्चोपलक्षणम्, जन्यत्वमपि विशेषणं बोध्यम्।

---

न्यायशिखामणिः

मित्यनुमितौ भानेन तथा तद्ग्रहात्। न च तद्विरोध्यविषयकतादृशयावदनुमितिग्राह्यत्वं विवक्षितमिति वाच्यम्। ज्ञानवानयमिति परवृत्तिज्ञानानुमित्या तद्ग्रहेण दोषतादवस्थ्यात्। न च तद्विरोध्यविषयकयावत्स्ववृत्तिवर्तमानस्वाश्रयग्राहकग्राह्यत्वं साध्यमिति नोक्तदोष इति सांप्रतम्। ज्ञाततालिङ्गकानुमितिवेलायां व्यवसायस्यावर्तमानत्वेन प्रामाण्यमात्रे तादृशज्ञानग्राह्यत्वासिद्धेः। सर्वं ज्ञानं गुण इति शब्दजन्यस्यानुमितिरूपस्य वा ज्ञानस्य स्वात्मवृत्तिवर्तमानस्वविषयकस्य स्वनिष्ठ[2]प्रामाण्याविषयकत्वेन [3]तत्प्रामाण्ये बाधाच्चेति चेत्—न।

तद्विरोध्यविषयकस्ववृत्तिवर्तमानज्ञानगोचरज्ञानत्वावच्छिन्नव्यापकताकयावदनुमितिग्राह्यत्वस्य विवक्षितत्वात्। ज्ञातताजनकव्यवसायस्याविषयत्वेऽपि [4]ज्ञाततासमसमयोत्पन्नस्य व्यवसायान्तरस्य तदनुमितिविषयत्वे विरोधाभावात् न प्रामाण्यमात्रे बाधः। [5]सर्वं ज्ञानं गुण इत्यनुमितेः ज्ञानत्वावच्छिन्नव्यापकताकत्वाभावेन तद्ग्राह्यत्वेऽपि ज्ञानवानहमित्यनुमानेन तादृशेन तत्प्रामाण्यस्य ग्रहान्नांशतो बाध इति दिक्।

---

1. ख. °उभयथाप्यसंगतम्
2. ख. ग. °प्रामाण्याग्राहकत्वेन
3. 'तत्प्रामाण्ये बाधाच्चेति चेन्न······विवक्षितत्वात्' इति ग्रन्थस्त्रुटितः।
4. ख. ज्ञातसमयोत्पन्नस्य
5. ख. घ. सर्वज्ञानं

**प्रामाण्यमात्रपक्षत्वे प्रामाण्यं स्वाश्रयेण गृह्यत एवेत्युद्देश्यप्रतीतेरसिद्धेश्च नांशतः सिद्धसाधनम् ।**

---

**प्रकाशः**

ननु कथं तर्हि अंशतः सिद्धसाधनोद्धार इत्यत आह—**प्रामाण्यमात्रेति** । पक्षतावच्छेदकनानात्व एव तस्य [1]दोषत्वमिति भावः । वस्तुतस्तस्य पक्षबहिर्भाव एवेति नोक्तदोष इति ध्येयम् ।

---

**न्यायशिखामणिः**

**तथापीति** । ननु सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्यमेवासिद्धम् । तद्धि न सर्वप्रकारवति सर्वप्रकारकत्वम्; प्रकारभेदेन प्रामाण्यभेदात् सर्वप्रकाराणामेकत्रासत्त्वाच्च । नापि सर्वविषयत्ववति तत्प्रकारकत्वं, [2]सर्वप्रकारत्ववति तत्प्रकारकत्वं वा । तस्य सर्वप्रकारकं सर्वविशेष्यकमीश्वरज्ञानमिति शब्दजन्यज्ञानसाधारण्यादिति चेत्—न ।

असदाद्यनवगतव्यक्तिविशेषघटितप्रामाण्यं सर्वविषयकज्ञानमात्रवृत्ति । न चेदं तत्तदभिमानिदेवताज्ञानसाधारणम्, तादृशदेवतासद्भावे प्रमाणाभावात् । 'मृदब्रवीत् आपोऽब्रुवन्' इत्यादिश्रुतेः 'शृणोत ग्रावाणः' इत्यादिवदुपचरितार्थत्वादिति ।

नन्वेवमपीश्वरज्ञानमादाय सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्ये अंशतः सिद्धसाधनमित्यत आह—**एतच्चेति** । तथा च योगजधर्माद्यजन्यज्ञानप्रामाण्यं पक्ष इति विवक्षितम्, न तु साध्ये तत्प्रवेशः । तथा सति तत्र योगज[3]धर्माद्यजन्यत्वघटितसाध्याभावेनांशतो बाधात् ।

ननु तावता सिद्धसाधनोद्धारेऽपि क्वचित्पक्षे साध्यसिद्धिमात्रेणांशतः सिद्धसाधनं दुर्वारमित्याशङ्क्य संप्रदायमते तथात्वेऽपि नवीनमते तन्न दोष इत्याशयवानाह—**पक्षतेति** । न चैवमपि प्रामाण्यत्वसामानाधिकरण्येन [4]साध्यसिद्धौ सिद्धसाधनमिति वाच्यम् । सर्वप्रामाण्यत्वस्यैव पक्षतावच्छेदकत्वादिति भावः ।

---

1. ख. दोषत्वादिति
2. क. सर्वप्रकारत्ववति
   घ. 'सर्वप्रकारकत्ववति तत्प्रकारकत्वं वा' इति ग्रन्थो नास्ति ।
3. ख. ग. घ. धर्माजन्य-
4. ख. ग. घ. साध्यसिद्धेः

न्यायशिखामणिः

नन्वेवमपि निषेधे अंशतो बाधः। किं [1]चास्यापि पूर्वविप्रतिपत्तौ [2]सर्वत्र पक्षे मुरारिभट्टयोः प्रत्येकविप्रतिपत्तौ तस्य स्वाश्रयजन्यप्रत्यक्षविषयत्वाभावात् ज्ञानत्वावच्छिन्नानुमितिग्राह्यत्वाभावाच्च बाधः। किं चास्यापि विप्रतिपत्तौ पक्षत्वे वक्ष्यमाणपरतस्त्वानुमानेऽपि पक्षत्वापत्तौ तत्र संशयघटित[3]हेतोरसिद्धिः स्यादित्यरुचेराह—वस्तुत इति। तथा चासर्वविषयकज्ञानवृत्तिप्रामाण्यमेव[4] पक्ष इति भावः।

इति चतुर्थी विप्रतिपत्तिः

—:*:—

1. ख. चास्यापूर्व
2. ख. 'सर्वत्रपक्षे······किं चास्यापि विप्रतिपत्तौ' इति ग्रन्थः त्रुटितः। घ. सर्वत्र पक्षत्वे
3. ख. °हेतोर्न सिद्धिः
4. ख. ग. घ. 'एव' नास्ति।

॥ श्रीः ॥

# अथ पञ्चमी विप्रतिपत्तिः

—: *: —

यद्वा घटोऽयमिति ज्ञानप्रामाण्यम् एतज्ज्ञानग्राह्यं न वा, एतज्ज्ञानग्राहकमात्रग्राह्यं न वेति ।

इति पञ्चमी विप्रतिपत्तिः

—: * :—

## अथ पूर्वपक्षः

तत्र यद्यपि विशेष्यावृत्त्यप्रकारकत्वमगृहीतग्राहित्वं वा, सर्वधीयथार्थत्वपक्षेऽनुभवत्वजातेरभावेन स्मरणान्यज्ञानत्वं विशिष्टज्ञानत्वं वा प्रामाण्यं स्वस्य न तेनैव न वा अनुव्यवसायेन ग्रहणयोग्यम् , विशेष्यावृत्त्यप्रकारकत्वादेर्विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वात् । नापि

### प्रकाशः

एदज्ज्ञानग्राहकमात्रेति । अत्र मात्रपदं [1]कृत्स्नार्थकम् । ग्राहकपदं च पूर्ववद्व्याख्येयम् । विशिष्टेति । अगृहीतासंसर्गधर्म[2]धर्मिविषयकै*ज्ञानत्वमित्यर्थः ।

### न्यायशिखामणिः

ननु मात्रपदस्य कृत्स्नार्थपरतया सिद्धसाधनाभावेऽपि ज्ञानपदादिना प्रामाण्याग्रहात् बाध इत्यत आह—ग्राहकमिति । [ ग्राहकपदमिति ] ।

[3]ननु निष्कम्पप्रवृत्त्यङ्गमेव प्रामाण्यं पक्ष इति प्रतिपादयितुं व्यवहारोपयोगिप्रामाण्यस्य पक्षत्वं [4]निराकर्तव्यम् । तत्र तदुपयोगि किमित्याकाङ्क्षायां यद्यपीत्यत्र [5]विशेष्यावृत्त्यप्रकारकत्वं तदित्युक्तम् । तदयुक्तम् । स्मृतावपि प्रामाण्यव्यवहारप्रसङ्गादित्यरुचेरगृहीत[6]ग्राहित्वम् । तदप्यगृहीतपदेन ज्ञानानुपलक्षितोक्तौ सर्वानुभवस्यापि कदाचित् [7]ज्ञानविषयविषयत्वात्; [8]ज्ञानाविशिष्टत्वाभिधाने स्मृतिसाधा-

1. ख. कृत्स्नार्थपरम्
2. ख. ०धर्मिगोचरैक-
3. क. 'ननु' नास्ति ।
4. क. निराकर्तुं तत्र ग. निराकार्यम्
5. ख. विशेष्यवृत्ति
6. ख. ०ग्राह्यत्वम्
7. ग. ज्ञानविषयत्वात्
8. क. ज्ञानाविशेषितत्वा-

**ज्ञानातीन्द्रियत्वे ज्ञानानुमित्या तद् गृह्यते, ज्ञानमात्रलिङ्गस्य प्राकट्यादेस्त-द्व्यभिचारात्। नापि प्रमाहितज्ञाततताविशेषात्, तस्य प्रथमं दुर्निरूपत्वाच्च। अन्यथा अप्रमाहितज्ञाततया अप्रामाण्यस्यापि स्वतो ग्रहापत्तिरिति।**

---

**प्रकाशः**

**विशेष्यावृत्त्यप्रकारकत्वादेर्विशेषणस्येति।** यद्यपि न विशेषणज्ञानं तन्मते हेतुः, तथापि विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानं हेतुरित्यभिप्रायेणेद-मित्याहुः।

**तस्येति।** ननु ज्ञातताविशेषस्य [1]प्रथमं दुर्निरूपत्वे वक्ष्यमाणमपि प्रामाण्यं कथं भट्टमते ग्राह्यमिति चेत्, अनुव्यवसायस्य हि घटमहं जानामीत्येवमाकारत्वं सर्वसिद्धम्। [2]स्वप्रकाशेनान्यथा वेति [3]प्रकारे विवादः। अत्र चाहं ज्ञानवान् ज्ञाततावत्त्वात् इति वा घटत्वप्रकारकज्ञानवान् घटत्वप्रकारकज्ञाततावत्त्वात् इति वा जायमानानुमितिर्ज्ञानविषया भवन्ती ज्ञानविषयमप्यवगाहमाना धर्मधर्मि[4]वत्तद्वैशि-ष्ट्यमपि विषयीकरोति, ज्ञानविषयत्वाविशेषात्। तदिदमाह—**व्यवसायरूपेति।**

---

**न्यायशिखामणिः**

रण्याद[5]सगतमित्यपरितोषादनुभवत्वं प्रामाण्यमुक्तम्। तच्च न जातिः, न्यायमते परोक्षत्वादिना सांकर्यात्, गुरुमते गुणगतजातेरनङ्गीकारात्। किंतु स्मरणान्य-ज्ञानत्वम्। तदपि न भ्रमसाधारणम्, सर्वज्ञानानां यथार्थत्वादित्यभिधाय निर्विकल्पकातिव्याप्तत्वान्नेदमपि व्यवहारप्रयोजकमित्यस्वरसात् विशिष्टज्ञानत्वं प्रामाण्यमित्युक्तम्। [6]तन्न युक्तम्। विशेषणज्ञानजन्यत्वरूपस्य विशिष्टज्ञानत्वस्य तन्मते [7]अप्रसिद्धेः। वैशिष्ट्यगोचरज्ञानत्वलक्षणस्य भ्रमसाधारण्यादित्यत आह— **अगृहीतेति।**

ननु तद्वति तत्प्रकारकत्वमपि प्रामाण्यं न पक्षः। [8]भट्टमते ज्ञानानुमित्य-ग्राह्यत्वेन बाधात्। तत्र न ज्ञातता लिङ्गं, व्यभिचारात्। नापि तद्विशेषः, तस्य प्रथमं दुर्निरूपत्वादिति शङ्कते—**नन्विति।**

---

1. ख. 'प्रथमं' नास्ति।
2. ख. स्वप्रकाशत्वेन
3. ख. 'प्रकारे' नास्ति
4. ख. °तदुभयवैशिष्ट्य-
5. क. °असंगतिरित्य-
6. क. तदयुक्तम्
7. ख. तत्प्रसिद्धेः
8. ख. भट्टाभिमतज्ञानानु-

### प्रकाशः

न च प्रत्यक्षेणैव [1]ज्ञानस्य ग्रहे विषयस्य [2]ज्ञानवित्तिवेद्यत्वमिति वाच्यम् । परैः [3]स्ववृत्तिवर्तमानज्ञानग्रह एव तथाभ्युपगमात् । ज्ञाननित्यत्ववच्च व्यापकतानवच्छेदकस्यापि विषयस्य भानम् । न च ज्ञाततावत्त्वं समवायेनासिद्धम्, जनकतया व्यभिचारीति वाच्यम् । तदीयतानियामकस्य संबन्धान्तरस्यैवाभ्युपगमात् । अन्यथा [4]नियताधिकरणज्ञानासिद्धिप्रसङ्गादित्याहुः ।

---

### न्यायशिखामणिः

न हि प्रमात्वं साध्यतावच्छेदकतयानुमितिविषयः, येन ज्ञाततया व्यभिचारः स्यात् । किं तु ज्ञानत्वं तत्प्रकारकज्ञानत्वं वा तदवच्छेदकम् । [5]ज्ञाननित्यत्ववच्च प्रामाण्यमनुमितिविषयः इत्याशयेनाह—स्ववृत्तीति । न च [6]स्ववृत्तिवर्तमानज्ञानदशायां ज्ञानवानसीति वाक्यात् ज्ञानग्रहे विषयभानं स्यादिति वाच्यम् । पदज्ञानपदार्थोपस्थितितात्पर्यज्ञानादिना ज्ञानस्य विनष्टत्वेन वर्तमानतद्ग्राहकत्वाभावादिति भावः ।

[7]ननु मत्वर्थः किं तादात्म्यम् उत जनकत्वम् । [8]आद्यं आत्मनि [9]ज्ञाततायास्तादात्म्यानभ्युपगमान्निराकृत्य द्वितीयमदृष्टव्यभिचारेण दूषयति—[10]जनकतयेति । स्वरूपसंबन्ध[11]विशेष एव मत्वर्थ इति परिहरति—[12]तदीयतेति । नियतेति । [13]घटादिगतज्ञाततया देवदत्तीयज्ञानमनुमीयते न यज्ञदत्तीयमिति व्यवस्था न स्यादित्यर्थः ।

ननु यथार्थव्यवहारकल्प्यः संबन्धः यथाधिकरणाभावयोः । न चेह तथा व्यवहारः । ज्ञातो घट इत्यस्यात्मविषयत्वाभावात् । न चोक्तव्यवस्थानुपपत्त्या तत्कल्पनम् । यदीयज्ञान[14]जन्या घटादिगतज्ञातता तया तदीयज्ञानस्यैवानुमानमिति व्यवस्थोपपत्तेः । न च ज्ञानघटितज्ञातता संबन्धस्य प्रथमं दुर्निरूपत्वात्

---

1. ख. ज्ञानग्रहे
2. ख ज्ञानवृत्ति-
3. क. सुवृत्ति-
4. ख. नियताधिकरणक-
5. क. ज्ञाने नित्यत्व-
6. क स्ववर्तमान-
7. क. 'ननु' नास्ति ।
8. क. ख. आद्ये
9. क. ज्ञाततया तादात्म्य- ख. जनकतायास्तादात्म्य-
10. ख. जनकतदीयेति ।
11. क. विषय-
12. ख. तदीयेति-
13. क. घटादिघटित-
14. क. ॰जन्यत्वं घटादिज्ञाततायास्तया

तथापि तद्वति तत्प्रकारकज्ञानत्वं तद्वति तद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्यम् । तन्निश्चयादेव निष्कम्पव्यवहारात्, लाघवात् । नान्यत् गौरवात् ।

---

### प्रकाशः

केचित्तु घटो घटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्त्वादित्येवानुमानमित्याहुः ।

ननु निर्विकल्पकाव्याप्तं स्मृतावतिव्याप्तं चेदमित्यत आह—तन्निश्चयादेवेति । प्रवृत्त्युपयोगिप्रामाण्यं प्रकृते विचारणीयमिति भावः ।

---

### न्यायशिखामणिः

स्वरूपसंबन्ध एव ज्ञाततावत्त्वादित्यत्र मत्वर्थो [1]वाच्य इति वाच्यम् । ज्ञानज्ञाततयोर्जन्यजनकभावस्य विषयपक्षकज्ञानानुमानानुकूलतर्कत्वेनोपस्थितस्यात्मनश्च मानान्तरोपनीतस्य तत्र [2]भानसंभवेन ज्ञातताजनकात्मवृत्तिज्ञानविषयत्वे घटे भासमाने ज्ञातताजनकघटविषयकज्ञानवत्त्वस्यात्मन्यप्यवगतत्वात् । न चैवमात्मविषयकज्ञानानुमानवैयर्थ्यम् । तद्विशेष्यकज्ञानानुमितेरनन्यसाध्यत्वात् । न च विषयपक्षकानुमानात् पूर्वमेवात्मनि ज्ञानानुमानमित्यत्र नियामकमस्ति, [3]येन मत्वर्थस्वरूपसंबन्ध एव कल्प्येतेत्यपरितोषात् मतान्तरमाह - केचिदिति ।

अत्र च मत्वर्थस्तादात्म्यम्, घटादौ ज्ञाततायास्तदङ्गीकारात् । न चैतन्मते घटज्ञानवानहमित्यनुभवो न स्यादिति वाच्यम् । एतदनुमानानन्तरं अहं घटज्ञानवानित्यनुमानस्य स्वीकारादिति भावः ।

ननु तत्प्रकारकत्वमित्यत्र [4]प्रकारत्वघटकभासमानत्वप्रवेशात् गौरवम्, संयोगेन [5]तद्वति समवायावगाहिज्ञानेऽतिव्याप्तिश्चेत्यस्वरसान्मूले तद्वैशिष्ट्यज्ञानत्वमित्युक्तम् । तच्च [6]तद्वैशिष्ट्यवति तद्वैशिष्ट्यज्ञानत्वम् । तदप्यव्याप्त्यतिव्याप्तिभ्यां न युक्तमिति शङ्कते—नन्विति ।

---

1. ख. व्यवसायस्येति
2. घ. 'मान' नास्ति ।
3. ख. येन स्वार्थ
4. ख. घ. प्रकारकत्व-
5. ख. तद्वितीयसम-
6. ख. 'तद्वैशिष्ट्यवति' इति नास्ति ।

तच्च ज्ञानग्राहकसामग्रीग्राह्यमेव। तथा हि विशेष्ये तद्धर्मवत्त्वं तद्धर्मप्रकारकत्वं च व्यवसायस्यानुव्यवसायेनानुमित्या स्वप्रकाशेन वा गृह्यते। विषयनिरूप्यं हि ज्ञानम्। अतो ज्ञानवित्तिवेद्यो विषय इति व्यवसाये भासमाने धर्मधर्मिवत्तद्वैशिष्ट्यमपि विषयः। व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्।

---

**प्रकाशः**

व्यवसायेति। व्यवसायविषयकत्वस्य नियामकस्य तुल्यत्वादित्यर्थः।

---

**न्यायशिखामणिः**

ननु निर्विकल्पकस्यासंग्राह्यत्वात् तदव्याप्तिर्न दोषाय। अत एव वक्ष्यति—'निर्विकल्पकं प्रमाप्रमा[1]बहिर्भूतमेव व्यवहारानङ्गत्वात्' इत्यस्वरसादाह—स्मृताविति। न ह्यत्र [2]व्यवहाराय प्रामाण्यनिर्वचनम्, येनोक्तदोषः स्यात्। किं तु निष्कम्पप्रवृत्त्यर्थम्। तथा च स्मृतेस्तथात्वेन संग्राह्यत्वान्नोक्तदोष इत्याशयेनाह—प्रवृत्तीति।

तथा हीति मणेरेषोऽर्थः। ननु प्रामाण्यमुक्तसाध्यवत् ज्ञानत्वप्रामाण्ये इति [3]धर्मिविशेष्यत्वात् [4]ज्ञानत्ववत् इत्यनुमानं तच्चेत्यत्राभिप्रेतम्। तदनुपपन्नम्। ग्राहकसामग्रीग्राह्यत्वस्योपाधित्वात्। न च पक्षे साधनव्यापकता, बहिरसमर्थेन मनसा ज्ञानवानित्यनुमानेन च [5]व्यापकतानवच्छेदकस्य विषयघटितप्रामाण्यस्य ग्रहणायोगात्। स्वप्रकाशस्य च [6]स्वधर्मग्रहे सामर्थ्याभावात्। न च पक्षेतरता, विशेष्यवृत्त्यप्रकारकत्वादेर्विपक्षस्यापि व्यावर्तनादित्याशङ्क्याह—तथा हीति। अत्र विशेष्ये तद्धर्मवत्त्वमनुव्यवसायेनानुमित्या वा गृह्यते, तत्प्रकारकत्वं स्वप्रकाशेन गृह्यत इत्येव विवक्षितम्, न तु विशिष्टम्। [7]तत्प्रकारकत्वस्यानुव्यवसायग्राह्यत्वेन तत्र नैयायिकानां तद्ग्राहकसामग्रीसत्त्वराहित्यशङ्काविरहात्, [8]तद्धर्मवैशिष्ट्ये च व्यवसायग्राह्यत्वाभ्युपगमात् तद्वैशिष्ट्यं विषय इत्यग्रिमग्रन्थस्वरसाच्च।

---

1. ग. ०बहिर्गतमेव
2. ख. व्यवहारप्रामाण्यानिर्वचनम्
3. क. धर्मिविशेष्यकत्वात्
4. ग. ज्ञानवत्
5. ग. व्यापकतावच्छेदकस्य
6. क. 'स्व' नास्ति।
7. ग. तत्प्रकारकस्यानु-
8. ख. तद्धर्मवैशिष्ट्ये

संबन्धितावच्छेदकरूपवत्तया ज्ञायमाने संबन्धिनि ससंबन्धिकपदार्थनिरूपणमित्यनुव्यवसायस्य रजतत्वावच्छिन्नत्वेन पुरोवर्तिविषयत्वाच्च ।

---

**प्रकाशः**

ननु, 'विषयनिरूप्यं हि ज्ञानम्, न तु यावद्विषयनिरूप्यं गौरवात्' इति वक्ष्यते । तथा च वैशिष्ट्यविषयतावश्यकत्वे मानाभावादित्यरुचेर्नियामकान्तरमाह

---

**न्यायशिखामणिः**

तत्र व्यववसाय[1]स्तत्प्रकारकत्वग्राहकः, [2]स्ववृत्तिवर्तमानज्ञानग्राहकत्वात् परसमवानुव्यवसायवत्, स्वप्रकाशत्वसाधनाच्च न हेत्वसिद्धिः । अत एव व्यवसायादे प्रयोक्तव्ये स्वप्रकाशपदं [3]प्रायुङ्क्त । तथा च गुरुमते उपाधेः साधनव्यापकत्वमित्यभिप्रेत्य मिश्रमतेऽनुव्यवसायस्य वैशिष्ट्यग्राहकत्वे नियामकमाह—**विषयनिरूप्यमिति ।**

ननु व्यवसायेत्यादिना ग्राहकसामग्रीसत्त्वे भट्टमुरारिसाधारणनियामकमुक्तम् । तदचारु । [4]परमते ज्ञानस्याप्रत्यासत्तित्वात् । भट्टमतेऽनुमितौ प्रत्यक्षजनकसंनिकर्षानुपयोगाच्चेत्यत आह—व्यवसायेति । धर्मधर्मिणोर्ग्राह्यव्यापकतानवच्छेदकयोरपि मानसज्ञानानुमितिविषयत्वे व्यवसायरूपमानान्तरोपनीतत्वं यत्प्रयोजकं तस्य वैशिष्ट्येऽपि तुल्यत्वात्तदपि [5]स्वातन्त्र्येण तद्विषय इत्यर्थः ।

न चैवं देवदत्तो घटत्वप्रकारकपुरोवर्तिविशेष्यकज्ञानवानिति [6]शब्दजन्यज्ञाने [7]वैशिष्ट्यस्य स्वातन्त्र्येण [8]भानापत्तिः, तस्य तदीयव्यवसायविषयत्वात्, न [9]च तज्जनकत्वं व्यवसाये विशेषणम्, भट्टमते [10]असिद्धेरिति वाच्यम् । [11]स्ववृत्तिवर्तमानव्यवसायविषयत्वस्य विवक्षितत्वात् ।

---

1. क. ॰तत्प्रकारत्व-
2. ख. 'स्व' नास्ति ।
3. ग. प्रयुक्तम
4. ख. पदमते
5. क. 'स्वातन्त्र्येण' नास्ति ।
6. क. पदजन्य
7. क. तद्वैशिष्ट्यस्यापि
8. क. 'भानापत्तिः, तस्य' नास्ति ।
9. ख. ग. 'च' नास्ति
10. क. अप्रसिद्धेः
11. ख. स्ववृत्तिवर्तिव्यवसाय-

अन्यथा पुरोवर्तिनं रजतं च जानामीति तदाकारः स्यात्, न तु रजतत्वेन पुरोवर्तिनमिति।

अत एवाप्रमापि प्रमेत्येव गृह्यते। अनुव्यवसायस्य भ्रमविषय-वैशिष्ट्यविषयत्वात्। न च न प्रामाण्यं प्रथमतो ज्ञातमिति न तदारोपः

प्रकाशः

—संबन्धितेति। ज्ञानसंबन्धिनि रजते रजतत्वस्यैव संबन्धितावच्छेदकत्वादि-त्यर्थः। अन्यथेति। पुरोवर्ति[1]रजतसमूहालम्बनानुव्यवसायवत् पुरोवर्तिरजतत्व-[2]संबन्धविषयत्वानुल्लेखी एषोऽनुव्यवसायः स्यादित्यर्थः।

न्यायशिखामणिः

ननु [3]परोक्षससंबन्धिकज्ञानस्य [4]संबन्धग्रहेऽपि दर्शनेन निरूपणपदस्य प्रत्यक्षज्ञानपरत्वात् संबन्धितावच्छेदकेत्यत्रोच्यमानं नियामकं मिश्रमत एव। तस्य 'विषयनिरूप्यम्' इत्यादिना तन्मते [5]हेत्वभिधानेन तदाकाङ्क्षायाः शान्तत्वाद्वै-यर्थ्यमाशङ्क्य [6]तत्रापरितुष्यतैव तदभिधानान्न [7]दोष इत्याशयेनाह—नन्विति। ननु वैशिष्ट्यस्यापि विषयतया [8]तन्निरूप्यत्वमपि स्यादित्यत आह—तथा चेति। [9]ननु भातु किंचित्संबन्धितावच्छेदकम्, पुरोवर्तिनि रजतत्वग्रहे किमायातमित्या-शङ्क्य [10]द्रव्यत्वादीनां ज्ञानविषयत्वेनानवच्छेदकत्वात् रजतत्वमेव तदवच्छेदक-मित्यभिप्रेत्याह—ज्ञानेति।

ननु रजतत्वं जानामीत्यनुव्यवसाये [11]रजतत्वत्वं प्रकारः, न च तत् [12]प्रागुपस्थितम्। अतस्तादृशानुव्यवसायापादनासंगतिरित्यत आह—पुरोवर्तीति।

1. ख. °रजतत्व-
2. ख. संबन्धि-
3. ख. परोक्षसंबन्धिक-
4. ख. संबन्धिग्रहेऽपि
   ग. संबन्धस्य ग्रहेऽपि
5. ग. ग. हेतुत्वाभि-
6. क. तत्रापरितुष्येव
7. ग. उक्तदोष
8. ख. 'तत्' नास्ति।
9. क. 'ननु' नास्ति।
10. ख. द्रव्यत्वादीनां
11. क. ग. घ. रजतत्वं
12. क. प्रागनुपस्थितम्

स्यादिति वाच्यम्। प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वेन ज्ञानवित्तिवेद्यत्वात्। अभावप्रतीतौ प्रतियोगित्वाभावत्वयोरिव।

तदभाववति तत्प्रकारकज्ञानत्वमप्रामाण्यं परतो ज्ञायते। तदभाववत्त्वस्य भ्रमानुल्लिखितत्वेनानुव्यवसायाविषयत्वात्। न चैवमनुव्यवसायस्य

## प्रकाशः

अत एवेति। एतच्च गुरुमतमपहाय बोध्यम्। प्रामाण्यस्येति। यत्रापि प्रामाण्यं प्रमीयते तत्रापि नाखण्डस्य तस्यानुव्यवसायादिपूर्वमुपस्थितिः। किं तु व्यवसायोपनीतं तद्वत्त्वमादाय तत्प्रकारकत्वं ज्ञानग्राहकसामग्र्या बोध्यते। तथा तदारोपस्थलेऽपि यद्विशिष्टप्रमाया (व्यवसायस्याखण्डस्य) [मेव यस्याखण्डस्य] प्रथममुपस्थितिरपेक्षणीया तस्यैवारोपेऽपि तदपेक्षेति भावः।

## न्यायशिखामणिः

नन्वेवमप्यनु[1]व्यवसायसामग्री न प्रामाण्यग्राहिका। अप्रामाण्यस्थले सत्यामपि [2]तस्यां प्रामाण्याग्रहे व्यभिचारात्। तथा च तस्य [3]साधनव्यापकत्वतादवस्थ्यमित्याशङ्क्य, बाधावतारे तद्विरोधिग्राहकसामग्र्यसमवहितत्वविरहादेव नान्वयव्यभिचारः। तदनवतारे च [4]तत्रापि प्रामाण्यग्रहान्न दोष इत्याशयवतोक्तम् 'अत एव' इत्यादिना। तदयुक्तम्। गुरुमते अप्रमाया [5]अप्रसिद्धेरित्यत आह—एतच्चेति।

ननु ज्ञातस्यैवारोप इति चोदिते प्रामाण्यस्येत्यादि[6]समाधानमसंगतमित्यत आह—यत्रापीति।

नन्वारोपस्थलेऽपि [7]तद्घटकोपस्थितिमात्रेणाज्ञातमप्यखण्डं बोध्यत [8]इत्ययुक्तम्, ज्ञातस्यैवारोप इति नियमाभ्युपगमविरोधादित्याशङ्क्य, नारोपमात्रे तन्नियमः

1. ख. °व्यवसायादिरूपसा न
   ग. व्यवसायादिरूपसाधनप्रामाण्य-
   घ. व्यवसायादिरूपा सा नाप्रामाण्य-
2. ख. ग. तस्याप्रामाण्य-
3. क. साधनाव्याप्यत्व-
   ख. साधनाव्यापकत्व-
4. ख. तथापि
5. ख. ग. घ. असिद्धे-
6. क. °समाधानं न संगत-
7. क. तद्घटितोप-
8. क. इत्युक्तम्।

यावद्व्यवसायविषयविषयकत्वे भ्रान्तभ्रान्तिज्ञसंकर इति वाच्यम् । बाधानव-तारदशायां तस्येष्टत्वात् । तदवतारे तस्यैव प्रतिबन्धकत्वात् उपनायक-भ्रान्तेरभावाच्च ।

अत एवान्यभ्रान्तिज्ञस्य न भ्रमः। अथ तद्वत्त्वं न धर्मधर्मि-वैशिष्ट्यमात्रम्, किं तु तस्य विशेषणताविशेषः । स च व्यवसाये भासते

---

### प्रकाशः

अभावेति । न ह्यभावे अभावत्वं प्रतियोगिनि वा प्रतियोगित्वमवगम्य तद्विशिष्टधीः, अपि त्वारोपानारोपयोरेकदैवोभयधीरित्यर्थः । बाधानवतारेति । शुक्त्यादौ [1]रजतत्वादिबाधानवतारदशायां रजतादिभ्रमानुव्यवसायस्य भ्रमत्वमिष्ट-मेव । तेनापि शुक्त्यादौ भ्रमोपनीतरजतत्वादिवैशिष्ट्यावगाहनादित्यर्थः । यदा बाधावतारे भ्रान्तेर्विनाश एव जातस्तदा तदभावादेव तत्रानुव्यवसायस्याभावान्न भ्रान्तभ्रान्तिज्ञसंकर इत्याह—उपनायकेति ।

---

### न्यायशिखामणिः

किं तु तद्विशेष इत्याह—यद्विशिष्टेति । ननु प्रतियोगित्वं [2]तत्स्वरूपं भासताम्, अभावत्वं तु द्रव्यादिषट्कभिन्नत्व(रूप)[रूपं]द्रव्यादिप्रतियोग्यनवगमे कथमवगम्यत इति शङ्कां निराचष्टे—उभयधीरिति । अभावत्वमपि तत्स्वरूपमेव । न च स्ववृत्तित्वविरोधः । प्रमेयत्ववदुपपत्तेरिति भावः ।

केचित्तु द्रव्यादिषट्कभिन्नत्वरूपमप्यभावत्वमनन्यगत्या अनुपस्थितमपि प्रकार इत्याहुः ।

ननु भ्रमस्य तदनुव्यवसायस्य च संकरः । भ्रमत्वेनैकरूपत्वं स्यादिति चोदिते तदनुव्यवसायस्य भ्रमत्वाङ्गीकारेण समाधानं न युक्तम् । [3]रजतत्वप्रकारकत्वं प्रति तत्प्रकारकत्वस्य तेन विषयीकरणादित्यत आह—(शुक्तिकादाविति) [शुक्त्या-दाविति] ।

---

1. ख. रजतत्वबाधः
2. ग. 'तत्स्वरूपं······अभावत्वमपि' इति ग्रन्थस्त्रुटितः ।
3. क. रजतत्वप्रकारकत्वस्य तेन

नानुव्यवसाये, मनसो बहिरस्वातन्त्र्यादिति चेत्—न। व्यवसायोपनीतत्वेन विशेषणविशेष्ययोरिव विशेषणताविशेषस्यापि तद्विषयत्वात्, विशेषणताया निराकरिष्यमाणत्वाच्च।

एतेनास्वप्रकाशे न स्वतः प्रामाण्यग्रहः, धर्म्यग्रहे तद्धर्माग्रहात्। शब्दगन्धवद्योग्यत्वात्तद्ग्रहेऽपि ज्ञानं प्रमाणमिति धीर्न स्यात्। स्वप्रका

---

प्रकाशः

अत एवेति। तस्यान्यभ्रान्तिविषये बाधावतारादेवेत्यर्थः। नैयायिकैकदेशी शङ्कते—अथेति। विशेषणता[1]विशेषो विषयताख्य [2]इत्येके। समूहालम्बनव्यावृत्तविशिष्टज्ञान(प्रयोजनमित्यन्ये) [प्रयोजक इत्यन्ये]।

एतेनेति। विषयनिरूप्यं हि ज्ञानमित्यादिनेत्यर्थः। स्वधर्मग्रहे त्विषय-[3]विशेषाङ्कितधर्मग्रहे। परेति। वस्तुगत्या यत् भ्रमव्यावृत्तं प्रामाण्यं [4]तल्लिङ्गेन

---

न्यायशिखामणिः

[5]नन्वानुमानिकबाधेऽपि शङ्के पीतत्वभ्रमानुवृत्तेस्तत्काले तदभावाभिधानायोगमाशङ्क्य तस्य प्रत्यक्षबाधपरत्वान्न दोष इत्याह—यदेति।

अतःशब्देन प्रथमहेतुपरामर्शे न भ्रान्तत्वमित्यसंगतम्। तृतीयहेतुपरामर्शश्च न संगच्छते। परज्ञानस्य [6]परं प्रत्यनुपनायकत्वेन उपनायकेति विशेषणायोगात्। अतो द्वितीयहेतुः [7]परामृश्यत इत्याह—तस्येति। विषयतेति। अतिरिक्तविषयतेत्यर्थः। समूहेति। समूहालम्बनाविषयो विशिष्टज्ञानविषयस्वरूपसंबन्धविशेष इत्यर्थः। एतादृशसंबन्धेनैव रूपी घट इति ज्ञानोपपत्तौ [8]समवायासिद्धिप्रसङ्गः, तस्य निराकरिष्यमाण[9]विषयतापेक्षया भिन्नत्वेन 'निराकरिष्यमाणत्वा'दित्यग्रिमदूषणासंगतिश्चेत्यस्वरसं सूचयति—[10]अन्य इति।

---

1. क. 'विशेषः' नास्ति
2. ख. इत्यर्थं इत्येके।
3. ख. °विशेषालिङ्गित-
4. ख. न लिङ्गेन
5. ख. नन्वानुमानीयक-
6. ख. परत्वं
7. ग. परमत इत्याह
8. ख. समवायसिद्धि-
9. ख. °विषयतानुपेक्षया
10. ख. अन्यत इति।

शेऽपि स्वमात्रसाक्षिणः स्वधर्मग्रहेऽसामर्थ्यात् । सामर्थ्ये वा अप्रामाण्यमपि गृह्णीयात् । परप्रकाशे लिङ्गेन मनसा वा जायमानं ज्ञानं न भ्रमव्यावृत्तं प्रामाण्यं गृह्णीयात् व्यभिचारात् ।

न च यत्र यदस्ति तत्र तद्गृह्यते, अप्रामाण्यस्यापि स्वतो ग्रहापत्तेः, अनुव्यवसायस्यानुमितेर्वा विषयाजन्यत्वाच्चेति निरस्तम् ।

---

प्रकाशः

मनसा वा जायमानं ज्ञानं न गृह्णीयात् । प्रमायामेव तद्ग्रहो न भ्रम इति न स्यात् । सामग्रीसाम्यादिति भावः । ज्ञायमानमिति पाठे न गृह्णीयात् न ग्राहयेदित्यर्थः । व्यभिचारादिति । भ्रमरूपे [1]ज्ञाने ज्ञायमानेऽपि तेन तदग्रहादित्यर्थः ।

---

न्यायशिखामणिः

अतिरिक्तविषयतानिरासस्याव्यवहितत्वस्य प्रकृते हेतुत्वाभावात् एतच्छब्देन योग्यतया व्यवहितोऽपि परामृश्यत इत्याह—विषयेति । ननु प्रामाण्यग्राहकत्वाभिमतेन तदाश्रयज्ञानमपि [2]गृह्यते उत न । अन्त्ये स्वस्य ग्राह्यप्रामाण्याश्रयज्ञानस्याप्रकाशे तद्धर्मप्रामाण्यस्यापि ग्रहानुपपत्तिः, घटव्यक्त्यग्रहे घटत्वाद्यग्रहात् । [3]शब्दगन्धादिवद्योग्यत्वात्तन्मात्रग्रहस्वीकारे च ज्ञानं प्रमाणमित्यनुभव[4]विरोधः । आद्येऽपि ज्ञानस्य स्वेन प्रकाशनम् अनुव्यवसायादिना वा । आद्ये स्वतो ज्ञानस्य प्रकाशेऽपि प्रामाण्याग्रहतादवस्थ्यम् । स्वमात्रप्रकाशकस्य[5] तस्य स्वधर्मग्रहणे सामर्थ्याभावादित्युक्तम् [6]अस्वप्रकाश इत्यादिना । तदयुक्तम् । ज्ञानत्वस्याप्यग्रहप्रसङ्गादित्यत आह—विषयविशेषेति । अन्त्ये भ्रमव्यावृत्तं प्रामाण्यमित्युक्तं परप्रकाश इत्यादिना । तदसंगतम् । तद्वद्विशेष्यकत्वस्य भ्रमव्यावृतत्वादित्याशङ्क्य नञः क्रियान्वयित्वात् [7]नोक्तदोष इत्याह—वस्तुगत्येति ।

ननु [8]प्रामाण्यग्रहमात्रनिषेधपरतायां तत्र भ्रमव्यावृत्तत्वविशेषणं व्यर्थमित्यस्वरसात् तत् क्रियाविशेषणमित्याह—प्रमायामेवेति । सामग्रीति । तथा च

---

1. ख. 'ज्ञाने' इति नास्ति ।
2. ख. ग्राह्यते
3. क. शब्दगन्धवत्
4. क. °विरोधात्
5. क. °प्रकाशस्य
6. ख. स्वप्रकाश
7. क. ख. घ. न दोषः
8. क. प्रामाण्यमात्र°

तद्वति तत्प्रकारकज्ञानत्वं तद्वति तद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्यं व्यवसायस्येति स्वेनानुव्यवसायेनानुमित्या वा तद्ग्रहात्, तद्विषयत्वस्य तत्प्रकारकत्वस्य च ज्ञानग्राहकसामग्रीग्राह्यत्वात्। यदि च प्रामाण्यं परतो

---

**प्रकाशः**

**अप्रामाण्यस्येति।** अप्रमाग्रह इति शेषः। तस्य तत्र वर्तमानत्वेन प्रामाण्यतुल्यत्वादित्यर्थः। **अनुव्यवसायस्येति।** भ्रमे हि रजतत्वप्रकारकत्वसत्त्वेऽपि शुक्तौ रजतत्ववत्त्वाभावेन प्रामाण्यासत्त्वम्। तथा च पुरोवर्तिनि तद्वत्त्वाभावेन भ्रमे न प्रामाण्यग्रह इति तवाभिमतम्। तच्च न संभवति। [1]अनुव्यवसायस्य व्यवसायविषयीभूत[2]तद्वत्त्वाजन्यत्वात्। अतीतादिगोचरज्ञानानुव्यवसाये तथा [3]दर्शनादित्यर्थः।

**तद्वतीति।** तथा च परप्रकाशे [4]बाधाद्यनवतारे अनुव्यवसायादिना भ्रमेऽपि प्रामाण्यस्यैव ग्रहान्नोक्तव्यभिचारः। स्वप्रकाशे स्वस्य प्रामाण्यग्रहे

---

**न्यायशिखामणिः**

भ्रमस्थलेऽपि तत्सामग्रीसत्त्वमस्मिन्पक्षे व्यभिचारशब्दार्थ इति भावः। ज्ञायमानमिति पाठे व्यवसायस्य प्रामाण्याविषयत्वादन्यथा व्याचष्टे—[5]**न ग्राहयेदिति।** भ्रमव्यावृत्तत्वस्य प्रामाण्यविशेषणत्वपक्षे व्यभिचारशब्दस्योक्तव्यभिचारपरत्वायोगात् तमन्यथा व्याख्यातुं प्रतीकमादत्ते—**व्यभिचारादिति।**

[6]नन्वनुव्यवसायस्य व्यवसायलक्षणविषयजन्यत्वात् विषयाजन्यत्वहेतोरसिद्धिः। न च विषयपदं व्यवसायविषयीभूततद्वत्त्वपरमिति नासिद्धिरिति वाच्यम्। तस्य तत्परत्वे नियामकाभावादित्याशङ्क्य तत्र चोदकतात्पर्यं नियामकमित्याह—**भ्रमे हीति।**

ननु प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वमुक्तमयुक्तम्। तस्या एव भ्रमस्थले व्यभिचारेण परप्रकाशपक्षस्य दूषितत्वात्। स्वप्रकाशपक्षस्य च [7]स्वधर्मग्रहे

---

1. ख. अनुव्यवसायस्यानुमितेर्वा व्यव-
2. ख. °तद्वत्त्वाद्यजन्यत्वात्
3. ख. अदर्शनादित्यर्थः
4. ख. बाधानवतारे
5. क. 'न' नास्ति।
6. ख. 'नन्वनु-' इति नास्ति।
7. ग. घ. स्वग्रहे

ज्ञायेत तदा प्रामाण्यज्ञानेऽपि तदनुमापकलिङ्गपक्षव्याप्त्यादिज्ञानेषु च स्वविषयनिश्चयार्थं प्रामाण्यस्य परतो ज्ञेयत्वे फलमुखी कारणमुखी चानवस्था स्यादिति प्रामाण्यं न ज्ञायेतैवेति परिशेषादपि स्वतः प्रामाण्यग्रहः ॥

इति पूर्वः पक्षः

—: × :—

प्रकाशः

सामर्थ्येऽप्यप्रामाण्यस्य स्वरूपप्रकारविषयमात्राघटितत्वेन न [1]तद्ग्राहकसामर्थ्यप्रसङ्ग इति भावः । फलम् प्रामाण्यज्ञानम् । कारणं तु जनकलिङ्गादिज्ञानम् ।

न्यायशिखामणिः

सामर्थ्याभावेन निराकृतत्वादित्याशङ्क्य परप्रकाशपक्षोक्तदूषणम् 'अत एव' इति मूलोक्तेन [2]परिहृत्य स्वप्रकाशोक्तदूषणस्य मूलेऽनुद्धारात् तत् स्वयमुद्धरति— स्वप्रकाश इति । घटत्ववति घटत्वप्रकारकज्ञानत्वं स्वतोग्राह्यं, परतोऽग्राह्यत्वात् यदेवं तदेवम् यथा तत्प्रकारकत्वम्, विपक्षे चाग्राह्यत्वापत्तिः बाधिका । [3]ततश्चेदमप्यनुमानं प्रामाण्यस्वतस्त्वे प्रमाणम् । तच्च परिशेषादपीति मणावभिप्रेतम् ।

तत्र 'यदि प्रमाण्यं परतो ज्ञायत' इत्यादिना हेत्वसिद्धिर्निराकृता । तत्र फलस्यापि स्वकार्यापेक्षया कारणत्वात् फलमुखी कारणमुखी चेति भेदवर्णनमसंगतमित्यत आह—फलमिति । तथा च प्रामाण्यस्य परतो ज्ञेयत्वे प्रामाण्यज्ञानमुखी तज्जनकलिङ्गज्ञानमुखी चानवस्था स्यादित्यर्थः ।

इति पूर्वपक्षः

—: * :—

1. क. तद्ग्रहे सामर्थ्य-
2. क. परिहारात्
3. ख. तदप्यनुमानम्
क. ततश्चेदमनुमानम्

॥ श्रीः ॥

# अथ सिद्धान्तः

—: * :—

सिद्धान्तस्तु—प्रामाण्यस्य स्वतो ग्रहेऽनभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात्, ज्ञानग्रहे प्रामाण्यनिश्चयात्। अनिश्चये वा न स्वतः प्रामाण्यग्रहः। ज्ञानाग्रहे धर्मिज्ञानाभावान्न संशयः।

ननु कोटिस्मरणादिना संशयपूर्वक्षणे व्यवसायविनाशान्न तद्विशेष्यको मानसः संशय इति चेत्—न। ज्ञानोपनीते व्यवसाये प्रामाण्यसंशयात्।

---

### प्रकाशः

नन्विति। यद्यपि कोटिस्मरणाव्यवहितोत्तरकाले संशयोत्पत्तेस्तदा तस्य [1]न तन्नाशकत्वम्; तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणा धर्मिज्ञानमेवोक्तमित्येके।

---

### न्यायशिखामणिः

संशयात्पूर्वं प्रामाण्याश्रयज्ञानं गृहीतं न वा। आद्येऽपि किं ज्ञानग्रहे प्रामाण्यं गृहीतमुत न। आद्ये निश्चिते संशयानुपपत्तिः। द्वितीये स्वतस्त्वहानिरित्यभिधाय, अन्त्ये हेत्वभावान्न संशयः स्यादित्युक्तं मणौ। तत्र [2]मतद्वयेऽपि संशयानुपपत्तिस्तुल्येति चोदितं नन्वित्यत्र। तत्र शङ्कते—यद्यपीति। [3]धर्मिज्ञानं कोटिद्वयस्मरणं ततः [4]संशय इति कोटिद्वय[5]स्मृत्युत्पत्तिक्षणे व्यवसायविनाशो जायते। स च न कोटिस्मृतिजन्यः। एककालोत्पत्तिकत्वात्। तथा च [6]धर्मिज्ञानेन व्यवसायविनाशादित्येव वाच्यम्, न तु [7]कोटिस्मरणादिनेति भावः।

बहुव्रीहावन्यपदार्थे संबन्धिनि लक्षणेति [8]गौरवमित्यरुचेराह—कोटिस्मरणस्येति। किमेतद्बोधं भट्टमते मिश्रमते वा। आद्येऽपि किमयं मानसः संशयः

---

1. ख. 'न' नास्ति।
2. ग. पक्षद्वयेऽपि
3. क. ख. धर्मज्ञानं
4. ख. तत्संशयः
5. ग. ०स्मृत्युपनीतक्षणे
6. ख. धर्मज्ञानेन
7. क. कोटिद्वयस्मरणा-
8. क. गौरवमित्यत आह

ननु धर्मिज्ञानं न संशयहेतुः, कोटिज्ञानविशेषादर्शनधर्मीन्द्रियसंनिकर्षैः प्रामाण्यसंशयरूप एव ज्ञानग्रह उत्पद्यत इति चेत्—न। ज्ञानातीन्द्रियत्वेन तज्ज्ञानं विना तद्धर्मिकमानससंशयानुपपत्तेः। लिङ्गं च न संशयजनकम्, तस्य निश्चायकत्वात्।

---

प्रकाशः

कोटिस्मरणस्यादिरिति समासेन धर्मिज्ञानमेवोक्तमित्यन्ये। भट्टमते दोषमाह—ज्ञानेति। योग्यसंनिकर्षस्यैव ज्ञानजनकत्वादिति भावः।

ननु ज्ञातताऽरूपं लिङ्गमेव तत्संशायकं स्यादित्यत आह—लिङ्गं चेति। तस्यानुमितिरूपनिश्चयमात्रफलकत्वादित्यर्थः। यथा च संशयरूपा नानुमितिस्तथानुमानखण्डे वक्ष्यामः।

---

न्यायशिखामणिः

उतानुमानिकः। [1]मानसपक्षेऽपि किमेष लौकिकः आहोस्विदलौकिकः। आद्ये ज्ञानातीन्द्रियत्व इत्युक्तमयुक्तम्। संयुक्ततादात्म्यस्य लौकिकसंनिकर्षस्य सत्त्वादित्याशङ्क्य, तत्सत्त्वेऽपि तस्य योग्यव्यक्तीयत्वेनायोग्यत्वात् न तत्संभव इत्याह—[2]योग्येति। न द्वितीयः, तज्ज्ञानबोधलक्षणालौकिकसंनिकर्षाभावात्। अन्यथा [3]प्रामाण्यग्रहावश्यकत्वापत्तौ तत्संशयानुपपत्तेः। तदेतदभिप्रेत्योक्तं मणौ (तद्बोधकं) [ तज्ज्ञानं ] विनेति। तत्रानुमानिकपक्षमुत्थापयति—नन्विति।

ननु 'लिङ्गं न संशयहेतुः, निश्चायकत्वा'दित्युक्तमयुक्तम्, निश्चायकस्यापि प्रत्यक्षस्य संशायकत्वदर्शनादित्यत आह—तस्येति। ननु लाघवात् प्रत्यक्षवदनुमानस्यापि ज्ञानमात्रफलकत्वम्। न चैवं धूमाद्वह्निविषयसंशयरूपानुमित्यापत्तिः। वह्न्यभावकोटिलिङ्गोपस्थिताविष्टत्वात्। अत एव सत्प्रतिपक्षस्थले विरुद्धोभयलिङ्गपरामर्शानन्तरं संशयरूपानुमितिः। अन्यथा तत्र संदेहानुव्यवसायानुपपत्तेरित्यत आह—यथा चेति। [4]संशयानुव्यवसायश्च मानससंशयविषय इति वक्ष्यत इति भावः।

---

1. क. मानसप्रत्यक्षेऽपि
2. ख. योग्यतेति।
3. ख. प्रामाण्याग्रह-
4. ख. संशयानुव्यव-

ज्ञानस्य मानसत्वे च प्रामाण्यज्ञानवत् तत्सामग्र्यपि संशयप्रतिबन्धिका, तन्निश्चायकत्वात् । अन्यथा विशेषदर्शनकालेऽपि संशयापत्तेः ।

---

### प्रकाशः

मिश्रमते दोषमाह—ज्ञानस्येति । अन्यथेति । विशेषदर्शनोत्पत्तिकाले संशयोत्पत्त्यापत्तेः । तस्य प्रतिबन्धकत्वेऽपि तत्सामग्र्यास्तदप्रतिबन्धकत्वापातादित्यर्थः ।

---

### न्यायशिखामणिः

[1]ननु ज्ञानस्य मानसत्व इत्येतत् ज्ञानातीन्द्रियत्ववादिमते न युक्तमित्याशङ्क्य द्वितीयपक्षनिराकरणपरमेतदित्याह—मिश्रेति । ननु विरोधिनिश्चयसामग्र्याः संशयाप्रतिबन्धकत्वे विशेषदर्शनकाले संशयापादनं नानिष्टम् । तदुत्पत्तिकाले कदाचित् पूर्वोत्पन्नसंशयसत्त्वात् तत्स्थितिकाले च तस्यैव प्रतिबन्धकत्वेन तदापादनायोगादित्यत आह—विशेषेति । अत्र विशेषदर्शनपदं [2]विपरीतनिश्चयपरं न तु व्याप्यदर्शनपरम् । तथा सति तदुत्पत्तिकाले संशयापादनेन व्याप्यदर्शनसामग्र्याः प्रतिबन्धकत्वेऽपि विरोधिनिश्चयसामग्र्या[3]स्तथात्वासिद्धेः । न चेष्टापत्तिः, व्याप्यदर्शनसामग्र्याः प्रतिबन्धकसामग्रीत्वेन प्रतिबन्धकत्वे तत्सामग्र्याश्च तथात्वापातात् । विरोधिनिश्चयपरत्वे तु नायं दोषः । व्याप्यदर्शनसामग्र्या विरोधिनिश्चयसामग्रीत्वाभावात् । न हि व्याप्यदर्शनं विरोधि, ग्राह्याभावासंस्पर्शात् । किं तु [4]विपरीतदर्शनमेवेति । तस्येति । विपरीतनिश्चयस्येत्यर्थः । तत्सामग्र्या इति । व्याप्यदर्शनादिघटितविरोधिनिश्चयसामग्र्या इत्यर्थः ।

ननु तत्काले [5]संशयानुत्पत्तेर्न तत्सामग्रीप्रतिबन्धकत्वे मानम् । कार्यसहभूतविपरीतनिश्चयाभावरूपकारणाभावप्रयुक्तत्वात्तस्याः इत्याशङ्क्य निराकरोति—न चेति । कार्यसहभूतस्यैवेति । अन्यथा मणिसमवधानसमये दाहापत्तेरिति भावः । विरोधिनिश्चयोत्पत्त्यधिकरणत्वेनाभिमतः कालो विशेषदर्शनकाल इति

---

1. क. घ. 'ननु' नास्ति
2. क. विरोधिनिश्चय-
3. घ. तथात्वसिद्धेः
4. ग. विरोधिदर्शन-
5. ग. संशयानुत्पत्तिर्न

**अथ धर्मिणि विशेषादर्शनदशायां एककोटिस्मरणे तदारोपः कोटिद्वयस्मरणे संशय इति निश्चयसामग्रीतः संशयसामग्री बलवतीति कोटिद्वयस्मरणे संशय एव स्यात् न तु निश्चय इति चेत्—**

---

**प्रकाशः**

न च विशेषादर्शनस्य प्रतिबन्धकाभावतया कार्यसहभूतस्यैव हेतुत्वे कथं तत्काले तदुत्पत्तिरिति वाच्यम् । तदप्रतिबन्धकत्वे संशय एव न स्यान्न विशेषदर्शनमित्यत्र तात्पर्यमित्येके । ज्ञानस्वरूपप्रतिबन्धकाभावातिरिक्तस्थले तथा नियमः पक्षतावदित्यन्ये ।

मिश्रमते शङ्कते—अथेति । तथा च प्रामाण्यसंशयसामग्रीरूपप्रतिबन्धकसत्त्वान्न तन्निश्चयरूपकार्योदय इति भावः ।

---

**न्यायशिखामणिः**

मूलार्थे इत्याशयेनाह—तदप्रतिबन्धकत्व इति । विरोधिनिश्चयसामग्र्या [1]अप्रतिबन्धकत्व इत्यर्थः । न **विशेषदर्शनमिति** । तथा च विरोधिनिश्चयाभावस्य [2]कार्यसहभाव इति भावः ।

ननु व्याप्यदर्शनेन्द्रियसंनिकर्षादि[3]कारणकलापे सत्यपि यदि न विरोधिनिश्चयोत्पादस्तदा फलायोगव्यवच्छेदलक्षणसामग्रीत्वाभावेन संशयापत्तिरिष्टैव । यदि च तन्निश्चयस्तदा तदभावस्य कुतः [4]कार्यसहभाव इत्यरुचेराह—ज्ञानेति । तथा च 'विशेषदर्शनकाल' इति मूलस्यास्मिन्मते मुख्यार्थसंभव इत्यवधेयम् ।

केचित्तु विशेषदर्शनपदं व्याप्यदर्शनपरम् । तथा च व्याप्यदर्शनस्थितिकाले [5]संशयोत्पत्त्यापत्तेरित्यर्थः । न चैतावता विशेषदर्शनस्य पृथक् प्रतिबन्धकत्व[6]मायाति न विरोधिनिश्चयसामग्र्या इति वाच्यम् । विशेषदर्शनस्य हि न व्याप्यदर्शनत्वेन प्रतिबन्धकत्वम्, तथा सति करादिज्ञानस्य पुरुषत्वव्याप्यत्वनिश्चयत्वेन गन्धादिज्ञानस्य पृथिवीत्वादिव्याप्यत्वनिश्चयत्वेन प्रतिबन्धकत्वमित्य-

---

1. ख. न प्रति-
2. ख. कस्य सह-
3. क. ख. करण-
4. ख. कार्यसंभव
5. ग. संशयोत्पत्तेरित्यर्थः
6. ख. °आयादिति न

न । विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप एक एव भवति । स एव संशयः । न त्वेकारोपसामग्र्या अपरारोपसामग्रीप्रतिबन्धः, अवि-

प्रकाशः

नेति । विरुद्धैकैकनिश्चयसामग्र्यभावे च [1]युगपद्भवन्त्यविरोधकालीने संशयसामग्री न तु द्वाभ्यां ताभ्याम् [2]अधिककाला, क्लृप्तसामग्रीसमाजादेव संशयोत्पत्तावतिरिक्तसामग्रीकल्पने मानाभावात् । तथा च निश्चयसामग्र्याः संशयसामग्री न प्रतिबन्धिका तदभेदादिति भावः । नन्वेवं विरोधिसामग्र्योः

न्यायशिखामणिः

ननुगमापत्तेः । किं तु व्यञ्जकाभावप्रयुक्तसंशय[3]निवर्तकालोकादिसाधारणेन संशयविरोधिनिश्चयसामग्रीत्वेन तथात्वम् । न च समग्री न कारणमात्रम्, अतिप्रसङ्गात् । किं तु फलायोगव्यवच्छिन्नत्वम् । तथा चालोकं विना विशेषदर्शनस्य सामग्रीत्वाभावात् तस्मिन् सति पुरुषत्वादिसंशयः स्यादिति वाच्यम् । तदानुमितिरूपनिर्णयसामग्रीत्वेन संशयभञ्जकत्वसंभवादित्याहुः ।

ननु भट्टमते मानससंशयस्य लौकिकस्याशक्यशङ्कत्वादलौकिकस्य च प्रामाण्यग्रहपराहतत्वाल्लैङ्गिकस्य[4] चानभ्युपगमात्तन्मते संशयानुपपत्तिर्वज्रलेपायितैव । गुरुमतेऽपि व्यवसायस्यैव स्वप्रकाशरूपस्य प्रामाण्यनिश्चयत्वेन तदनुपपत्तिः सुदृढैवेति अथेति ग्रन्थासंगतिरित्यत आह—मिश्रेति ।

ननु प्रामाण्याप्रामाण्यकोटिद्वयस्मरणे सति तत्संशयः स्यात् न तु तन्निश्चय इति न युक्तम् । तन्मात्रस्य संशयसामग्रीत्वाभावादित्याशङ्क्य [5]विशेषादर्शनदशायामिति पदानुषङ्गेण तत्सहितं कोटिद्वयस्मरणमेव संशयसामग्रीत्वेन विवक्षितमित्याह —तथा चेति । संशयसामग्र्याः बलवत्त्वे सिद्धे सतीत्यर्थः ।

ननु संशयसामग्री न प्रतिबन्धिका, तस्या निश्चयसामग्र्यनतिरेकात् । तथा चोक्तयुक्तिबलात् प्रामाण्यनिश्चयसामग्री तत्संशयप्रतिबन्धिकेत्युक्तं न युक्तम् ।

---

1. ख. युगपद्भवन्त्यौ विरोध-
2. क. अधिककालाक्लृप्त-
3. ख. °निवृत्तिकालेकादि-
4. ख. °लैङ्गिकत्वस्य
5. ख. ग. विशेषदर्शन-

रोधात् । न चोभयारोपसामग्र्या एकनिश्चयसामग्रीप्रतिबन्ध इति वाच्यम् । प्रत्येकारोपसामग्र्यतिरिक्तायास्तस्या अभावात् । न च सामग्रीद्वयात्कार्यद्वयम् । समूहालम्बनवदुपपत्तेः । तस्मात् प्रामाण्यनिश्चयसामग्रीसत्त्वान्न तत्संशयः स्यात् । धर्मिज्ञानं च संशयहेतुः ।

---

प्रकाशः

परस्परं प्रतिबध्यप्रतिबन्धक[1]भावादेव न संशयः । तथा च तदनुपपत्तिबलादेवापरा संशयसामग्री मन्तव्येत्यत आह—नत्वेकेति । अविरोधादिति । उभयोरपि [2]संभूय संशयरूपैकज्ञानजनकत्वस्यानुभवसिद्धत्वादिति भावः । तस्या इति । उभयारोपसामग्र्या इत्यर्थः ।

नन्वेवं [3]त्वन्नयेऽपि प्रामाण्यसंशयो न स्यात्, अतिरिक्तायाः प्रामाण्यसंशयसामग्र्या अभावात् । प्रत्येकनिश्चयसामग्र्याः प्रत्येकनिश्चयवत् संशयप्रतिबन्ध-

---

न्यायशिखामणिः

तत्संशयरूपविलक्षणकार्येण विलक्षणसामग्र्याः कल्पनात् । न च विरुद्धोभयनिश्चयसामग्रीद्वयादेव तदुपपत्तिः । विरुद्धयोरविरोधभ्रमकालेऽपि तदापत्तेः । अविरुद्धयोर्विरोधभ्रमकाले तदनापत्तेश्चेत्याशङ्क्य विरुद्धपदस्य तत्त्वेन भासमानपरत्वान्न दोष इत्याशयेनाह—विरुद्धेति । [4]एतच्चोपलक्षणम् विशेषादर्शनघटितेत्यपि द्रष्टव्यम् ।

ननु विरोधिनिश्चयसामग्रीद्वयस्य संभूय निश्चयरूपकार्यजनने विरोधदर्शनात् संशयलक्षणकार्येऽपि स दुर्वार इत्याशङ्क्य, फलबलकल्प्यो हि विरोधः, न चेह तथेत्याह—उभयोरिति ।

[5]केचित्तु आरोपपदोपादानेन धर्मिज्ञानमपि निश्चयसामग्रीप्रविष्टम् । तथा च तद्घटितमेव सामग्रीद्वयं संशयसामग्री । न चेह सा, प्रामाण्यग्रहे धर्मिज्ञानाभावादिति विरुद्धेत्यादिमूलार्थमभिधाय ननु धर्मिज्ञानहेतुत्वस्य गौरवान्यथासिद्धिभ्यां

---

1 क. ०त्वाभावादेव
2. ख. 'संभूय' नास्ति ।
3. क. तन्नयेऽपि
4. घ. 'एतच्चोपलक्षणम्.......द्रष्टव्यम्' इति ग्रन्थस्त्रुटितः ।
5. ख. ग. घ. 'केचित्तु...पूर्वास्वरसादेवेदमुक्तमित्याह—नन्वेवमिति' इति ग्रन्थः नास्ति ।

अन्यथा संशये धर्मिनियमः कोट्युत्कटत्वं च न स्यात् ।

---

प्रकाशः

कत्वात् । यदि च निश्चयसामग्रीद्वयसमाजादेव विरोधभाने सति तत्संशय इति मन्यसे तदा ममापि तुल्यमिति [1]पूर्वास्वरसादाह—धर्मिज्ञान चेति । तथा च [2]ज्ञानधर्मिग्रहस्यैव प्रामाण्यनिश्चयरूपतापत्तौ विशेषदर्शनान्न तदनन्तरं संशय इति भावः ।

धर्मिनियम इति । [3]तुरगादौ वेगेन गच्छतः पनसत्वादिकोटिस्मृतिमतोऽनेकवृक्षेन्द्रियसंनिकर्षेऽपि यस्यैव वृक्षस्य ज्ञानं तस्यैव [तत्रैव] [4]पनसत्वादिसंशयो नान्यत्रेति नियम इत्यर्थः । न चान्यत्र समूहालम्बनसत्त्वे कथं नातिप्रसङ्ग इति वाच्यम् । विशेषदर्शनादेः सहकारित्वात् तत्सत्त्व इष्टत्वात् ।

---

न्यायशिखामणिः

निराकृतत्वात् सिद्धवद्धेतुत्वाभिधानं न घटत इत्याशङ्कायामुक्तं धर्मिज्ञानं चेत्याहुः । तन्न । विशेषादर्शनसंग्रहार्थत्वेन आरोपपदोपपत्तेः । धर्मिज्ञानं न कारणमित्याक्षेपे साधकमानं विना तद्धेतुत्वस्यासंभवदुक्तिकत्वाच्च । तस्मान्नैष ग्रन्थार्थः । अत एव एतदर्थावलम्बिनी शङ्काप्यनुपपन्ना । किंतु पूर्वास्वरसादेवेदमुक्तमित्याह—नन्वेवमिति । निश्चयसामग्रीद्वयस्य प्रत्येकं संशयप्रतिबन्धकत्व इत्यर्थः । विशेषेति । विरोधिनिश्चयादित्यर्थः ।

ननु [5]धर्मिनियमः संनिकर्षनियमादेव भविष्यतीत्यत आह—तुरगादाविति । विशेषणज्ञानेन्द्रियसंनिकर्षादिसत्त्वे यथार्थपनसत्वाद्यनुभवं वारयितुं तत्प्रतिबन्धक[6]दोषमाह—वेगेनेति । अन्यत्रेति । संनिकृष्टवृक्षान्तरेष्वित्यर्थः । विशेषादर्शनमस्ति न वा । तत्रान्त्यं [7]निराकृत्य आद्यं [8]निरस्यति—तत्सत्त्व इति । यदेवेति ।

---

1. क. ख. पूर्वस्वरसा-
2. ख. ज्ञानिधर्मि-
3. ख. तुरङ्गादौ
4. ख. पनसादि-
5. ख. धर्मनियमः
6. क. 'दोष' नास्ति ।
7. ग. 'निराकृत्य आद्यं' नास्ति
8. क. निराकरोति

### प्रकाशः

ननु यदेव तत्र धर्मिज्ञाननियामकं तदेव तत्र संशयनियामकमस्तु, तद्धेतोरेवेति न्यायात्। न च विषयमाहात्म्यादिरूपतया तेषामननुगमेनानुगतधर्मिज्ञानमेव हेतुरिति वाच्यम्। एवं हि विशिष्टज्ञानमात्र एव धर्मिज्ञानहेतुतापत्तेः। यदि चावश्यकत्वाद्विशेष्यभानसामग्रीत्वेनानुगमाच्च विशेष्यसंनिकर्षादीनामेव [तत्र] हेतुत्वं, [1]तदात्रापि तुल्यमित्यस्वरसादाह—**कोटीति**। यन्निष्ठस्य धर्मस्य यत्कोट्या सह भूयः सहचार उपलब्धः, यत्र वा धर्मिणि [2]यद्धर्मसहचरितानेकधर्मोपलम्भस्तत्कोट्युत्कटत्वं संशयस्य [3]धर्मिज्ञानापेक्षायां न स्यादित्यर्थः।

---

### न्यायशिखामणिः

धर्मिगतोच्छ्रायविस्तारादिकमित्यर्थः। अत एवाह—**विषयमाहात्म्यादिरूपतयेति**। तुल्यमित्यापाततः। धर्मिज्ञानसामग्रीत्वापेक्षया धर्मिज्ञानत्वस्यैव लाघवेन संशयकारणतावच्छेदकत्वात्। किं च न तावद्धर्मिज्ञानकारणत्वं तत्कारणतावच्छेदकम्। [4]माहात्म्यादिहीनवृक्षेऽपि संनिकर्षमात्रात्संशयोत्पत्त्यापत्तेः। कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्वे कार्योत्पत्तेरावश्यकत्वात्। नापि तत्सामग्रीत्वमवच्छेदकम्। धर्मिनिश्चयसामग्र्याः तत्प्रागभावगर्भत्वेन तया संशयजननायोगात्। अपि च न विषयगतौन्नत्यादेः धर्मिज्ञानकारणत्वेन [5]संशयकारणत्वम्। तेन रूपेणान्यथासिद्ध्यापत्तौ कुम्भकारपितृत्ववत् तस्यावच्छेदकत्वायोगात्। न चैवमपि विशेष्यज्ञानसामग्रीत्वापेक्षया विशेष्यज्ञानत्वस्य [6]लाघवेनावच्छेदकत्वात् तदवच्छिन्नस्य विशिष्टज्ञानमात्रकारणत्वं स्यादित्युक्तदोषानतिवृत्तिरिति वाच्यम्। [7]तस्याभावविशेष्यकप्रत्यक्षे व्यभिचारेण हेतुत्वायोगात्। किं चात्रेष्टापत्तिः, अनुमितिशाब्दज्ञानादौ पक्षपदार्थादिरूप[8]विशेष्यज्ञानस्य कारणत्वाभ्युपगमादिति।

वस्तुतस्तु [9]विशेष्यज्ञानाभावेऽपि क्लृप्तसंनिकर्षादिसामान्यसामग्र्यैव विशिष्टज्ञानोपपत्तौ विशेष्यज्ञानत्वावच्छिन्नमतिरिक्तं कारणं तत्र यथा न कल्प्यते

---

1. ख तदेतदत्रापि
2. क. यद्धर्मसहचारित-
3. ख. तद्धर्मिज्ञाना-
4. ख. ग. घ. माहात्म्यहीन-
5. ख. 'संशयकारणत्वं तेन' इति नास्ति।
6. ख. लाघवेनानव-
7. ख. तस्य भाव-
8. ख. °विशेष्यकज्ञानस्य
9. ख. विशेष्यमाने क्लृप्त-

प्रकाशः

न चैवमपि तादृशसंशयविशेषे तादृशधर्मिज्ञान[1]विशेषस्य हेतुत्वेऽपि संशयसामान्ये हेतुत्वं न स्यादिति वाच्यम् । यद्विशेषयोरिति न्यायेन तत्संभवात् । यद्वा क्वचिज्ज्ञाने उत्कटकोटिकप्रामाण्यसंशयो न स्यादिति विशेषहेतुत्वेऽप्युक्तदोषानुद्धारात् ।

---

न्यायशिखामणिः

तथात्रापि विशिष्टज्ञानसामान्यसामग्र्यैव [2]संशयरूपविशिष्टज्ञानोपपत्तौ नातिरिक्तधर्मिज्ञानकारणताकल्पनं गौरवादित्यत्र तात्पर्यम् ।

ननु धर्मिज्ञानं विनाप्युत्कटकोटिकता [3]संशयस्य स्यादित्यत आह—यन्निष्ठेति । पुरोवर्तिनिष्ठधर्मस्य स्थाणुत्वेन भूयस्सहचारानुपलम्भेऽपि स्थाणुत्वसहचरितानेकधर्मोपलम्भात् स्थाणुत्वांश उत्कटकोटिकसंशयोऽ[4]नुभूयत इति तत्संग्रहार्थमाह—यत्र वेति । तथा च निरुक्तान्यतरत्वमुत्कटकोटिकत्वमिति भावः ।

तादृशेति । उत्कटकोटिकेत्यर्थः । यद्विशेषयोरिति । उत्कटकोटिकसंशये [5]उत्कटकोटिसहचरितानेकधर्मवद्धर्मिज्ञानस्य हेतुत्वे संशयसामान्ये धर्मिज्ञानसामान्यं हेतुरिति भावः ।

ननूत्कट[6]कोटिकसंशये धर्मिज्ञानविशेषस्य [7]कारणत्वसिद्धौ हि यद्विशेषयोरिति न्यायात् तत्सामान्ययोः कार्यकारणभावः स्यात् । [8]तदेवासिद्धम्, मानाभावात् । उत्कटकोटिकत्वेन संशयात्पूर्वं धर्मिज्ञानस्यावश्यकत्वेऽप्यनन्यथासिद्धिघटितकारणत्वानवश्यंभावात् । न च यद्विशेषयोरन्वयव्यतिरेकग्रहः बाधकं विना तत्सामान्ययोः कार्यकारण[9]भावग्रह इत्ययमेव प्रकृते यद्विशेषयोरिति न्यायोऽभिमतः । अस्ति च धर्मिज्ञानसंशयविशेषयोरन्वयव्यतिरेकग्रहः । अन्यथा उत्कट-

---

1. क. 'विशेष' नास्ति ।
2. ख. ग. घ. संशयविशिष्ट-
3. ख. संशयः स्यात्
4. ख. °ऽनुभूत इति
5. ख. तत्कोटि-
6. क. ख. ग. °कोटिसंशये
7. घ. कारणता-
8. ख. तस्यैवासिद्धेः
9. ख. 'भाव' नास्ति ।

## प्रकाशः

यत्तु अतीतादिषु धर्मिज्ञानापेक्षणादन्यत्रापि तथा स्यादिति । तन्न । संनिकर्षत्वेन तदपेक्षाया वक्तुं शक्यत्वात् ।

केचित्तु [1](यद्धर्मसहचारी तद्धर्मोपलम्भो) [यद्धर्मसहचरितधर्मोपलम्भो] यत्र धर्मिणि तत्र तदारोप इति धर्मिनियमवदारोप्यनियमोऽपि तद्धेतुत्वे प्रमाणम् । अत एव सारूप्यतत्त्वाग्रहादित्यादिना सादृश्यापेक्षानियमः इत्याहुः ।

---

## न्यायशिखामणिः

[2]कोटिकत्वानुपपत्तेः । अत एव कृतिविशेष[3]कार्यविशेषयोरन्वयव्यतिरेकग्रहस्तत्सामान्यकृतिकार्ययोः कार्यकारणभावग्रहहेतुरिति वक्ष्यत इति वाच्यम् । तत्र बाधकाभावात् तथात्वेऽप्यत्र विशिष्ट[4]ज्ञानक्लृप्तकारणेनैव तदुपपत्त्या [5]धर्मिज्ञानस्य कोट्युपस्थितिजनकतया चान्यथासिद्धेर्बाधकत्वेन तन्न्यायानवतारात् । न च विनिगमकाभावः, कोट्युपस्थितेर्विशेषणज्ञानत्वेनावश्यकत्वात् । ततश्च [6]धर्मिज्ञानसंशयविशेषयोस्तत्सामान्ययोश्च न कार्यकारणभाव इत्यरुचेराह—यद्धेति । अत्र हेतुत्वपदं प्रयोजकत्वपरम्, न तु कारणत्वपरम् । विशेषकारणत्वस्यापि निराकृतत्वात् ।

मूले संशयो न स्यादित्यत्र संशयपदं तद्विशेषपरम् । तथा च मूलोक्तस्य क्वचिज्ज्ञाने उत्कटकोटिक[7]प्रामाण्यसंशयो न स्यादित्येवंरूपस्य दोषस्य संशयविशेषं प्रति धर्मिज्ञानस्य प्रयोजकत्वेऽपि तत्पूर्वं प्रामाण्यविषयक[8]धर्मिज्ञानावश्यंभावेनोद्धारायोगादित्यर्थः ।

जयदेवमतमाह—केचित्त्विति । एतन्मते संशयत्वं न [9]तन्त्रम्, किं तु आरोपत्वं तथेति द्रष्टव्यम् । अत एव संशयविपर्ययसाधारणौ धर्मिनियमारोप्यनियमौ [10]प्रमाणयति—यद्धर्मेति । शुक्तावेव रजतत्वमारोप्यते नान्यत्रेति धर्मि-

---

1. ख. यद्धर्मसहचरितानेकधर्मोपलम्भो
2. क. ॰कोटिकसंशयानुपपत्तेः
3. ग. 'कार्यविशेष' इति नास्ति ।
4. घ. 'ज्ञान' नास्ति ।
5. ख. धर्म-
6. ख. धम-
7. क. 'प्रामाण्य' नास्ति ।
8. ख. ॰धर्मज्ञाना-
9. ख. तत्र
10. ख. प्रामाण्ययति

प्रकाशः

उत्कटत्वं च तादृशधर्मिविषयत्वमुपाधिः, न तु जातिः अव्याप्यवृत्तित्वात्।

---

न्यायशिखामणिः

नियमः । तत्र च [1]रजतत्वमेवारोप्यते न घटत्वमिति आरोप्यनियमः। एतदुभयमारोप्यत्वाभिमतधर्मसहचरितधर्मवद्धर्म्युपलम्भस्य हेतुत्व एव स्यात् नान्यथेत्यारोपमात्रे धर्मिज्ञानस्य कारणत्वं कल्पयतीत्यर्थः । धर्मिज्ञानस्यारोप[2]कारणत्वमित्यत्र [3]प्राचीननिबन्धनवाक्यमुपाद्धलयति—अत एवेति । नियमद्वयेन धर्मिज्ञानापेक्षानियमेऽपि अनन्यथासिद्धिघटितकारणत्वासिद्धिरित्यस्वरसं सूचयति—आहुरिति ।

ननूत्कटत्वं नोपाधिः, येन तन्निर्वचने धर्मिज्ञानापेक्षा स्यात्, किं तु जातिरित्यत आह–उत्कटत्वं चेति । तादृशेति । ज्ञायमानतत्कोटिसहचरितानेकधर्मवद्धर्मिविषयत्वमित्यर्थः ।

[4]अन्ये तु अन्वयव्यतिरेकाभ्यामेव धर्मिज्ञानस्य संशयकारणताग्रहः । 'समानानेकधर्मोपपत्तेश्च' इत्यादिसूत्रे समानधर्मवद्धर्मिज्ञानानन्तरमेव संशय इति व्यवस्थापनान्नान्वयाद्यसिद्धिः । दण्डतत्संयोगयोरिव कोटिस्मृतिधर्मिज्ञानयोरङ्गाङ्गिभावाच्च नैकेनापरान्यथासिद्धिः । न च केवलादृष्टजन्यकोटिस्मृत्यापि संशयदर्शनान्न व्यापारव्यापारिभावस्तयोरिति वाच्यम् । तादृशस्मृत्या [5]संशयासिद्धेः । अत एव [6]प्रमेयतत्त्वबोधे वर्धमानचरणैः केवलादृष्टकारितकोट्युपस्थितिहेतुकः संशयो नास्त्येवेत्युक्तम् । तस्माद्धर्मिज्ञानं [7]संशयकारणमित्याहुः ।

तच्चिन्त्यम् । समान[8]धर्मविषयकधर्मिज्ञानसंशयविशेषयोरन्वयादिसिद्धावपि तत्सामान्ययोस्तदसिद्धेः । न च यद्विशेषयोरिति न्यायात्तत्सिद्धिः । तत्र बाधकस्योक्तत्वात्, बाधकाभाव एव तन्न्यायावतारात् ।

केचित्तु साधारणधर्मदर्शनं असाधारणधर्मदर्शनं [9]विप्रतिपत्तिजन्यविरुद्ध-

---

1. ख. ग. घ. रजतत्वमारोप्यते
2. क. ख. कारणमित्यत्र
3. ख. प्राचीनबन्धन-
4. ख. 'अन्ये तु' नास्ति ।
5. ख. संशयसिद्धेः
6. क. प्रमेयतत्त्वबाधे
7. ग. संशये कारण-
8. ग. ०धर्मिविषयधर्मि-
9. क. 'विप्रतिपत्ति······दर्शनं' इति नास्ति।

अथ पीतः शङ्खः आदर्शे मुखमित्यादिभ्रमो विशेषदर्शनेऽपि यथा दोषान्तरात्, तथा निश्चितेऽपि प्रामाण्ये दोषान्तरात्तत्संशय इति चेत्— न। तद्वदेवात्रापि प्रवृत्तिप्रसङ्गात्। (साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनं विरोधि)। साक्षात्कारिभ्रमे साक्षात्कार्येव विपरीतनिश्चयः प्रतिबन्धकः न त्वानुमानिकादिः।

---

### प्रकाशः

**दोषान्तरादिति।** अनभ्यासदशारूपादित्यर्थः। **तद्वदेवेति।** यथा पीतारोपेऽपि शुक्लार्थिप्रवृत्तिः तथा प्रामाण्यसंशयस्थलेऽपि निष्कम्पप्रवृत्तिः स्यादित्यर्थः। दोषान्तरमाह—**साक्षात्कारीति।** तथा च तत्र विरोधिविरहात् [2]पीतत्वभ्रमः उत्पद्यते। अत्र च मानसानुव्यवसायादिरूपे प्रामाण्यनिश्चये जाग्रति न तत्संशयः। भ्रमस्यातथात्वेऽपि संशयस्य विपरीतनिश्चयमात्रप्रतिबध्यत्वादित्यर्थः।

---

### न्यायशिखामणिः

धर्मदर्शनं च संशयहेतुरिति सर्वसिद्धम्। तच्च धर्मिविषयकमेव। तथा च धर्मिज्ञानं संशयकारणमित्याहुः।

[1]तदपि चिन्त्यम्। समानधर्मादिज्ञानानां परस्परव्यभिचारेण तद्धेतुत्वानुपपत्तेः। अन्यथा व्यभिचारपरिहाराय संशयवैजात्यकल्पनापत्तेः। न च संशयेषु जातिकृतवैलक्षण्यमीक्षामहे। न च विषयकृतवैलक्षण्यसत्त्वात्तन्निरासः। विशेषणज्ञानसंनिकर्षादिवशात्संशये समानधर्मादिभानोपपत्तेः तस्य विलक्षणहेत्वकल्पकत्वात्। न च तेषां तत्कारणत्वानुपपत्त्या संशयवैजात्यकल्पनमिति वाच्यम्। वैजात्यसिद्धौ व्यभिचारपरिहारात् तत्कारणतासिद्धिः तत्सिद्धौ च तत्र वैजात्यसिद्धिरित्यन्योन्याश्रयात्। न चैवं संशयत्रैविध्याभ्युपगमविरोधः। तस्याप्रामाणिकत्वेनेष्टापत्तेः। समानधर्मादि[3]विषयकत्वेन तदुपपत्तेर्वेति दिक्।

ननु शङ्खादौ पित्तादिदोषः, न चेह स इत्यत आह—**अनभ्यासेति।** ननु पीतिमारोपस्थले तदर्थिप्रवृत्त्यभावात् तद्वदेवेत्यनुपपत्तिः। प्रकृते सकम्प-

---

1. क. तत्त्वभ्रमः
2. क. तच्चिन्त्यम्।
3. ख. ग. °विषयत्वेन

प्रकाशः

यद्यप्येवमपि प्रामाण्यतदभावसंशयो मा भूत्, अप्रामाण्यतदभावसंशयः स्यादेव। प्रामाण्याप्रामाण्ययोर्भावरूपतया परस्परविरहरूपत्वाभावादिति। तथापि [1]तत्प्रकारकत्वे संशयाभावादप्रामाण्यसंशयोऽपि व्यवसायविषये तदभाववत्त्वसंशयपर्यवसन्न एव। स च तत्रैव तद्वत्त्वग्राहिणा प्रामाण्यनिश्चयेन प्रतिबध्यत एव। तत्तदभावयोः परस्परविरहरूपत्वादिति भावः।

केचित्तु [2]प्रामाण्यतदभावसंशयस्याप्यनुभूयमानत्वात्तस्यैवमप्यनुपपादनमेवेत्याहुः।

---

न्यायशिखामणिः

प्रवृत्ति[3]सत्त्वादापादनासंगतिश्चेत्यत आह—[4]**यथेति**। कैश्चिदुत्कर्षसमरूपजातिरिति पूर्वास्वरस उक्तः। [5]अव्यापकापादनं हि उत्कर्षसमः। इह तु न तथा, प्रवर्तकज्ञानस्य प्रवृत्त्यविनाभावादित्याशयेनाह—**दोषान्तरमिति**। **मानसेति**। आदिपदा[6]दनुमितिपरिग्रहः। ननु भट्टमते तद्ग्रहस्य प्रत्यक्षत्वाभावात् भ्रमः स्यादेवेत्यत आह—**भ्रमस्येति**। **अतथात्वेऽपीति**। विपरीतनिश्चयमात्राप्रतिबध्यत्वेऽपीत्यर्थः।

**यद्यपीति**। यद्यपि 'तत्संशयो न स्या'दित्यत्र तत्पदेन प्रकृतभावरूपप्रामाण्यस्यैव परामर्शात् मूले प्रामाण्यतदभावकोटिक एवोक्तो नाप्रामाण्यतदभावकोटिकसंशयः, तथापि 'भ्रमत्वसंशयश्च तज्ज्ञानाज्ञानभ्यां न संभवतीत्युक्त[7]त्वा'दित्युत्तरग्रन्थपर्यालोचनया तत्संशयस्याप्यभिप्रेतत्वादिति भावः। **एवमपीति**। ग्राह्यनिश्चयमात्रस्य संशयप्रतिबन्धकत्वेऽपीत्यर्थः। **प्रतिबध्यत एवेति**। न चैवं तद्वत्त्वावगाहिव्यवसायस्य सर्वत्र [8]विद्यमानत्वात् प्रामाण्यसंशय [9]एवोत्सीदेदिति वाच्यम्। कोटिस्मरणादिना संशयपूर्वक्षणे व्यवसायविनाशादिति [10]भावः। **एवमपीति**। अप्रामाण्यतदभावसंशयोपपादनेऽपीत्यर्थः।

---

1. ख. तत्पकारत्वे
2. ख. तदभावप्रामाण्य-
3. घ. °सत्त्वात्तदापादना-
4. ग. तथेति।
5. क. अव्यापकोपादानं
6. क. °दनुमान-
7. क. °दित्यग्रिम-
8. ख. 'विद्यमानत्वात्......°तदभाव संशय—' इति ग्रन्थस्त्रुटितः।
9. क. एव नेह सिध्येदिति
10. क. 'भावः' नास्ति।

प्रकाशः

यत्तु साक्षात्कारिणि भ्रमे निश्चयरूपे साक्षात्कारिविपरीतनिश्चयो विरोधी, संशये तु विरोधिनिश्चयमात्रम् । तथा च प्रामाण्यसंशयोऽप्रामाण्यसंशयो वा तद्विरुद्धप्रामाण्यनिश्चयादवश्यं निवर्तेतैवेत्यर्थ इति । तन्न । प्रामाण्यस्याप्रामाण्यविरुद्धत्वं हि न तद्विरहरूपत्वम्, उभयोर्भावरूपत्वात् । नापि तद्विरहव्याप्यत्वम्, तद्व्याप्यत्वेन तस्यापरामर्शात् तज्ज्ञानमात्रस्य संशयनिवर्तकत्वेऽतिप्रसङ्गादिति ।

---

न्यायशिखामणिः

अस्यापि तदभावसंशयपर्यवसन्नत्वेनोपपादनायोगः भ्रमत्वसंशयपर्यवसन्नत्वेनोपपादनायोगः भ्रमत्वसंशयश्चेत्यादिमूलानार्जवं चेत्यनुशयं सूचयति—आहुरिति ।

जयदेवमतमाह—यत्त्विति । विपरीतेति । ग्राह्याभावेत्यर्थः । किं तज्ज्ञानस्य तदभावव्याप्यत्वप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वमुत वस्तुतो यत्तदभावव्याप्यं तज्ज्ञानत्वेन । तत्राद्यं प्रत्याह—तस्येति । प्रामाण्यग्रह[1]दशायामप्रामाण्याभावव्याप्यत्वनिश्चयसामग्रीविरहादिति भावः ।

यत्तु विरोधित्वं तद्विरहत्वं तद्विरहव्याप्यत्वं वा नात्राभिमतम् । किं तु तदभावावच्छेदकत्वम् । तादृशज्ञानस्यापि संशयनिवर्तकत्वात् । अत एव व्याप्तिसंदेहो धूमत्वज्ञानान्निवर्तत इति ।

तन्न । वस्तुतो यदवच्छेदकं तज्ज्ञानस्य संशयनिवर्तकत्वेऽ[2]तिप्रसङ्गात् । किं तु यदवच्छेदेन यद्धर्मग्रहः [3]तन्निश्चयस्तद्धर्मसंशयविरोधी, प्रामाण्यग्रहस्तु न तथा । अनभ्यासदशायाः प्राक् [4]अप्रामाण्याभावावच्छेदकत्वाग्रहादिति ।

द्वितीयं दूषयति—(तज्ज्ञान)[तज्ज्ञानमात्र]स्येति । वस्तुतो यद्व्याप्यं तज्ज्ञानस्य निवर्तकत्वे व्याप्यत्वानवगाहि[5]करादिदर्शनेऽपि स्थाणुत्वादिसंशयनिवृत्तिप्रसङ्गादित्यर्थः ।

---

1. ख. ॰दशायां प्रामाण्याभाव-
2. ख. ॰ऽपि प्रसङ्गात्
3. ख. तन्निश्चयविरोधिप्रामाण्य-
4. क. अप्रामाण्यावच्छेदक-
5. ख. ॰कारादर्शने

संशये तु निश्चयसामान्यम्। अनुमानादिना तन्निश्चये कदाचिदपि तस्यानुत्पादात्, दिङ्मोहादौ तथा दर्शनात्। तच्च न, पित्तादिना प्रतिबन्धात्। न च जात्यैव कश्चिद्दोषोऽस्ति। न च प्रामाण्यसंशयाद्विषयसंशयवत् प्रामाण्यज्ञाने प्रामाण्यसंशयात् प्रामाण्यसंशय इति वाच्यम्। प्रामाण्यज्ञानेऽपि स्वतः प्रामाण्यग्रहे तत्संशयानुपपत्तेः।

---

## प्रकाशः

विशेषदर्शनमिति। विपरीतदर्शनमित्यर्थः। ननु दोषः प्रतिबन्धकः न च पित्तादिर्दोष इत्यत आह—न चेति। न च जात्यैव कश्चिद्दोषः किं तु क्वचित् कश्चिद्दोषः। तथा च शुक्लप्रमाप्रतिबन्धकतया पित्तादिर्दोष, इत्यर्थः। यद्वा विशेषदर्शनेऽपि [1]भ्रमादिजनकपित्तादिवदत्र दोषो नानुभूयते। न च दोषत्वजातिमानेव कश्चित्पदार्थविशेषः पिशाचादिवदतीन्द्रियोऽस्ति येन तत्रानुपलभ्यमानोऽपि कल्पनीय इत्याह—न चेति।

---

## न्यायशिखामणिः

[2]विशेषपदस्य व्याप्यपरत्वे पीतत्वाभावव्याप्यशङ्खत्वप्रत्यक्षस्यापि पीतत्वभ्रमनिवर्तकत्वं स्यादित्यत आह—विपरीतेति। प्रतिबन्धक इति। प्रमाया इति शेषः। तथा च यः प्रमाप्रतिबन्धकः स एव दोषपदनिर्देश्यः। पित्तादिश्च सत्यपि तस्मिन् स्वगोचरप्रमादर्शनात् [3]न प्रतिबन्धकः अतो न दोषः। तथा च 'पित्तादिना प्रतिबन्धा' दित्यव्यवहितग्रन्थासंगतिरिति भावः। न चेति। न हि कारणतावदनुगतधर्मावच्छिन्ना प्रतिबन्धकता। किं तु यस्मिन् सत्यन्यकारणकलापे या प्रमा नोत्पद्यते स एव तत्र प्रतिबन्धकः। तथा च पित्तादिः श्वैत्यप्रत्यक्षप्रतिबन्धकतया तत्रैव दोष इत्यर्थः।

यैस्तु न केवलं विरोधिनिश्चयान्न प्रामाण्यसंशयः, किंतु दोषाभावादपीति व्यवहितशङ्कानिवारण[4]हेत्वन्तरपरतया मूलं व्याख्यातम्, तेषामुपाध्यायानां मतमाह—यद्वेति। तथाच दोषश्च नेति मूलार्थः। अस्तीति चेत् किं प्रत्यक्षः

---

1. ख. भ्रमादिजनकः पित्तादिः अत्र तु दोषो
2. ख. विशेषणपदस्य
3. ग. 'न' नास्ति।
4. ग. ॰हेतुत्वान्तर-

ननु ज्ञानमात्रं न विरोधिबुद्धिनिवर्तकम्, भ्रमोत्तरं बाधकज्ञानोदयात्, किं त्वनन्यथासिद्धम्। अत एव तेन विनापि तज्ज्ञानं संभवतीति अन्यथासिद्धतया शङ्कितं तन्निश्चयं परिभूय ज्ञानविषयत्वाद्विषये यथा संशयस्तथा प्रामाण्ये तन्निश्चयस्यान्यथासिद्धिशङ्कया तं परिभूय भवति संशयः।

न च व्यवसायस्य ज्ञानत्वे घटविषयकत्वे च यथानुव्यवसायविषयत्वान्न संशयस्तथा प्रामाण्येऽपि न स्यात्, अनुव्यवसायस्य प्रमात्वनियमा-

---

**प्रकाशः**

परिभूय स्वप्रयोजनाक्षमीकृत्य। संशये [1]समानधर्मापेक्षायामाह—ज्ञानेति। अन्यथासिद्धिशङ्का चाप्रामाण्यशङ्कातो भिन्नेति शङ्कितुर्हृदयम्। अत एव न चेत्युक्तशङ्कानन्तरमपि पुनः शङ्क्यमिति ध्येयम्।

---

**न्यायशिखामणिः**

कश्चिद्दोषत्वेन कल्प्यते उतातीन्द्रियः। आद्यं निराकृत्य द्वितीयं निरस्यति—न चेति। यथा ह्यननुभूयमानोऽप्यस्ति पिशाचत्वजात्याश्रयः [2]तत्प्रापकपापस्य श्रुत्यादाववगमात्। स च देहदौस्थ्यं प्रति [3]दृष्टकारणाभावे कारणत्वेन स्वस्थताप्रतिबन्धकत्वेन च कल्प्यते। अत एव पिशाचनिवर्तकजपहोमादिविधानम्। न तथेह प्रमाप्रतिबन्धयोग्यजात्यवच्छिन्नः कश्चिदतीन्द्रियोऽस्ति, येनानुपलभ्यमानोऽपि दोषत्वेन [4]कल्प्येत। तथा चातीन्द्रियं [5]किंचन परिकल्प्य तस्य दोषत्वकल्पनेन संशयसमर्थनाद्वरं प्रामाण्यस्य स्वतस्त्वत्याग इति भावः।

परिभवो न विनाशस्तस्योत्तरज्ञानादिनैव संभवात्। किं तु स्वकार्याक्षमतेत्याह—स्वप्रयोजनेति। नन्वत्र पौनरुक्त्यम्। न चात्र भ्रमत्वशङ्का। 'न च प्रामाण्यसंशया'दित्यत्र प्रामाण्यशङ्केति वाच्यम्। 'भ्रमत्वसंशयश्च [6]न संभवतीत्युक्तत्वात्' इत्यग्रिमग्रन्थविरोधादित्याशङ्क्य उक्तार्थानुसंधानाचतुरस्येयमाशङ्केत्याह—अन्यथेति।

---

1. क. समानधर्मानपेक्षा-
2. क. तत्प्राप्तदेहस्य
3. क. ख. दुष्टकारणा-
4. ख. कल्प्यते
5. घ. कंचन
6. क. ख. ग. 'न' नास्ति।

दिति वाच्यम् । अज्ञाने अविषये च ज्ञानत्वविषयत्वयोरनुव्यवसायेनाग्रहणनियमात् तद्विषयत्वमनन्यथासिद्धं प्रामाण्यविषयत्वं च तेन विनापि संभवतीति तत्र संशय इति चेत् ;

मैवम् । भ्रमत्वमन्यथासिद्धत्वम् । ततश्च प्रामाण्यनिश्चये भ्रमत्वसंशयेन तद्विषये प्रामाण्यसंशय इति फलितोऽर्थः । भ्रमत्वसंशयश्च तज्ज्ञानाज्ञानाभ्यां न संभवतीत्युक्तत्वात् । एवमन्यत्रापि भ्रमत्वसंशयान्न विषये संशयः, स्वतःप्रामाण्यग्रहे भ्रमत्वसंशयाभावात् ।

न च वाच्यं प्रामाण्यसंशयान्न विषये संशयः, मानाभावात् । ज्ञानविषयत्वात्समानधर्मादेव तदुपपत्तेः । न चैवं सर्वत्र विषयसंशये तन्निश्चयो-

---

**प्रकाशः**

तत्र [1]संशय इति । एवं च त्वन्नयेऽनुव्यवसायस्य प्रमात्वनियमो न त्वस्मन्मते, अप्रमापि प्रमेत्येव गृह्यत इत्युक्तत्वादित्यर्थः । [2]अप्रामाण्यसंशयानुपपत्तिमुक्त्वा तदनुपपत्त्या तज्जन्यविषयसंशयानुपपत्तिदोषमाह—एवमिति । संशय इत्यनन्तरं स्यादिति शेषः । 'प्रामाण्यसंशयान्न विषये संशय' इत्यत्र परस्येष्टापत्तिमाशङ्क्य निराकरोति—न चेति । तुल्यत्वादिति । न च वाच्यमित्यनेन संबध्यते । तस्येति । प्रामाण्यसंशयस्यासार्वत्रिकत्वात्तुल्यत्वाभाव इति भावः । प्रामाण्यसंशयोऽनन्यथासिद्धान्वयव्यतिरेकितयापि तद्धेतुरित्याह—भ्रमत्वेति ।

---

**न्यायशिखामणिः**

नन्वनुव्यवसायत्वस्य [3]प्रमात्वनियतस्य ग्रहे कथं तत्संशय इत्यत आह—एवं चेति । ननु 'भ्रमत्व(संशयो न) [संशयान्न] विषयसंशय' इत्यसंगतम् । तस्य विषयसंशयोपपादकत्वेन [4]तदभावाहेतुत्वादित्यत आह—(प्रामाण्येति) [अप्रामाण्येति] । अनुभूयमानसंशयापह्नवायोगात् आपादनमभिमतम् । [5]तत्प्रतीत्यर्थमाह—स्यादिति । प्रामाण्यसंशयानुपपत्तिदोषानुद्धारात् द्वितीयदोषोद्धाराभिप्रायेयमाशङ्केत्याह—प्रामाण्येति ।

---

1. ख. संशय एवेति
2. ख. अप्रामाण्यशङ्काया अनुप-
3. ख. प्रमात्वस्य प्रमात्व-
4. ख. तदभावहेतुत्वादनुभूयमान-
5. ख. घ. तत्प्रतीत्यमाह

च्छेदः, प्रामाण्यसंशयेऽपि तुल्यत्वादिति। तस्यासार्वत्रिकत्वात्। भ्रमत्वसंशयं विना निश्चितविषये संशयानुत्पत्तेरानुभविकत्वाच्च।

---

प्रकाशः

अत्रेदं चिन्त्यम्। [1]अप्रामाण्यशङ्काशून्यं विशेषदर्शनं संशयप्रतिबन्धकमिति सर्वजनसिद्धम्। एवं चाप्रामाण्यसंशयस्योत्तेजकत्वेनोपयोगात्तदन्वयव्यतिरेकानुविधानमन्यथासिद्धम्। विषयसंशयश्च प्रतिबन्धकाभावे सति क्लृप्तसामग्रीत एव, न तु प्रामाण्यसंशयस्तत्र हेतुः, मानाभावात। अन्यथा प्रामाण्यतदभावसंशयादिवा[2]प्रामाण्यतदभावसंशयादपि अर्थसंशयात् व्यभिचारेणा[3]प्रामाणिकवैजात्यकल्पनापत्तेः। अत एव संशयत्रैविध्यमुपपद्यत इति।

---

न्यायशिखामणिः

तच्छब्दस्य विषयसंशयपरत्वं वारयति—**प्रामाण्यसंशयस्येति**। विरोधिनिश्चयसमान[4]कालीनो विषयसंशयः कदाचिज्जायमानो विलक्षणहेतुमन्तरेणानुपपद्यमानः प्रामाण्यसंशयं सार्वत्रिकं विषयसंशयहेतुतया कल्पयतीति अर्थापत्तिरनुमानं वा प्रामाण्यसंशयस्य तद्धेतुत्वे प्रमाणमित्यसार्वत्रिकत्वादित्यनेन सूचितम्। [5]भ्रमत्वसंशयं विनेत्यनेनान्वयव्यतिरेकसहकृतप्रत्यक्षं लक्षितम्। तन्न युक्तम्। तन्मात्रस्यान्यथासिद्धिसाधारणत्वादित्यत आह—**प्रामाण्येति**। **अत्रेति**। प्रामाण्यसंशयस्य विषयसंशयहेतुत्वे यत् प्रत्यक्षमर्थापत्तिश्च प्रमाणमुक्तं तदिदं न संभवतीत्यर्थः।

अत्र प्रत्यक्षमन्यथासिद्धत्वान्निराकृत्यार्थापत्तिमन्यथैवोपपत्त्या निराचष्टे—**विषयसंशयश्चेति**। न केवलमन्यथासिद्धत्वात् न प्रामाण्यसंशयस्तत्र हेतुः, अपि तु नियतपूर्ववर्तित्वाभावादपीत्याह—[6]**न त्विति**। प्रामाण्यसंशयो विषयसंशयं प्रति नियतपूर्ववर्ती च न भवति, तन्नैयत्यग्राहि[7]प्रमाणाभावादित्यर्थः। न चास्ति किंचित् तादृशं प्रमाणम्, व्यभिचारग्राहिप्रमाणविरोधादित्याह—

---

1. ख. अप्रमात्व-
2. क. °अप्रामाण्याभाव
3. ख. °अप्रमावैजात्य-
4. ख. °कालीने
5. ख. ग. 'भ्रमत्वसंशयं······प्रामाण्यसंशयस्य' इति ग्रन्थस्त्रुटितः
6. ग. नन्विति।
7. क. ख. ग. °प्रामाण्यभावा-

## न्यायशिखामणिः

**अन्यथेति** । [1]प्रामाण्यसंशयाभावेऽपि अप्रामाण्याभावसंशयादर्थ[2]संशयदर्शनादित्यर्थः ।

ननु प्रामाण्यविरोधिसंशयत्वमनुगतमिति चेत्, तथाप्यनुगतकार्यतावच्छेदकाभावान्न व्यभिचारोद्धार इत्याह—**व्यभिचारेणेति** । न तावद्विषयसंशयत्वं तत्कार्यतावच्छेदकम्, (साधन)[समान]धर्म[3]दर्शनादिनापि संशयदर्शनेन व्यभिचारात् । न चैतत्परिहारायैव संशयवृत्तिजातिविशेषस्य कार्यतावच्छेदकत्वं कल्प्यत इति युक्तम् । तत्र समानधर्मदर्शनजन्यसंशयव्यावृत्तजातिविशेषस्यैवाप्रामाणिकत्वेन तस्यापि कल्पनापत्तेरित्यर्थः । न च तत्कल्पनमपि संभवति, सिद्धान्तविरोधादित्याह—**अत एवेति** । त्रिविधसंशयव्यावृत्तसंशयवृत्तिजातिविशेषाभावादेवेत्यर्थः । अन्यथा तेन सह चातुर्विध्यापत्तौ समानासमानविप्रतिपत्तिजन्यत्वेन संशयत्रैविध्यमिति सिद्धान्तो भज्येतेति भावः ।

अत्र ब्रूमः । अन्वयव्यतिरेकाभ्यां तस्य विषयसंशयकारणताग्रहः । न चान्यथासिद्धिः, विरोधिदर्शनव्याप्यदर्शनयोः स्वारसिकसंशये प्रतिबन्धकत्वेना-[4]न्याहिते तत्राप्रतिबन्धकत्वात् । अन्यथा तादृशविशेषदर्शने सति साध्याभावसाधकप्रमाणशङ्काधीनसाध्याभावशङ्का न स्यात् । न च लिङ्गपरामर्शस्य चरमकारणत्वेनानुमितेरेवोत्पत्तेस्तदा साध्याभावशङ्कैव नेति वाच्यम् । चरमकारणत्वस्यैवासिद्धेः । अत एव **किरणावल्यामाचार्यैः** 'विरोधिप्रमाणसदसद्भावशङ्कया मुहूर्तमनुमितौ विलम्बः' इत्युक्तम् । अत एव च यद्ययं निर्वह्निः स्यात् निर्धूमः स्यादित्येवंरूपस्य विषयपरिशोधकस्योक्त[5]शङ्कानिवृत्तिद्वारा अनुमित्युपयोगोऽपि ।

नन्वस्त्वन्यानाहिते प्रतिबन्धकत्वम्, तथापि प्रकृतस्य विषयसंशयस्य [6]प्रामाण्यसंशयजन्यत्वाभावात्तत्र प्रतिबन्धकत्वं न विरोत्स्यत इति चेत्— न । त्वन्मतेऽपि तस्य तन्नियतपश्चाद्भावित्वेनान्याहितत्वात् लाघवेन [7]तस्यैवान्याहित-

---

1. घ. अप्रामाण्य-
2. क. संशयादित्यर्थः ।
3. क. दर्शनादपि
4. ग. न्यामिमते
5. ख. °शङ्कानुवृत्ति-
6. क. अप्रामाण्य-
7. क. तस्यैवान्याहितत्व-
   घ. तस्यैवान्यामिहित-

न्यायशिखामणिः

शब्दार्थत्वात्। अन्यथा [1]तत्र प्रामाण्यसंशयाजन्यत्वसिद्धौ तत्प्रतिबन्धकोत्तेजकविषयतयान्यथासिद्धिः; तत्सिद्धौ च तत्र तदजन्यत्वसिद्धिरित्य[2]न्योन्याश्रयात्।

किं च [3]प्रामाण्यसंशयस्यान्यथासिद्धत्वे यत्र पुरुषत्वव्याप्यकरादिदर्शनजनितपुरुषत्वप्रत्यक्षे प्रामाण्यसंशयस्तत्र विषयसंशयो न स्यात्। तादृशशङ्काशून्यव्याप्यदर्शनस्य प्रतिबन्धकत्वात्। न च तत्र व्याप्यदर्शनस्य व्यापकप्रत्यक्षादिना विनाशान्न दोष इति वाच्यम्। व्यापकप्रत्यक्षे पूर्वोपनीतव्याप्यस्यापि भाने तस्यैव व्याप्यदर्शनरूपत्वात्। न च तत्रानुव्यवसायेन व्याप्यवति व्यापकज्ञानत्वरूपप्रामाण्य[4]व्याप्यत्वस्य गृहीतत्वान्न प्रामाण्यसंशय इति वाच्यम्। वस्तुतः प्रामाण्यव्याप्यस्यापि तस्य व्याप्यत्वाप्रतिसंधानदशायां [5]संशयाविरोधात्। विषयसंशये प्रामाण्यसंशयहेतुत्वे तु नायं दोषः। ग्राह्यनिश्चयदशायामिव तद्व्याप्यदर्शनदशायामपि प्रामाण्यसंशयेन तत्संशयाविरोधात्।

अपि च प्रतिबन्धकस्वरूपे सत्यपि यत्र कार्ये तत्रैवोत्तेजकापेक्षा। प्रकृते च व्यवसाये सति यत्र न प्रामाण्यसंशयस्तत्र विषयसंशयाभावात्, यत्र तत्संशयाद्विषयसंशयस्तत्र व्यवसायरूपप्रतिबन्धकनाशादित्युभयथापि [6]न तदपेक्षा। ततश्च नोत्तेजकविषयतयान्यथासिद्धिः। [7]यदुक्तं व्यभिचारान्न प्रामाण्यसंशयो हेतुरिति। तदयुक्तम्। संशयवृत्तिजातिविशेषस्य प्रामाण्य[8]विरोधिसंशयजन्यतावच्छेदकत्वात्। न चैवमपि प्रामाण्यसंशयस्यावश्यं [9]तद्घटकतद्वत्त्वतदभावगोचरतया कोट्युपस्थितित्वेन कारणता स्यात्, न प्रामाण्यविरोधिसंशयत्वेनेति वाच्यम्। तथा सति प्रामाण्यसंशयानुदये कोटिस्मरणमात्रात् विषयनिश्चयकाले तत्संशयापत्तेः।

यच्चोक्तम् [10]अप्रामाणिकवैजात्यं स्यादिति। तच्च न युक्तम्। [11]समानासमानविप्रतिपत्तीनामपि परस्परव्यभिचारपरिहाराय [12]तत्राप्यप्रामाणिकवैजात्यकल्प-

---

1. क. तस्य
2. क. ॰न्योन्याश्रयः
3. क. तत्प्रामाण्य-
4. घ. ॰व्याप्यस्य
5. ग. संशयविरोधात्
6. ग. 'न' नास्ति।
7. ख. 'यदुक्तम्......न चैवमपि प्रामाण्य' इति भागो नास्ति।
8. क. 'विरोधि' नास्ति।
9. ग. तत्कोटिक-
10. ख. ग. घ. प्रमावैजात्यं
11. ख. समानविप्रति-
12. ख. ग. घ. तत्राप्यप्रमा-

अथ तद्वति तत्प्रकारकत्वं प्रामाण्यम्, तच्च ज्ञानग्राहकेण गृहीतमेवेति न तत्संशयः। न चास्मिन्निश्चितेऽपि प्रामाण्यसंशयात् न तत्प्रामाण्यमिति वाच्यम्। एतन्निश्चयादेव निष्कम्पव्यवहारादिति चेत्—अस्तु तावदिदं प्रामाण्यम्, तथाप्यनुव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये अर्थस्य तद्वत्त्वे च संशयस्यानुभवसिद्धत्वान्नार्थतद्वत्त्वं तस्य विषयः।

प्रकाशः

अस्त्विति। प्रामाण्यसंशयस्यानुभवसिद्धतया दुरपह्नवत्वात् ज्ञानग्राहकेण तद्गृहीतमेवेत्यसिद्धमित्यर्थः। विषय इति। स्वातन्त्र्येणेति शेषः। ज्ञानविषयतया अनुव्यवसायस्य तद्वत्त्वं विषय [1]एव। अन्यथा व्यवसाये [2]तत्प्रकारकत्वादेनापत्तेः। यदि तत्र वैजात्यमनुभूयते, यदि वान्वयव्यतिरेकावगत[3]कारणत्वरक्षणायैव वैजात्यं कल्प्यत इति न तत्कल्पनं दोषः, तदा प्रकृतेऽपि तुल्यम्।

न्यायशिखामणिः

यदपि वैजात्यकल्पने सिद्धान्तविरोध इति, तदपि मन्दम्। 'ज्ञानविषयत्वादेव समानधर्मा'दिति ग्रन्थपर्यालोचनया समानधर्मजन्यसंशय एवास्यान्तर्भावात्। तत्र च समानधर्म[4]जन्यसंशयविशेषे प्रामाण्यसंशयस्य हेतुत्वमिति न व्यभिचार इति दिक्।

ननु संशयानुपपत्ति[5]रिष्टप्रसङ्गो न दोष इति चोद्यं तस्यानुभवसिद्धत्वेनापह्नवायोगान्निराकृतं न युक्तम्। ज्ञानग्राहकागृहीतस्य प्रमान्यत्वादेरेव संशयविषयत्वादित्यत आह—प्रामाण्येति। तद्वत्त्वघटितप्रामाण्येत्यर्थः। अनुभवेति। इदं ज्ञानं रजतत्ववति तदभाववति [6]वेत्याद्याकारसंशयोऽनुभवसिद्ध इति भावः।

ननु व्यवसायोल्लिखितत्वाद्धर्मिवद्धर्मवैशिष्ट्यमनुव्यवसायविषय इति न युक्तम्। ज्ञानप्रत्यासत्तेरनभ्युपगमादित्याशङ्क्य [7]ज्ञानविषयत्वं नियामकत्वेनैवाभिप्रेत्य शङ्कत इत्याह—ज्ञानविषयतयेति।

1. क. इति
2. क. तत्प्रकारत्वादे-
3. क. °कारणत्वलक्षणयैव
   ख. °कारणत्वक्षणायैव
4. ख. 'जन्य' नास्ति।
5. ख. °रनिष्ट-
6. ख. ग. न वेत्याद्य-
7. ग. ज्ञानविषयकत्वनियाम-

ननु व्यवसायस्य इदंत्वरजतत्वविशिष्टेदंविषयत्वेऽनुव्यवसाय एव मानम्। तथा च यावद्व्यवसायोल्लिखितप्रकारविशिष्ट एव धर्मी अनुव्यवसाये भासते। अन्यथा विषयांशे तस्य निर्विकल्पकत्वे इदं रजतं जानामीति तदाकारो न स्यात्। अतो धर्मिणीदंत्वरजतत्ववैशिष्ट्यमनुव्यवसायेन गृहीतमिति धर्मिणि स्वतःप्रामाण्यग्रहवद्रजतत्ववैशिष्ट्येऽपि स्वतःप्रामाण्यज्ञानमवर्जनीयम्। अत एव धर्म्यंशे न कदापि प्रामाण्यसंशय इति चेत्—

मैवम्। इदं रजतं च जानामीति नानुव्यवसायः, बहिर्विशेष्यके मनसोऽस्वातन्त्र्यात्।

---

**प्रकाशः**

स्तेनोल्लेखासंभवात्। इदमंशे यथा स्वतः प्रामाण्यं तथा रजतत्वांशेऽपीति शङ्कते—**नन्विति**। एवं च स्वतःप्रामाण्यस्य प्रामाणिकत्वे उक्तसंशयाऽसिद्ध एवेति भावः। **इदमिति**। इदंविशेष्यकं रजतविशेष्यकं वा न[1] मानसं ज्ञानम्, मनसो बहिरस्वातन्त्र्यादिति भावः।

---

**न्यायशिखामणिः**

नन्वनुव्यवसायस्य साध्यतया इदंत्वविशिष्टेदंविषयकत्वाभिधानमसंगतम्। 'धर्मिणि स्वतःप्रामाण्यग्रहव'दित्यग्रिमग्रन्थविरोधादित्याशङ्क्य दृष्टान्तपरं तदित्याह—**इदमंश इति**।

यद्यप्यनुव्यवसायस्य इदंत्वविशिष्टेदंविषयकत्वमपि साध्यमेव तत्रापि न्यायनयेन स्वातन्त्र्याभ्युपगमात्। अत एव धर्मिणीत्यादिग्रन्थोऽप्यसंगत एव। तथापीदंत्वघटितप्रामाण्ये संशयानुपपत्तिदोषाभावात् [2]सुसाध्यमेव स्वतस्त्वमिति प्रसाध्याङ्गतया दृष्टान्त इत्याशयः। तर्हि संशयस्य का गतिरित्याशङ्क्य यद्युक्तसंशयो रजतत्ववतीत्याद्याकारः[3] तदा त्वसिद्ध एव। प्रमा न वेत्याकारश्च भ्रमान्यत्वादिविषयतयोपपन्न इत्याशयवानाह—**एवं चेति**। असिद्ध एवेत्यापाततः।

---

1. ख. 'न' नास्ति
2. ख. सुसाधन- ग. संसाध्य-
3. ग. °त्याकारः

किं त्विदमिदंत्वेन रजतत्वेन जानामीति। तत्रेदंत्वरजतत्वे प्रकारत्वेन भासेते। तत्प्रकारकज्ञानवत्त्वं चात्मनि भासते, अन्यथा प्रकारवाचितृतीयार्थासंभवः। रजतत्ववैशिष्ट्यस्य तदर्थत्वे व्यवसायेपि तृतीयार्थोल्लेखापत्तिः।

प्रकाशः

किं त्विदमिति वास्तवाभिप्रायेण उक्तबाधकात्तदाकारत्वासिद्धेः।

न्यायशिखामणिः

उक्ताकारसंशयस्याप्यनुभवसिद्धत्वात्। वस्तुतस्तु अनुभवानुरोधेन [1]पीतत्वभ्रमस्थल इव निश्चितेऽपि प्रामाण्ये दोषविशेषात् तत्संशय इत्यत्र तात्पर्यम्।

नन्विदं [2]रजतं जानामीति ज्ञानमात्मविशेष्यकं न बहिर्विशेष्यकमित्याशङ्क्य रजतत्वाद्यपेक्षया पुरावर्त्यपि विशेष्यमित्यभिप्रेत्याह—इदंविशेष्यकमिति। वाशब्दश्चार्थे। तथा च दृष्टान्तासंप्रतिपत्तिः। अनिदमि इदंत्वप्रत्ययाभावेन विषयव्यभिचारादृष्टेर्न तद्घटित[3]प्रामाण्यसंशय इति न प्रसाध्याङ्गतापीत्याशयः। बहिरिति। स्वतन्त्रशब्दो विशेष्यपरः। तथा च बहिरर्थविशेष्यकज्ञाने सामर्थ्याभावादित्यर्थः। तर्हि इदंत्वेनेत्याद्यसंगतम्, तस्यापीदंत्वापेक्षया विशेष्यत्वादित्यत आह—वास्तवेति। उक्तबाधकादिति। मनसो बहिरस्वातन्त्र्यादित्यर्थः।

यद्यपि चक्षुषश्चन्दने सौरभमिति योग्यविशेषणकोपनीतविशेष्यक[4]ज्ञानासामर्थ्येऽपि चन्दनं सुरभीति ज्ञातसौरभत्वविशिष्टसौरभविशेषणकचन्दनज्ञाने सामर्थ्यदर्शनात् पुरोवर्तिनो घटत्वाद्यपेक्षया विशेष्यस्याप्यात्मापेक्षया विशेषणत्वेन मनसापि ग्रहे न विरोधः। किं च बहिरिन्द्रियस्य [5]उपनीतायोग्यविशेष्यकज्ञानासामर्थ्येऽपि मनसस्तदस्त्येव। अत एव ज्ञातः परमाणुः परमाणुत्वाधिकरणमित्युपनीतबहिर्विशेष्यको मानसप्रत्ययः सर्वसिद्धः,

तथाप्यग्रे तद्वत्त्वघटितप्रामाण्यसंशयात्तदाहितविषयसंशयदर्शनेन बहिरर्थयोः संशयविरोधिस्वाभावपरस्परवैशिष्ट्यज्ञाने मनसोऽसामर्थ्यादित्यत्र तात्पर्यम्।

1. ख. ग. घ. पीतभ्रम-
2. ख. रजतज्ञानमिति ज्ञानम्
3. ख. ०प्रमाण-
4. ख. ग. ०ज्ञानसामर्थ्ये-
5. ख. उपनीतवियोग्य-
क. उपनीतायोग्याविशेष्यक-

तथा च धर्मिणीदंत्वरजतत्वप्रकारकज्ञानविषयत्वे तादृशज्ञानवत्त्वे चात्मनोऽनुव्यवसाय एव मानमिति न विषये तस्य निर्विकल्पकत्वम्। अत इदंत्वरजतत्ववैशिष्ट्यं पुरोवर्तिनि नानुव्यवसायविषय इति न स्वतः प्रामाण्यग्रहः। तस्मादनभ्यासदशापन्नज्ञानप्रामाण्यं परतो ज्ञायते सांशयिकत्वादप्रामाण्यवदित्याचार्याः।

ननु स्वग्राह्यत्वेऽपि कदाचित्परग्राह्यत्वात् स्वस्याप्यन्यापेक्षया परत्वात् भट्टमते च परग्राह्यत्वात्सिद्धसाधनम्।

न च ग्राह्यप्रामाण्यापेक्षया परत्वम्। ग्राहकस्यापि ग्राह्यप्रामाण्यत्वेन तदपेक्षया परत्वाभावात्। अग्राह्यप्रामाण्यापेक्षया परत्वे अप्रामाण्यप्रसङ्गात्।

---

### प्रकाशः

एवं [1]च सत्यनुव्यवसायस्य विषयांशे निर्विकल्पकत्वं निरस्यति—तथा चेति। नानुव्यवसायेति। अत्रापि स्वातन्त्र्येणेति शेषः। परपक्षं निराकृत्य स्वपक्षमुपपादयितुमुपसंहरति—तस्मादिति। ननु परमात्रग्राह्यत्वं साध्यमिति [2]न सिद्धसाधनमित्यत आह—स्वस्यापीति। वस्तुत एवं सति मात्रपदव्यवच्छेद्य-परभिन्नाप्रसिद्ध्या अप्रसिद्धिर्बोध्या। ननु प्रत्यक्षभिन्नमात्रग्राह्यत्वं साध्यमिति नोक्तदोष इत्यत आह—भट्टेति। अग्राह्येति। वस्तुतो यत् ज्ञानं प्रमाणं तद्ग्राह्य-

---

### न्यायशिखामणिः

ननु स्वतस्त्वाभावस्यैव उपपादितस्योपसंहरणं युक्तम्, न त्वनुपपादितपरतस्त्वस्येत्यत आह—परपक्षमिति। प्रामाण्यसंशया[3]नुपपत्त्या तद्रूपेण प्रतिकूलतर्केण परसंमतस्वतस्त्वानुमानं निराकृत्य तेनैवानुकूलतर्केणानुग्राह्यं स्वतस्त्वाभावसाधकं परतस्त्वसाधकं चानुमानमुपपादयितुं तर्कमुपसंहरतीत्यर्थः। [4]नन्वेवं न सिद्धसाधनम्। परत्वस्य केवलान्वयितया मात्रपदव्यवच्छेद्याप्रसिद्ध्या साध्याप्रसिद्धेरित्यत आह—वस्तुत इति।

---

1. क. 'च' नास्ति।
2. ख. 'न' नास्ति।
3. ख. ग. घ. ॰नुपपत्तिमुपपाद्य तद्रूपप्रति-
4. ग. नन्वेवमपि न

उच्यते । अनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यम्, स्वाश्रयातिरिक्तग्राह्यं वा ।

---

प्रकाशः

प्रामाण्यमेवेति अग्राह्यप्रामाण्यापेक्षया परत्वे विवक्षिते अप्रमाणज्ञानापेक्षयैव [1]तन्निर्वहतीति परत्वाभिमतेन तेन प्रमाणीभूतज्ञाने प्रामाण्यं ग्राह्यमिति तथा सति पर्यवसितं स्यात् । एवं च परत्वाभिमते [2]तत्राप्रामाण्यप्रसङ्ग इत्यर्थ इत्याहुः । यदि स्वग्राह्येति पाठः तदा यत्प्रमाणं ज्ञानं तत्स्वग्राह्यप्रामाण्यमेव सर्वमिति मीमांसकाभिधानानुसारेण परत्वाभिमते अप्रामाण्यप्रसङ्गो बोध्यः ।

---

न्यायशिखामणिः

[3]नन्वाकरस्याप्रसिद्धिपरत्वे तत्साध्ये भट्टमते सिद्धसाधनमित्यसंगतमित्याशङ्क्य साध्यान्तरविषयं तदिति प्रदर्शयितुं तदुत्थापयति—नन्विति । अप्रसिद्धिदोषाभावेऽपि सिद्धसाधनं दुर्वारमित्याह—अत आहेति ।

नन्वग्राह्यं [4]यत्प्रामाण्यं तदपेक्षया भिन्नत्वेऽपि नाप्रामाण्यप्रसङ्गः । ग्राह्यं प्रामाण्यं यस्य नास्ति तदग्राह्यप्रामाण्यमित्यप्यसंगतम् । तादृशं च [5]ज्ञानमप्रमाणमेवेति तद्भिन्नत्वस्याप्रामाण्यानापादकत्वादित्यत आह—वस्तुत इति । अप्रमाणज्ञानेति । व्यवसायस्याप्रमाणत्वे [6]सत्येव सिद्धसाधनाभावपरत्वं निर्वहति । अन्यथा तादृशव्यवसायग्राह्यत्वेन तत्प्रसङ्गादित्यर्थः । तर्हि ग्राह्यज्ञाने तत्प्रसङ्ग इष्ट इत्यत आह—एवं चेति । ननु स्वग्राह्येति क्वचित्पाठः । स न युक्तः न्यायमते भट्टमिश्रमते च [7]प्रामाण्यस्यापि स्वग्राह्यप्रामाण्यभिन्नत्वेन तस्याप्रामाण्यानापादकत्वादित्यत आह—[8]यदीति । मीमांसकेति । प्राभाकरेत्यर्थः ।

ननु प्रवृत्त्युपयोगिप्रामाण्यमिह पक्षत्वेनाभिमतम् । तच्च न प्रमान्यत्वादि, किं तु घटत्ववति घटत्वप्रकारकत्वम् । तदपि ज्ञानत्वगर्भम्, अन्यथा सिद्धसाध-

---

1. ख. परत्वं निर्वहति
2. ख. तत्र प्रामाण्य-
3. ख. नन्वाकारस्य
4. घ. यतः प्रामाण्यं
5. ख. ग. ज्ञानं प्रमाण-
6. ख. 'सत्येव' नास्ति
7. ग. प्रमाणस्यापि
8. ग. यदिति

## प्रकाशः

अनभ्यासदशापन्नेति । कर्तव्यहेतुर्यावति[1] तावत एव पक्षत्वमभिमतम् । अन्यथा अनभ्यासदशापन्नेऽपि सर्वत्र न संशय इति भागासिद्धितादवस्थ्यं स्यादिति ।

न स्वाश्रयेति । न यावत्स्वाश्रयग्राह्यमित्यर्थः । तेन योगिज्ञानस्य सर्वप्रामाण्याश्रयतया तद्ग्राह्यत्वेन न बाधः । घटत्ववति घटत्वप्रकारकत्वादिप्रामाण्याश्रयीभूतास्मदादि[2]ज्ञानाग्राह्यत्वेन यावत्स्वाश्रयग्राह्यत्वाभावात् । अत एव

---

## न्यायशिखामणिः

नतापत्तेः । न हि व्यवसायवदिच्छापि गुरुमते प्रामाण्यग्राहिका । तथा च घटत्ववति घटत्वप्रकारकज्ञानत्वं ज्ञानप्रामाण्यपदनिर्देश्यं भवतु पक्षः । तथाप्यनभ्यासदशापन्नेति व्यर्थम् । न चासिद्धिवारणाय । तस्याभ्यासानभ्यासदशयोरेकत्वेन क्वचित्संशयेनैव तत्र हेतुसत्त्वात् । न चैकमेव घटज्ञानप्रामाण्यं न पक्षः, असंकोचापपत्तौ संकोच[3]कल्पनानौचित्यात्, तथा च भागासिद्धिवारणाय तदिति वाच्यम् । पक्षीकृतप्रामाण्याश्रयैर्योर्वद्भिः कस्यापि [4]प्रामाण्यस्याग्रहात् सिद्धसाधनापत्त्या पक्षसंकोचस्यावश्यकत्वादित्याशङ्क्य, विप्रतिपत्तिकोटिवदस्यापि नानार्थत्वपर्यवसानेन तत्तत्प्रामाण्याश्रय[5]व्यक्तिमादाय गुरुमते पक्षीकृतप्रामाण्येषु स्वाश्रयग्राह्यत्वसत्त्वेनोक्तदोषाभावात् । अन्यथा विप्रतिपत्तावप्यगतेः । तथा च यत्प्रामाण्ये कदापि न संशयस्तत्रासिद्धिः । [6]सा चानभ्यासदशापन्नपदेन संशयमात्रोपलक्षणे तत्र वक्ष्यमाणसंशय[7]नियमाभावान्न निवर्तत इति हेतुरेव तेन विवक्षित इत्यभिप्रेत्याह—कर्तव्येति । द्वितीयो हेतुरित्यर्थः । स्वमतेनायं हेतुरत्यग्रेऽभिधानेन प्रथमहेतोरुभयसाधारणत्वाभावेन पक्षतावच्छेदकत्वायोगात् । न चैवं द्वितीयहेतौ पक्षतावच्छेदकहेत्वभेदेन सिद्धसाधनं स्यादिति वाच्यम् । प्रामाण्यत्वस्याधिकस्यात्र प्रवेशात् तस्याप्रामाण्ये अंशतरसिद्धसाधनवारकत्वेनावश्योपादेयत्वात् । ज्ञानपदप्रयोजनं चोक्तमेव ।

---

1. क. यावती
2. क. °ज्ञानग्राह्य-
3. क. ख. 'कल्पन' नास्ति ।
4. ख. प्रामाण्यग्रहात्
5. ख. ग. घ. °व्यक्तीरादाय
6. क. तथा चा-
7. क. °नियमान्नातिवर्तते
ग. नियमाभावान्नातिवर्तते

प्रकाशः

विप्रतिपत्तावेवकारः सार्थक इत्युक्तम्। यद्यपि सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्यांशे बाधः, तथापि तस्य पक्षबहिर्भाव [1]एवेत्यवसेयम्।

**स्वाश्रयेति**। ननु परेषामपि प्रामाण्यस्यानुमितिग्राह्यत्वाभ्युपगमेन सिद्धसाधनम्। न च स्वाश्रयातिरिक्तमात्रग्राह्यमित्यर्थः। उक्तन्यायेन प्रामाण्यमात्रस्यैव स्वाश्रयीभूतयोगिज्ञानग्राह्यत्वात् बाधापत्तेः। न च प्रतिज्ञानव्यक्ति [2]प्रामाण्यमपि भिन्नमेवेति वाच्यम्। अनुगतमतेरनुगतस्य तस्य सिद्धेः। अन्यथोपाधिमात्रस्याननुगतत्वापत्तिरिति चेत्—

---

न्यायशिखामणिः

**यावत्स्वाश्रयेति**। स्वपदं पक्षीकृतप्रामाण्यपरम्, न तु समभिव्याहृतपरम्। तथा सत्यर्थेऽपि साध्यसत्त्वेन तद्वारकविशेषणवैयर्थ्यात्। न च प्रमावानित्यनुमितिप्रामाण्य[3]संशयाहितसंशयविषयप्रमारूपार्थस्य स्वाश्रयात्मग्राह्यतया व्यभिचारेण तत्सार्थक्यमिति वाच्यम्। स्वाश्रयजन्यज्ञानविषयत्वस्य गुरुणाप्यनङ्गीकारेण तदभावसाधने सिद्धसाधनापत्त्या स्वाश्रयविषयत्वाभावस्य विवक्षणीयतया तस्य प्रमायामपि सत्त्वात् आत्मनो निर्विषयत्वादिति।

कर्तव्यहेतुमत एव पक्षत्वमित्यजानानस्य शङ्कां परिहरति—**यद्यपीति**। **पक्षबहिर्भाव** इति। परमेश्वरादेः संशयशून्यत्वेन तद्घटित[4]पक्षत्वाभावादिति भावः।

केचित्तु [5]अत्र ज्ञानपदम् [6]असर्वविषयकज्ञानपरम्। तथा च तस्य न पक्षत्वमिति। तत्तुच्छम्। पक्षे हेतुप्रवेशस्यावश्यकतया तत एव तन्निरासात्।

यद्वा जयदेवोक्तं बाधविधूननमस्य [7]विशेषणस्योक्तप्रयोजनेन समुच्चिनोति—**यद्यपीति**। [8]अनभ्यासदशेति विशेषणानुपादान इति शेषः। तथा च तद्विशेषणानुपादाने यदि भागासिद्धिरिव सर्वविषयकज्ञानमात्रवृत्तिप्रामाण्यविशेषे

---

1. ख. एवेत्यवधेयम्
2. ख. प्रामाण्यं भिन्न-
3. ख. °संशयामिहित-
4. ख. °हेत्वभावा-
5. क. 'अत्र' नास्ति
6. ख. असर्वविषयकं तज्ज्ञानं- ग. सर्वविषयकज्ञान
7. ख. विशेषस्यो-
8. क. अनभ्यासदशापन्नेति ग. अनभ्यासेति।

**स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवृत्तिसंशयविषयत्वात्, अप्रामाण्यसंशयजन्यसंशयाविषयत्वाद्वा, अप्रामाण्यवत्।**

---

**प्रकाशः**

मैवम्। स्वाश्रयपदेन स्वाश्रयत्वावच्छिन्नं न विवक्षितम्, येनोक्तदोषः स्यात्। किं तु स्वाश्रयीभूतास्मदादिज्ञानव्यक्तिः तदतिरिक्तमात्रग्राह्यमित्यर्थः। यद्यप्येतावतैव पूर्वसाध्यमपि सिध्यति, तथापि विशिष्टाविशिष्टोपाधिभेदात् भेद इति भावः।

**स्वाश्रये सत्यपीति**। विपक्षबाधकतर्कसूचनायापिशब्दः। सतिसप्तमीमहिम्ना च स्वाश्रयसामानाधिकरण्यं [1]संशयविशेषणं लभ्यते। तेन व्यधिकरणसंशयमादाय घटत्वादावर्थे न व्यभिचारः। **तदुत्तरेत्यादिना** स्वाश्रयाधिकरण-

---

**न्यायशिखामणिः**

बाधोऽपि तदा तस्य पक्षबहिर्भावकरणमपि तथैव प्रयोजनमस्य विशेषणस्येत्यर्थः। बाधप्रयोक्तृमीमांसकमते परमेश्वराद्यनङ्गीकारात्तदनुपादानेऽपि न बाध इति सूचयति [2]**यदीति**। तथा चोभयसंमतासिद्धिवारणमेव मुख्यं प्रयोजनमिति भावः। **किं त्विति**। स्वाश्रयीभूतनियतविषयकज्ञानातिरिक्तमात्रग्राह्यमित्यर्थः।

**यद्यपीति**। यद्यपि स्वाश्रयीभूत[3]नियतविषयकज्ञानाग्राह्यत्वे सति तदतिरिक्तग्राह्यत्वमित्यत्र स्वाश्रयनियतविषयकज्ञानाग्राह्यत्वमेव प्रविष्टम्, न तु यावत्स्वाश्रयाग्राह्यत्वम्, येनानेन साध्येन प्रथमसाध्यमपि सिध्येत्; तथापि नियतविषयकत्वयावत्त्वान्यतरगर्भं [4]प्रथमसाध्यं विवक्षितम्। तेनाप्यनियतविषयकयोगिज्ञानादिनिबन्धनबाधापगमात्। तथा च नियतविषयत्वघटितप्रथमसाध्यमादायेयमाशङ्केति भावः। **तथापीति**। वस्तुतः पराभिमतस्वतस्त्व[5]निरासाय प्रथमसाध्यम्। स्वाभिमतपरतस्त्व[6]साधनाय द्वितीयसाध्यमिति विवेकः। तेन भेदेऽपि गुरुविशिष्टसाध्य[7]करणमनर्थकमिति दूषणमल्पकं बोध्यम्।

---

1. ख. 'संशयविशेषणं' इति नास्ति।
2. ख. 'यदीति' इति नास्ति।
3. ख. °विषयतानियतज्ञाना-
4. ख. प्रामाण्यं साध्यं
5. क. ग. °निराकरणाय
6. ख. ग. घ. °साधनात् द्वितीयमिति
7. क. °करणं न युक्तमिति

प्रकाशः

क्षणावधिकतृतीयक्षणवर्तिसंशयकोटित्वादिति विवक्षितम् । तेन स्वाश्रयोत्पत्ति-क्षणावधिकचतुर्थक्षणे[1] संशयादसिद्धिरित्यपास्तम् । न चैवमपि स्वाश्रयोत्पत्त्यग्रिम-क्षणे स्वाश्रयाधिकरणक्षणे ज्ञानत्वांशे निर्विकल्पकम्, तदुत्तरक्षणे ज्ञानत्वविशिष्ट-स्वाश्रयात्मकधर्मिणो ज्ञानम्, ततः कोटिद्वयस्मरणम्, ततः संशय इत्यसिद्धिरिति वाच्यम् । विषयवैशिष्ट्यावगाहिनो ज्ञानत्वांशे निर्विकल्पकादेव धर्मिज्ञानात् प्रामाण्यसंशये बाधकाभावात् ।

---

न्यायशिखामणि.

[2]अपिस्तु न समुच्चयार्थः, येन वैयर्थ्यं स्यात् । किं तु यदि प्रामाण्यं स्वाश्रयेण गृह्येत तदा स्वाश्रये सति न संदिह्येतेत्येवंरूपतर्कप्रदर्शनायेत्याह— विपक्षेति । ननु घटत्वस्यापि प्रामाण्यघटकत्वेन निरुक्तसंशयविषयतया व्यभिचार-तादवस्थ्यम् । न च विषयत्व[3]मुत्कटकोटित्वमतो नोक्तदोष इति वाच्यम् । यत्किं-चिदपेक्षया [4]तृतीयस्य संशयस्यार्थेऽपि संभवेन दोषतादवस्थ्यादित्यत आह— तदुत्तरेत्यादिना । चतुर्थक्षण इति । न्यायमते [5]गुरुमते च स्वाश्रयस्थिति-क्षणावधिकद्वितीयक्षण इति द्रष्टव्यम् । तथा च जन्मक्षणोक्तौ [6]न्यायमते स्थितिक्षणोक्तौ च गुरुमते हेतोः स्वरूपासिद्धिरिति यद्दूषणम्, तदुभयसाधा-रणाधिकरणत्वविवक्षयापास्तमित्यर्थः । न चैवमपि [7]व्यञ्जकसमवधानजन्यस्वाश्रया-धिकरणक्षणोत्तरावधिक[8]द्वितीयक्षणवर्तितदसमवधानजन्यसंशयविषयार्थविशेषे व्यभि-चारः । पूर्वत्वस्या[9]व्यवधिविशेषणत्वादिति भावः ।

किमिदं धर्मिज्ञानं निर्विकल्पकम् उत सविकल्पकम् । आद्य आह— निष्प्रकारकमिति । न हि ज्ञानगोचरज्ञानं सर्वांशे निष्प्रकारकम् । विषय-

---

1. ख. °क्षणवर्तिसंशयासिद्धिरिति परास्तम्
2. क. अपिशब्दस्तु
   ग. अपि तु स तु
3. ख. ग. घ. 'उत्कट-' नास्ति
4. ख. तृतीयस्य क्षणसंशयस्य
5. ख. 'गुरुमते' नास्ति
6. ग. 'न्यायमते स्थितिक्षणोक्तौ च' इति ग्रन्थो नास्ति ।
7. क. व्यञ्जन-
8. ख. °तृतीयक्षण-
9. ख. °व्यन्वय-
   घ. °व्यन्वयि-

### प्रकाशः

ननु निष्प्रकारकं धर्मिज्ञानं न संशयहेतुः, किंतु सप्रकारकमेव। तादृशस्यैव कोट्युत्कटत्वनियामकत्वात्। अन्यथा मिश्रमते तादृश[1]धर्मिज्ञानाङ्गीकारादेव संशयसमर्थने गतं परतस्त्वेनापीति चेत्—न। विषयांशे तस्यापि सप्रकारकत्वात्। [2]तद्विषयत्वादेव समानधर्मात्तत्रैव व्यवसायोपनीतमर्थतद्वत्त्वमपि भातमिति

---

### न्यायशिखामणिः

वैशिष्ट्यावगाहिन इत्यनेन विषयांशे सप्रकारकस्योक्तत्वादिति। द्वितीयं पक्षमुत्थापयति—**किंतु सप्रकारकमिति**। यद्यपि संशयमात्रे सप्रकारकमेव धर्मिज्ञानं हेतुः, तथाप्यत्र ज्ञानत्वाद्यनेकधर्मप्रकारकं तद्वाच्यम्। [3]तस्यैवोत्कटकोटिकप्रामाण्यसंशयहेतुत्वात्। तादृशसंशयस्यैव च प्रकृतहेतौ प्रविष्टत्वात्। तथा चासिद्धितादवस्थ्यमित्याशयवानाह—**तादृशस्यैवेति**।

ननु स्वतोग्रहे प्रामाण्यसंशयो न स्यादित्युक्त्या स्वमते तत्र संशयमात्रस्योपपादितत्वेन [4]च तद्गर्भ एव हेतुर्नोत्कटकोटिकसंशयगर्भः। तथा च [5]सप्रकारकादेव धर्मिज्ञानात्संशय इत्याशङ्क्य, संशयमात्रानुपपत्तिस्तत्राभिप्रेता तदा [6]सप्रकारकधर्मिज्ञानादेव मिश्रमतेऽपि संशयसंभवे तदनुपपत्त्या परतस्त्वसिद्धिर्न स्यादित्याह—**अन्यथेति**। न चैवं धर्मिज्ञानस्य प्रामाण्याविषयत्वे स्वतस्त्वमपि न स्यादिति वाच्यत्। [7]ज्ञानत्वग्राहकसामग्र्या एव प्रामाण्यग्राहकत्वाभ्युपगमादित्याशयः। द्वितीयपक्षमादाय समाधत्ते—**विषयांश इति**। अन्यथेत्याद्युक्तमुद्धरति—**तद्विषयत्वादिति**। यत्रानुव्यवसाये धर्मधर्मिणोर्भानं तत्र वैशिष्ट्यमपि [8]भातमेव। व्यवसाय[9]विषयत्वस्य नियामकस्य समानत्वात्। तथा च ज्ञानत्वाग्रहेऽपि प्रामाण्यसंशयानुपपत्तितादवस्थ्यमित्यर्थः।

---

1. ख. ०धर्म—
2. ख. तद्विषयकत्वादेरेव समानधर्मत्वात्
3. ख. ग. तयैवोत्कट-
4. क. 'च' नास्ति
5. ग. अप्रकारक-
6. ग. अप्रकारक-
7. ग. ज्ञानग्राहक-
8. क. भासत एव
ख. भानमेव
9. क. ग. ०विषयकस्य
ख. विषयकत्वस्य

प्रकाशः

न संशयसमर्थनम् । न हि घटत्वप्रकारकत्वे ज्ञानत्वे वा संशयः, किंतु प्रामाण्यसंशयस्तद्वत्त्वसंशयपर्यवसन्न एव ।

यत्र वा ज्ञाने पूर्वोत्पन्नसजातीयज्ञानान्तरगोचरज्ञानत्वनिर्विकल्पकाद्विनश्यदवस्थादुत्पत्तिक्षणोत्तरक्षण एव ज्ञानत्वविशिष्टज्ञानं तत्प्रामाण्यस्यैव [1]पक्षत्वमिति वदन्ति ।

ननु गुरुमते धर्मिज्ञानसहितो विरुद्धानेकधर्मोपस्थितिविशेषः संशयः स्वप्रकाशतया च तदेव धर्मिज्ञानं तदग्रिमक्षणे कोटि[2]द्वयस्मरणमिति द्वितीयक्षण एव [3]संशयादन्यतरासिद्धिरिति चेत्—न । स्वप्रकाशरूपधर्मिज्ञानसहितसंस्कारेण

---

न्यायशिखामणिः

ननु यदि घटकनिश्चयमात्रेण विशिष्टसंशयानुपपत्तिः तदा [4]घटत्वप्रकारकत्वनिश्चयान्न्यायमतेऽपि तत्संशयानुपपत्तिः । यदि च स्वातन्त्र्येण तद्वत्त्वाग्रहात् तदुपपत्तिस्तत्र [5]तदा तन्मते ज्ञानत्वग्रहानवश्यंभावेन तद्घटित[6]प्रामाण्यानिश्चयात् तत्संशयोऽस्त्वित्याशङ्क्य, [7]यत्संशयो यत्र पर्यवसन्नस्तन्निश्चयस्तद्विरोधी, प्रामाण्यसंशयश्च न घटत्वप्रकारकत्वे ज्ञानत्वे वा पर्यवसन्नः, किंतु तद्वद्विशेष्यकत्वे । तथा च तन्निश्चये सति घटत्व[8]प्रकारकमिदं तद्वति न वेति संशयः परमते न स्यादेवेत्याह—**न हीति ।**

ननु [9]यत्संशयोच्छित्त्यापादनं परस्यानिष्टप्रसङ्गस्तद्घटित [10]एव हेतुर्वाच्यः । स चोत्कटकोटिक एव । अत एव **रुचिदत्तमिश्रैः** 'यद्वा क्वचिज्ज्ञान उत्कटकोटिकप्रामाण्यसंशयो न स्यादिति विशेषहेतुत्वेऽप्युक्तदोषानुद्धारा' दिति प्रागुक्तमित्यपरितोषादाह—**यत्र वेति । ज्ञानत्वविशिष्टेति ।** इदं चोपलक्षणम् । घटादि-

---

1. ख. पक्षत्वादिति
2. ख. द्वयोपस्थितिरिति
3. ख. संशयाद्यसिद्धि-
4. क. 'घटत्वप्रकारक······तदुपपत्तिस्तत्र' इति ग्रन्थस्त्रुटितः
5. ख. 'तदा' नास्ति
6. घ. प्रामाण्यनिश्चयात्
7. ख. यः संशयो
8. ख. °प्रकारकत्वमिदं
9. क. यत्संशयोच्छित्त्युपादानं
10. क. ग. 'एव' नास्ति ।

## प्रकाशः

स्मृतिरूपधर्मिज्ञानस्य तृतीयक्षणे संभवात् । कोटिस्मृतेश्च विनश्यदवस्थायास्तदापि सत्त्वेन तृतीयक्षणे संशयाविरोधात् । इयानेव विशेषो यन्न्यायनये [1]स्वाश्रयाधिकरणीभूतस्थितिक्षणावधिकं तृतीयत्वम् । गुरुमते तु तादृशोत्पत्तिक्षणावधिकम् । स्वाश्रयाधिकरणत्वेन क्षणयोरनुगमाच्च नाननुगमः । संशयत्वं च सकम्पप्रवृत्तिजनकज्ञानत्वमुभयसाधारणमित्याहुः ।

अत्र वदन्ति । तन्मते द्वितीयक्षणेऽपि प्रमाण्यसंशयसंभवेनाग्रिमक्षणे तदाहितार्थसंशयात् तादृशतृतीयक्षणवर्तिसंशयकोटित्वं घटत्वादावर्थे व्यभिचारि ।

---

## न्यायशिखामणिः

विषयकत्वेत्यपि द्रष्टव्यम् । अत एव सजातीयेति ज्ञानान्तरविशेषणम् । अत एव च घटादिविषयकत्वज्ञानत्वाद्यनेकधर्मप्रकारकधर्मिज्ञानलाभ इत्युत्कटकोटिकसंशयसंभवः । न चैवं तृतीयत्वानुपपत्तिः । द्वितीयस्वाश्रयापेक्षया तत्संभवादिति बोध्यम् । तत्प्रामाण्यस्यैवेति । न च पक्षसंकोचापत्तिः, उक्तयुक्तेस्तत्संकोचस्य [2]न्याय्यत्वात् ।

ननु स्वाश्रयाधिकरणत्वस्य जन्मस्थिति[3]क्षणसाधारण्येऽपि गुरुमते जन्मक्षणापेक्षयापि [4]संशयक्षणस्य तृतीयत्वासंभवादसिद्धिरिति शङ्कां स्मृतिरूपधर्मिज्ञानाङ्गीकारेण परिहरति—**नन्वित्यादिना** ।

ननु गुरुमते धर्मिज्ञानसहितविरुद्ध[5]कोटिद्वयविषयस्वतन्त्रोपस्थितित्वं संशयत्वम् । न्यायमते च तादृशनानाकोटिकैकधर्मिज्ञानत्वमित्यननुगमतादवस्थ्यमित्यत आह—**संशयत्वं चेति** ।

जयदेवोक्तमाह—**अत्रेति** । **स्वतन्त्रेति** । अन्यथा वस्तुतो रङ्गे रजतमिदं न रङ्गमिति विपर्यासस्यापि संशयत्वप्रसङ्ग इति भावः । **संशयत्वेनेति** । संशयशरीरप्रविष्टत्वेनेत्यर्थः । **स्वतन्त्रतद्वत्त्वेति** । प्रामाण्यसंशये रजतत्वादेरितरविशेषणत्वेन भानादिति भावः । **तदव्यवहितेति** । प्रामाण्यसंशयाव्यवहितेत्यर्थः ।

---

1. ख. स्वाधिकरण-
2. ख. साध्यत्वात्
3. क. ग. 'क्षण' नास्ति ।
4. ख. स्वसंशयलक्षणस्य
5. ख. 'कोटि' नास्ति

**प्रकाशः**

अथ तन्मते स्वतन्त्रकोट्युपस्थितेरेव संशयत्वेन प्रामाण्याप्रामाण्यकोट्युपस्थितेश्च स्वतन्त्रतद्वत्त्वातद्वत्त्वाविषयत्वात् द्वितीयक्षणे प्रामाण्यसंशयसंभवेऽपि न ([1]तद्यवहिता)[तदव्यवहिता]ग्रिमक्षणे तदाहितार्थसंशयः [2]तत्र क्षणे स्वतन्त्रकोटिस्मरणाभावात् ।

[3]न्यायनये च प्रामाण्यादिकोटिस्मृतेर्विशेषणज्ञानत्वेनार्थसंशयं [4]प्रत्युपयोगात् तत्र च स्वातन्त्र्यस्य गौरवेणाप्रयोजकतया तदव्यवहिताग्रिमक्षणे अर्थसंशयसंभव इति चेत्—

अस्तु तावदेवम् । तथापि यत्र स्थितिकालोत्पन्नसंस्कारेण तृतीयक्षणे स्मृतिरूपधर्मिज्ञानं ततः स्वतन्त्ररूपतद्वत्त्वादिकोटिस्मरणरूपार्थसंशयस्तत्रार्थे व्यभिचारो दुर्वार एव । न्यायनय इव स्थितिकालावधिकतृतीयक्षणवर्तिसंशयविषयत्वस्य

---

**न्यायशिखामणिः**

[5]ननु यथा गुरुनये भेदाग्रहो भ्रमः, स एव न्यायनयेन भ्रमहेतुः, तथा स्वतन्त्रकोटिस्मृतेस्तन्मते[6] संशयत्वे सैवास्मिन्मते हेतुः स्यात् । तथा च [7]न्यायनये प्रामाण्यसंशयानन्तरमर्थसंशयो न स्यादित्याशङ्क्य, न हि कोटिस्मृतिः संशये विशेषसामग्री, येन स्वातन्त्र्यविशेषणावकाशः । किं तु विशेषणज्ञानत्वेन विशिष्टज्ञान[8]मात्रहेतुः । तत्र च न स्वातन्त्र्यं तन्त्रम्, गौरवादित्याह—**न्यायनये चेति ।** **अस्त्विति ।** न्यायनये स्वातन्त्र्यं न तन्त्रम्, गुरुमते तु तथेत्येतदस्त्वित्यर्थः, न तु न्यायनये प्रामाण्यसंशयानन्तरमेवार्थसंशयो गुरुमते तु न तथेत्येतदस्त्वित्यर्थः । धर्मिस्मृतिसहितायाः प्रमाण्यस्मृतेस्तृतीयक्षणेऽपि सत्त्वेन गुरुमतेऽप्यवधानसंभवा[9]दिति बोध्यम् । **धर्मिज्ञानेति ।** घटमहं जानामि इत्यनुभवस्य विनष्टत्वादिति भावः । कथं तर्ह्यर्थे व्यभिचारनिरास इत्याशङ्क्य जयदेवसमाधिमाह—

---

1. क. तदप्यवग्रहीताग्रिम-
2. ख. तत्क्षणे
3. क. अन्यनये
4. ख. प्रत्युपयोगित्वात्
5. क. 'ननु' नास्ति ।
6. घ. 'तन्मते' नास्ति ।
7. ग. 'न्यायनये' इति नास्ति ।
8. ग. ०मात्र एव हेतुः
9. ख. घ. 'इति बोध्यम्' नास्ति ।

### प्रकाशः

तत्र सत्त्वात्। न हि तन्मते जन्मक्षणः मन्मते स्थितिक्षण एव स्वाश्रयक्षणत्वेनाभिमतः, तथा सति हेतौ साधारण्यं न स्यात्। न च तदा तद्वत्त्वादिकोटिस्मृतेर्धर्मिज्ञानसाहित्याभावान्नार्थसंशय इति वाच्यम्। उक्तस्मृतेरेव स्वाश्रयसमानविषयतया घटतज्ज्ञानोभय[1]विषयत्वेन प्रामाण्यार्थोभयविषयसंशयशरीरप्रविष्टधर्मिज्ञानरूपत्वात्। तस्मात् कृतकत्वादिहेतुवत् स्वमतेनैवायं हेतुरिति तत्त्वमिति।

---

### न्यायशिखामणिः

तस्मादिति। [2]कृतकत्वादिवन्नयायमत एवायं हेतुः [3]पक्षवृत्तिः, इदं ज्ञानद्वयमेकं वेति संशयाकाराभ्युपगमेन तद्वद्विशेष्यकत्वादेः संशयाविषयत्वेन तन्मते हेतोः स्वरूपासिद्धत्वात्। तथा च घटत्वादिघटित[4]प्रामाण्यसंशयस्य तत्संशयाधायकतया तदभावे विषयसंशयस्यैवासिद्धेः गुरुमतमादाय नार्थे व्यभिचार इति भावः।

अत्रेदं चिन्त्यम्। एवं सत्यन्यतरासिद्धिः स्यात्। न ह्यन्यतरासिद्धं लिङ्गं कथायामुद्भावनयोग्यम्। [5]कृतकत्वे तूत्पन्नो गकार इत्यादिप्रत्यक्षेण पक्षधर्मता साधिता। यदि चेदं ज्ञानं घटत्ववद्विशेष्यकं [6]न वेत्याकारस्य संशयस्यानुभवसिद्धत्वोपन्यासेन साधितत्वान्नान्यतरासिद्धिः। अन्यथा प्रामाण्यसंशयानुपपत्त्या नैयायिकानां स्वतस्त्वनिराकरणं साधु समर्थितं स्यादिति। तदा तदाहितार्थ-[7]संशयसंभवेन तत्र तन्मते व्यभिचारतादवस्थ्यम्। किं च यत्र प्रामाण्यतदभावरजतविषयकं स्मरणमुत्पद्यते तदनन्तरं रजतस्मृत्यनुव्यवसायः ततो रजतस्मरणे प्रामाण्यसंशयः ततोऽर्थसंशयः तत्रार्थे न्यायनये व्यभिचारो दुर्वार इति।

केचित्तु प्रामाण्यसंशयसामग्र्यनधिकरणत्वं स्वाश्रयाधिकरणविशेषणम्। तथा च यत्र धर्मिज्ञानात्प्रागेव प्रामाण्याप्रामाण्यरजतविषयकं व्यवसायरूपस्मरणमुत्पद्यते ततो धर्मिज्ञानं ततः प्रामाण्यसंशयः तत्र द्वितीयक्षणस्य संशयसामग्र्यधिकरणतया प्रथमक्षण एव [8]तदनधिकरणमिति तदवधिकचतुर्थक्षण एव [9]विषय-

---

1. ख. ०विषयकत्वेन
2. ख. कृतकत्वादि च न्याय-
3. ग. प्रत्यक्षवृत्तिः
4. ख. प्रामाण्यसंशयाभावे
5. ख. कृतत्वे
6. ख. न वेत्यकारणस्य
7. ख. 'संशय' नास्ति।
8. ग. तदधिकरण-
9. ग. 'विषयसंशय……तृतीयक्षण एव' इति ग्रन्थस्त्रुटितः।

## न्यायशिखामणिः

संशय इति नार्थे व्यभिचारः। गुरुमतानुसारेण यत्र विषये चतुर्थक्षणे संशय उपपादितः तत्र स्वाश्रयस्य द्वितीयक्षणः प्रामाण्यसंशयसामग्र्यधिकरणमेव। प्रथमक्षणस्य तदनधिकरणत्वेऽपि तदवधिकतृतीयक्षणे न विषयसंशय इति नार्थे तन्मतेऽपि व्यभिचार इत्याहुः।

तच्चिन्त्यम्। न हि तृतीयक्षण एव प्रामाण्यसंशयः येन द्वितीयक्षणः प्रामाण्यसंशयसामग्र्यधिकरणं स्यात्। किंतु तृतीयक्षणे यथा [1]धर्मिस्मृतिसाहित्यात् प्रामाण्यादिकोटिस्मृतितस्तत्संशयः तथा स्वप्रकाशरूपधर्म्यनुभवसहिता सा द्वितीयक्षणेऽपि तथेत्याद्यक्षण एव संशयसामग्र्यधिकरणम्। तथा च [2]प्रामाण्यसंशयसामग्र्यनधिकरणस्वाश्रयद्वितीयक्षणावधिकतृतीयक्षणे विषयसंशय इत्यर्थे व्यभिचारः। अस्तु वा तन्मते तृतीयक्षण एव प्रामाण्यसंशयः, तथापि यत्र पञ्चमक्षणे कदाचित् पुरोवर्तिस्मरणं तत्रोभयसंशयशरीरप्रविष्टधर्मिज्ञानरूपस्वाश्रयाधिकरणस्य तृतीयक्षणस्य प्रामाण्यसंशयसामग्र्यनधिकरणतया पञ्चमस्य तदवधिकतृतीयक्षणत्वेन तद्वृत्तिसंशयविषयेऽर्थे व्यभिचारतादवस्थ्यम्।

किं चैवं गुरुमते प्रामाण्यसंशयक्षणस्य स्वाश्रयजन्मक्षणावधिकं तृतीयत्वं वाच्यम्। जन्मक्षणश्च प्रामाण्यसंशयसामग्र्यधिकरणमेवेत्यन्यतरासिद्धिः।

अपि च न्यायमतेऽपि यत्र व्यवसायात्प्रागेव [3]कोटिस्मरणात्मकधर्मिज्ञानं यत्र वा घटज्ञान एव प्रामाण्याप्रामाण्यघटज्ञानान्युपनीतानि भासन्ते ततो द्वितीयक्षणे प्रामाण्यसंशयः तत्र विनश्यदवस्थतादृशसंशयविषयेऽर्थे दुष्परिहरो व्यभिचार इति।

जयदेवमिश्रास्तु—स्वाश्रये विद्यमाने सामान्यसामग्र्यव्यवहितोत्तरवृत्तिसंशयविषयत्वं हेतुत्वेन विवक्षितम्। अर्थस्यापि स्वाश्रयाभावकाले स्वारसिकसंशयविषयत्वेन तत्र व्यभिचारवारणाय स्वाश्रये विद्यमान इति विशेषणम्। तथा च तस्मिन् सति स्वारसिकस्य प्रतिबन्धादाहितस्य च प्रामाण्यसंशयं विना सत्यामपि सामान्यसामग्र्यामव्यवहितक्षणेऽनुत्पत्तेर्नार्थे व्यभिचारः। न च धर्मिज्ञानादिना स्वाश्रयविनाशाद्धेत्वसिद्धिरिति वाच्यम्। तद्वति तत्प्रकारकत्वमात्रमिह प्रामाण्यं

---

1. ख. धर्मस्मृति- ग. धर्मस्मृतिराहित्यात्
2. ग. 'प्रामाण्यसंशय······तृतीयक्षणस्य' इति ग्रन्थस्त्रुटितः।
3. ख. ग. घ. कोटिज्ञानात्मक-

### प्रकाशः

न च न्यायनये स्वाश्रयस्य धर्मिणो ज्ञानेन नाशात् कथं तद्धर्मिकः संशय इति वाच्यम्। धर्मिज्ञानेनैवोपनीते तत्र तत्संभवात्।

ननु रूपं गुण इति ज्ञानानन्तरं तज्ज्ञानरूपधर्मिज्ञानम्, ततो गुणत्वतदभावकोटिस्मरणम्, [1]ततस्तृतीयक्षणे प्रथमज्ञाने ज्ञानं गुणो वा न वेति संशयः, तत्र तादृश[2]संशयकोटित्वं गुणत्वेऽपि गतं स्वाश्रयग्राह्यत्वं (चेति) [च नेति] व्यभिचारः। न च साध्ये स्वपदस्य तृतीयक्षणवर्तिसंशयविषय[3]प्रामाण्यपरतया प्रकृते च तथा संशयाभावेन तादृशसंशयविषयप्रामाण्याश्रयग्राह्यत्वाभावरूपविशिष्टाभावसत्त्वेन साध्यसत्त्वान्नैवमिति वाच्यम्। गुणत्वतदभावप्रामाण्यतदभावकोटीनां समूहालम्बनस्मृतिसंभवेन समूहालम्बनसंशयस्यापि संभवात्। न च संशयविशेष्ये न स्वाश्रयग्राह्यमिति साध्यम्। कदाचित्तस्यापि संशयविशेष्यत्वात्। न च तृतीयक्षण-

---

### न्यायशिखामणिः

पक्षः, न त्वनुभवत्वगर्भम्। तथा च प्रामाण्यसंशयकाले स्मृतिरूपो यत्प्रामाण्याश्रयो व्यवसायो [4]जायते तत्प्रामाण्यस्यैव [5]पक्षत्वमन्यस्य पक्षबहिर्भाव एवेति न भागासिद्धिरित्याहुः।

तदपि चिन्त्यम्। अनुभवसामग्र्यपेक्षया स्मृतिसामग्र्या दौर्बल्येन प्रामाण्यसंशयर्थसंशययोर्मध्ये घटस्मरणायोगात्। किं चैवमपि व्यभिचारतादवस्थ्यम्। अर्थसंशयस्य विशेषहेतुजन्यस्यापि सामान्यसामग्रीजन्यत्वेन तदव्यवहितोत्तरक्षणवर्तित्वात्। न च मात्रपदान्तर्भावात्तन्निरासः। स्वारसिकस्यापि प्रामाण्यसंशयस्य विशेषादर्शनरूपविशेषहेतुजन्यत्वेन सामान्य[6]सामग्रीमात्राव्यवधानाभावादिति। तृतीयक्षणवर्तीति। तादृशतृतीयक्षणवर्तीत्यर्थः।

न च संशयेति। रूपं गुण इति [7]ज्ञानं गुणो न वेति संशयविषयत्वेऽपि रूपस्य तद्विशेष्यत्वाभावेन विशिष्टाभावरूपसाध्यसत्त्वान्न तत्र व्यभिचार इति

---

1. ख. ततश्च
2. ख. 'संशय' नास्ति।
3. ख. प्रामाण्याश्रयपर-
4. ख. ज्ञायते
5. क. पक्षत्वमस्य
6. ग. सामग्र्यव्यव-
7. ख 'ज्ञानं गुणो न वेति ...... इत्येव' इति ग्रन्थः नास्ति

प्रकाशः

वर्तिसंशयविशेष्ये इति विवक्षितम्, तथा च [1]रूपे गुणत्वग्राहिणापि स्वाश्रयेण तादृशसंशयविशेष्ये ज्ञानरूपे धर्मिणि गुणत्वाग्रहेण साध्यसत्त्वान्नोक्तदोष इति वाच्यम्। साधने व्यभिचारवारणार्थं साध्ये विशेषणोपादानानुपपत्तेः। किं चार्थे व्यभिचारवारणार्थं हेतौ [2]तृतीयक्षणपदं व्यर्थम्, विवक्षितसाध्यस्य तत्रापि सत्त्वादिति चेत्—

अत्र ब्रूमः। स्वाश्रयसमानाधिकरणतादृशतृतीयक्षणवर्तिद्विमात्रकोटिक-संशयकोटित्वं विवक्षितम्। साध्ये वा स्वपदं तादृशद्विमात्रकोटिकसंशयविषयप्रामा-ण्यपरम्। तथा च यत्र रूपं गुण इति ज्ञाने गुणत्वतदभावप्रामाण्यतदभावकोटि-

न्यायशिखामणिः

भावः। संशयविशेष्य इत्येव विवक्षितम्, तादृशसंशयविशेष्य इति वा। तत्राद्यं निराकृत्य द्वितीयमनूद्य [3]निरस्यति—**न चेति**। न केवलं प्रयोजनाभावात् साध्ये विशेषणोपादानवैयर्थ्यम्, अपि तु बाधकाभावादपीत्याह—**किं चार्थे** इति। घटत्वादेः [4]स्वाश्रयग्राह्यत्वेऽपि तादृशतृतीयक्षणवर्तिसंशयविशेष्यज्ञानरूप[5]धर्मिण्य-ग्रहेण विशिष्टाभावरूपविवक्षितसाध्यसत्त्वेन व्यभिचाराप्रसङ्गात् हेतौ तृतीयक्षण-वर्तिपदं व्यर्थं स्यादित्यर्थः।

ननु गुणत्वतदभावकोटिकसंशयमादाय गुणत्वे व्यभिचारतादवस्थ्यमित्य-परितुष्यन् आह—[6]**साध्ये वेति**। यत्र **साध्ये चेति** पाठः तत्र चशब्दो वाशब्दार्थः। साध्यविवक्षयैव द्विकोटिकस्थले चतुष्कोटिकस्थले च दोषनिरासेन समुच्चयवाचिचशब्दायोगादिति द्रष्टव्यम्।

यत्तु रूपं गुण इति ज्ञानप्रामाण्यस्य पक्षत्वे स्वपदेन पक्षीकृतप्रामाण्यपरेण गुणत्वेऽपि विशिष्टाभावरूपसाध्यसत्त्वात् व्यभिचारवारणे हेतौ द्विमात्रकोटिकत्व-विशेषणवैयर्थ्यापत्त्या तस्यावश्यं पक्षत्वं वाच्यम्। तथा च चतुष्कोटि[7]संशयविषये तज्ज्ञानप्रामाण्ये भागासिद्धिरित्यपरितोषादाह—[8]**साध्ये चेति** [चेतीति]।

1. क. रूपेण
2. ख. तृतीयक्षणवर्तिपदस्य वैयर्थ्यापत्तेः
3. क. निराकरोति
4. ख. स्वाश्रयाग्राह्य-
5. ख. धर्मिग्रहेण
6. ख. सिद्धे वेति।
7. ख. ०संशयाविषये
8. क. साध्ये वेति।

**प्रकाशः**

समूहालम्बनरूपसंशयस्तत्र गुणत्वे हेत्वभावादेव न व्यभिचारः। यत्र गुणत्वतदभावकोटिकसंशयस्तत्र तादृशसंशयविषयप्रामाण्याश्रय[1]ग्राह्यत्वाभावरूपविशिष्टाभावसत्त्वेन साध्यसत्त्वादेव न तत्र व्यभिचार इति।

---

**न्यायशिखामणिः**

तत्तुच्छम्। तस्य पक्षत्वेऽपि द्विमात्रकोटिकं संशयान्तरमादाय तत्र हेतुसत्त्वात्।

केचित्तु साध्ये द्विमात्र[2]कोटिकपदं प्रक्षिप्तम्, तादृशसंशयविषयप्रामाण्यपरमित्येव पाठः। साध्ये चेति चकारः समुच्चयार्थः। तथा च चतुष्कोटिसंशयस्थले हेत्वभावात् गुणत्वतदभावमात्रकोटिकसंशयस्थले साध्यसत्त्वान्न व्यभिचार इति फक्किकार्थो योज्य इत्याहुः।

तन्न मनोहरम्। स्वयं व्याख्यानकरणासामर्थ्येन सर्वग्रन्थस्थद्विमात्रकोटिकपदस्य प्रक्षिप्तत्वाभिधानस्यायुक्तत्वात्।

केचित्तु द्विमात्रकोटिकत्वं प्रामाण्याप्रामाण्यमात्रकोटिकत्वम्। तथा [3]च चतुष्कोटिकस्थले प्रामाण्यस्य तादृशसंशयविषयत्वाभावेन गुणत्वे विवक्षितसाध्यसत्त्वान्न व्यभिचार इत्यप्याहुः।

[4]हेतुसाध्यविशेषणयोः क्रमेण प्रयोजनमाह—तथा चेति। अत्रेदं चिन्त्यम्। किं हेतुसाध्य[5]विशेषणयोर्विकल्पः समुच्चयो वा। नाद्यः, हेतौ द्विमात्रकोटिकत्वविशेषणेऽपि गुणत्वे दोषानतिवृत्तिरित्युक्तत्वात्। साध्यगतस्वपदस्य प्रामाण्याप्रामाण्यमात्रकोटिकसंशयविषयप्रामाण्यपरत्वेऽपि रूपं गुण इति ज्ञानप्रामाण्यस्यैव कदाचित्तदुभयमात्रकोटिकसंशयविषयत्वेन [6]साध्यासत्त्वात्। अत एव न समुच्चयः। गुणत्वतदभावसंशयमादाय विवक्षितहेतुमति गुणत्वे तज्ज्ञानप्रामाण्यस्यापि कदाचित्तादृशसंशयविषयतया [7]साध्यासत्त्वेन व्यभिचारस्य वज्रलेपायितत्वात्।

---

1. क. °ग्राह्यत्वरूप-
2. क. कोटिपदं घ. कोटिकसंशयपदं
3. ख. 'च' नास्ति।
4. क. 'हेतुसाध्य......चिन्त्यम्। किम्' इति भागो नास्ति।
5. ग. 'विशेषण' नास्ति।
6. ख. ग. साध्यसत्त्वात्
7. ख. साध्यसत्त्वेन

## प्रकाशः

यत्तु स्वाश्रयानिवर्त्यसंशयविशेष्ये न स्वाश्रयग्राह्यत्वमित्यर्थः ।

## न्यायशिखामणिः

अत एव साध्य एव तद्विशेषणमित्यपास्तम् । किं च साध्ये विशेषणप्रवेशो अर्थान्तरम् । पक्षीभूतप्रामाण्याश्रयग्राह्यत्व एव विवादात् प्रवृत्त्यङ्गप्रामाण्य[1]मात्रस्य च विप्रतिपत्तौ पक्षत्वादिति [2]दिक् ।

वयं तु ब्रूमः । प्रमाण्यसंशयसामग्र्यनधिकरणसमानाधिकरण[3]प्रमाण्याप्रामाण्यमात्रकोटिकस्मरणाव्यवहितपूर्ववर्तिस्वाश्रयाधिकरणक्षणावधिकतृतीयत्वमिह विवक्षितम् । तथा च यत्र विषये गुरुमते चतुर्थक्षणे संशय उपपादितस्तत्र व्यभिचारवारणाय प्रामाण्यसंशयसमाग्र्यनधिकरणत्वं स्वाश्रयाधिकरणविशेषणम् । न्यायमते यत्र विषये तृतीयक्षणे संशयस्तत्र तद्वारणाय कोटिस्मरणाव्यवहितपूर्ववर्तीति स्वाश्रयविशेषणम् । [4]गुरुमते पञ्चमक्षणेऽपि यदा धर्मिज्ञानमुत्पद्यते तदा चतुर्थक्षणोत्पन्नस्वतन्त्रतद्वत्त्वादिकोटिस्मरणाव्यवहितपूर्ववर्तिधर्मिज्ञानरूपस्वाश्रयाधिकरणक्षणावधिकतृतीयतया पञ्चमस्य तद्वृत्तिविनश्यदवस्थसंशयविषये अर्थे दोषवारणायोक्तं प्रामाण्याप्रामाण्यकोटिकेति । चतुष्कोटिकसंशयस्थले गुणत्वे तद्वारणाय मात्रेति । रूपं गुण इति ज्ञानप्रामाण्यस्य पक्षत्वेऽपि तस्य प्रामाण्याप्रामाण्यमात्रकोटिकसंशयेऽपि कदाचिद्विषयत्वात् संशयाविषयप्रामाण्यत्वचतुष्कोटिकसंशयमात्रविषयप्रामाण्यविशेषस्यापक्षत्वान्न भागासिद्धिः । न चैवमन्यतरासिद्धितादवस्थ्यम् । यत्र निरन्तरोत्पन्नधर्मिज्ञानद्वयानन्तरं [5]प्रामाण्याप्रामाण्यकोटिस्मृतिस्तत्र तृतीयक्षण एव प्रामाण्यसंशय इति प्रथमक्षणस्तादृशस्वाश्रयाधिकरणमिति [6]नोक्तदोष इति संक्षेपः ।

केचित्तु रूपं गुण इति ज्ञानप्रामाण्यं न पक्षः । तथा च गुणत्वे पक्षीकृतप्रामाण्याश्रयग्राह्यत्वाभावरूपसाध्यसत्त्वान्न व्यभिचार इत्याहुः । [7]तच्चिन्त्यम् । उक्तप्रकारेण पक्षासंकोचोपपत्तौ तत्संकोचकल्पनानौचित्यात् ।

1. क. 'मात्र' नास्ति ।
2. क. 'दिक्' नास्ति ।
3. ख. 'प्रामाण्य' नास्ति ।
4. ख. ग. घ. 'गुरुमते' इति नास्ति ।
5. क. प्रामाण्यकोटि-
6. क. 'नोक्तदोष इति' नास्ति
7. क. तदपि चिन्त्यम्

## प्रकाशः

अस्ति च [1]स्वाश्रयानिवर्तनीयस्वाश्रयगोचरप्रामाण्यसंशयस्तदाहितार्थसंशयश्च। तथा च रूपे गुणत्वग्राहिणा ज्ञानेन ज्ञाने [2]गुणत्वाग्राहिणा व्यभिचाराभावेऽपि तदनिवर्त्यप्रामाण्यसंशयाहितार्थसंशयविशेष्येऽर्थे [3]तत्तद्घटत्वादिग्राहिणा मा भूद्व्यभिचार इति तृतीयक्षण इत्यादि हेतुविशेषणमिति।

तच्चिन्त्यम्। रूपेऽपि तदाहितार्थसंशय[4]विशेष्यत्वसंभवे तत्र गुणत्वग्राहिणा ज्ञानेन उक्तव्यभिचारतादवस्थ्यात्।

अप्रामाण्यसंशयेति। नन्वर्थे व्यभिचारः, अप्रामाण्यसंशयाजन्यसंशयस्यापि तत्र संभवात्। न च नञ्व्यत्यासेना[5]प्रामाण्यसंशयजन्यसंशयाविषयत्वमर्थः। तादृशसंशयाविषयीभूतार्थविशेषे व्यभिचारात्। न च तादृशसंशयायोग्यत्वं [6]तन्त्रमिति वाच्यम्।

---

## न्यायशिखामणिः

जयदेवमतमाह—यच्चेति। प्रामाण्यसंशयस्य स्वविरोधिनिश्चयनिवर्त्यत्वादनिवर्तनीयत्वमसिद्धमित्यत उक्तं स्वाश्रयेति। न चैवमपि गुरुमते असिद्धिः स्वाश्रयस्य प्रामाण्यनिश्चयत्वादिति वाच्यम्। स्वाश्रयत्वेन [7]तदनिवर्तनीयत्वस्य विवक्षितत्वात्, अनुमानिकप्रामाण्यनिश्चयस्यापि परैस्तन्निवर्तकत्वाभ्युपगमादिति भावः।

व्यभिचारेति। न च तादृशतृतीयक्षणवर्तित्वमपि संशयविशेषणम् अतो नोक्तदोष इति वाच्यम्। तथा सति हेतुविशेषणवैयर्थ्यतादवस्थ्यात्। न च सर्वं ज्ञानं गुण इति ज्ञानेन [8]ज्ञानमात्रे गुणत्वग्राहकेण तृतीयक्षणवर्तिप्रामाण्यसंशयविशेष्येऽपि तज्ज्ञाने गुणत्वग्रहेण [9]तदाहितचतुर्थक्षणवर्तिसंशयविषये गुणत्वे मा भूद्व्यभिचार इति तृतीयक्षणवर्तीति हेतुविशेषणमिति वाच्यम्। सर्वं ज्ञानं गुण

---

1. ख. स्वाश्रयनिवर्तनीय-
2. ख. गुणत्वग्राहिणा
3. क तद्घटत्वादि-
4. ख. विशेष्यासंभवे
5. ख. ॰अप्रामाण्यसंशयाजन्य-
6. ख. विवक्षितमिति
7. क. तन्निवर्तनीयस्य
8. ख. ज्ञानमात्रेण
9. क. तदा चतुर्थ-

प्रकाशः

[1]असिद्धेः [2]पक्षीभूतप्रामाण्यस्यापि स्वगोचर[3]ज्ञानाप्रामाण्यसंशयजन्यसंशयविषयत्वादिति चेत्—न । स्वाश्रयविशेष्यकाप्रामाण्यसंशयजन्यसंशयायोग्यत्वस्य विवक्षितत्वात् । न च स्वाश्रयेत्यादिविशेषण[4]मसिद्धिवारकतया व्यर्थमिति वाच्यम् । वस्तुमात्रस्यैव स्वगोचरज्ञानाप्रामाण्यसंशयजन्यसंशययोग्यत्वेनाप्रसिद्धिवारकतया व्याप्तिग्रहौपयिकत्वात् । एवं चात्र हेतौ पक्षविशेषणं [5]न देयमिति ध्येयम् ।

न्यायशिखामणिः

इति ज्ञानरूपधर्मिज्ञानद्वितीयक्षणजनितकोटिस्मृतिजन्यप्रामाण्यसंशयाहितसंशयस्यापि गुणत्वे संभवेन तत्र व्यभिचारतादवस्थ्यादिति भावः ।

संशयाविषयत्वं किं सशयफलानुपहितत्वम् उत तद्विषयत्वायोग्यत्वम् । आद्यं [6]निराकृत्य द्वितीयमनूद्य दूषयति—न चेति । प्रामाण्यगोचरज्ञानस्य यत् प्रामाण्यं प्रामाण्यवद्विशेष्यकत्वं तत्संशयजन्येत्यर्थः । एवं चेति । एतच्च भागासिद्धिवारणं पक्षविशेषणप्रयोजनमिति मतेन । तत्र विवक्षितहेतोः सर्वप्रामाण्यसाधारणतया भागासिद्धिशङ्काविरहात् । बाधवारणं तत्प्रयोजनमिति मते तु अनभ्यासदशापन्नेति विशेषणमत्राप्युपादेयमेवेति ध्येयम् ।

ननु प्रमेयत्वादावप्रामाण्यसंशयजन्यसंशयायोग्यत्वमस्त्येव । प्रमेयत्वाभावकोटेरप्रसिद्धतया तद्घटिताप्रामाण्यसंशयस्याप्रसिद्धत्वेन तज्जन्यसंशयायोग्यत्वस्य तत्र प्रसिद्धत्वात् । न चैवं प्रतियोग्यप्रसिद्ध्या तदभावाप्रसिद्धिः । तस्य घटत्वादावेव प्रसिद्धतया तदभावस्य प्रमेयत्वादौ प्रसिद्धत्वात् । तथा च तत्र व्यभिचार इति चेत्—

न हि भावरूपाप्रामाण्यमेवाप्रामाण्यशब्दार्थः । किं तु प्रामाण्याभावोऽपि । तस्य च [7]प्रमेयत्ववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वाभावस्य घटज्ञानादौ प्रसिद्धतया प्रमेयत्वस्य तत्संशयजन्यसंशययोग्यत्वेन तत्र हेत्वभावादिति भावः ।

---

1. क. असिद्धपक्षी-
2. ख. पक्षीभूतस्याप्रामाण्यस्य स्व-
3. ख. ज्ञानप्रामाण्य-
4. ख. ॰मसिद्धिमात्रवारक-
5. ख. अनादेय-
6. क. निरस्य
7. ख. प्रमेयत्ववद्विशेष्यकत्वाभावस्य

### प्रकाशः

यद्वा अप्रामाण्यपदं पक्षीभूतप्रामाण्यविरोध्यप्रामाण्यपरम् । तत्संशयजन्यसंशयायोग्यत्वमर्थः[1] ।

ननु प्रामाण्यसंशयानन्तरं दोषवशात् प्रामाण्याश्रयो रजतं न वेति तदाहितार्थसंशयविषयतया पुनरप्यप्रसिद्धिरिति चेत्— मैवम् । [2]तादृशाप्रामाण्यसंशयनिष्ठकारणताप्रतियोगिकसंशयनिष्ठकार्यतायां यद्विषयत्वं नावच्छेदकं तत्त्वस्य विवक्षितत्वात् । एवं च नाप्रसिद्धिः । प्रामाण्यविषयत्वस्य तत्रानवच्छेदकत्वात् । व्यवसाय[3]विषयत्वस्यैव तथात्वात् । न च प्रामाण्यसंशयजन्यधारावाहिकसंशय[4]विषयतया तथाप्यसिद्धिरिति वाच्यम् । पूर्वप्रामाण्यसंशयस्य तत्त्वेनोत्तरसंशयं प्रत्यप्रयोजकत्वात् । कोटिद्वयोपस्थितित्वेनैव तस्य तन्त्रत्वात् । अप्रामाण्यवदिति । पक्षीभूत[5]प्रामाण्यविरोध्यपामाण्यवदित्यर्थः ।

---

### न्यायशिखामणिः

ननु यत्र पक्षीभूतप्रामाण्याश्रये दोषवशात् घटत्ववद्विशेष्यकत्व[6]प्रामाण्यवद्विशेष्यकत्वरूपप्रामाण्यतदभावसंदेहस्तत्र घटत्ववद्विशेष्यकत्वस्य तज्जन्यसंशययोग्यत्वात् तदयोग्यत्वरूपहेतोरसिद्धिः । किं च यत्र रजते रजतत्वप्रकारकं रजत[7]ज्ञानांशे च रजतत्ववद्विशेष्यकत्वरूपप्रामाण्यप्रकारकं समूहालम्बनमुत्पद्यते तज्ज्ञानं रजतत्ववद्विशेष्यकत्वरूपस्य प्रामाण्यवद्विशेष्यकत्वरूपस्य च प्रामाण्यस्याश्रयः । तथा च [8]तद्विशेष्यकाप्रामाण्यसंशयजन्यसंशययोग्यता रजतत्ववद्विशेष्यकत्वरूपप्रामाण्यस्येति [9]तत्राप्यसिद्धिर्दुर्वारेत्यस्वरसाज्जयदेवमतमाह—यद्वेति । अत्र मते स्वाश्रयपदस्य नानुषङ्गः । पक्षीभूतपदेनैवोक्तदोषवारणे [10]तद्वैयर्थ्यं स्यादिति बोध्यम् ।

कोटिद्वयोपस्थितित्वेनेति । एतच्च संशये कोट्युपस्थितिर्विशेषहेतुरिति मतेन । वस्तुतो विशेषण[11]ज्ञानत्वेन द्वितीयादिसंशयहेतुत्वं प्रामाण्यसंशयस्येति ध्येयम् ।

---

1. ख. ०त्वमित्यर्थः
2. ख. तादृशप्रामाण्य-
3. ख. ०विषयकत्व-
4. ख. ०विषयकतया
5. ख. ०प्रामाण्यसंशये कोटिभूताप्रामाण्य-
6. ग. 'प्रामाण्यवद्विशेष्यकत्व' नास्ति ।
7. क. ०ज्ञानादौ च
8. घ. तद्विशेष्यकप्रामाण्य-
9. क. घ. तत्राप्यप्रसिद्धि-
10. क. तद्वैयर्थ्यादिति
11. क. ०ज्ञानत्वेनैव

अर्थे निश्चितेऽपि न तन्निश्चयानन्तरतृतीयक्षणे अर्थसंशयो न वा प्रामाण्यसंशयं विनेति नार्थे व्यभिचारः। विवादपदं न यावत्स्वाश्रयग्राहकग्राह्यम्, स्वाश्रयनिश्चये सति तत्तदुत्तरतृतीयक्षणे अप्रामाण्यसंशयं विना वा संदिह्यमानत्वात् अप्रामाण्यवत्।

---

**प्रकाशः**

भट्टमिश्रमते स्वतस्त्वं निराकरोति—**विवादेति**।

केचित्तु त्रितयसाधारणं स्वतस्त्वं निराकरोति—**विवादेति** इत्याहुः। विप्रतिपत्तौ यथा साध्यमुक्तं तदभाव इह साध्यं ज्ञेयम्। अत्रापि स्वाश्रयनिश्चय [1]इति सप्तमीबलात् स्वाश्रयनिश्चयसामानाधिकरण्यं लभ्यते।

तदुत्तरेत्यत्र तत्पदेन स्वाश्रयो न विवक्षितः। किंतु तन्निश्चय एव। अन्यथा भट्टमतेनासिद्धिः स्यात्। तत्रानुमित्युपनीते ज्ञाने तत्संशय इत्यनेकक्षणेन

---

**न्यायशिखामणिः**

ननु [2]रजतज्ञानमप्रमाणमिति ज्ञानवृत्तिप्रामाण्यस्याप्रामाण्यवद्विशेष्यकत्वरूपस्य [3]पक्षत्वे अप्रामाण्यमात्रस्य [4]न दृष्टान्तत्वं युक्तम्। तद्घटकाप्रामाण्यस्य तादृशतृतीयक्षणवर्तिसंशय[5]कोटित्वाभावेन तादृशाप्रामाण्यसंशयजन्यसंशयविषयत्वेन च [6]हेतुद्वयवकल्यादित्यत आह—**पक्षीभूतेति**।

ननु [7]गुरुमते साध्ये ग्राहकपदवैयर्थ्यमित्याशङ्क्य तत्रोपाध्यायमतमाह—**भट्टेति**। नन्वस्य त्रितयसाधारण्यमेव, अखण्डाभावे वैयर्थ्याभावात्, अन्यथा विप्रतिपत्तावगतेरित्यपरितोषात् जरत्पक्षधरमतमाह—**केचित्त्विति**। यथाश्रुतसाध्ये सिद्धसाधनादाह—**विप्रतिपत्ताविति**। ननु स्वाश्रयनिश्चय इत्यनेन संशयस्य [8]तज्जन्यत्वोक्तौ विषयसंशयस्य स्वाश्रयनिश्चयजन्यत्वाभावेन तद्वारकतृतीयक्षणवर्तिपदवैयर्थ्यमित्यत आह—**सप्तमीबलेनेति**। [सप्तमीबलादिति]

---

1. ख. 'इति' नास्ति।
2. ख. ग. घ. रजतज्ञानं प्रमाण-
3. क. पक्षत्वेऽपि
4. ख. 'न' नास्ति।
5. क. °कोटिकत्वा-
6. क. ख. हेतुत्वद्वय-
7. ख. गुरुसाध्ये
8. क. तज्जन्यत्वोक्त्या

प्रकाशः

तदुत्पादनात् । अत्रापि [1]द्विमात्रकोटिकत्वं संशये विशेषणम् । साध्ये च स्वपदं तादृशसंशयविषयप्रामाण्यपरम् । अतो न पूर्वोक्तगुणत्वादौ व्यभिचारः । न च यत्र ज्ञानत्वेन सामान्यलक्षणप्रत्यासत्त्या [2]ज्ञानशब्देन वा स्वाश्रयग्रहस्तत्र गुणत्वादेरग्रहात् यावत्स्वाश्रयग्राहकग्राह्यत्वस्य तत्राभावात् व्यभिचारप्रसङ्ग एव [3]न तत्रेति वाच्यम् । तज्ज्ञानप्रकारीभूतप्रकारकत्वादिना ग्राहकस्यावश्यं विशेषणीयत्वात् । अन्यथा सिद्धसाधनतापत्तेः ।

[4]**अप्रामाण्यसंशयं विना (चेति)** [वेति] । स्वाश्रयनिश्चय[5]विशेष्यकाप्रामाण्यसंशयजन्यसंशयायोग्यत्वादित्यर्थः ।

---

न्यायशिखामणिः

**स्वाश्रयो न विवक्षित** इति । इदं चापाततः । गौरवेण स्वाश्रयनिश्चयस्य तत्पदेन परामर्शायोगात् । न चैवं भट्टमते हेत्वसिद्धिः । ज्ञानानुमितिपूर्वक्षणेऽपि तन्मते व्यवसायोत्पत्त्यभ्युपगमात् । अन्यथा ज्ञानानुमितेः स्ववृत्तिवर्तमानज्ञानग्राहकत्वाभावेन [6]प्रामाण्याग्राहकत्वप्रसङ्गात् । तस्मात् तत्पदेन स्वाश्रयस्यैव परामर्श इत्यालोचयामः ।

**अत्रापीति** । यद्यपि साध्ये हेतौ च विशेषणोपादानेऽपि गुणत्वे व्यभिचारतादवस्थ्यम् । यत्र द्वितीयक्षणे प्रामाण्यसंशयाद्विषयसंशयस्तत्र घटत्वादौ व्यभिचारश्च । तथापि प्रामाण्यसंशयसामग्र्यनधिकरणेत्यादिविशेषणमत्रापि बोध्यम् । **तादृशेति** । स्वाश्रयाधिकरणक्षणावधिकतृतीयक्षणवर्तीत्यर्थः । **न चेति** ।

यद्यपि विप्रतिपत्तावित्युक्तत्वादाशङ्कानुपपत्तिः । तथापि विप्रतिपत्तौ मूलोक्तं यादृशं साध्यं तदभावः साध्यत्वेनात्र विवक्षित इति मन्वानस्येयमाशङ्केत्यवधेयम् ।

**स्वाश्रयनिश्चयेति** । अत्र यथाश्रुतं लिङ्गमर्थे व्यभिचारीति तद्वारणाय नञ्व्यत्यासेन प्रामाण्यसंशयजन्य[7]संशयायोग्यत्वं विवक्षितम् । तत्र च प्रामाण्यपदं

---

1. ख. द्युमात्र-
2. क. ज्ञानशक्त्येन
3. ख. 'न' नास्ति ।
4. क. प्रामाण्य-
5. क. °विशेष्यकप्रामाण्य-
6. ख. ग. घ. प्रामाण्यग्राहक-
7. ख. संशययोग्य-

प्रकाशः

एतेन प्रामाण्यपदस्य पक्षीभूतप्रामाण्यपरत्वे घटत्वप्रकारकत्वादौ व्यभिचारः। प्रामाण्य[1]मात्रपरत्वेऽसिद्धिरित्यपास्तम्। घटत्वप्रकारत्वादेः स्वाश्रयनिश्चयविषयतया तन्निष्ठप्रामाण्यसंशयजन्यसंशययोग्यत्वात् पक्षीभूतप्रामाण्यस्य तदविषयतया तादृश[2]संशयायोग्यत्वाच्च।

यद्यप्येवमन्यतरासिद्धिः, परैः प्रामाण्यस्य स्वाश्रयनिश्चयविषयत्वाङ्गीकारेण तन्मते तस्य संशययोग्यत्वात्। तथापि स्वमतेनैव हेतुत्वं बोध्यम्।

न्यायशिखामणिः

पक्षीभूतप्रामाण्यपरम्। अन्यथा प्रामाण्यानुमितिरूप[3]स्वाश्रयनिश्चयविशेष्यकप्रामाण्यसंशयजन्यसंशययोग्यत्वं प्रामाण्यस्येत्यसिद्धिप्रसङ्गादिति द्रष्टव्यम्।

विशेष्यपरसप्तम्यन्तेनानुषक्तस्वाश्रयनिश्चयपदेन प्रामाण्य[4]संशयस्य लब्धं यत् स्वाश्रयनिश्चयविशेष्यकत्वं तस्य प्रयोजनमाह—एतेनेति। असिद्धिरिति। सर्वस्यापि स्वगोचरज्ञानप्रामाण्यसंशयजन्यसंशययोग्यत्वादिति भावः। उभयत्र द्वितीयहेतोरन्यतरासिद्धिमाशङ्क्य निराकरोति—यद्यपीति। प्रामाण्यस्य प्राभाकरैः स्वाश्रयविषयत्वस्य मीमांसकैः स्वाश्रयनिश्चयविषयत्वस्य [5]चाङ्गीकारेण परमते तस्य स्वाश्रयविशेष्यकप्रामाण्यसंशयजन्यसंशये [6]तन्निश्चयविशेष्यकप्रामाण्यसंशये च [7]विषयत्वयोग्यत्वात् तदयोग्यत्वहेतोरन्यतरासिद्धिर्दुर्वारेत्यर्थः। तथापीति। कृतकत्वादिवत् प्रसाध्याङ्गकोऽयं हेतुरिति भावः।

ननु यत्र साध्यसिद्धिं विना हेत्वन्तरेण [8]साधनं साध्यते तत्रैव हेतोः प्रसाध्याङ्गकत्वं न दोषाय। यथा [9]शब्दानित्यत्वे [10]कृतकत्वस्यासिद्धिशङ्कायाम् उत्पन्नो गकार इति प्रत्यक्षेणानित्यत्वसिद्धिं विनैव हेतुसत्त्वं [11]साध्यते। न चेह

1. क. 'मात्र' नास्ति।
2. ख. °संशयायोग्य-
3. ख. °स्वाश्रयविनिश्चय-
4. ग. संशयपदस्य
5. क. चाङ्गी-
6. क. 'तन्निश्चय……संशये च' नास्ति।
7. ख. ग. घ. 'विषयत्व' नास्ति।
ग. योग्यत्वादिति भावः। उभयत्र द्वितीयहेतोरन्यतरा-
8. क. साध्यं
9. घ. शब्दनित्यत्वे
10. ख. कृतकस्या-
11. क. साध्यम्।

यद्वा अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यम् एतत्प्रामाण्यसंशयपूर्वकालीनैतज्ज्ञाननिश्चयाविषयः, एतज्ज्ञाननिश्चयानन्तरं संदिह्यमानत्वात् अप्रामाण्यवत् ।

---

**प्रकाशः**

यद्वा (पूर्वास्वरसादाह) [एतदस्वरसादाह]—यद्वेति । एतत्पदार्थपरिचयार्थमनभ्यासदशेत्यादिविशेषणम्, न तु व्यावर्तकम् । एतत्पदेनैव विशेषलाभात् ।

---

**न्यायशिखामणिः**

स्वतस्त्वाभावनिश्चयं विना हेतुनिश्चयः संभवति । अन्यथा प्रकृतसाध्यनिश्चयाधीननिश्चयविषयस्यापि प्रसाध्याङ्गकतया हेतुत्वे वायोः प्रत्यक्षत्वादौ साध्ये प्रत्यक्षसामग्र्याश्रयत्वादिरपि हेतुः स्यादिति चेत्—

किं प्रकृतसाध्यनिश्चयाधीनसिद्धिकत्वेनान्योन्याश्रय[1]प्रासाद्धेतुसिद्धिरेव नेत्यभिमतम्, हेत्वन्तरादेव प्रकृतसाध्यसिद्धौ सिद्धस्य हेतोर्न तत्सिद्धिः प्रयोजनमिति वा । नाद्यः, संशयानुपपत्तिलक्षणप्रतिकूलतर्केण स्वतस्त्वानुमाने पूतिकूश्माण्डीकृते तदभावस्यार्थसिद्धत्वेन प्रकृतहेत्वनपेक्षत्वात् । नान्त्यः, प्रकृतलिङ्गकपरतस्त्वसिद्धेरुद्देश्यत्वात् ।

किं च परतस्त्वसाधनायात्रापि स्ववृत्तिवर्तमानज्ञान[2]ग्राहकातिरिक्तमात्रग्राह्यत्वादिरूपं साध्यान्तरमध्याहार्यम् । तथा चोभयत्रापि साध्यद्वये [3]प्रथमसाध्ये प्रथमो हेतुः द्वितीयसाध्ये द्वितीय इति विवक्षितम् । [4]एवं चास्य प्रथमसाध्यसिद्ध्यधीनसिद्धिकत्वेऽपि न प्रकृतद्वितीयसाध्यनिश्चयापेक्षेति न प्रसाध्याङ्गकत्वविरोधः । वायोः प्रत्यक्षसामग्र्याश्रयत्वे तु तत्साधकमानाभावादेव न प्रसाध्याङ्गकता ।

ननूभयत्र प्रथमहेतौ गुणत्वादौ व्यभिचारः । तद्वारकविशेषणं च वक्ष्यमाणरीत्या तदनन्तर्भावेणैव साध्यहेतुसंभवेन गौरवादयुक्तम् । द्वितीयहेतुश्च [5]प्रामाण्यसंशयहेतुत्वानङ्गीकारवादिमते असिद्ध एवेत्यरुचेराह—यद्वेति । एतदस्वरसादिति । एतस्मादेव गौरवासिद्धिरूपास्वरसादित्यर्थः । बाधेति । न्यायमतेऽप्येतज्ज्ञाननिश्चयरूपप्रामाण्यानुमितिविषयत्वादित्यर्थः ।

---

1. ख. ०ग्रहात्
2. घ. ग्राहकत्वाति-०
3. ख. ग. घ. 'प्रथमसाध्ये' नास्ति ।
4. क. तथा चास्य
5. ख. अप्रामाण्य-

प्रकाशः

बाधवारणाय [1]पूर्वकालीनेत्यन्तमुक्तम् । पूर्वकालीनपदमप्यव्यवहितपूर्वकालीनपरम्, विनश्यदवस्थस्य तदा सत्त्वात् । [2]एतज्ज्ञाननिश्चयानन्तरम् तृतीयक्षण इति शेषः । यज्ज्ञाननिश्चयानन्तरतृतीयक्षणे गुणत्वादिकोटिकसंशय एव न जातः तदेव ज्ञानमेतत्पदेनोक्तमिति न पूर्वोक्तगुणत्वादौ व्यभिचार इति दिक् ।

ननु तत्त्वं स्वतस्त्वं तदन्यत्वं परतस्त्वमिति कोट्योर्विरोधात् अस्तु संशय

न्यायशिखामणिः

नन्वेवमपि बाधः । प्रामाण्यसंशयात्पूर्वं दिनान्तरे तस्य प्रामाण्यानुमित्यादिरूप[3]तज्ज्ञाननिश्चयविषयत्वादित्यत आह—अव्यवहितेति । नन्वेवं सिद्धसाधनम्, अनुव्यवसायानन्तरं कोटिद्वयस्मरणं ततः कोट्योर्विरोधभानं ततः संशय इति संशयाऽव्यवहितपूर्वक्षणे [4]तस्यासत्त्वादित्यत आह—विनश्यदिति । कोटिद्वयस्मृतिरेव विरोध[5]भानात्मिका संशयहेतुः न तु [6]पृथग्विरोधज्ञानमिति संशयाऽव्यवहितपूर्वक्षणे विनाश[7]सामग्रीयुक्तं स्वाश्रयनिश्चयात्मकं ज्ञानमस्त्येवेति भावः । अर्थे व्यभिचारवारणायाह—तृतीयक्षण इति ।

नन्वेवमप्यर्थे व्यभिचार एव । एतज्ज्ञाननिश्चयस्थितिक्षणात्रधिकतृतीयक्षणे संदिह्यमानत्वात् । जन्मक्षणविवक्षायां च कोटिज्ञानात्मकतन्निश्चयानन्तरं द्वितीयक्षणे यत्र प्रामाण्यसंशयस्ततो विषयसंशयस्तत्रार्थे व्यभिचारः । किं च प्रामाण्यानुमितेरपि व्यधिकरणप्रामाण्यसंशयाऽव्यवहितपूर्वकालीनतया पक्षे साध्यासत्त्वाद्बाध इत्यत आह—दिगिति ।

जन्मक्षण एव विवक्षितः । यज्ज्ञाननिश्चयानन्तरं तृतीयक्षण एव प्रामाण्यसंशयस्तदेव ज्ञानमत्र तत्पदेनोक्तमिति नार्थे व्यभिचारः । समानाधिकरणत्वस्य संशयविशेषणत्वान्न बाध इति समाधानमत्र द्रष्टव्यम् ।

1. ख. 'पूर्व' नास्ति ।
2. ख. 'एतद्' नास्ति ।
3. ग. °तन्मान-
4. ख. तस्य सत्त्वा-
5. ख. °भानार्थिका
6. ख. प्रथमं विरोध-
7. ग. °सामग्र्यायत्तं

न च स्वपदस्य प्रामाण्यमात्रपरत्वात् तदाश्रयाग्राह्यत्वेन बाधः। स्वपदस्य संबन्धिपरत्वेन समभिव्याहृतपरत्वात्। अन्यथा स्वस्य परत्वात्

---

### प्रकाशः

इत्यत आह—तदिति। अन्यथा[1]ग्राह्यत्वमित्यस्य विवरणं परतो[2]ग्राह्यत्वमिति। कश्चिदित्यनेन प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वा[3]दित्यपेक्षया

---

### न्यायशिखामणिः

वस्तुतस्तु संशयपूर्वकालीनत्वं साध्ये न प्रवेश्यम्। तथा सति एतन्निश्चय-[4]विषयत्व एव विवादेनार्थान्तरप्रसङ्गात्। किं तु यावदेतज्ज्ञाननिश्चयाविषयत्वं साध्यम्। एतज्ज्ञान[5]प्रकारीभूतत्वादिना च निश्चयविशेषणान्न सिद्धसाधनम्। एतत्प्रामाण्यसंशयपूर्वकालीनपदं च एतज्ज्ञाननिश्चयो नैतज्ज्ञानप्रामाण्यविषयकः [6]एतज्ज्ञानप्रामाण्यसंशयाव्यवहितपूर्वकालीनत्वादित्यनुमानान्तरसूचकमिति न वैय-र्थ्यमिति प्रतिभाति।

[7]तत्त्वमिति। एतच्चोपलक्षणम्। एतत्त्वमेतदन्यत्वमित्यपि द्रष्टव्यम्। स्वतस्त्वं स्वतस्त्वघटकम्। परतस्त्वं परतस्त्वघटकम्। तथा च तत्त्वतदन्यत्वयो-र्विरोधेन तद्घटकयोस्तज्ज्ञानग्राह्यत्व[8]तज्ज्ञानान्यग्राह्यत्वरूपस्वतस्त्वपरतस्त्वकोट्यो-र्विरोधादस्तु संशय इत्यर्थः।

जयदेवमतमाह—कश्चिदित्यनेनेति। ननु प्रामाण्यस्य परमते [9]स्वाश्रय-तन्निश्चयविषयतया पक्षीभूत[10]प्रामाण्यसंशयजन्यसंशययोग्यत्वेन तदयोग्यत्वरूपहेतो-रन्यतरासिद्धिशङ्कायां स्वतस्त्वाभावसाधकानुमानापेक्षेरनुमानद्वयकल्पनं परतस्त्व-सिद्धौ [11]मणिकृताऽपि तुल्यमित्याशङ्क्य, तादृशतृतीयक्षणवर्तिसंशयविषयत्वस्वरूप-

---

1. क. °ग्राह्यमित्यस्य
2. क. °ग्राह्यमिति
3. ख. 'इत्यपेक्षया·····सांशयिकत्वात्' इति ग्रन्थस्त्रुटितः।
4. ख. °विशेषत्व
5. घ. प्रकारिभूत-
6. ख. एतत्प्रामाण्य-
7. क. 'तत्त्वमिति·····द्रष्टव्यम्' इति ग्रन्थो नास्ति।
8. ग. तज्ज्ञानाग्राह्यत्वं
9. क. स्वाश्रयनिश्चय-
10. क. °प्रामाण्यनिश्चय-
11. क. मणिकृन्मतेऽपि

परस्य च स्वत्वात् तदेतत्त्वस्य तदेतदन्यत्वस्य च स्वपरसाधारणत्वात् स्वतः परतो वेति संशयो न स्यात्। प्रामाण्यस्य स्वग्राह्यत्वे बाधात् परिशेषेणान्यथाग्राह्यत्वं परतो ग्राह्यत्वमिति कश्चित्।

---

प्रकाशः

अस्वरसो दर्शितः। तद्बीजं तु न प्रामाण्यं स्वतो ग्राह्यं सांशयिकत्वात्। तथा च परतो ग्राह्यं स्वतोऽग्राह्यत्वे सति ग्राह्यत्वादित्यनुमानद्वयकल्पनागौरवमित्याहुः।

केचित्तु ग्राह्यत्वस्य केवलान्वयित्वेनाव्यावर्तकतया व्यर्थत्वमित्यस्वरस इत्याहुः।

अत्रेदं चिन्त्यम्। न [1]संशयानुपपत्तिः स्वतस्त्वे बाधिका। तथा हि—एवं हि रजतत्वादिजातिरपि व्यक्तिग्राहकग्राह्या न स्यात्। अनभ्यासदशायां रङ्गं रजतं वेति संशयानुपपत्तेः। तद्धेतुधर्मिज्ञानस्यैव रजतत्वादिविषयतया विशेषदर्शनत्वात्।

न्यायशिखामणिः

हेतोः [2]स्वरूपसिद्ध्यर्थमनुभवापेक्षत्वेऽप्यनुमानानपेक्षत्वा[3]त्तदपेक्षयैवायमस्वरसोऽभिमत इत्याह—प्रामाण्यमिति।

केचिदित्यस्वरसोद्भावनम्। तद्बीजं तु परिशेषानुमाने स्वतोग्राह्यत्वमेव लिङ्गम्, न तु ग्राह्यत्वमपि। तथा च स्वयमेव [4]विशेषणान्तरं प्रक्षिप्य व्यर्थविशेषणत्वोक्तिरयुक्तेति।

संशयानुपपत्तिलक्षणप्रतिकूलतर्केण [5]स्वतस्त्वं निराकृत्य तद्रूपतर्कानुग्रहेण यत् परतस्त्वं [6]साधितं तदेतद्दूषयति—अत्रेदमिति। किं संशयानुपपत्तेः स्वतस्त्वबाधकत्वम्, उत ग्राहकसामग्रीविरहस्य। तत्राद्यं दूषयति—[7]न संशयानुपपत्तिरिति। परमुखेन संशयमुपपादयितुं प्रतिबन्दीमाह—एवं हीति। व्यक्तीति। यावद्व्यक्ति प्रत्यक्षविषयो न स्यादित्यर्थः। रजतत्वसंशयात्पूर्वं धर्मिज्ञानमस्ति न वा।

---

1. क. तत्संशया-
2. क. ख. ग. स्वरूपासिद्ध्यर्थं-
3. ग. तदपेक्षतयैव-
4. क. विशेषणं
5. ख. घ. तत्स्वतस्त्वं
6. ग. बाधितं
7. ग. ननु संशया-

प्रकाशः

नन्वनुभवसिद्धतया संशयस्य दुरपह्नवतया तद्धेतुत्वेन दोषस्यावश्याभ्युपेयत्वात् तेनैव प्रतिबन्धान्न धर्मिज्ञानं रजतत्वादिविषयकम्। अतो विशेषदर्शनाभावान्न संशयानुपपत्तिरिति चेत्—तर्हि प्रामाण्यसंशयस्यानुभवसिद्धतया तद्धेतुदोषस्यावश्यकत्वेन तत्प्रतिबन्धात् धर्मिज्ञानं न प्रामाण्यविषयकमिति तुल्यम्।

ननु दोषादिप्रतिबन्धकाभावे सति जातिविषयज्ञानियतं व्यक्तिप्रत्यक्षमित्येवं व्यक्तिग्राहकग्राह्यत्वं जातीनामुच्यत इति चेत्—हन्तैवं दोषाद्यभावे सति ज्ञानग्राहकग्राह्यत्वमेव स्वतस्त्वमिति तुल्यम्। अन्यथा विपर्ययानुपपत्तिरपि दोषः स्यात्। भ्रमस्यापि धर्मिज्ञानजन्यत्वेन विशेषदर्शनसंभवात्। तस्माद्विप्रतिपत्तौ तदप्रामाण्याग्राहकपदप्रक्षेपादप्रामाण्यभ्रमस्य परैरपि स्वीकारात् यथा तत्र प्रामाण्याग्राहकत्वेऽपि न स्वतस्त्वहानिः तथा संशयस्थले [1]तदग्रहेऽपि न तद्धानिः। [2]भ्रमस्येव संशयस्याप्यप्रामाण्यग्राहकत्वात्।

---

न्यायशिखामणिः

अन्त्ये हेत्वभाव देव न संशय इति सूचयेनुमाह—तद्धेरिति। आद्य आह—धर्मिज्ञानस्येति। फलबलकल्प्यदोषेण जातिसंशये उपपादिते मीमांसकस्तेनैव न्यायेन प्रकृतसंशयमुपपादयति—तर्हीति। नन्वेवं प्रामाण्यस्य स्वतस्त्वभङ्गः स्यादेवेति चेत्—तर्हि जातेरपि [3]यावद्व्यक्तिग्राहकग्राह्यत्वं न स्यादित्याशयः।

ननु दोषानुद्धारे परमते दोषसामान्यान्न स्वमतं प्रतिष्ठितं भवतीत्याशङ्क्य, न हि दोषसाम्यापादने तात्पर्यम्। किं तु तत्र यादृशः परिहारस्तादृश एवात्रापीति वक्तुं [4]तदीयपरिहारमुत्थापयति—नन्विति। व्यक्तिविषयकशाब्दादिज्ञानस्य जातिविषयत्वाभावात् प्रत्यक्षमित्युक्तम्। एवं प्रतिबन्दीमुखेन [5]स्वतस्त्वे विशेषणमावश्यकमित्युक्तम्। संप्रति [6]संशयानुपपत्तिमात्रोद्भावनमपि तत्र विशेषणावश्यकतां सूचयति। अन्यथा [7]अप्रामाण्यभ्रमानुपपत्तिरपि दोषत्वेन कथं नोक्तेत्याह—

---

1. क. तदग्रहेण तद्धानिः
2. क. भ्रमस्य च
3. ख. यावद्विधव्यक्तिग्राहक-
4. ग. तदीयपरिहारवेदम्
5. क. स्वतस्त्वविशेषण-
6. ग. संशयानुवृत्ति-
7. ख. अप्रामाण्यानुप-

### प्रकाशः

यदि चात्र धर्मिज्ञानं [1]प्रामाण्यग्राहकमेव तदा भ्रमेऽपि तुल्यम् । न चात्र प्रामाण्यनिश्चयप्रतिबन्धकोऽ[2]दोष एवेति वाच्यम् । 'क्वचित् कश्चिद्दोष' इत्यभ्युपगमेन संशयहेतोरन्यस्य चातथात्वेन कल्पनात् । अन्यथा रजतादिस्थले को दोष इत्यनुयोगापत्तेः ।

अथ रजतादिग्राहकेन्द्रियसंयोगकाले रजतत्वादिग्राहकसंयुक्तसमवायस्यावश्यकत्वात् सामग्रीमहिम्ना तत्र तथात्वम्, अत्र तु मनसो बहिरस्वातन्त्र्यात् न तद्गुणत्वग्राहकसामग्रीति चेत्—

---

### न्यायशिखामणिः

अन्यथेति । तथा चाप्रामाण्यभ्रमव्यावृत्तं किंचिद्विशेषणमावश्यकम् । तच्च [3]तदप्रामाण्याग्राहकत्वमेव । तस्यैव विप्रतिपत्तिगतसाध्ये प्रवेशात् । अन्यथा विशेषणान्तरदाने अर्थान्तरप्रसङ्गादित्यभिप्रेत्याह—तस्मादिति ।

नन्वेवमपि [4]अप्रामाण्यनिश्चायकभिन्नयावत्स्वाश्रयग्राहकजन्यनिश्चयविषयत्वं स्वतस्त्वम् । विपर्ययसामग्र्याश्च तद्भिन्नत्वाभावात् तया तदग्रहेऽपि न स्वतस्त्वहानिः । प्रामाण्यसंशायकस्य [ तु ] तन्निश्चायकभिन्नत्वात् तद्धानिरेवेत्यत आह—[5]भ्रमस्येवेति । तथा च संशायकस्याप्रामाण्यज्ञानजनकत्वेन तद्भिन्नत्वाभावात् तेन तदग्रहेऽपि न स्वतस्त्वक्षतिरिति भावः ।

नन्वेवमपि प्रामाण्यसंशयहेतु[6]धर्मिज्ञानस्याप्रामाण्यविषयकज्ञानभिन्नतया तेन तदग्रहे स्वतस्त्वानुपपत्तिरेवेत्यत आह—यदि चेति । भ्रमेऽपीति । भ्रमस्थलेऽपि [7]धर्मिज्ञानस्याप्रामाण्याविषयकतया तेन प्रामाण्यस्यावश्यं [8]ग्राह्यत्वे विपर्ययानुपपत्तिरपि दोषः स्यादित्यर्थः । तथा च तदप्रामाण्याग्राहकपदं तत्प्रामाण्यनिश्चयप्रतिबन्धकदोषासमवहितपरमेव वाच्यम् । तथा च संशयहेतुधर्मिज्ञानस्य तादृशदोषसमवहितत्वेन विपर्ययहेतु[9]धर्मिज्ञानेनेव तदग्रहेऽपि न स्वतस्त्वभङ्ग इति

---

1. ख. प्रामाण्यग्राहकं तदा
2. ख. न दोषः
3. घ. तदप्रामाण्यग्राहक-
4. क. अप्रामाण्य-
5. ख. घ. भ्रमस्य चेति ।
6. ख. ग. ०धर्म-
7. ग. धर्मज्ञानस्यापि प्रामाण्या-
8. क. ग्राह्यत्वेऽपि
9. ख. ०धर्मिज्ञानेन पदेन
   क. ग. धर्मिज्ञानेनैव तेन

## प्रकाशः

तर्हि सामग्रीविरहान्न स्वतस्त्वमित्येवोच्यताम् । संशयानुपपत्तिरबाधिकैवेति । न च सामग्रीविरहोऽपि । 'व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वा'दित्यादिना परेण तत्प्रदर्शनादिति ।

यत्तु सामग्रीविरहादेव न स्वतस्त्वम् । [1]तथा हि व्यवसायोपनीतस्य [2]तद्वत्त्वस्यानुव्यवसायविषयत्वेऽपि स्वातन्त्र्येण तस्य [3]तदभावान्न तेन प्रामाण्यग्रहः । स्वातन्त्र्येण तद्ग्राहकस्यैव [4]तत्सत्तानिश्चयरूपतया प्रामाण्यग्राहकत्वात् । तदिदमुक्तं मनसो बहिरस्वातन्त्र्यादिति ।

## न्यायशिखामणिः

भावः । अत्रेति । प्रामाण्यसंशयस्थल इत्यर्थः । अदोष इति । अनुगतो दोषो नेत्यर्थः । न चानभ्यास[5]दशाजन्म दोषः । तस्य [6]प्रामाण्याग्रहपर्यवसन्नत्वेन तस्यैव तत्प्रयोजकत्वापत्तेरिति भावः । अनुगतदोषाभाव इष्टापत्तिरित्यत आह—क्वचिदिति । संशयहेतोरिति । विशेषादर्शनस्येत्यर्थः । [7]अन्यस्य चेति । सादृश्य[8]रूपस्यादृष्टस्य वेत्यर्थः । अन्यथेति । अनुगतत्वाभावमात्रेण [9]दोषत्वनिरास इत्यर्थः ।

सामग्रीविरहः स्वतस्त्वबाधक इति द्वितीयं पक्षमुत्थापयति—अथेति । न चायं सामग्रीविरहः संशयानुपपत्तिवज्ज्ञातिप्रतिबन्द्या निराकर्तुं शक्यते, तत्र सामग्रीसत्त्वेन वैषम्यादित्याह—[10]रजतत्वादीति । ननु मनसो बहिरस्वातन्त्र्यादित्यादिना सामग्रीविरहोऽपि बाधकत्वेन मूलकारोक्त एवेत्यत आह—न चेति ।

उपाध्यायमतमाह—यत्त्विति । ननु व्यवसायरूपेत्यादिना सामग्र्यभिहितेत्याशङ्क्य, प्रामाण्यघटकतत्प्रकारकत्वांशे मिश्रमते सामग्रीसत्त्वेऽपि न तद्वत्त्वांशे

---

1. ख. 'तथा हि' नास्ति ।
2. क. तत्त्वस्या-
3. ख. तदभावान्न
4. ख. तत्सत्त्व-
5. ग. ॰दशापन्नजन्म-
6. क. प्रामाण्याग्राहकपर्य-
7. क. ग. अन्यस्य वेति ।
8. ग. ॰रूपदृष्टान्तस्य
9. क. दोषनिरास
10. क. रजतादिति

## प्रकाशः

गुरुनये च यद्यपि स्वातन्त्र्येण तद्वत्त्वग्रहः तथापि स्वप्रकाशत्वनिषेधादेव न स्वतस्त्वम्। भट्टनये तु ज्ञानानुमित्यापि[1] न तद्ग्रहः, अनुमितेर्व्यापकतावच्छेदक[2]प्रकारक(विषय)त्वनियमात् ज्ञातताया निराकरिष्यमाणत्वाच्चेति।

तन्न। 'मनसा चैवं प्रामाण्यग्रह' इत्यग्रिमग्रन्थविरोधात्। यद्युपनीते स्वातन्त्र्यं मनसो न विरुद्धम्, तदात्रापि तुल्यम्। आत्मसुखाद[3]ज्ञानप्रामाण्ये[4]स्वातन्त्र्यसंभवात्। तस्मान्मिश्रमते न दोषः।

---

## न्यायशिखामणिः

तत्सत्त्वम्। सा हि तद्वत्त्वं स्वातन्त्र्येण ग्राहयति उत न। तत्राद्यं निराकरोति—व्यवसायेति। द्वितीयं निरस्यति—स्वातन्त्र्येणेति। यद्यपि स्वातन्त्र्यं न विशेष्यत्वम्। अयं घट इत्यत्रापि वैशिष्ट्यस्य स्वातन्त्र्याभावप्रसङ्गात्। अत एव न सत्तया निश्चीयमानत्वम्, वैशिष्ट्ये सत्ताया [5]अप्रतीतेः। तथापि यथा ज्ञानज्ञेययोर्विषयविषयिभावो नाम स्वरूपसंबन्धविशेष[6]स्तथा स्वरूपसंबन्धविशेष एव स्वातन्त्र्यम्। तच्च घटत्ववैशिष्ट्य[7]स्यायं घट इति ज्ञानं प्रत्येव न घटमहं जानामीत्यनुव्यवसायं प्रति। तदनन्तरं घटत्ववैशिष्ट्यावगाहिप्रामाण्यसंशयदर्शनात्। अयमेव संबन्धविशेषः संशयविरोधिस्वभावत्वम् सत्तानिश्चयरूपत्वमिति चोच्यते। तथा च वैशिष्ट्यग्रहस्य तेन सह स्वातन्त्र्यपदनिर्देश्यस्वरूपसंबन्धयुक्तस्यैव प्रामाण्यग्रहरूपत्वादित्ययमर्थः स्वातन्त्र्येणेति वाक्यस्येति बोध्यम्।

सामग्रीविरहादेव न स्वतस्त्वमित्युच्यतामित्युक्तदोषो नावतरतीत्याह—तदिति।

केचित्तु घटत्ववद्विशेष्यकत्वं मनसा ग्रहीतुं न शक्यते। घटनिष्ठस्य विशेष्यत्वस्य ज्ञानानुपनीतत्वादित्याहुः।

तच्चिन्त्यम्। एवं सति घटत्वप्रकारकत्वं कथं ग्राह्यम्। घटत्वनिष्ठस्य प्रकारत्वस्य ज्ञानानुपनीतत्वात्। यदि च भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्।

---

1. क. '°अपि' नास्ति।
2. ख. 'प्रकारक' नास्ति।
3. ख. '°ज्ञान' नास्ति।
4. क. स्वातन्त्र्यस्य च संभवात्।
5. ग. प्रतीतेः
6. ग. 'तथा स्वरूपसंबन्धविशेष' इति नास्ति।
7. ख. '°स्यायं......°घटत्ववैशिष्ट्य' इति ग्रन्थस्त्रुटितः।

## न्यायशिखामणिः

तच्च स्वरूपसंबन्धात्मकं [1]पूर्वमज्ञातमपि प्रकारः, संसर्गमर्यादया वा तद्भानमिति कल्प्यते। तदा विशेष्यत्वेऽपि तुल्यम्।

गुरुभट्टमते क्रमेण सामग्रीविरहमुपपादयति—गुरुमत इति उपनीतभानवादिमते ज्ञाननित्यत्ववत् [2]व्यापकतानवच्छेदकत्वेऽप्यनुमितिविषयत्वं न विरुद्धमित्यरुचेराह—ज्ञाततायाः इति। तस्मादिति।

अत्रेदं चिन्त्यम्। न तावज्जातिप्रतिबन्द्या स्वतस्त्वसाधनम्। उक्तदोषानुद्धारे प्रतिबन्दिशतेनापि [3]प्रकृतार्थासिद्धेः। प्रकारान्तरेण तदुद्धारे प्रतिबन्दीवैयर्थ्यात्।

न च प्रतिबन्दीमुखेन स्वतस्त्वे दोषाभावविशेषणावश्यकत्वसिद्धौ संशयानुपपत्त्युद्धारात् [4]न तद्वैयर्थ्यमिति वाच्यम्। विप्रतिपत्तिगतसाध्ये तदप्रामाण्याग्राहकत्वं विशेषणमनुमानगतसाध्ये दोषाभाव इत्यनुमानविप्रतिपत्त्योः भिन्नसाध्यत्वापत्तावर्थान्तरतापत्तेः।

न चाप्रामाण्यभ्रमस्थलीयधर्मिज्ञाननिबन्धनस्वतस्त्वभङ्गपरिहाराय तदप्रामाण्याग्राहकपदेन तदप्रामाण्यनिश्चयप्रतिबन्धकदोषाभावस्यावश्यवाच्यत्वेन विशेषणानतिरेकान्नार्थान्तरमिति वाच्यम्। तर्हि अर्थान्तरपरिहाराय[5]वात्रापि विप्रतिपत्तिगतदोषाभावविशेषणदानोपपत्तौ प्रतिबन्द्युद्भावनवैयर्थ्यात्। न च तदुद्भावनमपि, व्यक्तिग्राहकसामग्र्या जाति[6]ग्राहकत्वानभ्युपगमेन तद्भङ्गस्येष्टत्वात्। अन्यथा उत्तरकाले पृथिवीत्वादि[7]संशयादर्शनेन दोषाभावसहिततया पुरोवर्तिव्यक्तौ घटत्वग्राहिकया सामग्र्या पृथिवीत्वद्रव्यत्वादिभानापत्तेः।

[8]यदप्यन्यथेत्यादिना संशयानुपपत्तिमात्रोद्भावनाद्दोषाभावविशेषणसिद्धिरिति। तन्न। संशयानुपपत्तेर्विपर्ययानुपपत्त्युपलक्षणत्वात्। किं चैतावता अप्रामाण्य[9]भ्रमव्यावृत्तकिंचिद्विशेषणसिद्धावपि विप्रतिपत्तिविशेषण[10]नियमाभावेनार्थान्तरम्। तन्निवारणाय चात्र विप्रतिपत्तिविशेषणनियमे उक्तयुक्तिवैयर्थ्यम्।

---

1. क. पूर्वज्ञातमपि ग पूर्वज्ञानमपि
2. क. व्यापकतावच्छेदक-
3. क. प्रकृतासिद्धेः
4. ग 'न' नास्ति।
5. क. °यैव तत्रापि ग. °यात्रापि
6. ख. °ग्राहकत्वाभ्युप-
7. ख. °संशयदर्शनेन
8. ख. घ. यदप्यन्वयेत्यादि-
9. ग °ग्रहस्याप्युक्तकिंचि-
10. ख. नियमाभावे चार्था-

## न्यायशिखामणिः

किं च [1]यथा हि ज्ञानकारणसामग्र्यतिरिक्तानपेक्षसामग्रीप्रयोज्यत्वं प्रामाण्यस्योत्पत्तौ स्वतस्त्वम्। तथा ज्ञानग्राहकातिरिक्तकारणानपेक्षसामग्रीग्राह्यत्वमेव ज्ञप्तौ स्वतस्त्वं वाच्यम्। अन्यादृशस्यापि स्वतस्त्वरूपत्वे पारिभाषिकत्वापत्तेः। प्रकृते च [2]दोषाभावकारणसापेक्षत्वान्न स्वतस्त्वसिद्धिः।

किं च प्रामाण्यग्राहकसामग्र्यां न दोषाभावप्रवेशः। परैः प्रतिबन्धकाभावकारणत्वानभ्युपगमात्। किं च दोषासमवहिततादृशसामग्रीग्राह्यत्वं न स्वतस्त्वम्, ज्ञानपदादिना तदग्रहेण बाधात्। न च तद्वद्विशेष्यकत्व[3]तत्प्रकारकत्वग्राहकत्वेनापि स्वाश्रयग्राहकसामग्री विशेष्यते। तथा च तादृशसामग्र्या [4]स्वातन्त्र्येण ग्राह्यत्वं स्वतस्त्वमिति नोक्तदोष इति वाच्यम्। एवं सत्यनेन विशेषणेनैवाप्रामाण्यग्राहकनिबन्धनदोषवारणे दोषासमवहितत्वविशेषणवैयर्थ्यात्। न ह्यप्रामाण्यग्राहकसामग्री तद्वद्विशेष्यकत्वग्राहिकेत्युक्तम्।

किं च विप्रतिपत्तावेतद्विशेषणानन्तर्भावाद[5]र्थान्तरम्। एतत्परिहाराय तदप्रामाण्याग्राहकपदस्योक्तविशेषणपरत्वे [6]दोषासमवहितत्वस्यानुपात्तस्य प्रवेशे पुनरर्थान्तरम्। तदप्रवेशे तत्रोभयत्र धर्मिज्ञानजनकसामग्र्या प्रामाण्यग्रहे तत्संशयविपर्ययानुपपत्तेः, तदग्रहे स्वतस्त्वभङ्गः। [7]अप्रामाण्याग्राहकपदादनभिहितमपि दोषासमवहितत्वं पदान्तराभिधेयमिति नोक्तदोष इति चेत्—अहो साहसम्। यदनुपात्तमप्युपात्तमित्युच्यते। न हि [8]दोषासमवहितपदं [9]विप्रतिपत्तावश्रावि। अन्यथा [10]धर्मिज्ञानहेतुत्वाभावाद्यवष्टम्भेन संशयोपपादनवैयर्थ्यात्। विप्रतिपत्तावध्याहृतस्य श्रुतस्य वा पदान्तरस्य विवक्षितार्थपरत्वकल्पनेनैव सर्वत्रार्थान्तरपरिहारोपपत्तौ तदुच्छेदापत्तेश्च।

---

1. क. यथा वह्निज्ञान-
2. 'दोषाभाव······किंच' इति ग्रन्थस्त्रुटितः।
3. ख. •तत्प्रकारकसंग्राहक-
4. ख. स्वतन्त्रेण
5. ख. •दर्थान्तरपरि-
6. क. दोषसम-
7. ख. प्रामाण्याग्राहकपदादभि-
8. क. दोषसम-
9. ग. विप्रतिपत्तावग्राहि
   ख. विप्रतिपत्तावन्यथा
10. धर्मिज्ञानादेहेतुत्वभावाद्यव-

## न्यायशिखामणिः

किं च दोषासमवहिततादृशयावत्स्वाश्रयग्राहकग्राह्यत्वं स्वतस्त्वमिह साध्यमिति न युक्तम्। [1]ग्राहकसामग्रीसत्त्वस्योपाधित्वात्। न च प्रकारत्वभाननियतं स्वतन्त्रतद्वत्त्वभानम्, येन साधनाव्यापक उपाधिः स्यात्। अन्यथा अप्रामाण्यभ्रमस्थलेऽपि तत्प्रकारक[2]त्वाभानेनात्रापि स्वतन्त्रवैशिष्ट्याभानापत्तेः। न च तद्वत्त्वभानमपि, मनसो बहिरस्वातन्त्र्यात्। न च व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात् मनआदिरूपसामग्री बहिरर्थवैशिष्ट्य[3]भानेऽपि [4]समर्थेति साधनाव्यापकत्वमुपाधेरिति वाच्यम्। एतावता वैशिष्ट्यभानसामग्रीसिद्धावपि स्वतन्त्रतद्वत्त्वग्राहकसामग्र्यसिद्धेः। तथा हि [5]यथा ज्ञानविषयत्वाविशेषेऽपि [6]प्रकारप्रकारिणोर्ज्ञानेन सह स्वरूपसंबन्धविशेष एव तत्प्रकारत्वतद्विशेष्यत्वशब्दाभ्यामभिधीयते तथा ज्ञानविषयत्वाविशेषेऽपि घटोऽयमिति ज्ञानेन यादृशः संबन्धः तादृशसंबन्धो घटमहं जानामीत्यनुव्यवसायेन सह नास्त्येव। तदनन्तरं [7]तत्संशयदर्शनात्। तथा चानुव्यवसायमात्रे वैशिष्ट्यस्य [8]स्वातन्त्र्याभावान्न तत्र प्रामाण्यग्राहकसामग्रीति साधनाव्यापकत्वतादवस्थ्यम्।

ननु संशयाभावकल्पितः संबन्धविशेषः संशयाभावस्थलीयानुव्यवसायेन सह घटत्ववैशिष्ट्यस्यास्तु। तस्यैवानुव्यवसायस्य दोषासमवहिततया प्रामाण्यग्राहकत्वेन पराभिमतत्वादिति चेत्—न। गेहे घटमहं जानामि, गेहे घटमयं कथयतीत्यादिवाक्यजन्यज्ञानानन्तरं यत्र संशयाभावस्तत्र गेहघटसंसर्गावगमस्य संसर्गांशे स्वतन्त्र्यापत्तौ गेहे घट इति वाक्यजन्यसंसर्गावगमादिव ततोऽपि तत्र घटार्थिप्रवृत्तिप्रसङ्गात्। न चेष्टापत्तिः, अनुभवविरोधात्।

अपि च न संशयाभावमात्रात् संबन्धविशेषकल्पनम्। घटज्ञानानन्तरं यत्र न पृथिवीत्वादिसंशयस्तत्र पृथिवीत्वादेरपि विषयविषयिभावसंबन्धकल्पनापत्तेः। किं तु अनुभवाकारबलादपि। यथा घटोऽयमित्याकारानुभवो यत्र तत्र ज्ञानेन सह

1. ग. ग्राह्यग्राहक-
2. क. घ. त्वभानेन
3. ख. °अभाने-
4. ख. सामर्थ्येति
5. ग. तथाभूतज्ञान-
6. ख. 'प्रकारप्रकारिणोः........ज्ञानविषयत्वाविशेषेऽपि' इति ग्रन्थः नास्ति।
7. ग. तत्संशयादर्शनात्
8. ख. तन्त्राभाव-

प्रथमं च प्रामाण्यज्ञानं व्यतिरेकिणा। ननु प्रामाण्यप्रसिद्धिं विना व्याप्त्यग्रहात् कथमनुमानम्। अथ व्याघातदण्डभयेन प्रमातद्विषयसिद्धौ तद्दृष्टान्तेन ज्ञेयत्वादिना वह्नेः प्रमाविषयत्वमनुमेयम्।

---

### प्रकाशः

प्रथममिति। क्वचित्प्रामाण्यसंदेहादपि प्रवृत्तेस्तया [1]तदनुमेयमिति भावः। अथ व्याघातेति। कुत्रचित्प्रतियोगिप्रसिद्धिं विना प्रमा तद्विषया वा नास्तीति परकीयनिषेधव्याघातभयादित्यर्थः। तद्दृष्टान्तेन—[2]व्याघातभयसिद्धप्रमातद्विषयदृष्टान्तेन। ज्ञेयत्वादिना—[3]प्रमेयत्वान्यधर्मेण। प्रमेयत्वस्यानुमेयत्वेन साध्याविशेषतापत्तेः।

---

### न्यायशिखामणिः

घटत्वस्य प्रकारत्व[4]नामकः संबन्धः, यत्रेह घटत्वमित्यनुभवस्तत्र घटत्वस्य विशेष्यत्वपदाभिधेयः संबन्धः। यथा वा संशयाभाव[5]कालीनस्य व्यक्तिप्रत्यक्षस्य यत्रेदं रजतमित्याकारता तत्र रजतत्वविषयकत्वम्, यत्रेदमित्याकारता तत्र [6]न तद्विषयत्वम्; तथा संशयाभावस्थलीयानुव्यवसायस्य प्रामाण्यनुमितिरूपस्य घटत्ववद्विशेष्यकज्ञानवानहमित्याकारत्वात् वैशिष्ट्येन सह [7]स्वरूपसंबन्धविशेषरूपं स्वातन्त्र्यम्। संशयस्थलीयानुव्यवसायस्य पुरोवर्तिनं घटत्वेन जानामीत्याकारस्य तादृशाकारत्वाभावान्न तेन वैशिष्ट्यस्य स्वरूपसंबन्धः। तथा च संशयाभावस्थलीयानुव्यवसायस्य पुरोवर्तिनं घटत्वेन जानामीत्याकारादाकारान्तराभावेन घटत्ववैशिष्ट्यस्य तेन स्वरूपसंबन्धविशेषलक्षणस्वातन्त्र्यकल्पनं निरवकाशमिति सामग्रीविरहात् संशयाभावस्थलेऽप्यनुव्यवसायो न प्रामाण्यग्राहकः। अत एवात्मसुखादिज्ञानानुव्यवसायस्यापि न प्रामाण्यविषयत्वम्। [8]सुखादिविशेष्यकज्ञाने

---

1. क. तदनुमितिभावः
2. ख. 'व्याघातभयसिद्ध' इति नास्ति।
3. क. प्रमेयत्वात्मधर्मेण
4. ख. घ. ॰नामसंबन्धः
5. क. ॰कालीनव्यक्ति-
6. ख. 'न' नास्ति।
7. ख. स्वरूपसंबन्धः। तथा च संशयाभावविशेषरूपम्
8. ख. सुखादिविषयक-

### प्रकाशः

आदिपदं तु सामान्यतः [1]सिद्धप्रमाविषयवृत्तिधर्मपरम्। न चालीके व्यभिचारः। तन्मते तस्य ज्ञेयत्वाभावात्। शुक्तिरजततादात्म्यादीनामपि पारमार्थिकानामेव भानात्।

---

### न्यायशिखामणिः

मनसः [2]सामर्थ्येऽपि स्वतन्त्रसुखत्वविशिष्टविषये तदभावात्। अन्यथा सुखत्ववद्विशेष्यकज्ञानवानहमित्याकारानुभवापत्तेः।

किं च [3]वह्निगुञ्जापुञ्जयं गुञ्जापुञ्जवह्नी इति समूहालम्बनातिव्याप्त्या न वह्नित्ववद्विशेष्यकत्वे सति वह्नित्वप्रकारकत्वम्। अपि तु वह्नित्ववद्विशेष्यकत्वावच्छेदेन वह्नित्वप्रकारकत्वम्। तदवच्छेदेन वह्नित्ववद्विशेष्यकत्वं वा। तथा च वह्नित्ववद्विशेष्यक[4]त्वाग्रहान्न तद्विशेष्यकत्वघटितप्रामाण्यग्रहः। तस्मान्मिश्रमतेऽपि स्वतस्त्वमनुपपन्न[5]मिति संक्षेपः।

ननु प्राथमिकप्रामाण्यग्रहस्थले [6]प्रामाण्याप्रसिद्धौ तदधीन[7]व्याप्तिज्ञानजन्यानुमानाप्रवृत्तेर्गत्या स्वतोग्राह्यत्वं स्यादित्याशङ्क्योक्तं मणौ प्रथममिति। तदयुक्तम्। प्रामाण्यनिश्चयात्प्रवृत्त्यभावेन समर्थप्रवृत्ति[8]विषयत्वलिङ्गकज्ञानाभावादित्यत आह—क्वचिदिति। ननु [9]प्रमा नास्तीति वाक्यं प्रतियोगिज्ञानपूर्वकं निषेधवाक्यत्वात् अन्यथा प्रतियोग्यज्ञाने [10]तदभावाप्रतीतेः [11]तद्वाक्यमेव व्याहन्येतेति व्याघातरूपविपक्षदण्डानुगृहीतानुमानेन [12]प्रमासिद्धिरित्याशयेन 'अथ' इत्याद्युक्तम्। तत्र व्याघातो यदि प्रमा नास्तीति निषेधानुपपत्तिरूपस्तदा [13]प्रमातद्विषयसिद्धाविदमसंगतमत आह—कुत्रचिदिति। तत्पदस्य सिद्धिपरत्वं वारयति—प्रमेति।

ननु ज्ञानपक्षकप्रमात्वसाध्यकानुमानमप्यभिप्रेतम्। अन्यथा प्रमानिषेधव्याघातवैयर्थ्यात्। न च प्रमाविषयव्याघात एवाभिहित इति वाच्यम्। प्रमातद्विष-

---

1. ख. प्रसिद्धप्रमातद्विषय-
2. ख. सार्थेऽपि
3. ख. वह्निगुञ्जयोर्गुञ्जावह्नी
4. ग. घ. °त्वस्यावच्छेदकत्वाग्रहान्नतद्घटित-
5. ग. °मेवेत्यलं विस्तरेण
   घ. °मेवेत्यलमतिविस्तरेण
6. ख. प्रामाण्यसिद्धौ
7. ख. °व्याप्तितज्ज्ञान-
8. क. °जनकत्वलिङ्गज्ञाना-
9. ख. प्रमाणे वाक्यं
10. ख. तदभावप्रतीतेः
11. ख. तद्वत्त्वमेव
12. ख. °प्रमाप्रसिद्धि-
13. क. 'प्रमातद्विषय......अन्यथा' इति ग्रन्थस्त्रुटितः।

ततश्च सामान्यतस्तत्सिद्धौ न साध्याप्रसिद्धिः। विशिष्यानिर्णयान्नान्वयित्वासाधारण्ये।

प्रकाशः

अस्तु वा ज्ञेयत्वं तत्र, तथापि न [1]व्यभिचारधीः। तस्य विधिनिषेधव्यवहाराजनकत्वात्, साध्याभावस्य तत्राज्ञानात्। तदिदमुक्तम् 'सचेतसां [2]मूकतैव शरणम्' इति। सामान्यतः प्रकारौदासीन्येन। तत्सिद्धौ वह्निप्रमासिद्धौ। वक्ष्यमाणव्यतिरेकिणि वह्निप्रमात्वरूपसाध्यस्य नाप्रसिद्धिरित्यर्थः।

न्यायशिखामणि

यप्रसिद्धावित्यनुपपत्तेः। तथा च ज्ञानत्वमेव लिङ्गम्। तच्चादिपदग्राह्यमित्यत्रस्वं वाच्यम्। तच्चायुक्तम्, भ्रमे विशेष्यावृत्ति[3]प्रकारानवच्छिन्नत्वरूपसाध्याभावेन व्यभिचारादित्यत आह—आदिपदं त्विति। न तु सामान्यतः सिद्धप्रमावृत्तिधर्मपरम् येन भ्रान्तिज्ञाने व्यभिचारः स्यात्। तथा च तद्दृष्टान्तेनेत्यत्र तच्छब्देनापि व्याघात[4]सिद्धप्रमाविषयस्यैव परामर्शः। न चैवं प्रमानिषेधवैयर्थ्यम्। 'वह्नित्वप्रकारकज्ञानं [5]प्रमा वह्न्यवृत्ति[6]प्रकारानवच्छिन्नं वे'त्यग्रिमग्रन्थे प्रमात्वस्यापि साध्यत्वाभिधानेन तत्साध्यकव्यतिरेकिण्यस्य साक्षादेवोपयोगित्वात्।

ननु ज्ञेयत्वमपि न लिङ्गम्, भ्रमविषयपुरोवर्तितादात्म्यस्यापारमार्थिकत्वेन प्रमाविषयत्वाभावाद्व्यभिचारात् इत्याशङ्क्य निराकरोति—न चेति। किं गुरुमते व्यभिचारः उत न्यायमते। आद्यं निराकृत्य द्वितीयं निराचष्टे—शुक्तीति। शुक्त्यादीनां प्रत्येकं पारमार्थिकत्वेऽपि शुक्तिनिरूपितरजततादात्म्यमसदपि सदुपरागाद्भासत इति टीकाकारमतमाश्रित्याह—अस्तु वेति। नन्वेवं तत्र कथं ज्ञेयत्वाभ्युपगम इत्यत आह—तदिदमिति। सचेतसाम् अलीकविषयविधिनिषेधयोर्मौनमेव गतिरित्यर्थः। तथा चालीके ज्ञेयत्वमस्ति न वेति प्रश्ने अस्ति [7]नास्तीति न वक्तव्यम्। तथा च तत्र न हेतुज्ञानमिति भावः।

1. ख. व्यमिचारः
2. ख. मूकतैवोचितेति
3. ख. °प्रकारकानव-
4. ख. °सिद्धिप्रमा- ग. °सिद्धिप्रमाविषयत्वस्य परा-
5. क. 'प्रमा' नास्ति
6. ख. °प्रकारावच्छिन्नं
7. ख. नास्ति वेति वक्तव्यम्

न च प्रामाण्यं नानुगतम्, किं तु प्रतिज्ञानं विषयप्रकारभेदात् भिन्नम्, तथा च वह्निज्ञानस्य वह्न्यवृत्तिप्रकारानवच्छिन्नत्वादिकं साध्यं तच्चाप्रसिद्धमिति वाच्यम्।

---

**प्रकाशः**

एवं च वह्निविशेष्यकप्रमायामन्वयिना सिद्धायामपि निष्कम्पप्रवृत्त्यङ्गस्य वह्नित्वप्रकारकज्ञाने [1]वह्निप्रमात्वप्रकारकस्य ज्ञानस्यासिद्धेः तदर्थं वह्नित्वप्रकारकमिदं ज्ञानं [2]प्रमा वह्न्यवृत्तिप्रकारानवच्छिन्नं वेति व्यतिरेकिणा साध्यम्।

ननु प्रकृतव्यतिरेकिणा [3]वह्न्यवृत्तिप्रकारानवच्छिन्नज्ञानत्वं साधनीयम्। तच्च ज्ञेयत्वादिनाप्यप्रसिद्धम्। न हि वह्निर्वह्न्यवृत्तिप्रकारानवच्छिन्नज्ञानविषय इति साध्यते व्यभिचारात् व्याघातादपि तादृशसाध्याप्रसिद्धेः। सिद्धौ वा किं ज्ञेयत्वानुसरणेनेत्याशङ्क्य निराकरोति—न च प्रामाण्यमिति।

---

**न्यायशिखामणिः**

ननु सामान्यत इत्यनेन प्रमात्वोक्तौ विशिष्येत्यनेन च वह्निप्रमात्वाभिधाने व्यतिरेकिसाध्यस्य वह्निप्रमात्वस्याप्रसिद्धिः, व्याघातादेव प्रमात्वप्रसिद्धेर्ज्ञेयत्वानुमानवैयर्थ्यं चेत्याशङ्क्य पक्षधर्मताबलात् ज्ञेयत्वलिङ्गकानुमितौ वह्निप्रमात्वं संसर्गविधया भासते न तु प्रकारतयेति नोक्तदोष इत्यभिप्रेत्याह—प्रकारेति। नाप्रसिद्धिरिति। साध्यप्रसिद्धिमात्रमनुमानाङ्गं लाघवादित्याशयः।

ननु वह्निः प्रमाविशेष्यः ज्ञेयत्वादित्यनुमानेनैव वह्निविशेष्यकप्रमात्वस्य समानवित्तिवेद्यतया निश्चितत्वेन व्यतिरेक्यनुमानवैयर्थ्यमित्याशङ्क्य वह्निः [4]वह्न्यवृत्तिप्रकारानवच्छिन्नज्ञानविषयः समर्थप्रवृत्तिविषयत्वादिति वह्निपक्षकव्यतिरेक्यनुमानं प्रकृते नाभिमतं येन वैयर्थ्यं स्यात्। किं तु वह्निज्ञानपक्षकम्, तत्र न वैयर्थ्यमित्याह—एवं चेति। [5]वह्नित्वप्रकारकज्ञानत्वावच्छेदेन प्रामाण्यसंशयस्य तत्प्रकारकप्रामाण्यनिश्चयं विना अनिवृत्तेस्तदर्थं व्यतिरेक्यादर इति भावः।

---

1. ख. वह्निप्रमात्वप्रकारकज्ञाने प्रमात्वप्रकारकज्ञानस्य
2. ख. वह्निप्रमा
3. ख. 'वह्न्यवृत्ति······वह्निज्ञानस्य' इति ग्रन्थस्त्रुटितः।
4. ख. वह्निवृत्ति-
5. क. वह्निवृत्तिप्रकारक-

## प्रकाशः

**तथा चेति** । वह्निः प्रमाविषयः ज्ञेयत्वादित्यत्र वह्निज्ञानस्य [1]वह्न्यवृत्तिप्रकारानवच्छिन्नत्वादिकं प्रमांशे साध्यकोटिप्रविष्टम् । तच्च व्याघातभयेनापि न प्रसिद्धमित्यर्थः ।

व्याघातबलेन सामान्यतो विशेष्यावृत्ति[2]प्रकारानवच्छिन्नज्ञान[3]विशेष्यत्वप्रसिद्धौ वह्निस्तादृशज्ञानविशेष्यः ज्ञेयत्वादित्यनुमित्या वह्निज्ञानस्य विशेष्यावृत्तिप्रकारानवच्छिन्नत्वादिकं [4]साध्यमानं पक्षधर्मताबलेन वह्न्यवृत्ति[5]प्रकारानवच्छिन्नत्वादिरूपे वह्निविषयकप्रमात्वे पर्यवस्यति । तच्च पर्यवसन्नं अप्रसिद्धं साध्यं वह्निज्ञाने साध्यत इत्याह **वह्निज्ञानस्येतीति** वदन्ति ।

---

## न्यायशिखामणिः

[6]**प्रमेति** । विशेष्यावृत्तिप्रकारानवच्छिन्नमित्यर्थः । ननु प्रकारभेदात् प्रामाण्यं भिन्नम् । तथा च [7]वह्न्यवृत्तिप्रकारानवच्छिन्नत्वमप्रसिद्धमित्ययुक्तम्, ज्ञेयत्वानुमाने प्रमात्वस्यैव साध्ये प्रवेशादित्याशङ्क्य व्यतिरेकिसाध्यप्रसिद्ध्यर्थमन्वयिनापि वह्नित्वमेव साधनीयमित्यप्रसिद्धि[8]शङ्कावकाश इत्याशङ्कातात्पर्यमाह—**नन्विति** । ननु व्यभिचाराप्रतिसंधानदशायामनुमानं स्यादित्यत आह—**व्याघातादिति** । ननु वह्न्यवृत्तिप्रकारानवच्छिन्नज्ञानं तद्विषयो वा नास्तीति विशेषविषयपरकीयनिषेधे सति व्याघातेन प्रामाण्यविशेषस्यापि प्रसिद्धिः संभवतीत्यत आह—**सिद्धौ वेति** ।

नन्वन्वय्यनुमाने प्रमाविशेष्यत्वस्य साध्यत्वेन तत्रापि वह्निप्रमात्वं साध्यमित्यसंगतिः । किं चाप्रसिद्धमित्यत्र व्याघातेनाप्रसिद्धमिति यद्यर्थः तदा व्यतिरेकिणि साध्यं व्याघातेनाप्रसिद्धमित्यनुक्तोपालम्भ इत्याशङ्क्य, व्यतिरेकिणा यत् साधयिष्यमाणं वह्निप्रमात्वं तदेवान्वय्यनुमाने साध्यकोटिप्रविष्टम् । तच्च न व्याघातेन प्रसिद्धमिति मूलार्थ इत्याह—**वह्निरिति** । ननु वह्निज्ञानपक्षकं प्रामात्व-

---

1. ख. वह्निवृत्ति-
2. क. °प्रकारावच्छिन्न-
3. ख. °विशेषत्व-
4. ख. 'साध्यमानं' इत्यतः प्राक् 'प्रसिद्धमन्वयिना' इत्यधिकपाठः ।
5. क. प्रकारावच्छिन्न-
6. ख. 'प्रमेति ।......ज्ञेयत्वानुमाने' इति ग्रन्थस्त्रुटितः ।
7. ग. वह्निवृत्ति-
8. ख. 'शङ्का'-नास्ति ।

### प्रकाशः

अत्रेदं चिन्त्यम् । अनुमितेर्व्यापकतावच्छेदकप्रकारत्वनैयत्यपक्षे वह्निपक्षकानुमाने विशेष्यत्वेन रूपेण वह्निभानात् वह्न्यवृत्तिप्रकारानवच्छिन्नत्वमुद्देश्यं साध्यम् [1]अप्रसिद्धमेव । साध्यतावच्छेदकेन प्रकारेण साध्यसिद्धेरङ्गत्वात् । न च पक्षधर्मताबलात् तथा, ततो व्यापकतावच्छेदकावच्छिन्नस्य [2]पक्षसंबन्धमात्रं सिध्यति न त्वधिकम् [3]अतिप्रसङ्गात् । तदिदमुक्तम्—'पक्षधर्मतानुपपत्तिनिरासमात्रक्षममेव साध्यं पक्षधर्मताबलात्सिध्यति' इति । अन्यथा वह्नित्वप्रकारकमिदं ज्ञानं [4]विशेष्यावृत्त्यप्रकारकमिति व्यतिरेकिणैव पक्षधर्मताबलात् तादृशसाध्यसिद्धौ किं ज्ञेयत्वहेतुकविधिना । तन्नैयत्यपक्षेऽपि किं तेन, व्याघातसिद्धसाध्यसिद्धिसहकारेण व्यतिरेकिण एवं द्वेशसाध्यसिद्धिसंभवात् ।

वस्तुतस्तु इदं वह्निज्ञानं विशेष्यावृत्त्यप्रकारकमिति ज्ञानादपि निष्कम्पप्रवृत्त्युपपत्तेः न तावत्पर्यन्तमुद्देश्यत्वमपि ।

---

### न्यायशिखामणिः

[5]साध्यकमनुमानं मूले प्रतीयते । न तद्व्यतिरेक्यनुमानम्, अन्वय्यनुमानवैयर्थ्यात् । नाप्यन्वयि, तत्र वह्निज्ञानस्यापक्षत्वादित्यत आह—व्याघातेति । तथा च वह्निपक्षकानुमाने वह्निज्ञानस्य प्रमात्वं साध्यकोटिप्रविष्टतया ज्ञायमानमिति मूलार्थो बोध्यः ।

नैयत्यपक्षेऽपि [6]वह्न्यवृत्तिप्रकारानवच्छिन्नत्वस्य किं व्याप्तिबलाद्भानम्, पक्षधर्मताबलाद्वा । आद्यं निराकृत्य द्वितीयमनूद्य दूषयति—न चेति । अन्यथेति । अन्यादृशस्यापि पक्षधर्मताबलात् भानाभ्युपगतावित्यर्थः । किं तेनेति । किमन्वयिनेत्यर्थः ।

ननु व्याघातात् प्रमातद्विषय[7]सिद्ध्यनन्तरं यत्र प्रमात्वसमर्थप्रवृत्तिजनकत्वाभावयोरेव व्याप्तिग्रहः तत्र प्रमात्वं व्यतिरेकिणि साध्यमिति नान्वय्यपेक्षा । अत

---

1. ख. प्रसिद्ध-
2. क. पक्षधर्मता-
3. क. इति प्रसङ्गात्
4. ख. विशेष्यावृत्तिप्रकार-
5. ख. °साध्यकानुमानं
6. ख. ग. वह्निवृत्ति-
7. ख. °प्रसिद्ध्य-

**प्रकाशः**

तस्याप्यप्रामाण्यशङ्कानिवर्तनक्षमत्वात्। स्वातन्त्र्येण तस्याप्यप्रवर्तकत्वात्। अत एव सिद्धान्ते 'प्राग्भवीयसंस्कारा'दित्यादिना तथैव विभावयिष्यति। उद्देश्यत्वे वा व्याघातबलादपि तादृशसाध्यसिद्धिसंभवे किं तदन्तर्गड्डुनान्वयिना। यदि च तस्यासार्वत्रिकत्वं दोषः तदा प्रकृतेऽपि तुल्यमिति।

---

**न्यायशिखामणिः**

[1]एव वह्नित्वप्रकारकमिदं ज्ञानं प्रमा वह्न्यवृत्तिप्रकारानवच्छिन्नं वेति व्यतिरेकिणा साध्यमित्यत्र कल्पे न प्रमात्वं साध्यमित्युक्तम्। यत्र च प्रमाविषयत्वज्ञेयत्वयोर्व्याप्तिग्रहः तत्र तेनैवान्वयिना पक्षधर्मताबलात् वह्निप्रमात्वप्रसिद्धिः ततस्तदभावस्य वह्निविशेष्यकप्रवृत्तिजनकत्वाभावेन व्याप्तिग्रहः, तत्र वह्निप्रमात्वं व्यतिरेकिणा साध्यमिति व्यवस्था। अतो नोक्तदोष इत्यरुचेराह—वस्तुतस्त्विति। तावत्पर्यन्तमिति। [2]वह्न्यवृत्तिप्रकारानवच्छिन्नत्वपर्यन्तमित्यर्थः।

ननु वह्न्यवृत्तिप्रकारानवच्छिन्नत्वनिश्चयं विना प्रवृत्तिर्न स्यात् इत्याशङ्क्य- किं तस्याप्रामाण्यशङ्कानिवृत्तिद्वारा प्रवृत्तिप्रयोजकत्वम् उत साक्षात्प्रवर्तकत्वम्। आद्यं निराकृत्य द्वितीयं निराचष्टे—स्वातन्त्र्येणेति। अत एवेति। अन्यथा विशेष्यावृत्त्यप्रकारकत्वरूपप्रामाण्यस्य प्रवृत्तिं प्रत्यप्रयोजकत्वे तत्साधारणस्मरणाभिधानवैयर्थ्यापत्तेरिति भावः।

ननु विशेष्यावृत्त्यप्रकारकत्वनिश्चये सत्यपि [3]वह्न्यवृत्तिप्रकारान[4]वच्छिन्नत्वसंशये निष्कम्पप्रवृत्त्यभावेन तस्यैव प्रवृत्त्युपयोगितया तावत्पर्यन्तमुद्देश्यतैवेत्यरुचेराह—उद्देश्यत्वे वेति। वह्न्यवृत्तिप्रकारान[5]वच्छिन्नत्वज्ञानं तद्विषयो वा नास्तीति परकीय[6]निषेधव्याघातेन प्रामाण्यविशेषस्यापि प्रसिद्धिसंभवे [7]तत्प्रयोजनकान्वय्यनुमानवैयर्थ्यमित्यर्थः। [8]विशेषनिषेधस्थलेऽपि यत्र विशेषणसामान्यं स्मृतं तत्र प्रमाविषयत्वज्ञेयत्वयोर्व्याप्तिग्रहात् वह्निप्रमात्वनिश्चयः तदनन्तरमेव यदा तद-

---

1. ख. 'एव·······जनकत्वमावेन व्याप्तिग्रहः' इति ग्रन्थस्त्रुटितः।
2. ख. वह्निवृत्ति-
3. ख. वह्निवृत्ति-
4. ग. ॰च्छिन्नसंशये
5. ख. ग. घ. ॰च्छिन्नज्ञानं
6. ख. निषेधघातेन
7. ख. ग. तत्प्रयोजका-
8. ख. विशेषणनि-

वह्निज्ञानस्य विशेष्यावृत्तिप्रकारानवच्छिन्नत्वादिकं साध्यमानं पक्षधर्मताबलेन वह्निविषयकप्रमात्वे पर्यवस्यतीति चेत्, तर्हि प्रथमं कस्यापि स्वार्थे प्रामाण्यानुमानं न स्यात्। प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्य तदा अनुपस्थितेः । स्वयं प्रामाण्यनिषेधस्य तद्धीपूर्वकत्वात् प्रामाण्यमपरिज्ञाय प्रामाण्यनिषेधेन परकीयव्याघातस्याप्यज्ञानाच्च। प्रवृत्तिसंवादविसंवादाभ्यां तद्धेतुज्ञानवैचित्र्यानुमानेऽपि यथोक्तरूपप्रामाण्यस्य विशिष्याप्रतीतेरिति ।

---

प्रकाशः

प्रामाण्यनिषेधरूपस्येति । व्याघातस्य विरोधरूपत्वेऽपि निषेधेन [1]रूप्यत इति व्युत्पत्त्या सामानाधिकरण्येन निर्देश इत्याहुः । ननु परार्थानुमाने [2]परतस्त्वं सिद्धमेवेत्यतो दोषान्तरमाह—प्रामाण्यमिति । प्रमा नास्तीति निषेधस्य प्रमापदार्थज्ञानं विना ज्ञातुमशक्यत्वादिति भावः । केचित्तु—ननु प्रामाण्यमज्ञात्वैव

---

न्यायशिखामणिः

भावस्य साधनाभावव्याप्तिग्रहः तदा [3]व्याघातजनितविशेषप्रसिद्धेर्विनाशात् अन्वय्यनुमानापेक्षा दुर्वारेति समाधानमत्र द्रष्टव्यम् ।

ननु व्याघातस्य [4]स्वार्थानुमानाव्याप्तिदोषेणैव प्राथमिकप्रामाण्य[5]ग्रहनिराकरणसिद्धौ तत्र दोषान्तरोद्भावनवैयर्थ्यमित्याशङ्क्य, स्वार्थस्थले प्रकारान्तरेण प्रामाण्यप्रसिद्धिः परार्थे तु व्याघातात् । अतः परतस्त्वं सिद्धमिति यदि कश्चिद्ब्रूयात् तदा तदुद्भावनमित्याह—नन्विति । ननु प्रामाण्यनिषेधनिरूप्यो हि व्याघातस्तदपरिज्ञाने मा ज्ञायि कथं [6]प्रामाण्यापरिज्ञाने इत्याशङ्क्य, तदपरिज्ञानस्य निषेधापरिज्ञानद्वारा [7]व्याघाताज्ञानप्रयोजकत्वं विवक्षितमित्याह—प्रमा नास्तीति।

जयदेवमिश्रास्तु—प्रामाण्यमित्यादिवाक्यं न दोषान्तरपरम्, किं तु व्याप्त्यभावशङ्कानिवर्तकतया [8]तत्परपूर्ववाक्यैकवाक्यमिति व्याचक्षते । तन्मतमाह

---

1. ख. निरूप्यते
2. ख. अस्वतस्त्वं
3. ग. व्याघात इति विशेष-
4. क. 'स्वार्थ' नास्ति
5. ख. ॰ग्रहणनि-
6. ख. प्रामाण्यपरि-
7. ग. व्याघातज्ञान-
8. ख. तत्पूर्व-

उच्यते । प्राग्भवीयसंस्काराद्विशेष्यावृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकज्ञानत्वं वा प्रामाण्यमात्रं स्मृतं वह्निज्ञानादौ साध्यमानं सर्वनाममहिम्ना पक्षधर्मताबलाद्वह्निज्ञानस्य विशेष्यावृत्त्यप्रकारकत्वादौ पर्यवस्यति । स्वतःप्रामाण्यनिषेधे प्राथमिकप्रामाण्यज्ञानस्यान्यथोपपादयितुमशक्यत्वादिति संप्रदायविदः ।

---

प्रकाशः

स्वयं प्रामाण्यं निषिध्यताम् इत्यत आह—प्रामाण्यमिति । प्रामाण्यमज्ञात्वापि चेन्निषेधः तदा व्याघातबलादपि न तदुपस्थितिरित्यर्थः इत्याहुः ।

प्रामाण्यमात्रमित्यत्र मात्रशब्देन व्याप्त्यादिव्यवच्छेदेनान्वयित्वशङ्का-[1]निरासः । सर्वनाममहिम्नेति । यद्यप्यनुमाने सर्वनामरूपशब्दमहिमा(नोपयुज्यते); [नोपयुज्यते]तथापि वह्नित्वप्रकारकमिदं ज्ञानं तद्वति तत्प्रकारकमिति वाक्ये यतो विशेषादाकाङ्क्षोत्थापने सति तत्पदद्वयेन वह्नित्वमेव बोध्यते न त्वन्यत् स एव विशेषः सर्वनाम[2]महिमत्वेन विवक्षितः । स च पक्षधर्मताया विशेषमात्रनसामर्थ्ये उपयुज्यत एव । यदेव हि विशेषबोधने प्रतिज्ञायामाकाङ्क्षाविशेषोत्थापकतया सहकारि तदेव तत्रानुमाने पक्षधर्मतायां तथा । अत एव प्रतिज्ञायामाकाङ्क्षालभ्योऽर्थः पक्षधर्मताविषय इत्याहुः ।

---

न्यायशिखामणिः

—केचित्त्विति । एतन्मते व्याघातस्याज्ञानादित्यनेन व्याघातबलात् प्रामाण्यानुपस्थितेरित्यर्थो विवक्षितः । तत्र च न प्रामाण्यापरिज्ञानमन्वेति किं तु [3]तन्निषेधेनेत्याह—प्रामाण्यमिति ।

(अत्र च) [मात्रचा] व्यवच्छेद्यं न ज्ञानादि, तद्व्यवच्छेदस्याप्रयोजकत्वात् किं त्वन्यदेवेत्याह—मात्रशब्देनेति । [4]सर्वनामेति । अत एवोक्तम् ईश्वरवादे—'अनुमाने शब्दस्वभावोपन्यासस्याप्रयोजकत्वात्' इति । न हि सर्वनाममहिमशब्देन बुद्धिस्थवाचकत्वं विवक्षितम् । किं तु शब्दानुमानसाधारणो

---

1. ख. निराकृता
2. ख. °महिम्नेति
3. ख. तन्निषेध इत्याह
4. ख. 'सर्वनामेति' इति नास्ति ।

प्रकाशः

केचित्तु यथा शब्दे सर्वनाममहिम्ना विशेषांशस्थापकत्वम्, तथा अनुमाने पक्षधर्मताबलादिति दृष्टान्तपरतया व्याख्येयमित्याहुः ।

---

न्यायशिखामणिः

विशेषलाभप्रयोजको धर्मविशेष एवेत्याह—तथापीति । स च [1]विशेषः कार्यबलादवश्यमेष्टव्य इत्याह—अत एवेति ।

ननु सर्वनामस्थले बुद्धिस्थवाचकत्वा[2]काङ्क्षाभ्याम्, अनुमानस्थले चोपनयपक्षधर्मताभ्यां विशेषलाभोपपत्तेरुक्तविशेषांऽसिद्ध एव । अन्यथा तत एव विशेषात् सर्वनामानुमानयोर्व्यक्ति[3]विशेषबोधकत्वोपपत्तौ बुद्धिस्थवाचकत्वपक्षधर्मताबल[4]कल्पनावैयर्थ्यापत्तिरित्युपाध्यायमते अपरितुष्यन् जरत्पक्षधरमतमाह—केचित्त्विति ।

ननु तद्वति [5]तत्प्रकारकज्ञानत्वमात्रं स्मृतमिति यदि तन्मात्रं साध्यम्, तदा घटत्ववति घटत्व [6]प्रकारकमित्याकारानुमितिर्न स्यात् । अनुमितेर्व्यापकतावच्छेदकमात्र[7]प्रकारकत्वात् पक्षधर्मताबलेन च साध्यस्य पक्षसंबन्धमात्रभानात् उपनयस्य चात्राभावात् । ततश्च प्रवर्तकप्रामाण्यग्रहानुपपत्तिरेवेत्यपरितोषात् मणौ—स्वतःप्रामाण्यनिषेध इत्युक्तम् । तथा च प्रबलप्रामाण्यग्रहानुपपत्त्या प्राग्भवीय[8]संस्कारात् घटत्ववति घटत्वप्रकारकत्वमात्रं जन्मान्तरानु[9]भूतमपि स्मृतमिति कल्प्यते । तदुक्तं खण्डनकृता—

"अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
[10]पिनष्टि दृष्टवैषम्यं सैव सर्वबलाधिका ॥" इति ।

न चाऽनन्वयित्वापत्तिः । ज्ञानवृत्तितया प्रामाण्यस्मरणाभावात् । व्यतिरेकिरूपगत्यन्तरसत्त्वेन तादृशप्रामाण्यस्मरणकल्पनायोगात् । एवं च घटत्ववति घटत्व-

---

1. ख. ग. विशेषबलात्
2. क ख. ग. ॰काङ्क्षा स्यात्
3. ख ॰विशेषणबो-
4. क. ॰कल्प्यवैयर्थ्यापत्ते-
5. क. तत्प्रकारकत्वमात्रं
6. क. ॰प्रकारकत्वं न सिध्येत्
7. ख. ॰प्रकारकत्वनियमात्
8. ख. ॰संकरात्
9. ग. भूतं विस्मृतमिति
10. ख. ग. पिनष्टदृ-

वयं तु ब्रूमः—प्रथममप्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणा साध्यम्। तत एव निष्कम्पप्रवृत्तेरुपपत्तेः। तदेव वा सिध्यत् पक्षधर्म-

---

प्रकाशः

नन्वपूर्वदेवदत्तादिज्ञानप्रामाण्यस्य पूर्वमननुभूतत्वात् कथं स्मरणम्। कथं तदभावे तत्रानुमानप्रवृत्तिः। किं च गत्यन्तरसत्त्वे प्राग्भवीयसंस्कारोद्बोधकल्पना मानाभावादयुक्तेत्यपरितुष्यन् [1]अप्रसिद्धसाध्यकव्यतिरेक्यभ्युपगन्तुरेकदेशिनो मत-मत्र संचारयन्नाह—वयं त्विति। तत एवेति। अप्रामाण्यशङ्काविधूननस्य ततोऽपि भावादिति भावः। लाघवात् तद्वतीत्यादिप्रामाण्यज्ञानमेव विषयप्रवृत्ति-हेतुरिति यो ब्रूयात् तं प्रति 'तुष्यतु दुर्जन' इति न्यायेनाह—तदेवेति।

---

न्यायशिखामणिः

प्रकारक[2]ज्ञानत्वमात्रं प्रामाण्यं प्राग्भवसंभव[3]संस्कारात् स्मृतं व्यतिरेकिणा साध्यत इत्याचार्याणां तात्पर्यम्। अत एव देवदत्तादिज्ञानप्रामाण्य[4]ग्रहस्थले उक्त-प्रकारानुपपत्तिमाह—नन्विति। ननु यद्व्यक्तिजातीयं वस्तु [5]सकलस्वजन्मस्वविच्छिन्नं तज्ज्ञानप्रामाण्य एवोक्तप्रकारानु[6]सरणमित्यरुचेराह—किं चेति। [7]तर्हि स्तन्यपान-स्थले इष्टसाधनत्वादिस्मरणमपि न स्यादित्याशङ्क्य, तेन विना न जीवनमिति तत्रागत्या स्मरणकल्पनेऽ[8]प्यन्यत्र तदसंभवादित्यत आह—गत्यन्तरेति। वयं तु ब्रूम इत्यादिना वक्ष्यमाणगत्यन्तरेत्यर्थः।

नन्वप्रसिद्धसाध्यकव्यतिरेकिणो ग्रन्थकृतैवाग्रे निराकृतत्वात्तदभ्युपगम-विरोधः। न चैकदेशिमतत्वान्न विरोध इति वाच्यम्। तथा सति वयं तु ब्रूम इत्यनुपपत्तेरित्याशङ्क्य इतरभेदस्थले एकदेश्यङ्गीकृतस्याप्रसिद्धसाध्यकव्यतिरेकिणः प्राथमिकप्रामाण्यग्रहे ग्रन्थकृता संचार्यमाणत्वान्न विरोध इत्याह—एकदेशिन इति। [9]नन्वप्रामाण्याभावनिश्चयस्य न साक्षात् प्रवर्तकत्वम्। तत्प्रयोजकत्वं च

---

1. ख. प्रसिद्ध-
2. ग. °ज्ञानमात्रं
3. ग. °संकरात्
4. क. 'ग्रह' नास्ति।
5. क. सकलजन्मावि- ग. घ. सकलजन्मस्वव-
6. ख. ग. घ. °स्मरण-
7. ख. न हि
8. घ. °प्यत्र तदभावा-
9. ख. ननु प्रामाण्या-

ताबलेन तद्वति तत्प्रकारकत्वादिकमादाय सिध्यति । तदनन्तरमर्थाद्वा सिध्यतीति वक्ष्यते । तथा हि—अयं वह्नित्वेनानुभवः न वह्नित्वाभाववति वह्नित्वप्रकारकः, अवह्निवृत्तिप्रकारको न, विशेष्यावृत्तिप्रकारको न, वह्नित्वप्रकारकत्वे सति वह्न्यविशेष्यको न, वह्नित्वव्यधिकरणप्रकारावच्छिन्नो न, वह्न्यवृत्तिप्रकारको न वा ;

---

**प्रकाशः**

ननु पक्षधर्मताबलादप्यखण्डाभावस्य [1]पक्षीयत्वं व्यापकतावच्छेदकप्रकारेण सिध्येत् न तद्वतीत्यादिकम् अनुपस्थितत्वात्, उपस्थितौ च तदेव साध्यतां [2]किमभावानुमानेनेत्यत आह—अर्थाद्वेति । अग्रे प्रदर्शनीयाद्व्यतिरेक्यनुमानविशेषादित्यर्थः ।

---

**न्यायशिखामणिः**

[3]प्रामाण्यनिश्चयस्यापीति तत्र [4]एवेत्यवधारणानुपपत्तिरित्यत आह—[5]अप्रामाण्येति । तथा च एवकारोऽप्यर्थक इति भावः ।

ननु प्रामाण्यनिश्चयस्याप्रवर्तकतया संशयनिवर्तकत्वमेव वाच्यम् । संशयनिवृत्तौ च प्रामाण्यनिश्चयवत् अप्रामाण्याभावनिश्चयो विरोधिदर्शनत्वेन हेतुरेवेति लाघवमकिंचित्करमित्यस्वरसं सूचयति—तुष्यतु दुर्जन इति । वस्तुतस्तु स्वतस्त्वविप्रतिपत्तिविषयस्य [6]वह्नित्ववतीत्यादिप्रामाण्यस्य प्राथमिकग्रहस्थले अनुमानाप्रवृत्तेरगत्या स्वतोग्राह्यत्वमिति चोदिते वह्नित्वाभाववद्विशेष्यकत्वाभावस्य [7]व्यतिरेकिसाध्यत्ववर्णनं प्रकृतासंगतमित्याशङ्कायां मणौ तदेवेत्युक्तमिति द्रष्टव्यम् ।

ननु [8]वह्नित्ववतीत्यादिकमव्यापकमप्युपनीतं भासतामित्यत आह—अनुपस्थितत्वादिति । अर्थापत्तिपरत्वं वारयति [9]अग्र इति । 'यद्वा इदं [10]वह्नित्वप्रकारकज्ञानं वह्नित्ववद्विशेष्यकम्' इत्यत्रेत्यर्थः ।

---

1. क. पक्षसबन्धत्वं
2. ख. किं मावानु-
3. ख. ग. प्रामाण्यानिश्चय-
4. ख. एवेत्यसाधारणा-
5. क. अप्रामाण्यमिति ।
6. ख. वह्नित्ववदित्यादि-
7. ख. ग. अव्यति-
8. ख. वह्नित्ववदित्यादि-
9. क. ग. अग्रह इति ।
10. ख. घ. वह्न्यप्रकारकं

## प्रकाशः

न वह्नित्वाभाववतीति। विशेष्यत्वं सप्तम्यर्थः। तथा च न वह्नित्वाभाववद्विशेष्यक इत्येव साध्यम्, न तु वह्नित्वप्रकारकत्वमपि प्रवेश्यम्, व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यत्वेन तत्र नीलधूमवद्व्यर्थविशेषणत्वात्, अप्रामाण्यस्य भावरूपतया साध्याभावस्याखण्डत्वेन न वैयर्थ्यमित्यस्याप्यसंभवात्।

---

## न्यायशिखामणिः

अयमित्यादि[1]मणेः एषोऽर्थः—वह्नित्वभ्रमे पक्षत्ववारणायोक्तम्—अयमिति। तेन च दाहसमर्थविशेष्यक[2]प्रयत्नजनकत्वं विवक्षितमिति नोक्तदोषः। वह्निविशेष्यकद्रव्यत्वादिप्रकारकज्ञाने तद्वारणाय—वह्नित्वेनेति। वह्नित्वप्रकारकानुभव इत्यर्थः। न चैवं पक्षतावच्छेदकस्य हेत्वभेदापत्तिः। दाहसमर्थ[3]विशेष्यकत्व[4]तद्वद्विशेष्यकत्वयोर्निश्चयत्वानुभवत्वयोश्च भेदेन तद्भेदावश्यंभावादिति।

विषयत्वस्य सप्तम्यर्थत्वे अयं वह्निरित्यनुभवस्यापि तादृशवह्नित्वविषयत्वात् बाध इत्यत आह—विशेष्यत्वमिति। ननु व्यापके [5]न व्यर्थविशेषणतेत्यत आह—व्यतिरेकव्याप्ताविति।

ननु वह्नित्वाभाववद्विशेष्यकत्वमात्रं नाप्रामाण्यम्, गुञ्जापुञ्जे वह्नित्वाभावप्रकारकज्ञानस्याप्रामाण्यापत्तेः, वह्निगोचरजलभ्रमस्य प्रामाण्यापत्तेश्च। किं तु तत्प्रकारकत्वमपि। तथा च तदभाववद्विशेष्यकत्वाभावसिद्धावपि न विशिष्टाप्रामाण्याभावसिद्धिरित्याशङ्क्य, तदभाववद्विशेष्यकत्वमेवाप्रामाण्यम्। तदपि न सर्वत्र। किं तु तत्प्रकारकज्ञान एवेति गुञ्जापुञ्जगोचरवह्नित्वाभावज्ञाने नातिप्रसङ्गः। तदभावश्च तत्प्रकारकज्ञान एव प्रामाण्यव्यवहारप्रवृत्तिहेतुरिति न वह्निगोचरजल[6]भ्रमे वह्निज्ञानप्रामाण्यव्यवहारः, न वा ततः तदर्थिप्रवृत्तिप्रसङ्गः। तथा च वह्नित्वप्रकारकत्वरूपपक्षतावच्छेदकप्रकारिका तदभाववद्विशेष्यकत्वाभावानुमितिरप्यप्रामाण्यशङ्काऽनिवृत्तिहेतुरिति नानुमानवैयर्थ्यमित्याह—न चैवमिति। तदभावसिद्धा-

---

1. ख. °चिन्तामणेः
2. क. °प्रवृत्ति-
3. क. ख. घ. विषयकत्व-
4. ख. ग. घ. °तद्विशेष्यक-
5. ग. 'न' नास्ति।
6. ग. 'भ्रमे वह्नि' नास्ति

### प्रकाशः

न चैवमप्रामाण्याभावो न सिद्ध इति वाच्यम्। वह्नित्व[1]प्रकारकानुभवे वह्नित्वाभाववद्विशेष्यकत्वस्यैवाप्रामाण्यतया तदभावसिद्धौ तत्सिद्धिपर्यवसानात्। अन्यथा 'नावह्निवृत्तिप्रकारक' इत्यादावगतेः। एवं साध्यान्तरेऽपि बोध्यम्।

---

### न्यायशिखामणिः

**विति।** अत्र वह्नित्वप्रकारकानुभव इत्यनुषङ्गः। [2]**तत्सिद्धीति।** विशिष्टाप्रामाण्य भाव[3]सिद्धिकार्याप्रामाण्यशङ्कानिवृत्तिहेतुत्वेन तत्सिद्धिरूपत्वादित्यर्थः। **अन्यथेति।** [4]विशिष्टाप्रामाण्याभावस्यैव साध्यत्व इत्यर्थः।

**नावह्नीति।** अत्र नञ्व्यत्यासेन वह्न्यवृत्तिप्रकारकत्वम् अप्रामाण्यं विवक्षितम्। अन्यथा वह्निगोचरद्रव्यत्वज्ञानस्यापि तत्प्रसङ्गात्। न च [5]न विशेष्यावृत्तीत्यत्र न यत्किंचिद्विशेष्यावृत्तित्वम् अतिप्रसङ्गात्, नापि प्रकृतज्ञानविशेष्यावृत्तित्वम्, वह्निप्रत्यक्षे रूपत्वापेक्षया रूपस्यापि विशेष्यतया तदवृत्तिवह्नित्वप्रकारकत्वेन बाधात्। किं तु विशेष्यपदं [6]वह्निपरमेव वाच्यम्, तथा च साध्याभेद इति वाच्यम्। अन्योन्यात्यन्ताभावभेदेन तद्भेदावश्यंभावात्।

न चैवमप्यस्य षष्ठसाध्याभेदो दुर्वारः। तत्र वह्न्यवृत्तिपदस्य वह्नित्वासमानाधिकरणपरत्वात्। [7]वैयधिकरण्यासामानाधिकरण्ययोश्च तदनधिकरणाधिकरणत्व[8]तदधिकरणानधिकरणत्वरूपत्वान्न षष्ठस्य पञ्चमाभेदः। एवं च वह्न्यवृत्तिप्रकारकत्वादेर्घटज्ञानसाधारण्येना[9]प्रामाण्यरूपत्वाभावाच्चतुर्थव्यतिरिक्ताग्रिमसाध्येष्वनुमीयमानेष्वपि नाप्रामाण्याभावसिद्धिः।

यदि च दाहसमर्थविशेष्यकप्रयत्नजनकज्ञान एव वह्न्यवृत्तिप्रकारकत्वादिकम् [10]अप्रामाण्यम्। तदभावश्च तत्रैव प्रामाण्यमिति [11]व्यवसीयत इति तादृशज्ञाने तदभावानुमितिरप्रामाण्यशङ्कानिवर्तिकेति, तदा प्रकृतेऽपि तुल्यम्। **साध्यान्तरेऽपीति।** चतुर्थसाध्य इत्यर्थः।

---

1. ख. °प्रकारकत्वा-
2. क. तत्सिद्धिरिति। ग. तत्प्रसिद्धीति।
3. ग. °सिद्धीति कार्या-
4. ख. विशिष्टप्रामाण्या-
5. क. ग. घ. 'न' नास्ति।
6. घ. अवह्नि-
7. ग. इत आरभ्य...॰अग्रिमसाध्येषु' इत्यन्तभागः नास्ति।
8. ख. ग. °तदधिकरणानधिकरणत्व-नास्ति
9. ख. ग. °प्रमारूप
10. ख. ग. प्रामाण्यम्
11. ख. व्यवसायत ग. घ. व्यवह्रीयत

दाहसमर्थविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वात्, दाहसमर्थविशेष्यकवह्नित्वप्रकारकनिश्चयत्वाद्वा, यन्नैवं तन्नैवं यथा वह्न्यप्रमा।

---

**प्रकाशः**

दाहेति सत्यन्तं भ्रमे व्यभिचारवारणाय। अत्र वह्नित्वमिति निश्चये वह्नित्वाभावव[1]द्वह्नित्वविशेष्यके वह्निप्रवर्तके व्यभिचार इत्यत [2]उक्तम्—वह्नित्वप्रकारकेति। न च प्रवृत्तिविषय[3]विशेष्यकेष्टतावच्छेदकज्ञानस्यैव प्रवर्तकत्वात् तस्य न तथात्वमिति वाच्यम्। इष्टतावच्छेदकप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानस्यैव लाघ-

---

**न्यायशिखामणिः**

अत्रेदं चिन्त्यम्। नीलधूमे हि लघुधूमत्वरूपधर्मान्तरसत्त्वात् न नीलधूमत्वस्यावच्छेदकता। प्रकृते च [4]वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकत्वातिरिक्तस्य वह्नित्वाभाववद्विशेष्यकत्वस्याभावेन यन्निष्ठेति न्यायात् तस्यैव व्याप्यतावच्छेदकता। न च गुञ्जापुञ्जवह्न्योर्गुञ्जापुञ्जवह्नी इति समूहालम्बनातिव्याप्त्यापत्त्या वह्नित्वप्रकारकत्वावच्छेदेन तदभाववद्विशेष्यकत्वमप्रामाण्यं, [5]वह्निगोचरजलभ्रमातिव्याप्त्यापत्त्या तत्प्रकारकत्वावच्छेदेन तदभाववद्विशेष्यकत्वाभावः प्रामाण्यम्। तथा च पक्षतावच्छेदकमहिम्नैव तदवच्छिन्नतदभावरूपप्रामाण्यसिद्धेः साध्ये वह्नित्वप्रकारकत्वं व्यर्थमिति विवक्षितमिति वाच्यम्। दाहसमर्थविशेष्यकवह्नित्वप्रकारकत्वस्य [6]तदन्यविशिष्टधर्मस्यैव पक्षतावच्छेदकत्वात्। तस्माद्वह्नित्वप्रकारकत्वं साध्ये प्रवेश्यमेव। न चैवं [7]नावह्निवृत्तिप्रकारक इत्यादौ का गतिरिति वाच्यम्। तत्र [8]चतुर्षु साध्येष्वपि वह्निविशेष्यकत्वविशेषणदानेन विशिष्टाप्रामाण्याभावसिद्धेरभिमतत्वादिति।

अत्रेति। न चात्र वह्नित्वमिति ज्ञानस्य वह्नाविदंत्वप्रकारकत्वेऽपि वह्नौ वह्नित्वमिति[9]ज्ञानस्य वह्नित्वप्रकारकत्वेन व्यभिचार इति वाच्यम्। वह्नित्वांशे

---

1. ख. °वह्नित्व- नास्ति
2. ख. आह
3. ख. 'विशेष्यक' नास्ति।
4. ख. वह्न्यभावव-
5. क. वह्नित्व-
6. क. तदन्यस्य वि-
7. ख. वह्निप्रवृत्ति
8. ग. त्रिषु साध्येषु वह्नि-
9. ख. ज्ञानत्ववह्नित्व-

प्रकाशः

वात् प्रवर्तकत्वात् । इष्टतावच्छेदक[1]प्रकारकज्ञानस्य तद्विशेषत्वेन गुरुत्वात् । एवं चाग्निमहेतावपि दाहसमर्थविशेष्यकत्वं दाह[2]समर्थवैशिष्ट्यविषयकत्वम् । एवं चैतदर्थमेव [3]तत्रापि वह्नित्वप्रकारकपदमिति ध्येयम् ।

यत्तु फलज्ञाने व्यभिचारवारणाय तदुपादानमिति । तन्न । तस्य हि न प्रवर्तकत्वमित्यन्यथाख्यातौ वक्ष्यामः । न च वह्निमानयमिति ज्ञाने वह्निप्रवर्तके

न्यायशिखामणिः

हेत्वसत्त्वात् [4]वह्न्यंशे साध्यस्यापि सत्त्वात् । अंशविवक्षावश्यकत्वस्यानुपदमेवाग्रे स्फुटत्वात् । अत एव वह्निगुञ्जापुञ्जयोर्गुञ्जापुञ्जवह्नी इति समूहालम्बने न व्यभिचारः । वह्न्यंशे तादृशप्रयत्नजनकस्य वह्नित्वाप्रकारकत्वेन गुञ्जापुञ्जांशे तत्प्रकारकस्यापि तस्य तादृशप्रयत्नाजनकत्वेनोभयत्र हेत्वभावात् ।

ननु [5]दाहसमर्थविशेष्यकत्वाभावादेव वह्नित्वमिति निश्चये व्यभिचारनिरासे द्वितीयहेतौ वह्नित्व[6]प्रकारकत्वविशेषणवैयर्थ्यमित्यत आह—एवं चेति । एतदर्थमिति । अत्र वह्नित्वमिति [7]निश्चये व्यभिचारवारणार्थमित्यर्थः ।

उपाध्यायमतमाह—यत्त्विति । तथा च प्रवर्तकताया मिष्टतावच्छेदकप्रकारकत्वस्य तन्त्रत्वेऽपि न विशेषणवैयर्थ्यमिति भावः । एवम् [8]अंशभेद[9]विवक्षायाम् । तदविवक्षायां तु वह्निगुञ्जापुञ्जयोरिमौ वह्नी न वेति संशये व्यभिचारवारणाय निश्चयपदं सार्थकं स्यादिति भावः । [10]यन्मत इति । निश्चयत्वस्याखण्डत्वेन तत्र ज्ञानत्वाप्रवेशान्न वैयर्थ्यमिति भावः ।

ननु निश्चयत्वं न जातिः, परमते [11]गुणत्वव्याप्यजातेरनङ्गीकारात् । न्यायनये च चाक्षुषत्वादिना [12]संकरात् । किं च तादृशवह्नित्वप्रकारकत्वस्य वह्नीच्छा-

1. क. °प्रकारकवर्तकज्ञानस्य
2. क. °समर्थविषयकत्वं
3. ख. तत्रावह्नित्वप्रकारक-
4. ख. 'वह्न्यंशे……न व्यभिचारः' इति भागः नास्ति ।
5. ख. भागसमर्थ-
6. क. °प्रकारकत्वस्य तन्त्रत्वेऽपि विशेषण-
7. क. ख. घ. निश्चयस्य
8. ख. घ. अङ्गिभेद-
9. क. °विवक्षायामित्यर्थः
10. ग. तन्मत इति
11. ख. गुणगजातेः ग. गुणत्वजातेः घ. गुणगतजातेः
12. ग. सांकर्यात्

### प्रकाशः

व्यभिचारः। तदंशे साध्यस्यापि सत्त्वात्। न चैवं निश्चयपदं व्यर्थम्। यन्मते निश्चयत्वं जातिरव्याप्यवृत्तिः तन्मतेनास्य हेतुत्वेन तत्र वैयर्थ्याभावादित्येके। नावह्निवृत्तिप्रकारक इत्यादिसाध्ये संशये व्यभिचारात् तदभिप्रायेणैव तन्निश्चयपदमित्यन्ये।

निश्चयपदेन ज्ञानमेव विवक्षितम्। तत्पदोपादानं चात्र निश्चयस्यैव पक्षत्वमिति प्रदर्शनाय। तेन पक्षधर्मता[1]बलेन च संशयव्यावृत्तं प्रामाण्यं सिध्यतीत्यपरे

यत्तु वह्नौ वह्नित्वं न वेति संशये व्यभिचारवारणाय तत्। तत्र वह्नित्वाभाववद्वृत्तित्वं विशेष्यमिति साध्याभावः। वह्नित्वं प्रकारोऽपीति दाहसमर्थविषयक-[2]प्रयत्नजनकवह्नित्वप्रकारकज्ञानत्वं चेति न हेत्वभाव इति।

---

### न्यायशिखामणिः

साधारणस्य हेतोरव्यभिचारात् निश्चयपदं व्यर्थमेवेत्युपाध्यायमते अपरितुष्यन्नाह—**नावह्नीति**। प्रथमचतुर्थसाध्यव्यतिरिक्तसाध्येष्वित्यर्थः। तथा च प्रथमादिसाध्ये तत्पदं नोपादेयमेवेति भावः। **संशय इति**। वस्तुतो वह्नौ वह्निर्वा न वेति संशय इत्यर्थः। [3]तत्र हेतुमति वह्न्यंशज्ञाने अवह्निवृत्तिवह्नित्वाभावस्य [4]प्रकारत्वेन साध्याभावादिति भावः।

ननु प्रामाण्यस्य संशयसाधारण्य[5]मिष्टमेव। तस्यापि पुरोवर्तिवृत्तिकोट्यंशे प्रमात्वात्। किं च निश्चयपदस्य ज्ञानपरत्वेन अवह्निवृत्तिप्रकारक इत्यादिसाध्ये वह्निविशेष्यकवह्नित्वसंशये व्यभिचारो दुर्वारः। अपि च वह्नीच्छादावपि साध्यसत्त्वेन व्यभिचाराभावात् ज्ञानपरमपि निश्चयपदं व्यर्थमेवेत्यपरितोषं हृदि निधायोपाध्यायमतमाह—**निश्चयपदेनेति**। तर्हि ज्ञानपदमेव देयमित्यत आह—**तत्पदेति**। निश्चयपदेत्यर्थः। **संशयव्यावृत्तमिति**। अन्यथा वह्निविशेष्यकवह्नित्वसंशयस्य वह्नित्वप्रकारकानुभवत्वेन पक्षत्वापत्तौ तत्रापि प्रामाण्यं सिध्येदिति भावः।

---

1. क. °बन्धेन
2. क. °प्रयत्नवह्निजनकवह्नित्व-
3. ख. अत्र
4. ख. प्रकारकत्वेन
5. ख. 'इष्टम्' नास्ति।

## प्रकाशः

तन्न। वह्नित्वांशे वह्नित्वप्रकारकत्वाभावेन हेत्वभावस्यापि [1]सत्त्वात्, वह्न्यंशे [2]साध्यस्यापि सत्त्वात्। अंशविवक्षाया आवश्यकत्वात्। अन्यथा वह्निमानयमिति निश्चये व्यभिचारतादवस्थ्यात्। न चास्य वह्निप्रवर्तकत्वमेव नेति वाच्यम्। इष्टतावच्छेदकवैशिष्ट्यावगाहित्वेनास्यापि तथात्वात्, वह्नित्वविशिष्टत्वेनोपस्थितौ च वह्नित्वसंदेहाभावाच्च।

---

## न्यायशिखामणिः

जयदेवमतमाह—यत्त्विति। यद्यपि इह वह्नित्वं न वेति संशये वह्नित्वं न प्रकारः। वह्नौ वह्नित्वं न वेति संशयश्च न भवत्येव। वह्नित्वविशिष्टत्वेनोपस्थिते तत्र तदभाव[3]संदेहायोगात्। तथापि [4]विशेषादर्शनदशायां वह्नित्वं वह्निवृत्ति न वेति संशयो भवत्येव। न च [5]वह्नित्वत्वं वह्निवृत्तित्वगर्भमिति कथं तेन रूपेणोपस्थिते वह्नित्वे संशय इति वाच्यम्। इदंत्वेन ज्ञाते तत्र [6]वह्निवृत्तित्वसंशयस्य वह्नित्वत्वेन ज्ञाते पुरोवर्तिवृत्तित्वसंशयस्य वा प्रकृतेऽभिप्रेतत्वात्। तत्र च वह्न्यंशे वह्नित्वप्रकारकत्वमिति न हेत्वभावः।

नन्वेवमप्यत्र वह्नित्वाभाव इति भ्रमस्य दाहसमर्थविषयतया [7]तज्जन्यावह्न्यर्थिप्रयत्नस्याप्यवश्यं तद्विषयत्वेनाभावापेक्षया वह्नित्वस्य [8]प्रकारत्वेन च तत्र न हेत्वभावः। वह्नित्वाभावस्य तद्वतो विशेष्यत्वात् साध्याभाव इति व्यभिचार इति चेत्—न। यदंशे तादृशप्रयत्नजनकत्वं तदंशे वह्नित्वप्रकारकत्वस्य हेतोर्विवक्षितत्वात्। वह्नित्वाभावभ्रमस्य च वह्न्यंशे तादृशप्रयत्नजनकत्वेऽपि तदंशे वह्नित्वप्रकारकत्वाभावान्नोक्तदोष इति भावः।

यदंशे हेतुस्तदंशे साध्यमित्यंशविवक्षा साध्येऽप्यभिमता न वा। तत्राद्यं निराकृत्यान्त्यं निराचष्टे—अन्यथेति। तस्मान्नावह्निवृत्तिप्रकारक इत्यादिसाध्यमादाय वह्निगोचरसंशये व्यभिचारात् तद्वारणाय निश्चयपदमित्यन्येषां मतमेव युक्तमिति भावः।

---

1 ख. शक्यत्वात्
2. ख. साध्यस्यैव
3. क. °संदेहाभावात्
4. ग. विशेषदर्शन-
5. ख. ग. घ. वह्नित्वं
6. ख. वह्निवृत्तित्वं संशयस्य
7. क. तज्जन्यप्रयत्नस्य; ग. तज्जन्यवह्न्यर्थि-
8. ख. ग. प्रकारकत्वेन

**प्रकाशः**

अस्तु वा इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानमात्रस्यैव प्रवर्तकत्वम्। तथापि हेतुद्वये तात्पर्यम्। दाहसमर्थविशेष्यकप्रयत्नजनकत्वादित्येकः। वह्नित्वप्रकारकनिश्चयत्वादित्यपरः। अत एव वक्ष्यति [1]'वह्नित्वाभाववति वह्नित्व-[2]प्रकारकत्वसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रह' इति। निश्चयत्वं च परस्परविरुद्धप्रकारकज्ञानान्यज्ञानत्वम्। तेन वह्निभ्रमे न व्यभिचारः। गुञ्जापुञ्जवृत्तीदंत्वस्य वह्नित्वविरुद्धत्वात्।

---

**न्यायशिखामणिः**

ननु नावह्निवृत्तिप्रकारक इत्यादिसाध्ये हेतोर्निश्चयगर्भतया संशये दोषवारणेऽप्यनुष्णा वह्निरिति ज्ञाने व्यभिचार एव। न च भासमानत्वानन्तर्भावेण समानधर्मिकविरुद्धानेकधर्मप्रकारकज्ञानान्यज्ञानत्वं निश्चयत्वमिह विवक्षितमिति नोक्तदोष इति वाच्यम्। तथा सति सर्वसाध्येऽपि हेतौ सत्यन्तवैयर्थ्यात्। भ्रममात्रस्य विरुद्धानेक[3]प्रकारकत्वात्। न च प्रमुष्टतत्ताकस्मरणरूपभ्रमे दोषवारणाय तत्सार्थकमिति वाच्यम्। प्रत्यक्षपरज्ञानपदेनैव तन्निवारणात्। तथापि [4]नावह्निवृत्तिप्रकारक इत्यादिसाध्ये तद्वैयर्थ्यापरिहाराच्चेत्यस्वरसाज्जयदेवमतमाह—अस्तु वेति। एतच्चाभ्युपगमवादमात्रम्। वस्तुत इष्टतावच्छेदकवैशिष्ट्यावगाहिज्ञानत्वेनैव प्रवर्तकत्वं लाघवादित्युक्तम्। हेतुद्वयविवक्षा चोक्तास्वरसादेव। अत एव हेतौ विशेष्यत्वमुपात्तम्। अन्यथा वह्नित्वविशेष्यकनिश्चये दाहसमर्थविषयकत्वविशेषणेनैव व्यभिचारनिरासे तद्वैयर्थ्यादिति बोध्यम्।

निश्चयत्वं चेति। अत्र परस्परेत्यादिना विरुद्धानेकधर्मप्रकारकज्ञानान्यज्ञानत्वं निश्चयत्वमिह विवक्षितमिति [5]बहवः। तत्तुच्छम्। वह्नि[6]प्रत्यक्षस्य रूपवद्वह्निधर्मिभेदेन तादृशरूपत्ववह्नित्वप्रकारकत्वात्। विशेष्यवृत्तिधर्मविरुद्धधर्मप्रकारकज्ञानान्यज्ञानत्वं निश्चयत्वं विवक्षितमिति केचित्। तच्चिन्त्यम्। वह्नित्वस्यापि

---

1. क. वह्नित्वाभाववता
2. ख. ०प्रकारकसमर्थ-
3. ख. ग. घ. प्रकारत्वात्
4. ख. 'नावह्निवृत्ति·······वैशिष्ट्यावगाहि-' इति ग्रन्थः भ्रष्टः।
5. घ. 'बहवः······निश्चयत्वं विवक्षितमिति' इति ग्रन्थः नास्ति।
6. ख. ०प्रत्यक्षस्वरूप-
   क. ०प्रत्यक्षस्यैव रूपवद्वह्न्यादिधर्मि-

प्रकाशः

यदि चैवं गुञ्जापुञ्जविशेष्यक[1]वह्नित्वमात्रप्रकारकप्रमुष्टतत्ताकस्मरणे व्यभिचारशङ्का, तदा ज्ञानपदं प्रत्यक्षपरमनुभवपरं वा बोध्यम् । न हि प्रत्यक्षभ्रमे वह्नित्वमात्रप्रकारकत्वम्, इदंत्वादेरवश्यं भानात् । इदंत्वप्रकारकत्वेन हेतुविशेषणाद्वा ।

---

न्यायशिखामणिः

यत्किंचिद्विशेष्यवृत्तिधर्मविरुद्धत्वात् प्रकृतज्ञानविशेष्यरूपवृत्तिरूपत्वविरुद्धत्वाच्च । न च वह्निवृत्तिधर्मविरुद्धत्वं, वह्नित्वं च तादृशेदंत्वसमानाधिकरणमिति न हेत्वसिद्धिः । गुञ्जापुञ्जवृत्तीदंत्वं तु तादृशवह्नित्वविरुद्धमिति भ्रमव्यावृत्तिरिति वाच्यम् । वह्निप्रत्यक्षस्यापि तादृशरूपत्वप्रकारकत्वात्, घटज्ञानादेरपि तादृशघटत्वप्रकारकतया तद्वारकवह्नित्वप्रकारकत्वविशेषणवैयर्थ्याच्च । किं तु समानधर्मिकविरुद्धानेकधर्मप्रकारक[2]ज्ञानान्यज्ञानत्वं निश्चयत्वमिह विवक्षितम् । न तु विरुद्धत्वेन भासमानतादृशधर्मप्रकारकज्ञानान्यज्ञानत्वम्, तथा सति [3]भ्रमाव्यावृत्तिप्रसङ्गादिति ।

व्यभिचारशङ्केति । प्रथमचतुर्थसाध्ययोरिति शेषः । नावह्निवृत्तिप्रकारक इत्यादिसाध्यस्य प्रमुष्टतत्ताकस्मरणरूपभ्रमेऽपि सत्त्वेन तत्र व्यभिचारशङ्केव नेति ध्येयम् । यत्र प्रमेयो वह्निरित्यनाप्तवाक्यात् गुञ्जापुञ्ज[4]परात् तद्बोधः वह्नित्वादिप्रकारकज्ञानं जायते तत्रेदंत्वस्याप्रकारतया व्यभिचारो दुर्वार इति सूचयितुं अनुभवपरं वेति वाशब्दः प्रयुक्तः । वस्तुतः प्रत्यक्षपरमित्यत्रैव तात्पर्यम् । अत एवाह—न हि प्रत्यक्षभ्रम इति ।

ननु यत्र प्रमुष्टतत्ताकस्मरणानन्तरं तत्समानविषयकमानसज्ञानं जायते तत्रेदंत्वस्योपनायकाभावेनाभानाद्व्यभिचार इत्यस्वरसादाह—इदंत्वेति । यदि मानसभ्रमे व्यभिचारः तदा समर्थप्रवृत्तिजनकत्वेनैव निश्चयत्वं विशेष्यताम् । किमुक्तविशेषणमतिक्रम्य विशेषणान्तरेण । तथा च हेतुद्वयपरत्वकल्पनाप्रयासोऽपि नेत्यपरमप्यनुकूलं स्यात् । अन्यथा इदंत्वप्रकारकत्वविशेषणोपादाने यत्र दोषवशा-

---

1. ख. 'वह्नित्वमात्रप्रकारक' इति नास्ति ।
2. ख. घ. °ज्ञानान्यत्वं; ग. °ज्ञानत्वं
3. क. अप्रमाया अव्यावृत्ति-; ख. भ्रमव्यावृत्ति-
4. ख. ग. घ. °परत्वात्

## प्रकाशः

एवमग्निपहेतावपि हेतुद्वये तात्पर्यम् । तत्र निश्चयत्वं तादृशज्ञानत्वात्यन्ताभावविशिष्टज्ञानत्वमित्यन्योन्यात्यन्ताभावगर्भतया न पूर्वाभेदः । एतद्धेत्वभिप्रायेणैव नावह्निवृत्तिप्रकारक[1] इत्यादिसाध्यम् । अन्यथा अनुष्णो वह्निरिति ज्ञाने व्यभिचारतादवस्थ्यापत्तेः ।

यत्तु [2]अवह्निवृत्तीदंताख्यप्रकारो नेति साध्यार्थः, तथा च नोक्तव्यभिचार इति । तन्न । यत्र दोषवशाद्वह्नावन्यदीयेदंतारोपः तत्र व्यभिचारादित्याहुः ।

नव्यास्तु—वह्निगुञ्जापुञ्जयोर्गुञ्जापुञ्जवह्नी इति भ्रमे दाहसमर्थविषयप्रयत्नजनके व्यभिचारवारणाय वह्नित्वप्रकारकेति । न च तत्र दाहसमर्थविषयक-

## न्यायशिखामणिः

द्वह्निगतेदंत्वत्रह्नित्वयोः गुञ्जापुञ्जादावारोपस्तत्र विवक्षितनिश्चयत्वसत्त्वेन व्यभिचारो दुर्वार इति सूचयितुं हेतुविशेषणाद्वेति वाशब्दः प्रयुक्तः ।

वस्तुतस्तु प्रथमचतुर्थसाध्ययोराद्यो हेतुः, निश्चयत्वगर्भस्तु नावह्निवृत्तिप्रकारक इत्यादिः साध्य इत्यनुपदमेव स्फुटम् । तथा च प्रमुष्टतत्ताकस्मरणे [3]तत्समानविषयकमानसभ्रमे वा न व्यभिचारशङ्कावकाशः । तदेतत् सूचयितुं यदि चेत्युक्तम् । एतद्धेत्विति । निश्चयत्वगर्भहेतुद्वयाभिप्रायेणेत्यर्थः । अन्यथेति । द्वितीयादिसाध्ये [4]तद्धेत्वन्वयानियम इत्यर्थः ।

उपाध्यायमतमाह—यत्त्विति । अयं वह्निरनुष्ण इत्यत्र प्रतीयमानमिदंत्वं वह्निवृत्त्येवेति प्रथमहेत्वन्वयेऽपि न व्यभिचार इति भावः । प्रगल्भोक्तेन दूषयति—तन्नेति । यदत्रावह्निवृत्तिविशेष्यवृत्तीदंताख्य-[5]प्रकारकत्वाभावः साध्यत्वेनाभिमत इति नरहरिमिश्रोक्तम् । तदयुक्तम् । यत्र वह्नौ वह्नित्वं गुञ्जापुञ्जे गुञ्जापुञ्जत्वं च विषयीकृत्य वह्निगतेदंतां [6]गुञ्जापुञ्जे तद्गतेदंतां च वह्नौ [7]दोषविशेषाद्विषयीकुर्वन् समूहालम्बनप्रत्ययो जायते [8]तत्रावह्निवृत्तिविशेष्यवृत्तीदंतायाः प्रकारत्वेन व्यभिचारतादवस्थ्यात् ।

1. ख. 'क' नास्ति ।
2. ख. अवह्निवृत्तित्वाख्यप्रकारको नेति साध्यम् ।
3. ख. 'तत्' नास्ति
4. ग. तद्धेतुत्वान्वया-
5. क. ०प्रकारत्वाभावः
6. क. गुञ्जापुञ्जगतेदंतां
7. क. दोषवशात्
8. ग. तत्र वह्निविशेष्य-

**प्रकाशः**

प्रयत्न[1]जनकत्वांशे प्रथमसाध्यसत्त्वादेव न व्यभिचार इति वाच्यम् । अंशावच्छेदेन साध्यस्यानुपादानात् । न च तत्रापि वह्नित्वप्रकारकत्वसत्त्वात् कथं [2]ततस्तत्र व्यभिचारवारणमिति वाच्यम् । तदुपादानेन वह्नित्वप्रकारकत्वावच्छेदेन दाहसमर्थविषयकप्रयत्नजनकत्वस्य हेत्वर्थस्य लाभेन तत्र व्यभिचारवारणात् तस्य हि गुञ्जापुञ्जत्वप्रकारकत्वावच्छेदेन वह्निगोचरप्रयत्नजनकत्वेन हेत्ववगमात् ।[हेत्वगमनात्] । न चैवं वह्निगुञ्जापुञ्जयोरिमौ वह्नी इति ज्ञाने व्यभिचार इति वाच्यम् । दाहसमर्थमात्रविषयप्रयत्नजननानुकूलवह्नित्वप्रकारकनिश्चयत्वस्य प्रथमहेत्वर्थत्वात् । दाहसमर्थविशेष्यकवह्नित्वप्रकारकनिश्चयत्वस्य द्वितीयहेत्वर्थत्वाच्च ।

निश्चयपदं च वह्नौ वह्निर्वा गुञ्जापुञ्जो वेति संशये व्यभिचारवारणाय । न च तत्रापि प्रथमसाध्यसत्त्वान्न व्यभिचार इति वाच्यम् । स्वसमानाधिकरणनिश्चयप्रकारीभवद्वह्नित्वाभाववति वह्नित्वप्रकारको नेत्यस्य [3]प्रथमसाध्यार्थत्वात् । तस्य च वह्नित्ववद्विशेष्यकत्वेऽपि तादृशवह्नित्वाभाववद्विशेष्यकत्वादित्याहुः ।

---

**न्यायशिखामणिः**

उपाध्यायमतमाह—नन्यास्त्विति । अनुपादानादिति । न चैवं वह्निमानिति निश्चये व्यभिचारः । तस्य [4]वह्निमत्यपि प्रवर्तकत्वेन वक्ष्यमाणमात्रपदेनैव तन्निरासादिति भावः ।

संशयव्यावृत्तं प्रामाण्यमिह साध्यम् । यथाश्रुतं तु तत्साधारणमिति साध्ये तद्व्यावर्तकविशेषणमावश्यकमित्यभिप्रेत्याह—स्वेति । संशयकालीनपुरुषान्तरीयनिश्चयमेतत्पुरुषीयकालान्तरीयनिश्चयं चादाय दोषतादवस्थ्यमिति स्वसमानाधिकरणेति प्रकारीभवदिति च विशेषणम् । विषयीभवदिति वक्तव्ये प्रकारग्रहणं संशयजनककोट्युपस्थितिविषयतया दोषवारणाय । कोट्युपस्थितौ [5]वह्नित्वादेर्विशेष्यत्वात् । यदि च विशेष्यत्वानियमः तदा [6]स्वाधिकरणसर्वक्षणवर्तितादृश-

---

1. क. ०जनकांशे
2. क. ततस्तद्व्यभि-
3. क. प्रथमे विवक्षितत्वात्
4. ख. वह्नित्वेऽपि
5. ख. वह्नित्वादिविशेष्य-
6. क. स्वसमानाधिकरणस्वाधि-
   ख. स्वाधिकरणसंशयक्षण-

## प्रकाशः

[1]तन्न। एवं हि मात्रपदेनैव गुञ्जापुञ्जवह्नी इति भ्रमे व्यभिचारवारणे वह्नित्व[2]प्रकारकपदं व्यर्थमेव। न हि दाहसमर्थविशेष्यकेऽपि ज्ञाने वह्नित्वाभाववद्विशेष्यकत्वशङ्का, येन व्यभिचारसंभवे तद्वारणाय तत्सार्थकं स्यात्। साध्ये[च] निष्प्रयोजनविशेषणं प्रक्षिप्य हेतौ व्यर्थविशेषणत्वोद्धारोऽसंगत एवेति संक्षेपः।

## न्यायशिखामणिः

निश्चयप्रकारत्वे तात्पर्यम्। कोट्युपस्थितेश्च यावत्संशयसत्त्वमनुवर्तमानत्वाभावान्नोक्तदोषः। [3]एतादृशनिश्चयप्रकारवह्नित्वाभाववद्विशेष्यत्वं च वह्निभ्रमे प्रसिद्धम्। स्वशब्दस्य समभिव्याहृतपरत्वात्। तेन [4]जयदेवोक्ताप्रसिद्धिदूषणानवकाश इति बोध्यम्।

किं च संशयव्यावृत्तप्रामाण्यं नेह सिषाधयिषितम्। संशयस्य क्वचिदंशे प्रमात्वात्। तन्निश्चयात् निष्कम्प[5]प्रवृत्तेश्च। अत एव स्थाणुत्वादिसंशये स्थाणुत्वांशे प्रामाण्यनिश्चयानन्तरं तदंशे निष्कम्पप्रवृत्तिरनुभवसिद्धा।

किं च संशयव्यावृत्तप्रामाण्यलाभायानुभवपदमेव निश्चयपरं कल्प्यताम्। तावतैव पक्षतावच्छेदकमहिम्ना तद्व्यावृत्तप्रामाण्यसिद्धेः। तथा च साध्ये तद्व्यावर्तकविशेषणं न युक्तमित्याशयेनाह—साध्ये चेति। किं च [6]विरुद्धाप्रकारकज्ञानपरेण निश्चयपदेनैव [7]वह्नित्वप्रकारके समूहालम्बनभ्रमे व्यभिचारवारणे मात्रपदं व्यर्थमेव। न च वह्निमानिति निश्चये तद्वारणाय [8]तत्सार्थकमिति वाच्यम्। तथापि द्वितीयहेतौ विशेष्यपदेनैव वारणे तत्र तद्वैयर्थ्यं दुर्वारम्। [9]किं चांशावच्छेदेन साध्यानुपादाने वह्नौ वह्नित्वमिति निश्चये व्यभिचारः। न चास्य वह्न्यंशे वह्नित्वप्रकारकत्वेऽपि इष्टतावच्छेदकप्रकारकत्वाभावेन सत्यन्ताभावान्न व्यभिचार इति वाच्यम्। लाघवेन तद्वैशिष्ट्यावगाहित्वस्यैव तन्त्रतया अस्यापि प्रवर्तकत्वमित्युक्तत्वात्।

---

1. क. 'तन्न' नास्ति।
2. ख. प्रकारकत्वपदं
3. ख. तादृश-
4. ख. जयदेवोक्तदूषणा-
5. ख. °प्रवृत्तेः निश्चयत एव
6. ख. ग. विरुद्धप्रकारक-
7. क. ख. ग. वह्निप्रकारके
8. ख. तत्साध्यमिति
9. ख. ग. किं चावच्छेदेन

तत्र बाधानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन मम ज्ञानं वृत्तमित्यप्रामाण्यं मनसैव परिच्छिद्यते मानान्तरेण वेति सर्वसिद्धम्।

एवं वह्न्यप्रमायां वह्नित्वाभाववति वह्नित्वप्रकारकत्वादिसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रहेऽप्रामाण्यव्यापकहेत्वभावाभावरूपाद्धेतोरप्रामाण्या-

---

प्रकाशः

मानान्तरेणेति। इदं वह्नित्व[1]प्रकारकं ज्ञानं वह्नित्वाभाववद्विशेष्यकं तत्र प्रवर्तकत्वादित्यादिनेत्यर्थः।

---

न्यायशिखामणिः

अपि च यत्र वह्नौ वह्नित्वं गुञ्जापुञ्जे च प्रमेयत्वमात्रं विषयीकृत्य समूहालम्बनं जायते तत्र प्रमेयत्वस्यानिष्टेऽपि सत्त्वेनेष्ट[2]तानवच्छेदकतया तस्य दाहसमर्थमात्रविषयप्रयत्नजनकत्वात् दुष्परिहरो व्यभिचारः। तदेतत् सर्वमभिसंधायाह —संक्षेप इति।

ननु बाधोपनीतवह्नित्वाभावघटितमप्यप्रामाण्यं न मनसा परिच्छेत्तुं शक्यम्। तस्य स्वातन्त्र्येण तदभाववैशिष्ट्यग्राहकत्वाभावात्। अन्यथा प्रामाण्यस्यापि ततो ग्रहापत्तेरित्यत उक्तं मूले मानान्तरेण वेति। तत्र विशिष्टाप्रामाण्यं न साध्यम्। किं तु तदभाववद्विशेष्यकत्वम्। [3]तस्यैव प्रकृतसाध्याभावत्वात् लाघवाच्चेत्याशयेनाह—इदमिति। [4]दाहासमर्थविशेष्यकमित्यर्थः। यद्यपि [5]दाहासमर्थविशेष्यकं सर्वं वह्नित्वाभाववद्विशेष्यकमेवेति तत्र बाधाभावात् पक्षे वह्नित्वप्रकारकत्वं व्यर्थमेव। तथापि तत्प्रकारकज्ञान एव तदभाववद्विशेष्यकत्वम् अप्रामाण्यमिति व्यवह्रियते न घटादिज्ञान इति तदर्थं तदुपादानमिति द्रष्टव्यम्।

वस्तुत इदमापाततः। विशिष्टाप्रामाण्यस्यैवास्माभिः साध्याभावत्वसाधनेन साध्ये वह्नित्वप्रकारकत्वस्यावश्यकत्वात्। तदिदमुक्तम् 'वह्नित्वाभाववति वह्नित्वेन

---

1. ख. °प्रकारकत्वज्ञानं
2. ग. °तावच्छेदकतया
3. ख. 'तस्यैव ···· प्रवृत्तिजनकत्वादित्यर्थः' इत्यस्य स्थाने 'तस्यैवास्माभिः साध्याभावत्वसाधनेन कारकत्वसमर्थप्रवृत्तिजनकत्वाभावयोः व्याप्तिग्रह इति तत्रेति दाहासमर्थविशेष्यकप्रवृत्तिजनकत्वादित्यर्थः' इति पाठः।
4. क. ग. दाहसमर्थ-
5. क. ग. दाहसमर्थ-

भावरूपं साध्यं सिध्यति । यद्व्यापकतया हेत्वभावो गृहीतस्तदभाव एव हेतुना साध्यते। यत्र स्वभावस्य व्यापकता हेत्वभावस्य ज्ञायते तत्र साध्यप्रसिद्धिरङ्गम्, तां विना तदज्ञानात् । यत्र तु भावव्यापकता हेत्वभावस्य तत्र न तदङ्गम् । तेन विनापि व्यतिरेकव्याप्तिग्रहात् । अत एवेतरव्यापकता आकाशत्वाभावस्य गृहीतेत्याकाशत्वेनाप्रसिद्ध एवेतरान्योन्याभावः सिध्यति ।

---

**प्रकाशः**

ननु साध्याभावव्यापकाभावप्रतियोगित्वेन हेतुज्ञानं [1]गमकताप्रयोजकम् । तच्च न साध्यप्रसिद्धिं विनेत्यत आह—[2]यद्व्यापकतयेति । यदात्मकतया गृह्यमाणस्य व्यापकतया हेत्वभावो गृहीतः तदभाव एव [3]हेतुना व्यतिरेकिणा सिध्यतीत्यर्थः । तेन सुखस्य दुःखाभावात्मकतया गृह्यमाणस्य व्यापकतया हेत्वभावो यत्र गृह्यते तत्र दुःखविशिष्टानुमितिरनुभवसिद्धा समर्थिता भवति । अन्यथा सुखविरहस्यैव तत्र सिद्धिप्रसङ्गादित्याहुः । यत्र चेति । अत्र चाप्रामाण्यं भावरूपमेव [साध्यम्] । तेन तत्प्रसिद्धिरेवाङ्गम्, न तु [4]तदभावरूपसाध्यप्रसिद्धिरपीत्यर्थः ।

---

**न्यायशिखामणिः**

ज्ञानं मम वृत्तमित्यप्रामाण्यं मनसा गृह्यते मानान्तरेण वेति । वक्ष्यति च 'वह्नित्वाभाववति वह्नित्वप्रकारकत्वसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रह' इति तत्रेति । [5]दाहासमर्थविशेष्यकप्रवृत्तिजनकत्वादित्यर्थः । साध्याभावेति । [6]व्यतिरेकिणीति शेषः । [7]तेनेति । अयं दुःखी सुखप्रसादशून्यत्वादिति व्यतिरेकिणि दुःखविशिष्टानुमितिरनुभूयते, सा यथाश्रुतादरे विरुध्येतेत्यर्थः ।

नन्वाकाशत्वाभावस्य नेतरव्यापकत्वम्, आकाशेतरशब्दवति तस्मिंस्तदभावादित्यत आह—एतच्चेति । 'इतरपदमितरत्वपरम्' इत्यादिव्यतिरेकिग्रन्थे वक्ष्यत इत्यर्थः । ननु वह्नित्वाभाववतीत्यत्रेव नञर्थानिर्देशात् [8]तद्वतीत्यादिप्रामाण्य-

---

1. क. गमकतया प्रयोजकम्
2. ख. यदात्मकतयेति ।
3. ख. 'हेतुना' नास्ति ।
4. क. तदभावरूपस्य प्रसिद्धि-
5. घ. दाहसमर्थ-
6. घ. व्यतिरेकिणेति ।
7. क. 'तेनेति' नास्ति ।
8. ख. तद्वदित्यादि-

विशेषणज्ञानं विना कथं प्रामाण्यविशिष्टानुमितिरिति चेत्, प्रथमं न कथंचित्। ज्ञाने प्रामाण्यमित्यनुमित्यनन्तरं तेनैव हेतुना तत्रैव प्रामाण्यविशिष्टानुमितिः, अभावविशेष्यकप्रतीत्यनन्तरमभाववद्भूतलमिति ज्ञानवत्। एवं चेदं वह्नित्वप्रकारकज्ञानं तद्वति तदभाववति वेति संशयानन्तरं तदभाववति तत्प्रकारकत्वव्यतिरेकः सिध्यन् तत्प्रकारकतामादाय सिध्यति। तृतीयप्रकाराभावेन तेन विना साध्यस्योपसंहर्तुमशक्यत्वात्, ज्ञाननित्यत्ववत्।

यद्वा इदं वह्नित्वप्रकारकज्ञानं वह्नित्ववद्विषयकं, वह्नित्वाभाववद्विषयकत्वे सति सविषयकत्वात्, यन्नैवं तन्नैवं यथा वह्न्यप्रमेति व्यतिरेक्यन्तरात्तत्सिद्धिः।

---

प्रकाशः

अत एवेतरव्यापकतेति। एतच्चानुमानप्रकाशे प्रपञ्चयिष्यतेऽस्माभिस्तत्रैवानुसंधेयम्। प्रामाण्यमिति। अप्रामाण्याभावरूपमित्यर्थः। तेनेति। न च सिद्धसाधनम्। तत्प्रकारकप्रतीतेरुद्देश्यत्वेन [1]सिषाधयिषयानुमानादित्याहुः। प्रामाण्यविशिष्टानुमितिः अप्रामाण्याभावविशिष्टानुमितिः। तद्वतीति। तद्वद्विशेष्यकं तदभाववद्विशेष्यकं वेत्यर्थः। (न तु तद्वद्विशेष्यकत्वम्) [ननु तद्वद्विशेष्यकत्व] कोटेरप्रसिद्धौ, कथमुक्तसंशयः। प्राग्भवीयसंस्कारादिना कथंचित्प्रसिद्धौ वा तदेव साध्यताम्, किमनया कुसृष्ट्या। किं चानुमितावुपनीतभानविषेधात् साध्यताव-

---

न्यायशिखामणिः

मेवात्र प्रामाण्यपदप्रतिपाद्यं स्यात्। तच्च प्रकृतानुमानासाध्यत्वादयुक्तमित्यत आह—[2]अप्रामाण्येति।

संस्कारादिनेति। आदिपदेन मनो गृह्यते। [3]ननु प्राग्भवीयसंस्कारादिना प्रामाण्याप्रामाण्योपस्थितावपि भावरूपप्रामाण्येन व्याप्तिग्रहनियमाभावात् कदाचिदुक्तकुसृष्टिरप्याश्रयणीये[4]त्यरुचेराह—किं चेति। ननु साध्यस्य भ्रमसाधारण्येन

---

1. ख. सिद्धसाधनविषयानुमाना-
2. ग. प्रामाण्येति।
3. ख. घ. 'ननु प्राग्भवीय······किं चेति।' इति ग्रन्थस्त्रुटितः।
4. घ. ॰त्यस्वरसादाह

**प्रकाशः**

च्छेदकावच्छिन्नाखण्डाभाव एव सिध्येदित्यस्वरसादाह—यद्वेति। अत्र साध्ये हेतौ च विषयपदं विशेष्यपरम्। तेन [1]नार्थान्तरं न वा [2]हेत्वसिद्ध्यादिरिति। उक्तव्यतिरेकिणा वह्नित्वाभाववद्विशेष्यकत्वमेव सिद्धं न तु विशिष्टाभावः। वह्नित्वप्रकारकत्वस्य साध्यानन्त[3]र्भूतत्वसाधनात्। तथा च न हेतुविशेषणासिद्धिरिति भावः।

अत्रेदं चिन्त्यम्। अत्रापि वह्नित्ववद्विशेष्यकत्वं साध्यमप्रसिद्धम्। प्राग्भवीयसंस्कारेण मनसा वा कथंचित्तत्प्रसिद्धौ दाहसमर्थत्यादिहेतुना वह्नित्वप्रकार-

---

**न्यायशिखामणिः**

तद्व्यावृत्तप्रामाण्यं न सिध्येदित्यर्थान्तरम्। तादृशवह्नित्वविषयत्वेन हेत्वसिद्धिश्चेत्यत आह—अत्रेति। ननु विशिष्टाप्रामाण्याभावस्यैव मूले साध्यत्वेनोक्तत्वाद्विशेषणासिद्धितादवस्थ्यम्। अत एव [4]तस्य नैतदनुमानात्पूर्वभावोऽपीत्यत आह—उक्तेति।

[5]वस्तुतो यद्वेति मणेरेषोऽर्थः। वह्नित्वभ्रमस्य पक्षत्ववारणायोक्तम् इदमिति। तेन दाहसमर्थविशेष्यकत्वं विवक्षितम्। तच्च वह्निगोचरजलभ्रमसाधारणमित्यत उक्तं वह्नित्वप्रकारकमिति। न च साध्यस्यापि तत्र सत्त्वान्न तद्व्यावृत्तिः प्रयोजनमिति वाच्यम्। तस्य वह्निगोचरजलभ्रमसाधारण्येन प्रामाण्यरूपत्वानुपपत्तेः साध्ये वह्नित्वप्रकारकत्वस्यावश्यकत्वात्। अत एवोक्तं 'तद्वति तत्प्रकारकज्ञानत्वं साध्यं सिध्यतीति वक्ष्यत' इति। न चैवं हेतोस्तत्र व्यभिचारः, [6]सविषयकपदेन विषयजन्यज्ञानत्वस्यैव विवक्षितत्वात्। यद्वा यदा तद्वद्विशेष्यकत्वमेव साध्यम्, पक्षे च वह्नित्वप्रकारकत्वं न विवक्षितम्, तदा तदभाववद्विशेष्यकत्वाभावे सति सविषयकत्वमेव हेतुः। यदा तु विशिष्टं साध्यम् पक्षे च तद्विवक्षितम्, तदा अवह्निवृत्तिप्रकारकत्वाभावे सति विषयजन्यज्ञानत्वं हेतुः अतो नोक्तदोषः। यदि च वह्निगोचरद्रव्यत्वप्रकारकज्ञाने व्यभिचारशङ्का तदा वह्नितदितरवृत्त्यप्रकारकत्वेन हेतुर्विशेष्यः।

---

1. ख. भ्रमत्वे नार्थान्तरम्
2. ख. हेत्वसिद्धिः
3. क. ॰र्भूतसाधनात्
4. क. तस्यैतदनु-
5. क. 'वस्तुतः' इत्यारभ्य 'विशेषणासिद्धिरिति' (P. 270) इत्यन्तो भागः नास्ति।
6. ग. सविषयत्वपदेन

प्रकाशः

कानुभवे तदेव साध्यतां [1]किमप्रामाण्याभावानुमानेन। न हि तस्य हेतोर्न तत्साध्य[2]व्याप्यत्वम्, येन हेतुसिद्ध्यर्थं तदनुमानमाद्रियेत। प्रामाण्यज्ञानं हि प्रवृत्त्यङ्गं न तु हेतुविशेषाधीनतया।

न्यायशिखामणिः

ननु [3]त्वन्मते विशिष्टाप्रामाण्याभावस्यैव पूर्वानुमानसाध्यत्वाद्विशेषणासिद्धिरिति चेत्—न। विशेष्यवति विशिष्टाभावेन विशेषणाभावानुमानात्। [4]यद्वा [5]यदोपनीतप्रामाण्यभानार्थमप्रामाण्याभावानुमानमित्यभिमतम् तदा विशिष्टाभावोऽपि साधयितुं शक्यः। व्यर्थविशेषणत्वादिदोषस्य निराकृतत्वात्। यदा तु अप्रामाण्याभावानुमितेः प्रवर्तकत्वं [6]प्रवर्तकप्रामाण्यानुमितिहेतुलिङ्गसिद्ध्युपयोगित्वं वाभिमतम्, तदा तदभाववद्विशेष्यकत्वाभाव एव साध्यः, न तु विशिष्टाभावः। तस्य घटज्ञानसाधारण्येन तत्र व्यभिचारात् ततोऽपि वह्निगोचरप्रवृत्त्यापत्तेश्च।

न चास्यापि वह्निगोचरजलभ्रमसाधारण्यात्ततोऽपि वह्न्यर्थिप्रवृत्त्यापत्तिरिति वाच्यम्। तस्यापि वह्नौ जलार्थिप्रवर्तकत्वेनेष्टापत्तेः, वह्निगोचरप्रवृत्त्यर्थमेवैतदनुमानाभ्युपगमात्, एतदस्वरसादेव पक्षान्तरावताराद्वा। तथा चास्मिन्पक्षे वह्नित्वाभाववद्विशेष्यकत्वाभावस्यैव पूर्वानुमानसिद्धत्वान्न विशेषणासिद्धिरिति।

अत्र प्रवृत्त्यर्थम् अप्रामाण्याभावानुमानमित्याद्यः कल्पः। प्रामाण्यनिश्चयार्थमिति द्वितीयः। तन्निश्चायकानुमानसिद्ध्यर्थमिति तृतीयः। [7]तत्रैतेषां कल्पानां न सार्वत्रिकत्वम्, किं तु क्वाचित्कत्वमिति वक्ष्यते। सार्वत्रिकत्वे जयदेवोक्तदोषमाह—अत्रेदमिति। तत्र द्वितीयकल्पस्य सार्वत्रिकत्वं दूषयति—अत्रापीति। अप्रामाण्याभावानुमाने प्रामाण्यं सिद्धमित्येतन्न सार्वत्रिकम्, तस्य प्रकृतलिङ्गाव्यापकत्वात्। प्राग्भवीयसंस्कारादिना तदुपनयसंभवेऽपि सर्वत्र तदभावादिति भावः।

तदनुमानसिद्ध्यर्थमिति तृतीयकल्पो विवेचनीयः। किं प्रामाण्यानुमितिहेतुलिङ्गसिद्ध्यर्थं तदनुमानादरः उताप्रामाण्याभावलिङ्गकतदनुमितेरेव प्रवर्तकतया

1. क. किं प्रामाण्या-
2. क. ०व्यापकत्वम्
3. ग. तन्मते
4. ख. 'यद्वा' नास्ति।
5. ख. यद्युपनीत-
   ग. यदोपनीतप्रामाण्याभानार्थं-
6. ग. प्रवर्तकप्रमाणानु-
7. ग. घ. तत्र तेषां

### प्रकाशः

यदि च प्रामाण्यज्ञानवदप्रामाण्याभावज्ञान[1]स्याप्यप्रामाण्यशङ्कानिवर्तनद्वारा प्रवृत्त्युपयोगित्वमिति, तदा तदनुमानपूर्वकमिदं प्रामाण्यानुमानमनर्थकम्। अप्रामाण्यशङ्कानिवृत्तेस्तत एव [2]भावात्।

किं चाप्रसिद्धाभावोऽपि प्रतियोगिप्रसिद्ध्या व्याप्तिग्रहे सति सिध्येत्। न चाप्रामाण्यं प्रसिद्धम्। [3]प्रामाण्यवत्तस्याप्यतीन्द्रियत्वात्। तदर्थं प्राग्भवीयसंस्कारानुसरणे च प्रामाण्यानुमानार्थमेव तदनुसरण[4]मर्हति लाघवादावश्यकत्वाच्च।

---

### न्यायशिखामणिः

प्रवृत्तिहेतुतदनुमितिसिद्ध्यर्थम् [5]आहोस्वित् साध्यप्रसिद्ध्यर्थम्। तत्राद्यं निराचष्टे—**प्रागिति**। अपूर्वदेवदत्तादिज्ञानप्रामाण्यसाधारणमाह—[6]**मनसा वेति**। ननु दाहसमर्थेत्यादेर्न लिङ्गत्वम्, वह्नित्वप्रकारकत्वविशेषणस्य व्यर्थत्वेन नीलधूमवद्व्याप्यत्वादित्याशङ्क्य न हि वयं विशिष्टस्य हेतुत्वं ब्रूमः। किं तु [7]अप्रामाण्याभावव्याप्यस्य दाहसमर्थविषयकप्रवृत्तिजनकत्वस्य[8], व्याप्यव्याप्यस्य सुतरां तद्व्याप्यत्वादित्याह—**न हीति**। द्वितीयं निरस्यति—**प्रामाण्येति**।

आद्यकल्पमनूद्य तत्सार्वत्रिकत्वमपाकरोति—**यदि चेति**। ननु प्रामाण्यसिद्ध्यर्थमप्रामाण्याभावानुमानमिति द्वितीयकल्प एव सार्वत्रिकः। यत्र मनसा तदुपनयस्तत्र [9]सर्वत्र [10]तद्भानसंभवात्। नहि तदुपनयस्थले तत्साध्यकानुमा[11]नसंभवः, येनाप्रामाण्याभावानुमानस्य सार्वत्रिकत्वं न स्यात्। न्यायनये मनसः स्वातन्त्र्येण प्रामाण्यग्राहकत्वाभावेन कथंचित्तदुप[12]नीतस्याप्रामाण्याभावानुमितौ भानसंभवेऽपि साध्यतावच्छेदकप्रकारकतदुपनयाभावेन व्यतिरेकाद्यनिरूपणे तत्साध्यकानुमानाप्रवृत्तेः। न च प्राग्भवीयसंस्कारात्प्रामाण्योपस्थितिस्तथेति वाच्यम्। मनसा

---

1. ख. ॰स्य प्रामाण्य-
2. क. भावनात्
3. ख. प्रमावत्
4. क. ॰मर्हम्
5. ख. आहो सिद्ध्यप्रसिद्ध्यर्थम्
6. ग. मनसा चेति।
7. ख. ग. घ. प्रामाण्या-
8. क. ॰स्य वा
9. क. 'सर्वत्र' नास्ति
10. क. तज्ज्ञान-
    ग. तद्भाव-
11. ख. नासंभवः
12. क. ॰नीतस्य तस्या-

**प्रकाशः**

प्रमेयमित्यादिज्ञाने चाप्रामाण्याभावानुमानासंभवात् कथं प्रामाण्यानुमानम्। तत्र च प्रकारान्तरानुसरणे स एव प्रकारः सर्वत्राश्रीयताम्। एवं वह्नित्वाभाववति वह्नित्वाभावप्रकारकज्ञाने वह्नित्वाभाववद्विशेष्यकत्वमेव प्रामाण्यम्। तदनुमानं चाप्रामाण्याभावानुमानपूर्वकं वा अन्यथा वा। नाद्यः, अन्योन्याश्रयात्।

---

**न्यायशिखामणिः**

कथंचित् तदुपनयमात्रेणाप्रामाण्याभावानुमितौ तद्भानसंभवे [1]जन्मान्तरीयतत्संस्कारोद्बोधकल्पनस्यामानकत्वेनायुक्तत्वात्। स्तन्यपानादौ चागत्या तत्कल्पनादित्यत आह—**किं चेति**। **लाघवादिति**। प्रामाण्यसंस्कारस्य लघुविषयत्वादित्यर्थः। **आवश्यकत्वादिति**। उपनीतप्रामाण्यभानार्थं तदुपनयहेतोस्तवाप्यवश्यं कल्पनीयत्वादित्यर्थः। तथा च साध्यतावच्छेदकावच्छिन्नसाध्यस्य प्राग्भवीयसंस्कारेणोपस्थितिसंभवात् प्रामाण्यसाध्यकानुमानं निष्प्रत्यूहमिति भावः।

ननु वह्न्यप्रमायां बाधावतारानन्तरमप्रामाण्यग्रहस्यानुभूयमानत्वात् तदनुरोधेन तत्संस्कारोद्बोध[2]कल्पनमावश्यकम्। तथा चाप्रामाण्याभावानुमितौ मानसोपनयमात्रेणानुभूयमानप्रामाण्यभानसंभवात् न तत्संस्कारोद्बोधकल्पनावकाशः। न च प्रामाण्यसंस्कारोद्बोधं परिकल्प्य तत्साध्यकानुमित्यनन्तरं तदभावानुमितावुपनीताप्रामाण्याभावभानमस्त्विति वैपरीत्यमर्हम्[3]। अप्रामाण्यघटक[4]तदभावादेर्व्यवसायानुपनीतत्वेन तस्यानुव्यवसायाविषयत्वात्। तथा च द्वितीयकल्पस्य सार्वत्रिकत्वेन विरोध इत्यत आह—**प्रमेयमिति**। तथा च यत्र प्रामाण्योपनयस्तत्र [5]सर्वत्राप्रामाण्याभावानुमाने [6]तद्भाननियमाभावात् न सार्वत्रिकत्वमस्यापीति भावः।

एवं द्वितीयकल्पस्य सार्वत्रिकत्वं निराकृत्य तृतीयकल्पस्य [7]तत्त्वे दूषणान्तरमाह—**एवमिति**। यद्वा संभवदप्रामाण्यस्थले यत्र प्रामाण्योपनयस्तत्र सर्वत्र

---

1. क. प्राग्भवीय-
   ग. घ. भवान्तरीय-
2. ०कल्पनं नावश्यकम्
3. ग. 'अर्हम्' नास्ति।
4. ख. ग. घ. ०तत्तदभावा-
5. ख. सर्वत्र प्रामाण्या-
6. ग. तद्भावे नियमा-
7. घ. सत्त्वे

प्रकाशः

तत्र हि [1]वह्नित्ववति वह्नित्वाभावप्रकारकत्वमप्रामाण्यम् । तथा च वह्नित्ववद्विशेष्यकत्वे ज्ञाते वह्नित्वाभाववद्विशेष्यकत्वानुमानम् । तस्मिंश्च ज्ञाते तदनुमानमित्यन्योन्याश्रयः । नान्त्यः, तथैवान्यत्रापि प्रामाण्यानुमानसंभवेन [2]अप्रामाण्याभावानुमानपूर्वकतदनुमाने प्रयासगौरवात् । [3]किं चाप्रामाण्याभावग्राहक[4]लिङ्गं दाहसमर्थविशेष्यकत्वमगृहीत्वा न तदनुमानसंभवः । तद्ग्रहप्रकारश्च ग्रन्थकृतैव वक्ष्यते ।

---

न्यायशिखामणिः

तदभावानुमितौ तद्भाननियमो विवक्षित इति द्वितीयकल्पस्य सार्वत्रिकत्वे न दोष इत्यत आह—एवमिति । [5]तथा चात्र प्रथमानुमानशब्दोऽनुमितिपरः, द्वितीयस्तु लिङ्गज्ञानपरः । एवं च दाहसमर्थेत्यादिलिङ्गज्ञानजन्याप्रामाण्याभावानुमितौ प्रामाण्यभानं लिङ्गान्तरजन्यतत्साध्यकानुमितौ वेति विकल्पार्थः ।

[6]वह्नित्ववतीति । अत्र वह्नित्ववद्विशेष्यकत्वमेवाप्रामाण्यम् । तदभावप्रकारकत्वं चाप्रामाण्यानुमाने पक्षतावच्छेदकाभिप्रायेणेति द्रष्टव्यम् । अत एवाह—वह्नित्ववद्विशेष्यकत्व इति । वह्नित्ववद्विशेष्यकत्व[7]रूपाप्रामाण्ये [8]ज्ञाते तदभावानुमितौ वह्नित्वाभाववद्विशेष्यकत्वरूपप्रामाण्यभानम् । तस्मिंश्च तत्र भाते सति तदभावानुमितौ वह्नित्ववद्विशेष्यकत्वभानम् । अप्रामाण्याभावानुमितावेव सर्वत्र तद्भानस्वीकारात् । तथा चान्योन्याश्रय इत्यर्थः । [9]तथैवेति । यथा संस्कारादिना प्रसिद्धं वह्नित्वाभाववद्विशेष्यकत्वरूपं प्रामाण्यं तत्साध्यकानुमितिविषयस्तथैव प्रसिद्धस्य वह्नित्ववद्विशेष्यकत्वस्य वह्नित्वप्रकारकानुभवपक्षकानुमाने साध्यत्वसंभवेनेत्यर्थः । तथा च संभवदप्रामाण्यस्थलेऽपि नोक्तनियम इति सार्वत्रिकत्वाभावतादवस्थ्यमिति भावः ।

ननु प्राग्भवीयसंस्कारेण [10]यत्र प्रामाण्यमात्रमुपस्थितं, यत्र वा तेन प्रामाण्याप्रामाण्ये उपस्थितावप्यप्रामाण्यस्यैव हेत्वभावेन व्याप्तिग्रहः तत्र सर्वत्र तदभावानुमितौ

---

1. ख. वह्नित्वाभाववति
2. ख. अप्रामाण्यानु-
3. क. किं च प्रामाण्या-
4. क °लिङ्गदाह-
5. ख. यथा चात्र
6. ग वह्नित्ववदित्र
7. ख. ग. घ. °रूपप्रामाण्ये
8. ग. 'ज्ञाते······तस्मिंश्च' इतिमागस्त्रुटितः ।
9. ग. अथ वेति ।
10 ग. यत्र प्रमामात्र-

प्रकाशः

तथा च तदवगमकाले वह्नित्वविशेष्यकत्वं न हस्तपिहितम्, येन तद्ग्रहो न स्यात्। प्रत्युत वह्नित्वस्य लघुत्वेन दाहसमर्थतावच्छेदकत्वेनोपजीव्यतया च प्रथमं [1]मनसा तद्ग्रह एव।

---

न्यायशिखामणिः

प्रामाण्यभानमिति सार्वत्रिकत्वं द्वितीयकल्पस्य विवक्षितमित्यत आह—किं चेति। वक्ष्यत इति। दाहसमर्थोऽयमिति ज्ञानोपनीतं [2]दाहसामर्थ्यवैशिष्ट्यं पुरोवर्तिनि मनसा गृह्यत इति वक्ष्यत इत्यर्थः। [3]न हस्तपिहितमिति। उपनीतत्वाविशेषे तदपि भासेतैवेत्यर्थः।

ननु ज्ञानान्तरोपस्थितं प्रकारवैशिष्ट्यं स्वातन्त्र्येण पुरोवर्तिनि मनसा गृह्यत इति वक्ष्यते। तथा च गृह्यमाणज्ञानातिरिक्तज्ञानोपनीतदाह[4]सामर्थ्यवैशिष्ट्यं पुरोवर्तिनि भासताम्। वह्नित्ववैशिष्ट्यं तु गृह्यमाणज्ञानोपनीतं [5]न तथा भासत इति चेत्— न। वह्नित्ववैशिष्ट्येऽपि [6]ज्ञानान्तरसंभवात्। अन्यथा 'मनसा चैवं प्रामाण्यग्रहः' इत्यग्रिमग्रन्थविरोधात्।

ननु 'मनसा चैवम्' इति वक्ष्यमाणरीतिमनङ्गीकृत्यैवायं ग्रन्थ इति न प्रामाण्यग्रहावकाशः। हेतुग्रहश्च [7]दाहासमर्थविशेष्यकत्वाभावेनेति चेत्— न। तस्याप्यनुव्यवसायाविषयत्वात्। तस्मान्मनसैव लिङ्गग्रहो वाच्यः। तथा च तद्ग्रहकाले प्रामाण्यग्रहोऽपि दुर्वार इति भावः।

न केवलं लिङ्गग्रह[8]काल एव प्रामाण्यग्रहः, प्रत्युत [9]तत्पूर्वकालेऽपीत्याह— प्रत्युतेति। एतच्चापाततः। तृणारणिमणिन्यायेनावच्छेदक[10]वह्नित्वाग्रहेऽपि तत्तद्वह्नित्वेनोपस्थिते [11]तद्ग्रहसंभवात्। लघुत्वेनेति। उष्णस्पर्शविशेषाश्रयत्वापेक्षया वह्नित्वस्य जातित्वादिति भावः। प्रथममिति। लिङ्गज्ञानादिति शेषः।

---

1. ख. 'मनसा' नास्ति।
2. ख. 'दाह' नास्ति।
3. ग. न च वह्निविहितमिति।
4. ख. घ. °समर्थ-
5. ग. 'न' नास्ति।
6. ख. घ. ज्ञानानन्तर-
7. ग. दाहसमर्थ-
8. ख. ग. '°काल' नास्ति।
9. ख. ततः पूर्वं तत्काले
10. ख. 'वह्नित्वा' नास्ति।
11. ख. ग. घ. तत्तद्ग्रह-

प्रकाशः

अपि च प्रथममप्रामाण्याभावानुमानस्थले यद्यप्रामाण्याभावसंदेहः प्रामाण्यसंदेहो वा तदा तत्कोटिप्रसिद्धेरावश्यकत्वात् अप्रसिद्धाभावानुमानं प्राथमिकमित्यसंगतम्। अप्रामाण्याभावप्रसिद्धौ प्रसिद्धाभावस्यैव साधनात्। यदि च न तत्संदेहः तदा[1]अप्रामाण्यशङ्काशून्यात् तदर्थनिश्चयादेव निष्कम्पप्रवृत्तिरिति किं भावानुमानेन।

न्यायशिखामणिः

ननु मनसैव दाहसामर्थ्यवद्विशेष्यकत्वग्रह इति न हेत्वसिद्धिः। न च तेनैव वह्नित्ववद्विशेष्यकत्वग्रहोऽपि स्यादिति वाच्यम्। दाहसामर्थ्यवैशिष्ट्योपनायकस्य ज्ञानान्तरस्य वह्नित्ववैशिष्ट्य[2]विषयकत्वाभावात् तदुपनायकसाहित्यनैयत्याभावाच्च। तथा च दाहसामर्थ्यवद्विशेष्यकत्वं यत्र मनसा निश्चितं [3]वह्नित्ववद्विशेष्यकत्वं न निश्चितं तत्र तल्लिङ्गकाप्रामाण्याभावानुमितौ प्रामाण्यभानं न विरोत्स्यत इत्यत आह—**अपि चेति।**

यद्यपीदमप्यापाततः, प्रामाण्यस्य संशयतद्धेतुकोटिनिश्चयविषयत्वेऽप्यधिकरण[4]विशेषनिष्ठत्वेनानिश्चितत्वात् तादृशसाध्यनिश्चयस्य [5]हेत्ववगमानवगमयोरन्वयित्वासाधारण्यापादकत्वेन तदभावस्यैव व्यतिरेकित्वनिर्वाहक[6]स्याप्रसिद्धिरदाभिप्रतत्वात्। [7]तस्मादुपनीतभानमते संभवदप्रामाण्यस्थलेऽपि मतान्तरसंस्कारेण प्रामाण्याप्रामाण्योरस्थितावपि यत्राप्रामाण्यस्यैव व्याप्तिग्रहः स्वातन्त्र्येण दाहसामर्थ्यवद्विशेष्यकत्वग्रहश्च तत्र सर्वत्रानुव्यवसायागृहीतमुपनीतं प्रामाण्य[8]मप्रामाण्याभावानुमितौ भासते। मतान्तरे तु [9]तदनुमितिहेतुरप्रामाण्याभाव इति व्यवस्थितविकल्पयोर्द्वितीयतृतीयकल्पयोः किमपि दूषणं न लग्नमिति।

तथाप्यप्रामाण्याभावानुमानं सर्वत्र प्रामाण्यविषयकं तदनुमितिहेतुलिङ्गविषयकं वेत्यापाततः प्रतीयमानसार्वत्रिकत्वस्य निराकार्यत्वे तात्पर्यम्।

1. क. प्रामाण्य-
2. ख. °विषयत्वाभावात्
3. ख. वह्नित्वतद्विशेष्यकत्वं
4. ख. °विशेष्य-
5. क. ख. हेतोरवगमा-
6. ग. °स्य प्रसिद्धि-
7. क. तस्मात्तदुप
8. ख. 'अप्रामाण्याभावानुमितौ' इति नास्ति।
9. ख. 'तदनुमिति······सर्वत्र प्रामाण्यविषयकं' इति ग्रन्थस्त्रुटितः।

अतिरिक्तविषयतापक्षे अयं वह्नित्वेनानुभवोऽवह्निवृत्तिवह्नित्वप्रकारकविषयताको न, वह्नित्वासमानाधिकरणवह्नित्वप्रकारकविषयताको न, विषयताश्रयावृत्तिप्रकारको न वेति साध्यम्। वह्निवृत्तिवह्नित्वप्रकारकविषयताकत्वं विषयताश्रयवृत्तिप्रकारकत्वं वा अर्थात् सिध्यति, न तु प्रथमं साध्यप्रसिद्धेः।

---

प्रकाशः

तस्माद्यदि प्रामाण्यानुमानप्रयोजकसाध्यप्रसिद्धिप्रयोजकत्वमभावानुमानस्य स्यात् तदा परं तदनुमानपूर्वकमेव तदनुमानं संगच्छते। तच्च नास्त्येवेति।

केचित्तु क्वाचित्काभिप्रायेणायं प्रकार इत्याहुः। विषयताश्रयेति। इदं साध्यं परस्परविरुद्धप्रकारकवह्नित्वप्रकारकज्ञानत्वादिति हेतुमभिप्रेत्य। अन्यथानुष्णो वह्निरिति ज्ञाने व्यभिचारापत्तेः। केचित्तु विषयताश्रयवृत्तिवह्नित्वप्रकारको नेति साध्यार्थः। अतो नोक्तव्यभिचार इत्याहुः। न प्रथमं साध्याप्रसिद्धेरिति।

---

न्यायशिखामणिः

[1]किमप्रामाण्याभावानुमानं प्रामाण्यसंदेहे सत्यमति वा। आद्येऽप्यप्रामाण्यतदभावकोटिको वा स्यात् प्रामाण्यतदभावकोटिको वा। तदुभयमप्यनूद्य क्रमेण निराकृत्यासति संदेहे तदनुमानमिति [2]पक्षमनूद्य दूषयति—यदि चेति। ततश्च तृतीयकल्पे अन्त्यः पक्षः परमवशिष्यते। स च प्राग्भवीयसंस्कारेण तत्प्रसिद्ध्युपपादनात् निरस्त एवेत्याह—तस्मादिति। ननु कल्पानां सार्वत्रिकत्वाभावे कस्तर्हि अभिप्राय इत्याशङ्क्य [3]जयदेवोक्तमाह—केचित्त्विति। क्वाचित्केति। [4]क्वचिदप्रामाण्याभावशङ्कया प्रवृत्तिप्रतिबन्धः, क्वचित्तु प्रामाण्याभावशङ्कयेति [5]तन्निवर्तकमप्रामाण्याभावानुमानं प्रामाण्यानुमानं च क्वाचित्कमेव। न ह्यप्रामाण्याभावनिश्चयो ग्राह्याभावानवगाह्यपि प्रामाण्याभावशङ्कानिवर्तकः, येनाप्रामाण्याभावानुमानं सार्वत्रिकं स्यादिति भावः। अन्यथेति। प्रथमहेत्वभिप्रायत्व इत्यर्थः।

---

1. क. किमिह प्रामाण्या- ग. किंतु प्रामाण्या-
2. ख. पक्ष आद्यं दूषयति
3. ख. जयदेवोक्तमेवाह
4. ख. 'क्वचिदप्रामाण्याभावशङ्कया...क्वाचित्कमेव' इति ग्रन्थस्त्रुटितः।
5. घ. तन्निवर्तकं प्रामाण्या-

वह्निभ्रमे च विषयताश्रयो न वह्निः, विषयताया विशेष्यवृत्तित्वादिति भ्रमत्वेन न सिद्धसाधनम् ।

अन्ये तु वह्निभ्रमे या विशेषणवृत्तिर्विषयता सा विशेष्यवृत्तिविषयताया अभिन्नेति न सा वह्नित्वासमानाधिकरणधर्मानवच्छिन्नेति न सिद्धसाधनमिति ।

---

प्रकाशः

अत्रापीदं चिन्त्यम् । भवेदेवं यदि प्रथमानुमानेन [1]साध्यं प्रसिद्धं स्यात् । तच्च न । तेनाभावस्यैव साधनात् । प्रकारान्तरेण च साध्यप्रसिद्धौ [2]प्रथममप्रामाण्याभावलिङ्गत्वाभि[3]मतेनैव तत्सिद्धिसंभवः । तस्यापि प्रामाण्यव्याप्यत्वात् । अवह्निवृत्तिविषयताकत्वाभावे सति सविषयताकत्वादित्यादिहेतुसिद्ध्यर्थं प्रथमानुमानादर इति आपातत [4]एव निरस्तम् । न सा वह्नित्वेति । विशेष्ये धर्मिणि [5]तस्या वह्नित्वासमानाधिकरणेदंत्वादिधर्मसामानाधिकरण्याभावादिति भावः ।

---

न्यायशिखामणिः

उपाध्यायमतमाह—केचित्त्विति । वह्निगोचरसंशयभ्रम[6]साधारण्यं साध्यस्येत्यस्वरसं सूचयति—आहुरिति । वह्निवृत्तिवह्नित्वप्रकारकविषयताकत्वमर्थात्सिध्यतीत्यस्य सार्वत्रिकत्वभ्रमं वारयति—अत्रापीति । तथा चायमपि काचित्कः प्रकार इति भावः । विशेष्य इति । यद्यपि वह्नित्वरूप[7]विशेषणांशेऽपि विषयताया [8]वह्नित्वासमानाधिकरणवह्नित्वत्वादिसामानाधिकरण्यमस्त्येवेति न सिद्धसाधनम्, तथापि वह्निप्रमायां बाधवारणाय विशेष्यांशविवक्षेति भावः ।

वह्निप्रत्यक्षे रूपस्यापि रूपत्वापेक्षया विशेष्यत्वेन तदंशे विषयतायास्तादृशरूपाव च्छन्न[9]त्ववद्विशेष्यांशे वह्नित्वासमानाधिकरणधर्मानवच्छिन्नविषयताकत्वं [10]विवक्षितमित्यपि [11]साध्यं बाधितमिति अन्ये त्वित्यत्रास्वरसो बोध्यः ।

---

1. ख. साध्याप्रसिद्धिः
2. ख. प्रथमप्रामाण्या-
3. ख. ॰मतेनैवतत्सिद्धि॰
4. ख. एवेति निरस्तम्
5. ख. तस्य
6. ख. साधारणं
7. ख. '॰विशेषणांशेऽपि···फल' इत्ययं ग्रन्थभागस्त्रुटितः ।
8. ग. वह्नित्वसमा-
9. ग ॰त्वाद्धि-
10. घ. विवक्षितमपि
11. घ. साध्यमत्र बाधित-

न च मणिज्ञानस्य प्रामाण्यानुमाने मणिप्रभायां मणिभ्रमेण प्रवृत्तस्य मणिप्राप्तौ मणिगोचरप्रयत्नजनकमणित्वप्रकारकनिश्चयत्वमनैकान्तिकमिति वाच्यम् । मणिप्रभाविषयकज्ञानेन भिन्नविषयतया मणिगोचरप्रयत्नानुत्पादात् । मणिप्राप्तिस्तु नान्तरीयकत्वात् । ज्ञानप्रयत्नयोरसमानकालत्वेऽप्यनुभवस्मरणयोरिव मनसा कार्यकारणभावग्रह इति नासिद्धिः ।

---

## प्रकाशः

न चेति । ननु [1]मणिर्मणिजनक इति ज्ञानवतः [2]फलज्ञानत्वेन प्रभागोचरमणित्वनिश्चयस्य मणिप्रवर्तकतया मणित्वाभाववद्विशेष्यकतया च[3] व्यभिचारः स्यादिति चेत्—न । फल[4]ज्ञानाप्रवर्तकत्वस्य वक्ष्यमाणत्वात् । समानविषयकत्वेन प्रवर्तकत्वस्य विवक्षणाद्वा । ज्ञानप्रयत्नयोरिति । नन्वनयोर्युगपदुपस्थितौ मनसा कार्यकारणभावग्रहः संभवी । सा च न संभवति, क्षणिकत्वेन युगपदवस्थानाभावात् । न च स्मृत्युपनीते तद्ग्रहः । स्मृतेरपि ज्ञानगोचरायास्तदनुव्यवसायपूर्वकत्वात् ।

---

## न्यायशिखामणिः

ननु प्रभाविशेष्यकमणित्वप्रकारकनिश्चयस्य [5]मणिजन्यत्वाप्रकारकतया फलज्ञानत्वेन प्रवर्तकत्वमिति न युक्तम् । मणिजन्यत्वस्फुरणे तत्र मणित्वभ्रमायोगादित्यत आह—[6]मणि(र्मणिरिति)[र्मणीति] । [7]मणिजन्यत्वे मणित्वाभावव्याप्यत्वाज्ञानदशायामुक्तभ्रमसंभव इति भावः । अभ्युपेत्याह—समानेति । किं ज्ञानप्रयत्नयोर्युगपदुपस्थितौ सत्यामसत्यां वा कार्यकारणभावग्रहः । तत्र नाद्य इत्याह—अनयोरिति । आद्येऽपि किं सा प्रत्यक्षरूपा स्मृतिरूपा वा । नाद्य इत्याह—सा चेति । द्वितीयेऽपि स्मृतिरनुव्यवसायपूर्विका न वा । नान्त्य इत्याह—स्मृतेरिति ।

---

1. क. मणिकर्मणि जनकः
2. क. फलज्ञानत्वे
3. क. 'च' नास्ति ।
4. ख. °ज्ञानप्रवर्तक-
5. ग. मणिजन्यत्वप्रकार-
6. ख. धर्मिणि मणिरिति ।
7. ख. ग. 'मणिजन्यत्वे' नास्ति ।

प्रकाशः

तथा च प्रवर्तकज्ञानस्य यद्यनुव्यवसायस्तदा तत एव प्रवर्तकज्ञानविनाशे प्रवृत्तिरेव हेत्वभावे दुर्लभा कुतस्तद्धेतुत्वधीः। अननुव्यवसाये(न)[च]संस्कारानुत्पादे क्व स्मृतिः। [1]क्व वा तदुपनीते तद्धेतुत्वधीरिति चेत्—

अत्र वदन्ति। ज्ञाने जाते तस्य ज्ञानत्वेन समानविषयकज्ञानत्वेन वा सामान्यलक्षणया ज्ञाने सति तज्ज्ञाने [2]चानागतविषयस्यापि विषयीकृतत्वेन तादृशज्ञानान्तरस्य पुनरुत्पादे प्रवृत्त्यनन्तरं कार्यकारणभावपरिच्छेदः। सामान्यलक्षणया प्रागेव विषयीकृतस्य चरमोत्पन्नस्य प्रवृत्तिजनकज्ञानस्य प्रवृत्त्युत्तरं स्मृत्युपनये बाधकाभावात्। इदमपि च सामान्यलक्षणास्वीकारे बीजम्। अन्यथा ज्ञानेच्छादीनां क्षणिकत्वेन तद्धीर्न स्यादिति।

---

न्यायशिखामणिः

आद्येऽपि तदनुव्यवसायः प्रवृत्तेः पूर्वमस्ति न वा। तत्राद्यमनूद्य दूषयति —तथा चेति। प्रवर्तकज्ञानविनाश इति। यद्यपि नानुव्यवसायसमये [3]तद्विनाश इति विनश्यदवस्थेच्छा ततः प्रवृत्तिरिति युज्यते, तथापि विशिष्टानुभवस्यैव स्मृतिजनकतया तस्य च ज्ञानत्वनिर्विकल्पकजन्यत्वमिति अनुव्यवसायसमये विनाश एवेति भावः। द्वितीयं निराचष्टे—अननुव्यवसाय इति। प्रवृत्ते पूर्वमिति शेषः।

जयदेवमतमाह— अत्रेति। नन्वेवमपि प्रवर्तकज्ञानस्य [4]विशिष्याज्ञानान्न तत्कारणताग्रह इत्यरुचेराह—समानेति। ननु प्रत्यासत्तिजन्यज्ञानस्य प्रवर्तकज्ञानगोचरस्य विनष्टत्वात् कथं प्रवृत्त्यनन्तरं कार्यकारणभावग्रह इत्यत आह— सामान्येति।

ननु वह्निविषयकज्ञानत्वं गृहीतमेव प्रत्यासत्तिरिति वाच्यम्। तथा च यत्र गृहीतं तत्रैव ज्ञाने वक्ष्यमाणरीत्या प्रवृत्ति[5]कारणत्वग्रहोपपत्तौ सामान्यलक्षणयेत्यादिप्रवृत्तिकारणत्वग्रहप्रकारो न युक्त इत्यस्वरसादाह—वस्तुतस्त्विति।

---

1. क. क्वातदुपनीते
2. क. चानागतस्यापि
3. ख. 'तद्विनाश इति···अनुव्यवसायसमये' इति ग्रन्थो नास्ति।
4. ख. वैशिष्ट्याज्ञान्न
5. ग. °कारणग्रहो

### प्रकाशः

वस्तुतस्तु यत्र व्यवसायानन्तरं विषयविशिष्टज्ञानानुव्यवसायः तदनन्तरं विनश्यदवस्थेन व्यवसायेनेच्छाद्युत्पादनं तत्र संस्कारो न दुर्लभः। यत्र चेच्छा-सामग्र्या बलवत्त्वाद्व्यवसायानन्तरमिच्छा तदनन्तरं विनश्यदवस्थेनानुव्यवसायजननं ततो विनश्यदवस्थेच्छया प्रवृत्तिः तत्रापि स न दुर्लभः। गौरवेण स्वसमयवृत्तितयानु-व्यवसायं प्रति व्यवसायस्याहेतुत्वादिति।

---

### न्यायशिखामणिः

**विषयविशिष्टेति**। विषयांशे सविकल्पकस्यानुव्यवसायस्य [1]ज्ञानांशे निर्विकल्पकत्वे मध्ये ज्ञानत्वनिर्विकल्पकाभावेन विनश्यदवस्थव्यवसायो [2]दुर्लभ इति भावः। यद्वा विषयविशिष्टेत्युपलक्षणम्, ज्ञानत्वविशिष्टेत्यपि द्रष्टव्यम्। समानविषयकज्ञानान्तर-गोचरज्ञानत्वनिर्विकल्पकात् तद्विशिष्टानुव्यवसायः संभवतीति न व्यवसायविनाश इति भावः। तथा च रजतज्ञानं [3]प्रवृत्तिकारणमित्याकारः कारणताग्रहः संभवतीति भावः।

नन्विच्छासामग्र्याः बलवत्त्वात् व्यवसायानन्तरं कथमनुव्यवसायः। न च यत्र [4]सिद्धत्वज्ञानादिच्छाप्रतिबन्धः तत्रानुव्यवसायोऽभिमत इति वाच्यम्। तथा सति प्रवृत्तेरप्यनुत्पादे तद्धेतुत्वधीरेव न [5]स्यादित्यनुशयादाह—**यत्र चेति**। **तदनन्तरमिति**।

ननु प्रवृत्तिसामग्र्याः प्रबलत्वादिच्छोत्पत्त्यनन्तरं प्रवृत्तिरेव स्यान्नानुव्यव-सायः। न च तदोपादानप्रत्यक्षाभावात्तत्सामग्रीविरह इति वाच्यम्। तर्हि प्रवृत्त्यभावापत्तौ [6]तद्धेतुत्वग्रहानुपपत्तेः। न च ज्ञानानन्तरमिच्छा तदनन्तरमु-पादानप्रत्यक्षं ततः प्रवृत्तिः तत्रानुमानात् ज्ञानोपस्थितौ कारणताग्रह इति विवक्षितमिति वाच्यम्। वह्निज्ञानप्रयत्नयोः कार्यकारणभावाग्रहे तन्मूलव्याप्ते-रेवाग्रहणे तल्लिङ्गकवह्निज्ञानानुमानायोगात्। आत्मत्वादेश्च व्यभिचारेण [7]वह्निज्ञाना-ननुमापकत्वादिति चेत्—

---

1. ख. ज्ञानत्वांशे
2. ग. घ. न दुर्लभः
3. क. ग. घ. प्रवर्तक-
4. क. सिद्धज्ञाना-
5. ख. स्यादित्यनुव्यवसायादाह
6. ख. तद्धेतुग्रहा-
2. ख. वह्निज्ञानानु-

प्रकाशः

ननु तथापि समर्थप्रवृत्तिजनकतावच्छेदकस्य प्रामाण्यस्याज्ञाने [1]न प्रवृत्तिकारणताग्रहः। ज्ञाने वा सिद्धसाधनमिति चेत्—न। तृणारणिमणिन्यायेन व्यक्तावपि [2]तद्ग्रहसंभवादित्येके। एतदस्वरसादेव दाहसमर्थविशेष्यकेति द्वितीयहेतुरित्यन्ये।

---

न्यायशिखामणिः

अत्र ब्रूमः। न हि वह्निज्ञानत्वेनोपस्थिते तत्र [3]तत्कारणताग्रहः। किं तु ज्ञानत्वेन। तेन रूपेण तदुपस्थितिश्च प्रयत्नवानहं ज्ञानवान् आत्मत्वादित्यनुमानेनेति न किंचिदनुपपन्नम्।

ननु ज्ञानत्वेनोपस्थिते तत्र [4]प्रवृत्तिकारणताग्रहेऽपि न दाहसमर्थविशेष्यकप्रवृत्तिकारणताग्रहः तदवच्छेदकस्य प्रामाण्यस्य प्रथमं दुर्ग्रहत्वादिति चोदयति—नन्विति। समर्थेति।

ननु यत्रावच्छेदकमन्तर्भाव्य कार्यताग्रहस्तत्रैव तन्निरूपितकारणताग्रहेऽवच्छेदकग्रहापेक्षा न कारणताग्रहमात्रे। द्रव्यत्वाश्रयो द्रव्यकारणमिति तद्ग्रहेऽपि दण्डे घटकारणत्वप्रतीतिदर्शनात्। प्रकृते च न तादृशप्रवृत्तित्वावच्छिन्नकार्यतानिरूपितकारणत्वं हेतुः, येन तद्ग्रहापेक्षा स्यात्। किं तु [5]तत्कारणत्वमात्रं लाघवादिति चेत्—

न। तन्मात्रस्य हेतुत्वे परमेश्वरज्ञाने व्यभिचारात्। तस्याप्यवह्नौ वह्नित्वाभाववद्विशेष्यकत्वात्। न च वह्नित्वप्रकारकत्वावच्छेदेन परमेश्वरज्ञानं न तथा। प्रामाण्यस्य च वह्निविशेष्यकभ्रमादिसाधारण्यवारणाय तथा विवक्षणीयत्वादिति वाच्यम्। वह्नित्वप्रकारकत्वरूपपक्षतावच्छेदकमहिम्नैव तद्व्यावृत्तप्रामाण्यलाभ इत्युक्तत्वात्।

तृणेति। यथा तृणत्वावच्छिन्नकारणतानिरूपितापि कार्यता [6]तत्तद्व्यक्तित्वरूपावच्छेदकग्रहमात्रेण गृह्यते, तथा तादृशप्रवृत्तित्वावच्छिन्नकार्यतानिरूपितकारणतापि तत्तज्ज्ञानव्यक्तित्वग्रहेणैव सुग्रहा। न च वह्नित्वस्यातिप्रसक्तत्वात्तत्र

---

1. ख. कथं ज्ञाने प्रवृत्ति-
2. क. तत्संभवा-
3. क. 'तत्' नास्ति।
4. क. 'प्रवृत्ति' नास्ति।
5. ख. तत्कारणमात्रं
6. ख. तत्तद्वृत्तित्व-

अभावसाध्यके च निर्विकल्पकस्य प्रथमं सपक्षत्वेनानिश्चयादसाधारण्यम् ।

---

### प्रकाशः

अभावसाध्यक इति । अप्रामाण्याभावसाध्यक इत्यर्थः । निर्विकल्पकेत्युपलक्षणम् । घटादेरपीति द्रष्टव्यम् । सपक्षत्वेनेति । साध्यवत्त्वेनेत्यर्थः ।

---

### न्यायशिखामणिः

तथास्तु । प्रकृते च वह्नित्ववद्विशेष्यकत्वस्यानुगतानतिप्रसक्तस्य संभवान्न तद्व्यक्तित्वमवच्छेदकमिति वाच्यम् । न हीदं वस्तुगत्यावच्छेदकमित्यभिमतम् । किं त्वनुगमानतिप्रसङ्गाभ्यां वह्नित्ववद्विशेष्यकत्वमेव स्थास्यति । [1]अस्य चेदानीमज्ञानेन तद्व्यक्तित्वस्य कारणताग्रहे पुरस्कारमात्रं कृतम् ।

ननु तत्तद्व्यक्तित्वं न सकल[2]वह्निज्ञानव्यक्तिषु तत्कारणतावच्छेदकम्, तस्य प्रतिव्यक्ति नानात्वेनाज्ञानात् । यदि संनिहितव्यक्तौ तदा [3]तदवच्छेदकवैयर्थ्यम् । आनन्त्यव्यभिचाराभ्यामवच्छेद्यग्रहाशक्तावेव सर्वत्रावच्छेदकस्वीकारात् । न चैवं तृणादौ का गतिरिति वाच्यम् । वह्निष्ववान्तरजातिभेदस्य प्रत्यक्षसिद्धत्वेन तस्य तत्रावच्छेदकत्वात् । [4]न चावच्छेदकमनपेक्ष्य वह्निज्ञानव्यक्तौ [5]तद्ग्रहोऽभिमतः । अत एव व्यक्तावित्युक्तम् । तृणारणिमणिन्यायोपन्यासस्तु यथा वह्निष्वनुगतावच्छेदकाभावेऽपि कार्यताग्रहः [6]तथावच्छेदकाभावेऽपि ज्ञानव्यक्तौ कारणताग्रह इत्यवच्छेदकाभावमात्रसाम्याभिप्रायेणेति वाच्यम् । तर्हि प्रवृत्तिव्यक्तेरेव ज्ञानव्यक्तिकार्यतया प्रवृत्तित्वस्यातिप्रसक्तत्वेनानवच्छेदकत्वापत्तेः । तथा च तादृशप्रवृत्तित्वावच्छिन्नकारणत्वं प्रामाण्यरूपावच्छेदकाननुभवे [7]दुःखगमम् इत्यस्वरसादाह—यद्वेति । वस्तुतस्तु न पूर्वहेतावस्वरसो युज्यते । तथा हि तादृशप्रवृत्तित्वावच्छिन्नकारणत्वं न हेतुः, येनावच्छेदकग्रहापेक्षा स्यात् । किं तु तादृशप्रवृत्तिकारणतामात्रम् । सांसारिकत्वेन हेतुविशेषणात् [8]विशिष्टप्रामाण्याभावस्य

---

1. क. तस्य
2. ग. 'वह्नि' नास्ति ।
3. ख. 'तद्' नास्ति ।
4. ख. न चावच्छेदकानपेक्ष्य-
5. ख. तद्ग्रहोऽपि मतः
6. ख. तदाव-
7. ख. 'दुखगमम्' 'किं तु' इति ग्रन्थो नास्ति ।
8. क. वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकत्वाभावस्य

तथा इयं पृथिवीत्यनुभवः पृथिवीत्वाभाववति पृथिवीत्वप्रकारको न, अपृथिवीवृत्तिप्रकारको न, विशेष्यावृत्तिप्रकारको न, पृथिवीत्वप्रकारकत्वे सति पृथिव्यविशेष्यको न, पृथिवीत्वव्यधिकरणप्रकारावच्छिन्नो न, पृथिव्यवृत्तिप्रकारको न वा, गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिति व्यतिरेकी।

पृथिवीत्वभ्रमः पृथिवीत्वाभाववति पृथिवीत्वप्रकारक इति न भ्रान्त्वेन सिद्धसाधनम्, न वा गन्धवद्विशेष्यक इति न व्यभिचारः। पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादिकमर्थात्सिध्यति। विषयतापक्षे अयं पृथिवी-

---

प्रकाशः

साध्याप्रसिद्धिदशायामेवाभावानुमानादिति भावः। तथेत्यादि। अत्रापि साध्यहेत्वादौ पूर्ववत्संगतिरूहनीया।

अन्ये त्वाहुः। अत्र साध्ये पृथिवीत्वासमानाधिकरणत्वं तदधिकरणानधिकरणत्वम्। हेतौ च गन्धासमानाधिकरणत्वं तदनधिकरणाधिकरणत्वम्। एवं

---

न्यायशिखामणिः

साध्यत्वोपपादनाद्वा नेश्वरज्ञाने व्यभिचारः। अस्तु वा तादृशप्रवृत्तित्वावच्छिन्नकारणत्वं विशिष्टं लिङ्गम्, तथापि ज्ञाने ज्ञानत्वेन प्रवृत्तित्वावच्छिन्नकारणत्वम् प्रवृत्तौ च दाहसमर्थविशेष्यकत्वम् प्रामाण्यग्रहेऽपि विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन ग्रहीतुं शक्यत इति न हेत्वसिद्धिरिति।

ननु निश्चितसाध्यवत्त्वं सपक्षत्वमिति साध्यनिश्चयविरहो हेतुः स्यात्। न चैवं युज्यते। तन्निश्चयस्यासाधारण्यप्रयोजकत्वाभावादित्यत आह—साध्यवत्त्वेनेति। वह्निज्ञानप्रामाण्योक्तप्राथमिकग्रहणप्रकारः प्रामाण्यान्तरेऽप्यतिदिष्टो मूले—तथेत्यादिना। [1]तत्र पक्षे गन्धवद्विशेष्यकज्ञाने पृथिवीत्वप्रकारकत्वं विवक्षितम्। साध्ये च पृथिवीत्वाभाववद्विशेष्यकत्वाभावे तत्प्रकारकत्वं न विवक्षितम्। तथा हेतावपि तन्न विवक्षितम्। किं तु तद्घटितहेत्वन्तरमेवेति हेतुद्वयं विवक्षितम्।

---

1. क. तत्र पक्षे च गन्धवद्विशेष्यकज्ञानप्रकारकत्वं विवक्षितम्।
ख. तत्र पक्षे तत् किंतु तद्घटितहेत्वन्तरमेवेति हेतुद्वयं विवक्षितम्।

त्वेनानुभवः अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताको न, पृथिव्यवृत्ति-पृथिवीत्वप्रकारकविषयताको न, पृथिवीत्वासमानाधिकरणपृथिवीत्वप्रकार-कविषयताको न, विषयताश्रयावृत्तिप्रकारको न वेति साध्यम्। पृथिवीत्व-समानाधिकरणपृथिवीत्वप्रकारकविषयताकत्वादिकमर्थात् सिध्यति।

अन्ये तु पृथिवीत्वासमानाधिकरणप्रकारावच्छिन्नविषयताकत्वाभावः साध्यः, गन्धासमानाधिकरणाप्रकारकगन्धसामानाधिकरणप्रकारकविषयता-प्रतियोगिज्ञानत्वात्।

---

प्रकाशः

च पाकजरूपगगनादिप्रकारके पाकजरूपवद्गगने गगनत्वमित्यादिज्ञाने व्यभि-चारवारणाय [1]गन्धसमानाधिकरणप्रकारकेति विशेषणम्। अत्र गन्धसमानाधि-करणः प्रकारभूतो धर्मो यस्याः सामानाधिकरण्येन संबन्धेनास्ति सा विषयता तादृशप्रकारिका विवक्षिता। तथा च गन्धसमानाधिकरणप्रकारसमानाधिकरणत्वं पर्यवस्यति। तेन नोक्तव्यभिचारः। न चैवं गन्धसमानाधिकरणत्वमात्रमेव विषयताया विशेषणमस्तु, लाघवादिति वाच्यम्। गन्धसमानाधिकरणत्वस्य विषयतापदार्थेऽनन्वयेन व्यर्थविशेषणतानवकाशात्।

---

न्यायशिखामणिः

निश्चयपदं च विरुद्धाप्रकारकज्ञानपरम्। अन्यथा अत्रापि पूर्वोक्तदूषणगणग्रासादि-त्याह—अत्रापीति।

असमानाधिकरणपदेन साध्यहेत्वोरेकरूपार्थविवक्षायां हेतौ [2]विशेषण-वैयर्थ्यमित्याशङ्क्य उपाध्यायमतमाह—अत्रेति। तथाप्यत्र गगनत्वं पाकजरूप-वदिति ज्ञाने व्यभिचार इत्यत आह—अत्रेति।

अनवकाशादिति। यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावादिति भावः। साध्यहेत्वोरसमानाधिकरणपदस्य प्रयोजनं विना अर्थभेदविवक्षा न युक्ता। न हि हेतुविशेषण[3]सार्थक्यं प्रयोजनम्, तद्वैयर्थ्येऽप्यनिष्टाभावात् हेतुलाघवलाभाच्च। किं च गगनपाकजरूपयोर्विरोधग्रहकाले गगनवान् [4]पाकजरूपवान् वेति घट-

---

1. ख 'गन्धसमानाधिकरण...लाघवादिति वाच्यम्' इति ग्रन्थो नास्ति।
2. ख. 'विशेषण' नास्ति। 3. ख. °सार्थक्यं 4. क. 'पाकज' इति नास्ति।

प्रकाशः

गन्धसमानाधिकरणप्रकारकेति विशेषणं पृथिव्यां पृथिवी जलं वेति संशये व्यभिचारवारणायेति वदन्ति ।

तन्न । अयं गगनवान् पाकजरूपवांश्चेति घटविशेष्यकभ्रमे व्यभिचारात् । [1]वयं तु गन्धसमानाधिकरणप्रकारकत्वेन साधिकरणमात्रप्रकारकत्वं विवक्षितमिति नोक्तव्यभिचार इति ब्रूमः ।

अन्ये तु साध्ये यदि धर्ममात्रपरं प्रकारपदम्, निर्विकल्पके च विषयता तदा तत्र व्यभिचारवारणाय गन्धसमानाधिकरणप्रकारकेति विशेषणमित्याहुः ।

यत्तु गन्धसमानाधिकरणाप्रकारकविषयताप्रतियोगित्वादित्येको हेतुः । मात्रपदान्तर्भावेण गन्धसमानाधिकरणमात्रप्रकारकविषयताप्रतियोगित्वादित्यपरो हेतुरिति हेतुद्वये तात्पर्यमिति ।

---

न्यायशिखामणिः

विशेष्यकसंशये व्यभिचार इति दोषे सत्येव प्रगल्भोक्तदोषमाह—तन्नेति । वयं त्विति ।

अत्रेदं चिन्त्यम् । साधिकरणमात्रप्रकारकत्वं हि निरधिकरणाप्रकारकत्वे सति साधिकरणप्रकारकत्वम् । तत्र सत्यन्तेनैव निरधिकरणगगनादिप्रकारकज्ञाने व्यभिचारवारणे साधिकरणप्रकारकत्वं व्यर्थम् । न हि तत् निर्विकल्पके व्यभिचारवारणाय । साध्यस्यापि सत्त्वात् । साध्ये [2]प्रकारपदस्य धर्मपरत्वे च प्रमुष्टतत्ताकयथार्थपृथिवीत्वस्मरणे व्यभिचारः । किंच साध्यहेत्वोरसमानाधिकरणपदस्यात्रार्थभेदविवक्षाविरहे व्यभिचाराभाव इत्यतस्तद्विवक्षा वाच्या । सा च प्रयोजनं विना न संभवतीत्युक्तमिति ।

जयदेवमतमाह—अन्ये त्विति । अत्रेदमनभिमतिबीजम् । सप्रकारकत्वमात्रेण निर्विकल्पके व्यभिचारवारणे गन्धसमानाधिकरणपदवैयर्थ्यम् । पूर्वोक्तप्रमुष्टतत्ताकस्मरणे व्यभिचारश्च । इदंत्वप्रकारकत्वेन हेतुविशेषणे तेनैव निर्विकल्पके व्यभिचारानवकाश इति ।

---

1. ख. 'वयं तु···विशेषणमित्याहुः' इति ग्रन्थः नास्ति ।

2. ख. प्रकारकपदस्य

तेन संशयव्यवच्छेदः । निश्चयत्वं वा तद्विशेषणमित्याहुः ।

प्रकाशः

तत्तुच्छम् । गन्धसमानाधिकरणमात्रप्रकारकत्वं हि गन्धासमानाधिकरणाप्रकारकत्वे सति गन्धसमानाधिकरणप्रकारकत्वमेव । तथा च व्यर्थविशेष्यत्वमेव । सत्यन्तमात्रस्य विवक्षितत्वे प्रथमहेत्वविशेषः । विशेष्यभागमात्रस्य विवक्षितत्वे भ्रमसंशयादौ व्यभिचार इति । तेनेति । गन्धासमानाधिकरणाप्रकारकेति विशेषणेनेत्यर्थः । निश्चयत्वं वेति । तद्विशेषणं विहाय संशयव्यवच्छेदार्थं ज्ञानत्वस्थाने

न्यायशिखामणिः

जरत्पक्षधरमतमाह—यत्त्विति । नन्वेवं [1]पृथिव्यां पृथिवी जलं वेति संशये व्यभिचारः [2]स्यादित्यत आह—मात्रपदेति । वयं तु ब्रूमः । प्रकारावच्छिन्नत्वान्तर्भावानन्तर्भावाभ्यामिह साध्यद्वयमभिमतम् । हेतुश्च गन्धासमानाधिकरणाप्रकारकविषयताप्रतियोगिज्ञानत्वादित्येकः । गन्धसमानाधिकरण[3]प्रकारसमानाधिकरणविषयताप्रतियोगिज्ञानत्वादित्यपर इति हेतुद्वयमपि विवक्षितम् । तत्र च प्रथमसाध्ये प्रथमो हेतुः द्वितीये द्वितीय इति विवक्षितत्वेन पृथिवीविशेष्यकजलत्वभ्रमसंशययोः [4]साध्यसत्त्वात् जलविशेष्यकपृथिवीत्वप्रकारकयोस्तयोर्द्वितीयहेत्वभावान्न तत्र [5]तस्य व्यभिचारः । एवं च निश्चयत्वं वेति मूलं द्वितीयहेत्वभिप्रायम् । तत्र च गन्धसमानाधिकरणेत्यादि यथाश्रुतमेव साधु । परस्परविरुद्धाप्रकारकपरेण निश्चयपदेनैवोक्तदोषनिरासादिति दिक् ।

ननु निश्चयत्वविशेषणस्य पूर्वप्रतीकेन समुच्चये तेनैव संशयस्य व्यवच्छेदे पूर्वप्रतीकवैयर्थ्यम् । विकल्पे च गन्धासमानाधिकरणाप्रकारकत्वस्थाने तदुपादाने [6]विषयताया निश्चयत्वाभावाद्धेत्वसिद्धिरित्यत आह—तद्विशेषणमिति ।

उपाध्यायमतमाह—केचित्त्विति । अत्र साध्ये पृथिवीत्वासामानाधिकरण्यं तदनधिकरणाधिकरणत्वं विवक्षितम् । यदंशे हेतुः तदंशे वा साध्यं

1. ख. पृथिव्याः
2. ख. 'स्यादित्यत आह...ज्ञानत्वादित्येकः' इति ग्रन्थो नास्ति ।
3. ग. 'प्रकारसमानाधिकरण' इति नास्ति ।
4. क. साध्यत्वात्
5. ग. 'तस्य' नास्ति ।
6. ख. विषयतया

शीता पृथिवीत्यनुभवः पृथिव्यंशे प्रमैव । प्रमाभ्रमरूपे च समूहालम्बने न व्यभिचारः । अंशे तस्यापि प्रमात्वात् , विशेष्यभेदेन विषयताभेदाच्च । न च प्रकारभेदेन विषयताभेदः मानाभावात् ।

---

### प्रकाशः

निश्चयत्वं वा देयमित्यर्थः । न चैवमपि [1]भ्रमव्यवच्छेदः कथमिति वाच्यम् । परस्पर[2]विरुद्धप्रकारकपरनिश्चयपदेन तस्यापि व्यवच्छेदात् ।

केचित्तु गन्धसमानाधिकरणः प्रकारो यत्र सामानाधिकरण्येन संबन्धेनास्ति तादृशविषयताप्रतियोगिनिश्चयत्वादिति विवक्षितम् । अतो भ्रमव्यवच्छेद इत्याहुः ।

ननु प्रकारभेदेन विषयताभेदात् पृथिवीत्वमात्रप्रकारकविषयतामादाय शीता पृथिवीत्यनुभवे गन्धासमानाधिकरणेत्यादिसत्त्वाद्व्यभिचार इत्याशङ्क्य निराकरोति—शीतेति । तथा च पृथिव्यंशे साध्यमप्यस्ति । शीतत्वांशे साध्यासत्त्वेऽपि हेतुरेव तत्र नास्तीति न व्यभिचारः । प्रमाभ्रमेति । जलपृथिव्यो रिमे पृथिव्याविति समूहालम्बन इत्यर्थः । इदं च शीता पृथिवीत्यनुभवे प्रकारभेदेन विषयताभेदाभ्युपगमेन हेतुसत्त्वमभ्युपेत्य समाहितम् । वस्तुतस्तु न प्रकारभेदेन विषयताभेदः, मानाभावात् । किंतु विशेष्यभेदेनैव । तथा च तत्र शीतत्वपृथिवीत्वोभयप्रकारावच्छिन्ना एकैव विषयतेत्युक्तहेतोस्तत्रागमनान्न व्यभिचार इत्याह—विशेष्यभेदेनेत्यादि ।

---

### न्यायशिखामणिः

विवक्षितमिति गगनवान् पाकजरूपवांश्चेति घटविशेष्यकभ्रमे पृथिव्यां जलमिति [3]भ्रमे गन्धसमानाधिकरणेदंत्वसमानाधिकरणविषयताके च न व्यभिचार इति भावः ।

तथाप्यंशविवक्षयैव संशयव्यवच्छेदेन निश्चयपदवैयर्थ्यमित्यस्वरसं सूचयति —आहुरिति । ननु प्रमुष्टतत्ताकपृथिवीत्वप्रकारकजलपृथिवीविशेष्यकसमूहालम्बने साध्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह—[4](जल इति) [जलेति] ।

---

1. ख. भ्रमाद्यवच्छेदः
2. ०विरुद्धप्रकारक-
3. क. 'भ्रमे' नास्ति ।
4. क. भ्रम इति ।
ग. घ. इमे इति ।

यत्तु इयं पृथिवीत्यनुभवः पृथिवीत्वसमानाधिकरणधर्मावच्छिन्न-पृथिवीविशेष्यकविषयताकः, पृथिवीत्वव्यधिकरणधर्मानवच्छिन्नपृथिवीविशे-ष्यकविषयताकः, पृथिव्यवृत्तिधर्मानवच्छिन्नपृथिवीवृत्तिविषयताको वा, गन्धासमानाधिकरणधर्माप्रकारकविषयताप्रतियोगिज्ञानत्वात्, अगन्धवद-वृत्तिपृथिवीत्वप्रकारकविषयताकत्वात्, गन्धसमानाधिकरणविषयताप्रतियो-गिज्ञानत्वाद्वेति। तन्न। साध्याप्रसिद्धेः। किं त्वर्थादेव तत्सिध्यति।

---

प्रकाशः

भास्करमतमाह—यत्त्विति। गन्धासमानाधिकरणेति। असमानाधि-करण्यं तदधिकरणानधिकरणत्वम्। धर्मत्वं च न विवक्षितम्। तेन गगने गगन-त्वमिति ज्ञाने न व्यभिचारः। [1]सप्रकारकत्वेन विषयताविशेषणाच्च निर्विकल्पके न व्यभिचार इति ध्येयम्। अग्रिमहेतावपि पृथिवीत्वप्रकारकत्वपदं निर्विकल्पके व्यभिचारवारणाय। किं त्वर्थादिति। अत्रापीदं चिन्त्यम्—साध्याप्रसिद्धावर्थादपि नैतत्प्रामाण्यसिद्धिः। [2]अथ कथंचित्प्रसिद्धौ प्रथमत एवोक्तहेतुभिरेव तत्साध्य-सिद्धावविरोध इति।

---

न्यायशिखामणिः

ननु [3]विशेष्यभेदेन [4]विषयताभेदेऽप्यंशविवक्षां विनोक्तसमूहालम्बने [5]व्यभिचारानि-रासेन तत्र परिहारान्तरानुपपत्तिरित्यत आह—इदं चेति।

कथं तर्हि प्रामाण्यसिद्धिरित्याशङ्कायां पूर्वोक्तव्यतिरेक्यनुमानादित्युक्तं किं त्वर्थादिति। तदपि न सार्वत्रिकमित्याह—अत्रेति। कथंचिदिति। प्राग्भवीय-संस्कारादिनेत्यर्थः। [6]प्रथमत इति। [7]अत्राप्रामाण्याभावानुमानात् प्रागेवेत्यर्थः। उक्तेति। प्रामाण्यव्याप्तिग्रहदशायामिति शेषः। तथा च [8]प्रामाण्यसिद्धावप्युक्त-हेतौ यदा न तद्व्याप्यत्वग्रहः किं त्वप्रामाण्याभावव्याप्यत्वग्रहस्तदैवोक्तः प्रकार [9]इत्युक्तं न विस्मर्तव्यम्। यत्प्रकाराव्याप्यं यत् [10]तद्वद्विशेष्यकत्वे सति तत्प्रकारक-

---

1. क. सप्रकारत्वेन
2. ख. 'अथ' नास्ति।
3. ख. घ. विशेष्यकभेदेन
4. क. विषयभेदे
5. क. ग. व्यभिचारनिरासेन
6. ख. प्रथम इति।
7. ग. अत्रापि प्रामाण्या-
8. ख. प्रामाण्यासिद्धा-
9. ख. इत्युक्तत्वं न
10. क. तद्विशेष्य-

एवं यत्प्रकारव्याप्यतया यद्गन्धस्नेहसमर्थप्रवृत्तिजनकत्वकरचरणादिकमवगतं तद्वति तत्प्रकारकज्ञानत्वमेव प्रामाण्ये लिङ्गम् ।

ननु वह्निज्ञानस्य दाहसमर्थविषयत्वं न दाहसमर्थोऽयमिति व्यवसायगम्यम्, ज्ञानविषयतयोस्तदविषयत्वात् । नापि तदनुव्यवसायगम्यम्, पुरोवर्तिदाहसामर्थ्यस्य तदगोचरत्वात् । व्यवसायोपनीतदाहसामर्थ्यस्य च भाने तदसामर्थ्यात् । अन्यथा व्यवसायोपनीतस्य पुरोवर्तिनि वह्नित्वस्यानुव्यवसायविषयत्वे स्वतः प्रामाण्यग्रहापत्तेः । एवं पृथिवीजलज्ञानयोर्गन्धस्नेहवद्विषयकत्वग्रहोऽप्यनुपपन्न इति ।

उच्यते । वह्नित्वप्रकारकज्ञानानुव्यवसाये सति तत्र विषये दाहसामर्थ्यज्ञानानन्तरं तत्स्मृत्युपनीते वह्निव्यवसाये स्मृत्युपनीतदाहसमर्थविषयकत्वम् । एवं जलपृथिवीज्ञानयोः स्मृत्युपनीतयोः ज्ञानोपनीतस्नेहगन्धवद्विषयकत्वं मनसा परिच्छिद्यते । गन्धादिमत्येव मम पृथिवीत्वाद्यनुभव इति गन्धादिमत्त्वपरिच्छेदानन्तरमनुभवात् । स्मृत्युपनीते धूमादौ व्याप्तिपरिच्छेदवत् चक्षुषा चन्दने सौरभज्ञानवच्च ।

---

प्रकाशः

उक्तरीत्या अन्यत्रापि प्रामाण्यानुमानमित्याह—एवमिति ।

---

न्यायशिखामणिः

[1]ज्ञानत्वमप्रामाण्याभावे लिङ्गमिति प्रकारो निरूपितः । स एव मूले एवमित्यनेनान्यत्राप्यतिदिष्टः । तावता अभावरूपप्रामाण्यानुमानप्रकारस्यानतिदेशात् प्रकृतासंगतिरित्याशङ्क्य, तदेव सिध्यत् पक्षधर्मताबलेन तद्वति तत्प्रकारक[2]ज्ञानत्वमादाय सिध्यति । अर्थाद्वेत्युक्त[3]प्रामाण्यसिद्धिप्रकारस्यैवायमतिदेश इत्याह—उक्तरीत्येति । प्रामाण्यज्ञानप्रामाण्ये लिङ्गाभावान्मनसैव तद्ग्रह [4]इत्यन्यत्रापि तथेत्याशङ्क्य; समर्थप्रवृत्तिजनकत्वं [5]प्रामाण्यस्य व्याप्यमिति तद्वति [6]प्रामाण्यप्रकारकत्वस्य तत्र लिङ्गत्वमित्यभिप्रायेण मणौ समर्थप्रवृत्तिजनकत्वनिर्देश इति द्रष्टव्यम् ।

---

1. ख. ज्ञानत्वं प्रामाण्या-
2. ग. ॰ज्ञानमादाय
3. ग. 'प्रामाण्य' नास्ति ।
4. घ. इत्यत्रापि
5. ख. प्रामाण्यव्याप्य-
6. क. प्रामाण्यप्रामाण्यप्रकारकत्वस्य

तर्हि पृथिवीत्वज्ञाने गन्धवद्विशेष्यकत्ववत् चक्षुषा गन्धवति पृथिवीत्वोपनयानन्तरमियं पृथिवीति पृथिवीत्वप्रकारकानुभवे उपनीते पृथिवीत्ववति पृथिवीत्वप्रकारकत्वम् । तथा तत्रैव ज्ञाने घटत्वप्रकारकताविरहवत् पृथिव्यवृत्तिप्रकाराभाववत्त्वं विशेष्यावृत्तिप्रकाराभाववत्त्वं वा प्रामाण्यं मनसैव परिच्छिद्यतामिति स्वत एव प्रामाण्यग्रह इति चेत्—न । ज्ञानान्तरोपस्थापितज्ञानवृत्तिप्रामाण्यग्रहे परतस्त्वानपायात् ।

---

### प्रकाशः

ज्ञानान्तरोपस्थापितेति । अत्रेदं चिन्त्यम् । ज्ञानान्तरोपस्थापितं तद्वत्त्वं मनसा स्वातन्त्र्येण गृह्यत इति तवाप्यनुमतम् । अन्यथा ततः प्रामाण्यग्रहस्यासंभवात् । एवं व्यवसायोपनीततद्वत्त्वमनुव्यवसायेन तथा ग्राह्यमेव । न हि ज्ञानान्तरोपस्थित एव ज्ञाने मनसा प्रामाण्यग्रहो न तु योग्ये संनिकृष्टे तस्मिन्नित्यत्र मानमस्ति । न हीन्द्रियस्यायं स्वभावः यदुपनीतमुपनीतवृत्तितयैव गृह्णाति । तथा सति सुरभि चन्दनमिति चाक्षुषज्ञानानुपपत्तेः । मनसस्तथा स्वभाव इत्यपि नास्ति, मानाभावात् अहं गौर इति प्रत्ययाच्च । न चायं चाक्षुष एव, आत्मविशेष्यकत्वानुपपत्तेः । निमीलिताक्षस्यापि तत्संभवाच्च । न च संशयानुपपत्त्या स्वभावान्तरकल्पनम् । तस्या निराकृतत्वात् । तथा च कथं न परतस्त्वापाय इति ।

---

### न्यायशिखामणिः

ज्ञानान्तरोपस्थिते व्यवसाये ज्ञानान्तरोपनीततद्वत्त्वघटितं प्रामाण्यं मनसा गृह्यत इत्युक्तम् । तद्दूषयति—अत्रेति । किं ज्ञानान्तरोपनीततद्वत्त्वस्य मनसा ग्रहमात्रम् , उत स्वातन्त्र्येण । आद्य आह—ज्ञानान्तरेति । अन्त्ये त्वाह—एवमिति । तथेति । स्वातन्त्र्येणेत्यर्थः । स्वातन्त्र्येण ग्रहे उपनीतत्वस्यैव लाघवेन प्रयोजकत्वादिति भावः ।

तथाप्यनुव्यवसायात् प्राक् व्यवसायस्यानुपनीतत्वात् न तथा प्रामाण्यग्रहः, उपनीत एवोपनीतग्रहादित्याशङ्क्य, किमेष नियमः प्रकृताभिप्रायेण उतोपनीतग्रहमात्रे । आद्य आह—न हीति । द्वितीयेऽपि किमैन्द्रियकोपनीतग्रहेऽयं नियमो मानसे वा । तत्राद्यं निराकृत्यान्त्यं निरस्यति—मनस इति । ननु स देवदत्तो

यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम्, यावत्स्वाश्रयग्राहकग्राह्यत्वम्, तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानग्राह्यत्वं वा स्वतस्त्वम्। तदन्यथाग्राह्यत्वं तु परतस्त्वम्। मनसा चैवं प्रामाण्यग्रहस्याभ्युपगमे तज्ज्ञानविषयकजन्यज्ञानजन्यज्ञानग्राह्यत्वान्न परतस्त्वहानिः। व्यतिरेकयनन्तरं

---

**प्रकाशः**

अपि च मनसा चैवं प्रामाण्यग्रहे परतस्त्वोपपादनेऽपि किमिति प्राग्भवीयसंस्कारानुसरणम् अप्रामाण्याभावानुमानानुसरणं वेति तन्नोपपादितमिति।

**तज्ज्ञानेति**। अत्र जन्यपदद्वयं स्वमतेन। परमतेन व्यावर्त्याप्रसिद्धेः। अत एव पूर्वं तथैव कृतमिति। 'मनसा चैवं प्रामाण्यग्रहस्य तज्ज्ञानविषयकजन्य-

---

**न्यायशिखामणिः**

गौर इत्युपनीत[1]गौरत्वप्रत्ययस्योपनीतदेवदत्ते दर्शनात्तथा नियम इत्यत आह—**अहमिति**। ननु शरीरे गौरत्वप्रत्ययो न त्वात्मनीत्यत आह—**निमीलितेति**। ननु संशयानुपपत्त्या [2]प्रकृतप्रामाण्यग्रह एव [3]तादृशनियमकल्पनम्, न तु सर्वत्रेत्याशङ्क्य निरस्यति—**न चेति**।

ननु प्रामाण्यसंशयानुपपत्त्या प्रकृत एव तादृशनियमकल्पनम्, संशयोपपादकयुक्तेरस्माभिर्निराकृतत्वादित्यरुचेराह—**अपि चेति**। **तन्नोपपादितमिति**। अत्र ब्रूमः—दाहसमर्थ एव वह्नित्वानुभवो मम वृत्त इत्यनुभवबलात् ज्ञानान्तरापनीतवह्निव्यवसाये ज्ञानान्तरोपनीतदाहसामर्थ्यवद्विशेष्यकत्वस्य स्वातन्त्र्येण ग्रहे मनसः सामर्थ्यकल्पनेऽपि वह्नावेव [4]वह्नित्वानुभवो वृत्त इत्यनुभवाभावात् तत्र तस्य तथा ग्रहे मनसः सामर्थ्यं न कल्प्यते। अस्तु वा तत्रापि तथानुभवः। तथापि वह्नित्वप्रकारक[5]त्वावच्छेदेन वह्नित्ववद्विशेष्यकत्वमेव प्रामाण्यम्। अन्यथा वह्निगुञ्जापुञ्जयोर्गुञ्जापुञ्जवह्नी इति समूहालम्बनभ्रमस्यापि प्रामाण्यापत्तेः। तथा च पुरोवर्तिनि वह्नित्ववैशिष्ट्यस्य स्वातन्त्र्येण ग्रहेऽपि तत्र [6]तदवच्छेदकत्वाग्रहात् न प्रामाण्यग्रहः।

---

1. ग. 'गौरत्व' नास्ति।
2. ख. 'प्रकृत' नास्ति।
3. ग. तथा नियम-
4. क. वह्नित्वप्रकारकानुभवो
5. क. °त्वावच्छेदकवह्नित्व-
6. ग. तदवच्छेदकाग्रहात्

तज्जातीयत्वेनान्वयिना ग्राह्यत्वान्न प्रामाण्यानुमानम् । यथा इदं शरीरज्ञानं प्रमा करचरणवति शरीरज्ञानत्वात् स्वशरीरज्ञानवत् । न च करचरणान्तरवति करचरणान्तरवत्त्वज्ञाने व्यभिचारः, शरीरांशे तस्य प्रमात्वात् ।

एतेन करचरणवति शरीरज्ञानत्वादित्यत्र करचरणवत्त्वं नोपलक्षणम्, व्यावृत्तोपलक्ष्याभावात् । न च विषयतया ज्ञानविशेषणम्, करचरणवत्त्वप्रकारकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरमिति ज्ञाने तदसिद्धेश्च । विषयविशेषणत्वे करचरणवद्विषयकशरीज्ञानत्वस्य व्यभिचारात् । शरीरभ्रमस्यापि वस्तुतः करादिमद्विषयकत्वात् । नापि करचरणादिशून्ये यच्छरीरत्वेन ज्ञानं तदन्यत्वे सतीति विवक्षितम् । शून्य इत्यत्र विषयत्वं सप्त-

---

**प्रकाशः**

ज्ञानजन्यत्वान्न परतस्त्वहानिः' इति युक्तः पाठः । अन्यादृशस्त्वयुक्त इत्याहुः । उदाहरति—यथेति । प्रमा - शरीरत्ववति शरीरत्वप्रकारकमित्यर्थः । शरीरांश इति । शरीरत्ववतीत्यादिसाध्यसत्त्वादित्यर्थः ।

---

**न्यायशिखामणिः**

न चैवं मनसा चैवमिति ग्रन्थविरोधः । तस्यावच्छेदकत्वाघटितप्रामाण्यपरत्वात् अभ्युपगमवादत्वाद्वा । अत एव क्वचिद्ग्रन्थे प्रामाण्यग्रहेऽपीत्यपिशब्दः । [1]एवं च अपि चेत्यादिदूषणं निरवकाशमिति दिक् ।

अत एवेति । [2]जन्यपदानन्तर्भावेणैव विप्रतिपत्तौ स्वतस्त्वसाध्यं व्याकृतमित्यर्थः । अन्यादृश इति । 'मनसा चैवं प्रामाण्यग्रहेऽपि प्रामाण्यस्य तज्ज्ञानविषयकजन्यज्ञान[3]अन्यज्ञानग्राह्यत्वा'दिति पाठो न युक्तः । परैरपि तस्य तादृशानुमितिग्राह्यत्वाभ्युपगमादिति भावः । ज्ञानमात्रस्य [4]धर्म्यंशे प्रमात्वेन ज्ञानत्वस्यैव हेतुत्वे शेषवैयर्थ्यं स्यादित्यत आह—[5]शरीरत्ववतीति । करचरणवच्छरीरमिति ज्ञानमेव पक्ष इत्यत आह—शरीरत्वेति ।

---

1. ख. 'एवं च······व्याकृतमित्यर्थः' इति ग्रन्थो नास्ति ।
2. ग. अन्यपदा-
3. ख. 'जन्यज्ञान' नास्ति ।
4. ख. धर्मांशे
5. क. शरीरत्वेनेति
ग. शरीरत्वापत्तीति

म्यर्थ इति करचरणशून्यविषयकशरीरज्ञानान्यशरीरज्ञानत्वादित्यर्थः। तथा चासिद्धिः। शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयकत्वनियमात्। न वा करचरणशून्ये यच्छरीरत्वेन ज्ञानं न भवतीति विवक्षितम्। तृतीयार्थस्य विषयत्वे उक्तदोषात् अन्यस्यासंभवादिति निरस्तम्।

करचरणवद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वस्य हेतुत्वात्। शरीरभ्रमे च करचरणवतः शरीरस्य विशेषणत्वात्। विषयतापक्षे करचरणादिशून्यनिष्ठशरीरत्वप्रकारकविषयताप्रतियोगित्वशून्यत्वे सति शरीरज्ञानत्वादिति हेतुः।

ननु नान्यगृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपम् अनवस्थानात्। नापि स्वज्ञायमानप्रामाण्यम्, स्वतःप्रामाण्यग्रहापत्तेः। अतोऽगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चयरूपमास्थेयम्। तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु। किं विषयनिश्चयार्थं तत्प्रामाण्यनिश्चयेन। अथ व्यवसायस्याप्रामाण्यदर्शनान्न तन्मात्रादर्थनिश्चयः। तर्हि प्रामाण्यानुमितेरप्यप्रामाण्यदर्शनान्न ततोऽपि प्रामाण्यनिश्चय इति चेत्—न ब्रूमो ज्ञानप्रामाण्यनिश्चयादेवार्थनिश्चय इति। किं तु

---

प्रकाशः

एतेनेति। निरस्तमित्यन्वयः। व्यावृत्तेति। शरीरज्ञानत्वं भ्रमसाधारणम्। शरीरविशेष्यकज्ञानत्वं च प्रामाण्यरूपं साध्यमेव। अन्यच्च दुर्वचमित्यर्थः। शरीरमिति। शरीरत्वमात्रप्रकारकज्ञानं पक्षः। तत्र करादिमत्त्वप्रकारकज्ञानत्वमसिद्धमित्यर्थः। विषयत्वमिति। विशेष्यत्वं न सप्तम्यर्थः, तथा अभियुक्तानुशासनाभावादित्याशयः। ननु करचरण[1]शून्याविषयकशरीरज्ञानत्वादिति हेतुः। तथा च नासिद्धिः, शरीरत्वांशे [2]शरीरत्वप्रकारकत्वाभावादित्याह—न वेति।

---

न्यायशिखामणिः

लाघवेन करादिमद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वमेव पक्षतावच्छेदकम्, न तु करादिमत्त्वप्रकारकत्वमपि प्रवेश्यम्, गौरवात्। तथा च शरीरत्वमात्रप्रकारकज्ञानमपि पक्ष इति भागासिद्धिरित्यर्थः।

---

1. ख. °शून्यविषयक°    2. ख. शरीरप्रकारक°

यत्राप्रामाण्यशङ्का नास्ति करतलामलकादिज्ञाने तत्र व्यवसाय एवार्थनिश्चय इति तत एव प्रवृत्तिर्निष्कम्पा। यत्रानभ्यासदशायां प्रामाण्यसंशयेनार्थनिश्चयं परिभूयार्थसंशयः तत्र प्रामाण्यनिश्चयाधीनज्ञानादर्थं निश्चित्य निष्कम्पं प्रवर्तते नान्यथेति सर्वानुभवसिद्धम्।

अत एवागृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति। अप्रामाण्यशङ्काकलङ्काभावात्। यत्र तु प्रामाण्यज्ञाने अप्रामाण्यशङ्कया प्रामाण्यसंशयस्तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः। एवं यावदप्रामाण्यशङ्कं तज्ज्ञानप्रामाण्यनिश्चयादेव तन्निश्चयः। न चैवमनवस्था। चरमज्ञानप्रामाण्य(ज्ञानज्ञान)स्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसंचारेण वा प्रामाण्यसंशयानवश्यंभावात्।

अन्यथा भट्टमते प्रामाण्यस्य ज्ञानानुमितिग्राह्यत्वेनानवस्था स्यात्। गुरुमतेऽपि प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यम्, स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वात्, परग्राह्यत्वेऽनवस्थानात्। किं तु परिशेषानुमानेन प्रमाणान्तरेण वा ग्राह्यम्। तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनैवेत्यनवस्थैव।

---

प्रकाशः

फलमुखीमनवस्थां निराकरोति—अत एवेति। यतोऽप्रामाण्यशङ्काशून्यमेव ज्ञानं स्वार्थनिश्चायकमित्यर्थः।

अन्यथेति। यदि प्रामाण्यज्ञानेन प्रामाण्यसंशय आवश्यक इत्यर्थः। भट्टपक्ष इत्युपलक्षणम्। [1]मिश्रपक्षेऽपीति द्रष्टव्यम्। गुरुमतेऽपीति। यदि प्रामाण्यस्य स्वग्राह्यत्वावधारणं न प्रवृत्त्युपयोगीति तस्यावश्यवेद्यत्वाभावात् प्रामाण्य-

---

न्यायशिखामणिः

नन्वित्यादिना [2]अनवस्थाया आशङ्क्य निराकरिष्यमाणत्वात् अत इत्यनुपपत्तिरित्यत आह—फलेति। गुरुमत इत्यादिना तन्मतेऽप्यनवस्थेत्युक्तम्।

---

1. क. मिश्रमते  2. क. ग. अव्यवस्थायाः

यत्तु व्यवसायस्य प्रामाण्यनिश्चयादेव प्रवृत्तेर्न तस्यापि प्रामाण्यानुसरणमिति नानवस्था । न च प्रामाण्यसंशयादौचित्यावर्जितो विषयसंशय इति वाच्यम् । निश्चिते संशयाभावात् । अन्यथा स्वतो ग्रहेऽपि तत्संशयेऽनवस्थेति ।

तदसत् । यदि प्रामाण्यसंशयान्न विषये संशयो निश्चितत्वात् तदा विषयनिश्चयार्थं प्रामाण्यनिश्चयो व्यर्थः । प्राथमिकविषयनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेः ।

न हि विषयसंशयमनादृत्य प्रामाण्यनिश्चयः प्रवृत्तिहेतुरित्युक्तम् । अन्यसंशयादन्यत्र निश्चिते कथं संशय इति चेत्—अनुभवं पृच्छ । येन

प्रकाशः

त्वावच्छेदेनैव [1]स्वग्राह्यत्वाभावावधारणात् उत्तरोत्तरप्रामाण्ये [2]स्वाश्रयग्राह्यत्वानुमानानुसरणानवश्यंभावाच्च त्वन्मते [3]नानवस्था तदा ममाप्युत्तरोत्तरसकलज्ञानस्य प्रामाण्यावधारणं न प्रवृत्त्युपयोगीति तस्यावश्यवेद्यत्वाभावात् सामान्यलक्षणया प्रथमत एव सकलप्रामाण्यावधारणात् उत्तरोत्तरज्ञानप्रामाण्यनिश्चयानुसरणानवश्यंभावाद्वा नानवस्थेति तुल्यमिति भावः ।

अनादृत्य—अनवधूय । निश्चितेऽपि विषये ज्ञानविषयत्वरूपसमानधर्मादेव संशयोऽस्तु क्लृप्तत्वात् न तु प्रामाण्यसंशयादित्यत आह—ज्ञानेति । तदपि प्रामाण्यसंशयसहायमेव तत्र संशायकम् । अन्यथा सदैव तत्र संशयापत्तेरित्यर्थः ।

न्यायशिखामणिः

सा च तन्मते यदि [4]परिह्रियेत तदा सुपरिहरा सा न्यायमतेऽपीत्याह—यदीत्यादिना ।

किं प्रवृत्त्यर्थं स्वग्राह्यत्वावधारणं स्वतस्त्वसिद्ध्यर्थं वा । आद्यं निराकृत्यान्त्यं निराचष्टे—प्रामाण्यत्वेति । ननु विषयसंशयानादर[5]प्रतिषेधेन तस्यापि प्रवृत्ति-

1. ख. स्वग्राह्यत्वावधारणात्
2. ख. स्वग्राह्यत्वानु-
3. ख. नोनवस्था
4. ग. परिगृह्येत
5. ख. घ. प्रतिषेधेऽपि

स्वसाक्षिकमेव प्रामाण्यसंशयस्य विषयसंशयहेतुत्वमनुमतम् । ज्ञानविषयत्वमपि प्रामाण्यसंशयमासाद्य विषयसंशायकम् ।

---

**प्रकाशः**

ननु किं [1]प्रामाण्यग्रहेण, पुरोवर्तिनि करादिमत्त्वेन गृहीते विशेषदर्शनादेव संशयाभावः । तदग्रहे करादिमति पुरुषज्ञानत्वादेर्लिङ्गस्याग्रहात् कथं प्रामाण्यग्रहः । कथं वा विशेषदर्शनं विना तस्मिन् संशयोत्तरपुरुषप्रत्यक्षं जायेत, तस्य तद्धेतुकत्वादिति चेत्—

अत्र वदन्ति । [2]यत्रापि हि पुरुषत्वादिव्याप्यत्वेन गृह्यमाणं करादि पुरोवर्तिनि गृह्यते [3]तत्र विनैव तज्ज्ञानप्रामाण्यग्रहं विशेषदर्शनादेव पुरुषत्वादिनिश्चयः । यत्र तु पुरोवर्तिनिष्ठतया गृह्यमाणे करादौ पुरुषत्वादिव्याप्तिग्रहं विनैव प्रथमोत्पन्नपुरुषादिज्ञान एव करादिमति पुरुषज्ञानत्वादिकं पुरुषादिप्रमात्वव्याप्य·

---

**न्यायशिखामणिः**

सहकारित्वं स्यादित्यत आह—**अनवधूयेति** । प्रामाण्य[4]संशयं सहकारिणमासाद्य ज्ञानविषयत्वं विषयसंशयहेतुरित्ययुक्तम् । तत्सहकारित्वे प्रमाणाभावादित्याशङ्कय तस्यासार्वत्रिकत्वादित्यत्रोक्तं प्रमाणं स्मारयति—**तदपीति** । यथा च प्रामाण्यसंशयस्य विशेष[5]दर्शनोत्तेजकतया नान्यथासिद्धिस्तथोक्तमधस्तात् ।

'न हि विषयसंशयमनाहत्ये'त्यादिना विषयसंशयनिवृत्तिद्वारा प्रामाण्यनिश्चयः प्रवृत्तिहेतुरित्युक्तम् । तदाक्षिपति—**नन्विति** । किं प्रामाण्यग्रहेण साक्षात्प्रवृत्तिर्जन्यते उत संशयनिवृत्तिद्वारेति किंशब्दार्थः । आद्ये संशयाभावे सति तद्विलम्बेन प्रवृत्तिविलम्बः स्यादित्यभिप्रेत्य द्वितीय आह—**पुरोवर्तिनीति** । **लिङ्गस्य**—प्रामाण्यलिङ्गस्य । ननु करादेः पुरुषत्व[6]व्याप्यत्वाग्रहेऽपि पुरोवर्तिनि तद्ग्रहमात्रेण लिङ्गग्रहसंभवात् भवति प्रामाण्यग्रह इत्यत आह—**कथं वेति** । **विशेषेति** । व्याप्यत्वप्रकारकदर्शनं विनेत्यर्थः । ततश्चावश्यकविशेषदर्शनादेव संशयनिवृत्तिरिति भावः ।

---

1. ख. प्रामाण्याग्रहेण
2. ख. तत्रापि यत्र पुरुष-
3. क. तत्र ग्रहे विशेषदर्शनादेव पुरुषत्वं विनैव तज्ज्ञानप्रामाण्यम् । यत्र तु
4. ख. घ. संशयसह-
5. ख. घ. ०दर्शनोत्तेजनकतया
6. ग. व्याप्यताग्रहे

ननु लिङ्गपक्षव्याप्त्यादीनां ज्ञानस्य प्रामाण्यावधारणेऽनवस्था, अनवधारणे हेत्वसिद्धिः। अथ लिङ्गादिज्ञानं स्वविषयावधारणे कर्तव्ये स्वप्रामाण्यज्ञानं नापेक्षते, अनुमानमात्रोच्छेदप्रसङ्गात्। लिङ्गादिनिश्चयस्य

प्रकाशः

तया गृह्यते तत्र तज्ज्ञानप्रामाण्यनिश्चयानन्तरं [1]पुरुषत्वादिनिश्चयः। न च व्याप्यवति व्यापकज्ञानत्वमगृहीत्वा विपक्षबाधकाभावेन प्रामाण्यव्याप्तिरेव न गृह्यत इति वाच्यम्। शब्दादिनापि व्याप्तिग्रहसंभवात् [2]विपक्षे बाधकान्तरस्यापि संभवाच्च।

न्यायशिखामणिः

उपाध्याय[3]समाधिमाह—अत्रेति। यत्र व्याप्यत्वेन करादिग्रहः तत्र किं [4]प्रामाण्यग्रहवैयर्थ्यम्, यत्र स्वरूपतस्तद्ग्रहस्तत्र वा। आद्ये इष्टापत्तिरित्यभिधाय द्वितीय आह—यत्र त्विति। अत्र जयदेवोक्तदोषमाशङ्क्य निराकरोति—न चेति। शब्दादिनेति। यद्यपि सर्वत्र शब्दाभावेन यत्र प्रत्यक्षेण व्याप्तिग्रहस्तत्र विपक्षे बाधकापेक्षा, तथापि यावदाशङ्कं तर्कानुसरणमिति निवर्तनीयशङ्काविरहे प्रत्यक्षेऽपि [5]न तदपेक्षेति भावः।

यत्र शङ्का तत्रापि नोक्ततर्कापेक्षा[6]नियमः निरुपाधित्वभङ्गेनापि तर्केण तन्निवृत्तिसंभवादित्याह—विपक्ष इति। एतच्चापाततः—उक्ततर्काभावे ततः पक्षेतरत्वादेरुपाधित्वसंभवेन निरुपाधित्वभङ्गापादनस्यानिष्टप्रसङ्गत्वाभावात् एतत्तर्कानवतारदशायामाशङ्कानिवृत्त्यर्थमुक्ततर्कानुसरणावश्यंभावेन तत्र प्रामाण्यनिश्चयवैयर्थ्यतादवस्थ्याच्च।

परमार्थतस्तु—पुरुषत्वव्याप्यकरादिमानयं [7]पुरुष [8]इत्युत्तरप्रत्यक्षे सत्यपि पुरुषत्वांशे प्रामाण्यसंशयाद्विषयसंशयस्यानुभवसिद्धत्वेन प्रामाण्यनिश्चयेनैव तत्संशयनिवृत्तिरिति व्याप्यत्वेन पुरोवर्तिनि करादिग्रहेऽपि न तद्वैयर्थ्यम्। न च प्रामाण्यनिश्चयस्य समानप्रकारकसमानविशेष्यकत्वाभावात् कथं तन्निवर्तकत्वम्।

1. क. पुरुषादि-
2. ख. विपक्षबाधकान्तराभावस्यापि
3. ग. ०मतमाह
4. ख. प्रमाणग्रह-
5. क. 'न' नास्ति।
6. ख. ग. घ. 'नियमः' नास्ति।
7. क. 'पुरुषः' नास्ति
8. ख. इत्युक्तप्रत्यक्षे

च स्वकारणाधीनस्य सर्वसिद्धत्वादिति चेत्—न। प्रामाण्यसंशयेन लिङ्गस्यापि संदेहात्। न हि न लिङ्गज्ञाने प्रामाण्यसंशयः, अविरोधादिति।

उच्यते। अप्रामाण्यशङ्काकलङ्काभावे लिङ्गादिज्ञानस्यैवार्थनिश्चायकत्वात्, तत्कलङ्के तूक्तैव गतिः।

यत्तु व्यवसाये क्वचिदप्रामाण्यशङ्का भवति क्वचिन्नेति त्वयापि वाच्यम्।

---

**प्रकाशः**

तदानीं पुरुषत्वादिप्रमाविषयत्वस्यैव पुरुषत्वादिव्याप्यस्य दर्शनात् नान्त्यदोष इति।

यत्त्विति। तत्त्वयापि वाच्यमिति संबन्धः। तथा च सर्वत्र नाप्रामाण्यशङ्का येनानवस्था[1]शङ्का स्यादिति भावः।

---

**न्यायशिखामणिः**

[2]अतादृशस्यापि निवर्तकत्वे व्यवसायस्यापि प्रामाण्यसंशयनिवर्तकत्वापत्तिरिति वाच्यम्। प्रामाण्यनिश्चये सति तत्संशयरूपकारणाभावात् न विषयसंशय इत्येतावता तस्य तन्निवर्तकत्वाभ्युपगमात्।

कथं वेत्युक्तदोषमुद्धरति—तदानीमिति। ननु पुरुषत्वादिप्रकारकप्रमाविशेष्यत्वस्य पुरुषत्वादिव्याप्यत्वेऽपि तत्त्वेन [3]तद्ग्रहनियमाभावात् उत्तरप्रत्यक्षानुपपत्तिरेवेति चेत्—न हि व्याप्यदर्शनस्य तत्र तत्त्वेन हेतुत्वम्, किं तु संशयविरोधि[4]दर्शनत्वादिना। अन्यथा नायं स्थाणुः इत्याप्तवाक्यात् स्थाणुत्वाभावावगतौ पुरुषप्रत्यक्षानुदयप्रसङ्गात्। तथा चास्य व्याप्यत्वप्रकारकत्वेऽपि विषयसंशयविरोधित्वेन तदुत्तरप्रत्यक्षहेतुत्वं न विरुद्धम्। एवं च पुरुषत्वव्याप्यकरादिदर्शनादिव तादृशप्रमाविषयत्वदर्शनादपि संशय[5]निवर्तकादुत्तरप्रत्यक्षोपपत्तिरिति नान्त्यदोषावकाश इति ग्रन्थार्थो बोध्यः।

तत्रादाध्याहारेण यत्त्वित्यादेरानर्थक्यं परिहृत्य तत्प्रयोजनमाह—तथा चेति।

---

1. ख. 'शङ्का' नास्ति।
2. क. ख. तादृश-
3. क. तद्ग्रहाभावात्
4. ग. °दर्शनत्वेन
5. ख. °निवर्तकत्वात्

एवं बहुवित्तव्ययायामसाध्ये स्वर्गसाधनं याग इति ज्ञानं न गृहीत-प्रामाण्यं प्रवर्तकम्, प्रामाण्यानुमितेः पूर्वमेव तस्य विनाशात्। किं तु तज्ज्ञानसमानविषयकमप्रामाण्यशङ्काशून्यं ज्ञानान्तरमेव।

नन्वेवं बहुवित्तव्ययायाससाध्ये निष्कम्पप्रवृत्तावनुपयोगित्वात् निष्फलं प्रामाण्यज्ञानमिति किं तदुपायानुसरणेनेति चेत्—न। स्वर्गसाधनं याग इति ज्ञानप्रामाण्ये निश्चिते तत्समानविषयकज्ञानान्तरे अप्रामाण्यशङ्का न भवतीति ज्ञानान्तरमगृहीतप्रामाण्यमपि स्वार्थनिश्चयरूपं निष्कम्पप्रवृत्तिं जनयतीत्यप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्य-ज्ञानमिति न निष्फलम्।

यत्त्वनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यग्रह इत्युक्तम्। तत् धूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यनियतमनुव्यवसायो-

---

प्रकाशः

तत्समानविषयकेति। ननु प्रथमज्ञाने प्रामाण्यनिश्चयेऽपि द्वितीयज्ञाने कथं नाप्रामाण्यशङ्का। तत्र विशेषदर्शनाभावात्। न ह्यन्यत्र धर्मिणि करादि-मत्त्वज्ञानेऽन्यत्रापि न पुरुषत्वसंशयोऽनुभवविरोधादिति चेत्—अत्र वदन्ति। द्वितीयज्ञानस्य यदि नानुव्यवसायस्तदा धर्मिज्ञानाभावादेव न [1]तत्राप्रामाण्य-संशयः। अनुव्यवसायश्चेत् तदा विशेषदर्शनादेव न तत्संशयः। तदनुव्यवसाये पूर्वज्ञाने गृहीतस्य प्रामाण्यस्योपनीतस्य भाननियमात्। न च तद्गतत्वेन पूर्व-मभानान्न तत्रोपनय इति वाच्यम्। यदवच्छेदेन हि यत्र यद्गृहीतं तद्ग्रहस्यै-वोपनयसामग्रीत्वात्। तथा च तद्विषयत्वावच्छेदेन पूर्वज्ञाने प्रामाण्यग्रहात् तद्विषयत्वेन [2]ज्ञाते द्वितीयज्ञाने तदुपनये बाधकाभाव एव।

---

न्यायशिखामणिः

जयदेवमतमाह—अत्रेति। तदुपनय इति। न च तत्रापि प्रामाण्यो-पनये अगृहीतप्रामाण्यमेव ज्ञानान्तरं प्रवर्तकमिति मूलविरोध इति वाच्यम्। [3]अनुमानागृहीतपरत्वात्।

---

1. ख. तत्र प्रामाण्य-
2. क. ज्ञाने
3. ग. अनुमानगृहीत-

पनीतम् । अतो विशेषदर्शनान्न तत्राप्रामाण्यशङ्केति प्रामाण्यनिश्चयादेवा-प्रामाण्यशङ्काविरहात् अर्थं निश्चित्य निष्कम्पव्यवहार इत्यभिप्रायः ।

---

### प्रकाशः

अत एव प्रामाण्यानुमानमर्थवत् । [1]तस्मिन् सति ज्ञानान्तरे तदुपनीत-भानादप्रामाण्यसंशयाभावेन प्रवर्तकज्ञाननिर्वाहादिति ।

अन्ये तु अन्यत्र समानविषयस्य विरोधिज्ञानस्य प्रतिबन्धकत्वेऽपि प्रकृते अनन्यगत्या भिन्नविषयस्यापि [2]तथात्वं कल्प्यत इत्याहुः ।

यत्त्विति । [3]अनुमितिप्रामाण्यपरतस्त्वे टीकाविरोधं परिहरति । स्वतो ग्रहणासंभवादुपचारकल्पनमिति भावः । धूमवति वह्निज्ञानत्वमिति ।

ननु धूमवति [4]वह्निज्ञानत्वमित्यनेन धूमप्रकारकत्वे सति वह्निप्रकारकत्वं विवक्षितम्, धूमवद्विशेष्यकत्वे सति [5]वह्निप्रकारकत्वं वा । नाद्यः, तस्य भ्रमरूप-वह्न्यनुमितावपि सत्त्वेन प्रामाण्यनियतत्वाभावात् । नान्त्यः, तस्यानुव्यवसाया-ग्राह्यत्वात् । तद्ग्राह्यत्वे वा धूमवत्त्वांशे तत्र स्वतःप्रामाण्यग्रहापत्तेः । [6]तत्र चेष्टापत्तौ किमपराद्धं वह्निमत्त्वांशे स्वतः[7]प्रामाण्यग्रहेण । प्रत्युत तदंश एवाप्रामाण्यशङ्का-विरहस्वीकारात् तत्स्वीकारो युक्तो न तु धूमवत्त्वांशे । परामर्श इवानुमितावपि

---

### न्यायशिखामणिः

वस्तुतस्तु अज्ञातप्रामाण्यमेवेति तदर्थः । यदवच्छेदेन यद्धर्मवत्त्वं गृहीतं तद्ग्रहोऽपि तत्संशयविरोधी । तथा च [8]तद्विषयत्वावच्छेदेन प्रामाण्यं गृहीतमिति तद्विषयत्वग्रहादेव नाप्रामाण्यसंशय इति बोध्यम् ।

उक्तगतेर्निरवद्यत्वेनानन्यगतिकत्वमसिद्धमित्यपरितोषं सूचयन् मतान्तरमाह —अन्ये त्विति । उपाध्यायोक्तदोषमाशङ्कते—नन्विति ।

---

1. ख. 'तस्मिन् सति……भिन्नविषयस्यापि' इति ग्रन्थः नास्ति ।
2. ख. तथा
3. क. 'अनुमिति' नास्ति ।
4. ख. वह्नित्वज्ञान-
5. क. वह्नित्वप्रकार-
6. क. अत्र
7. ख. °प्रामाण्याग्रहेण
8. ग. तद्विशेष्य-

वस्तुतस्तु परतःपक्षे न क्वचिदपि प्रामाण्यग्रहः प्रवर्तक इति। एवमनुव्यवसायस्य प्रामाण्यनियतत्वान्न प्रामाण्यशङ्का। न ह्यजानन् जाना-

---

**प्रकाशः**

तच्छङ्काया अप्रतिरोधात् तत्र प्रतिरोधकस्य धूमवत्त्वांशे व्याप्य[1]स्फुरणादेरभावादिति चेत्—

अत्र वदन्ति। लिङ्गज्ञानादीनां प्रामाण्यशङ्काविरहे तज्जन्यानुमितावुत्तरकालम् [2]अप्रामाण्यसंशये बाधकाभाव एव। यत्र तु लिङ्गज्ञानस्यैवाप्रामाण्यशङ्काकलङ्केनानु[3]मित्यनुत्पादः तत्र प्रामाण्यानुमित्या लिङ्गनिश्चये सत्यनुमितिरिति तदनुमितौ धूमवद्विशेष्यकत्वं भासितुमर्हति समानविषयकज्ञानान्तरवदिति तदनुमितिविशेषाभिप्रायोऽयं ग्रन्थ इति।

**अनुव्यवसायस्येति**। अनुव्यवसायत्वस्येत्यर्थः। नन्वस्य प्रामाण्यनियतस्यापि तन्नियतत्वेनाग्रहात् कथं तज्ज्ञानस्य संशयनिवर्तकत्वम्। न हि [4]व्याप्यज्ञानमात्रात्संशयनिवृत्तिः। अन्यथा तैलं पृथिवी न वेति संशयो न स्यात्। एवं

---

**न्यायशिखामणिः**

नन्वनुमितेर्वह्निमत्त्वांशे अप्रामाण्यशङ्काविरहेण तत्र स्वतःप्रामाण्यग्रहवत् धूमवत्त्वांशेऽपि न तच्छङ्केति [5]तत्रापि स्वतःप्रामाण्यग्रहः स्यादेवेत्यत आह—**परामर्श इवेति**। धूमवद्विशेष्यकत्वव्याप्यस्फुरणस्य प्रतिबन्धकस्याभावात् वह्निव्याप्यधूमवानिति लिङ्गपरामर्शे धूमवत्त्वांशे यथा प्रामाण्यशङ्का तथा तादृशधूमवान् वह्निमानित्यनुमितावपि तदभावात्तदंशे तच्छङ्का दुर्वारेत्यर्थः।

[6]तत्र जयदेवसमाधिमाह—**अत्रेति**। **अनुमित्यनुत्पादः** वह्न्यनुमित्यनुत्पादः। **तत्र**—लिङ्गज्ञाने। **तदनुमिताविति**। वह्न्यनुमितिनिष्ठधूमवद्विशेष्यकत्वं तदनुव्यवसाये भासितुमर्हति। प्रामाण्यानुमितौ भातस्य [7]तस्य लिङ्गनिश्चयतज्जन्यवह्न्यनुमित्योर्भानसंभवेनोपनीतत्वानपायादिति भावः।

---

1. ख. ॰स्मरणादे-
2. क. प्रामाण्य-
3. क. ॰मित्युत्पादः
4. क. व्यापकज्ञान-
5. घ. तथापि
6. ख. ग. घ. 'तत्र' नास्ति।
7. ख. 'तस्य' नास्ति।

मीति प्रत्येति । न वा घटज्ञाने पटं जानामीति । भ्रमेऽप्यनुव्यवसायेन रजतत्वादिकं व्यवसायप्रकारत्वेनोल्लिख्यते तच्च तथैव ।

---

**प्रकाशः**

धूमवद्विशेष्यकत्वस्याप्यनुमित्यनुव्यवसायेन ग्रहेऽपि कथं [1]संशयनिवृत्तिरित्यनुपपन्नोऽयं ग्रन्थः । तस्मादेतच्चिन्त्यम् ।

केचित्तु धूमवद्विशेष्यकत्वादेः प्रामाण्यव्याप्यतया पूर्वग्रहात् तद्गोचरसंस्कारे सति संशयाभावस्यावश्यदर्शनात् स्वरूपेणापि तद्ग्रहस्य प्रतिबन्धकत्व[2]मिहैवानन्यगत्या कल्प्यमित्याहुः ।

यत्र [3]तन्नियतत्वेन कदाचित्तस्योपनयः तन्मात्राभिप्रायकोऽयं ग्रन्थ इत्यप्याहुः ।

---

**न्यायशिखामणिः**

[4]अनुव्यवसायस्य प्रामाण्याव्याप्यत्वादाह — अनुव्यवसायत्वस्येति । [5]एवमनुमित्यनुव्यवसाययोः प्रामाण्यव्याप्यत्वेनास्फुरणात् ततः कथं [6]अप्रामाण्यशङ्कानिवृत्तिरित्याक्षिप्तम् । तत्र केषांचित् [7]समाधिमाह—केचित्त्विति । प्रामाण्येति । वह्निमद्विशेष्यकत्वेत्यर्थः ।

ननु सत्यपि शुक्तिकासंस्कारे पुरोवर्तिनि रूप्यभ्रमदर्शनान्न क्वचिदपि संस्कारः प्रतिबन्धकः । न चान्यत्र विरोधिसंस्कारस्यातथात्वेऽपि व्याप्यत्वसंस्कारे सति पर्वते धूमदर्शने [8]वह्न्यभावशङ्काविरहेण अन्वयव्यतिरेकाभ्यां व्याप्यदर्शनसहकृततत्संस्कारस्य तथात्वं कल्प्यत इति वाच्यम् । तत्सत्त्वेऽप्यनुद्बोधदशायां संशयदर्शनात् । न चोद्बुद्धसंस्कारस्तथा । तदुद्बोधस्य [9]स्मृत्येकोन्नेयत्वेन आवश्यकव्याप्ति[10]स्मृतेरेव प्रतिबन्धकत्वापातात् । न च सापि साहित्यविरोधिधीसामग्री-

---

1. ख. तत्संशय-
2. ख. ०मित्यत्रैवानन्य-
3. क. तन्निश्चयः तत्त्वेन
4. ख. घ. ननु व्यवसायस्य
5. क. एवं धूमवद्विशेष्यकत्वानुव्यवसायत्वयोः
6. ख. ग. घ. प्रामाण्य-
7. क. समाधान-
8. क. वह्न्यभावे
9. ख. स्मृत्यैवोन्नेय-
10. ख. घ. ०स्मृतिरेव

यत्तु अभ्यासदशायां झटिति प्रचुरतरनिष्कम्पप्रवृत्तिदर्शनात् प्रामाण्यं स्वत एव गृह्यते, अन्यत्र तु परत इति। तन्न। विशेष्यनिष्ठात्यन्ताभाव-प्रतियोगिप्रकारानवच्छिन्नत्वादिकं प्रामाण्यं स्वतो ग्रहीतुमशक्यमिति परत एव गृह्यते। झटिति प्रवृत्तिस्तु करचरणादिमति शरीरज्ञानत्वादेर्विशेषस्या-नुव्यवसायेन ग्रहादप्रामाण्यशङ्काशून्यात् व्यवसायादेव, न प्रामाण्यज्ञानं प्रवर्तकमित्युक्तम्। झटिति तत्समवधानं तु स्वकारणाधीनम्। न हि पिपा-सूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिरस्य प्रत्यक्षा इति।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे प्रामाण्यज्ञप्तिवादः

—:*:—

---

न्यायशिखामणिः

त्वेन प्रतिबन्धिका, तत्सामग्री च व्याप्तिविशिष्टपक्षधर्मताज्ञानमेव। तथा च संस्कारे सत्यपि व्याप्यत्वावगाहिधूमवद्विशेष्यकत्वस्फुरणाभावादप्रामाण्यशङ्का [1]स्यादेवेत्यस्वरसादाह—यत्रापीति। यदनुमितिस्थले यदनुव्यवसायस्थले च धूमवद्विशेष्यकत्वानु[2]व्यवसायत्वयोर्यदा पूर्वमेव प्रामाण्यव्याप्यत्वोपनयः तदा तयोर्व्याप्यत्वेनानुव्यवसाये भानमिति न संशय इति तादृशानुमित्यनुव्यवसायपरोऽयं ग्रन्थः न सर्वानुमित्यादिपर इत्यर्थः।

वयं तु यदवच्छेदेन यद्धर्मवत्त्वं गृहीतं तद्ग्रहोऽपि [3]तद्धर्मसंशयविरोधीति धूमवान् पर्वतो वह्निमानित्यनुमितौ धूमवह्निप्रकारकत्वावच्छेदेन प्रामाण्यग्रहे तद्ग्रहादेव द्वितीयाद्यनुमितावपि नाप्रामाण्यशङ्का। तथा च [4]धूमवद्विशेष्यकवह्नि-प्रकारकज्ञानत्वं प्रामाण्यावच्छेदकमनुव्यवसायेन गृहीतम्। अतो विरोधिदर्शनान्न प्रामाण्यसंशय इति [5]मूलार्थ इति ब्रूमः।

---

1. क. स्यादेवेत्यत आह
2. ख. ०व्यवसाययोः
3. क. तत्संशय-
4. ख. धूमवह्निविशेष्यक-
5. क. 'मूलार्थ इति' नास्ति।

प्रकाशः

**विशेष्यनिष्ठेति** । यद्यपि निष्कम्पप्रवृत्त्युपयोगि तद्वतितत्प्रकारकत्वरूपं प्रामाण्यम् । तथापि संशयानुपपत्त्या न तदपि स्वतो वेद्यमिति भावः । एवं सति झटिति प्रवृत्तिमुपपादयति—[1]**झटितीति** । अत्राप्रामाण्यशङ्कानिवृत्तिः पूर्ववदेव चिन्त्या । प्रामाण्य[2]ज्ञानप्रवर्तकत्वमभ्युपेत्याह—**झटितीति** । **तत्समवधानम्**—प्रामाण्यानुमिति[3]सामग्रीसमवधानम् । तथा च प्रवृत्तिर्झटिति भवन्ती कारणतया झटिति प्रामाण्यग्रहमाक्षिपेत् । सोऽपि झटिति लिङ्गज्ञानादिसमवधानम्, न स्वतःप्रामाण्यग्रहः, [4]तस्य निषेधादिति भावः । तदनुरूपमेवोदाहरति—**न हीति** ।

केचित्तु यत्र व्यवसायप्रामाण्यग्रहाधीनाप्रामाण्यशङ्कानिवृत्तिः [5]तत्रैव तत्सामग्रीविलम्बात् झटिति [6]प्रवृत्त्यनुपपत्तिरित्यत आह—**झटितीति** ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे प्रामाण्यज्ञप्तिवादः

—:*:—

---

न्यायशिखामणिः

**पूर्ववदेवेति** । अत्रापि पूर्ववदेव समाधानं बोध्यम् । पूर्वापरग्रन्थविरोधं परिहरति—**प्रामाण्येति** । ननु झटिति [7]कारणसमवधानात् झटिति कार्योत्पत्तावुभयसंमतविद्युदादिरेव दृष्टान्तो भविष्यति, किं [8]परमतसिद्धदृष्टान्तोपन्यासेनेत्याशङ्क्य, झटिति प्रवृत्तिः झटिति कारणात् । तत्कारणं च [9]प्रामाण्यग्रहः इति [10]तत् झटित्यप्रत्यक्षत्वं कल्पयतीति यः परो [11]ब्रूते तं प्रति यज्ज्ञानं झटिति प्रवर्तकं तत्प्रत्यक्षमिति न नियमः । पिपासोपशमनशक्त्यनुमितौ व्यभिचारादित्यभिप्रेत्य तदुदाहरणमित्याह—**अनुरूपमिति** ।

---

1. ख. 'झटितीति' इति नास्ति ।
2. क. °ज्ञानाप्रवर्तक-
3. क. 'सामग्री' नास्ति ।
4. ख. तन्निषेधा-
5. ख. तत्रैतत्सामग्री-
6. ख. प्रवृत्त्युपपत्ति-
7. क. कारणासमवधानात्
   ख. कारणत्वमवधानात्
8. ग. परमतदृष्टसिद्धान्तो-
9. प्रामाण्याग्रहः
10. ख. यत्
11. क. ब्रूयात्

**न्यायशिखामणिः**

ननु निरस्तप्रामाण्यग्रहप्रवर्तकत्वाभ्युपगमं विनापि एतद्ग्रन्थोपपत्तौ तदभ्युपगमकल्पनमयुक्तमित्यपरितोषादाह—**केचित्त्विति । यत्रेति ।** यत्राप्रामाण्यशङ्काशून्यत्वं तदनुत्पादरूपं [1]तत्र तस्य शङ्कासामग्रीविरहप्रयुक्तस्य [2]प्रामाण्यग्रहानपेक्षतया प्रवृत्तिझाटित्यमुपपद्यते । यत्र शङ्काप्रध्वंसरूपं तच्छून्यत्वं तत्र तद्ध्वंसस्य प्रामाण्यानुमितितत्सामग्रीसापेक्षतया तदनुपपत्तिरित्यर्थः । [3]तस्मात् सर्वमवदातम् ।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
तत्त्वचिन्तामणिप्रकाशव्याख्याने न्यायशिखामणौ प्रामाण्यज्ञप्तिवादः

—:*:—

1. ख. तत्रास्य
2. क. प्रामाण्यग्रहार्थं तत्त्वाग्रहानपेक्षतया
   ख. प्रामाण्यग्रहापेक्षता
3. ख. ग. घ. 'तस्मात्सर्वमवदातम्' नास्ति ।

# अथ प्रामाण्यवादे उत्पत्तिवादः

—:*:—

उत्पद्यतेऽपि प्रामाण्यं परतो न तु स्वतो ज्ञानसामग्रीमात्रात्। तज्जन्यत्वेऽप्रमापि प्रमा स्यात्। अन्यथा ज्ञानमपि सा न स्यात्।

---

**प्रकाशः**

प्रसङ्गादाह—उत्पद्यतेऽपीति। अत्र ज्ञानप्रामाण्यं ज्ञानसामग्रीमात्र-प्रयोज्यं न वेति विप्रतिपत्तिरित्याहुः। स्वत इत्यस्य विवरणं—ज्ञानेति। विपक्षे बाधकतर्कमाह—तज्जन्यत्व इति। यद्यपि यथाश्रुते वैयधिकरण्यम्, [1]तथापि [2]प्रमात्वं यदि ज्ञानसामग्रीमात्र[3]प्रयोज्यं स्यात् अप्रमावृत्ति स्यादित्यापादनीयम्।

---

**न्यायशिखामणिः**

ननु प्रामाण्यस्य ज्ञप्तौ परतस्त्वव्यवस्थापनेनैव प्रमातत्त्वावधारणाधीन-प्रमाणतत्त्वावधारणोपपत्तेः उत्पत्तौ परतस्त्वनिरूपणं [4]प्रकृतानुपयोगीत्यत आह—**प्रसङ्गादिति**। ननु विप्रतिपत्त्यनभिधानात् कथं वादप्रवृत्तिः। न 'चोत्पद्यते प्रमा परतः न तु स्वतो ज्ञानसामग्रीमात्रा'दिति ग्रन्थालोचनया प्रमा ज्ञानसामग्रीमात्र-जन्या [5]न वेति विप्रतिपत्तेरूहितुं शक्यत्वात् सा नोक्तेति वाच्यम्। [6]मात्रान्तर्भावे [7]अप्रसिद्धेः। तदनन्तर्भावे विधौ सिद्धसाधनात्, निषेधे बाधाच्चेत्यत आह—**अत्रेति**। **ज्ञानप्रामाण्यमिति**। अनित्यप्रमात्वमित्यर्थः। **ज्ञानसामग्रीति**। यद्यपि ज्ञानसामग्रीजन्य[8]वृत्तित्वं न तत्प्रयोज्यत्वं सिद्धसाधनात्। तथापि कार्यतावच्छेदकं न वेत्यत्र तात्पर्यम्।

ननु प्रतिज्ञातेऽर्थे हेत्वनभिधानात् तज्जन्यत्व इत्याद्यसंगतमित्यत आह—**विपक्ष इति**। ननु [9]प्रमात्वं ज्ञानसामग्रीप्रयोज्यमेवास्तु न विचित्रकारणप्रयोज्य-

---

1. क. तदापि
2. ख. प्रामाण्यं
3. ख. °प्रयोज्यवृत्ति स्यादप्रमात्ववदित्या-
4. ग. प्रकृतासंगतमित्यतः
5. ख. यथेति
6. ख. मात्रान्तर्भावे
7. घ. अप्रमासिद्धेः
8. ख. °प्रवृत्तित्वं
9. ग. प्रमामात्वं

ज्ञानसामग्र्यां दोषानुप्रवेशादप्रमेति चेत्, तर्हि ज्ञानविशेषवदप्रमा प्रमाविशेषः स्यात् ज्ञानसामग्रीजन्यत्वात्। तस्मात् प्रमाप्रमयोर्वैचित्र्यात् गुणदोषजन्यत्वम्। अथ यत्र गुणदोषौ विना तयोरभावस्तत्र ज्ञानसामग्र्येव नास्ति। तत्सत्त्वे ज्ञानमात्रोत्पत्तिप्रसङ्गादिति चेत् न।

प्रकाशः

अप्रमाया दोषजन्यत्वात् दृष्टान्ते आपादकासिद्धिरित्याह—ज्ञानेति। तर्हीति। यथा घटसामग्र्यां नीलानुप्रवेशादुत्पद्यमानो नीलघटो घटविशेष एव, तथा[1]प्रमासामग्र्यां दोषानुप्रवेशादुत्पद्यमाना अप्रमा प्रमाविशेष [2]एव स्यात्। अन्यथा ज्ञानविशेषोऽपि न स्यात्। तटस्थः प्रत्यवतिष्ठते—अथेति। तथा च पृथगन्वय[3]व्यतिरेकाननुविधानात् गुणदोषौ न प्रमाप्रमाहेतू इति भावः।

न्यायशिखामणिः

मित्यप्रयोजकत्वशङ्कायां [4]अप्रमायां प्रमात्वमापादितं न युक्तम्, तत्रापादकवैयधिकरण्यादित्याशङ्क्य, निराकरोति—यद्यपीति। ननु सामग्र्यां दोषानुप्रवेशमात्रेण प्रमात्वे नापादकासिद्धिः [5]न चेष्टप्रसङ्ग इत्यत आह—अप्रमाया इति। ननु दोषसहित[6]ज्ञानसामग्रीजन्यत्वप्रमा[7]विशेषयोर्व्याप्तिग्रहो न संभवति दृष्टान्ताभावादित्याशङ्क्य यत्र विशेषकारणसहिता सामान्यसामग्री तत्र विशेषकार्योत्पत्तिरिति सामान्यव्याप्तिरभिमतेत्याह—यथेति। ननु प्रमात्वं विचित्रकारणप्रयोज्यं विचित्रकार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववत् इत्यनुमानम् अनन्यथासिद्धान्वयव्यतिरेकसहकृतप्रत्यक्षं च प्रमाणं तस्मादित्यत्राभिप्रेतम्। तत्र अथेत्यादिना [8]तादृशान्वयव्यतिरेकौ नेत्याक्षिप्तम्। तथा सति दोषस्याप्यप्रमाहेतुत्वं न स्यादित्यत आह—तटस्थ इति। ननु [9]सामग्रीव्यतिरेकसत्त्वेऽपि गुणदोषव्यतिरेकसत्त्वमप्रत्यूहम्। तथा चान्वयव्यतिरेकाभ्यां तयोर्हेतुत्वमित्यत आह—तथा चेति। तां विनेत्युत्तरपक्षाभेदमाशङ्क्याह—जनिकेति। अत इति। उक्तापरितोषात्

1. ख. अप्रामाण्यसामग्र्यां
2. ख. 'एव' नास्ति।
3. क. 'व्यतिरेक' नास्ति।
4. ख. प्रमायां
5. ख. घ. न चेष्टप्रसङ्गता
6. क. 'ज्ञान' नास्ति।
7. ख. ग. घ. °विशेष्यत्वयोर्वि ो ष व्याप्ति-
8. क. 'तादृश' नास्ति।
9. क. सामान्यसामग्री-

विशेषविनाकृतसामान्यकार्याभावात्। तत्सामग्रीमादाय हि सामान्यसामग्री तां विना नास्त्येव वा। अन्यथा कार्यविशेषे कारणविशेषोच्छेदः।

ननु यथा एकजातीयसामग्रीसत्त्वेऽपि घटयोर्भेदो यमजयोर्वैधर्म्यं च तथा प्रमाप्रमयोर्भेदो वैधर्म्यं च भविष्यति।

अथानुगतव्यवहारात् प्रमात्वमनुगतमिति प्रमामात्रेऽनुगतो हेतुर्वाच्यः, अनुगतकार्यस्याननुगतादनुत्पत्तेरिति चेत्—न। प्रमात्वस्योपाधि-

---

प्रकाशः

तयोरिति। प्रमाप्रमयोरित्यर्थः। तत्सामग्रीं विशेषसामग्रीम्। सामान्यसामग्री। जनिकेति शेषः। अन्यथा विशेषबहिर्भूतसामान्यकार्यापत्तेरिति भावः। ननु सामग्र्याः कार्यनियतत्वात् सामान्यसामग्रीसत्त्वे सामान्यकार्योत्पत्तिर्ब्रह्मणापि निवारयितुं न शक्येत्यत आह—तां विनेति। तथा च गुणाद्यभावस्य सामग्र्यभावसंपादनद्वारा प्रमाद्यभावप्रयोजकतया गुणादेः प्रमादिप्रयोजकत्वमस्त्येवेति भावः। अन्यथेति। त्वदुक्तरीत्या अन्यत्रापि कारणविशेषस्य पृथगन्वयव्यतिरेकाननुविधायित्वादिति भावः। भेदः व्यक्तिभेदः।

अथेति। तथा च प्रमात्वावच्छिन्नेऽनुगतो हेतुर्गुण इति [भावः]। उपाधित्वेनेत्युपलक्षणम्, नित्यवृत्तित्वेने[1]त्यपि द्रष्टव्यम्। कार्येति। [2]अनित्यप्रमात्वं कार्यतावच्छेदकं कार्यमात्रवृत्तिधर्मत्वादित्यस्येत्यर्थः। घटज्ञानत्वाद्वाविति। नित्य-

---

न्यायशिखामणिः

पक्षान्तरमाहेत्यर्थः। नन्वस्मिन् पक्षे पृथगन्वयव्यतिरेकाननुविधानं तदवस्थमित्यत आह—तथा चेति। प्रयोजकत्वं कारणत्वम्।

ननूक्तमनुमानमप्रयोजकम्, भेदस्य [3]वैधर्म्यस्य वा वैचित्र्यस्यैकजातीयहेतुजन्यघटादावपि दर्शनादिति तटस्थमुखेन मीमांसकेनाक्षिप्तं नन्वित्यादिना। तदयुक्तम्। घटे घटत्वावच्छिन्नप्रतियोगिकभेदाभावादित्यत आह—व्यक्तीति।

---

1. ख. ॰त्युपद्रष्टव्यम्
2. ख. नित्य-
3. ख. वैधर्मस्य

त्वेन कार्यतावच्छेदकत्वे मानाभावात्। कार्यमात्रवृत्तिधर्मत्वस्य नीलघटत्व-घटज्ञानत्वादौ व्यभिचारात्।

अथ प्रमा ज्ञानहेत्वतिरिक्तहेतुजन्या जन्यज्ञानत्वादप्रमावत् इति चेत्—न। प्रमाया ज्ञानस्य तद्धेतुजन्यतया साध्ये बाधात्, ज्ञानाजनक-जन्यत्वे विरोधात्. अप्रमायां तदसिद्धेः, व्यर्थविशेषणत्वात् व्यावर्त्या-प्रसिद्धेः। किं च यत्किंचिज्ज्ञानहेत्वपेक्षया सर्वतद्धेत्वपेक्षया वा अतिरिक्तत्वे इन्द्रियादिभिः सिद्धसाधनात्।

---

प्रकाशः

ज्ञानपक्षे घटनित्यज्ञानत्वादावविति। बाधमुक्त्वा विरोधं हेत्वाभासमाह—ज्ञाना-जनकेति।

केचित्तु ज्ञानाजनकत्वेन यदभ्युपगतं तज्जन्यत्वेन साध्ये विवक्षिते विरोधात् प्रतिज्ञा[1]विरोधादित्यर्थः। [2]प्रमायाः ज्ञानत्वेन तज्जनकजन्यत्वाभ्युपगमावश्य-भावे [3]तद्विपरीताभ्युपगमात् प्रतिज्ञाविरोधस्याभ्युपगममादायैव प्रवृत्तेरित्याहुः।

---

न्यायशिखामणिः

नन्वथेत्यत्रानुमानान्तरमभिप्रेतम्। तत्र चानुगतकार्यानुपपत्तिलक्षणबाधक-तर्कसत्त्वान्नाप्रयोजकत्वमित्युक्तं न युक्तम्। एतावतानुगतहेतुसिद्धावपि [4]गुणा-सिद्धेरित्यत आह—तथा चेति। ननु कर्तृजन्यतायां जन्यत्वमवच्छेदकं न स्यादि-त्यरुचेराह—नित्येति। ननु स्पष्टामसिद्धिमुपेक्ष्य व्यभिचारमात्रवर्णनमसंगत-मित्यत आह—अनित्येति। ननु घटज्ञानत्वादौ न व्यभिचारः, तस्येश्वरज्ञानेऽपि सत्त्वेन हेत्वभावादित्यत आह—नित्येति। [5]नित्यज्ञानाभ्युपगमपक्ष इत्यर्थः। ननु ज्ञानहेत्वतिरिक्तहेतुजन्यत्वस्य साध्यस्य न बाधः। गुणस्यापि तादृशेन्द्रिया-दिभिन्नत्वात्। अत एव न विरोधोऽपि। अप्रमायास्तादृशदोषजन्यत्वादित्या-

---

1. क. विरोध इत्यर्थः
2. ख प्रमायाः ज्ञानवत्त्वेन तज्जनकजन्यत्वा-
3. ख. तद्विपरितावश्यंभावात्
4. क. गुणे किमायातमित्यत आह
5. ख. ग. घ. 'नित्यज्ञानाभ्युपगमपक्ष इत्यर्थः' इति नास्ति।

**नापि ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीजन्येति साध्यम् । पूर्ववत् सिद्धसाधनात् विरोधाच्च ।**

---

### प्रकाशः

दृष्टान्तोऽपि साध्यविकल इत्याह—**अप्रमायामिति** । व्याप्यत्वासिद्धिमाह—**व्यर्थेति** । विशेष्यत इति व्युत्पत्त्या विशेषणपदेनैव विशेष्याभिधानात् व्यर्थविशेष्यत्वादित्यर्थः । जन्यमात्र एव साध्यसत्त्वात् । यद्वा हेतुजन्यत्वस्यैव व्यापकत्वे साध्ये व्यर्थविशेषणत्वं बोध्यम् । **व्यावर्त्येति** । प्रमाया गुणजन्यत्वासिद्धिदशायां जन्यद्रव्यावर्त्यस्येश्वरज्ञानस्यासिद्धेरित्यर्थः । वैदिकप्रमाहेतुगुणाश्रयत्वेनैव तत्सिद्धिरिति भावः ।

---

### न्यायशिखामणिः

शङ्क्य, **अतिरिक्तेत्यत्र** किं ज्ञानहेतुत्वावच्छिन्नप्रतियोगिकसामान्यान्योन्याभावो विवक्षितः ज्ञानहेतुप्रतियोगिकान्योन्याभावो वा । आद्ये बाधमुक्त्वा विरोधमप्याहेत्याह—**बाधमिति** ।

प्रतिज्ञाविरोधो न वस्तुदोषः तस्य पुरुषदोषत्वादित्यपरितोषं हृदि निधाय जरत्पक्षधरमतमाह—**केचित्त्विति** । **ज्ञानाजनकत्वेनेति** । ज्ञानजनकत्वावच्छिन्नभिन्नत्वेनेत्यर्थः । यत्तु **विरोधात्** साध्यसिद्धिविरोधात्, कुतो विरोध इत्यपेक्षायामुक्तम् **अप्रमायामिति** । तथा च [1]ज्ञानाजनकजन्यत्वं साध्यं [2]सर्वत्राप्रसिद्धमिति **जयदेवमिश्रै**र्व्याख्यातम् । तद्द्व्यणुकादौ साध्यप्रसिद्धेरयुक्तमित्यभिप्रेत्य स्वयं दूषणान्तरपरतया व्याकरोति—**दृष्टान्तोऽपीति** ।

ननु यत्रान्यावच्छेदेन [3]व्याप्तिग्रहस्तत्र व्यर्थविशेषणता, यथा नीलधूमादौ । न चात्र तथा, ज्ञानहेतुत्वावच्छिन्नभिन्नजन्यत्वं प्रति हेतोर्विरुद्धत्वादित्याशङ्क्य, यत्किंचिज्ज्ञान[4]हेतुभिन्नजन्यत्वं [5]प्रति हेतोरविरुद्धत्वात् द्वितीयकल्पाभिप्रायं [6]तदित्याह—**व्याप्यत्वासिद्धिमिति** । नन्वस्मिन् पक्षे विशेषणपदस्य मुख्यार्थपरि-

---

1. ग. ज्ञानजनक-
2. ग. सर्वत्र सिद्धमिति
3. क. व्याप्तिस्तत्र
4. ख. °हेतुत्वभिन्न-
5. ख. प्रतिहेतोर्विरुद्धत्वात्
6. ग. तदित्यत आह

न च सामान्यविशेषयोः सामग्रीद्वयम्, प्रमाया ज्ञानभिन्नत्वापत्तेः। अन्यथा सामग्रीभेदासिद्धिः, तस्य कार्यभेदकल्प्यत्वात्। एतेन ज्ञानसामान्यहेत्वतिरिक्तहेतुजन्येति साध्यं प्रत्युक्तम्। सकलज्ञानाभिप्राये चे-

---

**प्रकाशः**

ननु ज्ञानत्वावच्छिन्नसामग्र्यतिरिक्तसामग्रीजन्यत्वं न विवक्षितम्, येनेन्द्रियादिना सिद्धसाधनं स्यात्। अपि तु ज्ञानत्वाश्रयजनकसामग्र्यतिरिक्तसामग्रीजन्यत्वमित्यत आह—**विरोधाच्चेति**।

**सामग्रीद्वयमिति**। तथा च न विरोध इति भावः। **प्रमाया इति**। ज्ञानत्वप्रयोजकज्ञानसामग्रीजन्यत्वाभावादित्यर्थः। **हेत्वसिद्धिरिति**। ज्ञानत्वहेत्व-

---

**न्यायशिखामणिः**

त्यागप्रसङ्ग इत्यपरितोषादाह—**यद्वेति**। **साध्य इति**। तथा च विशिष्टसाध्यं प्रति हेतोरप्रयोजकत्वाद्व्याप्यत्वासिद्धिरिति भावः।

नन्वजन्यज्ञानं क्षित्याद्यनुमानात् प्रसिद्धमेवेत्यत आह—**वैदिकेति**। तथा च ततोऽपि परमेश्वरसिद्धिं परो यदा नानुमन्यते [1]तदेदं बोध्यम्।

वस्तुतस्तु द्वितीयकल्पे अप्रमायां ज्ञानत्व एव व्याप्ति[2]ग्रहसंभवात् जन्यत्वविशेषणं [3]व्यर्थमित्यर्थः। नन्वीश्वरज्ञान[4]वारकत्वात् [5]सार्थकमित्यत आह—[6]**व्यावर्त्येति**। प्रमेति पक्षनिर्देशादिदानीं नित्यज्ञानासिद्धिरिति भावः। ननु साध्ये न व्यर्थविशेषणता, शरीरेन्द्रियादिना सिद्धसाधनवारकत्वादित्याशङ्क्य दत्तेऽपि विशेषणे दोषानिवारणाद्वैयर्थ्यतादवस्थ्यमित्युक्तं **मणौ किंचेत्यादिनेति** द्रष्टव्यम्।

किं सामग्रीपदं हेतुपरं यथाश्रुतमेव वा। आद्ये दूषणम् एतेनेत्यत्र वक्ष्यते। अन्त्येऽपि किं ज्ञानत्वावच्छिन्न[7]घटितं साध्यम्, उत ज्ञानत्वाश्रय-

---

1. ख. क. तदेवं
2. क. °ग्रहासंभवात्
3. क. व्यर्थमित्येव मूलार्थः
4. ग. °व्यावर्तकत्वात्
5. क. सार्थक्य-
6. क. व्यावृत्तेति।
7. क. °न्नत्वघटितं

न्द्रियादिभिः सिद्धसाधनम् । ज्ञानत्वाभिप्राये हेत्वसिद्धिः । नापि ज्ञानत्वावच्छिन्नकार्यत्वान्यकार्यत्वप्रतियोगिककारणजन्येति साध्यम् । ज्ञानत्वस्य नित्यवृत्तितया कार्यत्वानवच्छेदकत्वात् ।

अथ यद्धर्माश्रयस्यासतः सत्त्वं हेत्वधीनं तत्कार्यतावच्छेदकम्,

ज्ञानत्वं च तथा । न चासत इत्यधिकम्, व्योमादिसाधारणसत्त्वमात्रस्य हेत्वनियम्यत्वादिति चेत्—

---

प्रकाशः

प्रसिद्धिरित्यर्थः । तथा च तद्घटितसाध्याप्रसिद्धिरिति भावः । ज्ञानत्वस्य [1]नित्यानित्यवृत्तित्वेऽपि कार्यतावच्छेदकत्वं स्यादिति शङ्कते—अथेति । [2]यद्धर्माश्रयस्यासतः सर्वस्य सत्त्वं यद्धेत्वधीनं तत् तद्धेतुप्रतियोगिककार्यतावच्छेदकमित्यर्थः । तेन प्रमेयत्वादौ न दण्डादिजन्यतावच्छेदकत्वापत्तिरिति ध्येयम् । ज्ञानत्वं च तथेति । ज्ञानत्वाश्रयो यावानसन् तावतः सर्वस्यैव सत्त्वं मनःप्रभृत्यधीनमिति तत्कार्यताव-

---

न्यायशिखामणिः

[3]घटितम् । तत्राद्यं निराकृत्य द्वितीयमनुवदति—[4]अपि त्विति । ननु ज्ञानसामान्यपदस्य ज्ञानत्वपरत्वेऽपि जन्यज्ञानत्वहेतोर्नासिद्धिरित्यत आह—ज्ञानत्वेति । ननु नित्यवृत्तिधर्मस्यातिप्रसक्तत्वेनावच्छेदकत्वायोगादाशङ्कानुपपत्तिरित्याशङ्क्य, अनतिरिक्तवृत्तित्वमपि नावच्छेदकत्वे तन्त्रम्, गौरवादित्यभिमानिनो न्यायैकदेशिनः शङ्केत्याह—ज्ञानत्वस्येति । तथा च न साध्याप्रसिद्धिरिति भावः ।

सर्वपदप्रयोजनमाह—तेनेति । न च लघुत्वं धर्मविशेषणमावश्यकम्, अन्यथा प्रमेयघटत्वादेर्दण्डजन्यतावच्छेदकत्वापत्तेः । तथा च प्रमेयत्वादेरुपाधितया गुरुत्वादेव नावच्छेदकत्वमिति तद्व्यावर्तकसर्वपदवैयर्थ्यमिति वाच्यम् । प्रमेयत्वस्योपाधित्वेऽपि सामान्यतया घटत्वादिजात्यपेक्षया लघीयस्त्वात् । न चैवमपि

---

1. क. नित्यवृत्तित्वे
2. ख. यस्यासतः
3. क. ॰यत्वघटितं
4. ख. ग॰ घ. नन्विति ।

न। यदालिङ्गितस्य स्वरूपं हेत्वधीनं तत्कार्यतावच्छेदकं लाघवात्, ज्ञानत्वं तु न तथा।

---

प्रकाशः

च्छेदकं ज्ञानत्वं [1]भवत्येवेत्यर्थः। **असत इति**। यद्धर्माश्रयस्य सर्वस्य सत्त्वं यद्धेत्वधीनं तत् तत्कार्यतावच्छेदकमित्येवास्तु [2]न त्वसत इति गौरवात्। एवं च ज्ञानत्वं न कार्यतावच्छेदकमिति भावः। **व्योमादीति**। व्योमादिसाधारणं सत्त्वम् उत्पत्तिभिन्नं वर्तमानत्वमात्रम्, तस्य हेत्वनियम्यत्वात्। हेतुनियम्यत्वं हि हेत्वधिकरण[3]तत्क्षणाव्यवहितक्षणमात्रवृत्तित्वम्, न चोत्पत्तिभिन्नं[4] सत्त्वम् तथा, क्षणान्तरेऽपि घटादिसत्त्वसंभवात्। तथा चासत इति विशेषणेनासतः सत्त्वमुत्पत्तिर्लभ्यते। तेन यद्धर्माश्रयस्य सर्वस्योत्पत्तिर्यद्धेतुनियतेत्यत्र तात्पर्यम्।

नन्वेवं घटत्वादिसमनियते कम्बु[5]ग्रीवत्वादावतिव्याप्तिरिति चेत्—[6]न। लघुत्वेन यद्धर्मविशेषणादित्याहुः।

---

न्यायशिखामणिः

प्रमेयत्वादेरदृष्टादिजन्यतावच्छेदकत्वं दुर्वारमिति वाच्यम्। एतन्मत इष्टत्वादिति भावः।

[7]नन्वसत इति विशेषणानुपादानेऽपि ज्ञानत्वाश्रयास्मदादिज्ञानसत्त्वस्य हेत्वधीनत्वात् ज्ञानत्वस्यावच्छेदकत्वं[8] न विरोत्स्यत इत्याशङ्क्य सर्वपदमङ्गीकृत्यैवेयमाशङ्केत्याह—**यद्धर्मेति**। ननु हेतुनियम्यत्वं हि हेत्वधिकरणक्षणोत्तरक्षणवर्तित्वम्। तच्च व्योमादिसाधारणवर्तमानत्वरूपसत्त्वेऽप्यस्तीत्यत आह—**हेतुनियम्यत्वं हीति**।

नन्वसत इति विशेषणोपादानेऽपि वर्तमानत्वस्य प्रागसद्घटादिसंबन्धित्वाद्दोषतादवस्थ्यमित्यत आह—**तथा चेति**। नन्वेवं ज्ञानत्वाश्रयस्य सर्वस्योत्पत्तिरसिद्धेत्यत आह—**तेनेति**।

---

1. ख. संभवत्ये-
2. ख. नत्वसत्त्व इति
3. क. ॰लक्षणा-
4. क. ॰भिन्नसत्त्वम्
5. ख. ॰ग्रीवादिमत्त्वादौ
6. ख. 'न' नास्ति।
7. घ. नन्वत इति
8. क. ॰त्वे न विरोधः

अनित्यज्ञानत्वेतिकरणे इन्द्रियादिभिर्यथायथं सिद्धसाधनम् । तेषां प्रत्येकं ज्ञानमात्राहेतुत्वात् । एतेन प्रमात्वं ज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकं ज्ञानत्वसाक्षाद्व्याप्यधर्मत्वात् अप्रमात्ववदिति निरस्तम् ।

---

**प्रकाशः**

नन्वीश्वरादिजन्यतावच्छेदकं जन्यत्वं न स्यात् सत्तादेरेव लघुत्वेन [1]तत्त्वसंभवादिति चेत्—न । एतन्मत इष्टापत्तेः । ज्ञानत्ववन्नित्यवृत्तेरपि तस्य तथात्वाविरोधात् । **यदिति** । तथा च [तथाविध] हेत्वधीनत्वस्यार्थान्तरपरिकल्पकत्वादसत इति विशेषणमतिगौरवकरमिति भावः ।

न चैवमपि नीलघटत्वादावतिप्रसक्तिः, बाधकाभावे सतीत्यनेन विशेषणात् । तदर्थस्त्वग्रे वक्ष्यते । **अनित्येत्यादि** । यद्यपि मीमांसकमते ज्ञानत्वमपि कार्य-

---

**न्यायशिखामणिः**

ननु ज्ञानत्वावच्छिन्नस्य यस्य कस्यचित् स्वरूपं [2]न हेतुक्षणाव्यवहितक्षणमात्रवर्ति । सर्वपदोपादाने च घटत्वावच्छिन्नस्य क्षणान्तरेऽपि सत्त्वेन तस्यावच्छेदकत्वानापत्तौ असत इति विशेषण[3]मप्यावश्यकमित्युभयथापि ज्ञानत्वस्यावच्छेदकत्वं [4]दुर्वारमित्यत आह—**तथाविधेति** । हेतुक्षणानन्तरक्षणमात्रवृत्तित्वमव्यवहितत्वाघटितं यद्धेत्वधीनत्वं तत् हेत्वधिकरणक्षणाव्यवहितक्षणमात्रवृत्तित्वरूपाद्धेत्वधीनत्वाल्लघु । तथा चासत इति विशेषणं लघुहेत्वधीनत्वस्याव्यवहितत्वविशेषणान्तर्भावेण गुरुरूपत्वकल्पकत्वात् गौरवकरमिति नोपादेयम् । तथा च ज्ञानत्वावच्छिन्नस्य [5]सर्वस्य स्वरूपं न [6]हेतुक्षणोत्तरक्षणमात्रवृत्ति, तत्पूर्वमपीश्वरज्ञानसद्भावात् । अतस्तन्नावच्छेदकमिति भावः ।

यद्वा तथाविधं हेत्वधीनत्वं यस्येति बहुव्रीहिणा तादृशमसतः सत्त्वं लभ्यते । तस्यार्थान्तरे उत्पत्तौ [7]पर्यवसानम् ।

---

1. ख. तथात्व-
2. क. ग. 'न' नास्ति ।
3. क. 'अपि' नास्ति ।
4. ख. ग. दुर्वारमित्याह
5. क. 'सर्वस्य' नास्ति ।
6. ख. हेतुक्षणानन्तर-
7. ख. ग. पर्यवसानात् ।

प्रमात्वस्य नित्यवृत्तित्वात्। अनित्यप्रमात्वं तथा कार्यमात्रवृत्तिधर्मत्वादित्यपि नीलघटत्वादिना व्यभिचारि।

---

**प्रकाशः**

तावच्छेदकम्; तथापि न्यायमतेनास्याभिधानमिति मन्तव्यम्। **सिद्धसाधनमिति** ज्ञानत्वगर्भप्रथमसाध्येऽपि यद्यपि तुल्यम्, तथापि दोषान्तरस्योद्भटतया तदुपेक्षितम्।

**प्रमात्वमिति**। यद्यपि [1]कार्यतावच्छेदकतयैव गुणसिद्धिः, तथापि शरीरादिनिष्ठकारणताप्रतियोगिककार्यतावच्छेदकत्वेनार्थान्तरवारणाय विशिष्टसाध्यमुपात्तमिति केचित्। वस्तुतः प्रमात्वं विशिष्टज्ञानत्वमिति ज्ञानत्वस्यैव लाघवेन तदवच्छेदकत्वमिति बाधादेव नार्थान्तरसंभवः। अतस्ताद्रूप्यसिद्धये विशिष्टं साध्यमुपात्तम्। अत एव सिद्धान्ते अविशिष्टमपि साध्यमस्त्येवेति भावः। **ज्ञानत्वसाक्षादिति**। अत्र वैशेषिकोक्तज्ञानत्वसाक्षाद्विभाजकोपाधित्वादित्यत्र समुदायस्य तात्पर्यम्। विद्या चाविद्या चेति प्रथमविभागात्। एवं च [2]ज्ञानत्वभिन्नानित्यज्ञानत्वव्याप्यत्वेन प्रमात्वस्य भ्रमत्वस्य च नासिद्ध्यादिरिति ध्येयम्।

---

**न्यायशिखामणिः**

उत्पत्तिश्च निरुच्यमाना गुर्वी इत्यसत इति विशेषणं तादृशगुर्वर्थकल्पकत्वात् गौरवकरमित्यर्थः।

दोषान्तरस्य साध्याप्रसिद्धिरूपस्य [3]उद्भटतया सिद्धसाधनविरोधितया कार्यतेति। कार्यतावच्छेदकमित्येतावन्मात्रेऽपि साध्ये पक्षधर्मताबलादभिमतगुणसिद्धिरित्यर्थः। **बाधादेवेति**। प्रमात्वस्य गुरुत्वेन भ्रान्तिव्यावृत्तत्वेन च शरीरादिकार्यतावच्छेदकत्वबाधादित्यर्थः[4]। **साक्षादिति**। प्रथमकृतज्ञानविभागप्रयोजकोपाधित्वादित्यर्थः। तेन प्रत्यक्षज्ञानविभाजकोपाधाविन्द्रियजन्यत्वादौ न व्यभिचारः। **विद्या—प्रमा, अविद्या—अप्रमा**। **ज्ञानत्वेति**। अभेदेऽपि व्याप्यत्वपक्षे

---

1. क. कार्यतावच्छेदकमित्येतावतैव
2. ख. ज्ञानत्वव्याप्यज्ञानभिन्नत्वे व्याप्यत्वेन
3. ख. उद्भवतया
4. क. °त्वे बाध इत्यर्थः

अनित्यप्रमा प्रमाप्रमोभयहेतुभिन्नहेतुजन्या जन्यत्वात् अप्रमावदिति चेत्—न । दोषस्य पित्तादेः स्वविषयप्रमाहेतुत्वेनाप्रमायां साध्याप्रसिद्धेः । घटदृष्टान्तत्वे तथैव व्यभिचारात् । शङ्खाद्यंशे पीतः शङ्ख इति ज्ञानस्यापि प्रमात्वात्, कारणव्यक्तिभेदजन्यत्वेन सिद्धसाधनाच्च ।

अथ प्रमा अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यत्वप्रतियोगिककारणजन्या अप्रमाविजातीयकार्यत्वात् घटवत् । यदि प्रमा अप्रमात्वासमानाधिकरण-

---

प्रकाशः

प्रमात्वस्येति । तथा च बाध इति भावः । एतच्चोपलक्षणम् । ज्ञानत्वस्य नित्यवृत्तितया कार्यतानवच्छेदकतया साध्याप्रसिद्धिरित्यपि द्रष्टव्यम् । [1]तथेति । कार्यतावच्छेदकमित्यर्थः ।

अनित्यप्रमेति । इन्द्रियादिकं च तदुभयहेतुरिति भावः । न च प्रागभावव्यक्तिविशेषेणार्थान्तरम् । भावत्वेन [2]विशेषणादित्याहुः । ननु विषय-

---

न्यायशिखामणिः

प्रमात्वाप्रमात्वयोर्ज्ञानत्वरूप[3]तद्व्याप्यव्याप्यत्वान्मतान्तरे भ्रमत्वस्य ज्ञानत्वव्याप्या-नित्यज्ञानत्वव्याप्यत्वात् प्रमात्वस्य च तद्व्याप्यभ्रमान्यज्ञानत्वव्याप्यत्वात् स्वरूपा-सिद्धिर्दृष्टान्तेसाधनवैकल्यं [4]च नेत्यर्थः ।

ननु साध्यप्रसिद्धिनिबन्धनो बाधः तदप्रसिद्धौ निरवकाश इत्यरुचेराह—[5]एतच्चेति । साध्याप्रसिद्धिरिति । तथा च संशयघटितपक्षताविरहादाश्रया-सिद्धिः । व्याप्तेरग्रहाद्व्याप्यत्वासिद्धिश्चेति भावः । ननु तथाशब्देन ज्ञानत्वाव-च्छिन्नेत्यादिपूर्वसाध्यपरामर्शे नीलघटत्वादौ व्यभिचारोक्तिरप्रसिद्धेरयुक्तेत्यत आह—कार्यतेति ।

इन्द्रियेति । तथा च साध्ये तदुभयभिन्नेति विशेषणं सिद्धसाधनवार-कतया सार्थकमिति भावः । जरत्पक्षधरमतमाह—जन्यत्वेनेति । [6]यद्यपि

---

1. ख. तदेति ।
2. क. विशेषणमित्याहुः
3. घ. °तद्व्याप्यत्वात्
4. क. चेत्यर्थः ।
5. ख, घ. तच्चेति ।
6. क. 'यद्यपि परमते.......सार्थकम्' इति ग्रन्थः नास्ति ।

रूपनिरूपितकार्यत्वप्रतियोगिककारणजन्या न स्यात् अप्रमा स्यादिति चेत्—न।

अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यत्वं संयोगस्य तत्प्रतियोगिककारणमिन्द्रियादीति तज्जन्यत्वेन सिद्धसाधनात्। अप्रमासाधारणव्यक्तिजन्यत्वं चाग्रेऽप्रमातादात्म्ये प्रयोजकमिति तर्कोऽप्यप्रयोजकः।

---

**प्रकाशः**

त्वातिरिक्तेन रूपेण हेतुता विवक्षितेत्यत आह—शङ्कते। प्रमापदेन सकलांशप्रमा विवक्षितेति नोक्तदोष इत्यत आह—कारणेति। तर्कमाह—यदीति। [1]नन्वीश्वरज्ञाने व्यभिचार इति चेत्—न। जन्यत्वेन विशेषणादित्येके। अप्रमाविजातीयकार्यं न स्यादित्यर्थ इत्यपरे।

वस्तुतस्तु प्रमा न स्यादित्यापादनीयम्। ईश्वरज्ञानं तु प्रमाप्रमाबहिर्भूतमेवेति [2]मतेनास्याभिधानमिति। अप्रमाव्यावृत्तेति। संयोगत्वावच्छिन्नं प्रति

---

**न्यायशिखामणिः**

परमते व्यावर्त्याप्रसिद्धेः जन्यपदं व्यर्थम्, तथापि आकाशादिव्यभिचारवारकत्वात्सार्थकम्। न च जन्यत्वाभावमादायापि तर्कस्य विपर्ययपर्यवसानसंभवात् गुणजन्यत्वं न सिद्ध्येदिति वाच्यम्। पक्षेऽपि जन्यत्वविशेषणदानादित्याशयः। [3]ननु विशेषणं विनैव दोषनिरासे तदुपादानं न युक्तमित्यस्वरसादुपाध्यायमतमाह—अप्रमेति।

नन्वेवमशब्दार्थव्याख्यानं स्यात्। तच्च गत्यन्तर[4]संभवे न युक्तमित्यपरितोषादालोककृन्मतमाह—वस्तुतस्त्विति। ननु नञ्व्यत्यासेन प्रमात्वाभावस्यापाद्यत्वेऽपि कथं व्यभिचारनिरास इत्यत आह—ईश्वरेति। तद्विशेषणज्ञानजन्यत्वरूपतत्प्रकारकत्वाभावादिति भावः। इदमप्यापाततः। अप्रमातादात्म्य-[5]स्यानापाद्यत्वे 'अप्रमासाधारणकारणव्यक्तिजन्यत्वं चाप्रमातादात्म्ये प्रयोजक'मित्यग्रिमग्रन्थविरोधात्।

---

1. क. नन्वितरज्ञाने
2. क. मतेनाभि॰
3. ख. ग. घ. 'ननु' नास्ति।
4. ख. ग. ॰सत्त्वे
5. ख. ॰तादार्थ्यस्या-

अथानित्यप्रमा प्रमाप्रमान्यतरप्रतिबन्धकजन्या, प्रमाप्रमान्यतरत्वात् अप्रमावत्, चाक्षुषप्रमा चाक्षुषप्रमाजनकजन्या अनित्यप्रमात्वात् रासनप्रमावत् इति चेत्—न। प्रमाजनकासाधारणव्यक्तिभेदस्याप्रमाप्रतिबन्धकत्वेन चाक्षुषप्रमाजनकत्वेन च सिद्धसाधनात्।

एतेन प्रमा स्वविरोध्यनुभवप्रतिबन्धकजन्या अनित्यानुभवत्वात् अप्रमावत्।

---

प्रकाशः

द्रव्यत्वेन जनकत्वात् इन्द्रियमपि द्रव्यं तथेति [1]तज्जन्यत्वेन सिद्धसाधनमित्यर्थः। तर्कोऽपीति। अपिः समुच्चये। तथा च तर्कोऽनुमानं चाप्रयोजकमित्यर्थः।

प्रमाप्रमान्यतरत्वादिति। न चेश्वरप्रमायां व्यभिचार इति वाच्यम्। जन्यत्वेन प्रमाविशेषणात्। ईश्वरज्ञानं च प्रमाप्रमाबहिर्भूतमिति मतेनोक्तदोषा-

---

न्यायशिखामणिः

परमार्थतस्तु—आपादके ज्ञानत्वं विशेषणम्। प्रमाया गुणजन्यत्वासिद्धिदशायामीश्वरज्ञानस्यासिद्धेर्न तत्र व्यभिचारः। अत एवात्र प्रमेत्येव पक्षनिर्देशः। अन्यथा इदानीं [2]तदङ्गीकारे तद्व्यावर्तनायानित्यपदप्रयोगापत्तेरिति।

ननु [3]जन्यगुणत्वस्य द्रव्यनिरूपितकार्यतावच्छेदकस्याप्रमाव्यावृत्तत्वाभावान्न सिद्धसाधनमित्यत आह—संयोगत्वेति। नन्वनुमाने सिद्धसाधनमेवोक्तं न त्वप्रयोजकत्वमिति समुच्चयार्थापिशब्दानुपपत्तिरित्याशङ्क्य, [4]अप्रमाव्यावृत्तधर्मावच्छिन्नकार्यताकत्वस्य साध्यस्य विवक्षायामिन्द्रियादिनिरूपितकार्यताया उभयसाधारणधर्मावच्छिन्नत्वेनोक्तदोषाभावादनुमानस्याप्यप्रयोजकत्वमेव दूषणमित्याशयेन अपिशब्दप्रयोग इत्याह—अपिरिति। समुच्चय इति। अनुक्तसमुच्चय इत्यर्थः। विशेषणं विनैव यथाश्रुते न दोष इति मतान्तरमाह—ईश्वरेति। ननु पक्षीकृतानित्यप्रमायामेव [5]चाक्षुषप्रमाचाक्षुषप्रमाजनकजन्यत्वं साध्यान्तरमुक्तमयुक्तम्, अचाक्षुषप्रमामात्रे रसनादीन्द्रियजन्यत्वेनांशतः सिद्धसाधनादित्याशङ्क्य

---

1. क. 'तद्' नास्ति।
2. ग. तदनङ्गीकारे
3. ग. गुणजन्यत्वस्य
4. ग. प्रमा-
5. ग. चाक्षुषप्रमाजनकजन्यत्वं

दूरात्पुरुषस्य स्थाणुतया ज्ञाने संनिधौ च भूयोवयवेन्द्रियसंनिकर्षस्य विरोधिस्थाण्वनुभवप्रतिबन्धकत्वं पुरुषज्ञानजनकत्वं च दृष्टम् । अप्रमायां तु पित्तादेर्लिङ्गादिभ्रमस्य च तथात्वमिति निरस्तम् । प्रमाजनकव्यक्तिविशेषस्याप्रमाप्रतिबन्धकत्वं प्रमाजनकत्वं चास्तीति सिद्धसाधनादिति न प्रमायामतिरिक्तगुणसिद्धिः ।

किं च प्रत्यक्षप्रमादौ अनुगतस्यार्थान्तरस्य गुणस्याभावः । इन्द्रियसंनिकर्षादीनां चाननुगमः ।

---

प्रकाशः

भावाद्वा । विशिष्याह—चाक्षुषेति । स्वविरोधीति । अत्रानुभवग्रहणं स्वविरोधिस्मृतिप्रतिबन्धकानुभवसामग्रीजन्यत्वेन सिद्धसाधनवारणाय । स्वपदं[च]समभिव्याहृतपरम् । हेतावप्यनुभवपदं स्मृतावेव व्यभिचारवारणाय । निर्विकल्पके व्यभिचारवारणाय सप्रकारकत्वं हेतुविशेषणमिति केचिदाहुः ।

बाधं निराकरोति—दूरादिति । दृष्टान्ते साध्यवैकल्यं निराकरोति—अप्रमायामिति । नन्वेवमनुगतहेतुमात्रोच्छेद इत्यस्वरसादाह—किं चेति । यत्र तत्संभवस्तत्र बाधकाभावात् अस्तु तथा, अत्र [1]तदसंभवादिति भावः ।

---

न्यायशिखामणिः

चाक्षुषप्रमेत्यनेन [2]विशिष्य पक्षस्यैव निर्देशः । साध्यं तु चाक्षुषप्रमाजनकजन्यत्वमेवेति रासनादिप्रमायाः पक्षत्वभावान्नोक्तदोष इत्याशयेनाह—विशिष्येति । ननु स्वपदस्य प्रकृतप्रमापरत्वे दृष्टान्ते साध्यवैकल्यमित्यत आह—स्वपदं चेति । नन्वनुमानोपक्रमविरुद्धं गुणस्य [3]भूयोवयवेन्द्रियसंनिकर्षादेः प्रमाहेतुत्वे प्रत्यक्षप्रमाणवर्णनम् । न च दृष्टमिति वचनबलादेव प्रत्यक्षप्रमाणमप्यत्र [4]शङ्कितमिति वाच्यम् । अग्रे तदनिराकरणादित्यत आह—बाधमिति । तथा च गुणस्य प्रमाजनकत्वादिकं प्रमाणान्तरेण नास्तीति न प्रतिषिद्धमिति मूलार्थो बोध्यः ।

---

1. ख. तत्संभवात्
2. ग. विशिष्टपक्ष-
2. क. 'भूयोवयवेन्द्रिय......तथा च गुणस्य' इति ग्रन्थः नास्ति ।
3. ग. संचितमिति

न च जात्यैव गुणदोषौ, प्रमाजनकत्वं गुणत्वं भ्रमजनकत्वं च दोषत्वमतिप्रसक्तम् । तन्मात्रजनकत्वं चासिद्धमिति ।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ प्रत्यक्षखण्डे प्रामाण्यवादे उत्पत्तिवादपूर्वपक्षः

—:0:—

---

प्रकाशः

**न चेति** । न हि गुणत्वदोषत्वजात्यवच्छेदेन तदुभयहेतुत्वम्, तदभावादित्यर्थः । [1]द्रव्यत्वादिना जातिसंकरादिति भावः । ननु तादृशजात्यभावेऽपि उपाधिनैव प्रमाजनकत्वावच्छेदादिना तद्धेतुत्वमित्यत आह—**प्रमेति** । **अतिप्रसक्तमिति** । आत्मादाविति शेषः । एतच्चोपलक्षणम् । [2]आत्माश्रयादेव नानुगतजनकतावच्छेदकमिति बोध्यम् । **तन्मात्रेति** । ध्वंसादिकं प्रत्यपि जनकत्वादिति भावः । ननु प्रमामात्रेऽनुगत[3]गुणाभावेऽपि यथार्थ[4]परामर्शादिकमनुमित्यादावनुगतमस्ति, तावतापि गुणसिद्धिरिति चेत्—न । यथैव प्रमामात्रे अनुगत[5]गुणाभावेऽपि नाकस्मिकत्वं तथोक्तस्थलेऽपीत्याशयात् ।

इति उत्पत्तिवादपूर्वपक्षः ।

—:*:—

---

न्यायशिखामणिः

ननु दृष्टमित्यन्तेनैव बाधनिराकरणाच्छेषवैयर्थ्यमित्याशङ्क्याह—**दृष्टान्त इति** । गुणत्वादेर्जातित्वनिराकरणस्य प्रकृतोपयोगमाह—**नहीति** ।

**संकरादिति** । संयोगत्वादिना गुणत्वस्य रागत्वादिना दोषत्वस्य च संकरादित्यर्थः । ननु प्रमात्वावच्छिन्नकारणत्वं गुणत्वम्, भ्रमत्वावच्छिन्नकारणत्वं दोषत्वमिति नातिप्रसङ्ग इत्यत आह—**एतच्चेति** ।

इति उत्पत्तिवादपूर्वपक्षः

—: * :—

---

1. क. 'द्रव्यत्वादिना' इति नास्ति ।
2. ख. आत्माश्रयात्तदेव जनकता०
3. ख. ०कारणाभावेऽपि
4. ख. परामर्शत्यादिक०
5. ख. ०कारणाभावेऽपि

# अथ उत्पत्तिवादसिद्धान्तः

—:*:—

**उच्यते । एवमप्रमापि स्वत एव स्यान्न तु परतः, प्रमावदसाधारणकारणादेव तदुत्पत्तौ दोषस्य तत्राहेतुत्वात् ।**

---

**प्रकाशः**

प्रतिबन्दिमुखेन समाधातुं भूमिकामारचयति—**एवमिति** । यद्यप्यथेत्यादिवादिनं तटस्थं प्रति नायमनुयोगः, तथापि दोषहेतुत्ववादिनं मीमांसकं प्रत्येवैतदिति ध्येयम् । पित्तादेरन्वयाद्यनुविधानात् तदुत्कर्षेण तदुत्कर्षाच्च तस्य हेतुत्वं प्रसाध्य [1]एकधा तटस्थमीमांसकौ प्रत्येवोक्तमित्यन्ये ।

---

**न्यायशिखामणिः**

ननु गुणस्य प्रमाहेतुत्वे प्रमाणमेवोच्यताम्, किं [2]तर्हीत्यतः प्राक्तनग्रन्थेन । [3]न हि प्रतिबन्दि[4]प्रतिपादनाय, तस्यानुत्तरत्वात् । अत एव तन्मुखेन समाधातुमित्यपि न । तामनुपन्यस्यापि प्रमाणप्रदर्शनेन पूर्वपक्षनिराकरणसंभवे तद्वैयर्थ्यादित्याशङ्क्य, तथा सति तटस्थकृताक्षेपो न निराकृतः स्यात् । प्रतिबन्दिमुखेन परकृताक्षेपप्रतिक्षेपे तदुभयं प्रतिक्षिप्तं स्यात् इत्यभिप्रेत्य तन्मुखेन समाधानमित्याह—**प्रतिबन्दीति** । [5]**यद्यपीति** । यद्यपि तटस्थकृताक्षेपस्तत्रैव 'विशेषविनाकृतसामान्यकार्याभावा'दित्यादिना निराकृतः, तथापि 'ननु यथा' इत्यत्र 'न च जात्यैव गुणदोषौ' इत्यत्र च तत्कृताक्षेपस्य तथाप्यपरिहारादिति भावः । **अनुयोग** इति । अप्रमायां तेन दोषहेतुत्वस्यापि निषेधेनेष्टापत्तेरिति भावः । [6]नन्वेतन्मते तटस्थकृतपूर्वपक्षानिरासः **तर्हीति** पूर्वग्रन्थवैयर्थ्यं चेत्यरुचेरुपाध्यायमतमाह—**पित्तादेरिति** । **प्रसाध्येति** । मीमांसकमुखेनाथेत्यादिना प्रसाध्येत्यर्थः ।

---

1. ख. एकदा
2. क. तर्हीत्येतत्प्राक्तन-
3. ख. 'न हि प्रतिबन्दि... ..समाधानमित्याह' इति ग्रन्थः त्रुटितः ।
4. ग. घ. °प्रतिसाधनाय
5. ख. ग. घ. 'यद्यपीति' इति नास्ति
6. ख. नन्वेवंमते

अथ ज्ञानसामग्रीसत्त्वेऽपि विशेषादर्शनादिपित्तादेरनुविधानादप्रमायां दोषो हेतुरिति चेत्—तर्हि विशेषदर्शनपित्ताद्यभावादितः तत्रैव विषये प्रमा तदभावान्नेति प्रमायामागन्तुककारणापेक्षेति कथं न परतस्त्वम्। अपि च नियमगर्भः कार्यकारणभावः। नियमश्च न व्यक्त्योरेव, व्यभिचारादतिप्रसङ्गाच्चेति नियमनिरूपकमनुगुणमनुगतमास्थेयम्। एवं चाप्रमायामिव प्रमायामपि तद्व्यावृत्तं कारणमनुगतमास्थेयम्।

---

प्रकाशः

तर्हीति। तथा चान्वयव्यतिरेकादिप्रमाणोप[1]दर्शनेन प्रतिबन्द्यनुत्तरमिति निरस्तं बोध्यम्। पित्ताद्यभावादित इति। न च न्यायनये गुणहेतुत्वस्यावश्यकत्वात्तेनैवान्यथासिद्धौ पित्ताद्यभावस्य हेतुत्वे (मानाभावादिति) [मानाभाव इति] वाच्यम्। भूयोवयवेन्द्रियसंनिकर्षसत्त्वेऽपि [2]पित्तादिसत्त्वे श्वैत्यप्रमा न संभवति किंतु पीतधीरिति तस्याप्यपेक्षणीयत्वात्। न च तत्सामग्र्येव तत्प्रतिबन्धिकेति वाच्यम्। धर्मिज्ञानकाले तत्सामग्र्यभावेऽपि श्वैत्यप्रमानुत्पत्तेः। ननु व्यक्तिविशेषस्यैव हेतुत्वमित्यत आह—अपि चेति।

न व्यक्त्योरिति। हेतुहेतुमद्भाव इति [3]शेषः। व्यभिचारादिति। [4]तत्तद्बीजव्यक्तेस्तत्तद्बीजव्यक्तित्वेनैव तत्तदङ्कुरं प्रति प्रयोजकत्वम्। अङ्कुरजातीयं

---

न्यायशिखामणिः

ननु तर्हि प्रमायामागन्तुक[5]कारणापेक्षेत्येवोच्यताम् किं विशेषादर्शनेत्यादिनेत्याशङ्क्य, प्रमाणप्रदर्शनार्थं तत्। अन्यथा प्रतिबन्द्येवोक्ता स्यादित्याह—तथा चेति। तत्सामग्री—भ्रमसामग्री। धर्मिज्ञानकाले—तदुत्पत्तिकाले। ननु किं गुणस्यान्वयव्यतिरेकाभ्यां हेतुत्वम्, विजातीयकार्यमित्यादिवक्ष्यमाणव्याप्तिबलाद्वा। नाद्यः. तयोर्दोषाभावेनान्यथासिद्धत्वादित्यभिप्रेत्य द्वितीयं निरस्यति—व्यक्तीति। कारणव्यक्तीरर्थः। तथा च वक्ष्यमाणानुमाने अर्थान्तरमिति भावः। नन्वयं रूपवान् गन्धवत्त्वादित्यादौ व्यक्त्योरप्यस्ति नियम इत्यत आह—हेतुरिति-[हेत्विति]। हेतुहेतुमद्भावघटक इत्यर्थः।

---

1. क. ॰दर्शनप्रतिबन्देरनुत्तर-
2. ख. पीतादि-
3. क. भावः
4. क. 'तत्तद्बीजव्यक्तेः' इति नास्ति।
5. ख. कारणतापेक्षा

किं च यत्कार्यं यत्कार्यविजातीयं तत् तत्कारणविजातीयकार्यजन्यम् यथा घटविजातीयः पटः। अन्यथा कार्यवैजात्यस्य आकस्मिकत्वापत्तेः। घटज्ञानजातीयमपि कार्यं तद्विजातीयकार्यकारणविजातीयघटेन्द्रियसंनिकर्षादिजन्यमिति न व्यभिचारः।

---

प्रकाशः

प्रति बीजजातीयस्य बीजत्वेनाप्रयोजकतया बीजत्वस्यापुरस्करणीयत्वात् बीजं विनापि [1]कुतश्चिदङ्कुरविशेषस्योत्पादप्रसङ्गेन व्यभिचारप्रसङ्गादित्यर्थः। अतिप्रसङ्गाच्चेति। बीजे सत्यपि बीजव्यक्तिवदबीजव्यक्तेरपि तद्धेतुत्वापत्तेः। [2]व्यक्तिसत्त्वमात्रस्य तत्राप्यविशेषादित्यर्थः। अनुगतमिति। यथा चैतत्तथाग्रे वक्ष्यते।

घटज्ञानजातीयमिति। अत्र यद्यपि घटज्ञाने घटेन्द्रिय[3]संनिकर्षो न

---

न्यायशिखामणिः

ननु यद्बीजव्यक्तेयदङ्कुरव्यक्तिजन्म सा तदङ्कुरव्यक्तिं न व्यभिचरति। [4]यतो याङ्कुरव्यक्तिर्न जायते तयोः कार्यकारणभावानङ्गीकारात् तव्द्यभिचार इष्ट एवेत्याशङ्क्य तत्तद्बीजत्वेनाङ्कुरत्वावच्छिन्नं प्रत्येव हेतुत्वं निराक्रियत इत्याह—तत्तदिति। तत्तदङ्कुरं प्रतीति। [5]अत्र तत्तद्ग्रहणं नावच्छेदकाभिप्रायेण। किं त्वङ्कुरत्वमेवावच्छेदकमित्यत्र तात्पर्यम्। अत एवाह—बीजत्वस्येति। अन्यथा अङ्कुरत्वस्य चेत्यपि वचनव्यक्तिप्रसङ्गात्। अपुरस्करणीयत्वादिति। कारणतावच्छेदकरूपेणेति शेषः। बीजं विना—तद्बीजं विना। व्यक्तीति। बीजान्तरव्यक्तीत्यर्थः। प्रसङ्गेनेति। दर्शनेनेत्यर्थः। ननु तत्तद्बीजत्वेन [6]प्रयोजकत्वात् कथं बीजव्यक्तेरङ्कुरहेतुत्वापत्तिरित्याशङ्क्य, यदि तद्व्यक्तित्वमात्रमवच्छेदकं विवक्षितम्, बीजान्तरव्यक्तेश्च तद्बीजव्यक्तित्वाभावेऽपि [7]तद्व्यक्तित्वावच्छिन्नत्वान्न व्यभिचार इति, तदा अतिप्रसङ्ग इत्याह—बीज इति। तद्बीजव्यक्तित्वाभावेऽपीत्यर्थः। न च कार्यतावच्छेदकमपि तत्तदङ्कुरव्यक्तित्वमेवेति न व्यभि-

---

1. ख. कुतश्चिव्द्यक्तिविशेषादङ्कुरव्यक्तिविशेषस्य
2. ख. तद्व्यक्तित्वमात्रस्य
3. ख. 'संनिकर्षो····विशेष्येन्द्रिय-' इति ग्रन्थो नास्ति।
4. ख. ग. ययाङ्कुर-
5. ख. 'अत्र तत्तद्ग्रहणं·······वचनव्यक्तिप्रसङ्गात्' इति ग्रन्थस्त्रुटितः।
6. ग. प्रकारत्वात्
7. ग. तद्बीजत्वाव-

एवं चानित्यप्रमा अप्रमाकारणविजातीयकारणजन्या अप्रमाविजातीयकार्यत्वात्, घटवत्। एवं चानुगतस्य प्रमाहेतुत्वे प्रमा स्वविरोध्यनुभवप्रतिबन्धकजातीयजन्या जन्यानुभवत्वात् अप्रमावदित्यादावपि न सिद्धसाधनम्।

---

प्रकाशः

तत्त्वेन हेतुः, किं तु विशेष्येन्द्रियसंनिकर्षत्वेनैव, तथापि तद्विजातीयपटज्ञानजनकपटेन्द्रिय[1]संनिकर्षविजातीयो भवत्येवेति [2]न दोषः। स्वविरोध्यनुभवेति। अत्र

---

न्यायशिखामणिः

चारातिप्रसङ्गाविति वाच्यम्। या रासभव्यक्तिर्यद्घटव्यक्तिनियता तयोरपि कार्यकारणभावापत्तेः। अङ्कुरार्थं [3]बीजोपादानानुपपत्तेश्चेत्यवधेयम्।

नन्वेतावता व्यक्तिविशेषस्य प्रमाहेतुत्वं निराकृतम्, न तु गुणस्य तत्साधितम्, प्रमाणानुपन्यासादित्याशङ्कायां मणौ—किं चेत्युक्तमिति द्रष्टव्यम्। यद्यपीति। यद्यपि यत् यद्व्यावृत्तधर्मावच्छिन्नकार्यताकं तत् तत्कारणविजातीयकारणजन्यमिति विवक्षायां नैवं व्यभिचारशङ्का, तथापि तस्य [4]गुणकारणत्वसिद्ध्यधीनत्वेनाहेतुत्वादिति भावः। विशेष्येति। न च यत्सामान्य इति न्यायात् घटेन्द्रियसंनिकर्षत्वेनापि हेतुत्वमिति वाच्यम्। तथा सति तत्तद्घटसंनिकर्षत्वेनापि हेतुत्वापत्तेः। यदि च यज्ज्ञाने यद्विशेष्यं तदिन्द्रियसंनिकर्षत्वेन [5]तत्र विशेष्यसंनिकर्षस्य हेतुत्वम्। तथा च तस्मिन् सति विशेषकारणविलम्बेन [6]कार्याविलम्बान्न तथा हेतुत्वमिति, तदा प्रकृतेऽपि तुल्यमिति भावः।

विजातीयकारणजन्यत्वमेव विवक्षितम्, न तु विजातीयकारणतावच्छेदकावच्छिन्नजन्यत्वमित्यभिप्रेत्याह—तथापीति। न चैवमपि दोषाभावेनार्थान्तरमिति वाच्यम्। भावत्वस्यापि कारणविशेषणत्वादिति भावः।

---

1. ख. संनिकर्षाद्विजातीयो
2. ख. नोक्तदोष इति भावः।
3. क. तज्जातीयानियतबीजोपा-
4. क. गुणकारणसिद्ध्य-
   ख. गुणकारणत्वसिद्ध्यनङ्गत्वे-
5. ग. तस्य
6. ख. कार्यविलम्बात्

अपि चानित्यप्रमात्वं कार्यतावच्छेदकम्, बाधकं विना कार्यमात्रवृत्तिधर्मत्वात्, अप्रमात्ववत्।

---

**प्रकाशः**

जातीयपदमर्थान्तर[1]निरासाय। अप्रमाप्रतिबन्धकव्यक्तिविशेषस्यानुकूलत्वेऽपि यतः प्रतिबन्धकजातीयत्वाभावोऽतो न सिद्धसाधनमित्याहुः।

घटादौ स्वविरोध्यनुभवाप्रसिद्ध्यैव [2]व्याप्यत्वासिद्धिः स्यादित्यत आह—अनुभवेति। अनित्यप्रमात्वमिति।

नन्वत्र [3]पक्षे साध्यप्रसिद्धिं विना [4]बाधकं विनेत्यसिद्धम्। तत्सिद्धौ (वा) [च] तन्मात्रस्यैव गमकत्वे शेषवैयर्थ्यमिति चेत्—

---

**न्यायशिखामणिः**

नन्ववच्छेदकौदासीन्येन साध्यकरणे व्यक्तिविशेषेणार्थान्तरतादवस्थ्यम्। [5]तत्तद्व्यक्तित्वेन [6]विजातीयस्य विशेषणसंनिकर्षादेस्तेन [7]रूपेणाकारणत्वेऽपि [8]भ्रमकारणसाधारणरूपेण कारणत्वादित्यरुच्या मणावनुमानान्तरमुक्तम्। तत्र जातीयपदस्य उपाध्यायोक्तं प्रयोजनमाह—अत्रेति। न च तत्तद्व्यक्तीनां नानात्वेनाननुगतत्वान्न प्रतिबन्धकत्वमिति वाच्यम्। [9]प्रतिबध्यानुगमे हि प्रतिबन्धकाननुगमो दोषः। न चात्र तथा, तत्तदप्रमाव्यक्तीनामेव प्रतिबध्यत्वात्। न च प्रतिबन्धकतावच्छेदकजात्याश्रयत्वं न तज्जातीयत्वम्। दोषत्वादेर्जातित्वनिरासात्। न च तदवच्छेदकधर्मावच्छिन्नत्वम्, तत्तद्व्यक्तित्वस्यापि तथात्वादिति वाच्यम्। यत्रैकजातीयं प्रति नाना प्रतिबन्धकं तत्र परस्परव्यभिचारपरिहाराय प्रतिबन्धकतावच्छेदकापेक्षा। प्रकृते च एकैकाप्रमाव्यक्तिविशेषं प्रति एकैकस्य [10]प्रमाकारणव्यक्तिविशेषस्यैव तथात्वान्न तदपेक्षेति भावः।

---

1. ख. °वारणाय
2. ख. साध्यत्वासिद्धिः
3. ख. 'पक्षे' नास्ति।
4. ख. साधकं
5. क. तद्व्यक्तित्वेन
6. ख. विजातीयत्वस्य
7. ग. रूपेण कारणत्वे
8. ग. 'भ्रम' नास्ति।
9. ख. प्रतिबन्धानु-
10. ख. प्रमाकरण-

**प्रकाशः**

अत्राहुः— [1]अवच्छेदकान्तरोपपन्नकार्यत्वाधिकरणत्वरूपबाधक-स्वावच्छिन्नकार्यताप्रतियोगिकारणत्वासंभवरूपबाधकाभावे सति कार्यमात्रवृत्तित्वादित्यर्थः। तथा च सत्यन्तेन विशेषणद्वयेन [2]नीलघटत्वादौ पटानित्यज्ञानत्वादौ च व्यभिचारे निरस्ते ज्ञानत्वादौ व्यभिचारवारणायाग्रिमपदम्।

---

**न्यायशिखामणिः**

ननु क्वचित्कश्चिद्दोष इत्यभ्युपगमेन [3]यत्राप्रमाकारणमेव प्रमाविशेषे प्रतिबन्धकं तत्र प्रतिबन्धकतावच्छेदकानपेक्षणे [4]तज्जन्याप्रमाविशेषे व्यभिचारः, जातीयपदपरित्यागे च अर्थान्तरं तदवस्थमित्यस्वरसात् मणौ— अपि चेत्युक्तमिति द्रष्टव्यम्। साध्यप्रसिद्धिं विनेति। साध्यासिद्धावनुगतकारणानिश्चयात्तदभावरूपबाधकसंदेहेन तत्सामान्याभावगर्भहेतोरज्ञानासिद्धिरित्यर्थः। न चानुगतकारणाभावव्यतिरिक्तबाधकाभाव एव हेतुविशेषणम्। तथा सति घटानित्यज्ञानत्वादौ [5]व्यभिचारादिति भावः। अभ्युपेत्याह—तत्सिद्धौ चेति।

जयदेवमतमाह—अत्रेति। अवच्छेदकान्तरेति।

अत्रेदमालोचनीयम् — अनित्यप्रमात्वस्याप्यनित्यज्ञानत्वरूपावच्छेदकान्तरोपपन्नकार्यताश्रय[6]वृत्तित्वेन तदभाव[7]गर्भहेतोः स्वरूपासिद्धिः, ज्ञानत्ववारकविशेष्यवैयर्थ्यं च। मात्रपदोपादाने च तेन कार्त्स्न्याभिधाने नीलघटत्वस्यापि [8]तादृशकार्यताश्रययावद्घटवृत्तित्वाभावेन तत्र व्यभिचारतादवस्थ्यम्। [9]व्यवच्छेदाभिधाने [10]स्वरूपासिद्धिः। घटानित्य[11]ज्ञानत्वस्यानित्यज्ञानत्वावच्छिन्नकार्यत्वाश्रयातिरिक्तावृत्तित्वेन तद्वारकविशेषणवैयर्थ्यं च।

ननु स्वाधिकरणमात्रवृत्तित्वमवच्छेदकान्तरविशेषणम्। अनित्यज्ञानत्वादेश्च स्वानधिकरणभ्रान्तिज्ञानेऽपि सत्त्वान्नासिद्धिः। एतद्घटप्रागभावत्वावच्छिन्न-

---

1. ख. कार्यतावच्छेदकान्तरो-
2. क. नीलघटत्वपटा-
3. ख. यत्र प्रमाकारणमेकमेवाप्रमा-
4. क. 'तज्जन्य' इत्यतः प्राक् 'भ्रमकारणसाधारण' इत्यधिकपाठः। ख. तज्जन्यप्रमा-
5. ख. व्यभिचार इति।
6. ख. ०व्यक्तित्वेन
7. ख. ०ग्रहहेतोः
8. ख. कार्यतादृशकार्यता-
9. क. व्यवच्छेदोक्तौ
10. क. 'स्वरूपासिद्धिः' नास्ति।
11. क. ०ज्ञानस्य घटनित्यज्ञानत्वा-

न्यायशिखामणिः

कारणताप्रतियोगिककार्यत्वावच्छेदकस्य [1]एतद्घटत्वस्य स्वाधिकरणमात्रवृत्तित्वान्न नीलघटत्वे व्यभिचारोऽपीति चेत्—न ।

स्वाधिकरणमात्रवृत्ति चाक्षुषप्रमात्वावच्छिन्नकार्यताश्रयवृत्तित्वेनासिद्धितादवस्थ्यात् । न चैतन्मते [2]प्रमामात्रे परमेश्वरज्ञानस्यानुगतगुणस्याङ्गीकारेणाननुगतगुणाकल्पनान्न तत्कार्यतावच्छेदकमिति वाच्यम् । तथाप्येतद्घटप्रमाप्रागभावत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकस्यैतद्घटप्रमात्वस्य स्वाधिकरणमात्रवृत्तित्वेन दोषतादवस्थ्यात् ।

किं च एतद्घटानित्यज्ञानत्वस्य स्वप्रागभावकार्यतावच्छेदकस्य घटानित्यज्ञानत्वाधिकरणातिरिक्तावृत्तितया घटानित्यज्ञानत्वादावेतद्विशेषणेनैव व्यभिचारवारणे तद्वारकविशेषणान्तरवैयर्थ्यम्, ज्ञानत्ववारकविशेष्यवैयर्थ्यं च ।

अपि च स्वावच्छिन्नेत्यादिविशेषणदानेऽपि घटानित्यज्ञानत्वादौ व्यभिचारः । मात्रपदस्य यावदर्थकत्वे घटानित्यज्ञानत्वावच्छिन्न[3]यावत्कार्यवृत्त्यनित्यज्ञानत्वावच्छिन्नप्रतियोगिककारणताश्रयस्यात्ममनोयोगादेः संभवेन तदसंभवरूपबाधकाभावात् मात्रपदेन व्यवच्छेदाभिधाने नीलघटत्वावच्छिन्नकार्यमात्रवृत्तिकार्यतानिरूपितकारणताश्रयासंभवेन तत्र स्वावच्छिन्नेत्यादिविशेषणेनैव [4]तद्वारणे तद्वारकविशेषणान्तरवैयर्थ्यम् ।

न च स्वावच्छिन्ननील[5]घटातिरिक्तावृत्त्येतद्घटत्वावच्छिन्नकारणस्यैतद्घटप्रागभावस्य सत्त्वेन द्वितीयविशेषणान्न तन्निरास इति वाच्यम् । कार्ये यावत्त्वविशेषणस्यावश्यकत्वात् । अन्यथा एतद्घटज्ञानप्रागभावस्य तादृशस्य संभवेन घटानित्यज्ञानत्वादौ व्यभिचारतादवस्थ्यात् । तस्मादेतदसंगतमिति ।

अत्र ब्रूमः । स्वसमनियतावच्छेदकान्तरावच्छिन्नकार्यताश्रयवृत्तित्वमिह बाधकत्वेन विवक्षितम् । तथा चैतद्घटप्रमात्वस्यानित्यप्रमात्वव्याप्यत्वेऽपि अव्यापकत्वात् अनित्यज्ञानत्वस्य चैतद्व्यापकस्यैतदव्याप्यत्वान्नासिद्धिः । न चैवं नीलघटत्वेऽपि विवक्षितबाधकाभावसत्त्वेन व्यभिचारतादवस्थ्यमिति [6]वाच्यम् । स्वावच्छि-

---

1. ख. तद्घटत्वस्य
2. ख. प्रमात्वे
3. ग. ॰यावत्कार्यव्यक्त्यवृत्त्यज्ञानत्वावच्छिन्न-
4. क. दोषवारणे
5. ख. घटावृत्त्येतद्घट-
6. ख. घ. ॰मिति चेन्न ।

### प्रकाशः

एवमपि बाधकान्तरेण कस्यचित्कार्यतावच्छेदकतया यदि [1]व्यभिचारशङ्का तदा तदभावेनापि हेतुर्विशेष्यः, न तु बाधकसामान्याभावो हेतुविशेषणम् येन विशेष्यवैयर्थ्यं स्यादित्यवधेयम् ।

नन्वेवं ज्ञानत्वादौ [2]नित्यवृत्तितया स्वावच्छिन्नकार्यताप्रतियोगिककारणासंभवात् पूर्वप्रतीकेनैव व्यभिचार[3]वारणात् शेषवैयर्थ्यं तदवस्थमेवेति चेत्—न । स्वावच्छिन्नकार्यमात्रवृत्तिकार्यताप्रतियोगि[4]कारणासंभवस्यैव विवक्षितत्वात् । ज्ञान-

---

### न्यायशिखामणिः

त्वयावत्कार्यमात्रवृत्तिकार्यतानिरूपितकारणताश्रयासंभवरूपबाधकसत्त्वेन हेत्वभावस्यापि सत्त्वात् । तर्हि विशेषणान्तरवैयर्थ्यं दुर्वारमिति चेत्—न । स्वसमनियतावच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तिकम्बुग्रीवत्वादौ तस्य व्यभिचारवारकत्वात् । न चावच्छेदकत्व[5]मन्यूनानतिरिक्तवृत्तित्वम्, तथा चाभिधेयानित्यप्रमात्वमनित्यप्रमात्वात्यन्ताभावानधिकरणत्वं च तादृशं तत्समनियतमस्तीति उक्त[6]बाधकाभावासिद्धिस्तत्रेति वाच्यम् । लघुत्वस्याप्यवच्छेदकान्तरविशेषणत्वात् ।

एवं च नीलघटत्वाद्यावित्यत्रादिपदेन कम्बुग्रीवत्वादिपरिग्रहः । तथा च तत्र व्यभिचारवारणाय सत्यन्ते प्रथमविशेषणम्, नीलघटत्वे घटानित्यज्ञानत्वादौ च तद्वारणाय द्वितीयविशेषणमित्यवधेयम् ।

**बाधकान्तरेणेति** । एकव्यक्तित्वरूपेणेत्यर्थः । **कस्यचिदिति** । एतद्घटत्वादेरित्यर्थः । अत्र स्वाधिकरणमात्रवृत्तिलघ्ववच्छेदकान्तराभावेऽपि न स्वावच्छिन्नकार्यमात्रवृत्तिकार्यतानिरूपितकारणताश्रयः संभवति, दण्डादेर्घटमात्रकारणत्वात् । यदि चैतद्घटप्रागभावस्यात्रैव कारणत्वान्न[7] तादृशकारणताश्रयासंभवः, तदा तन्निरूपितकार्यतावच्छेदकमेतद्घटत्वमिति न व्यभिचारशङ्कावकाश इति सूचयति—**यदीति** । **तदभावेनेति** । एकव्यक्तित्वरूपबाधकाभावेनेत्यर्थः ।

---

1. क व्यभिचारस्तदा
2. क. 'नित्यवृत्तितया' नास्ति ।
3. ख. °वारणे
4. ख. °कारणतासंभवस्य विव-
5. ख. °अन्यून- नास्ति ।
6. क. बाधकाभावादसिद्धि-
7. ख. 'न' नास्ति ।

**प्रकाशः**

स्वावच्छिन्नं यावत्कार्यमस्मदादिज्ञानं तद्वृत्तिकार्यताप्रतियोगिककारणासंभवो नास्ति। आत्ममनोयोगादेस्तादृशकारणस्य संभवादिति।

ननु तथाप्यत्र बाधः। अनित्य[1]प्रमात्वं हि तदा कार्यतावच्छेदकं स्यात् यदि तदवच्छेद्यकार्यताप्रतियोगिककारणतावच्छेदकं किंचिदेकं स्यात्। न च तदस्ति। तद्गुणेषु गुणत्वस्य एकस्य तथाभूतस्याभावात्। तथा च हेतौ विशेषणासिद्धिरपि। एवं दोषत्वस्यापि तथाभूतस्याभावादप्रमात्वमपि न कार्यतावच्छेदकमिति [2]दृष्टान्तेऽपि साध्यवैकल्यमिति चेत्—

अत्र वदन्ति। एकमनुगतं नास्त्येव; तथा चेत्थमनुमानम्—अनित्यप्रमात्वं स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्ति स्वाधिकरणमात्रवृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववदित्यत्र तात्पर्यमिति।

---

**न्यायशिखामणिः**

उपाध्यायमतमाह—**अत्र वदन्तीति**। ननूच्यमानमप्यनुमानमनुगतगुणासाधकत्वान्न प्रकृतोपयोगीत्यत आह—**एकमिति**। 'प्रमामात्रे नानुगतो गुण' [3]इत्यग्रेऽभिधानात् जन्यप्रमासु [4]संभावितानुगततत्तद्गुण[5]जन्यत्वसिद्धिरेव प्रकृतेति भावः। **तथा चेति**। गुणजन्यत्वसिद्धि[6]मात्रस्य प्रकृतत्वे [7]निरुच्यमानमप्यनुमानं तदुपयोगि भवतीत्यर्थः। तादृशमेवानुमानं रचयति—**अनित्येति**। नित्यज्ञानाभ्युपगमदशायामिदमनुमानमिति बाधवारणाय पक्षे [8]अनित्यपदम्।

[9]नन्वेतत्प्रमाप्रागभावकार्यतावच्छेदकम् [10]एतत्प्रमात्वम्। तच्च स्वाधिकरणमात्रवृत्ति। तथा चानित्यप्रमात्वं तदवच्छिन्न[11]कार्यताश्रयमात्रवृत्तीति सिद्धसाधनम्। केचित्तु अनेकवृत्तित्वमवच्छेदकविशेषणम्, अतो नोक्तदोष इत्याहुः। तच्चि-

---

1. क. प्रमात्वे तदा
2. ख. दृष्टान्तोऽपि साध्यविकल इति
3. क. इत्यग्रिमग्रन्थाभिधानात्
4. ग. घ. संभावितानुगम-
5. क. 'जन्यत्व' नास्ति
6. ख. °मात्रत्वस्वस्य
7. ख. निरूप्यमाण-
8. क. अनित्येति पदम्
9. क. ननु तत्तद्घटप्रमा-
10. क. तत्तद्घटप्रमात्वम्। ख. तत्प्रमात्वम्।
11. क. °कार्यमात्र

न्यायशिखामणिः

न्त्यम्। एवं सति [1]तत्तद्व्यक्त्येत्यग्रिमदूषणानवकाशप्रसङ्गात्। एतद्धटत्वादौ व्यभिचाराच्चेति चेत्—न। भावकारणनिरूपितत्वस्य कार्यताविशेषणस्य विवक्षितत्वात्। न चैवमेतद्धटत्वादौ व्यभिचारः। हेतौ[2] यावत्त्वस्य कार्यविशेषणस्य दानात्। एतद्धटत्वादेश्च तादृशैककार्यमात्रवृत्तित्वात्।

साध्ये चानित्यप्रमात्वस्य तादृशानित्यज्ञानत्वावच्छिन्नकार्यताश्रयातिरिक्तावृत्तितया सिद्धसाधनवारणाय प्रथममात्रपदम्। [3]प्रत्यक्षप्रमामात्रे गुण[4]जन्यत्वसिद्ध्यापि [5]साध्यपर्यवसाने जन्यप्रमासु तज्जन्यत्वमभिमतं न सिद्ध्येदिति तद्वारणाय द्वितीयमात्रपदम्।

हेतौ [6]च स्वाधिकरणावृत्तिघटत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयतन्तुवेमादिमात्रानुत्पाद्यनीलघटादिरूपकार्यमात्रवृत्तितया हेतुमति, स्वाधिकरणमात्रवृत्तिभावकारणनिरूपितकार्यतावच्छेदकत्वाभावात् साध्याभाववति नीलघटत्वादौ [7]घटानित्यज्ञानत्वादौ च व्यभिचारवारणाय आद्यमात्रपदम्।

ननु तन्त्वादिमात्रानुत्पाद्यत्वं हि तदुत्पाद्यत्वे सति तदतिरिक्तोत्पाद्यत्वम्। नीलघटस्य चातथात्वेन [8]हेत्वभावान्न तद्धर्मे व्यभिचारः। न च [9]तदुत्पाद्यत्वविशिष्टतदतिरिक्तानुत्पाद्यत्वाभाव एव तन्मात्रानुत्पाद्यत्वम्। [10]नीलघटत्वादौ च विशेषणविशेष्योभयाभावसत्त्वेन [11]तादृशविशिष्टाभावोऽस्त्येवेति वाच्यम्। स्वपदस्यात्र समभिव्याहृतनीलघटत्वपरतया तद्घटितविशिष्टधर्मस्य प्रतियोगिन एवाप्रसिद्धेः। उत्पाद्यस्य सर्वस्य तादृशकारणताश्रयातिरिक्तेश्वराद्युत्पाद्यत्वादिति चेत्—न। स्वाधिकरणावृत्तित्वघटिततादृशकारणताश्रयातिरिक्तानुत्पाद्यं गगनादिप्रसिद्धं तद्भिन्नो नीलघट इति तत्र हेतुसत्त्वात्।

---

1. क. ग. तत्तद्व्यक्तीत्यग्रिम-
2. ख. भेदे
3. क. 'प्रत्यक्षमात्रे······द्वितीयमात्र पदं इति ग्रन्थस्त्रुटितः।
4. क. ०जन्यत्वसिद्धावपि
   ख. ०जन्यत्वासिद्ध्यापि
5. क. 'साध्य' नास्ति।
6. ख. 'च' इति नास्ति।
7. ख. पटानित्य-
8. क. 'हेत्वभावात्' नास्ति।
9. ख. तदुत्पाद्यविशिष्ट-
10. क. ग. नीलघटादौ
11. क. 'तादृश' नास्ति।

## न्यायशिखामणिः

ननु तत्पददानेऽप्येतद्घटप्रागभावस्य तादृशकारणताश्रयातिरिक्ततया तत्र हेतुसत्त्वेन व्यभिचारतादवस्थ्यम्। न च तत्प्रागभावो न [1]स्वाधिकरणमात्रकारणम्, स्वप्रत्यक्षेऽपि जनकत्वात्। तथा चायमपि तादृशकारणताश्रय इति [2]नीलघटस्य तन्मात्रोत्पाद्यत्वेन तद्धर्मे हेत्वभाव इति वाच्यम्। स्वाधिकरणमात्रावृत्तिपदेन स्वाधिकरणतदितरवृत्तेर्विवक्षितत्वात् तत्प्रागभावनिरूपितयोश्च [3]स्वप्रत्यक्षवृत्त्येतद्घटवृत्तिकार्यतयोः तादृशत्वाभावान्न हेत्वभाव इति चेत्—न। तादृशकारणताश्रयातिरिक्तभावानुत्पाद्यभिन्नस्य तेन विवक्षितत्वेन तत्र हेत्वगमनात्। अन्यथा स्वप्रागभावमादाय [4]तत्र पक्षे [5]हेत्वसत्त्वनिश्चयेन संदिग्धासिद्ध्यनवकाशात्। एवं चात्र [6]यावत्त्वविशेषणं न देयम्। एतद्घटत्वादावपि भावत्वघटितहेत्वभावात्।

केचित्तु द्वितीय[7]मात्रपदानुपादाने तादृशानित्यज्ञानत्वावच्छिन्नकारणात्ममनोयोगादिजन्य[8]प्रमामात्रवृत्तित्वादसिद्धिरिति तद्वारणाय तदुपादानमित्याहुः।

[9]तच्चिन्त्यम्। असिद्धिवारकविशेषणस्य व्याप्तिग्रहानुपयुक्तत्वेन व्यर्थत्वात्। हेतोरप्रसिद्धौ तत्प्रसिद्धिनिबन्धनासिद्धेरयोगाच्च। तस्मादप्रसिद्धिवारणायैव तदुपादानम्। तथाहि द्वितीयमात्रपदानुपादाने न तावत् [10]प्रमात्वे हेतुप्रसिद्धिः। [11]तादृशानित्यज्ञानत्वावच्छिन्न[12]कारणमनोयोगादि[13]जन्यप्रमामात्रवृत्तित्वात्। नापि [14]जन्यज्ञानत्वादौ तत्प्रसिद्धिः। [15]स्वाधिकरणमात्रावृत्तिकार्यतावच्छेदकाप्रसिद्धेः। अत एव न घटत्वादावपि। घटादेः कार्यसामान्यहेत्वदृष्टादिजन्यत्वात्। तद्दाने [16]त्वप्रमात्वादौ प्रसिद्धिः। तृतीयमात्रपदानुपादाने ज्ञानत्वादौ [17]तादृशकार्यता-

---

1. क. स्वाश्रयमात्र-
2. ख. नील एतद्घटस्य
3. ख. स्वप्रत्यक्षं प्रत्येतद्घट-
4. क. 'तत्र' नास्ति।
5. ख. हेतुसत्त्वनिश्चयेन
   ग. हेत्वनिश्चयेन
6. क. ख. यावद्विशेषणम्
7. ख. ग. घ. •मात्रानुपादाने
8. ख. •प्रमाणमात्र-
9. ख. 'तच्चिन्त्यम्' नास्ति।
10. घ. अप्रमात्वे
11. ख. तादृशनित्य-
12. क. •कारणात्ममनो-
13. ग. घ. •जन्याप्रमा-
14. ख. ग. घ. जन्यत्वादौ
15. ग. 'स्वाधिकरण……त्वप्रमात्वादौ प्रसिद्धिः' इति ग्रन्थः नास्ति।
16. क. त्वप्रमात्वादावेव
17. क. 'तादृश' नास्ति।

### प्रकाशः

तत्र । संदिग्धासिद्धेः । तत्तद्व्यक्त्या [1]अर्थान्तरत्वाच्चेत्याहुः ।

यत्तु विशेष्यवृत्तिविशेषणज्ञानत्वमनुगतं तद्धेतुतावच्छेदकम् । न चात्र मानाभावः । जन्यविशिष्टज्ञानसामान्ये विशेषणज्ञानत्वेन [2]हेतुतया विशेषयोरपि हेतुहेतुमद्भावावश्यंभावात्, यत्सामान्ये यत्सामान्यं [3]प्रयोजकमित्यादिन्यायात् । [4]न चाभावत्वस्य [5]सर्वथा अनुपस्थितस्यैव प्रकारत्वाभ्युपगमेन तद्विशिष्टाभाव-प्रत्यक्षे व्यभिचार इति वाच्यम् । सामान्ययोरप्येवं हेतुहेतुमद्भावानापत्तेरिति यथाश्रुतग्रन्थ एव साधुरिति ।

---

### न्यायशिखामणिः

श्रयमात्रवृत्तित्वाभावात्तादृशजन्यत्वावच्छिन्नकारणादृष्टादिमात्रानुत्पाद्यानित्यज्ञानरूप - कार्यवृत्तित्वाच्च व्यभिचार इति तन्निरासाय तदुपात्तम् । [6]कार्यपदं तु स्वरूप-कथनार्थम् ।

[7]केचित्तु नित्यज्ञानस्यापि तादृशादृष्टादिमात्रानुत्पाद्यतया [8]ज्ञानत्वे हेतु-सत्त्वेन व्यभिचारतादवस्थ्यमिति तद्वारणाय कार्यपदमित्याहुः । [9]तच्चिन्त्यम् । [10]विशिष्टाभावविवक्षया हि तत्र हेतुसत्त्वम् । सा च प्रतियोग्यप्रसिद्ध्या न संभवती-त्युक्तम् । [11]न चैवमपि कम्बुग्रीवादिमत्त्वादौ व्यभिचारः । साध्यस्यापि सत्त्वात् ।

तत्र प्रगल्भोक्तं दोषमाह—तत्रेति । अत्र कृतकत्वादिवत् प्रसाध्याङ्कक-त्वान्नासिद्धिरिति नरहरिमिश्रोक्तं न युक्तम् । यत्र प्रकृतसाध्यसिद्धिं विना प्रमाणा-न्तरेण हेतुः साध्यते तत्र प्रसाध्याङ्ककता [12]औचित्यात् । कृतकत्वादेश्च उत्पन्नो गकार इति प्रतीतिसिद्धत्वात् तथात्वम् । न चेह [13]साध्यसिद्धिं विना हेतोः साधकं प्रमाणान्तरमस्ति येन तथा स्यादिति । तत्तदिति । एतच्चापाततः । लाघवसह-

---

1. ख. अर्थान्तरादित्याहुः
2. क. हेतुना तथा
3. क. 'प्रयोजकं' नास्ति
4. ख. न च भावत्वस्य
5. ख. पूर्वानुपस्थित-
6. क. ग. 'कार्यपदं तु स्वरूपकथनार्थम्' इति ग्रन्थो नास्ति ।
7. क. ग. 'केचित्तु' नास्ति
8. क. ज्ञानत्वहेतुत्वसत्त्वेन
9. क. ख. ग. 'तच्चिन्त्यम्' नास्ति ।
10. क. ग. 'विशिष्टाभावविवक्षया···न संभवतीत्युक्तम्' इति ग्रन्थो नास्ति ।
11. क. नन्वेवमपि
12. क. 'औचित्यात्' नास्ति ।
13. ग. साध्यप्रसिद्धिं

### प्रकाशः

तन्न। लोहितः स्फटिक इत्यत्र लौहित्यसाक्षात्संबन्धविषयकभ्रमे [1]व्यभिचारात्। लौहित्यरूपविशेषणस्य परंपरासंबन्धेन विशेष्यवृत्तित्वात्। न च यत्संबन्धविषयकप्रमायां तत्संबन्धेन विशेष्यवृत्ति यद्विशेषणं [2]तज्ज्ञानत्वेन हेतुतेति वाच्यम्। एवं हि [3]तत्संबन्धविषयतद्विशेषण[4]विशेष्यप्रमात्वं कार्यतावच्छेदकं, तत्संबन्धेन तद्विशेष्यवृत्तिविशेषणज्ञानत्वं कारणतावच्छेदकमिति [5]यथाश्रुते बाध एव। किं च प्रतिबन्द्या अनुत्तरत्वात् अभावत्वविशिष्टप्रत्यक्षव्यभिचार एवेति।

---

### न्यायशिखामणिः

कृतानुमानेन यावत्यनुगतगुणसंभवस्तावत्येकधर्मस्य[6] कार्यतावच्छेदकत्वसाधनेन तत्तव्यक्तित्वानामेकैकव्यक्तिमात्रवृत्तिधर्माणां चैतदनुमितिविषयत्वायोगात् तत्तव्यक्तित्वस्य कार्यतावच्छेदकत्वनिरासाच्च। अत एवेश्वरानुमाने जीवानादाय नार्थान्तरमिति वक्ष्यते।

प्रगल्भमतमाह—यत्त्विति। विशेष्यवृत्तीति।

ननु विशेष्यवृत्तिविशेषणज्ञानत्वमपि न [7]हेतुतावच्छेदकम्। '[8]घटे घटत्वम्' 'गगने गगनत्वम्' इत्यादिविशिष्टप्रमास्थले तदभावात्। न च विशेष्यवृत्ति[9]संबन्धप्रतियोगिविशेषणज्ञानत्वं तत्साधारण[10]मिह विवक्षितमिति वाच्यम्। तथापि घटत्वे घट इत्यादिभ्रमेऽन्वयव्यभिचारादिति चेत्—न। ग्राह्यसंबन्धस्य विवक्षितत्वात्। तत्र च [11]घटवृत्तिघटत्वप्रतियोगिकसमवायो न ग्राह्यः। किं त्वन्य एवाधाराधेयभावः। अन्यथा विद्यमानसंबन्धविषयत्वेन तस्यापि प्रमात्वापत्तेरिति भावः।

किं ग्राह्यत्वमात्रं संबन्धस्याभिमतम् उत तज्ज्ञानग्राह्यत्वम्। तत्राद्यं निराकरोति—लोहित इति। परंपरासंबन्धेनेति। तस्यापि परमेश्वरज्ञानग्राह्यत्वा-

---

1. ख. अन्वयव्यभिचारात्
2. क. तज्ज्ञानत्वहेतुतेति
3. ख. तत्संबन्धिविषयक-
4. ख. ०विशेष्यक-
5. ख. 'यथाश्रुते' इत्यतः पूर्वं 'अननुगमेन' इति पाठः।
6. ख. तावत्येव धर्मस्य
7. क. जनकतावच्छेदकम्
8. क. 'घटे घटत्वम्' नास्ति।
9. ख. घ. ०संबन्धि-
10. क. 'इह विवक्षितम्' इति नास्ति
11. ख. ग. घ. 'घटवृत्ति' नास्ति।

## प्रकाशः

अन्ये तु [1]शाब्दप्रमायां ग्राह्यविशेषस्य वाक्यार्थस्य प्रमा हेतुरिति [2]प्रमासामान्यग्राह्यप्रमासामान्ययोर्हेतुहेतुमद्भावावश्यंभावः यद्विशेषयोरिति न्यायादित्याहुः ।

तच्चिन्त्यम् । ग्राह्यप्रमामात्रस्यातिप्रसक्ततया यत्र यत् ग्राह्यं तत्र तत्प्रमा हेतुर्वाच्या । तथा च तद्ग्राह्यप्रमायां तद्ग्राह्यप्रमा हेतुरित्यननुगमात् 'प्रमामात्रे नानुगतो गुण' इत्यग्रिमग्रन्थविरोधात् ।

---

## न्यायशिखामणिः

दिति भावः । द्वितीयमनूद्य दूषयति—**न चेति** । **तत्संबन्धेनेति** । तज्ज्ञानग्राह्यसंबन्धेनेत्यर्थः । अत्र रजतत्वस्य तत्संबन्धेन रजतरूपविशेष्यवृत्तितया तज्ज्ञानजन्यभ्रमस्य प्रमात्ववारणाय विशेष्ये तत्पदोपादानम् । तत्संबन्धेन तद्विशेष्यवृत्तिस्फटिकत्वरूपविशेषणान्तरज्ञानसत्त्वात् दोषतादवस्थ्यवारणाय विशेषणे तदुपादानमिति ध्येयम् ।

ननु विशेष्यवृत्तिसंबन्धप्रतियोगिविशेषणज्ञानं विशिष्ट[3]प्रमामात्रे हेतुः । न चान्वयव्यभिचारः । तद्विशेष्यवृत्तितत्संबन्धप्रतियोगितद्विशेषणज्ञानं [4]विशेषसामग्री । सामान्यसामग्र्याश्च तामादायैव कार्यजनकत्वादित्यरुचेराह—**किं चेति** । **अभावविशिष्टेति** । यद्यप्यभावरूपविशेष्यवृत्तिसंबन्धनिरूपकप्रतियोगिरूपविशेषणज्ञानस्यात्रापि सत्त्वान्न व्यभिचारः । तथापि तद्विशेष्यवृत्तितद्विशेषणज्ञानव्यतिरेकेऽपि तत्संबन्धविषयकतद्विशेषण[5]विशेष्यकप्रमाजननात् [6]तां प्रति न तद्धेतुरिति भावः । इदमप्यापाततः—[7]अभावत्वनिर्विकल्पकस्यापि साधनात् तत्र [8]निर्विकल्पकानभ्युपगमे [9]वा व्यभिचारनिरासायाभावत्वाप्रकारकतत्संबन्धादिविषयकप्रमात्वं तत्कार्यतावच्छेदकं कल्प्यत इति न विशेषसामग्रीव्यभिचारः ।

---

1. क. शब्दप्रमायां
2. ख. तत्सामान्ये ग्राह्यं प्रमासामान्यमीश्वरस्यैव गुणः यद्विशेषयोः कार्यकारणभावादिति न्यायादित्याहुः ।
3. क. ०प्रमाहेतुः
4. ख. विशेषणसामग्री
5. ख. घ. ०विशेष्यप्रमा-
6. ख. तत्प्रति
7. ख. गङ्गावत्त्व-
8. ख. तन्निर्विकल्पका-
9. क. 'वा व्यभिचार'.....'विशेषसामग्रीव्यभिचारः' इति ग्रन्थो नास्ति ।

### प्रकाशः

अप्रमात्वदृष्टान्ते साध्यवैकल्यस्य तथाप्यनुद्धाराच्च। न चाप्रमात्वपदं तत्तदप्रमात्वपरमिति वाच्यम्। एवं च प्रमात्वपदमपि तत्तत्प्रमात्वपरमेवास्तु किमनुगत[1]गुणग्रहणेन। न चैवमप्यनुगतस्य [2]प्रमाहेतुत्व इति पूर्वोक्तग्रन्थविरोध इति वाच्यम्। प्रत्यक्षादिप्रमायां भूयोवयवेन्द्रियसंनिकर्षादेः प्रत्येकमनुगतस्यैव हेतुत्वमित्येवंपरत्वेनाप्युपपत्तेः। तस्मादनित्यप्रमात्वपदेनानित्यसाक्षात्कारिप्रमात्वादिकमेव विवक्षितमित्येव तत्त्वमिति।

---

### न्यायशिखामणिः

जयदेवमतमाह—**अन्ये त्विति। ग्राह्यप्रमा[3]सामान्ययोरिति।** नन्वीश्वरज्ञानमनित्यप्रमायां न तत्त्वेन जनकं मानाभावादिति चेत्—न। (उक्तानुमानस्य) सर्वानित्यप्रमा ग्राह्यप्रमाजन्या अनित्यप्रमात्वात् शाब्दप्रमावत् इत्यनुमानस्यैव तत्र प्रमाणत्वात्। न च शाब्दप्रमायां वाक्यार्थप्रमात्वेन हेतुत्वग्रहेऽप्यनित्यप्रमात्वेन रूपेण कार्यत्वस्य ग्राह्यप्रमात्वेन कारणत्वस्य च तत्राग्रहादप्रयोजको हेतुरिति वाच्यम्। यद्विशेषयोरिति **न्यायेन** कर्तृकार्ययोरिव ग्राह्यप्रमानित्यप्रमयोः कार्यकारणभावग्रहे विरोधाभावात्। तथा चाभावप्रमायामपि सैव हेतुरिति [4]यथाश्रुतग्रन्थ एव साधुरिति भावः।

तत्र **नरहरिमिश्रोक्त**दोषमाह—**तच्चिन्त्यमिति। अतिप्रसक्ततयेति।** रजते रजतत्वप्रकारकेश्वरज्ञानस्य प्रमात्वेन [5]तज्जन्यं शुक्तिरजतज्ञानमपि प्रमा स्यादित्यर्थः। ननु ग्राह्यप्रमासामान्यं [6]प्रमासामान्ये हेतुः। तद्ग्राह्य[7]प्रमा तु विशेषसामग्रीति नातिप्रसङ्ग इत्यरुचेराह— **प्रमामात्र** इति।

नन्वनुगतस्य प्रमाहेतुत्व इति पूर्वग्रन्थपर्यालोचनया अनित्यप्रमात्वं कार्यतावच्छेदकमित्येतदालोचनया च न केवलं [8]प्रमामात्र एवानुगतगुणो हेतुः किं तु प्रत्यक्षादिप्रमायामपि भूयोवयवेन्द्रियसंनिकर्षादिर्यथायथमनुगतो हेतुरित्यर्थकतयैव

---

1. ख. 'गुण' नास्ति।
2. ख. प्रमाहेतुत्वमिति
3. ख. °प्रमासामान्यमिति।
4. ख. यथाश्रुत एव ग्रन्थः
5. क. तदजन्यं
6. क. ग. प्रमासामान्यहेतुः
7. ख. °प्रमायां तु
8. ख. प्रमात्व एव

**नीलघटत्वं तु विशिष्टं न कार्यतावच्छेदकम्, प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टसिद्धिरर्थः समाजः। घटज्ञानत्वादौ तु बाधकम्। अस्तु वा तत्राप्यनुगतभोजकाददृष्टहेतुकत्वम्। अन्यथा कार्यमात्रे नादृष्टं हेतुः स्यात्।**

---

**प्रकाशः**

केचित्तु यथा [1]गुणत्वमननुगतं तथा प्रमात्वमपि। तथा च घटानित्यप्रमात्वमपि कार्यतावच्छेदकमिति साध्यम्। [2]तत्र चादृष्टरूपो गुणोऽनुगत इत्याहुः।

**प्रत्येकेति**। तथा चावच्छेदकान्तरोपपन्नकार्यत्वाधि[3]करणरूपबाधकसत्त्वान्नात्र व्यभिचार इत्यर्थः। **घटज्ञानत्वादाविति**। घटानित्यज्ञानत्वादौ स्वावच्छिन्नकार्यताप्रतियोगिककारणतासंभवरूपबाधकसत्त्वान्न व्यभिचार इत्यर्थः। **अस्तु वेति**। तथा च घटानित्यज्ञानत्वादौ कार्यतावच्छेदकत्वस्वरूपकार्यसत्त्वान्न

---

**न्यायशिखामणिः**

[4]तद्ग्रन्थोपपत्तिरित्यपरितोषादाह—[5]**अप्रमात्वेति**। एतदप्यापाततः। अप्रमात्वपदेन प्रमातिरिक्तवृत्तिघटत्वस्याभिधानेन तस्यैव दृष्टान्तत्वात्। न चैवमप्यप्रमात्वे व्यभिचार इति वाच्यम्। **स्वावच्छिन्ने**त्यादिबाधकपरत्वेन हेत्वभावस्यापि सत्त्वात्। एवं [6]चाप्रमात्वपदस्य [7]तत्तदप्रमात्वपरत्वकल्पनं प्रमापदस्य प्रत्यक्षादिप्रमापरत्वकल्पनं निरवकाशम्। मुख्यार्थपरित्यागे [8]कारणाभावात्।

[9]वस्तुतः प्रमात्वं तद्वति तत्प्रकारक[10]ज्ञानत्वम्। तच्च यत्तद्घटितमूर्तितयाननुगतत्वान्न कार्यतावच्छेदकमित्यत्र तात्पर्यम्। तदीयं मतान्तरमाह—**तस्मादिति**।

ननु [11]साक्षात्कारिप्रमायामपि नानुगतो [12]गुणः। भूयोवयवेन्द्रियसंनिकर्षादेरात्मरूपादिप्रत्यक्षाव्यापनादित्यस्वरसात् **नव्यहरिमतमाह—केचित्त्विति**। न च

---

1. ख. गुणत्वमनुगतं
2. ख. तत्र तादृश एव गुण इत्याहुः।
3. ख. ०करणत्वरूप-
4. ख. ख. घ. एतद्ग्रन्थो-
   ग. तत्पूर्वग्रन्थो-
5. ख. प्रमात्वेति।
6. क. ग. घ. चानित्यप्रमात्व-
7. क. घ. तत्तत्प्रमात्व-
   ग. तत्तत्प्रमात्वपरिकल्पनं
8. ग. मानाभावात्
9. क. वस्तुतस्तु
10. क. 'ज्ञान' नास्ति।
11. ख. साक्षात्कारप्रमा-
12. क. हेतुः

प्रकाशः

व्यभिचार इत्यर्थः। [1]एतच्चाभ्युच्चयेनोक्तम्। वस्तुतोऽदृष्टस्य कार्यमात्रहेतुत्वेऽपि घटानित्यज्ञानत्वादेस्तन्निरूपितकार्यतावच्छेदकत्वे मानाभावः। अन्यथा प्रकृतानुमानेऽपि तेनैवार्थान्तरं स्यात्। न च प्रकृतानुमाने दोषाभावेनार्थान्तरम्, गौरवात्। अनुगतस्य तस्याप्यभावाच्चेत्याहुः।

---

न्यायशिखामणिः

घटानित्यप्रमाया अपि प्रत्यक्षानुमित्यादिरूपत्वेन तत्रापि नानुगतो गुणः संभवतीति वाच्यम्। [2]तत्राप्यनुगतमदृष्टमन्यद्वा इत्यग्रे वक्ष्यमाणत्वादिति भावः। **अवच्छेदकान्तरेति**। एतच्च स्वसमनियतपदानन्तर्भावाभिप्रायेण। वस्तुतस्तदन्तर्भावावश्यंभावात् नीलघटत्वादौ स्वावच्छिन्नेत्यादिबाधकसत्त्वेन हेत्वभाव इत्यत्र तात्पर्यम्।

ननु घटज्ञानत्वादेर्नित्यवृत्तितया कार्यमात्रवृत्तित्वाभावादेव न व्यभिचार इति किं बाधकवर्णनेन। घटानित्य[3]ज्ञानत्वपरत्वे च तत्र स्वसमनियतलघ्ववच्छेदकान्तरावच्छिन्नकार्यताश्रयवृत्तित्वरूपबाधकाभावसत्त्वेन व्यभिचारः स्यादित्यत आह—**घटेति**।

नन्वदृष्टविशेषस्य नीलघटत्वावच्छिन्ने हेतुत्वमुक्तमयुक्तम्। प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टकार्यसिद्धेरित्याशङ्क्य, तत्रापीत्यनेनाव्यवहितघटानित्य[4]ज्ञानत्वस्यैव परामर्शः। तत्र च साध्यसत्त्वादेव न व्यभिचार इत्याह—**तथा चेति**।

ननु घटानित्यज्ञानत्वावच्छिन्नं [5]विचित्रकारणजन्यं विचित्रकार्यत्वात् घटवदित्यनुमानं तत्र मानम्। न चैवमदृष्टस्य कार्यमात्रहेतुत्वं विरुध्येतेति वाच्यम्। सुखदुःखादिविचित्रकार्ये तस्य विशेषरूपेणापि हेतुत्वाभ्युपगमादित्यत आह—**अन्यथेति**। **प्रकृतेति**। यदि च सुखदुःखादिवैचित्र्यस्य जातिविशेषस्याकस्मिकत्वपरिहारायादृष्टविशेषस्य [6]हेतुत्वकल्पनेऽपि [7]नानित्यप्रमामात्रे तस्य हेतुत्वकल्पनम्। तस्य जातित्वाभावात्, उपाधिरूपस्य च तस्य नानात्वेनानुगतत्वाभावात् [8]स्थूलावयव्यादिप्रत्यक्षेऽदृष्टस्यैव गुणान्तरस्य वक्ष्यमाणत्वान्न तत्रापि तत्कल्पनमिति

---

1. ख. एतच्चाभ्युपेत्योक्तम्
2. क. तत्राप्यनुगतस्य कारणत्वमिति वक्ष्यमाण-
3. ग. ॰ज्ञानपरत्वे
4. ख. ग. घ. ॰ज्ञानस्यैव
5. ग. 'विचित्रकारणजन्यं......सुखदुःखादि' इति ग्रन्थस्त्रुटितः।
6. क. ख. हेतुकल्पने
7. ख. नानित्यप्रमात्वे
8. ख. स्थूलावयवादि-

एवमनित्यप्रमात्वम् अनित्यज्ञानत्वावच्छिन्नकार्यत्वप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वात् अप्रमात्ववत् इत्यनित्यप्रमायामप्रमाव्यावृत्तानुगतहेतुसिद्धिः। अन्यथा अनुगतकार्यानुपपत्तेः।

तथा अनित्यप्रमात्वम् अप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, भ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत्। चाक्षुषप्रमात्वं चाक्षुषाप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, चाक्षुषभ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत्। अनित्यरजतप्रमात्वं रजताप्रमाकारणतावच्छेदकरूपानवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, रजतभ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत्।

---

### प्रकाशः

अनित्यज्ञानत्वव्याप्येति। अनित्यज्ञानत्वभिन्नकार्यतावच्छेदकधर्मत्वादित्यर्थः। चाक्षुषभ्रमावृत्तीति। अत्र चाक्षुषपदं संपातायातम्। एवं रजतभ्रमावृत्तीत्यत्रापि रजतपदं तथैवेति ध्येयम्। चाक्षुषप्रमात्वस्य नीलघटत्ववदार्थसमाजमहिम्नैवोपपन्नत्वात् अवच्छेदकत्वे साधकं चिन्त्यमिति केचिदाहुः।

---

### न्यायशिखामणिः

तदा घटविषयत्वप्रयोजकं घटेन्द्रियसंनिकर्षादि, [1]अनित्यज्ञानत्वप्रयोजकमात्ममनोयोगादीति [2]दृष्टप्रयोजकद्वयादेव विशिष्टसिद्धेर्नादृष्टकल्पनावकाश इति तुल्यमिति भावः।

[3]नन्वभेदेऽपि व्याप्तिस्वीकारात् अनित्यज्ञानत्वे व्यभिचार इत्यत आह—[4]अनित्येति। संपातेति। भ्रमावृत्तिरित्यनेनैवाप्रमात्वे व्यभिचारनिरासादिति भावः। [5]अर्थेति। तथा च बाधकसत्त्वात् नीलघटत्ववत् चाक्षुषत्वादिघटितं नावच्छेदकमिति भावः।

---

1. ख. 'अनित्य' नास्ति।
2. क. दृष्टद्वयप्रयोजक-
3. ग. ननु भेदेऽपि
4. घ. नित्येति।
5. ख. 'अर्थेति' इति नास्ति।

अन्यथा नियामकं विना चाक्षुषादिरजतज्ञानं किंचिद्रजतवृत्तिप्रकारकं किंचिद्रजतावृत्तिप्रकारकमिति नियमो न स्यात् । ज्ञानसामग्र्यास्तुल्यत्वात् ।

यत्तु प्रमाया असाधारणकारणजन्यत्वे साध्ये प्रमान्यत्वमुपाधिः । न च पक्षेतरत्वम् । तव ईश्वरज्ञानस्य प्रमात्वात् पक्षस्य व्यावर्त्यत्वात् । उभयसिद्धव्यावर्तकत्वं तन्त्रम्, न तु व्यावर्त्यस्य उभयसिद्धिः, गौरवात् । व्यतिरेकेऽसाधारणत्वं च पक्षेतरत्वस्यानुपाधित्वे बीजम् । तच्चात्र नास्ति । भगवज्ज्ञानस्य त्वत्संमतस्य सपक्षत्वादिति ।

प्रकाशः

तवेति । नैयायिकस्येत्यर्थः । तव जन्यप्रमामात्रस्य पक्षत्वात् ईश्वरप्रमाया अपि [1]व्यावर्त्यत्वेन [2]पक्षमात्रव्यावर्तकाभावेन [कत्वाभावेन]पक्षेतरत्वाभावादिति भावः । पक्षस्येति । न च [3]तन्मते तस्य [4]पक्षेतरत्वपर्यवसन्नतयानुपाधित्वम् । [5]तन्मते तस्य तत्त्वेऽपि बाधोन्नीतत्वेन उपाधित्वादिति भावः । भगवदिति । [6]न च त्वन्मते सपक्षाभावः । बाधोन्नीतपक्षस्यैव सपक्षत्वादिति भावः ।

न्यायशिखामणिः

मीमांसकमते नित्यज्ञानानङ्गीकारादाह—नैयायिकस्येति । ननु यत्तु प्रमाया इत्यत्र [7]प्रमामात्रस्य पक्षत्वोक्तेः पक्षेतरत्वं तदवस्थमित्याशङ्क्य तथा सति बाधस्यैव प्रसङ्गात् जन्यप्रमात्वेनैव पक्षतेति नोक्तदोष इत्याह—तवेति । (त्वन्मते) [तन्मते] — मीमांसकमते । पक्षेतरेति । भगवज्ज्ञानानङ्गीकारेण तस्य पक्षमात्रव्यावर्तकत्वादिति भावः । [8]बाधेति । मीमांसकमते पक्षे साध्याभावनिश्चयेन तस्यैव विपक्षत्वादिति भावः ।

ननु दोषाभावेन नार्थान्तरम्, सर्वानुमानेषु भावत्वगर्भस्य साध्यस्य विवक्षितत्वादित्याशङ्क्य, विवक्षितसाध्यकेष्वप्रयोजकत्वम् उक्तसाध्यकेष्वनुमानेष्व-

1. क. व्यावर्तकत्वेन
2. ख. 'पक्षमात्रव्यावर्तकाभावेन' इति नास्ति ।
3. क. मन्मते
4. क. पक्षेतरपर्यव-
5. ख. मन्मते
6. क. न चास्मन्मते
7. ख. प्रमात्वस्य
8. क. 'बाधेति । मीमांसकमते…… विपक्षत्वादिति भावः' इति ग्रन्थः नास्ति ।

तन्न । विपक्षबाधकबलेन हेतोः साध्यव्याप्यत्वेनोपाधेः साध्याव्यापकत्वात् ।

नन्वस्तु प्रमायां दोषाभावो हेतुः, आगन्तुकभावानपेक्ष्यज्ञानसामग्रीजन्यत्वं स्वतस्त्वम् । यत्तु अभावो न कारणम् । किंतु दण्डत्वादिवत्कारणतावच्छेदकत्वेन सामग्रीभेदोपलक्षक इति । तन्न । जपाकुसुमादिसंनिधौ न प्रमा, तदसंनिधौ स्फटिकादौ प्रमोत्पत्तेरनन्यथासिद्धत्वेन हेतुत्वादिति चेत्—

न । भूयोवयवेन्द्रियसंनिकर्षविशेषदर्शनादिसमवधाने प्रमा तदभावे त्वप्रमेति प्रमायां गुणः, अप्रमायां तदभावो हेतुरित्येव किं न स्यात् ।

अथासदर्थविषयकत्वे सदर्थविषयकहेत्वभावो न प्रयोजकः, ज्ञाने सदर्थविषयतानियमेन तदसंभवात् । सदर्थविषयकत्वेऽसदर्थविषयकारणा-

---

प्रकाशः

उक्तानुमाने दोषाभावेनार्थान्तरमिति शङ्कते—नन्विति । एवं च [1]न स्वतस्त्वहानिरित्याह—आगन्तुकेति । असाधारण इत्यर्थः । मुरारिमतमाशङ्क्य निराकरोति—यत्त्विति । प्रतिबन्द्या परिहरति—नेति ।

वैषम्यमाशङ्कते—अथेति । ननु ज्ञाने सदर्थविषयतानियम एव नास्ति । तथा चासदर्थमात्रविषयकज्ञाने सदर्थविषयकहेत्वभावः प्रयोजकः [2]संभवत्येवे-

---

न्यायशिखामणिः

र्थान्तरमित्यभिप्रायेणाशङ्कत्याह—उक्तेति । स्वतस्त्वोपपादनस्य प्रकृतोपयोगमाह—एवं चेति । ज्ञानसामग्र्यतिरिक्तदोषाभावसापेक्षत्वेऽपीत्यर्थः । मनोयोगादि-[3]भावसाधनापेक्षतया बाधवारणायोक्तम् आगन्तुकपदम् । तस्य जन्यपरत्वे दोषतादवस्थ्यमित्यत आह—असाधारणेति । ननु [4]यत्त्वित्याशङ्का न नैयायिकस्य, तेनाभावकारणत्वाभ्युपगमात् । नापि मीमांसकस्य, तस्य स्वतस्त्ववादित्वेन

---

1. ख. 'न' नास्ति ।
2. ख. संभवतीत्यत आह—अप्रमाया इति ।
3. क. °भावापेक्षतया
ग. घ. भावसापेक्षतया
4. ख. यत्त्वाशङ्का

**भावो हेतुः संभवति। प्रमायाः सदर्थमात्रविषयत्ववदप्रमायामसदर्थमात्रविषयत्वाभावादिति चेत्—**

**तर्ह्यप्रमायाः सदर्थविषयता न स्यात्, हेत्वभावात्। सदर्थमात्रविषयत्वे असदर्थविषयहेत्वभावो हेतुरिति चेत्—तर्हि गुण एव तत्र हेतुः। तदभावस्त्वसदर्थविषयत्वे प्रयोजक इत्यस्तु।**

---

**प्रकाशः**

त्याशङ्क्याह—**प्रमाया** इति। असत्ख्यातेर्निरासादन्यथाख्यातौ सत एव [1]धर्म्यादेर्भानात् असन्मात्रविषयकं ज्ञानमसिद्धमिति भावः।

---

**न्यायशिखामणिः**

परतस्त्वसाध्येऽर्थान्तरनिराकरणायोगादित्यत आह—[2]**मुरारीति**। मुरारिमतमवष्टभ्य या नैयायिकस्याशङ्का तां निषेधतीत्यर्थः। ननु न्यायमते गुणाभावस्य हेतुत्वानभ्युपगमात् तदुपपादनमसंगतमित्यत आह—**प्रतिबन्द्येति**। यद्यन्वयव्यतिरेकाभ्यां दोषाभावो हेतुरिति तेन गुणस्यान्यथासिद्धिः स्यात् तदा ताभ्यामेव गुणाभावो हेतुरिति तेन दोषस्यान्यथासिद्धावप्रमायां सोऽपि न हेतुः स्यादिति प्रतिबन्दिरत्राभिमता।

ननु गुणाभावस्य हेतुत्वनिराकरणमनभ्युपगमान्नानिष्टमित्यत आह—**वैषम्यमिति**। तथा च वैषम्येण प्रतिबन्द्यां निरस्तायामुक्तार्थान्तरतादवस्थ्यमिति भावः। ननु गुणाभाववैषम्यपरत्वे **प्रमाया** इत्यादेस्तदप्रतिपादकत्वादानर्थक्यमित्याशङ्क्य वैषम्यप्रतिकूलाशङ्का [3]तेन निवर्त्यत इत्याह—**नन्विति**। किं दोषाभावः सदर्थविषयत्वे प्रयोजकः तन्मात्रविषयत्वे वा। तत्राद्ये हेत्वभावात् भ्रमे सदर्थविषयता न स्यादित्युक्तमयुक्तम्। [4]असदर्थविषयहेतुदोषाभावस्य तत्प्रयोजकस्योक्तत्वात् इत्याशङ्क्यात्र स नास्तीत्याह—**असदिति**। ननु शुक्तिरजततादात्म्यानां प्रत्येकं पारमार्थिकत्वेन भ्रमस्यापि सन्मात्रविषयत्वात्

---

1. ख. ‘धर्म्यादेः’ नास्ति।
2. ख. ‘मुरारीति।......असंगतमित्यतः’ इति ग्रन्थो नास्ति।
3. घ. तेन न
4. ख. ग. सदर्थ-

ननु गुणाभावस्य साधारणत्वात्तदेव सत्यमसत्यं च न स्यात्, गुण-तदभावयोरेकत्रासत्त्वादिति चेत् — न। दोषाभावेऽपि तुल्यत्वात्। क्वचि-त्कश्चिद्दोष इति गुणेऽपि समानम्।

गुणाभावादसन्मात्रविषयकमपि ज्ञानं स्यादिति चेत्—न। दोषा-दप्यसन्मात्रविषयकज्ञानापत्तेः। सर्वत्र विषये दोषो न संभवतीति गुणा-भावेऽपि तुल्यम्।

---

प्रकाशः

हेत्वभावादिति। असदर्थविषयककारणाभावरूपहेत्वभावात्। भावे वा असदर्थविषयतैव तत्र न स्यादिति दोषाभावो व्यभिचारीति भावः। व्यभिचार-मुद्धरति—सदर्थमात्रेति। प्रतिबन्दिमाह—तर्हीति। क्वचिदिति। धर्मांशे यो दोषः स न तद्धर्म्यंशेऽपीति धर्मांशे [1]दोषाभावासत्त्वेऽपि धर्म्यंशे [2]दोषासंभवात् सत्यत्वं [3]स्यादिति भावः।

ताविति। गुणतदभावावित्यर्थः। व्यभिचारोद्धाराय पित्तादेः स्वप्रमां प्रति दोषाभावत्वं साधयितुमाह—अथेत्यादि कश्चिद्दोष इत्यन्तम्। असंभवाच्चेति। स्वप्रमायामपि हेतुत्वात् भ्रममात्रे हेतुत्वासंभवादित्यर्थः। अन्योन्येति। दोषत्वेन

---

न्यायशिखामणिः

द्वितीयपक्षेऽपि व्यभिचार इति नैतदुत्थितिरित्याशङ्क्य [4]टीकाकारमतेन एत-दभिधानात् न व्यभिचार इत्यभिप्रेत्याह—(व्यभिचार इति) [व्यभिचार-मिति]। अत्रापि गुणाभावहेतुत्वे न तात्पर्यम्। किं तु वैषम्यनिरासेन प्रतिबन्दीस्थापन इत्याह—प्रतिबन्दिमिति। ननु क्वचिदेव ज्ञाने कश्चिद्दोष [5]इत्यर्थाङ्गीकारे पीतः शङ्ख इति ज्ञानस्य सर्वांशेऽपि [6]दोषजन्यत्वे विरोधाभावात् धर्म्यंशेऽप्यप्रमात्वप्रसङ्ग इत्यत आह—[7]धर्मांश इति। सत्यत्वं प्रमात्वम्।

---

1. ख. दोषसत्त्वेऽपि
2. ख. दोषाभावात्
3. ख. स्यादेवेति
4. ख. अङ्गीकार-
5. ख. इत्यस्याङ्गीकारे
6. क. दोषजन्यत्वस्वीकाराद्धर्म्यंशे
   ग. दोषजन्यत्वेन
7. घ. धर्म्यंश इति।

अथ विशेषदर्शनादिर्गुणस्तदभावश्चाननुगत इति न तौ प्रमाप्रमाहेतू, किं तु दोषतदभावाविति चेत्—तर्हि पित्तादिर्दोषस्तदभावश्चाननुगत इति तावपि न तत्र हेतू। स्वप्रमायां स्वाभावस्य व्यभिचारश्च।

अथ दोषत्वं नैकम्। न हि तत्तद्भ्रमहेतुत्वं तत्, आत्मादौ गतत्वादननुगमाच्च। नापि भ्रममात्रहेतुत्वम्, पित्तादेरननुगतत्वेन तदभावादसंभवाच्च। नापि प्रमाहेत्वभावप्रतियोगित्वम्, अन्योन्याश्रयात्, पित्तादेः स्वप्रमाहेतुत्वाच्च।

नापि स्वप्रमाभिन्नप्रमाप्रतिबन्धकत्वम्। एवं हि प्रत्यक्षप्रतिबन्धकस्य सल्लिङ्गपरामर्शस्य दोषत्वादनुमितिः प्रमा न स्यात् भ्रमश्च स्यात्। तस्मात् क्वचित् कश्चिद्दोष इति चेत्—

प्रकाशः

ज्ञाते दोषाभावत्वेन प्रमाहेतुत्वग्रहः, तद्ग्रहे च तद्घटितदोषत्वग्रह इत्यन्योन्याश्रयादित्यर्थः।

प्रत्यक्षेति। धारावाहिकपरामर्शान्तररूपप्रत्यक्षप्रतिबन्धकस्येत्यर्थः। तस्मादिति। अनन्यगतिकतयाननुगमेनैव कश्चिद्दोषः क्वचिदप्रमायां, कश्चिद्दोषाभावः क्वचित्प्रमायां हेतुर्वाच्य इति भावः।

न्यायशिखामणिः

[1]भ्रममात्रकारणत्वं हि किं भ्रमत्वावच्छिन्नकारणत्वम् उत भ्रमेतराहेतुत्वगर्भम्। तत्राद्यं पित्तादेरित्यादिना निराकृत्य असंभवाच्चेत्यत्र अन्त्यं निरस्तम्। तदयुक्तम्। भ्रमेतरध्वंसहेतुत्वेऽपि तदितरज्ञानाहेतुत्वात्तदितरज्ञानाहेतुत्वगर्भस्य तन्मात्रहेतुत्वस्य विवक्षितत्वादित्यत आह—स्वप्रमायामपीति। ननु तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वम्, न तु दोषाभावजन्यत्वम्, येनान्योन्याश्रयः स्यादित्यत आह—दोषत्वेनेति।

ननु परामर्शस्य न व्यापकप्रत्यक्षप्रतिबन्धकत्वम्, संनिकर्षादिसत्त्वे तेन पुरुषत्वप्रत्यक्षजननादित्यत आह—धारावाहिकेति। नन्वेवमननुगम इत्यत आह

1. ख. ग. घ. भ्रममात्रेत्यत्र मात्रपदस्य कार्त्स्न्यार्थत्वम् अपित्तादावित्यादिना निराकृत्य व्यवच्छेदार्थत्वम् असंभवाच्चेत्यत्र निरस्तम्। तदयुक्तम्।

तर्हि गुणेऽपि तुल्यम् । स्यादेतत्, प्रमां भ्रमं चाकुर्वति ज्ञानहेतुस्तोमे मण्डूकवसाञ्जनदोषात् वंशोरगविभ्रमः, तदभावे वंशप्रमेति तत्र दोषाभावः प्रमाहेतुरित्यन्यत्रापि तथा, क्लृप्तत्वात् ।

---

**प्रकाशः**

स्यादेतदिति । अत्र प्रमामिति स्वरूपनिर्देशरूपम्, भ्रमाजनकत्वमात्रस्य वक्ष्यमाणान्वयव्यतिरेकप्रयोजकत्वादित्याहुः ।

---

**न्यायशिखामणिः**

—अनन्यगत्येति । दोषस्य काचित्कत्वोक्त्या तदभावस्य [1]तत्त्वमर्थसिद्धमित्याह —क्वचिद्दोषाभाव इति ।

ननु घटादिस्थले यादृशादेव भूयस्संनिकर्षलक्षणगुणादिघटितज्ञानहेतुस्तोमात् प्रमैव जायते न भ्रमः तादृशज्ञानहेतुस्तोमे सत्यपि [2]यत्सत्त्वाद्भ्रमः यदभावे न भ्रमः स एव मण्डूकवसाञ्जनरूपो दोषस्तत्र हेतुर्न गुणाभाव इति [3]वैषम्यान्न गुणाभावप्रतिबन्दीत्युक्तं स्यादेतदित्यत्र । तत्र प्रमां कुर्वति भ्रममकुर्वतीति च [4]स्तोमविशेषणम् । तत्राद्यविशेषणं स्वरूपनिर्देशपरं न त्वन्वयव्यतिरेकप्रयोजकतया तदुपात्तम् । प्रमाहेतुत्वग्राहकदोषाभावान्वयव्यतिरेकयो[5]स्तत्रानभिधानादित्यभिप्रेत्याह—अत्रेति ।

द्वितीयविशेषणं तु तत्प्रयोजकत्वेनैवोपात्तम् । मण्डूकेत्यादिना दोषान्वयव्यतिरेकयोर्वक्ष्यमाणत्वादित्याह — भ्रमाजनकत्वमात्रस्येति । [6]दोषाभावस्य [7]प्रमाहेतुत्वं च अर्थात् सेत्स्यतीति भावः ।

ननु भ्रमशब्दस्य लक्षणया प्रमाभावपरत्वे दोषाभावान्वयव्यतिरेकाभिधानसंभवात् [8]तत्प्रयोजकत्वेनैवाद्यविशेषणमुपात्तम् । न च लक्षणाकल्पनं दोषः ।

---

1. क. तद्धेतुत्वमर्थतः सिद्ध-
2. ख. यत्सत्त्वाभ्रमः यदाभावे
3. ख. ग. 'वैषम्यान्न गुणाभाव' इति भागो नास्ति ।
4. क. ज्ञानहेतुस्तोम-
5. ख. ग. घ. ०योरत्रानभि-
6. क. भ्रमाभावस्य हेतुत्वं तु
7. ख. भ्रमहेतुत्वं
8. क. ख. 'तत्' नास्ति

मण्डूकवसा[च]नयन एव दोषः न त्वचीति तत्र दोषाभावात् त्वचा वंशप्रमैव। गौरोऽहमित्यभेदभ्रमहेतुदोषसंस्कारसत्त्वेऽपि मम शरीरमिति प्रमेति चेत् न। विशेषादर्शनस्य तत्र हेतुत्वम्, न तु संस्कारस्य, तदसत्त्वे तदसिद्धेः। न च दूरे चक्षुषः संनिकर्षेऽपि केशादौ सजातीयसंयोगे प्रमा, तदभावे नेति तत्र संयोगरूपो गुणः प्रमाहेतुरित्यन्यत्रापि गुणजन्यतेति वाच्यम्। तावद्देशवर्तिकेशसाक्षात्कारे स हेतुः, तेन विना तदभावात्।

---

### प्रकाशः

प्रमामकुर्वति [स्वेतर]ज्ञानहेतुस्तोमे मण्डूकवसाञ्जनदोषाभावे वंशप्रमेति स्वतन्त्रान्वयव्यतिरेकदर्शनाय तदुक्तमित्यन्ये।

[ननु]मण्डूकवसाञ्जनरूपदोषसत्त्वेऽपि त्वचा वंशप्रमोत्पत्तेः न दोषाभावः प्रमाहेतुः, तत्रैव व्यभिचारादित्यत आह—**मण्डूकवसा चेति**। प्रमां प्रति दोषाभावस्य व्यभिचारं शङ्कते—**गौरोऽहमिति**। तदसत्त्व इति। [1]विशेषादर्शनासत्त्वे गौरोऽहमिति भ्रमासिद्धिरित्यर्थः। प्रमात्वव्याप्यधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वं गुणत्वम्। अस्य च भ्रमसाधारण[2]तद्देशवर्तिकेशसाक्षात्कारत्वावच्छिन्ने [3]हेतुत्वान्न तथात्वमित्याह—**तावद्देशेति**।

---

### न्यायशिखामणिः

तवापि प्रमाशब्दस्य भ्रमाभावे तत्कल्पनावश्यंभावात्। तथा च विनिगमनाविरहात् भ्रमाजनकत्वमेव तत्प्रयोजकतयोपात्तमित्यवधारणासिद्धिः। अपि च **अकुर्वती**त्यस्यैव भ्रमपदेनेव प्रमापदेनाप्यन्वयः। तत्र नञ्परित्यागे कारणाभावात्। तथा च प्रमित्यजनकत्वमेवाद्यविशेषणम्। तदपि तत्प्रयोजकत्वेनैवोपात्तम्। न च दोषतदभावयोरन्यतरस्यैवात्रान्वयव्यतिरेकप्रदर्शनात् तत्प्रयोजकतया [4]विशेषणद्वयोपादानं न युक्तमिति वाच्यम्। तयोः **प्रमामित्यादिना** व्यतिरेकः **मण्डूकेत्यादिना** अन्वयश्च प्रतिपाद्यत इत्यस्य ग्रन्थस्य लक्षणां विनैव दोष[5]तदभावान्वयव्यतिरेकपरत्वात्। एवं च भ्रमाजनकत्वमेव तत्प्रयोजकत्वेनोपात्तमिति जयदेवमतमयुक्त-

---

1. ख. विशेषदर्शनसत्त्वे
2. ख. तावद्दूरवर्तिकेशसाक्षात्कारिप्रमात्वस्यापि
3. ख. 'हेतुत्वान्न······तावद्दूरप्रमात्वस्यापि' इति ग्रन्थः लुप्तः
4. ग. विशेषणोपादानं
5. क. ०तदभावव्यतिरेक-

**तथापि तावद्दूरप्रमायां स हेतुः संनिकृष्टकेशप्रमायास्तेन विनापि भावात्।**

---

प्रकाशः

व्यभिचारवारणाय तावद्दूरवर्तीति विशेषणं तथाप्यावश्यकमित्याह—**तथापीति**। यद्यपि तावद्दूरप्रमात्वस्यापि प्रमात्वव्याप्यत्वात्तदवच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वादस्य गुणत्वं संभवत्येव। तथापि तादृशसाक्षात्कारं प्रत्येवान्वयव्यतिरेकानुविधायित्वाल्लाघवाच्च [1]तादृशसाक्षात्कारत्वमेव तज्जन्यतावच्छेदकमिति भावः। न च तावद्दूरवर्तिस्थूलकृष्णवस्तुविशेषे केशोऽयमिति भ्रमसंभवाद्व्यभिचार इति वाच्यम्। तावद्दूरवर्तिकेशसमानसूक्ष्मविषयककेशसाक्षात्कारे सजातीयसंयोगस्य हेतुत्वमित्यर्थात्।

---

न्यायशिखामणिः

मित्यपरितोषादुपाध्यायमतमाह—**प्रमामिति**। अत्र स्वेतरेति ज्ञानहेतुविशेषणम्। तेन दोषतदभावव्यतिरेकसिद्धिरिति भावः।

ननु भ्रमस्याप्युत्पत्तेर्न दोषस्य तद्व्यभिचार इत्यत आह—**नन्विति**। ननु दोषविषयकसंस्कारसत्त्वेऽपि [2]दोषाभावान्न व्यभिचार इत्यत आह—[3]**प्रमामिति**। तथा च दोषेत्यत्र कर्मधारयः [4]पूर्वपूर्वभ्रमजन्यसंस्कारस्यैव तत्र दोषत्वादिति भावः। तच्छब्दस्य संस्कारपरत्वं वारयति—**विशेषेति**। ननु सजातीयसंयोगस्य तादृशकेशसाक्षात्कारहेतुत्वेऽपि तादृशप्रमाहेतुत्वात् गुणत्वमविरुद्धमित्यत आह—**प्रमात्वेति**। न हि प्रमाहेतुत्वं गुणत्वम्, इन्द्रियादेरपि तत्त्वप्रसङ्गादिति भावः।

ननु [5]तथापीत्यत्र सजातीयकेशान्तरसंयोगस्य [6]तावद्दूरप्रमात्वाश्रयहेतुत्वाभिधाने [7]तादृशसाक्षात्कारत्वावच्छिन्नकार्यताप्रतियोगिकहेतुत्वोक्त्या तदप्यभिहितमिति पौनरुक्त्यम्। तादृशप्रमात्वावच्छिन्नहेतुत्वोक्तौ मीमांसकाङ्गीकारप्रदर्शकापिशब्दस्य पूर्वग्रन्थविरोध इत्याशङ्क्याह—**व्यभिचारेति**। केशप्रमायां स हेतुरिति वदतो नैयायिकस्यापि निकटवर्तिकेशप्रमायां व्यभिचारवारणाय तावद्देशवर्तित्वमावश्यकमित्यर्थः।

---

1. ख. ०साक्षात्कार एव तद्धेतुतावच्छेदकमिति
2. ख. दोषाभावस्यानभिचारः
3. ख प्रमेति।
4. ख. 'पूर्व' नास्ति।
5. ख. तथाप्यत्र
6. ग. तावदप्रमामात्राश्रय-
7. ग. तादृशकेशसाक्षात्कार-

तत्रापि वा दोषाभावः कल्प्यो दोषजन्यत्वे अप्रमात्वापातात् ।

नन्तु विशेषदर्शनं प्रमाहेतुः विशेषादर्शनस्य दोषत्वे तदभावस्य हेतुत्वादिति चेत्—तर्हि दोषाभावत्वेन स हेतुः न तु गुणत्वेन भावत्वेन वा ।

---

### प्रकाशः

यद्वा एतदस्वरसादाह—तत्रापीति । भावत्वेनेति । यद्यपि भावत्वमतिप्रसक्तम्, तथापि [1]भावत्वं भावधर्मो विशेषदर्शनत्वमिति भावः ।

---

### न्यायशिखामणिः

ननु तादृशसाक्षात्कारत्वं नावच्छेदकं, मानाभावात् । अन्वयाद्यनुविधानं च न तन्निश्चायकम्, तादृशप्रमात्वस्याप्यवच्छेदकत्वापत्तेरिति जयदेवोक्तमस्वरसमाशङ्कते—यद्यपीति । अन्वयादिना हेतुताग्रहमात्रमभिमतम्, तदवच्छेदकपरिच्छेदस्तु लाघवादिनेति न तादृशप्रमात्वे तत्प्रसङ्ग इति परिहरति-तथापीति ।

[2]ननु तावद्दूरवर्तिकेशसाक्षात्कारे सजातीयसंयोगापेक्षा न स्यात् [3]अभेदे सादृश्याभावात् । भावे वा केशभ्रमस्यापि तादृशसूक्ष्मवस्तुविषयकतया तत्रापि तदपेक्षा स्यात् । तादृशसूक्ष्मवस्तुविशेष्यककेशत्वप्रकारकत्वस्यावच्छेदकत्वविवक्षायां केशविशेष्यकाभेदभ्रमे तदपेक्षा न स्यादिति चेत्—

न हि केशत्वप्रकारकत्वमवच्छेदके प्रविष्टम् । सजातीयसंयोगजन्ये कृष्णतन्तुज्ञाने तदभावात् । किं तु तादृशसूक्ष्मवस्तुविशेष्यकज्ञानत्वमेवावच्छेदकम् । तथा च नोक्तदोष इति भावः ।

ननु तादृशसूक्ष्मवस्तुविषयकप्रमात्वमेवावच्छेदकमस्तु तावतापि केशत्वभ्रमव्यावृत्तेः । न च काकाभेदभ्रमाव्याप्तिः । तस्यापि सूक्ष्मवस्त्वंशे प्रमात्वात् । अस्तु वा पूर्वोक्तमेवावच्छेदकम् । तथापि सजातीयसंयोगजन्यज्ञानस्य [4]सूक्ष्मवस्त्वंशे अवश्यं प्रमात्वेन तस्य प्रमात्वव्याप्यतया तदवच्छिन्नकार्यहेतोः [5]संयोगस्य

---

1. ग्र. 'भावत्वं' नास्ति ।
2. क. नन्वेतदपेक्षया तादृशसाक्षात्कारिप्रमात्वं लघ्विति तदेवावच्छेदकमित्यपरितोषादाह यद्वेति ।
3. ख. अभेदसादृश्या-
4. ख. ग. सूक्ष्मवस्त्वंशेन तस्य
5. ग. संयोगत्वस्य

**किं च विशेषदर्शनप्रतिबन्धकाः पित्तादयो दोषाः आवश्यकत्वात्, न विशेषादर्शनम्। न च तेषामननुगतत्वेन विशेषदर्शनप्रतिबन्धकतयानुगमे लाघवाद्विशेषादर्शनमेव हेतुरिति वाच्यम्। क्वचित् कश्चित् दोष**

**प्रकाशः**

ननु [1]विशेषदर्शनाभावाभावो विशेषदर्शनत्वेन हेतुः, न तु तदभावाभावत्वेन, गौरवात्। तथा च सिद्धं तस्य गुणत्वमित्यस्वरसादाह—**किं चेति**। न च [2]विशेषादर्शनस्य तत्र दोषत्वमिति पूर्वग्रन्थ[3]विरोध इति वाच्यम्। मतान्तराभि-

**न्यायशिखामणिः**

गुणत्वसिद्धिरप्रत्यूहा। अन्यथा संयोगजन्यस्य कस्यचित् [4]सर्वांशेऽप्रमात्वे तत्र दोषाभावकल्पनं विरुध्येतेत्यपरितोषादाह—**यद्वेति**।

[5]जयदेवोक्तमपरितोषमाह—**नन्विति**। ननु [6]दोषाभावातिरिक्तत्वे सति प्रमामात्रहेतुत्वं गुणत्वम्। तथा च विशेषदर्शनस्य तत्त्वेन प्रमाजनकत्वेऽपि न गुणत्वसिद्धिरित्याशङ्क्य, न हि दोषाभावातिरिक्तत्वगर्भं गुणत्वम्, दूरत्वस्येन्द्रियभूयोऽवयवासंनिधिरूपतया तदभावत्वेनागुणत्वप्रसङ्गात्। किं तु [7]अप्रमाजनकतावच्छेदकरूपावच्छिन्नाभावत्वेनाजनकत्वे सति प्रमाजनकत्वम्। संनिकर्षस्य च तत्त्वेनैव हेतुत्वान्नाव्याप्तिः। तथा च विशेषदर्शनस्य दोषाभावत्वेऽपि गुणत्वं न विरुद्धमित्याह— **तथा चेति**। विशेषदर्शनत्वेन हेतुत्वे सिद्धे सतीत्यर्थः।

केचित्तु विशेषदर्शनस्य तदभावाभावत्वेनैव कारणत्वमस्तु। तावता गुणजन्यत्वसिद्धेः। न चैवं स्वतस्त्वापत्तिः, आगन्तुकविशेषदर्शन[8]रूपभावकारणसापेक्षत्वादित्यस्वरसात् **मणौ—किं चे**त्युक्तमित्याहुः।

तच्चिन्त्यम्। एवं सति विशेषदर्शनस्याप्रमाजनकतावच्छेदकविशेषदर्शनाभावत्वावच्छिन्नप्रतियोगिकाभावत्वेन प्रमाहेतुत्वे गुणत्वासिद्धिप्रसङ्गात्। गुणत्वं च तादृशजनकत्वाभावगर्भमित्युक्तत्वात्।

1. क. विशेषदर्शनाभावो
2. ख. विशेषदर्शनस्य
3. क. '०विरोधः' नास्ति।
4. ग. सर्वांशे प्रमात्वेन
5. ग. जयदेवोक्तमपि दोष-
6. ख. 'दोषा' नास्ति।
7. ख. 'अप्रमा....गुणत्वं' इति ग्रन्थस्त्रुटितः।
8. ख. ०रूपाभाव-

### प्रकाशः

प्रायेणोक्तत्वात्। एतन्मते अदृष्टविशेषस्य लब्धवृत्तिकस्य तत्र दोषत्वं न तु संस्कारविशेषस्येत्याहुः।

---

### न्यायशिखामणिः

यदपि विशेषदर्शनरूपभावसापेक्षत्वान्न स्वतस्त्वापत्तिरिति। तदपि न। तस्य तादृशाभावत्वेन कारणत्वे स्वतस्त्वस्य दुर्वारत्वात्। न ह्यागन्तुकभावसापेक्षतामात्रेण परतस्त्वम्। उक्तरीत्या दूरत्वस्याप्यभावरूपतया भ्रमहेतोर्भावानपेक्षत्वात् अप्रामाण्यस्य स्वतस्त्वापत्तेः। किं तु अभावत्वातिरिक्तधर्मावच्छिन्नासाधारणकारणसापेक्षत्वेन, दूरत्वस्य च दोषत्वेन हेतुतेति नातिप्रसङ्गः।

तत्रेति। गौरोऽहमिति भ्रम इत्यर्थः। लब्धवृत्तिकस्येति। अत्र वृत्तिशब्दः कार्यवाची। तथा च लब्धं कार्यं येन तत्तथा तस्य [1]गौरशरीरारम्भकस्येति यावत्। एतच्च संचितकर्मवारणाय। तस्येदानीं [2]कार्याजनकत्वात् एतदारम्भकादृष्टमात्रस्य [3]दोषत्वे पुत्रभृत्यादिशरीरजनकादृष्टस्य स्वामिन्यपि सत्त्वेन तदीयशरीर[4]गौरत्वारोपस्तत्रापि स्यादिति तद्वारणाय विशेषग्रहणम्। फलबलात् पुत्रादिगतादृष्टमेव दोष भावः।

नन्वदृष्टं [5]कार्यमात्र एव हेतुः। अन्यथा प्रकृतानुमाने तेनैवार्थान्तरमित्युक्तम्। तथा च नाभेदभ्रमजनकत्वं, नापि भेदप्रमाप्रतिबन्धकत्वम् तत्कालेऽपि तस्य सत्त्वादित्यपरितोषादाह—[6]संस्कारेति। विरोधिविषयक[7]संस्कारेत्यर्थः। अत्र लब्धवृत्तिकत्वं संस्कारस्यापि विशेषणम्, तच्च कार्योन्मुख्यम्। तेनानुद्बुद्धसंस्कारनिरास इति भावः।

यद्यपि [8]उद्बुद्धसंस्कारस्यारोप्यस्मरण उपक्षयः तज्जन्यत्वे भ्रमस्य स्मृतित्वापत्तिश्च। तथापि तत्पदेनारोप्यस्मरणं [9]लक्ष्यते। तस्य च विशेषणज्ञानत्वेन

---

1. ख. गौरवशरीरा-
2. ख. ग. कार्यजनक-
3. ख. ग. दोषत्वेऽप्यत्र भृत्यादि-
4. क. ख °गौरवत्वारोपः
5. क. कार्यमात्र प्रति साधारणकारणम् न तत्र तथा हेतुः अन्यथा
6. क. संस्कारस्येति
7. क. °संस्कारस्येत्यर्थः
8. क. 'उद्बुद्ध' नास्ति।
9. ग. लभ्यते

इत्यनुगमात् । अन्यथा पित्तादितोऽप्यप्रमा न स्यात् । अननुगमात् । मण्यादेरिवाननुगमेऽप्यदोषत्वाच्च । तदभावकूटस्य हेतुत्वात् । सर्वत्र विशेषादर्शनमेव हेतुः, पित्तादेरननुगमेन तत्रोपक्षयादिति चेत्—न ।

प्रकाशः

अन्यथेति । पित्ताद्युत्कर्षेण भ्रमोत्कर्षदर्शनात्तेषामवश्यं हेतुत्वमिति भावः ।

यत्तु पूर्वमपीतत्वशङ्खत्वादिविशेषदर्शने सतीयं प्रबलपित्तवशात् पीतः शङ्ख इत्यप्रमा न स्यादित्यर्थ इति । तन्न । तत्रापि [1]विशेषदर्शनविशेषस्य सत्त्वात् ।

न्यायशिखामणिः

हेतुत्वेऽपि भ्रमत्वावच्छिन्नं प्रत्यारोप्यस्मरणत्वेन हेतुत्वकल्पनाद्दोषत्वं [2]युक्तमिति भावः ।

ननु क्वचिदित्यादिना दोषाननुगमो न दोषाय येन विशेषदर्शनाभावप्रयोजकत्वरूपानुगमकापेक्षायां [3]विशेषादर्शनावश्यकता स्यादित्यभिधाय, यद्यननुगमो दोषः तदा किं कारणाननुगमस्य दोषत्वात् पित्तादेरप्रमाहेतुत्वं निराचिकीर्षितम्, प्रतिबन्धकाननुगमस्य तथात्वात् प्रमाप्रतिबन्धकत्वं वा । तत्राद्यं पित्तादितोऽपीत्यनेन निराकृत्य द्वितीयं [4]मण्यादेरिवेत्यत्र निरस्तम् । तत्राद्यकल्पनिराकरणं न युक्तम् । पित्तादितस्तदनुत्पत्तेरिष्टत्वात् । न च [5]विशेषादर्शनमेवेत्यत्र एवकारस्याप्यर्थकतया पित्तादिकमपि हेतुत्वेनोक्तमिति नेष्टप्रसङ्ग इति वाच्यम् । तथापि विशेषदर्शनप्रतिबन्धकत्वेनानुगमस्योक्ततया अननुगमादित्यनुपपत्तेरित्यस्वरसात् पित्तादीति वक्ष्यमाणयुक्तावेवास्य तात्पर्यमित्याह—पित्तादीति । यद्यप्याशङ्काग्रन्थगतैवकारस्याप्यर्थकत्वमते पित्तादेरपि हेतुत्वाङ्गीकाराद्विशेषादर्शनस्य हेतुत्वमेव निराकार्यम् । तच्चात्र न निराकृतम् । तथापि पित्तादौ सति [6]विशेषादर्शनविलम्बेनाप्रमाविलम्बाभावात् [7]न तत्कारणं तदित्यत्र तात्पर्यम् ।

1. क. विशेषदर्शनस्य विशेषस्य
2. क. अपि युक्तमिति ।
   घ. अयुक्तमिति ।
3. ग. विशेषदर्शनमावश्यकं
4. ख. मण्यादेरिति चेत्यत्र
   क. ग. मण्यादेरित्यत्र
5. ग. विशेषदर्शन-
6. ग. विशेषदर्शनस्य वि-
7. ख. न तत्कारणादित्यत्र

पित्ताद्युत्कर्षेण भ्रमोत्कर्षात् । पित्तादेरदोषत्वे च विशेषप्रमैव कुतो न भवति । विशेषस्य विशेषान्तरादर्शनादिति यदा तदा अनवस्थैव ।

किंच विशेषदर्शनं न प्रमामात्रे न वा प्रत्यक्षप्रमायां हेतुर्व्यभिचारात् । तत्रैव तद्धेतुत्वेऽनवस्थापाताच्च ।

अथ प्रत्यक्षे इन्द्रियसंनिकर्षो गुणः अप्रमांशे तदर्थस्यासत्त्वेन संनिकर्षाभावात् दोषो हेतुः । न च प्रमांशेऽपि स हेतुः, अदोषत्वप्रसङ्गात्,

---

प्रकाशः

मण्यादेरिति । तत्तत्कार्यविशेषे तत्तत्कूटस्य हेतुत्वमिति भावः । अन्यथा पित्तादित इत्यस्य तात्पर्यमबुद्ध्वा शङ्कते—सर्वत्रेति । तात्पर्यं स्फुटयति—पित्तादि[दी]ति । किं चेति । तथा च पित्ताद्यभाव एव तत्र हेतुरिति भावः । तत्रेति । विशेषदर्शनेऽपि विशेषदर्शनहेतुत्वापत्तावनव[1]स्थानादित्यर्थः ।

अदोषत्वेति । अप्रमासाधारणकारणस्य दोषत्वादित्यर्थः । यद्यपि प्रमांशे परेणापि [2]दोषाजन्यत्वाङ्गीकारादाशङ्क्यमनुपपन्ना, तथापि भ्रमासाधारणदोषजन्यत्वात्प्रमाया न परतस्त्वमित्यभिमानिनः शङ्क्यमिति बोध्यम् ।

---

न्यायशिखामणिः

उपाध्यायमतमाह—यत्त्विति । उक्ततात्पर्यं जानानस्य [3]नेयमाशङ्का, किं त्वजानानस्येत्याह—अन्यथेति । [4]अनवस्थानादिति । एतच्च विशेषदर्शने भिन्नभिन्नविशेष[5]दर्शनापेक्षाभिप्रायेण । तस्यैव तत्रापेक्षायामात्माश्रयः । विशेषदर्शनयोरन्योन्यापेक्षायामन्योन्याश्रय इति द्रष्टव्यम् ।

ननु प्रमाहेतुत्वेऽप्यप्रमाहेतुतया [6]दोषत्वमविरुद्धमित्यत आह—अप्रमेति । [7]एवं सति प्रमासाधारणदोषजन्यत्वात् अप्रमाया अपि तत्त्वं न स्यादित्यस्वरसं सूचयति—अभिमानिन इति । अत एव तटस्थशङ्क्यमिति केचिदाहुः । नन्व-

---

1. क. °स्थापनादीत्यर्थः
2. ख. दोषजन्यत्वानङ्गीकारात्
3. ख. ग. घ. नेयमाशङ्केत्यजानत इत्याह
4. क. अनवस्थेति ।
5. क. दर्शनाभि-
6. ख. दोषत्वं विरुद्धं
7. क. 'एवं सति... केचिदाहुः' इति ग्रन्थस्त्रुटितः ।

प्रमांशस्याप्रमात्वप्रसङ्गाच्च । साक्षात्कारित्वं चेन्द्रियसंनिकर्षजन्यत्वादिति चेत्—न । ज्ञाने विषयरूपस्यांशस्येन्द्रियतद्दोषाजन्यत्वात् अप्रमांशे चेन्द्रियसंनिकर्षाभावेन साक्षात्कारित्वं न स्यात् ।

दोषस्य तद्धेतुत्वेऽतिप्रसङ्गोऽननुगमश्च । प्रमायां प्रमाप्रायां च याथार्थ्यप्रयोजकमस्ति अप्रमायां दोषवदिति चेत्—न । दोषाभावस्य सत्त्वादिति ।

---

## प्रकाशः

नन्वेवं [1]साक्षात्त्वप्रयोजकेन्द्रियसंनिकर्षाजन्यत्वात् भ्रमे साक्षात्त्व न स्यादित्यत आह—साक्षात्कारित्वं चेति । यावदिन्द्रियसंनिकर्षस्य तत्प्रयोजकत्वे [2]गौरवादिति भावः । ननु विषयस्य [3]तदजन्यत्वेऽपि [4]तत्तद्विषयकत्वावच्छेदेन तज्जन्यत्वं स्यादित्यत आह—अप्रमांशे चेति । तन्मते स्वप्रकाशाद्यंशं विहाय यदंश इन्द्रियसंनिकर्षजन्यत्वं तदंश एव साक्षात्त्वम् । अत एव प्रत्यभिज्ञायामेकांशे साक्षात्त्वमपरांशे स्मरणत्वम् । न्यायनये च भ्रमस्य विशेषणांशे स्मरणरूपसंनिकर्षजन्यत्वात् प्रमात्वं स्यादिति दूषणं बोध्यम् । तद्धेतुत्व इति । दोषस्य साक्षा-

---

## न्यायशिखामणिः

प्रमांशे साक्षात्त्वोपपादनमिन्द्रियस्य तदंशे संनिकर्षाभावादयुक्तमित्याशङ्क्य, भ्रमे साक्षात्त्वानुपपत्तावंशौदासीन्येन तदुपपाद्यत इत्याह—नन्वित्यादिना । किमिन्द्रियसंनिकर्षजन्यत्वं तत्प्रयोजकमुत यावत्त्वघटितं तज्जन्यत्वम् । तत्र नाद्य इत्याह—अत आहेति । न द्वितीय इत्याह—यावदिति ।

किं ज्ञानस्येन्द्रियसंनिकर्षदो[5]षजन्यत्वम् उत [6]तत्तद्विषयावच्छिन्नस्य । आद्ये [7]शुक्तिरूप्यज्ञानं सत्यमसत्यं च स्यात् । तच्चैकत्वावच्छेदकभेदं विना विरुद्धमित्यभिप्रेत्य द्वितीये तत्तद्विषयस्य विशेषणत्वमवच्छेदकत्वं वा । तत्राद्यं निरस्तं [8]मणौ ज्ञान इत्यादिना । द्वितीयमनुवदति—नन्विति । ननु मूले द्वितीय-

---

1. ख. साक्षात्कारित्व-
2. ख. गौरवमिति
3. ख. तज्जन्यत्वे
4. ख. तत्तद्विषयत्वाव०
5. ग. 'दोष' नास्ति ।
6. ख. तद्विविधावच्छिन्नस्य
7. ख. घ. शुक्तरूप्य०
8. क. चिन्तामणौ

उच्यते। प्रमामात्रे नानुगतो गुणः किं तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसंनिकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वम्, अन्वयव्यतिरेकात्।

---

**प्रकाशः**

त्वद्धेतुत्वे भ्रमानुमितेरपि [1]साक्षात्कारित्वापत्तिरित्यर्थः। तत्तद्दोषस्य तथात्वेऽ[2]ननुगम इति भावः। **किं तु [3]तत्तत्प्रमायामिति।**

ननु तथाप्यननुगम एव भूयोवयवेन्द्रियसंनिकर्षस्य प्रत्यक्ष[4]प्रमामात्रेऽहेतुत्वात्। तेन विनापि [5]शब्दात्मादिप्रत्यक्षदर्शनात्। नापि यथार्थलिङ्गपरामर्शोऽनुमिति[6]प्रमामात्रे, गन्धप्रागभावावच्छिन्नपक्षकगन्धानुमितेर्बाधानवतारदशोत्पन्नायाः प्रमात्वापत्तेः। सादृश्यधीश्च वैधर्म्योपमितावेव नास्ति। शुकबालादिवाक्यजन्यप्रमायां वाक्यार्थज्ञानं च व्यभिचारि। न चेश्वरीयं तत्रापि [7]संभवत्येवेति वाच्यम्।

---

**न्यायशिखामणिः**

कल्पनिराकरणं न युक्तम्, गुरुमते ज्ञानांशे व्यभिचारादित्यत आह—**तन्मत** इति। तथा च मूलं तन्मताभिप्रायमिति भावः। न्यायमते तु स्वयं तत्कल्पे दूषणमाह—**न्यायनय** इति। तच्छब्देनाप्रमापरामर्शे दोषजन्यमात्रस्याप्रमात्वेनातिप्रसङ्गानवकाश इत्यत आह–**दोषस्येति**। दोषजन्यत्वस्येत्यर्थः। **हेतुत्वे**—प्रयोजकत्वे।

तदेवं दोषाभाव एव हेतुरिति तेनैवार्थान्तरमनुमानस्येति न गुणजन्यत्वसिद्धिरिति चोदिते उच्यत इत्यादिना अनित्यप्रमामात्रेऽनुगतगुणानभ्युपगमादेव तन्निराकरणं नानिष्टम्। प्रत्यक्षादिप्रमासु [8]चतसृषु यथायथं भूयोवयवेन्द्रियसंनिकर्षादयश्चत्वारोऽनुगतगुणाः संभवन्तीत्याशङ्क्य तन्निराकरणमित्युक्तम्। तदाक्षिपति—**नन्विति**। आत्मादीत्यादिपदात् त्र्यणुकपरिग्रहः। **गन्धप्राग-**

---

1. क. तथात्वापत्तेरित्यर्थः
2. क. °ननुगमादिति।
3. क. तत्प्रमायामिति।
4. क. 'प्रमा' नास्ति।
5. ख. शब्दत्वादि-
6. क. 'प्रमा' नास्ति।
7. क. 'संभवत्येवेति' इति नास्ति।
8. ख. च यथाकर्म
   घ. चतसृषु यथाक्रमम्

## प्रकाशः

अन्योन्याश्रयात्। प्रमाया गुणजन्यत्वे सिद्धे वैदिकप्रमाहेतुवाक्यार्थप्रमारूपगुणाश्रयत्वेनेश्वरसिद्धिः। तत्सिद्धौ च तदीयवाक्यार्थज्ञानजन्यतया शुकबालादिवाक्ये व्यभिचाराभावेन प्रमाया गुणजन्यत्वसिद्धिरिति।

अत्राहुः। यथा प्रमामात्रे नानुगतो गुणः तथा प्रत्यक्षप्रमामात्रेऽपि। किं तु स्थूलावयवि[1]तद्गुणादिप्रत्यक्षमात्रे स हेतुः। तावतापि गुणहेतुत्वसिद्धिः। [2]तत्तत्प्रत्यक्षे च तत्तद्भूयोवयवेन्द्रियसंनिकर्षो विशेषसामग्रीति नातिप्रसङ्गः।

ननु क्लृप्तत्वाद्दोषाभाव एव तद्धेतुरस्तु, गुणसत्त्वेऽपि तस्यावश्यकत्वात्। अत एव भूयोवयवेन्द्रियसंनिकर्षसत्त्वेऽपि शङ्खे न श्वैत्यप्रमेति चेत्—न। तदुत्कर्षेण प्रमोत्कर्षात्। उक्तप्रत्यक्षप्रमाविशेषे अनुगतत्वाच्चेत्याहुः।

एवं चात्मादिधर्मिकप्रमायामन्यद्यथायथं गुणत्वेन बोध्यम्। यथार्थलिङ्ग-

## न्यायशिखामणिः

भावेति। एतच्चोपलक्षणम्। कूटलिङ्गजन्यवर्तमानवह्निविषयानुमितेरप्रमात्वं [3]स्यात्। घटपक्षकसकर्तृकत्वानुमितेश्च लाघवभ्रमेणैकमात्रकर्तृकत्वगोचरायाः प्रमात्वं स्यादित्यपि द्रष्टव्यम्। अनुमानान्तरादीश्वर[4]सिद्ध्यनभ्युपगमदशायामिदं गुणजन्यत्वानुमानमित्याशयेनाह—**प्रमाया इति।**

जयदेवमतमाह—**अत्रेति। यथेति।** एतन्मते [5]प्रमामात्र इत्येतत् प्रत्यक्षप्रमादेरप्युपलक्षणम्। तथा च प्रमामात्रे चतसृषु च प्रमासु नानुगतो गुण इति मूलार्थः। यत्र यत्रानुगतगुणसंभवस्तास्ता एव [6]प्रमास्तत्तदित्यत्राभिप्रेताः न चतस्र इत्याह—**स्थूलेति।** [7]स्थूलानेकावयवकावयविप्रत्यक्ष इत्यर्थः। **सः**—स्थूलावयवेन्द्रियसंनिकर्षः। अन्यथा एकतन्तुकपटप्रत्यक्षप्रमायामवयवभूयस्त्वाभावात् त्र्यणुकप्रत्यक्षप्रमायां चावयवयोग्यत्वाभावात्[8] व्यभिचारापत्तिः।

---

1. क. °तद्गुणप्रत्यक्ष-
2. क. तत्प्रमाप्रत्यक्षे
3. क. 'स्यात्' नास्ति।
4. ग. सिद्ध्यभ्युप-
5. ख. प्रमात्व इत्येतत्
6. क. प्रमास्तत्र तदित्यत्र-
7. क. स्थूलावयवकावयवि-
   ख. स्थूलानेकावयविकानवयव-
8. क. भावाच्च

### प्रकाशः

ज्ञानपदेन पक्षतावच्छेदकावच्छेदेन ज्ञाप्यवति पक्षे लिङ्गज्ञानं विवक्षितम् । तस्य[च] गन्धप्रागभावावच्छिन्नपक्षकगन्धानुमितावभावान्नोक्तदोषः ।

वस्तुतस्त्वबाधितत्वप्रमा तत्र गुण इति [1]बाधे वक्ष्यामः ।

---

### न्यायशिखामणिः

ननु शुक्तौ रजतज्ञानस्य धर्म्यंशे भूयस्संनिकर्षजन्यत्वेन प्रमात्ववारणाय घटसंनिकर्षे पटस्मरणवतः पटप्रमोत्पत्तिवारणाय च [2]यत्तत्पदप्रवेशावश्यंभावात् अत्राप्यननुगम एवेत्याशङ्क्य यत्तत्पद[3]घटितमूर्तिर्न सामान्यसामग्री, किं तु विशेषसामग्रीत्याह—तत्तदिति । अनुगतत्वादिति । स्थूलावयवसंनिकर्षस्येति शेषः । दोषत्वस्य चाननुगतत्वेन [4]तदभावस्याननुगतत्वान्न तेनान्यथासिद्धिरिति भावः ।

घटपक्षकसकर्तृकत्वानुमितेरेकमात्रकर्तृकत्वविषयायाः प्रमात्ववारणाय साध्यपदं विहाय ज्ञाप्येत्युक्तम् । पक्षतावच्छेदकावच्छेदेनेत्यस्य प्रयोजनमाह—तस्य चेति ।

ननु [5]कूटलिङ्गकप्रमानुमितौ व्याप्यज्ञानाभावाद्व्यभिचार इति चेत्—न । व्याप्यत्वप्रकारकपक्षधर्मताज्ञानस्य भ्रमसाधारणस्यात्र विवक्षितत्वात् । न चैवमपि व्यतिरेक्यनुमितौ साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्य हेतुत्वाद्व्यभिचार इति वाच्यम् । व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इति मणिकृन्मते तत्रापि तदङ्गीकारात् व्यभिचारज्ञानविरोधिप्रकारकत्वस्य व्याप्तिप्रकारकपदेन विवक्षितत्वाद्वा ।

ननु पक्षतावच्छेदकावच्छेदेन ज्ञाप्यप्रमैव गुणोऽस्तु । [6]तस्य तद्वति लिङ्गज्ञानापेक्षया लघुत्वात् । न च [7]तस्या नानुमितिहेतुत्वं मानाभावादिति वाच्यम् । अबाधितत्वप्रमारूपत्वेन तस्यास्तद्धेतुत्वावश्यंभावादित्यस्वरसादाह—वस्तुतस्त्विति ।

---

1. ख. बाधग्रन्थे
2. क. तत्तत्पद-
3. क. ॰घटितमात्रं न
4. ग. 'तदभावस्याननुगतत्वान्न' इति नास्ति ।
5. ख. कूल-
6. ख. 'तस्य' नास्ति ।
7. ख. ग. घ. तस्य

## न्यायशिखामणिः

केचित्तु अनुमितौ बाधज्ञानस्य प्रतिबन्धकत्वेन तदभावस्यैव हेतुत्वं न त्वबाधितत्वज्ञानस्य, मानाभावात्। न चाभावकारणत्व[1]कल्पनापेक्षया भावकारणत्वकल्पनमेव युक्तमिति वाच्यम्। अबाधितत्वज्ञानस्य नियतपूर्ववर्तित्वमनन्यथासिद्धत्वमुभयमपि कल्पनीयमिति नियतपूर्ववर्तिनो बाधज्ञानाभाव[2]स्यानन्यथासिद्धत्वमात्रकल्पनस्य लघुत्वेन तस्यैव हेतुत्वकल्पनात्।

किं चाबाधितत्वज्ञानस्य हेतुत्वे बाधज्ञानस्य व्यभिचारज्ञानवत् कारणविघटकत्वापत्तौ साक्षादनुमितिविरोधित्वमिति सिद्धान्तो व्याहन्येत। अपि च यत्र परामर्शानन्तरं पक्षे [3]साध्याभावज्ञानं तत्रापि पूर्वोत्पन्नपक्षीयसाध्यसंशयस्य अबाधितत्वप्रमारूपतया तत्रानुमित्यापत्तिः।

किंच घनगर्जितादावप्यनुमितिर्न स्यात् तत्र संशयरूपस्यान्यस्य वा तज्ज्ञानस्यावात्। न च तत्रानुमितिरेव नेति वाच्यम्। अनुभवविरोधात्। न चेश्वरीयं तज्ज्ञानं तत्रेति वाच्यम्। बाधावतारेऽपि व्यधिकरणाबाधितत्वप्रमामादायानुमित्यापत्त्या समानाधिकरणस्यैव तस्य [4]हेतुत्वात्। अन्यथा सर्वत्र [5]निश्चयहेतुत्वसंभवे संशयहेतुत्वाभ्युपगमविरोधादित्याहुः।

तच्चिन्त्यम्। एवं सति भेदाग्रहस्यैव प्रवर्तकत्वापत्तेः। यदि च सत्यस्थल एव भेदाग्रहादभेदज्ञानोपस्थितौ लाघवेन तज्ज्ञानस्य कारणत्वक्लृप्तावन्यत्रासत्यस्थले तस्य [6]नियतपूर्ववर्तित्वादिकल्पनं फलमुखगौरवत्वान्न कारणत्वग्रहपरिपन्थीति, तदा साध्यसंशयानन्तरानुमितिस्थले [7]बाधज्ञानाभावादबाधितत्वज्ञानोपस्थितौ लाघवेन तस्यैव कारणत्वस्थितावन्यत्रापि घनगर्जितादिस्थले तत्कल्पनं तत्कारणताग्रहोप[8]जीवित्वान्न तत्प्रतिबन्धकमिति तुल्यम्।

यच्च किं चेत्यादिना तस्यानुमितिहेतुत्वे सिद्धान्तविरोध इति। तच्चायुक्तम्। तस्य कारणविघटकत्वेऽपि ग्राह्याभावावगाहितया साक्षादपि प्रतिबन्धकत्वे विरोधाभावात्। [9]न हि बाधज्ञानं साक्षादेवानुमितिप्रतिबन्धकमिति सिद्धा-

---

1. ख. ग. घ. 'कल्पन' नास्ति।
2. क. ख. ग. °स्यान्यथा-
3. क. साध्यबाधज्ञानं
4. क. हेतुत्वाभ्युपगमात्
5. घ. तन्निश्चय-
6. क. नियतस्य पूर्व-
7. ग. बाधज्ञानाभावाबाधित-
8. ग. जीव्यत्वान्न तत्प्रकृतप्रति-
9. ख. नापि

**प्रकाशः**

पक्षतावच्छेदकाविरोधिसाध्यप्रमायां यथार्थपरामर्शो गुण [1]इत्यप्याहुः ।

---

**न्यायशिखामणिः**

न्तोऽस्ति । न च कारणविघटकत्वेन सव्यभिचाराद्यन्तर्भावापत्तौ पृथग्घेत्वाभासता न स्यादिति वाच्यम् । स्वतन्त्रस्य महर्षेर्नियोगपर्यनुयोगाविषयत्वात् । अन्यथा साक्षादनुमितिप्रतिबन्धकत्वकारणविघटकत्वपुरस्कारेण हेत्वाभासद्वैविध्यापत्तेः ।

यदप्यपि चेत्यादि । तदपि न । यत्र परामर्शानन्तरं पक्षे साध्याभावनिश्चयस्तत्र तत्पूर्ववर्तिनः साध्यसंशयस्य तदा अभावात् । भावे [2]वा साध्यांशे अप्रामाण्यशङ्कास्कन्दितत्वात् तदनास्कन्दितस्यैव [3]तस्यानुमितिहेतुत्वात् ।

यदपि किं च घनगर्जितेत्यादि । तदप्यविचारितरमणीयम् । तत्रापि संशयरूपस्यान्यस्य वा तज्ज्ञानस्य कारणत्वग्रहबलेनावश्यं कल्पनीयत्वात् । अन्यथा ज्ञानद्वयाद्यत्रानुमितिस्तत्र विशिष्टपरामर्शस्यापि व्यभिचारेणानुमितिहेतुत्वानुपपत्तेः ।

किं चाबाधितत्वज्ञानस्यानुमित्यहेतुत्वे निगमनस्य तज्जनकज्ञानानुत्पादकत्वेन वैयर्थ्यप्रसङ्गः । न हि प्रतिबन्धकनिरासाय कारणोत्पादाय वावयवप्रयोगः । मनोयोगोत्पादाय कामिनीजिज्ञासानिरासाय चावयवान्तरप्रयोगापत्तेः । तस्मादबाधितत्वप्रमा अनुमितिप्रमायां गुण इति [4]सुष्ठूक्तमिति ।

[5]बाधस्थले तदनवतारकाले तादृशप्रमापत्तिः । [6]कारणतावच्छेदकावच्छिन्नसत्त्वे कार्योत्पत्तेरावश्यकत्वात् । किंच कूटलिङ्ग[7]जन्यवर्तमानसाध्यविषयकानुमितिः प्रमा न स्यात्, सल्लिङ्गपरामर्शाभावात् । अप्रमा च स्यात् [8]असत्यपरामर्शरूपदोषजन्यत्वादित्यस्वरसमपिशब्देन सूचयन् जयदेवमतमाह पक्षतेति ।

---

1. क. इत्याहुः
2. ख. 'वा' नास्ति ।
3. ख. 'तस्यानुमितिहेतुत्वात् .... ज्ञानद्वयात्' इति ग्रन्थो नास्ति ।
4. ख. घ. सूक्तमिति
5. क. पक्षतावच्छेदकावच्छिन्नबाधस्थले प्रमापत्तिः ।
6. क. कारणसत्त्वे कार्यावश्यकत्वात्
7. ग. ॰जन्यानुमानसाध्य-
8. क. असत्परामर्शजन्यत्वात्
ग. असत्त्वपरामर्श-

### प्रकाशः

सादृश्यपदं सप्रतियोगिकधर्मपरम् वैधर्म्योपलक्षणम् । सादृश्यगर्भातिदेशवाक्यपूर्वकोपमितिप्रमायां [1]सादृश्ययथार्थज्ञानं गुण [2]इत्यप्याहुः । शुकादिवाक्यजप्रमायामीश्वरप्रमामादायैवाव्यभिचारः ।

---

### न्यायशिखामणिः

सप्रतियोगीति । ननु सप्रतियोगि[3]धर्मज्ञानत्वमभावज्ञाने दीर्घत्वादिज्ञाने च गतमिति नावच्छेदकम् । न चातिदेशवाक्यप्रतिपाद्यत्वं तद्विशेषणम् । तथाप्युष्ट्रसदृशो गवय इत्यनाप्तवाक्यार्थं स्मरतो वनं गतस्य यत्र गवय एव गवयपदवाच्यत्व[4]प्रतीतिः तत्र [5]तादृशसादृश्ययथार्थज्ञानाभावात् प्रमा न स्यादिति चेत् —न । उपमितिविषय[6]वाच्यत्ववति अतिदेशवाक्यप्रतिपाद्यसप्रतियोगिकधर्मज्ञानस्य भ्रमसाधारणस्य गुणत्वेनाभिमतत्वात् । न चैवमपि यत्रोपमितिः सादृश्यप्रवृत्तिनिमित्तत्वगोचरा सापि वाच्यत्ववति गवये तादृशज्ञानजन्यत्वात् प्रमा स्यादिति वाच्यम् । वाच्यत्ववतीत्यनेनोपमितिविषयशक्यतावच्छेदकत्ववद्धर्मावच्छिन्न इत्यस्य विवक्षितत्वात् ।

जयदेवमतमाह—सादृश्यगर्भेति । उक्तरीत्या कार्यसंकोचोपपत्तौ तत्संकोचो न युक्त इत्यस्वरसं सूचयति—अपीति । 'यथार्थवाक्यार्थज्ञानं शाब्दप्रमायां गुण' इत्यत्र शुकादिवाक्यजप्रमायामुक्तं व्यभिचारमुद्धरति—शुकेति ।

ननु न तावत् यत्सामान्य [7]इति न्यायात् शाब्दप्रमायां यथार्थवाक्यार्थज्ञानस्य हेतुत्वकल्पनम् । विसंवादिशुकादिवाक्यजज्ञाने भगवज्ज्ञानस्याप्यभावात् व्यभिचारेण वाक्यप्रयोगे अन्यथासिद्धत्वेन च शाब्दज्ञानसामान्ये [8]तस्य कारणत्वायोगात् । नापि गुणजन्यत्वग्राहकप्रमाणबलात्कल्पनम् । योग्यताज्ञानस्य शाब्दज्ञानसामान्यकारणतया यत्सामान्य इति न्यायावगतहेतुभावयोग्यताप्रमयैव

---

1. ख. यथार्थसादृश्यज्ञानं
2. क. इत्याहुः
3. ख. °धर्मि-
4. क. °प्रतिपत्तिः
5. ग. सा तादृशी सादृश्यज्ञाना- घ. सादृशसादृश्य°
6. ख. °वाच्यत्वस्यातिदेश-
7. क. 'इति' नास्ति ।
8. ख. अस्य

**तत्तदप्रमायां पित्तादिलिङ्गभ्रमादीनां दोषत्ववत् प्रत्यक्षे विशेषदर्शनमपि गुणः, तदनुविधानात् ।**

---

प्रकाशः

न चैवमन्योन्याश्रय इति वाच्यम् । एवं हि क्षित्यादौ व्यभिचारात् कर्तृकार्ययोरपि हेतुहेतुमद्भावो न गृह्येत । ईश्वरमादाय व्यभिचारोद्धारे अन्योन्याश्रयप्रसङ्गात् ।

यदि च कर्तृविशेषकार्यविशेषयोरन्वयव्यतिरेकाभ्यां कर्तृकार्यसामान्ययोः कार्यकारणभावावधारणान्नोक्तदोषः, [1]तदा प्रमाविशेषवाक्यार्थप्रमाविशेषयोरन्वयव्यतिरेकाभ्यां तत्सामान्ययोः कार्यकारण[2]भावावधारणान्नोक्तदोष इति तुल्यम् ।

वस्तुतो यथार्थयोग्यताज्ञानमेव तत्र गुण इत्यग्रे ग्रन्थकार एव वक्ष्यति ।

केचित्तु प्रमात्वं प्रत्यक्षप्रमात्वं वा नैकमनुगतम् । यत्तद्घटितत्वेनाननुगमात् । तथा च तत्रानुगतगुणचिन्तापि नास्ति । किं तु घटत्ववति

---

न्यायशिखामणिः

शाब्दप्रमोपपत्तेः । किं च गुणग्राहकप्रमाणेऽपि न तादृशवाक्यार्थज्ञानं विषयः । फलसमानाधिकरणलघुयोग्यताप्रमाया एव लाघवसहकृतानुमानविषयत्वादित्यस्वरसादाह—वस्तुत इति । योग्यताप्रमा चाबाधितत्वप्रमासमानयोगक्षेमेत्यत्रा[3]तिदिष्टास्मदुक्तपरिहारेण परोक्तदूषणातिदेशो निरवकाशो वेदितव्यः ।

नरहरिमतमाह—केचित्त्विति । तथा चेति । कार्यतावच्छेदकस्यानुगतत्वासंभव इत्यर्थः । तत्संभवे हि तदाकस्मिकत्वापत्तिरूपतर्कानुगृहीतमनुमानमनुगतगुणसाधकं स्यादिति भावः ।

ननु घटप्रमाया अपि प्रत्यक्षानुमित्यादिरूपत्वेन घटेन्द्रियसंनिकर्षघटविषयकपरामर्शादेस्तत्रानुगतत्वाभावादत्राप्यनुगत[4]गुणचिन्ता बाधितैवेत्यत आह—

---

1. क. तथा
2. क. °भाषान्नोक्त-
3. ख. °तिदिष्टस्योक्त-
   ग. °त्रानिर्दिष्टास्मदुक्त-
4. क. 'गुण' नास्ति ।

ननु विशेषदर्शनहेतुरेव तद्धेतुरस्तु, तद्व्यतिरेकादेव तदभावोपपत्तेः। अन्यथा विशेषदर्शनमेव तत्र कुतो न स्यात्।

तत्रापि तदपेक्षायामनवस्थानादिति चेत्—एवं व्याप्यविषयकव्यापकप्रत्यक्षनियमे अनुमिताविव पुरुषप्रत्यक्षे प्रामाण्यसंशयो न स्यात्, करादिमति पुरुषज्ञानत्वस्यानुव्यवसायेन निश्चयात्।

---

**प्रकाशः**

घटत्व[3]प्रकारकज्ञानत्वादिरूपं प्रत्येकमननुगतम्। तत्र [1]चानुगतमदृष्टस्वरूपमन्यद्वा यथायथं गुणत्वेन बोध्यमित्याहुः। **विशेषेति**। व्याप्यदर्शनमित्यर्थः। ननु तद्धेतोरेवेति न्यायेन विशेषदर्शनहेतुरेव तद्धेतुरिति व्यापकप्रत्यक्षमेव व्याप्यमपि विषयीकरोति न तु [2]तत्प्रत्यक्षपूर्वकं व्याप्यविषयं ज्ञानमित्याशङ्कते—**नन्विति**। **तव्द्यतिरेकादिति**। विशेषदर्शनहेतुव्यतिरेकादेव [3]प्रत्यक्षविरहोपपत्तिरित्यर्थः। **अन्यथेति**। विशेषदर्शनहेतुसत्त्व इत्यर्थः।

ननु विशेषदर्शनहेतुरपि विशेषदर्शनान्तरमेव। तथा च विशेषदर्शन[4]हेतुहेतुकत्वाभ्युपगमेऽपि विशेषदर्शनहेतुतैवाभ्युपगतेत्यत आह—**तत्रापीति**। अन-

---

**न्यायशिखामणिः**

**तत्र चेति**। **अनुगतेति**। तत्र जातिविशेषोऽवच्छेदक इति भावः। ननु घटज्ञानविशेष्यवृत्तिविशेषणज्ञानादेर्दृष्टस्यैव प्रकृते गुणत्वसंभवात् नादृष्टकल्पनावकाश इत्यस्वरसादाह—**अन्यद्वेति**। ननु विरोधिदर्शनं न विशेषदर्शनपदनिर्देश्यम्, तस्य [5]तत्र प्रतिबन्धकत्वात्। नापि व्याप्यदर्शनम्, अतिप्रसङ्गादित्यत आह—**व्याप्येति**। व्याप्यत्वप्रकारकयथार्थज्ञानमित्यर्थः।

नन्वन्यहेतोरन्यहेतुत्वे घटहेतोः पटहेतुत्वप्रसङ्गः। न च तद्धेतोरेवेति [6]न्यायेनान्यहेतुत्वाभिमतस्य तत्कार्यत्वाभिमतं प्रति हेतुत्वमाशङ्क्यत इति वाच्यम्। विशेषदर्शनकार्यं हि व्यापकमात्रप्रत्यक्षम्। तस्यैव तत्सामग्रीकार्यत्वे व्याप्यांश[7]-

---

3. क. प्रकारकत्वं प्रत्येक-
1. क. चादृष्टं स्वरूपं वा अन्यद्वा
2. क. तत्प्रत्यक्षपूर्वंव्यापकप्रत्यक्षमित्या-
3. ख. प्रत्यक्षाभावोप-
4. क. ०हेतुत्वाभ्युप-
5. ख. ग. तस्य
6. घ. न्यायेन न्यायहेतुत्वा-
7. क. ०श्रमानमनुभव-

तत्रापि विशेषदर्शनं विना कथं व्यापकप्रत्यक्षमिति चेत्—न। संशयविपर्ययोत्तरप्रमायां तस्य हेतुत्वात्।

---

प्रकाशः

वक्ष्याभिया विशेषदर्शनान्तरं न तद्धेतुरिति नोक्तन्यायेन विशेषदर्शनहेतुत्वमित्यर्थः। एवमिति। व्याप्यदर्शन[1]सामग्रीसत्त्वे प्रत्यक्षस्य व्याप्यविषयतानियमेन अनुव्यवसायेन प्रामाण्यव्याप्यधर्मोपनये प्रामाण्यसंशयो न स्यादित्यर्थः।

यद्यपि व्याप्यवद्विषयकज्ञानत्वमात्रमनुव्यवसाये न शक्योपनयम्। तच्च न प्रामाण्यव्याप्यम्। यच्च प्रामाण्यव्याप्यं व्याप्यवद्विशेष्यकत्वं तन्नानुव्यवसायेन शक्योपनयम्। स्वतःप्रामाण्यग्रहापत्तेः। किं च विशेषदर्शनस्यापि प्रत्यक्षहेतुत्वे

---

न्यायशिखामणिः

भानसामर्थ्यमनुभवसिद्धं तस्याः [2]पीडयेत, व्याप्यवद्विषयत्वस्य तज्जन्यप्रत्यक्षानुव्यवसायविषयत्ववर्णनं चाग्रे बाध्येतेत्यत आह—नन्विति। ननु विशेषदर्शनस्याहेतुत्वे तदितरसंपत्तौ तव्द्यतिरेकात् प्रत्यक्षव्यतिरेको न स्यादित्याशङ्क्य, तदा तद्धेतुव्यतिरेकोऽप्यस्ति न वा। तत्राद्ये तद्व्यतिरेकादित्युक्तम्। तत्र तच्छब्दस्य [3]विशेषदर्शनपरत्वभ्रमं वारयति—[4]विशेषेति। द्वितीये अन्यथेत्युक्तम्। तत्रान्यथाशब्देन विशेषदर्शनव्यतिरेकात् प्रत्यक्षव्यतिरेकोक्तावापाद्यासंगतिरित्यत आह—विशेषेति। विशेषदर्शनसामग्रीसत्त्व इत्यर्थः।

ननु विशेषदर्शनहेतुरेव तद्धेतुरस्त्वित्येतन्नानिष्टम्, तस्यैव विशेषदर्शनरूपत्वादित्याशङ्कानिरासाय तत्रापीति [5]ग्रन्थः। तथा सति आत्माश्रयस्यैव प्रसङ्गेनानवस्थेत्यनुपपत्तिरित्यत आह—नन्विति। ननु चोद्यस्यानवस्थापर्यवसायित्वे परिहारग्रन्थानुपपत्तिरित्यत आह—अनवस्थेति। ननु पुरुषत्ववद्विशेष्यकत्वरूपप्रामाण्यस्यानुव्यवसायाविषयत्वान्न प्रामाण्यसंशयानुपपत्तिरित्यत आह—व्याप्येति। यदि व्याप्यवद्विषयकत्वमपि प्रामाण्यव्याप्यं तदा दोषमाह—

---

1. ख. सामग्रीजन्यव्यापकप्रत्यक्षस्य
2. क. ग. विरुध्येत
3. घ. 'विशेषदर्शन...तस्यैव' इति ग्रन्थस्त्रुटितः।
4. क. विशेष इति।
5. घ. 'ग्रन्थः' नास्ति।

प्रकाशः

उक्तदोषतादवस्थ्यम् । अनुमिताविव बाधकाभावेन व्याप्यदर्शनोपनीतस्य[व्याप्यस्य] [1]व्यापक-प्रत्यक्ष[2]विषयत्वनियमात् ;

तथाप्यननुगतमेव विशेषदर्शनहेतूनां हेतुत्वमित्यनुपदं वक्ष्यमाणदूषणे तात्पर्यं बोध्यम् ।

ननु त्वयापि [3]विशेषदर्शनं (विना) व्यापकप्रत्यक्षकारणं वाच्यम् । तथा च व्यभिचारान्न तस्य हेतुत्वमिति शङ्कते—तवापीति । प्रत्यक्षविशेषे [4]हेतुत्वं ब्रूमो न प्रत्यक्षमात्र इति न व्यभिचार इत्याह—संशयेति ।

यद्यपि संशयोत्तरप्रत्यक्षमात्रेऽपि न विशेषदर्शनं [5]हेतुः । अन्धकारे घट-संशयोत्तरप्रत्यक्षस्य तद्विनाप्यालोकसमवधानमात्रेणैवोपपत्तेः । तथापि यत्र [6]विशेषा-

न्यायशिखामणिः

किं चेति । उक्तदोषेति । प्रामाण्यसंशयानुपपत्तिरूपेत्यर्थः । अनुमिताविवेति । उपनयस्य लाघवेन प्रमाणमात्रसहकारित्वादिति भावः ।

ननु व्यापकप्रत्यक्षे [7]कारणत्वस्यानुक्तत्वादनुक्तोपालम्भ इत्याशङ्क्य, प्रत्यक्ष-मात्रे विशेषदर्शनहेतुत्वमसंभवदुक्तिकमिति व्यापकप्रत्यक्षे तद्वाच्यमिति नानुक्तविष-यता दूषणस्येत्याह — ननु त्वयापीति । प्रत्यक्षमात्र इति । व्यापकप्रत्यक्षमात्र इत्यर्थः ।

वयं तु—विशेषदर्शनहेतुरेव प्रत्यक्षहेतुरस्तु, अन्वयाद्यनुविधानात्, न तु विशेषदर्शनम् । तदन्वयव्यतिरेकानुविधानस्यान्यथासिद्धत्वादिति शङ्कते—नन्विति । प्रत्यक्षं च संशयाद्युत्तरमिति [8]स्थाप्यत इति भावः ।

किं च विशेषदर्शनस्य प्रत्यक्षमात्रे हेतुत्वम् उत व्यापकप्रत्यक्षे । तत्राद्यं दूषयति — अन्यथेति । तस्य प्रत्यक्षमात्रहेतुत्वे तत्र विशेषदर्शने विशेष[9]दर्श-

1. ख व्याप्यस्य व्यापक-
2. ख. 'विषयत्व' नास्ति ।
3. ख. विशेषदर्शनं व्यापकप्रत्यक्षमात्रे कारणं वाच्यम् ।
4. ख. तस्य हेतुत्वं
5. क. 'हेतुः' नास्ति ।
6. ख. विशेषदर्शनादि-
7. ग. कारणस्यानुक्त-
8. ख. ग. घ. स्थास्यतीति
9. घ. °दर्शनानन्तरमेव

प्रकाशः

दर्शनादिदोषाधीनः संशयः तदुत्तरप्रत्यक्षे तस्य हेतुत्वम् । उक्तस्थले च व्यञ्जकाभावाधीनः स [1]इत्यर्थः ।

ननु संशये सति विशेषदर्शन[2]विरहदशायां संशयानुत्तरप्रत्यक्षस्थले या सामग्री साऽस्ति न वा । न चेत्, तर्हि तद्विरहादेव [3]तत्र प्रत्यक्षानुत्पादोपपत्तिः न विशेषदर्शनविरहादिति न तत्र तस्य हेतुत्वम् । आद्ये प्रत्यक्षोत्पादनप्रसङ्गो दुर्वार एव । अथ तत्सामग्र्यां सत्यामपि संशयेन प्रतिबन्धान्न तदुत्पाद इति चेत्—न ।

न्यायशिखामणिः

नान्तरमेव तव मते हेतुः कुतो न स्यात् । तस्यापि प्रत्यक्षत्वात् । अन्यथा तत्रैव व्यभिचारादिति भावः । द्वितीयं शङ्कते—तत्रापीति । विशेषदर्शनेऽपि विशेषदर्शनान्तरापेक्षायामनवस्था स्यादिति न तत्प्रत्यक्षमात्रे हेतुः, किं तु व्यापकप्रत्यक्ष इत्यर्थः । यथा उपनीतभानमते [4]उपनायकव्याप्यज्ञानसत्त्वादनुमितौ व्यापकविषयत्ववद्व्याप्यविषयत्वमपि नियतमिति प्रामाण्यव्याप्यधूमवद्विशेष्यकत्वस्य तदनुव्यवसाये भानान्न तत्र प्रामाण्यसंशय इत्युक्तं यत्त्विति टीकाविरोधपरिहारग्रन्थे, तथा पुरुषप्रत्यक्षेऽपि तत एव तदुभयविषयत्वं नियतमिति [5]पुरुषत्ववद्विशेष्यकत्वव्याप्यकरादिमद्विशेष्यकत्वस्य तदनुव्यवसायेन विषयीकृतत्वात् [6]तत्प्रामाण्यसंशयः कदापि न स्यादित्याह—एवमिति । विशेषदर्शनस्य व्यापकप्रत्यक्षहेतुत्व इत्यर्थः ।

एतच्चापाततः — करादिमद्विशेष्यकत्वस्य प्रामाण्यव्याप्यस्यानुव्यवसायविषयत्वात् । अत एव टीकाविरोधनिराकरणग्रन्थोऽप्यनुमितिविशेषपरतया व्याख्यातः । वस्तुतो विशेषदर्शनं विनापि व्यापकप्रत्यक्षोत्पत्तेर्विशेषदर्शनं [7]न तद्धेतुरित्यत्र तात्पर्यम् ।

अत एव व्यभिचारसाम्यमेवाशङ्कते—तवापीति । विशेषदर्शनं विना यत् व्यापकप्रत्यक्षं तद्विशेषदर्शनसामग्री तत्र हेतुरिति वदतस्तव मते कथं स्यात् । तत्र तदभावेन तत्सामग्रीविरहादिति भावः ।

1. ख. इति भावः ।
2. ख. 'वेरह' नास्ति ।
3. ख. 'तत्र' नास्ति ।
4. ख. हेतूपनायक-
5. ख. पुरुषत्वभेदिविशेष्यक-
6. क. ग. तत्र प्रामाण्य-
7. ग. 'न' नास्ति ।

## प्रकाशः

आद्यसंशयस्य प्रमाणापरिपन्थित्वात्। तत्परिपन्थित्वे च तस्मिन् सति विशेषदर्शनादपि प्रत्यक्षं न जायेतेति चेत्—

अत्र वदन्ति। यत्र संशयस्तत्र विशेष्येन्द्रियसंनिकर्षादितोऽपि विशेषदर्शनं विना प्रत्यक्षं न जायते। तस्मिन् सति तु जायत एव। यत्र तु [1]न संशयस्तत्र तेन विनैव [2]जायत इति प्रत्यक्षे विशेषदर्शन[3]विरहविशिष्टस्य संशयस्य प्रतिबन्धकत्वम्। [4]तदभावविशिष्टस्य च तस्य तत्राप्यप्रतिबन्धकत्वमुन्नीयते। तादृशस्य प्रतिबन्धकीभूतसंशयस्य विरहः प्रत्यक्षे सर्वत्र कारणम्। स च विशेषदर्शनसहकृतसंशये सति विशेषदर्शनविरहस्य विशेषणस्य विरहात् संशयविरहे [5]सति विशेषादर्शने सति विशेष्यविरहात् संशयविरहे विशेषदर्शने च सति उभयविरहात् सर्वत्राविशिष्टः।

नन्वेवं [6]विशेषदर्शनस्य प्रत्यक्षे कारणत्वं न स्यात्। विशिष्टाभावसंपादकत्वेनान्यथासिद्धत्वादिति चेत्—न। तेन रूपेण तस्य तथात्वेऽपि विशेषणज्ञानत्वेन हेतुत्वात्। एवं विपर्ययोऽपि विशेषदर्शनविरहविशिष्ट एव प्रत्यक्षे प्रतिबन्धक इति तस्मिन् सत्यपि विशेषदर्शनात् प्रत्यक्षं [7]जायत एव। तस्य च तत्र विशेषणज्ञानत्वेनाप्युपयोगित्वात् कारणत्वम्।

---

## न्यायशिखामणिः

न हि व्यापकप्रत्यक्षमात्रहेतुत्वं तद्धेतोरभिमतम्, येन व्यभिचारः स्यात्। किं तु यत्र विशेषदर्शनस्य तव हेतुत्वं तत्र संशयविपर्ययान्यतरोत्तरप्रत्यक्षे ममापि तद्धेतोर्हेतुत्वम्, तद्धेतोरेवेति न्यायादित्याशयेनाह—**न संशयेति** ।इति ब्रूमः।

**संशयानुत्तरेति**। विवक्षितसंशयानुत्तरेत्यर्थः। तत्सामग्री प्रत्यक्षसामग्री।

उपाध्यायमतमाह—**अत्रेति**। नन्वस्तु अन्वयव्यतिरेकाभ्यां विशेषदर्शनविरहविशिष्टस्य [8]संशयस्य प्रतिबन्धकत्वम्। ततः किमित्यत आह—**तादृशस्येति**।

---

1. ख. 'न' नास्ति।
2. ख. तज्जायते
3. ख. ॰विरहस्य संशयस्य
4. क. तदपि विशिष्टस्य च तत्राप्रति-
5. ख. अपि
6. क. विशिष्टदर्शनस्य
7. क. ज्ञायत एव।
8. ख. घ. संशयप्रति-

**प्रकाशः**

नन्वेवमपि संशयाद्युत्तरप्रत्यक्षेऽपि विशेषदर्शनस्य न तत्त्वेन हेतुत्वम्, किं तु विशेषणज्ञानत्वेनैव। तथा च तस्य प्रमायामसाधारण्येन कारणत्वाभावान्न गुणत्वमिति चेत्—न।

संशयाद्युत्तरप्रमायां प्रमारूपविशेषदर्शनस्य विशेषणप्रमात्वेन रूपेण कारणतया तथैव गुणत्वात् भ्रमरूप[1]विशेषदर्शनस्य चाहेतुत्वात्। न च [2]तस्य तत्रापि विशेषणप्रमात्वेनैव कारणता, विशिष्टप्रमायां विशेषणज्ञानस्य तथैव कारणत्वादिति वाच्यम्। विशेषणज्ञानस्य प्रमात्वेऽपि विशिष्टज्ञानस्य प्रमात्वानियमादिति।

अत्रेदं चिन्त्यम्। संशयस्थले यदि विशेषदर्शनविरहसहकृतसंशयेन [3]प्रतिबन्धान्न [4]प्रत्यक्षोदयस्तदा संशयोत्पत्तिकाले प्रत्यक्षापत्तिः। न च संशयसामग्र्या प्रतिबन्धान्न तथा, यज्ज्ञानं यत्र प्रतिबन्धकमिति न्यायेन प्रतिबन्धकाभावस्य कार्यसहभूतस्यैव हेतुत्वाच्चेति वाच्यम्। एवमपि धर्मिज्ञानकाले दैवात्पुरुषत्वादिज्ञानवतः पुरुषत्वादिनिश्चयापत्तेः। संशयस्य तत्सामग्र्या वा तदानीमभावात्।

ननु दोषस्य प्रतिबन्धकत्वान्न [5]तदा प्रत्यक्षमिति चेत्—[6]हन्तैवं आवश्य-

---

**न्यायशिखामणिः**

अन्यथासिद्धस्यापि कुम्भकारपितृवत् रूपान्तरेणानन्यथासिद्धत्वात् विशेषदर्शनस्य [7]कारणत्वमविरुद्धमित्याह—**तेनेति**।

**विशेषणज्ञानस्येति**। रजतत्वरूपविशेषणज्ञानस्य प्रमात्वेऽपि शुक्तौ तद्विशिष्ट[8]ज्ञानस्याप्रमात्वादित्यर्थः। **प्रगल्भोक्तेन** दूषयति—**अत्रेति**। किं विशिष्टसंशयः प्रतिबन्धकः, उत तत्सामग्र्यपि, [9]आहो दोषोऽपि। तत्राद्यं निराकृत्य द्वितीयमनूद्य दूषयति—**न चेति**। तृतीयं शङ्कते—**नन्विति**। **दोषस्येति**। [10]विशेषादर्शनरूपस्येति शेषः। **तदेति**। संशयसामग्र्यव्यवहितपूर्वकाल इत्यर्थः।

---

1. ख. ॰विशेषण-
2. ख. 'तस्य' नास्ति।
3. क. 'प्रतिबन्धान्न' नास्ति।
4. क. तत्प्रत्यक्षो-
5. क. तथा
6. क. नैवम्
7. क. कारणत्वमवि विरुद्ध- ख. कारणत्वं विरुद्ध-
8. ख. ॰ज्ञानत्वाप्रमा-
9. क. ग. आहोस्वित्
10. ग. विशेषदर्शन-

प्रकाशः

कत्वात् संशयकालेऽपि तत एव दोषात् प्रत्यक्षानुत्पत्तिरस्तु । किं संशयस्य प्रतिबन्धकत्वाभ्युपगमेनेति ।

विशेषदर्शने सति [1]विशेषादर्शनरूपदोषविरहान्निश्चयोत्पत्तिः, न तु निरुक्तविशिष्टाभावस्य प्रत्यक्षे हेतुत्वं मानाभावात् ।

नन्वेवं [2]विशेषादर्शनरूपदोषसत्त्वे संशयाद्यनुत्तरप्रत्यक्षमपि न स्यात् इति चेत्—न । फलबलेन तस्य [3]क्वचिद्दोषत्वकल्पनात् ।

---

न्यायशिखामणिः

एवं सति निरुक्तविशिष्टाभावस्य व्यापकप्रत्यक्षहेतुत्वं न सिध्येत् । तत्र हि स्वप्रतियोगिप्रतिबन्धकत्वं मानमन्यद्वा । तत्र च प्रतिबन्धकत्वमप्यनन्यथासिद्धान्वयव्यतिरेकगम्यं वाच्यम् । तत्र न तावदन्वय इत्याह—हन्तेति ।

तत एवेति । [4]विशेषादर्शनादेवेत्यर्थः । नापि व्यतिरेक इत्याह—विशेषदर्शन इति । [5]विशेषादर्शनेति । क्लृप्तेति शेषः । [6]न त्विति । [7]न तु विशिष्टसंशयविरहात् [8]प्रत्यक्षानुत्पत्तिविरहः, येन विशिष्टसंशयस्य प्रतिबन्धकत्वे तदभावस्य हेतुत्वं स्यादित्यर्थः । अन्त्यं निरस्यति—मानाभावादिति । स्वप्रतियोगिप्रतिबन्धकत्वादन्यस्य हेतुत्व[9]कल्पकस्यात्राभावादित्यर्थः । क्वचिदिति । संशयतत्सामग्रीतत्पूर्वकालेष्वित्यर्थः ।

तर्हि संशयकालीनविशेषादर्शनस्य [10]प्रतिबन्धकत्वे विशिष्टस्य प्रतिबन्धकत्वं त्वयाप्यङ्गीकृतं स्यात् । तथा च विशेषणविशेष्यपरिवृत्तिमात्रं कृतमिति चेत्—न हि [11]संशयकालः प्रतिबन्धकतावच्छेदकप्रविष्टः येन तथा स्यात् । किं तु विशेषादर्शनदशायां सादृश्यज्ञानमिवेदमपि दशाविशेषे प्रतिबन्धकम् ।

नन्वेवं संशय एव [12]विशेषादर्शनकाले प्रतिबन्धकोऽस्त्विति वैपरीत्यं

---

1. ख. विशेषदर्शन-
2. ख. विशेषदर्शन-
3. ख. क्वचिद्दोषत्वाभ्युपगमात्
4. ग. विशेषदर्शना-
5. ग. विशेषादर्शने सतीति ।
6. क. ख. घ. नन्विति ।
7. क. ख. नन्विति ।
8. ख. प्रत्यक्षानुत्पत्तिविरोधेन
9. क. ख. घ. ॰कल्पनस्यात्रा-
10. घ. प्रतिबन्धकत्वोक्त्या
11. क. संशयमितिकालः
12. ग. विशेषदर्शन-

प्रकाशः

ननूक्तयुक्त्या व्यभिचारसंशयस्य व्याप्तिग्रहप्रतिबन्धकता न स्यात् ग्राह्यसंशयत्वादिति चेत्—न। व्यभिचारसंशये हि सति विशेषदर्शनं विना न व्याप्तिग्रह इति कृत्वा तस्य प्रतिबन्धकतोक्तिः पारिभाषिकी, न तु कारणीभूताभाव[1]प्रतियोगित्वेनेत्याहुः।

---

न्यायशिखामणिः

किं न स्यादिति चेत्—तर्हि संशयसामग्रीपूर्वकाले प्रत्यक्षापत्तेः। न च क्वचित् कश्चिदित्यभ्युपगमात्तत्काले विशेषादर्शनमेव दोष इति वाच्यम्। आवश्यकविशेषादर्शनस्यैवोक्तकालत्रयेऽपि प्रतिबन्धकत्वसंभवे दोषद्वयकल्पनायोगात्।

ननु यदि संशयकालीनापि कार्यानुत्पत्तिर्दोषप्रयोज्येति स एव प्रतिबन्धकस्तदा व्याप्तिसंशयोऽपि प्रतिबन्धको न स्यात्, तज्जनकदोषस्यैव तथात्वसंभवादिति शङ्कते—नन्विति। प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वमत्राभिमतम्। तच्च [2]व्याप्तिसंशयस्य नेत्येतन्नानिष्टम्। शास्त्रे तद्व्यवहारश्च कार्यानुत्पादव्याप्यत्वलक्षणं पारिभाषिकं तदादायापि संभवतीत्याह—न व्यभिचारेति।

ननु [3]न संशयोत्तरप्रत्यक्षमात्रे विशेषदर्शनं हेतुः। व्यञ्जकाभावप्रयुक्तसंशयस्थले व्यभिचारात्। न च विशेषादर्शनप्रयुक्तत्वं संशयविशेषणम्, अन्धकारे विशेषदर्शने सति संशयाभावेन तत्रापि विशेषादर्शनस्य हेतुत्वात्। किं च प्रत्यक्षसामग्र्यां सत्यां दोषाभावे च सति विशेषदर्शनविलम्बेन तदुत्तरप्रत्यक्षविलम्बाभावात् न तद्धेतुः। अस्तु वा तस्य तत्र कारणत्वम्। तथापि न तत्त्वेन, विशेषादर्शनस्य दोषतया तदभावत्वेनैव हेतुत्वौचित्यादिति चेत्—

मैवम्। [4]न ह्यन्वयव्यतिरेकाभ्यां तस्य तत्र [5]कारणताग्रहः, येन स्वेतरसकलकारणसंपत्तौ स्वव्यतिरेके तद्व्यतिरेकापेक्षा स्यात्। किं तु संशयोत्तरप्रमितेर्गुण[6]जन्यत्वग्राहकानुमानेन। [7]तत्र च भावत्वादनुगतत्वाच्च लघु विशेषदर्शनमेव

---

1. क. °प्रतियोगिकत्वेने-
2. ख. व्याप्यसंशय-
3. ख. 'न' नास्ति।
4. ख. 'न हि' नास्ति।
5. ख. कारणताग्रहेण स्वतरवे-
6. ख. °जन्यग्राहका-
7. क. तस्य चाभावत्वा-

**प्रकाशः**

ननूक्तरूपप्रत्यक्षे विशेषदर्शनं [1]व्याप्यदर्शनमेव वाच्यम्। तथा चाप्तवाक्यात् पुरोवर्तिनि स्थाणुत्वाभावावगतौ संशये निवृत्ते[2]ऽपि विशेषदर्शनं [3]विना पुरुषप्रत्यक्षं न स्यात्। [4]तर्करूपविशेषदर्शनाच्च तन्निवृत्तौ तन्न स्यादिति चेत्—न। संशयविरोधिदर्शनत्वेन तस्य हेतुत्वात्।

---

**न्यायशिखामणिः**

हेतुतया विषयीक्रियते। न च [5]व्यञ्जकस्थले व्यभिचारादस्य [6]तदुत्तरप्रमाकरणत्वं बाधितमित्युक्तमिति वाच्यम्। [7]प्रतिबन्धकप्रयुक्तविशेषादर्शनजन्यत्वस्य संशयविशेषणत्वात्। आलोकसमवधानजन्यस्य च तस्य तादृशसंशयानुत्तरत्वान्न व्यभिचारः।

यद्यस्तु वेत्यादि। तदपि न। [8]दूरत्वस्याप्रमाप्रतिबन्धकेन्द्रियभूयोऽवयवसंयोगाभावरूपतया तत्त्वेन [9]कारणत्वापत्तौ [10]अभावत्वातिरिक्तिधर्मावच्छिन्नासाधारणकारणनिरपेक्षसामग्रीजन्यत्वेनाप्रमायास्तत्त्वापत्तेः। यदि च लाघवाद्दोषत्वेन हेतुत्वम्, तदा [11]विशेषदर्शनेऽपि तुल्यमिति भावः।

एवमपि व्यभिचार इति चोदयति—नन्विति। तर्केति। यद्ययं पुरुषो न स्यात् तर्हि करादिमान्न स्यादिति व्याप्यारोपात्मकतर्कात् पुरुषत्वादिकोटिकसंशयनिवृत्तौ यत्र तदुत्तरप्रमा [12]जायते तत्रानारोपात्मकव्याप्यनिश्चय[13]रूपगुणाभावात् सा न स्यादित्यर्थः। संशयविरोधिदर्शनत्वेनेति। तथा च तस्यापि संशयविरोधित्वान्न व्यभिचार इति भावः।

नन्विदमयथार्थविशेषदर्शनसाधारणम्। न च [14]दर्शनपदस्य प्रमापरत्वान्न तत्साधारणमेतदिति वाच्यम्। तथापि यत्र बाधानवतारे विशेषप्रमाजन्यसंशयो-

---

1. क. व्याप्यवत्त्वदर्शन-
2. ख. 'अपि' नास्ति।
3. ख. विनापि
4. ख. तद्रूप-
5. ख. बाधस्थले
6. क. तदुत्तरप्रत्यक्षप्रमा-
7. क. प्रतिबन्धकाप्रयुक्त-
8. ग. दूरत्वस्य स्वप्रमा-
9. ख. कारणत्वापत्तिः।
10. ख. भावत्वाति-
    ग. अभावाति-
11. क. विशेषदर्शनाभावेऽपि
12. ग. न जायते
13. ख. ग. घ. 'रूप' नास्ति।
14. क. विशेषदर्श-

न्यायशिखामणिः

त्तरप्रमा बाधितोपनीतार्थगोचरा तत्र सापि प्रमा स्यात्। किंच यत्र कूटलिङ्गज्ञानात् तदुत्तरवर्तमानपुरुषत्वादिप्रतीतिस्तत्र सा प्रमा न स्यात् अप्रमा च स्यात्। असद्विशेषदर्शनजन्यत्वात्।

अपि च स्थाणुत्वव्याप्यदर्शनेनापि कदाचित्पुरुषप्रत्यक्षापत्तिः, तस्यापि संशयविरोधित्वात्। न च तस्य ग्राह्याभाव[1]व्याप्यज्ञानत्वेन [2]पुरुषत्वप्रत्यक्षप्रतिबन्धकतया न तदापत्तिः, एकस्यापि कारणत्वप्रतिबन्धकत्वे रूपभेदेनाविरुद्धे, सिद्धसाधनस्यानुमितौ विशेषणज्ञानत्वेन हेतुताया अप्यङ्गीकारादिति वाच्यम्। तस्य पुरुषत्वाभावव्याप्यत्वेनापरामर्शात्। परामर्शे वा प्रत्यक्षे ग्राह्याभावव्याप्यप्रत्यक्षस्याप्रतिबन्धकत्वात्। अन्यथा शङ्खे [3]पीतत्वभ्रमानुपपत्तेः। तस्मात् विशेषदर्शनं प्रत्यक्षप्रमायां गुण इत्यसंगतमिति चेत्—

अत्र ब्रूमः—असद्विशेषदर्शनाजन्यत्वे सति प्रतिबन्धकप्रयुक्त[4]विशेषादर्शनजन्यसंशयोत्तरतत्कोटिप्रमात्वं कार्यतावच्छेदकम्। ज्ञाप्यवद्विशेष्यकसंशयविरोधिप्रमात्वं तत्कारणतावच्छेदकम्। तथा च यथार्थविशेषदर्शनजन्यतादृशप्रमायां बाधितोपनीतार्थभानेऽपि तत्कोटौ प्रमात्वान्नायो दोषः। कूटलिङ्गजतदुत्तर[5]प्रमितेरयथार्थविशेषदर्शनजन्यत्वेन व्यञ्जकसमवधानकालीनप्रमावत् कार्यतावच्छेदकावच्छिन्नत्वाभावात् [6]उक्तकारणजन्यत्वेऽपि नाप्रमात्वापत्तिः।

[7]यच्च अपि चेत्यादि। तच्चायुक्तम्। स्थाणुत्वव्याप्यज्ञानस्य प्रमात्वेऽपि ज्ञाप्यपुरुषत्वस्य पुरोवर्तिन्यसत्त्वेन ज्ञाप्यवद्विशेष्यकसंशयविरोधित्वाभावात्; तादृशस्य च तत्र प्रमात्वाभावात् न पुरुषत्व[8]प्रमापत्तिः। तस्मात्सर्वं [9]समञ्जसमिति संक्षेपः।

प्रत्यक्षसामग्र्यां सत्यामप्यनुमित्सादशायामनुमितिदर्शनादाह—अनुमित्सेति। उपाध्यायमतमाह—यत्त्विति। पक्षताविरहादिति। सिषाधयिषा-

---

1. ग. 'व्याप्य' नास्ति।
2. क. पुरुषप्रत्यक्ष-
3. ख. पीतिमानुपपत्तेः
4. ग. विशेषदर्शन
5. ख. °प्रमितौ यथार्थ-
6. ग. उक्तकारणाजन्य-
7. ग. 'यच्च अपि चेत्यादि....न पुरुषत्वप्रमापत्तिः' इति ग्रन्थः लुप्तः।
8. क. °प्रमात्वापत्तिः
9. ख. ग. असमञ्जस-

ममापि तद्धेतुस्तत्रैव हेतुरिति चेत्—न। करचरणचिबुकादीनां प्रत्येकं विशेषत्वेन तद्धेतूनामननुगततया तादृशप्रत्यक्षे अहेतुत्वात्। तद्दर्शनेषु च व्याप्यदर्शनत्वमनुगतमस्ति।

नन्वेवं संशयोत्तरं व्याप्यज्ञाने सत्यनुमितिः स्यात् न प्रत्यक्षमनुमितिसामग्र्या बलवत्त्वादिति चेत्—न। अन्यत्र तथात्वेऽप्यत्र प्रत्यक्षसामग्र्या बलवत्त्वात्। तत्र पुरुषं पश्यामीत्यनुव्यवसायात्। अत एव विशेषदर्शनजन्यत्वेन ज्ञातं बाधकम्। तद्दर्शनजन्यं बाध्यम्। अन्यथा बाध्यबाधकव्यवस्था न स्यात्।

न च प्रमा बाधिका, करभ्रमजन्यपुरुषज्ञानस्यापि स्थाणुज्ञानबाधकत्वात्। नापि विपरीतबोधकत्वेन बाधकत्वम्, बाध्यतुल्यत्वात्। अनन्यथासिद्धं बाधकमिति चेत्—न। विशेषदर्शनजन्यत्वस्यैव तदर्थत्वात्।

---

प्रकाशः

तद्दर्शनेषु चेति। यद्यप्येवं व्याप्यदर्शनहेतुत्वेन तद्धेतूनामप्यनुगमः, तथापि लाघवाद्व्याप्यदर्शनत्वेनैव हेतुत्वं न तु व्याप्यदर्शनहेतुत्वेन गौरवादिति भावः। अन्यत्रेति। विषयभेद इत्यर्थः। अत्रेति। समानविषये अनुमित्साविरहसहकृतप्रत्यक्षसामग्री प्रतिबन्धिकेति भावः। यत्तु पक्षताविरहान्न तत्रानुमितिरिति। तत्र बाधकमनुमिति[1]लक्षणव्याख्यानावसरे वक्ष्यामः। अत एवेति। क्वचिज्ज्ञाने विशेषदर्शनस्य जनकत्वादेवेत्यर्थः। विशेषदर्शनजन्यत्वेन ज्ञातं बाधकमिति। विशेषदर्शनजन्यत्वेन प्रतीतं यद्भवति तदेव स्वरूपसत् बाधकं भवतीत्यर्थः।

---

न्यायशिखामणिः

विरहसहकृतसिद्ध्यनुमानातिरिक्त[2]तत्कारणान्योन्याभावलक्षणपक्षताविरहादित्यर्थः। बाधकमिति। लाघवादावश्यकत्वाच्च सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षता, सा च संशयोत्तरप्रत्यक्षस्थलेऽप्यस्ति इत्यादिबाधकमित्यर्थः।

---

1. ख. लक्षणावसरे

2. क. सिद्धिकारणान्याभाव-

न च पीतः शङ्ख इत्यत्र विशेषदर्शनेऽपि श्वैत्यप्रमा नेति न तद्धेतुः। यद्विशेषदर्शनं हि भ्रमविरोधि तद्भावः प्रमाहेतुः।

प्रत्यक्षभ्रमे च प्रत्यक्षविशेषदर्शनं विरोधि। दिङ्मोहे गौरोऽहमिति भ्रमे च तथा दर्शनात्। तच्च तत्र दोषान्नास्ति।

---

## प्रकाशः

अत्र विशेषदर्शनजन्यं बाधकमित्येव वक्तव्यम्। [1]तत्त्वेन ज्ञातं तथेत्यभिधानात्। तादृशस्य बाधकत्वेऽनुभवः प्रमाणमिति दर्शितम्, न तु तत्त्वेनैव[2] ज्ञातस्य तथात्वम्। बाधकत्वं हि ज्ञानस्य बाध्यज्ञानोपदर्शितार्थविपरीतार्थावलम्बनतया उत्पादेन तत्प्रवर्तनीयव्यवहारविपरीतव्यवहारप्रवर्तनसामर्थ्यमेव। तच्च विशेषदर्शनजन्यत्वेन [3]ज्ञानस्य स्वरूपसत एव [4]भवति न तु तत्त्वेन [5]ज्ञातस्य ज्ञानमपेक्ष्यते मानाभावात् गौरवात् तत्त्वेनाज्ञातस्य क्वचिद्बाधकतापाताच्चेत्याहुः। विशेषदर्शनेऽपीति। श्वैत्य[6]व्याप्यशङ्खत्वदर्शनेऽपीत्यर्थः। यद्विशेषेति। भ्रमविरोधिविशेषदर्शनत्वेन हेतुत्वम्। शङ्खत्वदर्शनं च न तथेति श्वैत्यप्रत्यक्षानुत्पादेऽपि [7]न तत्रान्वयव्यभिचार इति भावः।

ननु शङ्खत्वदर्शनं कुतो न भ्रमविरोधीत्यत आह—प्रत्यक्षभ्रमे चेति। प्रत्यक्षेति। प्रत्यक्षविपरीतदर्शनमित्यर्थः। तेन श्वैत्यव्याप्यशङ्खत्वप्रत्यक्षसत्त्वादपीत-

---

## न्यायशिखामणिः

विशेषदर्शनजन्यं ज्ञानं तत्त्वेन ज्ञायमानं [8]बाधकं न तु स्वरूपसत्। तथा च [9]ऋज्वर्थ एवायं ग्रन्थ इति प्राचीनव्याख्यानमुपाध्यायोक्तेन दूषयति—न त्विति। गुरुमतसाधारणं बाधकत्वमाह—तत्प्रवर्तनीयेति। ननु श्वैत्याभावव्याप्यज्ञानस्य श्वैत्यप्रमितावहेतुत्वादेव [10]तदभाव इति न व्यभिचार इत्यत आह—श्वैत्येति। तथापि विशेषदर्शनत्वावच्छिन्नस्य व्यभिचार एवेत्यत आह—भ्रमेति।

---

1. ख. तत्तत्त्वेन
2. ख. 'एव' नास्ति।
3. क. ज्ञातस्य
4. ख. संभवति
5. ख. ज्ञातस्य तस्य ज्ञानमप्यपेक्ष्यते।
6. ख. °व्याप्यत्वेन शङ्खत्व-
7. क. 'न तत्र' नास्ति।
8. ख. ग. 'बाधकं' नास्ति।
9. क. यथाश्रुत एवायं
10. क. 'तदभाव इति' इति नास्ति।

## प्रकाशः

त्वानुमितिसत्त्वाच्च नोक्तदोषतादवस्थ्यमिति ध्येयम् । केचित्तु आरोप्यकोटिसमानाधिकरणत्वेनानिश्चीयमानस्य विशेषस्य दर्शनं विरोधि । शङ्खत्वं च आरोप्यपीतत्वकोटिसमानाधिकरणतयैव निश्चीयत इति न तद्दर्शनं [1]विरोधीत्याहुः ।

अन्ये तु [2]यद्विशेषदर्शनजन्यो यो भ्रमस्तद्विशेषदर्शनं तद्भ्रमोत्तरप्रत्यक्षहेतुः, तथैवान्वयव्यतिरेकदर्शनात् । पीतः शङ्ख इति भ्रमस्तु न शङ्खत्वविशेष-

---

## न्यायशिखामणिः

[3]ननु श्वैत्यानुमितेः प्रत्यक्षभ्रमाविरोधित्वेऽपि [4]तद्व्याप्यशङ्खत्वदर्शनस्य प्रत्यक्षत्वात्कथं न विरोधितेति शङ्कते—नन्विति । [5]विशेषपदस्य ग्राह्याभावविवक्षायाः प्रयोजनमाह—श्वैत्येति । प्रत्यक्षपदस्य[6] तदाह—अपीतत्वेति । केचिन्त्विति । एतन्मते विशेषपदं व्याप्यपरमेव । तथा च नीलपृष्ठत्वादिसंग्रहः । आरोप्येत्यादिविशेषणस्य प्रयोजनमाह—शङ्खत्वं चेति । तथा च शङ्खत्वज्ञानस्य व्याप्यदर्शनत्वेऽपि भ्रमविरोधित्वाभावान्नोक्तदोष इति भावः ।

ननु मतद्वयेऽपि भ्रमविरोधिव्याप्यज्ञानत्वं यदि कारणतावच्छेदकं तदा आलोकासमवधानप्रयुक्तसंशयोत्तरप्रमा तादृशविपर्ययोत्तरप्रमा चोक्तकारणाभावान्न स्यात् । न च व्याप्यदर्शनत्वमेव कारणतावच्छेदम् । कार्यतावच्छेदकं तु विशेषादर्शनजन्यभ्रमोत्तरप्रत्यक्षत्वम् । [7]व्यञ्जकस्थले च कार्यतावच्छेदकाभावान्न व्यभिचार इति वाच्यम् । तथा सति शङ्खत्वदर्शनात् तादृश[8]प्रत्यक्षापत्तेः । कारणतावच्छेदकावच्छिन्नसत्त्वे कार्योत्पत्तेरावश्यकत्वादित्यरुचेरुपाध्यायमतमाह—अन्ये त्विति ।

यद्विशेषदर्शनमित्यत्र कारणतावच्छेदकमात्रं नाभिप्रेतम्, येन व्यभिचारः स्यात् । किं तु यद्विशेषदर्शनविरोधिको यो भ्रम इति [9]वाक्यविपरिणामेन व्यञ्जकस्थलीयप्रमाव्यावृत्तं कार्यतावच्छेदकमपीत्याह—[10]यदिति ।

---

1. क. तद्विरोधीत्यर्थः
2. ख. यद्विशेषादर्शन-
3. क. 'ननु' नास्ति ।
4. ग. तद्व्यापक-
5. क. विशेषदर्शनस्य
6. क. °स्यापि तदाह
7. ख. व्यतिरेकस्थले
8. क. °प्रत्यक्षत्वापत्तेः
9. ग. वाक्यविवरणेन
10. घ. यदीति

**अपि च लिङ्गसादृश्यवाक्यार्थभ्रमदोषाभावमात्रान्नानुमित्यादिरिति सत्यपरामर्शादिगुणसिद्धिः ।**

---

**प्रकाशः**

दर्शनजन्यः, किं तु पित्तादिभ्रमहेतुजन्य एव । तथा च न तत्र शङ्खत्वदर्शनाद्-पीतत्वसाक्षात्कारः, तत्र तस्याहेतुत्वादिति वदन्ति ।

**नानुमित्यादिरिति** । [1]नानुमित्यादिप्रमेत्यर्थः । यद्यपि [2]परामर्शादिरूप-सामान्यसामग्रीविरहादेव न तत्रानुमित्यादि, तथापि सामान्यकारणताया विशेष-

---

**न्यायशिखामणिः**

मूले विरोधिशब्देन [3]कारणीभूताभावप्रतियोगित्वं विवक्षितम् । न तु कार्यानुत्पादव्याप्यत्वम् । अन्यथा भ्रमे विशेषदर्शनाभावजन्यत्वं न सिध्येदित्य-वधेयम् ।

**तद्विशेषदर्शनमिति** । तथा च भ्रमकारणीभूताभावप्रतियोगिविशेषदर्श-नत्वं कारणतावच्छेदकम् । [4]विशेषदर्शनजन्यभ्रमोत्तरप्रत्यक्षत्वं कार्यतावच्छेदकम् । व्यञ्जकस्थलीयप्रमायाश्चानीदृशत्वान्न व्यभिचार इति भावः । कारणतावच्छेदक-[5]विशेषणस्य प्रयोजनमाह—**पीत इति** ।

आप्तवाक्यजन्यस्थाणुत्वाभावावगत्या [6]संशयादिनिवृत्तौ संनिकर्षादिना यत्र तादृशसंशयाद्युत्तरपुरुषत्वादिप्रमा तत्र तथापि व्यभिचार इत्यस्वरसोऽत्र बोध्यः ।

ननु प्रत्यक्षप्रमायामनुगत[7]दोषाभावस्याभावात् अतिरिक्तगुणावश्यंभावेऽपि अनुमित्यादिप्रमासु लिङ्गसादृश्यवाक्यार्थ[8]भ्रमाभावानामनुगतत्वात् क्लृप्तत्वाच्च तत एव तदुपपत्तौ न गुणापेक्षेत्याशङ्क्य, तत्रापि गुणजन्यत्वसिद्धिरप्रत्यूहेत्युक्तम् अपि चे-त्यत्र । तद्युक्तम् । प्रमाणानुपन्यासात् [9]अभिप्रेतं च नान्वयादिसहकृतं प्रत्यक्षं पृथगन्वयाद्यभावात् । सत्यपरामर्शादेः सामान्यकारणस्य विशेषकारणताविरोधाच्च

---

1. ख. 'न' नास्ति
2. ख. परामर्शरूप-
3. ख. 'कारणीभूताभावप्रतियोगित्वं······तथा च भ्रम' इति ग्रन्थस्त्रुटितः ।
4. ख. विशेषादर्शन-
5. क. °विशेषस्य
6. ख. संशयनिवृत्तौ
7. ख. °दोषाभावात् ।
8. क. °प्रमाभावानां
9. अभिप्रेतश्चान्वयादि-

एवं प्रमायाः गुणजन्यत्वेन वेदेऽपि प्रमा वाक्यार्थयथार्थज्ञानगुणजन्येति तदाश्रयेश्वरसिद्धिः।

ननु प्रत्यक्षादावस्तु गुणजन्यत्वम्। वेदे तु भ्रमाद्यभावचतुष्टयं प्रमाहेतुः। लोके भ्रमाद्यभाव एव प्रमोत्पत्तेरिति चेत्—

न। तत्र लाघवाद्वाक्यार्थयथार्थज्ञानस्य हेतुत्वेन भ्रमाद्यभावानामन्यथासिद्धत्वात्। आप्तस्य भ्रमाद्यभावमात्रेण वाक्यार्थज्ञानं विना तादृशवाक्याभावाच्च। अन्यथा तत्रापि तत्र वक्तृज्ञानानुमानं न स्यात् तस्याहेतुत्वात्।

---

प्रकाशः

कारणत्वाविरोधित्वात् यत्सामान्यं [1]यत्सामान्ये प्रयोजकमिति न्यायेन प्रमारूपानुमित्यादिविशेषे सत्यपरामर्शादिविशेषस्य हेतुत्वमिति भावः। वेदे त्विति। तथा च नेश्वरसिद्धिः इति भावः।

लाघवादिति। यथा महत्त्वस्य लाघवेन प्रत्यक्षहेतुतया अनेकद्रव्यत्वमन्यथा(सिद्धिरिति)[सिद्धमिति]भावः। अस्तु वा इत्यभ्युपगमवादः। वस्तुतो

---

न्यायशिखामणिः

इत्यभिप्रेत्य शङ्कते—यद्यपीति। न तावद्विशेषकारणान्वयव्यतिरेकयोः सामान्य[2]कारणविषयतया अन्यथासिद्धिः। तद्विरहस्य सामान्यसामग्रीविरहसंपादनद्वारा कार्याभावप्रयोजकत्वात्। अन्यथा विशेषकारणमात्रोच्छेदापत्तेरित्युक्तत्वादित्यभिप्रेत्य सामान्यकारणस्य विशेषकारणताविरोधं परिहरति—तथापीति। अन्यथासिद्ध्यन्तराभावात् आवश्यकेत्याद्यन्यथासिद्धिरेव मूलेऽभिप्रेतेति सूचयन् तदनुरूपं दृष्टान्तमाह—यथेति। ननु दोषाभावस्यापि कारणत्वे 'भ्रान्तप्रतारकवाक्य' इत्यग्रिमग्रन्थे व्यभिचारवर्णनविरोध इत्याह—अभ्युपगमेति।

ननु स्वरूपमद्गौरवस्याप्रतिबन्धकत्वात् तदुपस्थितिर्वाच्या। सा च कारणताग्राहकप्रमाणप्रवृत्तौ सत्यामसत्यां वा। तत्राद्यं प्रमाणवत इत्यत्र निरस्तम्।

---

1. ख. यत्सामान्यप्रयोजकं तद्विशेषे तद्विशेषत्वं प्रयोजकमिति।
2. ख. 'कारण' नास्ति।

अस्तु वोभयमपि हेतुः विनिगमकाभावात्। तथापि वेदे गुणसिद्धिः। न च नित्यनिर्दोषत्वाद् दृष्टादेव वेदे प्रामाण्योपपत्तौ नापरिदृष्टनित्यज्ञानादिसर्वज्ञकल्पना गौरवादिति वाच्यम्। प्रमाणवतः फलमुखगौरवस्यापि स्वर्गादाविवादोषत्वात्।

---

प्रकाशः

भ्रान्तप्रतारकादिवाक्यजन्यप्रमायां भ्रमाद्यभावानां व्यभिचारादहेतुत्वमेवेति ध्येयम्। प्रमाणवत इति। वेदार्थप्रमा वक्तृगुणजन्या शाब्दप्रमात्वादिति प्रमाणमत्रेति ध्येयम्।

ननु चास्य प्रमाणस्य गौरवं परिपन्थि स्यादत आह—फलमुखस्येति। गौरवं कल्पनाकालोपस्थितं परिपन्थि। फलमुखं च गौरवमनुपस्थितमिति न परिपन्थि। तदुत्तरं च तन्मूलप्रमाणसिद्धत्वान्न दोषायेति भावः। [1]स्वर्गादाविवेति। सुखत्वावच्छिन्नं प्रति शरीरस्य जनकत्वकल्पने स्वर्गसुखेऽपि शरीर[2]कल्पनवदित्यर्थः। यथा स्वर्गोपपादकमपूर्वं तत्सहकार्यन्तरं च प्रमाणसिद्धत्वात्कल्प्यते तथेदमपि। यदाहुः—

‘प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि’ इति[3]।

---

न्यायशिखामणिः

तदयुक्तम्। वेदार्थप्रमा गुणजन्या शाब्दप्रमात्वादित्यनुमानस्य श्रोत्र[श्रोतृ]निष्ठयोग्यता[4]प्रमयार्थान्तरेण वक्तृगुणासाधक[5]त्वादित्यत आह—वेदार्थेति।

नन्विति। [6]प्रवृत्तप्रमाणकस्य पुरुषस्य यद्गौरवज्ञानं तत्तेन कारणताग्रहे कर्तव्ये प्रतिबन्धकं स्यादित्यर्थः। न हि प्रमाणादेव गौरवज्ञानम्, किं तु तत्फलकारणताग्रहे सत्येव। तथा च सिद्धं नः समीहितम्। किं तदुपजीविगौरवज्ञानेनेत्याह—अत आहेति। अन्त्यं निराकृतं पूर्वमित्यत्र। [7]तदयुक्तम्। तथापि

---

1. क. स्वर्गादाविति।
2. क. ॰कल्पनमित्यर्थः
3. क. ‘इति’ इत्यनन्तरं ‘केचिदाहुः’ इत्यधिकपाठः
4. क. ग. घ. ॰प्रमाया अर्थान्तरेण
5. ख. ॰त्वादित्याह
6. क. प्रवृत्ति-
7. ख. तथायुक्तम्

पूर्वं कारणताग्रहसमये फलानुपस्थित्या गौरवाज्ञानात् लोके नित्यत्वाभावाच्च। अथ वेदे कर्त्रस्मरणादेर्बाधकात् लोकेऽपि निर्दोषत्वेनैव प्रमाहेतुत्वम्, वेदे तु नित्यत्वेनैव वक्तुरभावेऽपि निर्दोषत्वमवधार्यत इति चेत्—न। बाधकस्य बहुशो निराकरिष्यमाणत्वात् भ्रान्तप्रतारकवाक्ये घटोऽस्तीति वाक्ये पटोऽस्तीति दोषजन्यवाक्ये च विसंवादात् प्रमाणे तदभावाच्च।

---

**प्रकाशः**

न च नित्यनिर्दोषत्वविशिष्टं [1]शाब्दप्रमाप्रयोजकं, तथा अदर्शनादित्याह—**लोक इति**। वर्णस्य नित्यत्वेऽपि आनुपूर्वीघटितं लौकिकवाक्यमनित्यम्। वेदे तन्मते आनुपूर्व्यनित्यैवेति लोक इत्युक्तम्। ननु लोकवेदयोर्निर्दोषत्वमेव प्रामाण्यप्रयोजकम्, न तु नित्यत्वमपीत्याशङ्कते—**अथेति**। ननु वेदे प्रमाणाभावान्निर्दोषत्वमेव नास्ति। कुतस्तस्य प्रामाण्यप्रयोजकत्वमित्यत आह—**वेदे चेति**। केचित्तु

---

**न्यायशिखामणिः**

[2]तत्पूर्वं तर्कितगौरवोपस्थितेः संभवादित्यत आह—**कल्पनेति**। अतर्कितगौरवज्ञानमेव प्रतिबन्धकम्। अन्यथा निषादस्थपत्यधिकरणविरोधादिति भावः। **अनुपस्थितमिति**। कल्पनाकाले तर्कातिरिक्तप्रमाणेनानुपस्थितमित्यर्थः।

ननु तदुत्तरकालोपस्थितमपि गौरवं दोष एव। [3]अत एवाग्रे गौरवदर्शनादन्विते शक्तिपरित्याग इत्यत आह—**तदुत्तरं चेति**। न हि तदुत्तरगौरवस्य तत्परिपन्थित्वं दोषत्वम्, तस्य सिद्धत्वादेव। किं तु अप्रामाण्यज्ञापकत्वम्। प्रकृते परमेश्वरसिद्धेस्तर्कमूलकव्याप्तिग्रहजन्यत्वेन प्रमाणतया तदप्रामाण्य[4]ज्ञापकत्वमसंभवीत्यर्थः। शाब्दप्रमाप्रयोजकं ज्ञातमुपयुज्यत इति कृत्वा अवधारणमन्योक्तमित्याहुः।

नन्वपूर्वं गुरुमते वाच्यं न तु कल्प्यम्। तथा चोभयसिद्ध[5]दृष्टान्तासंभवादिदमयुक्तमित्यस्वरसं केचिच्छब्देन सूचयन् उपाध्यायमतमाह—**केचित्त्विति**। किं च किं नित्यनिर्दोषत्वं शाब्दप्रमाप्रयोजकमुत निर्दोषत्वमात्रम्। तत्र लोक

---

1. क. शब्दप्रमा-
2. ग. तत्पूर्वतर्कित-
3. ख. तत एवाग्रे
4. ग. °ज्ञापकत्वं संभवतीत्यर्थः
5. घ. °दृष्टान्तसंभवात्
   ग. दृष्टसिद्धान्तसंभवात्

किं च दैववशसंपन्नं चैत्यं वन्देतेत्यादिकं शुकबालादिवाक्यमप्येवं प्रमाणं स्यात्, वक्तृदोषाभावात् प्रमाणानपेक्षत्वेन वेदतुल्यत्वाच्च ।

---

**प्रकाशः**

शाब्दप्रमाप्रयोजकं ज्ञातमुपयुज्यत इति कृत्वा अवधारणमन्योक्तमित्याहुः ।

अन्वयव्यभिचारमाह—**किं चेति** । **दैववशेति** । वाक्यार्थज्ञानं विनापि तावत्पदज्ञानादेवोच्चरितमित्यर्थः । **प्रमाणेति** । वक्तृवाक्यार्थप्रमानपेक्षत्वेनेत्यर्थः ।

---

**न्यायशिखामणिः**

इत्येतदाद्यनिराकरणपरमित्याह—**न चेति** । द्वितीयं शङ्कते—**नन्विति** । स्वरूपसद्दोषा[1]भावेनैव तज्ज्ञानं विना शाब्दप्रमोत्पत्तेर्व्यभिचारात् गौरवाच्च तज्ज्ञानं न प्रयोजकमित्यस्वरसं सूचयति—**आहुरिति** ।

ननु भ्रान्तप्रतारकवाक्ये दोषाभावस्य व्यतिरेकव्यभिचार इत्ययुक्तम् । वाक्यार्थभ्रमाभावस्यैव शाब्दप्रमाप्रयोजकत्वेन विवक्षितत्वात्, तस्य च विसंवादिवाक्यमात्रसाधारण्यादित्याशङ्क्य [2]भ्रमाद्यभावमेलकस्य प्रयोजकम्, उत भ्रमाभावस्यैव । तत्राद्ये व्यतिरेकव्यभिचारमुक्त्वा अन्त्ये अन्वयव्यभिचारमाहेत्याह—**अन्वयेति** ।

ननु दैववशसंपन्नपदेन कलसकारणं विनोत्पन्नत्वाभिधाने बाधः । करणापाटवादिजन्यत्वोक्तौ नान्वयव्यभिचारः । [3]पदज्ञानमात्रजन्यत्वाभिधाने च [4]वक्तुर्व्युत्पन्नत्वे वाक्यार्थज्ञानावश्यंभावान्न व्यभिचारः । अव्युत्पन्नत्वे तस्यापि [5]बालपदाभिधेयत्वेन [6]बालादीत्यनेनैव तद्वाक्यस्याप्युक्तत्वात् पुनरभिधानवैयर्थ्यमित्यत आह **वाक्यार्थेति** । न हि दैववशसंपन्नमस्मादादिवाक्यमिति मूलार्थः । किं तु शुकबालादीनां पदज्ञानमात्र[7]जन्यमविसंवादिवाक्यं यथा भ्रमरूपदोषाभावात् [8]प्रमाणं तथा चैत्यं वन्देतेत्यादिवाक्यमपि प्रमाणं स्यादित्यर्थो बोध्यः ।

शुकादिवाक्यस्याप्युत्पत्तौ पदज्ञानरूपप्रमाणस्य ज्ञप्तौ श्रोतस्य चापेक्षितत्वादाह—**वक्तृवाक्यार्थेति** ।

---

1. क. ॰भावेनैतज्ज्ञानं
2. ख. भ्रमान्यभाव-
3. क. पदज्ञानजन्यत्वमात्राभि-
4. ख. घ. 'वक्तुः ।' नास्ति
5. ग. बाधपदा-
6. ग. बाधादि-
   ख. बालादि-
7. ख. ॰जन्यं त्रिसंवादि
   क. ग. ॰जन्यमपि संवादि-
8. ग. प्रामाण्यं

ननु तत्रापि शुकादिभ्रान्तप्रतारकवाक्यं कथं प्रमाणम्, गुणाजन्यत्वात्। न च गुणाजन्यत्वात् वक्तृतात्पर्याविषयत्वाच्च तदप्रमाणम्। संवादेन साध्ये बाधात्।

यत्तु भ्रान्तप्रतारकवाक्ये योग्यतैव नास्ति। वक्तृज्ञातवाक्यार्थाबाधो हि योग्यता। भ्रमविषयश्च बाधित इति। तन्न। घटवति घटो नास्तीति भिन्नविषयतया भ्रमस्याहेतुत्वात्।

---

प्रकाशः

वक्तृज्ञातेति। अत्र वाक्यार्थो न [1]प्रकृतवाक्यार्थः। किं तु संसर्गमात्रम्। घटाभावसंसर्गो भ्रमविषयः, तद्बाधादयोग्य एवायं शब्दो न प्रमाणमिति न तत्र गुणापेक्षेति भावः।

नन्वत्र यत्किंचिद्वाक्यार्थाबाधो न योग्यता वाच्या, अतिप्रसङ्गात्। तथा च प्रकृतप्रयोगकारणीभूतवक्तृज्ञानविषयवाक्यार्थाबाधो वा प्रकृतवाक्यार्थाबाधो वा सा वाच्या। तत्राद्य आह—घटवतीति। [2]तथा च समानविषयत्वेनाहार्यघटसंसर्गधीरेव हेतुरिति निरुक्तयोग्यतासत्त्वात् प्रमाणमेवेति भावः।

---

न्यायशिखामणिः

ननु [3]योग्यतासहितसंवादः प्रामाण्ये तन्त्रमित्युक्तमित्याशयेन यत्तु इत्युक्तम्। तत्र भ्रान्तप्रतारकवाक्यस्य [4]प्रमाणत्वे योग्यताभावोपपादनमसंगतम्। [5]अप्रमाणत्वे च भ्रमविषयसंसर्गबाधेऽपि प्रकृतवाक्यार्थघटसंसर्गाबाधात् कथं न योग्यतेत्यत आह—अत्रेति। ननु घटोऽस्तीति प्रयोगे तदभावभ्रमस्य भिन्नविषयत्वेन [6]अहेतुत्वेऽप्युक्तयोग्यताविरहो दुर्वार इत्याशङ्क्य [7]विकल्प्य व्याचष्टे—नन्वत्रेति। आद्येऽपि किं तादृशज्ञानविषयवाक्यार्थो [8]घटाभावसंसर्गः उत घटसंसर्गः। आद्य आह—आहेति। द्वितीये—तथा चेति।

---

1. क. प्रतिकृत-
2. ख. 'तथा च...एवमिति'. इति ग्रन्थस्त्रुटितः।
3. क. योग्यतादिसहित-
4. ग. अप्रमाणत्वे
5. ख. घ. प्रमाणत्वे
6. ख. हेतुत्वे
7. ग. विकल्पं
8. घ. घटभाव-

किं च वाक्यार्थाबाधो योग्यता लाघवात् । वाक्यार्थश्च तत्राबाधित एव । न च शुकबालादिवाक्यादर्थबोध एव न भवति, किं त्वेवमयं वदतीत्येवंप्रकारा प्रतीतिरिति वाच्यम् । आकाङ्क्षादेरन्वयबोधसामग्र्याः सत्त्वेऽनुभवानपलापात् । संवादेन यथार्थत्वानुभवाच्च ।

एवं धूमभ्रमाद्वह्निमत्येव वह्न्यनुमितिर्न प्रमा स्यात् यथार्थलिङ्गज्ञानाजन्यत्वात् । न च वह्न्यन्तरमेव तत्र विषयः प्रत्यभिज्ञानात् गोत्वाद्येक-

---

प्रकाशः

अन्त्ये त्वाह—किं चेति । तथा च प्रामाण्यमस्याक्षुण्णमेवेति भावः । शाब्दप्रमायां गुणस्य व्यभिचारमुक्त्वा अनुमितिप्रमायामाह—एवमिति । तत्रेति । तत्र क्वचित् पक्षवृत्तिगोत्वादिधर्मभिन्ने गोत्वादिजाति(तदारोपो) [तादात्म्यारोपो] न तु पक्ष एव गोत्वप्रतीतिरित्यर्थः ।

संसर्गारोपादिति । गोत्वादिजातेरेव पक्षसंसर्गारोपादित्यर्थः । अनुमितिसामग्र्या पक्ष एव साध्यसंसर्गोपनयात् न तु पक्षवृत्तिधर्मे तदर्थारोप इति भावः । यद्वा पक्षे अन्यगवाभेदारोपो नेति पूर्वफक्किकार्थः । साध्यव्याप्यलिङ्गवदभेदज्ञानं

---

न्यायशिखामणिः

अन्त्येऽपि किं प्रकृतवाक्यार्थाबाधो योग्यता तात्पर्य[1]विषयत्वघटिता वा । आद्ये लाक्षणिकप्रयोगे सा न स्यादित्यभिप्रेत्य अन्त्ये—अन्त्ये त्वाहेति । किं लिङ्गभ्रमात् साध्यसंसर्गारोपः उत पक्षवृत्तिधर्मे तदभेदारोपः पक्षे तद्वदभेदारोपो वा । तत्राद्यं न चेत्यादिना निराकृत्य नापीत्यत्र द्वितीयमाशङ्कितम् । तदयुक्तम् । गोत्वस्यापि पक्षवृत्तित्वेन तत्रारोपायोगादित्याशङ्क्य, न हि पक्षवृत्तिधर्मे सर्वत्र तत्तादात्म्यारोप इति तदर्थः । किं तु गोत्वभिन्ने तत्सदृशवर्णान्तर इत्याह—क्वचिदिति । न तु पक्ष इति । येन [2]प्रमा स्यादिति भावः ।

ननु द्वितीयनिराकरणपरस्य संसर्गारोपशब्दस्य लिङ्गसंसर्गारोपपरत्वे लिङ्गवत्तादात्म्यारोपस्य पक्षवृत्तिविषयकसाध्य[3]तादात्म्यारोपहेतुत्वमङ्गीकृतं स्यात् । तच्चायुक्तम् । तस्यापि [4]तत्रासामर्थ्यादित्यत आह—गोत्वेति ।

---

1. क. 'विषयत्व' नास्ति ।
2. ख. प्रामाण्यं
3. ख. ०तादात्म्याहेतुत्व-
4. ख. तत्रासामर्थ्यादित्याह

व्यक्तिके तदभावाच्च । नापि तत्रान्यतादात्म्यारोपः, संसर्गारोपात् लिङ्गो-पधानांशे भ्रमत्वेऽपि साध्यांशे प्रमात्वादिति ।

उच्यते । भ्रान्तप्रतारकवाक्ये शुकादिवाक्ये च प्रमाणशब्दत्वेना-प्तोक्तत्वात् वेदवदीश्वरस्यैव यथार्थवाक्यार्थज्ञानं जनकम्, तस्य कार्यमात्रे कर्तृत्वात् । शुकादिवाक्यस्य च वेदतुल्यता दोषाभाववादिनापि वाच्या ।

---

प्रकाशः

तादात्म्यानुमितौ, तादृशलिङ्गसंसर्गज्ञानं च संसर्गानुमितौ हेतुः । तथा च यत्र हेतुलाघवात् संसर्गारोप एव जातस्तत्र दोषः स्यादेवेत्युत्तरफक्किकार्थः ।

भ्रान्तेति । तत्राऽयथार्थारोपं विना प्रतारणाया अभावात् स एव च विषया-बाधात्प्रमारूप इति तमादायापि गुणजन्यत्वमप्रत्यूहमेवेति ध्येयम् । नन्वेवं शुकादि-वाक्यं वेदतुल्यं स्यादित्यत आह—शुकादीति । वयं त्विति । प्राभाकरमत-माश्रित्येति शेषः । एवं च न्यायनये प्रमाया गुणजन्यत्वेनेश्वरः साधयितुं न शक्यते । किं तु प्रकारान्तरेणैव साधनीय इति भावः । अत्र नैयायिकैकदेशित्वमालम्ब्येति

---

न्यायशिखामणिः

साध्यसंसर्गारोपस्यैव जननादित्यत्र [1]हेतुमाह—अनुमितीति । साध्य-संसर्गेति । हेतोः पक्षधर्मतानुपपत्तेस्तावतैव निरासादिति भावः । तृतीयशङ्का-तन्निराकरणाभिधायिवाक्यान्तरस्यादर्शनादिदमेव [2]फक्किकाद्वयं तत्परतयापि योज-यति—यद्वेति । ननु लिङ्गसंसर्गारोपादपि साध्यवत्तादात्म्यारोपः स्यात्, लाघवेन साध्यगोचरानुमितौ तस्य हेतुत्वादित्यत आह—साध्यव्याप्येति । अन्वयव्यति-रेकाभ्यां तथैवावधारणादिति भावः । लाघवादिति । लिङ्गवदभेदारोपे तद्गतोऽपि स्मरणकल्पनात् गौरवमिति भावः ।

[3]प्रतारणाया इति । अनेनास्य घटसंसर्गज्ञानं भूयादिति [4]इच्छारूपतया तस्याः समानविषयकज्ञानसाध्यत्वादिति भावः ।

---

1. ख. हेतुस्तमाह
2. ख. पिक्किकाद्वयं
3. ग. प्रतारणात्वादिति ।
4. ख. इच्छारूपः तया

नन्वेवं शब्दाभासोच्छेदः तस्यापीश्वरवक्तृकत्वादिति चेत्—न। तद्वाक्यार्थस्यासत्त्वेन भगवज्ज्ञानागोचरत्वात्। एवं लिङ्गाभासजन्यप्रमायामपि वह्निव्याप्यवत्त्वज्ञानमीश्वरस्यैव जनकमिति संप्रदायविदः।

(अत्र)[वयं तु] ब्रूमः। शाब्दप्रमायां लोके वक्तुर्यथार्थज्ञानं न गुणः, किं तु योग्यतादिकं यथार्थतज्ज्ञानं वा। लाघवादावश्यकत्वाच्च। भ्रमप्रमादविप्रलिप्साजन्ये वाक्ये विसंवादिनि न यथार्थयोग्यताज्ञानम्, वाक्यार्थस्य बाधितत्वात्। एवं करणापाटवादन्यस्मिन्वक्तव्येऽन्याभिधाने विसंवादिनि, संवादिनि तु प्रमाणमेव। योग्यतादिज्ञानमेव क्वचिन्नास्ति।

---

प्रकाशः

शेषो न युक्तः। तथा सति एवं [1]पूर्वपूर्वाध्यापकेनेत्यग्रिमग्रन्थस्य प्रलयाभ्युपगमानुसारेणासंगतत्वापातात्।

शाब्दप्रमायामिति। प्रमाया गुणजन्यत्वेऽपीति भावः। आदिपदेन आकाङ्क्षासत्त्योः संग्रहः। प्रमाजनकशब्दे तयोः संभवाभिप्रायेण। गुणत्वेन च योग्यतैव विवक्षिता। योग्यतासत्त्वे [2]निराकाङ्क्षादितोऽप्याकाङ्क्षाभ्रमे प्रमाया एवोत्पत्तेरिति ध्येयम्।

ननु योग्यता [3]स्वरूपसती न हेतुः, अतो न गुण इत्यत आह—यथार्थेति। यथार्थयोग्यताज्ञानं वेत्यर्थः। योग्ये योग्यतासंशयो योग्यतांशे यथार्थ एवेति

---

न्यायशिखामणिः

ननु 'वयं तु ब्रूम' इत्यत्र परमेश्वरनिराकरणं कृतम्, तदयुक्तम्। स्वेनैव महता [4]प्रयासेनाग्रे तद्व्यवस्थापनादित्याशङ्क्य उपाध्यायोक्तेन व्याकरोति—प्राभाकरेति। प्राचीनव्याख्यानमपाकरोति—अत्रेति। वैदिकप्रमाया गुणजन्यत्वग्राहकं परमेश्वरे प्रमाणमिति सांप्रदायिकोक्तं न्यायैकदेशिना [5]गङ्गेश्वरेण निराक्रियते न तु परमेश्वर इत्यतो न विरोध इति भावः। [6]तथाप्यग्रिमग्रन्थविरोधो दुर्वार इत्याह—तथा सतीति। निराकृतवाक्यार्थज्ञानस्य संग्रहायोगादाह—आदिपदेनेति।

---

1. क. पूर्वतादृशाध्यापकेने-
2. ख. निराकाङ्क्षेऽप्या-
3. ख. स्वरूपे सति
4. क. प्रयत्नेनाग्रे
5. क. घ. गङ्गेशेन
6. ख. तथाचाग्रिम-

नन्वेवं नानार्थादन्यपरात्तात्पर्यभ्रमे तं विनैव वा यथार्थयोग्यतादिज्ञाने सति संग्राह्यपरशक्यज्ञानमपि प्रमेति तत्रापि तद्वाक्यं प्रमाणं स्यादिति चेत्—न । इष्टत्वात् । तात्पर्यविषये च तद्वाक्यं न तदा प्रमाजनकमिति न प्रमाणम् । एवं वेदेऽपि यथार्थयोग्यताज्ञानमेव गुण इति न वैदिकप्रमायां गुणजन्यत्वेनेश्वरसिद्धिः ।

---

**प्रकाशः**

भावः । **लाघवादिति ।** शाब्दज्ञानत्वावच्छिन्ने योग्यताज्ञानस्य कारणताया आवश्यकत्वेन लाघवेन तद्विशेषस्य यथार्थतज्ज्ञानस्यैव हेतुतास्तु । न तु कल्प्यकारणभावस्य यथार्थवाक्यार्थज्ञानस्येत्यर्थः ।

**इष्टत्वादिति ।** [1]यथार्थवाक्यार्थज्ञानगुणत्ववादिनापि ईश्वरवाक्यार्थप्रमामादाय तत्प्रामाण्यस्यावश्यं समर्थनीयत्वादिति भावः । **न प्रमाणमिति ।** व्यवह्रियत इति शेषः । **एवं वेदेऽपीति ।** एतच्चोपलक्षणम् । [2]लिङ्गाभासजन्यप्रमाया-

---

**न्यायशिखामणिः**

संग्रहोऽपि न शाब्दप्रमित्यसाधारणकारणत्वाभिप्रायेण । तयोरसाधारणत्वात् । तत्र योग्यतामात्रं गुणत्वेनाभिमतमित्याह—**प्रमाजनकेति ।** तच्छब्दस्याकाङ्क्षादिपरत्वभ्रमं वारयति—**यथार्थेति ।**

ननु भावत्वप्रयुक्तं न लाघवम्, उभयोरपि तथात्वात् । नाप्यावश्यकत्वप्रयुक्तम्, तथा सत्युत्तरहेतुभेदापत्तेरित्याशङ्क्य [3](लाघवान्न)[लाघवं न] पृथग्घेतुरित्याह—**शाब्देति ।** ननु प्रमाणस्याप्रमाणत्वं व्याहतमित्यत आह—**व्यवह्रियत इति ।**

ननु [4]तथापि लिङ्गाभासजन्यप्रमायामीश्वरस्यैव वह्निव्याप्यवत्त्वज्ञानं जनकमित्युक्त्या लिङ्गभ्रमजन्यप्रमानुमितिः सल्लिङ्गपरामर्शजन्या अनुमितिप्रमात्वादित्यनुमानमपि परमेश्वरे प्रमाणत्वेनाभिमतम् । तच्चैवमपि न निराकृतमित्यत आह—

---

1. ख. 'यथार्थवाक्यार्थ..........एवं वेदेऽपीति' इति ग्रन्थः नास्ति ।
2. क. लिङ्गाभाव-
3. घ. लाघवं पृथक्-
4. ख. यथापि

स्यादेतत् । वेदे वक्तुर्यथार्थवाक्यार्थज्ञानमपि गुणः । लोके प्रमाणशब्दं प्रति तादृशस्य ज्ञानस्य हेतुत्वात् ।

---

**प्रकाशः**

मपि पक्षतावच्छेदकावच्छेदेनैव ज्ञाप्यवति पक्षे लिङ्गज्ञानमबाधितप्रमा वा अस्मदादेरेव गुण इति तस्या अपि गुणजन्यत्वेनेश्वरसिद्धिरिति द्रष्टव्यम् ।

**प्रमाणशब्दं प्रतीति** । [1]यद्यपि [2]प्रमाणशब्दं प्रति [3]हेतुत्वसिद्धावपि शाब्दप्रमां प्रति हेतुत्वं न सिध्यति ; तथापि तादृशशब्दकारणत्वेनापीश्वरः सिध्यत्येवेति न प्रकृतानुपयोग इति ध्येयम् ।

---

**न्यायशिखामणिः**

**एतच्चेति** । वक्तृयथार्थज्ञानगुणत्वनिराकरणप्रतिपादकः सर्वोऽपि ग्रन्थः सल्लिङ्गपरामर्शगुणत्वनिराकरणोपलक्षणत्वेन व्याख्येय इत्यर्थः ।

तथा हि **वयं तु ब्रूम** इत्यत्र शाब्दपदं वाक्यार्थपदं चानुमितिलिङ्गयोरुपलक्षणम् । **योग्यतादिकमि**त्यादिपदेनाबाधितत्वपरिग्रहः । **यथार्थतज्ज्ञानमि**त्यत्र तत्पदेन च तदुभयपरामर्शः । तथा च शाब्दप्रमायां योग्यताप्रमा अनुमितिप्रमायामबाधितत्वप्रमा गुणो न तु यथार्थवाक्यार्थलिङ्गज्ञानम् । ग्राह्यव्याप्यप्रमापेक्षया [4]ग्राह्यरूपाबाधितत्वप्रमाया लघुशरीरत्वात् योग्यताप्रमायाश्चोक्तन्यायेनावश्यकत्वादिति । **तथापीति** ।

नन्विह नेश्वरसिद्धिमात्रं प्रकृतम् । किं तु गुणाश्रयत्वेनापि । तथा च शब्दकारणत्वेनेश्वरसिद्धावपि न प्रकृतोपयोग इति चेत्—न । वेदार्थप्रमा वक्तृगुणजन्येत्यनुमाने तादृशगुणाश्रयत्वेन तत्सिद्धेरभिमतत्वेऽपि वेद इति वक्ष्यमाणानुमाने तज्जनकज्ञानविशिष्टत्वेनैव तत्साधने तादृशगुणाश्रयत्वेनैव[5] सिद्धेरत्रानभिमतत्वात् । ननु वक्तृज्ञानस्यान्यथासिद्धत्वेन शाब्दप्रमायां तस्य [6]हेतुत्वायोगात्

---

1. ख. 'यद्यपि' नास्ति ।
2. ख. प्रमाशब्दं
3. ख. हेत्वसिद्धावपि
4. ग. ग्राह्यरूपत्वबाधितप्रमायाः
5. ग. °श्रयत्वसिद्धेरत्राभिमतत्वात्
   घ. °श्रयत्वसिद्धेरत्रानभि-
6. क. कारणत्वायोगात्

अत एव तव लोके वक्तृज्ञानानुमानम्। एवं च वेदो वाक्यार्थगोचरयथार्थज्ञानवत्स्वतन्त्रपुरुषप्रणीतः प्रमाणशब्दत्वात् गामानयेति वाक्यवदितीश्वरसिद्धिः।

मैवम्। प्रमाणशब्दत्वं हि वाक्यार्थयथार्थज्ञानपूर्वकतां विनापि संभवति, आवश्यकयोग्यतादिसत्त्वात् यथार्थतज्ज्ञानाद्धेत्युपपादितम्, अतोऽप्रयोजकमेतदिति। तथापि लोके वाक्यार्थज्ञानं प्रमाणवाक्ये कारणं गृहीतमिति तेन विना कथं तदिति चेत्—न। प्रवृत्त्याद्यर्थं हि प्रयोज्यस्य वाक्यार्थज्ञानमुद्दिश्य एतादृशपदेभ्यो वाक्यार्थं ज्ञास्यतीति बुद्ध्या वाक्यप्रयोग इत्यन्यथासिद्धं प्रथमं वक्तुर्वाक्यार्थज्ञानम्, न तु तादृशपदावलीप्रयोगे तस्य हेतुत्वम्। तादृशपदसमूहस्य प्रत्येकपदहेतोरेव शुकादिवदुपपत्तेः।

---

**प्रकाशः**

अन्ये तु विशेषणत्वे संभवति नोपलक्षणत्वमिति प्रमाणशब्दं प्रति हेतुत्वे प्रमां प्रति हेतुत्वमित्यर्थ इत्याहुः।

तवेति। मीमांसकस्येति शेषः। एवं चेति। तादृशाध्यापकेन सिद्धसाधनवारणाय स्वतन्त्रेति। शुकादिप्रमाणवाक्यस्य पक्षसमत्वान्न व्यभिचारः। न तु तादृशेति। तथा च वक्तृवाक्यार्थज्ञानस्य वाक्यप्रयोग एव न हेतुत्वं कुतस्तदुत्तरकालीने श्रोतुर्वाक्यार्थज्ञान इति भावः।

---

**न्यायशिखामणिः**

तस्याश्च योग्यताप्रमयैवोपपत्तेरित्युक्तत्वात्तदंशे आशङ्कानुपपत्तिरित्यपरितोषं सूचयति — आहुरिति।

[1]मणिकृन्मते [2]वक्तृज्ञानानुमानानङ्गीकारादाह—मीमांसकस्येति। तन्मतावलम्बिनो गङ्गेशस्येत्यर्थः। वक्तृज्ञानस्य वाक्यप्रयोगहेतुत्वनिराकरणस्य प्रकृतोपयोगमाह—तथा चेति।

विनिगमकाभावादुभयं प्रयोजकमित्याह—तथापीति। पूर्वोक्तन्यायेनेति। यत्सामान्य [3]इति न्यायेनेत्यर्थः।

---

1. क. ननु मणि-
2. ख. ग. घ. वक्तृज्ञानानङ्गी-
3. क. 'इति' नास्ति।

अथ तात्पर्यविषये वेदः प्रमाणम् । तात्पर्यं च तत्प्रतीतीच्छयोच्चारणम् । न चास्मदादेर्वेदं विनातीन्द्रियवेदार्थगोचरज्ञानं, येन तत्प्रतीतीच्छयोच्चारणं भवेत् । न च वेदादेव तत्, अन्योन्याश्रयात् । अतः सकलवेदार्थदर्शिना यस्य वेदस्य यदर्थप्रतीतीच्छयोच्चारणं कृतं स तत्र प्रमाणमिति तादृशेच्छैव गुणः तज्जन्या वेदार्थप्रमेति तदाश्रयस्वतन्त्रपुरुषधौरेयसिद्धिरिति चेत्—

मैवम् । मीमांसादिसकलाङ्गसाचिव्याद्वेदवाक्यार्थज्ञानवताध्यापकेन तत्तदर्थप्रतीतीच्छया वेदस्योच्चारणमिति वेदार्थयथार्थविदस्तत्तदर्थे तात्पर्यमस्त्येव । एवं पूर्वपूर्वतादृशाध्यापकेन तत्तदर्थप्रतीतीच्छयोच्चरितत्वं तत्परत्वमवगम्योत्तरोत्तरेषां वेदार्थप्रत्यय इत्यनादिस्तात्पर्यपरंपरेति किमीश्वरेण ।

तर्हि वेदार्थानभिज्ञाध्यापकेनोच्चारितवेदस्य न तदर्थप्रतीतीच्छयोच्चारणमिति तात्पर्याभावान्न प्रमाणं न वा ततोऽर्थनिश्चय इति चेत्—न ।

प्रकाशः

यद्यपि यथार्थयोग्यताज्ञानं गुणत्वेन निरुक्तम्, तथापि तद्वदेव [1]वक्तृतात्पर्यमपि शाब्दप्रमाप्रयोजकमिति तदाश्रयेश्वरसिद्धिरित्याशङ्कते—अथेति । यद्यपि पूर्वोक्तन्यायेनावश्यकतया यथार्थयोग्यताज्ञानादेव शाब्दप्रमोपपत्तौ वक्तृतात्पर्यमन्यथासिद्धमेव शुकादिवाक्यवदन्यथोपपन्नं च । तथाप्यभ्युपेत्य समाधत्ते—मीमांसेति ।

न्यायशिखामणिः

अन्यथासिद्धमिति । इच्छागर्भतात्पर्यज्ञानस्य शुकादिविसंवादिवाक्यजज्ञाने व्यभिचारेण तस्यानावश्यकतया यथार्थतात्पर्यज्ञानं तेनावश्यकेनान्यथासिद्धमित्यर्थः । वेदस्य प्रत्युच्चारणं भेदादुक्ताशङ्का न्यायमत एवेति तन्मते परिहारमभिधाय परमते सैव नेत्याह—[2]तन्मत इति ।

ननु स्मृतिसाधारणमेव प्रामाण्यं स्वत उत्पद्यते ज्ञायते च न तु तद्व्यावृत्तम्, येन स्मृतिसाधारणज्ञानसामान्यसामग्रीप्रयोज्यत्वाभावादुत्पत्तौ स्मृत्यन्यत्व-

1. ख. 'वक्तृतात्पर्यमपि...शाब्दप्रमोपपत्तौ' इति ग्रन्थो नास्ति ।
2. क. परमत इति ।

अनादौ संसारे तस्य वेदस्य कदाचित् केनचित् मीमांसाद्यधीनवेदार्थ-ज्ञानवता तत्प्रतीतीच्छयोच्चारणं कृतम्, तावतैव तत्परत्वमिति।

प्राभाकरास्तु—प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते चेति। तथा हि—निष्कम्पप्रवृत्त्यङ्गं स्मृत्यनुभवसाधारणं यथार्थत्वमेव प्रामाण्यम्। तच्च ज्ञानमात्रसामग्रीजन्यम्, न तु गुणं दोषाभावं वापेक्षते। सर्व-ज्ञानानां यथार्थत्वेनाव्यभिचारात्।

अयथार्थस्तु व्यवहारः, तस्यैव बाध्यत्वात्। ज्ञानं तु न बाध्यते। बाधकाभिमतज्ञानतुल्यत्वात्। ज्ञाने चायथार्थत्वव्यपदेशः विपरीतव्यवहार-जननोपाधिकः।

---

प्रकाशः

अनादाविति। यद्यपि वेदार्थानभिज्ञोपाध्यायकर्तृके न कदापि तदर्थ-ज्ञानेच्छयोच्चरितत्वं संभवति; तथापि तज्जातीयत्वेन तथा वेदस्य तन्मते नित्यत्वेन स एवेति भावः। प्राभाकरास्त्विति। अत्र वादिभेदान्न पौनरुक्त्यमित्याहुः। अव्यभिचारादिति। ज्ञान[1]सामान्यसामग्रीसत्त्वे यदि यथार्थं न स्यात् तदान्वय-व्यभिचारेणाधिकमपेक्षेत। न चैवम्, दोषेऽपीदं रजतमिति ज्ञानद्वयेऽपि प्रत्येकं

---

न्यायशिखामणिः

रूपानुभवत्वस्य संस्कारजन्यत्वरूपस्मृतित्वगर्भतया तद्धटकसंस्कारादेरग्रहात् ज्ञप्तौ च स्वतस्त्वं न स्यादिति प्राभाकरा इत्यादिना तन्मतमुपन्यस्तमयुक्तम्। पूर्व-मेवोपन्यस्य न स्वाश्रयेण गृह्यत इत्यादिना तस्य निराकृतत्वेन पौनरुक्त्यादित्या-शङ्क्य प्राभाकरैकदेशित्वान्न दोष इत्याह—अत्रेति।

ननु स्वमते नैयायिकोक्त[2]दूषणोद्धारणाय पुनः प्रत्यवस्थानान्न वादिभेदः। तथा हि—प्रामाण्यं स्वाश्रयग्राह्यं, तद्ग्राहकसामग्रीसत्त्वात् घटत्ववत् [3]स्वप्रकाश-त्वसाधनेन [4]व्यवसायस्यैव तद्ग्राहकत्वान्नासिद्धिः। न च प्रामाण्यसंशयानुप-पत्तिः स्वतस्त्वबाधिका, सर्वधियां यथार्थत्वेन तदभाववद्विशेष्यकत्वसंशयायोगात्

---

1. ख. 'सामान्य' नास्ति।
2. क. ग. घ. दूषणोद्धारेण
3. ख. स्वप्रकाशत्वेन साधनेन
4. क. ख. व्यवसायस्यैतद्ग्राहक-

**अथ यथार्थत्वस्य प्रामाण्यत्वे रजतज्ञानं शुक्तौ कथमप्रमाणम्, अप्रामाण्यं च कथं परत उत्पद्यत इति चेत्—**

---

**प्रकाशः**

यथार्थत्वादिति भावः। **अप्रामाण्यं चेति**। तस्य त्वयापि परतस्त्वाभ्युपगमात्। तथा च सर्वधीयथार्थत्वाभ्युपगमे अपसिद्धान्त इति भावः।

---

**न्यायशिखामणिः**

ज्ञानद्वयमेकं [1]वेत्यस्य च प्रामाण्यनिश्चयेऽप्युपपत्तेः। ततश्च वादिभेदान्न पौनरुक्त्यमित्यसंगतमित्यस्वरसं सूचयति—**आहुरिति**।

ननु गुणदोषाभावयोर्व्यभिचाराभावे सुतरां तदपेक्षा स्यादित्यत आह—**ज्ञानेति**। ननु [2]कथमप्रमाणमित्यप्रामाण्याप्रसिद्ध्यभिधाने तत्प्रसिद्धिनिबन्धनं तत्र परतस्त्वाभावापादनं [3]न युक्तम्। न चाभ्युपेत्यायथार्थत्वं तत्र तदापादनम्। [4]किंचिज्ज्ञानवृत्तित्वेनाङ्गीकृतस्य [5]तस्य ज्ञानसामान्यसामग्रीप्रयोज्यत्वाभावेन परतस्त्वावश्यंभावादित्याशङ्क्य, न **ह्यप्रामाण्यं चे**त्यस्य [6]पृथग्दूषणपरत्वम्। किं तु [7]अप्रामाण्याभावापादनं नेष्टप्रसङ्गः, तस्य त्वयापि परतस्त्वाभ्युपगमेनावश्यकत्वात्। तथा चापसिद्धान्त इत्यत्रैव तात्पर्यमित्याह—**तस्येति**। एतच्चापाततः। [8]अस्यापसिद्धान्तपरत्वे विपरीतव्यवहारजनकत्वमेवाप्रामाण्यं न त्वयथार्थत्वमित्येतावतैवापसिद्धान्तपरिहारोपपत्तौ तस्य परतस्त्वोपपादनवैयर्थ्यात्।

वयं तु—नन्वयथार्थत्वमप्रामाण्यं विपरीतव्यवहार[9]स्वरूपयोग्यत्वं वा। तत्राद्यं निराकरोति—**यथार्थत्वस्येति**। **कथमिति**। तव मते सर्वधीयथार्थत्वाभ्युपगमादिति भावः। द्वितीयं निराकरोति—**अप्रामाण्यं चेति**। विपरीतव्यवहार[10]स्वरूपयोग्यत्वं यद्यप्रामाण्यं तदा परतस्त्वं न स्यात् तस्योपाधिरूपस्य [11]दोषाजन्यत्वात्। ज्ञानद्वयस्य तदजन्यत्वेन तज्जन्यतानवच्छेदकत्वाच्च। [12]दोषजन्य-

---

1. ख. वेद्यतस्य
2. क. ग. कथमप्रामाण्य-
3. क. 'न' नास्ति।
4. क. अकिंचिज्ज्ञानप्रवृत्ति-
5. क. ग. 'तस्य' नास्ति।
6. ख. घ. प्रथमदूषण-
7. ख. अप्रामाण्याभावानेष्ट-
8. क. अस्यापि सिद्धान्त-
9. क. ग. घ. °जनकत्वं वा
10. क. स्वरूपत्वं
11. ग. दोषजन्यत्वात्
12. ख. दोषजन्यतावच्छेदक-

न। अयथार्थत्वं नाप्रामाण्यम्, सर्वधियां यथार्थत्वात्। किं तु विपरीतव्यवहारप्रवर्तकत्वम्। तच्च ज्ञानसामग्र्यामधिकदोषानुप्रवेशात् दोषहेतुकासंसर्गाग्रहाद्वा उत्पन्ने ज्ञाने दोषसहकाराद्वा धर्मधर्मिणोरसंसर्गाग्रहरूपमेकत्वासंसर्गाग्रहसहितं परत उत्पद्यते, न तु ज्ञानमात्रसामग्रीतः, प्रमायामतिप्रसङ्गात्।

---

प्रकाशः

विपरीतव्यवहारजनकत्वरूपस्याप्रामाण्यस्य उत्पत्तौ परतस्त्वं साधयति—तच्चेति। उक्तव्यवहारजनकत्वं [1]तज्जनकतावच्छेदकरूपवत्त्वम्। तच्च [2]असंसर्गाग्रहरूपम्। तच्च [3]दोषादित्यर्थः। विपरीतव्यवहारजनकज्ञानोत्पत्तिकाले धर्मधर्मि-

---

न्यायशिखामणिः

त्वतदवच्छेदकत्वातिरिक्तस्य परतस्त्वस्यानिर्वचनादिति भावः। द्वितीयपक्षमादाय समाधत्ते—नायथार्थत्वमिति—इति ब्रूमः।

ननु तच्च ज्ञानसामग्र्यां दोषानुप्रवेशा[4]दुत्पद्यत इत्याद्यः कल्पः। तत्र तच्छब्देन विपरीतव्यवहारजनकत्वस्य परामर्शो न युक्तः, उक्तदोषात्। नापि तज्जनकतावच्छेदकस्य, असंसर्गाग्रहरूपस्य [5]तस्याजन्यत्वात् ज्ञानभिन्नस्य तस्य ज्ञानसामग्रीजन्यत्वाभावाच्चेत्याशङ्क्य, दोषसापेक्षज्ञानसामग्र्या विपरीत[6]व्यवहारयोग्यतावच्छेदकावच्छिन्नज्ञान[7]मुत्पद्यते। तदवच्छेदकं च उभयविधासंसर्गाग्रहरूपम्, तदेवोक्तसामग्रीजन्यतावच्छेदकमिति तत्प्रयोज्यत्वात् परत उत्पद्यत इति व्यपदिश्यत इत्याद्यकल्पो मूलेऽभिप्रेत इत्याह—उक्तेति। दोषादिति। दोषसापेक्षसामग्र्या इत्यर्थः।

ननु दोषसापेक्षसामग्रीजन्यत्वमसिद्धम्। ज्ञानद्वयस्य प्रत्येकं यथार्थत्वात्। न च तस्य स्वरूपेण दोषाजन्यत्वेऽपि असंसर्गाग्रहावच्छिन्नत्वेन तज्जन्यत्वमिति

---

1. क. 'तज्जनकतावच्छेदकरूपवत्त्वम्' नास्ति।
2. ख. संसर्गाग्रह-
3. क. दोषव्यवहार-
4. ख. °दुत्पाद्यते
5. ग. तस्याजनकत्वात्।
6. ख. °व्यवहारजनकत्वयोग्यता-
7. ख. °मुत्पाद्यते।

### प्रकाशः

णोरसंसर्गाग्रहे [1]तादृशज्ञानद्वयदोषस्योपयोगात् अग्रे तयोरसंसर्गाग्रहस्यैव ज्ञाने एकत्वासंसर्गाग्रहे उपयोगः इत्यभिप्रेत्याह—दोषहेतुकेति । तादृशज्ञानोत्पत्त्यनन्तरं धर्मधर्मिणोरसंसर्गाग्रहे तादृशज्ञानद्वय एकत्वासंसर्गाग्रहे [च] दोषस्योपयोगमाश्रित्याह—(उत्पन्नज्ञान) [उत्पन्ने ज्ञान] इत्याहुः ।

---

### न्यायशिखामणिः

वाच्यम् । ज्ञानस्वरूपे तज्जन्यत्वबाधेन [2]आवश्यकासंसर्गाग्रह एव दोषहेतुत्वपर्यवसानात्, क्षेमसाधारणसाध्यत्वस्य तत्रापि संभवादित्यपरितोषात् दोषहेतुकेत्यादिना कल्पान्तरमुक्तम् । [3]तदप्ययुक्तम् । दोषहेतुकासंसर्गाग्रहस्य स्वहेतुत्वविरोधादित्याशङ्क्य, न ह्यस्मिन्कल्पे असंसर्गाग्रहद्वयमुत्पाद्यत्वेनाभिमतम् । किं तु दोषात् [4]धर्मधर्म्यसंसर्गाग्रहः, ततो ज्ञानयोरेकत्वासंसर्गाग्रह उत्पद्यत इत्याह—विपरीतेति ।

ननु ज्ञानैकत्वासंसर्गाग्रहविशिष्टमुक्तासंसर्गाग्रहरूपमेवाप्रामाण्यम् । तच्च परत इति न युक्तम् । विशेषणांशे दोषस्याहेतुत्वेन तद्विशिष्टस्य तस्य परतस्त्वानुपपत्तेः । अतिरिक्तभाव[5]कारणसापेक्षत्वस्यैव परतस्त्वे तन्त्रत्वात् इत्यपरितोषात् उत्पन्न इत्यादिना कल्पान्तरमुक्तम् । तदप्यसंगतम् । [6]एकत्वासंसर्गाग्रहस्यापि दोषजन्यत्वसंभवे तदवच्छेदकत्वस्यान्याय्यत्वादित्याशङ्क्य सहितेत्यत्रावच्छिन्नत्वं न विवक्षितम् । किं तु तद्विशिष्टत्वमित्याह—तादृशेति ।

इदमप्यापाततः । [7]उक्तासंसर्गाग्रहस्य प्रवृत्तिकारणत्वेन तत्कारणतावच्छेदकत्वायोगात् प्रागभावरूपत्वेन उत्पत्त्यनुपपत्तेश्च । वक्ष्यमाणरीत्या मुख्यसाध्यत्वसंभवे क्षेमसाधारणतद्विवक्षायोगात् ।

वस्तुतः—तच्चेत्यनेन विसंवादि[8]व्यवहारोपधानमेव विवक्षितम् । [9]न

---

1. ख. 'तादृशज्ञानद्वय..........एकत्वासंसर्गाग्रहे' इति ग्रन्थः लुप्तः ।
2. क. आवश्यकसंसर्गा-
3. ग. तदयुक्तम् ।
4. ख. धर्मधर्मिणोतो ज्ञानयोरेक-
5. ख. ग. ०करण-
6. ग. एकत्वसंसर्गा-
7. ग. उक्तसंसर्गा-
8. ख. ०व्यवहारोपायन-
9. ग. न चैवमुत्प्रेक्षणीय-

उन्नीयते च विपरीतव्यवहारजनकत्वं बाधकात् । तस्य तेन तदनुव्यवसायेन वा ग्रहीतुमशक्यत्वात् । ज्ञानस्वरूपे च न दोषतदभावौ हेतू, व्यभिचारात् ।

---

प्रकाशः

[1]उक्ताप्रामाण्यस्य ज्ञप्तौ परतस्त्वं साधयति—उन्नीयते चेति । व्यभिचारादिति । प्रमास्थले [2]दोषं विना ज्ञानस्वरूपस्योत्पत्तेः अप्रमास्थले च दोषाभावं विनापि तस्योत्पत्तेर्व्यभिचार इत्यर्थः ।

---

न्यायशिखामणिः

चैवमुपेक्षणीयभ्रमे व्यासङ्गात् व्यवहाराजनके चाप्रामाण्य[3]व्यवहारानुपपत्तिः । तत्स्वरूपयोग्यत्वसत्त्वात् । तस्यैवाप्रामाण्यव्यवहारोपयोगित्वात् । न चैवं विपरीतव्यवहारोपधानस्य व्यवहारानङ्गत्वात् विचार्यत्वानुपपत्तिः । स्मृतिसाधारणप्रामाण्यवदस्यापि परतस्त्वादिविचारे विरोधाभावात् । तथा च व्यवहारोपधानं दोषजन्यज्ञानादुत्पद्यत इत्याद्यः कल्पः ।

ननु ज्ञानस्य [4]यथार्थतया दोषाजन्यत्वादिदमयुक्तमित्यरुचेराह—दोषेति । दोषहेतुकासंसर्गाग्रहा[5]द्विपरीतव्यवहार उत्पद्यत इत्यर्थः । नन्वेवमप्यागन्तुकभाव[6]कारणाभावात् व्यवहारोपधान[7]लक्षणाप्रामाण्यस्य न परतस्त्वमित्यपरितोषादाह—उत्पन्न इति । दोषसहकृतज्ञानादित्यर्थः । [8]तर्हि दोषज्ञानयोरेव तत्र हेतुत्वमित्याशङ्क्य व्यवहारोपधानं [9]विशिनष्टि—धर्मेत्यादिना । रूपमिति रूप्यते निरूप्यते कार्यतयेत्यर्थः । सहितमिति । कारणरूप[10]तत्संनिहितमित्यर्थः ।

यद्यपि विपरीतव्यवहारस्वरूपयोग्यत्वस्यापि स्वाश्रयातिरिक्तानुमानादिग्राह्यतया ज्ञप्तौ परतस्त्वसंभवः । तथापि यस्योत्पत्तौ परतस्त्वं तस्यैव ज्ञप्तावपि तत्साधनीयम्, नान्यस्येत्याह—उक्तेति । नन्वप्रामाण्यं धर्मो दोषादित्युक्तम् । तदयु-

---

1. ख. उक्तप्रामाण्यस्य
2. क. दोषान्तरं
3. ख. व्यवहारान्तरानुपपत्तेः
4. ग. अयथार्थतया
5. ख. 'विपरीतव्यवहार........परितोषादाह' इति ग्रन्थः नास्ति ।
6. क. कारणलाभात्
   घ. कारणत्वाभावात्
7. ग. घ. °लक्षणप्रामाण्यस्य
8. ग. तर्कितदोष-
9. ख. विशिष्टधर्मेत्यादिना ।
10. क. ग. घ. °तत्सहित-

ज्ञानायथार्थत्वेऽपि यथार्थत्वं ज्ञानसामग्रीजन्यमेव । न तु गुणात् दोषाभावाद्वा, विपर्ययादेरपि धर्म्यंशे यथार्थत्वात्, असदर्थविषयता दोषात् इन्द्रियाणामसंनिहितेऽसदर्थे सामर्थ्याभावात् ।

ननु दोषमात्रं न कारणम्, किं तु तदपेक्षा ज्ञानसामग्रीति यथार्थत्वे दोषाभावसापेक्षा सा हेतुरिति चेत्—न । सैव सामग्री असदर्थांशे दोषसापेक्षेति तदंशे ज्ञानमयथार्थम् । सदर्थांशे दोषनिरपेक्षेति तदंशे यथार्थम् । न तु सैव तत्रैव ज्ञाने दोषतदभावसापेक्षा, विरोधात् ।

प्रकाशः

ज्ञानायथार्थत्वाभ्युपगमेऽपि न स्वतस्त्वहानिरित्याह—[1]ज्ञानायथार्थत्वेऽपीति । धर्म्यंश इति । तत्र गुणदोषाभावौ न स्तः अन्यथा (धर्म्यंशेऽपीति) [धर्मांशेऽपि]प्रामाण्यापत्तेरिति भावः । विरोधादिति । एकत्र ज्ञाने प्रामाण्याप्रामाण्यावच्छेदकभेदेन [2]ज्ञानसामग्र्यां दोषापेक्षानपेक्षे संभवतः, न त्ववच्छेदकभेदेनापि दोषतदभावापेक्षानपेक्षे, प्रतियोगितदभावयोरेकत्राजनकत्वादित्यर्थः । क्वचित् कश्चिद्दोष इत्यनभ्युपगम्येदमिति ध्येयम् ।

न्यायशिखामणिः

क्तम् । ज्ञानस्यैव तज्जन्यत्वे बाधकाभावात् इत्याशङ्कां [3]सिंहावलोकनन्यायेन वारयितुं ज्ञानस्वरूप इत्याद्युक्तम् । तदयुक्तम् । [4]अन्वयव्यभिचारात् इत्यत आह—प्रमास्थल इति । दोषाभावग्रहणं दृष्टान्तार्थम् ।

तर्हि प्रमात्वानुरोधात्तत्र दोषाभावः कल्प्यत इत्यत आह—तत्रेति । ननु दोषरूपकारणसापेक्षत्वतदनपेक्षत्वयोः परस्परविरहरूपत्वेऽपि एकत्रावच्छेदकभेदेनाविरोधवद्दोषतदभावयोरप्यस्त्वविरोध इत्यत आह—एकत्रेति । प्रतियोगीति । अन्यथा कारणीभूताभावप्रतियोगित्वेन तयोः परस्परं प्रतिबन्धकत्वापातादिति भावः ।

1. क. ज्ञानयथार्थ-
2. ख. 'ज्ञान' नास्ति ।
3. ग. 'सिंहावलोकनन्यायेन' नास्ति ।
4. ख. 'अन्वय' नास्ति ।

(अयथार्थ)यथार्थत्वे दोषतदभावौ नान्तरीयकौ। यथार्थत्वं च ज्ञानोल्लिखितप्रकारवत्त्वमर्थस्य, यद्धर्मवत्त्वमर्थस्य तत्प्रकारकज्ञानत्वं वा।

इदं रजतमिति ज्ञानमर्थस्य रजतत्वं स्वस्य रजतत्वाश्रयविषयकत्वं यथार्थत्वरूपं प्रामाण्यं स्वप्रकाशत्वेन स्वयमेव परिच्छिन्दत् स्वार्थनिश्चय-

---

**प्रकाशः**

यद्यपि [1]दोषजन्यत्वदोषाभावजन्यत्ववददोषजन्यत्वदोषजन्यत्वे अपि विरुद्धे एव। अवच्छेदकभेदेनापि विरोध उभयत्रापि तुल्य एव। तथापि ज्ञानस्य सर्वांशे दोषजन्यत्वेऽपि असदर्थविषयकत्वं तत्र जन्यतावच्छेदकमिति तदंशे [2]दोषसापेक्षा सामग्रीत्युच्यते। सदर्थविषयकत्वं तु [3]जनकतावच्छेदकमिति तदंशे तन्निरपेक्षेत्युच्यत इति भावः।

इदं च दोषसापेक्षत्वं ज्ञानायथार्थत्वमभ्युपेत्योक्तम्। सर्वधीयथार्थत्वपक्षे उभावपि दोषतदभावाववर्जनीयसंनिधी न तु [4]तज्ज्ञानजनकाविति पूर्वोक्तं स्मारयति—यथार्थत्व इति। सर्वधीयथार्थत्वपक्ष इत्यर्थः। अत्र दोषस्य असंसर्गाग्रह एवोपयोगस्य दर्शितत्वादिति भावः।

प्रामाण्यस्योत्पत्तौ स्वतस्त्वं प्रसाध्य ज्ञप्तौ समर्थयति—यथार्थत्वं चेति।

---

**न्यायशिखामणिः**

ननु धर्मांशे यो दोषोऽस्ति तदभावो न धर्म्यंशे। किं तु दोषान्तराभाव एव। तस्यैव वा न तत्र दोषत्वम्। अत एव पित्तं [5]स्वप्रमायां न दोषः। क्वचित् कश्चिद्दोष इत्यभ्युपगमादित्यत आह—क्वचिदिति। पूर्वग्रन्थविरोधं परिहरति—इदं चेति।

ननु दोषतदभावौ नान्तरीयकावित्ययुक्तम्। पाकोत्पत्तौ श्रमवदयथार्थत्वाद्युत्पत्तौ दोषादेरनुनिष्पादितत्वाभावात्। न च नियतपूर्ववर्तित्वं नान्तरीयकशब्दार्थः। हेतुत्वं चान्यथासिद्धत्वान्नेति विवक्षितमिति वाच्यम्। 'असदर्थविषयता दोषा'दि-

---

1. क. दोषजन्यदोषाभावजन्यवदशेष-
2. ख. दोषापेक्षा
3. ख. तज्जन्यतावच्छेदक-
4. क. ज्ञानजनकइति पूर्वोक्तं
5. क. स्वप्रमादौ

रूपम् । तदतिरिक्तं च न प्रामाण्यं मानाभावात् । अस्तु वा तदपि स्वतो ज्ञायतां परतो वा मा वा ज्ञायि किं तन्निरूपणेन । प्रवृत्तावनुपयोगात् ।

अर्थं हि निश्चित्य प्रवर्तत इत्यावश्यकार्थनिश्चयादेव प्रवृत्त्युपपत्तेः । अथार्थनिश्चयादेव प्रवृत्तिरिति सत्यम् । किं त्वेवंरूपोऽयमर्थ इति निश्चयो ज्ञानप्रामाण्यग्रहाधीन इति चेत्—न । सर्वं हि ज्ञानं रजतरूपोऽयमर्थ

---

प्रकाशः

यद्यपि नायं ज्ञानधर्मः तथापि ज्ञानोल्लिखितप्रकारवदर्थज्ञानत्वं विवक्षितमिति ध्येयम् ।

ननु विशेष्यावृत्त्यप्रकारत्वादिकमपि प्रामाण्यमत आह—अस्तु वेति । वस्तुगतिमनुरुन्धानेन मया निरुक्तप्रामाण्यस्य स्वतस्त्वमुक्तं, न तन्निश्चयः प्रवृत्त्यङ्गं गौरवात् आवश्यकार्थनिश्चये सति तद्विलम्बेन प्रवृत्तिविलम्बाभावाच्चेत्यर्थः ।

([1]अथार्थतत्त्व इति [अथार्थेति] । तथा च प्रामाण्यनिश्चयः [2]परंपरया कारणमित्यर्थः । परेति । प्रामाण्यनिश्चयरूपपरापेक्षेत्यर्थः । तथा च तस्य

---

न्यायशिखामणिः

त्यनेन विरोधात् । न चैतस्य गुरुमताभिप्रायत्वान्न विरोध इति शक्यं वक्तुम् । पौनरुक्त्या[3]दित्यत आह—सर्वेति । [4]अत्रायथार्थत्वादिपदं धर्मिपरम् । तथा च [5]प्रमाप्रमे प्रति नियतपूर्ववर्तिनावपि दोषतदभावौ न जनकाविति विवक्षितम् । तत्रान्यथासिद्धत्वं हेतुमाह—अत्रेति । तथापीति । यद्यप्यर्थविषयत्वमेव तन्मते प्रामाण्यम्, व्यावर्त्यभ्रान्त्यनभ्युपगमेन शेषवैयर्थ्यात् । अत एवानुपदं रजतत्वाश्रयविषयकत्वं [6]यथार्थत्वरूपं प्रामाण्यमिति [7]विभावयिष्यति । तथापि परमतेनेदम् । तथा च प्रकारवदर्थज्ञानत्वमित्यत्र तद्वद्विशेष्यकज्ञानत्वमित्यर्थो बोध्यः । अत एव परमतेनैवाशङ्कते—नन्विति । तर्हि स्वतस्त्वसाधनं मुधेत्यत आह—वस्तुगतिमिति ।

---

1. ख. अयथार्थेति ।
2. क. परंपराकारणं
3. क. ॰दित्याशङ्कयाह
4. ग. अत्र यथार्थ-
5. ख. प्रमाप्रमेयप्रति-
6. ख. अयथार्थरूपं
7. क. 'वि' नास्ति ।

इत्याद्याकारं स्वार्थनिश्चयरूपमेवोत्पद्यते। का तत्र परापेक्षा। अत एवार्थतथात्वं स्वयमेव परिच्छिद्यत इति स्वतः प्रामाण्यग्रहः। यदि च तज्ज्ञानं न स्वार्थनिश्चयरूपं तदा प्रामाण्यज्ञानमपि न प्रामाण्यनिश्चयरूपं, न वा तदधीनं ज्ञानान्तरमपि स्वार्थनिश्चयरूपमिति व्यर्थमर्थनिश्चयार्थं प्रामाण्यनिरूपणम्। प्रामाण्यज्ञानेऽपि स्वविषयनिश्चयार्थमन्यापेक्षायामनवस्था।

किं च परतःपक्षे गृहीतप्रामाण्यस्य परस्य प्रामाण्यनिश्चायकत्वेऽनवस्था। अतो यथा ज्ञानान्तरमगृहीतप्रामाण्यमेव परप्रामाण्यनिश्चयरूपम्, यदा तु तत्प्रामाण्यजिज्ञासा तदा तस्यापि प्रामाण्यमगृहीतप्रामाण्येनैव परेण

प्रकाशः

परंपरया हेतुत्वमपि नेति भावः। अत एवेति। यत एव सर्वं ज्ञानमर्थनिश्चयरूपमुत्पद्यत इति शेषः।

किं चेति। ननु पौनरुक्त्यमिति चेत्—न। स्वतः [1]प्रामाण्यमादाय तत्। [2]अत्र

न्यायशिखामणिः

तथापि प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वे किमायातमित्यत आह—तथा चेति। आत्मादिपरापेक्षत्वादाह—प्रामाण्येति। अव्यवहितस्य प्रामाण्यनिश्चय[3]निरपेक्षत्वस्यातश्शब्दार्थत्वभ्रमं वारयति—यत इति। [4]स्वत इति। पूर्वत्रानवस्थाभिया स्वतः प्रामाण्यग्रह इत्युक्तम्। अत्र तु मा भूत् स्वतः प्रामाण्यग्रहः परतःप्रामाण्येऽपि सर्वज्ञानानामर्थनिश्चयरूपता वाच्या। अन्यथा प्रामाण्यानुमितेरपि स्वविषयनिश्चयार्थमन्यापेक्षायामनवस्थेत्युच्यत इति न पौनरुक्त्यमिति भावः।

नन्विदमयुक्तम्। 'यद्येतन्न स्वार्थनिश्चयरूप'मित्युपक्रमानुरोधेन पूर्वग्रन्थस्यानवस्थाभयात् सर्वं ज्ञानं स्वार्थनिश्चयरूपं वाच्यमित्यर्थपर्यवसायित्वात्। अन्यथा प्रामाण्यस्वतस्त्वपर्यवसायित्वे यदि प्रामाण्यं न स्वतो गृह्येतेति वचनव्यक्तिप्रसङ्गात्। एतेन एतन्मते अनवस्थाद्वयमुभयत्राप्यभिमतम्। परं तु पूर्वं स्वतस्त्वसाधनाय

1. ख. °प्रामाण्यवत्
2. ख. 'अत्र तदनास्थानेऽपि' इति नास्ति
3. ग. °निरपेक्षस्य
4. ख. घ. 'स्वत इति' इति नास्ति।

निश्चीयत इति नानवस्था, तथा अर्थज्ञानमपि अनिश्चितप्रामाण्यमेवार्थ-निश्चयरूपमविशेषात् । न ह्युत्पन्ने ज्ञाने अर्थसंशयः किमेवमनेवं वेति ।

अथ ज्ञानमर्थनिश्चयरूपमपि स्वमगृह्णत् कथं स्वप्रामाण्यं गृह्णीया-दिति चेत्—तर्हि स्वप्रकाशत्वे विवादः । अर्थस्य तथाभावरूपं प्रामाण्यं स्वत एव गृह्यत इति तवाप्यनुमतम् ।

---

### प्रकाशः

तदनास्थानेऽपि तत्सिध्यतीत्युच्यत इत्यपौनरुक्त्यमिति केचित् । अन्ये तु प्रथमं फलमुखी त्वनवस्थोक्ता, संप्रति कारणमुखी सोच्यत इत्याहुः ।

[1]अनिश्चितप्रामाण्यमित्यभ्युपगमवादः । अभावघटितप्रामाण्यपरं प्रामाण्य-पद(मित्याहुः) [मित्यप्याहुः] ।

स्वतः प्रामाण्यग्रह इति यदुक्तं तत्र देशयति—अथेति । तर्हीति । स्वप्रका(शं) [शत्वं] साधयिष्यामीति भावः ।

---

### न्यायशिखामणिः

तर्कविषयतया [2]तदुक्तम् । इह तु परतस्त्वनिरासाय तदुच्यत इति न पौनरुक्त्य-मिति निरस्तम् । उपक्रमविरोधात् ।

किं च किं चेत्यस्य परतस्त्वनिरासपरत्वे अत इत्याद्युपसंहारविरोधः । अन्यथा [3]अतो न प्रामाण्यं परत इति वचनव्यक्तिप्रसङ्गात् । किं चोभयत्राप्यन-वस्थाद्वयपरत्वकल्पने गौरवम् । [4]अपि 'चागृहीतप्रामाण्यस्य परस्य प्रामाण्य-निश्चायकत्व' इति [5]वाक्यं कारणानवस्थापरत्व एवाञ्जसं स्यादित्यस्वरसादाह—अन्ये त्विति ।

भावरूपप्रामाण्यस्यैव लघुतया स्वप्रकाशानुव्यवसायादिग्रहणयोग्यस्य स्वतस्त्वादिना विप्रतिपन्नस्य परग्राह्यत्वेऽनवस्थापरिहारायागृहीतप्रामाण्यमिति नैयायिकेनोक्ते गुरुणाप्यनिश्चितप्रामाण्यमित्युक्तम् । तत्राभावघटितप्रामाण्यस्या-प्रकृतत्वात् प्रामाण्यशब्दस्य न तत्परत्वमित्यस्वरसं सूचयति—अपीति ।

---

1. ख. अनिर्णीत-
2. ख. तदयुक्तम्
3. ग. अप्रमाण्यं
4. क. किं चागृ-
   ग. अपि च गृहीत-
5. ख. वाच्यं

अथ स्वतः प्रामाण्यग्रहे अनभ्यासदशापन्नज्ञाने इदं प्रमा न वेति संशयो न स्यात्। निश्चिते तदभावात्। अत एवाप्रमात्वशङ्कया अर्थेऽपि किमेवमनेवं वेति संशयात् न ज्ञानमात्रात् करतलामलकादावप्यर्थनिश्चयो व्यभिचारादिति चेत्—न। न ह्यत्र ज्ञाने सत्यत्वासत्यत्वसंशयः, सर्वज्ञानानां सत्यत्वात्। किं तु अगृहीतभेदं ज्ञानद्वयमेकं वा ज्ञानमित्याकारो ज्ञानं प्रमा न वेति संशयः। स च कारणदोषसंशयात्। स च ज्ञानान्तरान्निवर्तते।

---

प्रकाशः

व्यभिचारादिति। ज्ञानमात्र[1]स्यार्थानिश्चायकसाधारणत्वादिति भावः। स्वमतावष्टम्भेनाह—न ह्यत्रेति। कारणदोषेति। ज्ञाने दोषजन्यत्वसंशयादौचित्या-र्जित एकत्वानेकत्वसंशय इत्यर्थः। तटस्थः प्रत्यवतिष्ठते—नन्विति।

---

न्यायशिखामणिः

वस्तुतस्तु—[2]'यथा ज्ञानान्तरमगृहीतप्रामाण्य'मिति नैयायिकवाक्यस्य 'जिज्ञासायां परेण निर्श्चीयत' इत्यग्रिम[3]वाक्यालोचनया परेणागृहीतप्रामाण्यमित्यर्थ-परत्वावश्यंभावे तद्दृष्टान्तावष्टम्भेन प्रवृत्तस्यानिश्चितप्रामाण्यमिति गुरुवाक्यस्यापि [4]परानिश्चितप्रामाण्यपरत्वमिति तन्मते विरोधशङ्कैव नेति द्रष्टव्यम्।

[5]ननु प्रामाण्यनिश्चये स्वाभिमतप्रवृत्तिप्रयोजकत्वस्यासाधनादसंगतिरित्यत [आह]स्वत इति। ननु विवादमात्रेण स्वप्रकाशत्वासिद्धेः कथं स्वतस्त्वसिद्धिरित्यत आह—स्वेति।

ननु ज्ञानं विना क्वचिदप्यर्थनिश्चयाभावात्कथं व्यभिचार इत्यत आह—ज्ञानमात्रस्येति। न्यायमते सर्वज्ञानानां [6]प्रमात्वाभावादसिद्धो हेतुरित्यत आह—स्वमतेति। ननु [7]कारणे दोषसंशयस्य न ज्ञानविशेष्यकैकत्वादिसंशयहेतुत्वम्,

---

1. ख. °स्वार्थनिश्चयसाधारण-
2. क. यथार्थज्ञानान्तर-
   ग. यथा ज्ञानान्तरगृहीत-
3. क. °ग्रन्थवाक्या-
4. ग. परस्परानिश्चित-
5. ख. 'ननु प्रामाण्य.........स्वत इति' इति ग्रन्थस्त्रुटितः।
6. क. यथार्थत्वाभावात्
7. ख. कारणदोष-
   घ. करणे

नन्वनुभूतित्वं प्रमात्वम्। तच्च स्मृत्यन्यज्ञानत्वम्। स्मृतित्वं च संस्कारासाधारणकारणकत्वमिति स्वतो न गृह्यते। संस्कारादेरग्रहात्। अत एव न स्वत एवोत्पद्यते, स्मृतिसाधारणत्वादिति चेत्—

**प्रकाशः**

गुणगतजात्यनङ्गीकारेणाह—स्मृतित्वं चेति। अत इति। न ज्ञानमात्रसामग्रीत उत्पद्यते, [1]तस्याः स्मृतिसाधारणत्वादित्यर्थः।

**न्यायशिखामणिः**

एकत्वादिकोट्युपस्थापकत्वाभावादित्यत आह— ज्ञान इति। तथा च [2]व्याप्यसंशयहेतुत्वात्तद्धेतुत्वं युज्यत इति भावः।

ननु नैयायिकस्य यत् प्रामाण्यं परग्राह्यत्वेनाभिमतं तदेव स्मृतिसाधारणं परस्य [3]स्वग्राह्यम्। अन्यथा एकधर्मिकविप्रतिपत्तिर्न स्यात्। तथा चानुभूतित्वमेव प्रामाण्यमिति [4]तदाशङ्कानुपपत्तिरित्यत आह—तटस्थ इति। इदमप्यापाततः। तटस्थस्य [5]स्थाप्याभावेन तवापीत्यग्रिमग्रन्थविरोधात्। परमार्थतो नैयायिक एव शङ्कते—नन्विति। किं [6]प्रवृत्त्यौपयिकं प्रामाण्यं पक्षत्वेनाभिमतम्, उत व्यवहारोपयोगि। नाद्यः, वक्ष्यमाणविशिष्ट[7]ज्ञानत्वस्यैव प्रवृत्त्यङ्गत्वात् तस्य च स्वप्रकाशज्ञानाग्राह्यत्वादित्यभिप्रेत्यान्त्यं निराकरोति—अनुभूतित्वमिति। यथार्थानुभूतित्वमित्यर्थः। आद्यपक्षमादाय समाधत्ते—न [8]प्रवृत्त्यौपयिकमिति। अर्थतथात्वनिश्चयत्वं च विशिष्टज्ञानत्वरूपप्रामाण्यसंशयाभावसहितं तथेति भावः।

ननु न्यायमते गुणेऽपि जात्यङ्गीकारात् स्मृतित्वस्य च [9]जातित्वान्निर्वचनानुपपत्तिरित्यत आह—गुणेति। ननु [10]न स्वत उत्पद्यत इत्यत्र प्रामाण्यं सामग्री वा। नाद्यः, हेत्वसिद्धेः। नान्त्यः, सामग्रीस्वतस्त्वस्याप्रसक्तेरित्यत आह—

1. क. °तत्स्मृति-
2. ख. °संशयत्ववत्तद्धेतुत्वं
3. ग. स्वग्राह्यत्वम्
4. ग. तदंशे कानुपपत्ति-
5. क. स्थाप्यानभ्युपगमेन
6. ख. प्रवृत्त्यौपाधिकं
   ग. प्रवृत्त्युपाधिकं
7. क. °ज्ञानस्यैव
8. ख. ग. घ. प्रवृत्त्यौपाधिक-
9. ख. ग. जातित्वानिर्वचना-
10. ख. ग. घ. 'न' नास्ति।

न। प्रवृत्त्यौपयिकं हि प्रामाण्यमर्थतथात्वनिश्चयत्वम्। (तच्च [स च] स्वत एव गृह्यते उत्पद्यते च। न त्वनुभूतित्वसहितम्, गौरवात्। तत्रापि संवादादिना प्रवृत्तेः प्रामाण्यं यथार्थत्वमेवानुमीयते, न त्वनुभूतित्वे सति, स्मृतौ व्यभिचारात्। स्मृत्यनुभवयोरप्रमाप्रमाव्यपदेशस्तान्त्रिकाणां सापेक्षत्वनिरपेक्षत्वनिबन्धनः। 'यथार्थानुभवो मानमनपेक्षतयेष्यते' इति तैरभिधानादिति।

---

**प्रकाशः**

स चेति। अर्थतथात्वरूपोऽर्थ इत्यर्थः। ननु स्मृतिरप्रमेति सर्वसिद्धम्। तथाच तद्व्यावृत्त्यर्थमनुभूतित्वसहितमेवार्थतथात्वं प्रामाण्यमिति वाच्यम्, अत आह—न त्विति। स्मृतिसाधारणेनैव तेन निष्कम्पप्रवृत्तिरिति भावः। एवं स्मृतावप्रामाण्यव्यपदेशं व्यवस्थापयति—स्मृतीति। सापेक्षत्वेति। यद्यप्यनुमितेर्लिङ्गपरामर्श-

---

**न्यायशिखामणिः**

न ज्ञानमात्रेति। उत्पद्यत इति—प्रामाण्यमिति शेषः। न चैवमसिद्धितादवस्थ्यम्। ज्ञानसामान्यसामग्रीमात्रं न प्रामाण्योत्पादकं, स्मृतिसाधारणत्वादित्यत्र तात्पर्यम्।

ननु प्रामाण्यपरामर्शकस्य तदो नपुंसक[1]लिङ्गत्वापत्तिरित्यत आह—[2]अर्थेति। अनुभूतित्वसहितमेवेति। अन्यथा [3]स्मृतावपि [4]प्रामाण्यव्यवहारापत्तेरिति भावः।

न व्यवहारोपयोगिप्रामाण्यं प्रकृते निरूप्यम्, किंतु निष्कम्पप्रवृत्त्यङ्गम्। तच्च लाघवाद्यथार्थत्वमेवेत्याह[5]—अत आहेति। एवं सति स्मृतेः प्रवर्तकत्वमेवापाद्यम्। तच्च तथापि तज्जननान्नानिष्टमित्याह—स्मृतीति। तर्हि स्मृतावपि प्रमाव्यवहार एव स्यात् न [6]स्याच्च तत्साधारणेनोक्तनिमित्तेनानुभवेऽपि इत्याशङ्कां वारयितुं स्मृत्यनुभवयोरित्यादि। तदयुक्तम्। सापेक्षत्वस्यानुभवसाधारणत्वात् निरपेक्षत्वस्य तत्राप्यसंभवात् तदुभयं नाप्रमा[7]प्रमाव्यपदेशव्यवस्थापकमित्याशङ्क्य

---

1. ख. °लिङ्गत्वानुपपत्ति-
2. ग. अत्रेति
3. क. 'स्मृतावपि' नास्ति।
4. ख. प्रमाव्यव-
5. ग. घ. °मेवेत्याह इति
6. ख. स्याच्चातत्साधा-
   क. स्याद्वा तत्साधारणेनोक्तमितितेनानु-
7. ख. ग. 'प्रमा' नास्ति

अत्र ब्रूमः। प्रामाण्यनिश्चयो निष्कम्पप्रवृत्तिहेतुर्न तत्संशय इत्यनुभवसिद्धं त्वदनुमतं च।

प्रकाशः

यथार्थत्वसापेक्षत्वेऽपि प्रमात्वमेव। तथापि स्वसमानाधिकरणस्वान्यूनानतिरिक्तविषयकज्ञानप्रामाण्यसापेक्षप्रामाण्यत्वेन तथात्वमभिमतम्। शाब्दप्रमायामपि स्वसमानाधिकरणसंसर्गज्ञानानपेक्षणादिति भावः। त्वदिति। न च मा ज्ञायीत्यनेन विरोध इति वाच्यम्। तस्याभ्युपगमवादत्वात्। अस्तु वेत्युपक्रमात्।

न्यायशिखामणिः

स्वसमानविषयकज्ञानसापेक्षयथार्थज्ञानत्वं तन्निरपेक्षयथार्थज्ञानत्वं च [1]तद्व्यवस्थापकमित्याह—एवं सतीति। स्मृताविति। एतच्चोपलक्षणम्, अनुभव इत्यपि द्रष्टव्यम्।

ननु सापेक्षत्वं हि समानविषयकज्ञानसापेक्षत्वम्। निरपेक्षत्वं च तादृशज्ञाननिरपेक्षत्वमिति तवाभिप्रेतम्। तत्र यदि समानविषयकपदेनान्यूनविषयत्वं विवक्षितं तदा अनुभवमात्रस्य तादृशपरमेश्वरज्ञानसापेक्षत्वादसंभवतादवस्थ्यमतिप्रसङ्गश्च। यद्यनतिरिक्तविषयकत्वं तदा अनुमितावुपनीतभानपक्षे दोषतादवस्थ्यमित्यभिप्रेत्य शङ्कते—यद्यपीति। तथापीति। अत्र धारावाहिकानुभवस्थले तादृशानुभवसापेक्षतयातिप्रसङ्गवारणाय प्रामाण्येत्युक्तम्। तत्प्रामाण्यस्य च भूयोवयवेन्द्रिय[2]संनिकर्षसापेक्षत्वान्नातिप्रसङ्ग इति भावः।

स्वसमानाधिकरणेति विशेषणस्य प्रयोजनमाह—शाब्देति। वक्तृयथार्थज्ञानस्य तथात्वेऽपि शाब्दप्रमासामानाधिकरण्याभावादिति भावः। यद्यप्यनुमितिप्रमायामबाधितत्वप्रमा शाब्दप्रमायां च योग्यताप्रमा तादृशी गुणत्वेन हेतुरिति तत्रातिप्रसङ्गः। तथापि तदुभयमेतन्मते न गुण इत्यभिप्रायेणतदुक्तम्। अत एव लिङ्गपरामर्शयथार्थत्वेत्युक्तम्।

विपरीतव्यवहारोपधानरूपमप्रामाण्यं दोषसहकृतज्ञानादुत्पद्यत इति न युक्तम्, तस्यासंसर्गाग्रह[3]जन्यत्वेऽपि दोषाजन्यत्वात् [4]दोषस्य चासंसर्गाग्रहोपक्षीण-

1. ख. घ. तथेत्याह
2. ख. °संनिकर्षादि-
3. क. °जन्यत्वेन
4. क. तस्य चा-

तच्च प्रामाण्यं नार्थतथात्वनिश्चयरूपम् । अनभ्यासदशापन्नज्ञानस्य स्वप्रकाशेनानुव्यावसायेन वार्थतथात्वनिश्चयग्रहेऽपि निष्कम्पप्रवृत्त्यभावात्, प्रामाण्यसंशयाच्च । सर्वधियां यथार्थत्वनियमेनार्थतथात्वनिश्चयत्वस्य स्वरूपतो विषयतश्चागृहीतभेदज्ञानद्वयरूपभ्रमसाधारणत्वात् । तस्मान्न भ्रमसमानाकारादिदं रजतमिति ज्ञानान्निष्कम्पप्रवृत्तिः, किं तु तद्व्यावृत्ताकारात् ।

---

प्रकाशः

अनुव्यवसायेनेति मुरारिमतपरम् ।

---

न्यायशिखामणिः

त्वादिति पराभिमताप्रामाण्यपरतस्त्वनिराकरणं स्पष्टतयोपेक्ष्य प्रामाण्यस्वतस्त्वम् 'अत्र ब्रूम' इत्यादिना निराकृतम् । तत्र विरोधमाशङ्क्य [1]निषेधति—**न चेति** । **उपक्रमादिति** । एतच्चोपलक्षणम् । [2]प्रवृत्त्यौपयिकं हि प्रामाण्यमर्थतथात्वनिश्चयरूपमिति तेन तथैवाभिधानादित्यपि बोध्यम् ।

गुरुमतेऽनुव्यवसायस्य प्रामाण्यग्राहकत्वानभ्युपगमादाह—**मुरारीति** । यद्यपि मुरारिमतं न प्रकृतम्, तथापि [3]वाशब्दस्य इवार्थेऽपि प्रयोगात् दृष्टान्तार्थे तदुपादानम् ।

यद्वा प्रामाण्यसंशयस्य विशिष्टज्ञानत्वादिकोटिकत्वसाधनेन निश्चितेऽपि दोषात् तत्कोटिकत्वोपपादनेन च संशयानुपपत्तेः स्वतस्त्वबाधकत्वे गुरुणा दूरीकृते तन्न्यायेन [4]मुरारिणा तत्संशयस्योपपादयितुं शक्यतयोक्त[5]बाधकानवकाशादनुव्यवसायरूपग्राहकसामग्रीसत्त्वाच्च प्रामाण्यस्य स्वतस्त्वं दुर्वारमिति तन्मतमपि पूर्वपक्षे पुनरुत्थापितमिति तन्निराकरणाभिप्रायेणैव तदुपादानम् । अत एवाग्रे 'प्रागनुपस्थितेः' इत्येतत् संगच्छते । अन्यथा अनुव्यवसायात्प्राक् व्यवसायानुपनीतस्य तन्मते [6]अनुव्यवसायाविषयत्वेऽपि मतान्तरेऽनुपस्थितस्यापि प्रकारत्वाभ्युपगमात् तदसंगतं स्यादित्यवधेयम् ।

---

1. क. निराकरोति
2. ख. प्रवृत्त्यौपाधिकं
3. क. अपिशब्दस्य
4. क. मुरारिमते
   ग. मुरारिणः
5. क. °बाधकाभावात्
6. ग. अनुव्यवसायविषय-

अथ तत्र प्रामाण्ये न संशयस्तस्यार्थतथात्वनिश्चयत्वरूपस्य निश्चयात्। किं त्वगृहीतभेदं ज्ञानद्वयं विशिष्टज्ञानं वेति संशयः। स एव निष्कम्पप्रवृत्तिप्रतिबन्धकोऽपि। अतस्तस्य ज्ञानान्तरान्निवृत्तौ निष्कम्पप्रवृत्तिरिति चेत्—तर्हि यस्य संशयो व्यतिरेकनिश्चयश्च यत्प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरिति व्याप्तेः भ्रमव्यावृत्तस्य विशिष्टज्ञानत्वस्य निश्चयः प्रवृत्तिहेतुः न त्वर्थतथात्वस्य, भ्रमसाधारण्यात्, तस्मिन् सत्यप्रवृत्तेश्च। तत्संशयाभावसहितस्यार्थतथात्वनिश्चयस्य प्रवर्तकत्वे गौरवात्।

---

### प्रकाशः

तन्निश्चय इति। व्यतिरेकनिश्चय इत्यर्थः। [1]यदेव निष्कम्पप्रवृत्तिहेतुस्तस्य स्वतस्त्वादिकं निरूप्यम्। तादृशं च विशिष्टज्ञानत्वमेव। तच्च न स्वग्राह्यम्। तथा च ज्ञानत्ववद्यथार्थत्वस्य स्वतोवेद्यत्वेऽपि निष्कम्पप्रवृत्तिहेतुप्रामाण्यस्य स्वतस्त्वमनुपपादितमेवेत्यखण्डार्थः।

---

### न्यायशिखामणिः

[2]यस्य व्यतिरेकसंशयस्तन्निश्चय इत्यत्र तत्पदस्य यत्पदार्थ[3]परामर्शकत्वं वारयति—व्यतिरेकेति।

ननु नव्या इत्यतः प्राक्तनेन अत्र ब्रूम इत्यादिग्रन्थेन [4]अगृहीतसंसर्गकधर्मधर्मिगोचरैकज्ञानत्वमेव प्रामाण्यं, भ्रमव्यावृत्तत्वात् निष्कम्पप्रवृत्तिहेतुत्वात् प्रामाण्यसंशयनिवर्तकत्वाच्च। न त्वर्थतथात्वनिश्चयत्वरूपं, [5]तद्वैपरीत्यात्। तच्च स्वतो न ग्राह्यमुपाध्यं चेत्युक्तम्। तदयुक्तम्। निष्कम्पप्रवृत्त्यङ्गत्वेन विशिष्ट[6]ज्ञानत्वस्य [7]प्रामाण्यत्वसिद्धेः तद्वैकल्येनेतरव्यवच्छेदसिद्धेर्हेतुद्वयवैयर्थ्यम्[8]।

किं चार्थतथात्वनिश्चयत्वस्य [9]प्रमाणधर्मस्य स्वाश्रयस्वप्रकाशत्वसाधनेन ग्राहकसामग्रीसत्त्वात् संशयानुपपत्तिनिराकरणेन [10]बाधकाभावाच्च स्वतस्त्वसिद्धौ

---

1. क. ‘यदेव..........अखण्डार्थः’ इत्यस्य स्थाने—‘तदेव निष्कम्पप्रवृत्तिहेतुः, प्रामाण्यस्य स्वतस्त्वमनुपपादितमेवेत्याखण्डलार्थः’ इति पाठो दृश्यते।
2. ख. ‘यस्य’ नास्ति।
3. क. °परामर्शे
4. ख. अगृहीतासंशय-
5. ख. ‘तद्’ नास्ति
6. क. °ज्ञानस्य
7. घ. प्रामाण्यत्वसिद्धेः
8. ख. हेतुत्ववैयर्थ्यम्
9. क. प्रामाण्यधर्मस्य
10. क. बाधकानवकाशाच्च

किं च प्रवृत्तिहेतुज्ञानं विघटयत एव ज्ञानस्य तत्र प्रतिबन्धकत्वम्। न चेह तथा, संशये सत्यपि तस्य सत्त्वात्।

अपि च विशिष्टज्ञानत्वमेव प्रामाण्यं भ्रमव्यावृत्तत्वात्। न त्वर्थतथात्वनिश्चयत्वम्, भ्रमसाधारणत्वात्। लौकिकपरीक्षकाणां भ्रमव्यावृत्ते प्रामाण्यव्यवहारात्। तदतिक्रमे प्रमात्वस्य पारिभाषिकत्वापत्तेः। तस्मात् भ्रमव्यावृत्तत्वात् निष्कम्पप्रवृत्तिहेतुत्वात् प्रामाण्यसंशयनिवर्तकत्वाच्च विशिष्टज्ञानत्वमेव प्रामाण्यम्।

नन्वस्तु तथा, तदेव स्वतो गृह्यत इति चेत्—न। अगृहीतासंसर्गधर्मधर्मिविषयैकज्ञानत्वं भ्रमव्यावृत्तं विशिष्टज्ञानत्वम्। तत्तु स्वतो

---

**प्रकाशः**

तस्येति। यथार्थत्वनिश्चयस्येत्यर्थः। तथा च संशयविघटनीयं विशिष्टज्ञानत्वरूपप्रामाण्यज्ञानं निष्कम्पप्रवृत्तिहेतुत्वेन त्वया वाच्यम्। तच्च न स्वतो वेद्यमिति भावः।

---

**न्यायशिखामणिः**

किमुक्तहेतुत्रयवैकल्येनेत्याशङ्क्य, न हि प्रमाणधर्ममात्रे स्वतस्त्वादिविचारः। तथा सति ज्ञानत्वं स्वतो ग्राह्यम्, विशेष्यावृत्त्यप्रकारत्वं च परतोग्राह्यमित्येव तत्साधनापत्तेः। किं तु यत्प्रामाण्यं निष्कम्पप्रवृत्तिव्यवस्थापकं तच्च विशिष्टज्ञानत्वमेव। तन्निश्चयान्निष्कम्पप्रवृत्तेः। [1]प्रवृत्तिप्रतिबन्धकसंशयनिवर्तकत्वस्य प्रवृत्त्यङ्गत्वोपपादकत्वात् भ्रमव्यावृत्तत्वस्य [2]च तदुपपादकत्वान्न वैयर्थ्यम्। न त्वर्थतथात्वनिश्चयत्वं तथा, [3]उक्तप्रयोजकाभावात्। तथापि तत्र तत्साधने पक्षत्वाभिमते तदसिद्ध्या अर्थान्तरमित्यभिप्रायो मूलकारस्येत्याह—यदेवेति।

तर्हि प्रवृत्त्युत्पादकस्यान्यस्य तद्विघटनीयस्याभावात् प्रतिबन्धकत्वमेव न स्यादित्यत आह—तथा चेति।

---

1. क. संशयनिवर्तकप्रवृत्तिप्रतिबन्धकस्य
2. ख. ग. घ. 'च' नास्ति।
3. क. उक्तप्रयोजकत्वात्
   ग. उक्तप्रयोजकस्याभावात्

ग्रहीतुं न शक्यते । अगृहीतासंसर्गादेः प्रागनुपस्थितेः सामग्रीविरहात् । स्वप्रकाशता हि स्वमात्रसाक्षिणी । अन्यथा अनभ्यासदशापन्नेऽपि तस्य स्वतोग्रहादप्रामाण्यसंशयो न स्यात् । अत एव न ज्ञानसामग्रीत एव प्रामाण्यमुत्पद्यते । भ्रमस्यापि तथात्वापत्तेः ।

नव्यास्तु—अविद्यमानभेदस्याग्रहः प्रामाण्यम् । स चात्यन्ताभावः । कदापि तस्य ज्ञानाभावादत्यन्ताभावरूपतया स्वतः सिद्धत्वेन प्रामाण्यं स्वत इत्युच्यते । विद्यमानभेदस्याग्रहोऽप्रामाण्यम् । स चाग्रहः प्रागभावः । अग्रे भेदस्य ग्रहात् । भेदग्रहे प्रसक्ते न स जायते दोषादित्युत्तरकालसंसर्गरूपस्य तत्परिपालनस्य दोषजन्यत्वेनाप्रामाण्यं परत उत्पद्यते ।

## प्रकाशः

ननु ज्ञानं स्वप्रकाशम् । अतस्तद्धर्मो विशिष्टज्ञानत्वमपि तत्र भासताम् । धर्मिग्रहे धर्मग्रहादत आह—स्वप्रकाशता हीति । स्वं गृह्णातीति स्वप्रकाशशब्दार्थः, न तु धर्ममपि । अन्यथा अनभ्यासदशायां [1]तत्संशयो न स्यादित्यर्थः । अविद्यमानभेदस्येति । अविद्यमानभेदाग्रहदशाकधर्मधर्मिगोचरज्ञानत्वमित्यर्थः ।

स्वत इति । कारणानपेक्षत्वमुत्पत्तौ स्वतस्त्वमित्यर्थः । यद्यपि प्रागभावात्यन्ताभावावतिरिक्तौ परेण नाङ्गीक्रियेते, तथापि तदङ्गीकर्तृ[?]देकदेशिमते इदं बोध्यम् । विद्यमानभेदस्येति । विद्यमानभेदाग्रहदशाकधर्मधर्मिगोचरज्ञानत्वं प्रामाण्यमित्यर्थः । विचित्र[2]व्यवहारोऽपीति । विचित्रप्रवृत्ति(हेतु)रपीत्यर्थः । व्यव-

## न्यायशिखामणिः

[3]किमेतद्बोधं मुरारेरुत प्राभाकरस्य । तत्राद्यमगृहीतासंसर्गेत्यादिना निराकृत्यान्त्यं स्वप्रकाशता हीत्यत्र निरस्तम् । तदयुक्तं, विषयस्यापि तत्र भानेन स्वमात्रसाक्षित्वानुपपत्तेरित्यत आह—स्वमिति । तदिति । विशिष्टज्ञानत्वरूपप्रामाण्यमित्यर्थः ।

1. ख. 'तत्संशयो न स्यादित्यर्थः....स्वतस्त्वमित्यर्थः' इति ग्रन्थस्त्रुटितः ।
1. ख. 'व्यवहारोऽपीति । विचित्रप्रवृत्तिहेतुरपीत्यर्थः' इति नास्ति ।
2. क. 'किमेतद्बोधं..........तदिति' इति ग्रन्थस्त्रुटितः ।

विसंवादिसंवादिविचित्रव्यवहारोऽपि विद्यमानाविद्यमानभेदाग्रह-रूपविलक्षणहेतुक एव। व्यवहारोपयुक्तं तु प्रामाण्यं यथार्थत्वमेव। तच्च ज्ञानहेतुमात्रहेतुकम्।

अप्रामाण्यं दोषात्। अनभ्यासदशापन्ने प्रामाण्यसंशयोऽपि विद्यमानाविद्यमानभेदाग्रहकोटिद्वयावलम्बी, स एव निष्कम्पप्रवृत्तिप्रतिबन्धक इति।

---

प्रकाशः

हारोपयुक्तमिति। संवादिप्रवृत्त्यन्यप्रमारूपव्यपदेशादिरूपव्यवहारोपयुक्तमित्यर्थः। उक्तनिमित्तेन मन्मते संवादिविसंवादिप्रवृत्तिजनकज्ञानयोः प्रमाव्यपदेशस्येष्टत्वादिति भावः। यथार्थत्वमेवेति। यथार्थानुभवत्वमेवेत्यर्थः। केचित्—स्मरणेऽपि स्वप्रकाशत्वेन आत्मांशे[1]ऽनुभवत्वस्य सत्त्वात्सर्वत्र तन्मते तद्व्यपदेश इत्याहुः।

इदमपि स्वत एवोत्पद्यत [2]इत्यत आह—तच्चेति। स्वत एव ज्ञायते [3]चेति शेषः। अप्रामाण्यमिति। यद्यप्येतत्पुनरुक्तम्, तथापि स्पष्टार्थमेतदुक्त-

---

न्यायशिखामणिः

ननु पुरोवर्तीष्टभेदाग्रहस्य न प्रवृत्तिहेतुत्वम्, सुषुप्तावपि तत्प्रसङ्गात्। नापि तज्जनकतावच्छेदकत्वम्, धर्मिज्ञानादपि तदापत्तेरित्यत आह—[4]अविद्यमानेति। ननूभयविधभेदाग्रहस्य व्यवहारप्रयोजकत्वे यथार्थत्वमेवेत्यग्रिमग्रन्थविरोध इत्याशङ्क्य उभयत्र व्यवहारभेदमाह—विचित्रेत्यादिना। तथापि नेदं प्रमाव्यवहारोपयोगि, स्मृतेः क्वचिदंशेऽनुभवत्वेऽपि तत्र लौकिक[5]परीक्षकाणां प्रमाव्यवहाराभावात्। न चैतद्दूषणं [6]पूर्वमतेऽपि तुल्यमिति वाच्यम्। सर्वांशानुभवत्वस्य तत्र विवक्षितत्वात्। तथा च यथार्थत्वमेव [7]तदुपयोगीत्ययुक्तमित्यस्वरसं सूचयति—आहुरिति।

---

1. ख. °नुभवसत्त्वात्
2. क. इत्यपाताचेति।
3. ख. चेत्यविशेषार्थः
4. ग. विद्यमानेति।
5. ख. °परिकर्षकाणां
6. ख. ग. पूर्वमपि
7. क. तदुपयोगीत्यस्वरसं

तत्र। निष्कम्पप्रवृत्तिहेतुर्हि प्रामाण्यं ग्राह्यं न त्वन्यत्। निष्प्रयोजनत्वात्। तच्च यद्यपि अविद्यमानभेदाग्रहरूपं तदा तत्र स्वतो ज्ञातुं शक्यते। अविद्यमानभेदग्रहस्य तत्प्रतियोगिनोऽसत्त्वात्, प्रागनुपस्थितेश्च। अनभ्यासदशायां ज्ञाने ज्ञातेऽप्यविद्यमानभेदाग्रहे संशयाच्च।

---

### प्रकाशः

मित्याहुः। यथार्थत्वरूपप्रामाण्यस्य स्वतो ग्रहे अनभ्यासदशायां प्रामाण्यसंशयमुपपादयति—अनभ्यासेति।

एवमपि निष्कम्पप्रवृत्त्यङ्गस्य त्वदभिमतप्रामाण्यस्य स्वतोग्राह्यत्व[1]मनुपपादितमेवेत्याशयेन परिहरति—तत्रेति। एतच्चोपलक्षणम्। यत्र शुक्त्यादौ विद्यमानोऽपि रजतादिभेदोऽग्रे तेन न गृहीतस्तत्र भेदग्रह[2]प्रागभावाभावात् दोषस्य तत्परि-

---

### न्यायशिखामणिः

ननु स्वतस्सिद्धत्वेनेत्यत्र प्रामाण्यस्योत्पत्तौ स्वतस्त्वमुक्तमिति[3] पौनरुक्त्यमित्याशङ्क्य, तादृशभेदाग्रहरूपस्यैव प्रामाण्यस्य तदुक्तम्। इह तु यथार्थत्वस्योच्यत इत्याह—इदमपीति।

यद्वा व्यवहारोपयोगि [4]यत् यथार्थानुभवत्वं तज्ज्ञानमात्रसामग्रीजन्यमित्युक्तम्। तत्सामग्र्याः [5]स्मृतिसाधारणत्वादित्यत आह—इदमिति। यथाश्रुतमिदंशब्दार्थः, न तु विवक्षित[6]यथार्थानुभवत्वम्। तस्य व्यवहाराङ्गत्वेऽपि स्वतस्त्वायोग्यत्वात्। अत एवानुपदं तथैवाग्रे यथार्थत्वरूपस्य प्रामाण्यस्येत्यादिना विभावयिष्यति।

नन्वग्रे संशयोपादानवैयर्थ्यम्, प्रामाण्यस्योत्पत्तौ स्वतस्त्वेऽपि[7]तत्संशये विरोधाभावादित्यत आह—ज्ञायत इति। विद्यमानभेदाग्रहरूपमप्रामाण्यम्। तच्च दोषपरिपाल्यमिति उत्पत्तावस्य परतस्त्वं पूर्वमेव स्पष्टीकृतम्। प्रत्युत प्रकृते तदस्पष्टमित्यस्वरसं सूचयति—आहुरिति।

---

1. ख. °मनुपपन्नमेव
2. ख. °प्रसक्त्यभावात्
3. क. 'इति, इत्यस्यानन्तरं 'प्रतिभाति' इत्यधिकपाठः।
4. ख. 'यत्' नास्ति।
5. ख. श्रुति-
6. ख. ग. यथार्थत्वानुभवत्वम्।
7. क. 'अपि तत्संशये' नास्ति।

प्रकाशः

पालन[1]हेतुत्वमपि न । कदाचिदधिकरणस्य प्रागभावस्य सत्त्वेऽपि [2]तस्यैतत्पुरुषीयदोषापरिपालनीयत्वात् तत्सत्त्वेऽपि तदसत्त्वादित्यपि दूषणमत्र द्रष्टव्यम् ।

असत्त्वादिति । तथा चासत्प्रतियोगिकत्वात्तदत्यन्ताभावोऽसन् शशशृङ्गाभाववत् [3]ज्ञातुं न शक्यत इति [4]भावः । तत्सत्त्वाभ्युपगमे च तदभावस्य प्रागभावत्वमेव (न) स्यात् नात्यन्ताभावत्वमिति ध्येयम् ।

---

न्यायशिखामणिः

वयं तु अप्रामाण्य[5]दोषघटिताल्लिङ्गादुन्नीयत इति ज्ञप्तिपरतस्त्वाभिप्रायमेतदिति ब्रूमः ।

अप्रामाण्यस्य [6]पराभिमतपरतस्त्वे दूषणानभिधानात् स्वयं तदाह— एतच्चेति । तत्सत्त्वेति । [7]अविद्यमानभेदाग्रहसत्त्वेत्यर्थः ।

प्रागनुपस्थितेश्चेत्यादिमणेरयमर्थः—

ननु प्रतीयमानेष्टप्रतियोगिकभेदाधि[8]करणविषयकधर्मिज्ञानत्वमेव परस्य प्रामाण्यत्वेनाभिमतम् । तत्र च नासत्प्रतियोगिकतादोषावकाश इत्यरुचेराह— प्रागिति । एतच्च मुरारिमते । तन्मते व्यवसायोपनीतत्वस्यानुव्यवसायविषयत्वे तन्त्रत्वादिति भावः । तथापि गुरुमते प्रागनुपस्थितिर्न दोषः । अनुपस्थितस्यापि प्रकारत्वाभ्युपगमादित्यरुचेराह—अनभ्यासेति ।

नन्विदमप्ययुक्तम्, निश्चितेऽपि दोषविशेषात् संशयोपपत्तेः । तथा अप्रामाण्यस्योत्पत्तौ पराभिमतमेव परतस्त्वं युक्तम् । तथा हि उपस्थितेष्टभेदाविषयकतदधिकरण[9]विषयकधर्मिज्ञानत्वमप्रामाण्यम्, न तु विद्यमानभेदाग्रहमात्रम् । सुषुप्तावपि प्रवृत्त्यापत्तेः । [10]विसंवादिविचित्रव्यवहारोऽपी'त्यनेन [11]तस्य विसंवादिप्रवृत्तिप्रयोजकत्वस्याभिहितत्वात् इति चेत्—

---

1. ख °हेतुकत्वमपि
2. क. तस्यैव तत्पुरुषीय-
3. क. ज्ञातुमशक्यमिति
4. ख. 'भावः' नास्ति ।
5. ख. दोषघटिततल्लिङ्गा-
   ग. दोषघटिततल्लिङ्गादुपनीत-
6. ख. 'पराभिमत' नास्ति
7. ख. घ. विद्यमान-
8. ग. °करणविषयक-
9. ख. °विषयधर्मि-
10. ख. विसंवादिसंवादिविचित्र-
11. ख. तस्यापि संवादि-

एतेन औत्सर्गिकः संसर्गग्रह एव प्रामाण्यम्, असंसर्गाग्रह एवाप्रामाण्यमिति निरस्तम्। संसर्गग्रहत्वस्य स्वेन ग्रहीतुमशक्यत्वात्। शक्यत्वे वा अनभ्यासदशायामपि तद्ग्रहे तत्संशयो न स्यात्। तस्मात् भ्रमव्यावृत्तं निष्कम्पप्रवृत्तिहेतुः प्रामाण्यमगृहीतसंसर्गधर्मधर्मिविषयकैकज्ञानत्वरूपं विशिष्टज्ञानत्वं, संसर्गज्ञानत्वं वा, अविद्यमानभेदाग्रहत्वं वा स्वतो ज्ञातुं न शक्यते। किं तु विशेषदर्शनादिजन्यज्ञानादवधार्यत इति वज्रलेपायितं परतःप्रामाण्यमित्युत्पत्तिवादः।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे प्रामाण्योत्पत्तिवादः

---

प्रकाशः

औत्सर्गिकत्वमुपरञ्जकमित्याहुः। संसर्गग्रह एवेति। संसर्गग्रहत्वमेवेत्यर्थः। असंसर्गाग्रह एवेति। असंसर्गाग्रहदशाकधर्मधर्मिगोचरज्ञानत्वमित्यर्थः। अविद्यमानेति। अविद्यमानभेदाग्रहदशाकज्ञानत्वमित्यर्थः।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे प्रामाण्योत्पत्तिवादः

---

न्यायशिखामणिः

अत्र ब्रूमः। न तावदुक्तप्रामाण्यं परत उत्पद्यते। तस्य दोषाजन्यत्वात्। ज्ञानद्वयस्य प्रत्येकं यथार्थत्वेन दोषाजन्यतया तज्जन्यतानवच्छेदकत्वाच्च।

वस्तुतस्तु अप्रामाण्यस्योत्पत्तिज्ञप्त्योर्न परतस्त्वं निराकार्यम्, तस्यास्माभिरप्यङ्गीकारात्। तत्प्रकारभेदः परमस्मदुक्तप्रकाराद्विरुद्धः। तथापि पृथगुक्त्यसोऽत्र न निराकार्यः। तस्यान्यथाख्यातिसाधनादेव निरस्तत्वात्। अत एवाप्रामाण्यपरतस्त्वे परोक्तप्रकारभेदे तन्नेत्यत्र अत्र ब्रूम इत्यत्र च गङ्गेशेन किमपि दूषणं नोक्तम्।

न्यायशिखामणिः

तस्मात् प्रामाण्यस्वतस्त्वमेव निराकरणीयं [1]परमवशिष्यते। तत्र न तावदुत्पत्तौ स्वतस्त्वम्। [2]तादृशभेदाग्रहस्य कारणानपेक्षत्वेऽपि तद्घटिततादृश[3]धर्मधर्मिज्ञानत्वस्य तथात्वाभावात् ज्ञानसामग्र्या विद्यमानभेदाग्रहदशाक[4]धर्मधर्मिज्ञानरूपभ्रमसाधारणत्वेन तत्प्रयोज्यत्वाभावाच्च।

नापि ज्ञप्तौ स्वतस्त्वम्, स्वप्रकाशताया निराकरिष्यमाणत्वेन ग्राहकसामग्रीविरहात्। अस्तु वा स्वप्रकाशत्वम्, तथापि तन्महिम्ना [5]ज्ञानभानं ज्ञानतद्विषयमात्रघटित[6]धर्मभानं चेत्येव तवाभिमतम्, अन्यथातिप्रसङ्गात्। अत एव त्वयैवोक्तम् 'यथार्थत्वमेव स्वत उत्पद्यते ज्ञायते च' इति। तथा च निरुक्तप्रामाण्यमाश्रयज्ञानशतेनापि न भासितुमर्हति, ज्ञानतद्विषयातिरिक्तघटितत्वादिति।

औत्सर्गिकत्वं [7]स्वाभाविकत्वमबाधितत्वमेति यावत्। तच्चोपरञ्जकं न तु व्यावर्तकम्, तन्मते अन्यथाख्यात्यनभ्युपगमादिति भावः।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
तत्त्वचिन्तामणिप्रकाशव्याख्याने न्यायशिखामणौ
प्रामाण्योत्पत्तिवादः

—: * :—

1. ख. परं व्यशिते
2. ख. तादृशभेदताग्रहस्य
3. ख. 'धर्म' नास्ति।
4. ख. 'धर्म' नास्ति
5. ख. ज्ञानहानं
6. ख. धर्महानं
7. क. 'स्वाभाविकत्व' नास्ति।

# अथ प्रमालक्षणवादः

—:*:—

अथ किं तत् प्रामाण्यम् । न तावज्जातिः । योग्यव्यक्तिवृत्तित्वेन प्रत्यक्षत्वे प्रमात्वसंशयानुपपत्तेः, प्रमात्वस्यानुमेयत्वाच्च ।

---

प्रकाशः

प्रसङ्गात् प्रामाण्यमाक्षिपति—अथेति । ननु दोषात् व्यञ्जकाभावाद्वा न गृह्यत इत्यत आह—प्रमात्वस्येति । नित्यानुमेयत्वान्न प्रमात्वं प्रत्यक्षवृत्तिजाति-

---

न्यायशिखामणिः

ननु किंशब्दस्य न प्रश्नपरत्वम्, तद्वतीत्यादिना प्रामाण्यस्य निरुक्तत्वात् । न चाक्षेपपरत्वम् । व्यवहारोपयोगिप्रामाण्यस्य स्वतस्त्वादिविचाराविषयतया अप्रकृतत्वेन तदाक्षेपस्य प्रकृतासंगतत्वात्, मीमांसकेनापि प्रामाण्याङ्गीकारेण तदाक्षेपायोगाच्चेत्यत आह—प्रसङ्गादिति । आक्षिपतीति । तटस्थ इति शेषः । एतेन—'पक्षमज्ञात्वा न साध्यतदभावयोः सिद्धिः हेत्वभावात् । अत एव धर्मी सर्वतन्त्रसिद्धान्त इत्याशयेन पृच्छति—अथ किमिति' इति जयदेवव्याख्यानमपास्तम् । [1]पक्षीभूतप्रामाण्यस्य [2]तद्वतीत्यादिना निरुक्तत्वात् व्यवहारोपयोगिप्रामाण्यस्यैव [3]लक्षयिष्यमाणत्वेनोत्तरग्रन्थस्य प्रश्नाननुरूपत्वापत्तेश्च ।

वयं तु—निष्कम्पप्रवृत्त्यङ्गमेव प्रामाण्यमुत्पत्तौ ज्ञप्तौ च स्वतस्त्वादिविचारविषय इत्युक्तमयुक्तम् । प्रामाण्यमात्रस्य पक्षत्वेन [4]विशेषणवैयर्थ्यात् । न च व्यवहारोपयोगि प्रामाण्यं व्यावर्त्यम्, वक्ष्यमाणविकल्पग्रासेन तस्यैवासिद्धेरिति तटस्थ आक्षिपति—अथेति । यत्प्रामाण्यं व्यवहारोपयोगि प्रवृत्त्यङ्गमदव्यावर्त्यं तत्किं जातिरुपाधिरिति मूलार्थो बोध्यः । तथा च प्रमात्वनिरूपणं प्रकृतोपयोगीति ब्रूमः ।

---

1. ख. पक्षभूत-
2. ख. तद्वदित्यादिना
3. ख. लक्षिष्यमाण-
   ग. लक्ष्यमाण-
4. क. ख. शेषवैयर्थ्यात्

साक्षात्त्वादिना संकरापत्तेश्च। बीजसाम्येन गुणेऽपि तस्य दोषत्वात्। तारत्वादेरुत्कर्षरूपतया जातित्वनियमे चानन्यगतिकतया च नानात्वात्। प्रमात्वनानात्वे त्वननुगमः।

---

**प्रकाशः**

रित्यर्थः। [1]अनभ्यासदशायां प्रमात्वजातेः प्रत्यक्षेणापि ग्रहे बाधकाभावान्नित्यानुमेयत्वमेवासिद्धमित्यत आह—साक्षात्त्वेति।

बीजेति। नन्वत्र [2]बीजं नास्तीति चेत्—अत्र वदन्ति। जातिसंकरस्वीकारे हि गोत्वाश्वत्वयोरपि सांकर्यशङ्का दुर्निवारेति तयोर्विरोधासिद्धौ गोत्वस्या-

---

**न्यायशिखामणिः**

जातित्वपक्षेऽपि सा जातिः प्रत्यक्षेण गृह्यते न वा। तत्राद्यं निरस्तं [3]योग्यव्यक्तीत्यादिना। द्वितीयं शङ्कते—नन्विति। ननु न [4]तावद्दूरत्वं दोषः, प्रमाव्यक्तेः स्वात्मवृत्तित्वात्। न चानभ्यासदशा दोषः। तस्याः [5]प्रमात्वानिश्चयपर्यवसन्नत्वेन [6]स्वप्रयोजकत्वापत्तेरित्यरुचेराह—व्यञ्जकेति। विशेषदर्शनजन्यत्वरूपव्यञ्जकापरिचयादित्यर्थः। अत एव विशिष्टमातापितृजन्यत्वरूपव्यञ्जकापरिचयात् ब्राह्मणत्वजातिः पिण्डसंनिधावपि न गृह्यत इति भावः।

प्रमात्वस्य [7]प्रत्यक्षाग्राह्यत्वे तत्र प्रमाणान्तरस्याप्यप्रवृत्तौ [8]अप्रामाणिकत्वापत्त्या तेन गृह्यत इत्यवश्यं वाच्यम्। तत्रापि प्रमात्वजातिस्तेनैव गृह्यत [9]इति विवक्षितम् उत तेनापीति। तत्राद्य आह—अत आहेति।

नित्येति। प्रत्यक्षातिरिक्तप्रमाणमात्रग्राह्यत्वादित्यर्थः। मनस्त्वादौ व्यभिचारादाह—प्रत्यक्षेति। [10]अन्त्यं कल्पमुत्थापयति—अनभ्यासेति। सजातीयज्ञाने विशेषदर्शनजन्यत्वलिङ्गेन प्रमात्वनिश्चयदशायां तज्जातीयज्ञानान्तरानुव्यवसाये

---

1. ख. नन्वनभ्यास-
2. ख. बीजमेव किमिति चेत्
3. ग. योग्यवृत्ती-
4. ख. तावद्दूरत्वदोषः
5. ग. प्रमात्वनिश्चय-
6. ख. अप्रयोजक-
7. ग. प्रत्यक्षग्राह्यत्वे
8. ख. चाप्रामा-
9. क. इत्यविवक्षितम्
10. अन्त्यपक्षम्

प्रकाशः

श्वत्वविरुद्धस्योपलब्ध्या [1]अश्वत्वव्यतिरेकानुमानं न स्यात् । न स्याच्च समाविष्टजातिगतपरापरभाव[2]रूपविपक्षबाधकमूलं शिंशुपात्वेन वृक्षत्वानुमानमिति ।

तत्र नाद्यः । एवं ह्युपाधिसंकरस्यापि दोषत्वापत्तेः । भूतत्वमूर्तत्वाद्युपाधिसंकरस्वीकारे परस्परविरुद्धोपाधिद्वयस्यापि संकरशङ्कया परस्परं परस्परव्यतिरेकानुमानं [3]स्यादित्यस्यापि वक्तुं सुकरत्वात् । अतः स्वभावादेव केचिदुपाधयः अविरुद्धस्वभावाः, केचिच्च विरुद्धस्वभावाः । तत्राद्ये परस्पर[4]व्यतिरेकाननुमितावप्यन्त्ये

न्यायशिखामणिः

तदुपनीतव्यञ्जकभानसंभवेन पूर्वोक्तस्यानभ्यासदशारूपस्य व्यञ्जकाभावस्य च [5]बाधकस्याभावात् प्रत्यक्षेणापि प्रमात्वग्रहसंभवे तत्र नित्यानुमेयत्वमसिद्धमित्यर्थः ।

**नन्वत्रेति** । जातिसंकरस्य जातित्वबाधकत्व इत्यर्थः ।

नन्वत्र संकर एव नास्ति भ्रमेऽपि धर्म्यंशे प्रमात्वसत्त्वेन साक्षात्त्वस्य तद्व्याप्यत्वादिति चेत्—अत्र केचित् । निर्विकल्पकमीश्वरीयं च ज्ञानं प्रमाभ्रमाबहिर्भूतमिति मते तत्र व्यभिचारात् संकर इत्याहुः ।

वस्तुतस्तु प्रमुष्टतत्ताकयथार्थस्मरणानन्तरं यत्र मनसा तत्तांशोपनायकाभावादारोप्यमात्रप्रकारकज्ञानं जायते तत्र प्रमात्वं विना साक्षात्त्वम्, [6]तच्च विना अनुमित्यादौ प्रमात्वम्, साक्षात्कारिप्रमायां च तदुभयसंकर इति द्रष्टव्यम् ।

उपाध्यायमतमाह—**अत्रेति** । संकरस्य जातिबाधकत्वस्वीकारे विरुद्धयोर्जात्योः सामानाधिकरण्यशङ्काविरहात् परस्परविरहानुमापकत्वम्, [7]समानाधिकरणयोश्च विरोधशङ्काविरहात् ज्ञाप्यज्ञापकभावश्चोपपद्यते । तदेतदुभयं तस्य बाधकत्वानङ्गीकारे न स्यादित्याह—**जातीति** । **समाविष्टेति** । यद्यत्र शिंशपात्वं वृक्षत्वं विनापि स्यात् तदा तद्व्याप्यं न स्यादित्यनुभूयमानव्याप्यत्वानुपपत्तिरूपविषयपरिशोधक[8]तर्कमूलमित्यर्थः । यद्वा यदि शिंशपात्ववृक्षत्वयोर्व्याप्यव्यापक-

1. ख. अश्वत्वे व्यति-
2. ख. ०रूपदूषकविपक्ष-
3. ख. स्यादित्यस्य तत्रापि
4. ख. व्यतिरेकानुमि-
5. ख. बाधकाभावात्
6. क. तेन विना
7. ख. ग. सामानाधिकरण्ययोश्च
8. ख. ०तर्कमूलव्याप्तिजन्यमित्यर्थः

प्रकाशः

तदनुमितिः स्यात् । तत्र विरोधस्य प्रमाणसिद्धत्वेन संकरशङ्काविरह इति चेत्— हन्तैवं भूतत्वमूर्तत्वजातीनामविरुद्धस्वभावतया तदननुमापकत्वेऽपि गोत्वाश्वत्वादीनां प्रमाणसिद्धविरोधतया तदनुमापकत्वं स्यात् [1]को विरोधः ।

नान्त्यः, तत्रानौपाधिकत्वादिरूपविपक्ष[2]बाधकान्तरस्यापि संभवात् । अन्यथा शिंशुपात्वसमनियतोपाधिना वृक्षत्वसमनियतोपाध्यनुमानं न स्यात् । तस्मादत्र बीजं चिन्त्यमिति ।

---

न्यायशिखामणिः

भावो न स्यात्तदा तयोः सामान्यविशेषभावो न स्यादिति तर्कमूलव्याप्ति[3]ज्ञानजन्यमित्यर्थः । एवं हीति ।

यद्यपि विरोधस्य प्रमाणसिद्धतया सामानाधिकरण्यशङ्कैव नेत्याद्यबाधकतर्को निराकर्तुं शक्यः, तथापि विरुद्धयोरसामानाधिकरण्यं परस्परात्यन्ताभावसमानाधिकरणजातित्वप्रयुक्तमिति शङ्कां वारयितुं विरुद्धोपाधिषु परस्परव्यतिरेकानुमापक[4]त्वाभावापादनमिति ध्येयम् ।

सामान्यविशेषभावानुपपत्तिरूपविपक्ष[5]बाधकतर्काभावेऽपि तर्कान्तरसंभवादन्त्य[6]बाधकतर्को न युक्त इत्याह— नान्त्य इति ।

ननु वृक्षत्वं विना [7]शिंशपात्वमस्त्विति शङ्कायां व्यभिचारसिद्धौ तन्नियतोपाधे[8]रवश्यंभावान्न तर्कान्तरावतार इत्यरुचेराह —अन्यथेति । क्वचित् समानाधिकरणजात्योर्विरोधस्वीकारमात्रात् अन्यत्रापि तच्छङ्कावश्यंभाव इत्यर्थः ।

घटत्वं दण्डजन्यतावच्छेदकं पटत्वं च वेमजन्यतावच्छेदकमिति सर्वसिद्धम् । तथा अश्वत्वादिकमपि हेषादिशब्दविशेषजनकतावच्छेदकम् । तथा च घटत्वपटत्वयोर्विरुद्धयोर्यत्र समावेशस्तस्य[9] घटपटसामग्रीजन्यत्वापत्तिः । तदजन्यत्वेऽति-

---

1. क. 'को' नास्ति ।
2. ख. °बाधकान्तरस्यासंभवात्
3. ख. 'ज्ञान' नास्ति ।
4. क. °त्वाभावप्रतिपादन-
5. क. °बाधकाभावेऽपि
6. ख. °बाधकतर्को
7. क. घ. शिंशपात्वमस्तीति
8. घ. °रवश्यं बाधात्
9. ग. तस्मिन् पटे पटसामग्री-

न्यायशिखामणिः

प्रसक्ततया घटत्वपटत्वयोः कार्यतावच्छेदकत्वानुपपत्तिः। तथा गोत्वाश्वत्वयोरन्यत्र समावेशे शब्दविशेष[1]कारणतानवच्छेदकत्वापत्तिः। ततश्च कार्यकारण-[2]भावव्यवस्थाभङ्ग एव तद्बीजम्। न चैतदुपाधिसंकरेऽपि तुल्यमिति शक्यते वक्तुम्। स्वसमनियतलघ्ववच्छेदकान्तरोपपन्नकार्यताश्रयवृत्तित्वरूपबाधकेन कम्बुग्रीवत्वातान[3]वितानविशेषवत्त्वसास्नावत्त्वा (दिना) [दीनां] कार्यकारणतानवच्छेदकत्वात्। अन्येषां चोपाधीनां [4]कार्याकार्यकारणाकारणवृत्तीनामतिप्रसक्ततयावच्छेदकत्वानवकाशात्।

यद्यपि जन्यत्वं कर्तृजन्यतावच्छेदकं, ध्वंसत्वं च प्रतियोगिजन्यतावच्छेदकम्; तथाप्युक्तप्रकारो न संभवति। ध्वंस एवोभयसमावेशात्। [5]कालत्वाकाशत्वादेरेकव्यक्तिकत्वेन विरुद्धोपाधित्वेऽप्यवच्छेदकत्वाभावात्। [6]आनन्त्यव्यभिचाराभ्यामवच्छेद्याग्रहेऽ[7]प्यवच्छेदकस्वीकारेण एकव्यक्तौ तदनवकाशात्। न च यत्र जातिद्वयमनवच्छेदकं तत्र का गतिरिति वाच्यम्। द्रव्यत्वपृथिवीत्वादेः संयोगपाकजरूप[8]कारणतावच्छेदकत्वात्। [9]सत्तायाश्च जातिमात्रेणाविरोधादेव संकरशङ्कानवकाशात्। तस्मादुपाधिसंकरेऽपि न जातिसंकर इति समाधानमत्र[10] द्रष्टव्यम्।

नरहरिमिश्रास्तु—गोत्वाश्वत्वाद्यनन्तविरुद्धजातीनामसामानाधिकरण्यं तावत् सर्वानुभवसिद्धम्। तच्च बाधकं विना अनुगतधर्मनियम्यम्। स च धर्मः [11]परस्परात्यन्ताभावसमानाधिकरणजातित्वरूप एव। एवं च कुतो जातिसांकर्यम्। न च तथाभूतधर्मत्वमेव लाघवात्तदवच्छेदकमित्युपाधिसांकर्यमपि न स्यादिति वाच्यम्। घटान्यद्रव्यत्वपटान्यद्रव्यत्वादीनामपि सामानाधिकरण्याभावापत्तौ लोष्टस्तम्भादेः घटपटात्मकताप्रसङ्गात्। न च यथा नियामकैकरूपा-

---

1. क. °कारणतावच्छेदकतानापत्तिः।
2. क. °भावभङ्ग एव तद्व्यवस्थाबीजम्।
3. ख. ग. 'वितान' नास्ति
4. ख. कार्यकारणवृत्तीनाम्
5. ख. ग. घ. कालाकाश-
6. ख. अनन्य-
7. ख. घ. °प्यव
8. घ. °कारणतानव-
9. क. सत्तादेश्च
ख. तत्तायाश्च
10. ख. 'अत्र' नास्ति।
11. घ. परस्परात्यन्तसमाना-

किं चैवमप्रमाया अंशे प्रमात्वं न स्यात्, जातेर्व्याप्यवृत्तितानियमात्। न चेष्टापत्तिः। अंशे संवादिनि विसंवादिनि च समूहालम्बने प्रमात्वाप्रमात्वयोरनुभूयमानत्वेन एकशेषस्य कर्तुमशक्यत्वात्। अथ विपर्यय-

---

न्यायशिखामणिः

भावेऽपि परस्परविरुद्धोपा(धि)[धी]नां [1]सामानाधिकरण्यं तथा तदभावेपि तादृशजातीनामप्यस्त्विति वाच्यम्। तत्रानन्यगत्या यथा तथास्तु। इह त्वनुगतधर्मसंभवे तत्त्यागस्याप्रामाणिकत्वात्। तस्मादुपाधिसंकरेऽपि न [2]जातिसंकर इत्याहुः।

तत्तुच्छम्। [3]असामानाधिकरण्यस्योपाधावपि सत्त्वेन तथाभूतजातित्वस्य न्यूनवृत्तितयानवच्छेदकत्वात्। न [4]च जातिगतासामानाधिकरण्ये तदवच्छेदकमिति वाच्यम्। तस्य सामानाधिकरण्याभावरूपस्य प्रत्यधिकरणं भेदाभावात्।

नन्वसमानाधिकरणजातित्वं तन्नियम्यमिति चेत्—किं स्वरूपसिद्ध्यर्थमवच्छेदकम् [5]अनुगतस्यानुगतधर्मनियम्यत्वव्याप्तिबलाद्वा। नाद्यः, प्रमाणादेव स्वरूपसिद्धेः। नान्त्यः, परस्परात्यन्ताभावसमानाधिकरण[6]जातिनियामके व्यभिचारात्। तत्राप्यवच्छेदकान्तराङ्गीकारेऽनवस्थापत्तेः।

किं च असामानाधिकरण्य[7]प्रयोजकात् परस्परात्यन्ताभावसमानाधिकरणधर्मत्वात् [8]जातित्वप्रयोजकाच्च समवेतत्वादिघटितधर्मात् विशिष्टसिद्धेरार्थः समाज इत्यवच्छेदकापेक्षा बाधितैव।

यत्तु घटान्यत्वादावतिप्रसक्तत्वान्नोक्तधर्मस्यासामानाधिकरण्यनियामकत्वमिति। नैतत्सारम्। तत्रापि सामानाधिकरण्याभावसत्त्वात्। न च लोष्टादौ घटान्यत्वपटान्यत्वयोः सत्त्वेन तत्र सामानाधिकरण्यरूपप्रतियोगिसत्त्वात् कथं तदभाव इति वाच्यम्। संयोगात्यन्ताभावे प्रतियोगिसामानाधिकरण्यतदभाववदवच्छेदकभेदेनाविरोधादिति संक्षेपः।

---

1. ग. घ. असामाना-
2. घ जातीयसंकरः
3 ग. सामाना-
4. ख. 'च' नास्ति।
5. क. 'अनुगतस्य...आर्थः समाजः' इति ग्रन्थो नास्ति।
6. ग. °जातित्वे नियामके
7. ग. °प्रयोजकत्वात्
8. क. ख. ग. जातित्वाजातित्व-

स्यांशे न प्रमात्वम्, किं तु स्मृतिवद्यथार्थत्वमेवेति चेत्—तर्हि यथार्थानुभवत्वमेव प्रामाण्यम्, आवश्यकत्वात्। न च तदपीति वक्ष्यते।

अथ यथा भावोऽभावो वा नाव्याप्यवृत्तिरिति नियमं तिरस्कृत्याबाधितानुभवबलात् संयोगतदभावयोरव्याप्यवृत्तित्वं, तथा जातिर्व्याप्यवृत्तिरेवेति व्याप्तिमभिभूयानुभवबलादेव प्रमात्वतदभावयोरव्याप्यवृत्तित्वमस्तु। न च यदव्याप्यवृत्ति तन्न व्याप्यवृत्ति, यच्च व्याप्यवृत्ति न तदव्याप्यवृत्तीति व्याप्तेः प्रमात्वस्य नोभयरूपत्वमिति वाच्यम्। संयोगात्यन्ताभावे व्यभिचारात्। न च तस्याभावद्वयं, मानाभावात्। गुणदोषयोरेकत्र सत्त्वे अव्याप्यवृत्तित्वम्, गुणमात्रसत्त्वे व्याप्यवृत्तित्वमित्यन्यथोपपत्तेश्च। अन्यथा प्रमात्वस्योपाधेरप्यन्ताभावसामानाधिकरण्यं न स्यात् सामान्यत्वात् न स्याच्चोभयरूपत्वमिति।

मैवम्। अवच्छेदकभेदं विना विरुद्धयोरेकत्रासमावेशात् अप्रतीतेश्च। न च विषय एवांशरूपः प्रमात्ववृत्तावच्छेदकः। तद्विषयत्वस्य भ्रमेऽपि सत्त्वात्।

---

प्रकाशः

ननु [1](नानातटत्वे)[नानातारत्वेऽ]प्येकोपाधिवदिहापि संवादिप्रवृत्तिजनकतावच्छेदकत्वमेवोपाधिर्नानाप्रमात्वानुगमकः स्यादित्यस्वरसादाह—किं चेति। व्याप्यवृत्तित्वमुपपादयितुं शङ्कते—विपर्ययस्येति। [2]तर्हीति। [यदि] विपर्ययांशव्यावृत्तं यथार्थत्वम्, तदा स्मृतिव्यावर्तनायानुभवत्वसहितं तदेव प्रामाण्यमस्त्वित्यर्थः। इष्टापत्तिमाशङ्क्याह—न चेति।

---

न्यायशिखामणिः

एकोपाधिवदिति। सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वरूपोपाधिवदित्यर्थः।

---

1. क. 'नाना' नास्ति।
2. क. 'तर्हीति।...न चेति।' इति ग्रन्थो न दृश्यते।

ननु विशेष्यावृत्त्यप्रकारकत्वं विशेष्यावृत्तिप्रकारकत्वं च प्रमात्वतदभावयोर्वृत्ताववच्छेदकमस्तीति चेत्—तर्हि तयोरेव प्रमाप्रमाव्यवहारजनकत्वमस्तु, आवश्यकत्वात् प्रथमोपस्थितत्वाच्च, किं जात्या। न च तदपीति वक्ष्यते। नापि यथार्थागृहीतग्राहित्वं लोकसिद्धप्रमात्वम्, धारावाहिकबुद्ध्यव्याप्तेः। न च प्रत्यक्षस्य वर्तमानार्थग्राहित्वेन स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहकत्वेनागृहीतग्राहित्वं लोकसिद्धम्, अन्यथा एकसमये ज्ञानयौगपद्यप्रसङ्ग इति वाच्यम्।

---

### प्रकाशः

तद्विषयत्वस्येति। शुक्ताविदं रजतमिति भ्रमे पुरोवर्तिधर्मिरूपविषयः प्रमात्ववृत्तावच्छेदको वाच्यः। स च [1]तद्वृत्त्यवच्छेदको न भवति। यत्र हि स एव [2]धर्मी क्वचिदन्यत्रारोप्यते तत्र भ्रमे तद्विषयत्वावच्छेदेनैवाप्रमात्वस्य वृत्तिरित्यर्थः। भट्टलक्षणं निरस्यति—नापीति। प्रथमद्वितीयविशेषणाभ्यां भ्रमस्मृत्योर्व्यवच्छेदः। [3]अन्यथेति। यदि स्थूलकालविशिष्टग्राहित्वं तथा [तदा] तत्कालावच्छिन्नगोचरनानाज्ञानानां यौगपद्यापत्तिरिति भावः।

यद्यपि स्थूलकालोपाधि....अतीन्द्रियमेव [स्थूलकालोपाधीनामप्यतीन्द्रियत्वमेव]। उपनीतभानं [च]क्षणस्यापि सुलभम्। तथापि धारावाहिकस्थले नियमेनोपनायकाभावात् यत्रैव क्षणानां नोपनयस्तत्रैवाव्याप्तितादवस्थ्यमित्यत्र तात्पर्यम्।

---

### न्यायशिखामणिः

ननु भ्रमस्य यदंशे तद्विषयत्वं तदंशे प्रमात्वमिष्टमेव। भ्रमांशे च न तद्विषयत्वमित्यत आह—शुक्ताविति। वस्तुतस्तु रजतत्वप्रकारकत्वमात्रस्य सत्यस्थलीयज्ञानसाधारण्यान्न भ्रमत्वावच्छेदकत्वम्। किं तु तदभाववद्धर्मि[4]विषयकत्वघटितम्। तथा च तद्विषयत्वस्य भ्रमत्वावच्छेदककोटिप्रविष्टत्वेन भ्रमांशेऽपि सत्त्वात् न तत् प्रमात्ववृत्तावच्छेदकम्। यद्यपि तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वस्यावच्छेदकत्वे नोक्तदोषः, तथाप्यावश्यकत्वात्तदेव प्रमाव्यवहारजनकमस्तु किं जात्येति वक्ष्यमाणदूषण एव तात्पर्यम्।

---

1. क. तद्व्यक्त्यवच्छेदको
2. क. धर्मि
3. ख. 'अन्यथेति....एवोपनीतमानम्' इति ग्रन्थो नास्ति।
4. क. °विषयत्व-

क्षणानामतीन्द्रियत्वात् स्थूलोपाधिमादाय वर्तमानत्वग्रहात् स्वरूपसत्क्रमिकक्षणोत्पत्तिकत्वेन ज्ञानायौगपद्यात् ।

---

प्रकाशः

ज्ञानसामग्रीमहिम्नानुपनीतोऽपि स्थूलोपाधिर्भासते न क्षण इति मतेनेदमुक्तमित्यप्याहुः ।

---

न्यायशिखामणिः

ननु प्रत्यक्षानन्तरं [1]वर्तमानतासंदेहापत्तेरेतत्कालवृत्तित्वलक्षणवर्तमानत्वविशिष्टार्थग्राहकत्वमवश्यं वाच्यम् । तच्च स्वाश्रयक्षणभानं विनानुपपन्नं तद्भानमाक्षिपतीत्यभिधाय अन्यथेत्यादिना विपक्षे बाधकमुक्तम् । तत्र क्षणविशिष्टार्थग्राहकत्वाभावस्यान्यथाशब्दार्थत्वे [2]आपाद्यासंगतिरित्यत आह—[3]यदि स्थूलकालेति । [4]तथा च स्थूलकालविशिष्टग्राहकत्वेनापि प्रत्यक्षस्य वर्तमानार्थ[5]ग्राहकत्वमुपपन्नमिति भावः । यौगपद्येति । ज्ञायमानैककालोत्पत्तिकत्वं हि यौगपद्यम् । तच्च स्थूलकालभाने ज्ञानानां दुर्वारम् । क्षणभाने तु ज्ञायमानतत्तत्क्षणे एकैकस्यैव ज्ञानस्योत्पत्तेर्न यौगपद्यप्रसङ्ग इति भावः ।

किं घटादेर्वर्तमानत्वग्रहानुपपत्त्या क्षणभानं, ज्ञानायौगपद्यानुपपत्त्या वा । तत्राद्यं निरस्तं [6]क्षणानामित्यादिना । तत्र शङ्कते—यद्यपीति । अत्रातीन्द्रियपदेन प्रत्यक्षायोग्यत्वं विवक्षितम्, अनुपनीतत्वं वा । तत्राद्यं निराकृत्य द्वितीयं निराकरोति—(उपनीतत्व) - [उपनीतभान] मिति । न चोपनयेन भानपर्यन्तमुपनीयमानः [7]प्रहरादिस्थूलोपाधिरेवावतिष्ठत इति तस्यैवोपनयः संभवति । क्षणोपाधेस्तु [8]आशुतरविनाशित्वेनोपनयपर्यन्तमनवस्थितेस्तदसंभव इति वाच्यम् । उपनीतप्रत्यक्षे विषयस्याहेतुत्वेनातीतस्यापि क्षणस्योपनये विरोधाभावात् । सामान्यप्रत्यासत्त्या क्षणोऽयं क्षणपूर्ववर्तीत्य[9]नुमानाद्वा उपनीतानां [10]क्षणानामुपस्थितिसमयेऽवस्थितेश्चेति भावः ।

---

1. क. वर्तमानसंदेहता-
2. ग, घ. आपाद्यसंपत्ति-
3. ख. यदिति ।
   ग, घ. यदीति ।
4. क. 'तथा च' नास्ति ।
5. क. °ग्राहित्वोपपत्तेरिति ।
6. क. क्षणमित्यादिना ।
7. ख. प्रहारादि-
8. ख. ग. घ. अत्यन्ताशुविनाशि-
9. ख. °नुमानाद्योपनीतानां
   घ. °नुमानोपनीतानां
10. क. 'क्षणानां' नास्ति ।

न च स्तम्भादिषु प्रतिक्षणं गुणकर्माद्युत्पत्तिरस्ति, येन तदादायागृहीतग्राहित्वं स्यात् । वेदात् क्रमोत्पन्नवेदार्थगोचरधारावाहिकबुद्ध्यव्याप्तेश्च ।

प्रकाशः

[1]क्षणाग्राहित्वेऽप्ययौगपद्यमुपपादयति–[2]स्वरूपसदिति । तत्तत्क्षणमादायैव भिन्नकालत्वात् ज्ञानानां न यौगपद्यमित्यर्थः । यत्तु—तत्तत्क्षणानां तत्तज्ज्ञानाधिकरणत्वात् तत्तत्क्रमात्तत्क्रम इति ।

तन्न । क्षणानामकारणत्वात् । कालस्य हि अधिकरणत्वेनैव हेतुत्वम् । [3]अधिकरणस्वरूपस्य न पूर्ववर्तित्वम्, पूर्वक्षणस्य च [4]नाधिकरणत्वमित्युभयरूपत्वाभावात् स्थूलोपाधेरेव हेतुत्वात् । वेदादिति । [5]शाब्दज्ञाने तत्तत्क्षणभानासंभवादिति भावः ।

न्यायशिखामणिः

[6]ननु बहिर्द्रव्यप्रत्यक्षतायां महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकमित्यभ्रे स्फुटम् । तथा च नीरूपस्थूलोपाधिः कथं प्रत्यक्षे प्रतीयेत । परमतेन तदभ्युपगमे किमपराद्धं सूक्ष्मोपाधिनेत्यस्वरसं सूचयति—आहुरिति ।

ज्ञानायौगपद्यानुपपत्त्या क्षणभानमित्येतत् स्वरूपेत्यत्र निराकृतम् । तदयुक्तम् । ज्ञायमानस्थूलकालोत्पत्तिकत्वेन दोषतादवस्थ्यादित्याशङ्क्य, ज्ञायमानेति विशेषणोपादाने गौरवात् एककालोत्पत्तिकत्वमेव यौगपद्यम् । तत्र च तदापादानं स्थूलकालोपाधिमादायेष्टं [7]सूक्ष्माकालोपाधिमादाय तु अशक्यमित्याह–तत्तदिति ।

[8]शुचिकरमतमाह—यत्त्विति । एतन्मते एककालोत्पत्तिकत्वं न यौगपद्यं, किं त्वेककालजन्यत्वम् । तथा च स्थूलोपाधेरन्वयव्यभिचारेणाहेतुत्वात् [9]तद्भानेऽपि न यौगपद्यमिति भावः । तत्तत्क्षणानामिति । तत्तत्पूर्वक्षणानामित्यर्थः ।

किं क्षणानां क्षणत्वेन हेतुता उत कालत्वेनाधिकरणत्वेन वा । आद्य आह—क्षणानामिति । क्षणत्वेनेति शेषः । तथा हेतुत्वे मानाभावादिति भावः ।

1. क. क्षणाग्राहकत्वे
2. क. स्वरूपेति ।
3. क. अधिकरणक्षणस्य
4. क. नाधिकरणक्षणत्व-
5. क. शब्दज्ञाने
6. क. 'ननु' नास्ति
7. ख. ग. घ. सूक्ष्मं चादायाशक्य-
8. ख. चिकरणमत-
9. क. 'तद्' नास्ति ।

नापि यथार्थानुभवत्वम्, ज्ञाने घटत्वादिना यथाशब्दार्थसादृश्याभावात्। सादृश्यमात्रस्य भ्रमेऽपि गतत्वात्। न च गुणजन्यानुभवत्वं [गुणजन्यत्वम्], दोषाभावजन्यानुभवत्वं वा। तयोरननुगतत्वात् प्रमाप्रमानिरूप्यत्वाच्च। नाप्यबाधितानुभवत्वम्। बाधस्य विपरीतप्रमात्वात्।

प्रकाशः

नापीति। यथाशब्दार्थः सादृश्यम्। तच्च ज्ञानस्य घटत्वादिना यथाकथंचिद्वा। आद्ये असंभवमाह – ज्ञान इति। अन्त्येऽतिव्याप्तिमाह—सादृश्येति। न चेति। गुणजन्यानुभवत्वमित्यर्थः। प्रमेति। प्रमासाधारणकारणत्वस्य गुणत्वात्। तथा चान्योन्याश्रय इति भावः। बाधस्येति। विपरीतप्रमा बाध इति तल्लक्षणात्। तथा चात्माश्रय इति भावः। जनकत्वं यदि कार्योपधानं

न्यायशिखामणिः

द्वितीये—कालस्येति। अधिकरणत्वेनैवेति। न तु कालत्वेनेत्यर्थः। तत्र मानाभावात्। किं चान्वयव्यतिरेकाभ्यां भूतलादिदेशस्य घटादिकार्यहेतुत्वम्। तत्र न देशत्वं कारणतावच्छेदकं, घटत्वादिकं च न कार्यतावच्छेदकम्। किं तु लाघवादधिकरणत्वं कार्यत्वं च [1]तथा। तथा च कालोऽप्यधिकरणत्वेन हेतुरिति भावः।

अन्त्येऽ[2]प्यधिकरणस्य [3]तथा हेतुत्वं पूर्वक्षणस्य वा। तत्राद्यं निराकृत्य द्वितीयं निराकरोति—पूर्वक्षणस्येति स्थूलोपाधेरिति। न चान्वयव्यभिचारः। कारणान्तरविलम्बेन तदा कार्यविलम्बात्। तथा च स्थूलोपाधिमादाय यौगपद्यं स्यादिति भावः।

ननु वेदजन्यज्ञानेऽप्युपनीतक्षणो भासतामित्यत आह—शाब्देति। [4]पदवाक्यार्थभिन्नस्य तत्र भानप्रतिषेधादिति भावः। एवं च यद्यपि लौकिकवाक्य[5]जन्यज्ञानधारायामपि अव्याप्तिरेव, तथाप्यनुवादकत्वेन तत्प्रामाण्ये कश्चिद्विप्रतिपद्येतापीति निस्संदिग्धाव्याप्त्यभिधानमिति ध्येयम्।

1. क. ख. ग. 'तथा' नास्ति
2. क. ख. घ. ऽप्यधिकरणक्षणस्य
3. ग. 'तथा हेतुत्वं' नास्ति।
4. ग. पदवाक्यभिन्नस्य
5. ग. 'जन्यज्ञान' नास्ति।

नापि संवाद्यनुभवत्वम् । ज्ञानान्तरेण तथोल्लिख्यमानत्वस्य संवादित्वस्य भ्रमसाधारणत्वात् । नापि समर्थप्रवृत्तिजनकानुभवत्वम् । उपेक्षाप्रमाया-मव्याप्तेः । तद्योग्यतायाः प्रमानिरूप्यत्वात् । नापि तत्त्वानुभवत्वम्, अवस्तु-नोऽभानात् । भाने वा भ्रमसाधारण्यात् ।

नापि विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिधर्मप्रकारकानुभवत्वम् संयो-गादिप्रमाव्याप्तेः । अभावे ऽव्याप्यवृत्तित्वविशेषणे संयोगभ्रमेऽतिव्याप्तिः ।

---

**प्रकाशः**

तत्राह—उपेक्षेति । यदि स्वरूपयोग्यत्वं तत्राह—योग्यताया इति । प्रमात्वस्यैव समर्थप्रवृत्ति[1]जनकतावच्छेदकत्वादित्यर्थः । तत्त्वशब्दो वस्तुवचनः । तथा च [2]न्यायनयमाश्रित्याह—अवस्तुन इति । हेत्वभावादिति भावः । सदुपरागेणा-

---

**न्यायशिखामणिः**

गुणजन्यत्वस्य ध्वंससाधारण्यादाह—गुणेति । प्रमासाधारणेति । [3]न तु गुणत्वादिक जातिः [4]संकरादिति भावः । ननु ग्राह्याभावो बाधः, न तु तत्प्रमेत्यनुमाने स्फुटमित्याशङ्क्य मणिकृन्मतेनैतदित्याह—विपरीतेति । वस्तु-वचन इति । न त्वबाधितत्वादि[5]वचनः, येन पौनरुक्त्यं स्यादिति भावः ।

किं वस्तुमात्रविषयत्वं तत्र विवक्षितं वस्तुविषयत्वं वा । तत्राद्येऽवस्तुनो-ऽभानात् व्यावर्त्याप्रसिद्धिरित्युक्तमयुक्तम् । 'अत्यन्तासत्यपि ह्यर्थे' इति वदतां भट्टाचार्याणां मते असद्भानाङ्गीकारात् टीकाकारमते प्रत्यक्षेऽपि तदङ्गीकारा-च्चेत्यत आह—न्यायेति । न्यायैकदेशिगङ्गेशादिमत इत्यर्थः । नन्वन्त्यं निराकृतं भाने वेत्यत्र । तदसंगतम् । असंनिहितस्य प्रत्यक्षज्ञानायोगात्, असत्ख्यात्या-पत्तेश्च । अत एव टीकाकारमतेनेदमित्यप्ययुक्तम् । निरुपपत्तिकत्वेन तन्मतस्याप्य-नुपादेयत्वादित्यत आह—सदिति । असत्ख्यातौ तु सदनपेक्षमेवासद्भासत इति वैषम्यमिति भावः ।

---

1. क. ॰जनकयोग्यतावच्छेदकत्वात्
2. ख. न्यायमतम्
3. ख. ननु
4. ख. संकरादित्युक्तत्वादिति
5. ख. ॰वचनम्

तदत्यन्ताभावस्यैकत्वात् । नापि विशेष्यवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकधर्माप्रकारकानुभवत्वम्, अव्याप्यवृत्तिप्रमानुपग्रहात् । मूले वृक्षः कपिसंयोगवान्नाग्रे इत्यबाधितानुभवात् संयोगवदन्योन्याभावस्याव्याप्यवृत्तित्वात् । भेदाभेद एवं स्यादिति चेत्---अनुभवमुपालम्भस्व, यद्बलादवच्छेदभेदेनात्यन्ताभाववदन्योन्याभावस्याप्यव्याप्यवृत्तित्वमुपेयम् । अत एव पक्के इदानीं न श्याम इति धीः समयभेदादविरुद्धा तत्रैव तदन्योन्याभावमवलम्बते ।

---

**प्रकाशः**

सदपि दोषमहिम्ना भासत इति टीकाकारमतमाश्रित्याह---[1]भाने वेति । भ्रमेऽपि धर्म्यादेर्वस्तुन एव भानादित्यर्थः । इदन्त्वमादाय भ्रमेऽतिव्याप्तौ सत्यामेव दोषान्तरमाह---संयोगेति ।

तदत्यन्ताभावस्येति । एतच्च यथाश्रुते बोध्यम् । यदि [2]च प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणम्, तदा [3]निर्विकल्पके

---

**न्यायशिखामणिः**

[4]नन्ववस्तुभानाङ्गीकारमात्रात् कथं वस्तुविषयत्वस्य तत्रातिव्याप्ति[5]रित्यत आह-[6]भ्रमेऽपीति । वस्तुन एवेति । एवकारोऽप्यर्थकः । यद्वा ननु पुरोवर्त्यपि रजतात्मकत्वेनासदेवेत्याशङ्क्य तथापीदमात्मकतया सदेवेत्याह---भ्रमेऽपीति । ननु संयोगादिप्रमायास्तादृशेदंत्वप्रकारकत्वान्नाव्याप्तिरित्याशङ्क्य स्वयं यथाश्रुते दोषमाह---इदन्त्वमिति । संयोगमात्रप्रकारकप्रमायामव्याप्तिरपि बोध्या । यदि तादृशाभावप्रतियोगि[7]धर्माप्रकारकत्वं विवक्षितम्, तदा मूलोक्तदूषणमित्याह---दोषान्तरमिति । एतच्चोपलक्षणम् । घटत्वादेरपि यत्किंचिद्विशेष्यनिष्ठात्यन्ताभावप्रतियोगितया तत्प्रमायामव्याप्तिः । प्रकृतज्ञान[8]विशेष्यत्वविवक्षायां रूपस्यापि

---

1. क. माने चेति ।
2. क. 'च' नास्ति ।
3. ख. 'निर्विकल्पके निर्विशेष्ये,' इति नास्ति ।
4. ख. ननु वस्तु-
5. क. °रित्याशङ्क्याह ख. °रित्याह
6. क. 'भ्रमेऽपीति...प्रकारकत्वान्नाव्याप्तिः' इति ग्रन्थस्त्रुटितः ।
7. ग. °धर्मप्रकारकत्वम्
8. ग. °विशेष्यकत्व-

नापि विशेष्यावृत्त्यप्रकारकानुभवत्वम् । एकैकविशेष्यावृत्तिनानाप्रकारकसमूहालम्बनाव्याप्तेः । न च प्रकारस्यैकविशेष्यवृत्तितया न विशेष्यावृत्तित्वमिति वाच्यम् । प्रमाप्रमारूपसमूहालम्बनातिव्याप्तेः । न च यावद्विशेष्यावृत्तित्वं विवक्षितम् । एकैकविशेष्यवृत्तेर्यावद्विशेष्यावृत्तित्वेन समूहालम्बनाव्याप्तेः । एकविशेष्यके यावदर्थाभावाच्च ।

अथ विषयताया आश्रयो विशेष्यः, ज्ञानं तत्प्रतियोगि । भ्रमे च शुक्तिवृत्तिर्विषयता व्यधिकरणेन रजतत्वेनावच्छिद्यते । रजतवृत्तिस्तु समा-

---

प्रकाशः

निर्विशेष्येऽव्याप्तिर्बोध्येत्यर्थः । अन्योन्याभावस्याव्याप्यवृत्तित्वमालम्ब्य परिहरति—[1]अव्याप्येति । अवच्छेदेति । तथा चैकावच्छेदेन [2]भेदाभेदौ विरुद्धौ न त्वन्यथापीति भावः ।

---

न्यायशिखामणिः

विशेष्यत्वेन दोषतादवस्थ्यम् । किं च लोहितः स्फटिक इति साक्षात्संबन्धावगाहि[3]ज्ञानेऽतिव्याप्तिः । लोहितत्वस्य परंपरासंबन्धेन तत्र वृत्ते[4]रित्यपि दोषो बोध्यः । प्रतियोगीति । इदं चोपलक्षणम् । ग्राह्यसंबन्धावच्छिन्नत्वमप्यभावविशेषणम् । तच्च ग्राह्यसंबन्धारोपजन्यज्ञानविषयत्वम् । तेन लोहितभ्रमे नातिव्याप्तिः ।

ननु विषयताश्रय इत्यादेर्लक्षणाप्रतिपादकत्वात्[5] प्रकृतासंगतिरित्यत आह—लक्षणान्तरेति । ननु विषयतायाः प्रतिविशेष्यं भेदाभ्युपगमात् क्वचिदेकत्वाभिधानमयुक्तमित्यत आह—पदार्थान्तरेति । ननु विशेष्यस्य घटादेर्ज्ञानं प्रति विशेषणत्वाभावेन तद्वृत्तिविषयतायाः कथं विशेषणतारूपत्वमित्याशङ्क्य परेत्यादिना संशयात्तत्र विशेषणत्वं साधितमयुक्तम् । तस्याप्रमाणत्वादित्यत आह—प्रमाणमिति । संशयानुपपत्तिरूपमिति शेषः ।

---

1. ख. व्याप्यवृत्तीति
2. क. भेदाभेदो विरुद्धः
3. ख. °ज्ञानेऽव्याप्तिः ।
4. ख. °रित्यपरितोषो बोध्यः ।
5. ख. °लक्षणाप्रतिबन्धकत्वात्

नाधिकरणेन रजतत्वेन। विषयता च विषये न ज्ञानाहिता ज्ञाततारूपा विवक्षिता। अपसिद्धान्तादसिद्धेः, अतीतानागतप्रमायां तदभावाच्च। किं तु ज्ञानस्य विषये विशेषणताविशेषः कश्चित्। परज्ञानं ज्ञानत्वेन तद्विषयं च घटत्वेन जानतो घटमयं जानाति न वेतिसंशयाद्विषयज्ञानस्वरूपातिरिक्तस्य

---

प्रकाशः

लक्षणान्तरकरणाय भूमिकामारचयति—अथेति। कश्चिदिति। पदार्थान्तररूप इत्यर्थः। एकदेशिमतत्वाच्च नापसिद्धान्त इति भावः। प्रमाणमाह—परेति।

यदि विशेषणता विषयता (तदज्ञान॰य)[तदा ज्ञानस्य] आत्मनि स्वाभावे च [1]या विशेषणता सापि विषयता स्यादित्यत आह—स्वाश्रयेति। प्रमाणान्तरमाह—अन्यथेति। [2]तथा च विशेषणताविशेष एव तृतीयार्थ इत्यर्थः। ननु

---

न्यायशिखामणिः

ननूक्तप्रमाणाद्विशेष्ये विशेषणतासिद्धौ स्वाश्रयेत्यादि व्यर्थम्। न च [3]विशेषासिद्ध्यर्थं तदिति युक्तम्। ज्ञानोल्लिख्यमानविशेषणवृत्तिविशेषणतापेक्षया तद्भिन्नविशेष्यवृत्तेस्तस्याः विलक्षणत्वेन विशेषपदप्रयोगोपपत्तेरित्याशङ्क्य, प्रकृतज्ञानोल्लिख्यमान[4]विशेषणवृत्ति[5]विशेषणताभिन्नविषयवृत्तित्वेन विशेषणताया वैलक्षण्यं विवक्षितम्। तत्र विषयपदव्यावर्त्यान्तरत्वान्न तद्वैयर्थ्यमित्याह—यदि विशेषणतेति। प्रकृतज्ञानोल्लिख्यमानविशेषणवृत्तिविशेषणताभिन्नविशेषणता यदि विषयता तदेत्यर्थः। प्रमाणान्तरमिति। यद्यपि घटत्वादिवृत्ति[6]प्रकारत्वनामकविशेषणतायामेवेदं प्रमाणं, न तु प्रकृतविशेषणतायाम्; तथापि प्रकृतज्ञानोल्लिख्यमानविशेषणवृत्तिविशेषणताभिन्नपदव्यावर्त्यविशेषणतासिद्धिद्वारा तादृशविशेषणता साधितेत्यभिप्रेत्य प्रमाणान्तरमित्युक्तमिति द्रष्टव्यम्।

---

1. ख. या विशेषणतया विशेषणं सापि
2. क. यथा च
3. ख. विशेषणविष्यर्थम्
   ग. विशेष्यसिद्ध्यर्थम्
4. ख. ॰विशेषणावृत्ति-
5. ग. ॰विशेषणतापेक्षया तद्भिन्नविशेष्यवृत्तित्वेन
6. ख. ॰प्रकारकत्वनामक-

स्वाश्रयस्वाभावादिविशेषणताविशेषस्यावश्यं स्वीकारात् । अन्यथा घटत्वेन ज्ञातोऽर्थ इति तृतीयार्थासंभवः । प्रकारत्वमपि विषयस्य ज्ञाने विशेषणताविशेष एव, न तु विषयत्वमतिप्रसङ्गात् ।

एवं च विषयतासमानाधिकरणप्रकारकानुभवः, प्रकारसमानाधिकरणविषयताप्रतियोग्यनुभवो वा स्वसमानाधिकरणधर्मप्रकारकविषयताप्रतियोग्यनुभवो वा स्वसमानाधिकरणधर्मावच्छिन्नविषयताप्रतियोग्यनुभवो वा प्रमेति चेत्—न ।

प्रकाशः

प्रकारत्वमेव [1]तृतीयार्थः स्यादित्यत आह—प्रकारत्वमपीति । तथा च प्रकारत्वस्यापि तृतीयार्थत्वे सिद्धो विशेषणताविशेष इत्यर्थः । नत्विति । न हि [2]विषयतामात्रं पुरस्कृत्य तृतीया । अन्यथा घटेन [3]ज्ञात इत्यपि स्यादित्यर्थः ।

एवं सति [4]यत् सिद्धं तदाह—एवं चेति । स्वेति । स्वपदं विषयतापरम् । न च प्रकारत्वमपीत्यनेन विशेषणता[5]विशेष एव प्रकारत्वमित्युक्तम् । संप्रति सैव

न्यायशिखामणिः

ननु करणत्वादेरपि तृतीयार्थत्वेन स्मरणात् तदादाय तृतीया स्यादेवेत्याशङ्क्य, अन्यत्र तत्संभवेऽपि घटत्वस्य घटं प्रति तदनुपपत्तेः [6]प्रकारत्वनामकविशेषणताविशेष एव प्रकृते तदर्थ इत्याह—तथा चेति । आशयमविद्वान् शङ्कते—नन्विति ।

[7]प्रकारत्वमेवेति । तच्च विशेषणवृत्तीति न त्वदभिमतविशेष्यवृत्तिविशेषणतासिद्धिरित्याशयः । ननु ज्ञाने विषयस्य घटत्वादेर्यत् प्रकार(क)त्वं तदपि प्रकृतज्ञानाविषयस्वाभावादिवृत्तिविशेषणताविलक्षणत्वात् भवतु विशेषणताविशेषः ततः किमित्यत आह—तथा चेति । व्यावर्त्यविशेषणतासिद्धौ तादृशविशेषणतासिद्धिरित्यर्थः ।

1. क. तृतीया स्यात्
2. ख. विशेषणतामात्रं
3. ख. ज्ञातः स इत्यपि
4. क. यथा
5. ख. ०विषय एव
6. ख. ०प्रकारकत्वनामक-
7. ख. प्रकारकत्वमेवेति ।

निर्विकल्पकाव्याप्तेः, विषयतासमानाधिकरणेदन्त्वप्रकारकभ्रमस्यापि प्रमात्वप्रसङ्गाच्च । भ्रमस्तत्रांशे प्रमेवेति चेत्—तर्हि अनुभवत्वमेव प्रमात्वम्, व्यर्थमधिकम् । अनुभव एव क्वचिदंशे प्रमाप्रमा चेति चेत्—न । उक्तलक्षणे तादृशालाभात् ।

---

**प्रकाशः**

[1]सप्रकारिका उच्यत इति विरोध इति वाच्यम् । अत्र प्रकारशब्दस्य निरूपकवाचकत्वादित्याहुः[2] ।

**निर्विकल्पकेति** । तस्य निष्प्रकारकतया प्रकारगर्भलक्षणानां तत्राव्याप्तिरित्यर्थः । गूढाभिसन्धिर्दूषयति—**तर्हीति** । अनुभवत्वमप्रमांशेऽतिव्याप्तमिति न लक्षणीकृतमित्याह—**अनुभव एवेति** । अभिसन्धिमुद्घाटयति—**उक्तेति** ।

---

**न्यायशिखामणिः**

ननु स्वपदस्य प्रकृतानुभवपरत्वे घटत्वादेस्तत्सामानाधिकरण्याभावात् तत्प्रमायामव्याप्तिः । नित्यत्वानुभवयोरात्मवृत्तितया घटनित्यत्वभ्रमे [3]चातिव्याप्तिरित्यत आह—**स्वपदमिति** । **सैवेति** । तथा च विरोध इति भावः । ननु [4]प्रकारनिरूप्या प्रकारत्वाख्या विशेषणता । सा च न [5]लक्षणनिविष्टविषयतापदनिर्देश्या । घटत्वादेस्तत्सामानाधिकरण्याभावेन तत्प्रमायामव्याप्तेः । किं तु विशेष्यवृत्तिविशेषणता, सा च घटत्वादिप्रकारिकापि न तन्निरूप्या । एतन्मते [6]विषयताया एव सप्रकारकत्वाभ्युपगमात् विषयताघटितपरंपरासंबन्धेन ज्ञाने सप्रकारकत्वोपपत्तावुभयता तत्कल्पने [7]गौरवात् । तथा च यथाश्रुत एव न विरोध इत्यस्वरसं सूचयति—**आहुरिति** ।

चतुर्थलक्षणस्य निर्विकल्पकेऽपि सत्त्वादाह—**प्रकारगर्भेति** । वस्तुतो विषयताश्रयो विशेष्य इत्युक्तत्वेन विषयताविरहादेव तत्र सर्वलक्षणानामव्याप्ति-

---

1. ख. सप्रकारकेत्युच्यते
2. ख. °दिति भावः ।
3. ग. चाव्याप्ति-
4. ख. प्रकारकनि-
5. ख. लक्षणानिविष्ट-
6. क. °विशेष्यतायाः
7. ख. अतिगौरवात्

अथ स्वव्यधिकरणप्रकारानवच्छिन्नविषयताप्रतियोग्यनुभवः प्रमा। समूहालम्बने च प्रतिविशेष्यं विषयताभेदादेकवृत्तिर्विषयता नापरवृत्तिनावच्छिद्यते। अतो नाव्याप्तिरिति चेत्— न।

भ्रमांशप्रमायामव्याप्तेः। न हि या विषयता व्यधिकरणधर्मेणावच्छिद्यते सा तदनवच्छिन्ना, विरोधात्। नापि प्रकारव्यधिकरणविषयत्वाप्रतियोग्यनुभवः प्रमा। प्रकारव्यधिकरणविषयताप्रतियोगिनि तदप्रतियोगित्वस्याभावेन भ्रमांशप्रमाव्याप्तेः। नापि स्वव्यधिकरणधर्मावच्छिन्नविषयत्वाप्रतियोग्यनुभवः, स्वाधिकरणावृत्त्यप्रकारकविषयताप्रतियोग्यनुभवो वा

---

प्रकाशः

उक्तलक्षणेनापि [1]भ्रमव्यावृत्तेरसंभवादित्यर्थः। यद्यपि भ्रमांशव्यावृत्तिः संभवत्येव, प्रमांशव्यावृत्तिरनिष्टैव, अन्यथा सिद्धान्तेऽप्यगतेः। तथापि विषयताया निराकरिष्यमाणत्वादित्यत्र तात्पर्यम्। अथेति। अत्र धर्मत्वमविवक्षितम्। तेनाकाशवदिदमिति ज्ञाने [2]नाव्याप्तिः।

ननु स्वव्यधिकरणत्वं विषयताधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम्, न तु तदनधिकरणाधिकरणत्वम्। प्रमेयत्वप्रकारकविषयतानधिकरणाप्रसिद्ध्या प्रमेयमिति ज्ञानेऽव्याप्त्यापत्तेः। तथा च घटपटाविति समूहालम्बने एकैव विषयता घटपटाश्रिता विषयताधिकरणपटनिष्ठात्यन्ताभावप्रतियोगिघटत्वावच्छिन्ना चेति तदव्याप्ति-

---

न्यायशिखामणिः

र्बोध्या। न तु निर्विकल्पकं न संग्राह्यमित्यरुचेर्दोषान्तरमुक्तं मूल इति द्रष्टव्यम्। नन्वत्र वैयधिकरण्यं हि तदनधिकरणाधिकरणत्वम्। तथा च विषयतैक्येऽपि समूहालम्बनाव्याप्त्यभावेन तन्निरासाय विषयताभेदाश्रयणं मुधेत्यत आह— नन्विति।

ननु सर्वांशप्रमा लक्ष्यत्वेनाभिमतेति तदव्याप्तिर्न दोष इत्यत आह— एतच्चेति। यद्यप्याकाशस्यावृत्ति[3]पदार्थत्वान्नावच्छेदकत्वम्। तथापि ग्राह्य-

---

1. क. भ्रमस्य निवृत्त-
2. क. नातिव्याप्तिः।
3. ख. ॰पदार्थानवच्छेदकत्वम्

प्रमा, तत एव। भ्रमे विषयतायाः स्वव्यधिकरणप्रकारावच्छिन्नत्वात् स्वाधिकरणावृत्तिप्रकारकत्वाच्च। नापि स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकधर्मानवच्छिन्नविषयताप्रतियोग्यनुभवः प्रमा। भ्रमांशप्रमाण्याप्तेः। अन्योन्याभावस्याव्याप्यवृत्तित्वेनाव्याप्यवृत्तिप्रमायामव्याप्तेश्च।

यत्तु प्रमात्वाप्रमात्वयोर्विरोध एव भ्रमो न प्रमेति, तत्तुच्छम्। अंशभेदमादायोभयस्यानुभवात्। अन्यथा भ्रमस्योभयबहिर्भावापत्तेः।

एतेन स्वव्यधिकरणप्रकारकं ज्ञानं भ्रमस्तदन्योऽनुभवः प्रमा, भ्रमो धर्म्यंशे न प्रमेति निरस्तम्।

नापि प्रकाराधिकरणावृत्त्यप्रकारकविषयताप्रतियोग्यनुभवः, प्रकारानधिकरणावृत्तिविषयताप्रतियोग्यनुभवो वा प्रमा। प्रमेयमिदमिति ज्ञाने प्रकारानधिकरणस्याप्रसिद्धेः।

---

प्रकाशः

रित्यत आह—समूहेति। भ्रमांशेति। एतच्चोपलक्षणम्। आकाशे शब्द इत्यदावव्याप्तिर्द्रष्टव्या। तत एवेति। भ्रमांशप्रमाया[1]मव्याप्तेरेवेत्यर्थः।

अन्यथेति। यद्यप्रमात्वविरोधाद्भ्रमे प्रमात्वं न स्यात् (तथा)[तदा]-प्रमात्वविरोधात् भ्रमेऽप्रमात्वमपि न स्यादित्युभयबहिर्भावः स्यात्। तथा चाननुभव

---

न्यायशिखामणिः

संबन्धातिरिक्तोऽवच्छेदकत्वप्रयोजकः कश्चित्संबन्धोऽस्त्येव। अत एव शुक्तिवृत्तिविषयताव्यधिकरणेन रजतत्वेनावच्छिद्यत इत्युक्तम्, न तु प्रमात्वाप्रमात्वयोरनुभूयमानत्वात् तदुभयमस्तीत्युक्तम्।

तत्रोभयाभावस्यान्यथाशब्दार्थत्वे साध्याविशेष इत्यत आह—(यदिति) [यदीति]। द्वितीयलक्षण इति। यद्यपि प्रथमलक्षणमपि प्रकारानधिकरणत्वगर्भमेव विवक्षणीयमिति वक्ष्यते। तथापि यथाश्रुताभिप्रायेणेदमिति ध्येयम्।

ननु रजतभ्रमस्य रजतत्व[2]रूपस्वप्रकारानधिकरणशुक्तिवृत्तिविषयताप्रतियोगित्वात् द्वितीयलक्षणस्य तत्र नातिव्याप्तिरित्यत आह—प्रथमेति। ननु

---

1. क. °मव्याप्तिरेवेत्यर्थः 2. ख. रूपस्य प्रकारा-

किं च रजतत्वप्रकारकविषयताया रजतवृत्तित्वनियमात् रजतत्वावच्छिन्नैव रजतभ्रमे रजतवृत्तिविषयता। अतो रजतभ्रमोऽपि रजते प्रमा स्यात्।

अथ रजतपुरोवर्तिनोरेकैव विषयता। सा च प्रकारानधिकरणवृत्तिधर्मावच्छिन्नेति चेत्—तर्हि धर्म्यंशेऽपि तज्ज्ञानं प्रमा न स्यात्, व्यधिकरणप्रकारकत्वस्य तुल्यत्वात्। धर्म्यंशे तु प्रमात्वे रजतेऽपि प्रमा स्यात्।

---

**प्रकाशः**

इति विनिगमनाविरहादुभयात्मकत्वमेव [1]न स्यादित्यर्थः। द्वितीयलक्षणे दोषमाह—**प्रमेयमिति**। प्रथमलक्षणेऽपि दोषमाह—**किं चेति**।

**रजतभ्रमोऽपीति**। रजतत्वप्रकारकरजतमात्रवृत्तिविषयतामादाय तत्रोक्तलक्षणसत्त्वादित्यर्थः। रजतभ्रमे [2]रजतमात्रवृत्तिर्न विषयतेति नोक्तदोष इत्याशङ्कते—

---

**न्यायशिखामणिः**

विशेष्यमात्रवृत्तिविषयतायाः प्रकाराधिकरणरजतावृत्तितया प्रथमलक्षणस्यापि नातिव्याप्तिः। न च [3]विषयमात्रावृत्तिविषयतापक्षे रजतेऽप्यस्ति विषयतेति तादृशविषयत्वाप्रतियोगित्वं भ्रमे संभवतीति वाच्यम्। प्रतिविषयं विषयताभेदेन प्रकारतद्वैशिष्ट्यवृत्तिविषयतयोः प्रकाराधिकरणावृत्तितया तत्र [4]लक्षणाभावतादवस्थ्यादित्याशङ्कां वारयितुं मूले रजतत्वप्रकारकेत्यादिना प्रकारभेदेन विषयताभेदसाधनम्। तथा च रजतपुरोवर्तिनोरेव विषयता न प्रकारतद्वैशिष्ट्ययोरिति भ्रमेऽतिव्याप्तिरिति भावः।

नन्वेवं ज्ञानमात्रस्य [5]स्वप्रकारानधिकरणवृत्तिविषयत्वप्रतियोगितया तदवृत्तिविषयत्वप्रतियोगित्वाप्रसिद्धौ तद्घटितलक्षणाप्रसिद्धिरेव दोषः स्यादित्याशङ्क्य, नञ्व्यत्यासेन स्वप्रकारानधिकरणावृत्तिविषयत्वप्रतियोगित्वं विवक्षितम्। तच्च

---

1. ख. तस्येत्यर्थः
2. ख. रजतमात्रावृत्तिः
3. ग. विषयमात्रवृत्ति-
4. क. लक्षणाभावादित्याशङ्कां
5. ख. स्वप्रकाराधिकरण-
   घ. स्वप्रकाराधिकरणवृत्तिविषयत्वप्रतियोगित्वाप्रसिद्धौ

प्रकाशः

अथेति । धर्म्यंशे प्रमात्व इति । [1]रजतपुरोवर्तिनोः प्रकारभेदेन विषयताभेद-स्वीकारेण धर्म्यंशे प्रमात्वस्वीकारे रजतांशेऽपि तत्स्वीकारापत्तेः । धर्म्यंशस्येदंत्व-[2]मात्रप्रकारावच्छिन्नविषयताश्रयत्ववत्तस्यापि स्ववृत्तिरजतत्वमात्रावच्छिन्नविषयता-

---

न्यायशिखामणिः

रजतभ्रमेऽप्यस्तीत्याह—रजतत्वप्रकारकेति । रजत(त्व)मात्रेति । रजतत्वानधि-करणावृत्तिविषयतामित्यर्थः ।

ननु विवक्षितप्रथमलक्षणं हि [3]प्रकारानधिकरणावृत्तित्व[4]गर्भम् । तस्य भ्रमेऽतिव्याप्तिनिरासाय विषयतायाः प्रकारानधिकरणवृत्तित्वाभिधानं युक्तम्, न तु तादृशधर्मावच्छिन्नत्वाभिधानम् । [5]तदनवच्छिन्नत्वस्य लक्षणे प्रवेशाभावादित्याशङ्क्य प्रकारानधिकरणवृत्तित्वं विषयताविशेषणम्, [6]न धर्मविशेषणमित्यभिप्रेत्याह—रजतभ्रम इति । तथा च धर्मावच्छिन्नेत्येतत् स्वरूपकथनपरम् । यद्वा धर्मावच्छि-न्नत्वं धर्मप्रकारकत्वम् । तथा च रजतत्वरूपधर्मप्रकारिकापि न रजतमात्रवृत्तिः । किं तु तद्रूपप्रकारानधिकरणवृत्तिरपि । प्रकारभेदस्य च गौरव[7]तर्कपराहतत्वान्न विषयताभेदकल्पकत्वमिति भावः ।

ननु धर्म्यंशप्रमात्वस्य [8]विषयतैक्येन निरस्तत्वात् तदङ्गीकारानुपपत्तिः । तत्प्रमात्वस्य रजतत्वप्रमात्वानापादकत्वात् तदापादनानुपपत्तिश्चेत्यत आह—रजतेति । [9]यया युक्त्या धर्म्यंशप्रमात्वं [10]तयैव तदापाद्यत इति भावः ।

ननु वैशिष्ट्यस्य [11]प्रकारत्वं विशेष्यत्वं वा । तत्राद्यं निरस्तं—न वैशि-ष्ट्यस्येत्यत्र । तदनुपपन्नम् । [12]रजतपुरोवर्तितादात्म्यस्याप्रकारत्वेऽप्यसत्त्वादसद्वि-षयानुभवत्वरूपमप्रमात्वं[13] तदंशे स्यादेवेत्याशङ्क्य न हि असद्विषयत्वमप्रमात्वम्,

---

1. ख. रजतत्वपुरो-
2. ख. °त्वप्रकारमात्राव-
3. ग. प्रकाराधिक-
4. ग. °गर्भे न भ्रमे
5. ख. ग. तदनवच्छिन्नत्वस्य
6. ख. 'न' नास्ति
7. ख. °तर्कापहतत्वान्न
8. क. विषयैक्येन
9. ख. ग. यथा
10. ख. ग. तथैव
11. ख. ग. प्रकारकत्वं
12. ख. रजतत्वपुरो-
13. क. °मप्रामाण्यं
ख. °रूपं प्रमात्वम्

अथ रजतांशे धर्म्यंशे च तज्ज्ञानं प्रमैव। वैशिष्ट्यांशे न प्रमेति चेत्—न। वैशिष्ट्यस्य पूर्वज्ञानाविषयत्वेनाप्रकारत्वात्। वैशिष्ट्यवृत्तिविषयतायां रजतत्वपुरोवर्तिनोः प्रकारत्वेन भ्रमस्य वैशिष्ट्यांशे प्रमात्वाप्रमात्वापातात्।

---

**प्रकाशः**

श्रयत्वादिति भावः। वैशिष्ट्यस्येति। 'प्रकारे तु विपर्यय' इत्यादिना प्रकार एवाप्रमात्वमिति सिद्धान्तावगमात् तद्व्यतिक्रमे चापसिद्धान्तापातादिति भावः। वैशिष्ट्यवृत्तिविषयतायामिति। रजतभ्रमे तद्वैशिष्ट्यं भासते, तद्वैशिष्ट्यविषयतायां रजतत्वं संबद्धमेव प्रकारः, पुरोवर्तिनि चासंबद्धम्। तथा च तत्रापि प्रकारभेदेन विषयताभेदापत्तौ (तत्संबन्ध)[तत्संबद्ध] [1]रजतत्वमात्रप्रकारकविषयताश्रयत्वात्तदंशे [2]प्रमात्वापातात्, [3](तत्संबन्ध) [तदसंबद्ध] पुरोवर्ति[4]प्रकारकविषयताश्रयत्वात्तदंश एव प्रमात्वापाताच्चेति भावः।

---

**न्यायशिखामणिः**

असत्ख्यात्यापत्तेः। किं तु प्रकारानधिकरणवृत्तिविषयत्वप्रतियोगित्वम्। अन्यथा सिद्धान्तविरोधादित्याह—प्रकारे त्विति।

ननु वैशिष्ट्यवृत्तीत्यत्रान्त्यनिराकरणमयुक्तम्। इदं रजतमिति भ्रमे [5]वैशिष्ट्यस्य [6]विशेष्यत्वाभावेन तद्वृत्तिविषयतायां रजतपुरोवर्तिनोः प्रकारत्वेनेत्यनुपपत्तेः। तदुभयांशे प्रकारगर्भप्रमात्वाद्यापादनायोगाच्च। न च रजततादात्म्यं पुरोवर्तिवृत्तीत्याकारभ्रमाभिप्रायं तदिति वाच्यम्। बहिरिन्द्रियेण उपनीतविशेष्यकप्रत्यक्षाभावात्। भावे वा वैशिष्ट्यस्य रजतपुरोवर्तिलक्षणप्रकारद्वयानधिकरणत्वेनोभयांशेऽप्यप्रमा[7]त्वस्यैवापादनापत्तेरित्याशङ्क्य, प्रकारानधिकरणपदेन तदनाश्रयत्वविवक्षायामाकाशे शब्द इत्यादिप्रमायामव्याप्त्यापत्त्या [8]तदसंबद्धत्वमवश्यं

---

1. ख. ०रजतत्वमात्रवृत्तिप्रकारविषयता-
2. ख. प्रमात्वापातः
3. ख. तत्संबन्धे
4. क. ०प्रकारविषयता-
5. क. रजतत्ववैशिष्ट्यस्य
6. ग. विशेष्यत्वाभावे
7. क. ०त्वस्यैवापत्तेः
8. ख. तदसंबन्धत्व; ग. तदसंबद्धत्व-

**नापि स्वव्यधिकरणप्रकारानवच्छिन्नविषयताप्रतियोग्यनुभवः प्रमा। प्रमेयदमिदमिति ज्ञाने प्रमेयत्वप्रकारकविषयतानाश्रयस्याप्रसिद्ध्या अव्याप्तेः।**

---

### प्रकाशः

न च [1]वैशिष्ट्ये रजतपुरोवर्तिनो वैशिष्ट्यान्तर[2]स्याभानात्कथं तद्विषयतायां तत्प्रकारकत्वमिति वाच्यम्। तदंशे [3]तयोर्वैशिष्ट्याभावेऽपि अवच्छेदकत्वेन प्रकारत्वोपगमादित्याहुः।

**नापि स्वव्यधिकरणेति।** यद्यप्यत्र स्वव्यधिकरणधर्मानवच्छिन्नेत्यदिना पूर्वोक्तलक्षणेनास्याभेदे[4] पर्यवसानम्। तथापि तत्र स्वव्यधिकरणत्वं विषयताधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमुक्तम्, अत्र तु [5]विषयतानधिकरणवृत्तित्वं तदुच्यत इति विशेष इति भावः। अत एवाह—**प्रमेयत्वप्रकारकविषयताना-**

---

### न्यायशिखामणिः

वाच्यम्। तथा चोभयापादनसंभव इत्याह—**रजतभ्रम इति।** रजततादात्म्यं पुरोवर्तिवृत्तीत्याकारभ्रम इत्यर्थः। **तद्वैशिष्ट्यमिति।** विशेष्यतयेति शेषः। **अवच्छेदकत्वेनेति।** निरूपकत्वेनेत्यर्थः। ननु रजतवैशिष्ट्यं पुरोवर्तिवृत्तीत्याकारभ्रम [6]एव तत्राभिमतः। अन्यथा वैशिष्ट्यवृत्तीत्याद्यनुपपत्तिरित्युक्तत्वात्। तथा च वैशिष्ट्यान्तरभानेन प्रकारपदस्य मुख्यार्थसंभवे कारणं विना तत्त्यागो न युक्त इत्यस्वरसं सूचयति—**आहुरिति।** ननु तत्र धर्मपदमत्र च प्रकारपदमिति स्फुटो भेद इत्यत आह—**पर्यवसानमिति।** तत्र च धर्मपदं प्रकारपरम्। अन्यथा स्वव्यधिकरणविशेष्यनिरूपितत्वादव्याप्त्यापत्तेरिति भावः।

निर्विकल्पकसंग्रहाय प्रकारत्वं न विवक्षितमिति केचित्। तच्चुच्छम्। तदविवक्षायामुक्तदोषात्। तद्विवक्षायामपि निर्विकल्पकसंग्रहाच्च। न हि प्रकारावच्छिन्नत्वं विषयताविशेषणम्, [7]न वा प्रकृतज्ञानप्रकारत्वं विवक्षितम्। किं तु

---

1. ख. वैशिष्ट्यरजत-
2. ख. ॰स्याभावात्
3. ख. तयोर्वैशिष्ट्यान्तरभाने
4. ख. ॰स्य भेदपर्यव-
5. ख. पक्षविषयता-
6. घ. एवात्रा-
7. ख. नच

न च संयोगित्वादिना प्रमेयत्वप्रकारकविषयताव्यतिरेको घटादौ प्रसिद्ध इति वाच्यम् । प्रतियोगितावच्छेदकरूपवत्त्वेन प्रतियोगिज्ञानस्याभावधीहेतुत्वात् । किं च यत्किंचिद्व्यधिकरणप्रकारानवच्छिन्नत्वं भ्रमसाधारणम्, प्रकृतज्ञानव्यधिकरणप्रकारानवच्छिन्नत्वं निर्विकल्पकाव्याप्तम्, तस्य निष्प्रकारकत्वादिति ।

इति प्रमालक्षणपूर्वपक्षः समाप्तः

—: * :—

---

प्रकाशः

अयस्येति । व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभाववादिमतेन प्रसिद्धिमाशङ्क्य निराकरोति—न चेति । [1]प्रतियोगितेति । यथा चैतत्तथा अनुमानप्रकाशे वक्ष्यामः । एतच्च वस्तुगतिमनुरुध्योक्तम् । वस्तुतस्तादृशाभावभ्युपगमेऽपि न प्रकृतलक्षणसंगतिः । तादृशविषयतानधिकरणवृत्तिमेयत्वप्रकारावच्छिन्नविषयताप्रतियोगित्वेनोक्तज्ञाने अव्याप्तितादवस्थ्यमिति ध्येयम् ।

---

न्यायशिखामणिः

स्वव्यधिकरणप्रकारावच्छिन्नत्वस्य भ्रमे प्रसिद्धस्याभावो निर्विकल्पके संभवति । किं चैवं किं चेत्यग्रिमग्रन्थे तदव्याप्त्यभिधानविरोधः । [2]तन्मते तु न दोषः । अत एव प्रकृतज्ञानविवक्षायां [3]दोषाभिधानमिति मन्तव्यम् ।

ननु वैपरीत्यं किं न स्यात् । तावतापि पूर्वभेदनिराकरणादित्यत आह—अत एवेति । एवं [4]सत्यपसिद्धान्तं वारयति—व्यधिकरणेति । ननु प्रतियोगितावच्छेदकावच्छिन्नज्ञानमभावज्ञाने तन्त्रं न तु तत्प्रमा । तच्चात्राप्याहार्यमनाहार्यं वा [5]भ्रमरूपं संभवतीत्यत आह—[6]यथा चेति । [7]तथा च व्यधिकरण[8]धर्मावच्छिन्नाधिकरणताकाभावोऽपि सिध्येदित्यादि वक्ष्यत इत्यर्थः ।

---

1. क. प्रतियोगिकेति ।
2. घ. मन्मते
3. क. तद्दोषाभि-
4. ख. घ. सत्यपि सिद्धान्त-
5. क. 'भ्रमरूपं' नास्ति ।
6. ख. तथा चेति ।
7. ख. ग. घ. तथा सति ।
8. क. धर्मावच्छिन्नावच्छिन्नाधि-

प्रकाशः

प्रकृतेति । न च [1]प्रकृतज्ञानविषयताव्यधिकरणप्रकारावच्छिन्नभिन्नत्वमित्यर्थः, तथा च [2]अप्रमाभिन्नत्वमित्यर्थपर्यवसानेन नोक्तदोष इति वाच्यम् । भ्रमांशप्रमानुपसंग्रहापत्तेः । अन्योन्याभावस्य व्याप्यवृत्तित्वनियमादित्यर्थः ।

इति प्रमालक्षणपूर्वपक्षः

---

न्यायशिखामणिः

ननु तादृशाभावाङ्गीकारेऽपि प्रमेयमिति ज्ञानाव्याप्तितादवस्थ्यमिति तन्निराकरणप्रयासो मुधेत्यत आह—एतच्चेति । [3]अन्योन्याभावो व्याप्यवृत्तिरिति मतेनाह—अन्योन्येति ।

इति प्रमालक्षणपूर्वपक्षः

—: * :—

1. क. प्रकृतज्ञाने व्यधिकरण-
2. ख. भ्रमभिन्न-
3. क. अन्योन्याभावोऽपि व्याप्य-

# अथ प्रमालक्षणसिद्धान्तः

—: * :—

उच्यते । यत्र यदस्ति तत्र तस्यानुभवः प्रमा ।

---

प्रकाशः

यत्र यदस्तीति । यत्र विशेष्ये यस्य [1]प्रकारस्य यः संबन्धो वर्तते तद्विशेष्यस्तत्प्रकारकस्तत्संबन्धावगाह्यनुभवः स्वविषये सर्वत्र विशेष्यादौ प्रमेत्यर्थः ।

एतेन [2]तत्रेति स्वरूपसदाधारनिर्देशो विषयतापन्नाधारनिर्देशो वा रजतभ्रमेऽपि रजतप्रमात्वापत्तिः । तस्यापि वस्तुसद्रजताधारकरजतत्वानुभवरूपत्वात् रजतभ्रमस्यापि रजतविषयतया विषयतापन्नरजताधारकरजतत्वानुभवरूपत्वाच्चेति निरस्तम् । रजतभ्रमस्य रजतविशेष्यकत्वाभावात् ।

[3]अत एव आकाशे शब्द इति प्रमायामाकाशस्यावृत्तितया शब्दवृत्तित्वाभावादव्याप्तिरिति निरस्तम् । शब्दे विशेष्ये प्रकारीभूताकाशसंबन्धस्य तथापि सत्त्वात् ।

अत एव च यत्र यदस्ति तत्र तस्याधेयस्यानुभव इति लक्षणपर्यवसानादवृत्तिगगनादिविशेष्यकप्रमायामाधेयगगनत्वांशे लक्षणसत्त्वेऽपि विशेष्यांशेऽव्याप्तिरपि निरस्ता ।

---

न्यायशिखामणिः

सप्तमीवचनस्याधिकरणत्वविषयत्वरूपशक्यार्थातिक्रमेण विशेष्यपरत्वकल्पनस्य एतेनेत्यादिना प्रयोजनमुक्त्वा यत्पदस्य प्रकारसंबन्धपरत्वस्य तदाह—अत एवेति । षष्ठ्यन्ततत्पदस्य प्रकारप्रकारितत्संबन्धपरत्वं प्रदर्शितम् । तस्य प्रयोजनमाह—अत एवेति । विशेष्यांश इत्युपलक्षणम् । तत्पदस्य विशेष्यमात्रपरत्वे ऽाधेयांशेऽव्याप्तिरित्यपि द्रष्टव्यम् ।

---

1. क. 'प्रकारस्य' नास्ति ।
2. क. तत्त्वेति ।
3. क. 'अत एव....तथापि सत्त्वात्' इति ग्रन्थस्त्रुटितः ।

### प्रकाशः

गगनत्वादिप्रकारकानुभवस्य स्वविषये सर्वत्र गगनादौ प्रमात्वमित्यस्यैव लक्षणार्थत्वात्। तत्संबन्धावगाहीति विशेषणाच्च लोहितः स्फटिक इत्यादेः साक्षात्परंपरासंबन्धरूपविषयभेदेन प्रमाप्रमोभयरूपत्वमुपपादितम्। घटे घटत्वं घटत्वे घट इति प्रतीत्योश्च प्रमाप्रमारूपत्वं च समर्थितम्। घटघटत्वयोराधाराधेयभावलक्षणसंबन्धविशेषस्य सत्त्वात् वैपरीत्ये चासत्त्वात्। स्मृतौ प्रमाव्यवहाराभावात्तद्व्यावर्तनायानुभवपदम्।

---

### न्यायशिखामणिः

तत्संबन्धावगाहीत्यत्र तत्पदस्य प्रयोजनमाह—तत्संबन्धेति नन्वविसंवादिस्मृतेर्निष्कम्पप्रवृत्तिहेतुत्वेन संग्राह्यत्वात् तद्व्यावर्तकानुभवपदवैयर्थ्यमित्यत आह—स्मृताविति। प्रमाव्यवहारेति। व्यवहारोपयोगिप्रामाण्यमिह [1]निरूप्यमिति भावः।

[2]केचित्तु—यद्धर्म्यनुयोगिको यद्धर्मप्रतियोगिकश्च यः संबन्धः तद्धर्म्यनुयोगिकतया तद्धर्मप्रतियोगिकतया च तत्संबन्धमवगाहमानानुभवस्तत्र [3]प्रमेति पूर्वत्र विवक्षितम्। इह तु यत्र विशेष्ये यस्य प्रकारस्य यः संबन्धो वर्तते तद्विशेष्यकस्तत्प्रकारकस्तत्संबन्धावगाह्यनुभवः [4]प्रमेति विवक्षितमित्याहुः।

तच्चिन्त्यम्। प्रथमलक्षणे अनुयोगित्वा(द्युपपादनस्य) [द्युपादानस्य] व्यर्थत्वात्। न च घटघटत्वयोः संबन्धो घटानुयोगिको घटत्वप्रतियोगिकश्च, स च घटत्वे घट इति ज्ञाने वैपरीत्येन भासत इति तदप्रमेति तत्रातिव्याप्तिवारणाय तदुपादानमिति वाच्यम्। न हि तस्य घटप्रतियोगिकत्वप्रकारकसंबन्धविशेष्यकत्वेनाप्रामाण्यम्। विशिष्टज्ञाने अनु(प)योगित्वादिभानस्यैवानभ्युपगमेन तत्प्रकारकत्वस्य दूरनिरस्तत्वात्। तथा चात्राविद्यमानघटप्रतियोगिकाधाराधेयभावसंबन्धविषयत्वेनैवाप्रमाणे घटत्वे घट इति ज्ञाने तत्संबन्धपदेनैव दोषनिरासे तद्वैयर्थ्यम्। अन्यथा द्वितीयलक्षणेऽप्यगतेः।

---

1. ख. रूपमिति
2. क. 'केचित्तु....पूर्ववदेवास्याप्यर्थमाह' इति ग्रन्थो नास्ति।
3. ख. प्रमेयेति। 4 ख. प्रमेयेति।

तद्वति तत्प्रकारकानुभवो वा ।

---

**प्रकाशः**

तद्वतीति । येन संबन्धेन यस्य विशेष्यस्य [1]यत्प्रकारवत्त्वं तत्संबन्धाव-गाहितद्विशेष्यकतत्प्रकारकानुभव इत्यर्थः । यद्यप्येवं पूर्वलक्षणाभेदः, यथाश्रुते चोक्तदूषणावकाशः । तथापि प्रथमे तत्प्रकारकत्वं [2]तद्वैशिष्ट्यविषयकत्वम्, द्वितीये तद्विशेषणज्ञानजन्यत्वमिति विशेषः ।

---

**न्यायशिखामणिः**

किं चैवमनुयोगित्वादिप्रकारकत्वघटितलक्षणासंभवः स्यात् । न चैतद-स्वरसेनैव लक्षणान्तराभिधानादिष्टापत्तिरिति वाच्यम् । तदनन्तर्भावेऽप्युक्तरीत्या पूर्वस्यापि [3]सल्लक्षणत्वे स्वयमेवानुयोगित्वादिविशेषणं प्रक्षिप्य तद्वैयर्थ्यस्यासंभव-दुक्तिकत्वात् । तस्माल्लक्षणद्वयमेकरूपमेव विवक्षणीयमित्यभिप्रेत्य पूर्ववदेवास्या-प्यर्थमाह—[4]येनेति । यस्य विशेष्यस्य यत्प्रकारनिरूपित[5]यत्संबन्धवत्त्वमित्यर्थः । अन्यथा अप्रतिकारकज्ञाने दोषानतिवृत्तेः । [6]तर्हि लक्षणाभेदः स्यादिति शङ्कते —यद्यपीति । एतच्चोपलक्षणम् । तत्प्रकारकत्वं हि तद्विशेषणज्ञानजन्यत्वमिति [7]तद्घटितलक्षणस्य परमेश्वरज्ञानाव्याप्तिः । न चेदं जन्यप्रमालक्षणम् । सामान्य-लक्षणाभिधाने विशेषलक्षणानवकाशादित्यपि द्रष्टव्यम् ।

यद्यपि द्वितीयलक्षणे तद्वैशिष्ट्यविषयत्वरूपतत्प्रकारकत्वविवक्षायामपि न लक्षणाभेदः, तथापि प्रमासामान्यलक्षणं प्रथमं वाच्यम् । [8]तत्र चाजन्यज्ञानमपि लक्ष्यमिति तत्साधारण्याय तत्रैव तद्विवक्षा युक्तेत्याशयेनाह—तथापीति । मूले

---

1. क. यत्प्रकारकत्वं
2. क. यद्वैशिष्ट्य-
3. ख. लक्षणत्वे
4. क. यथाश्रुते उक्तदोषादाह—येनेति ।
5. ख. घ. यत्संबन्धत्व-
6. क. 'तर्हि लक्षणाभेदः....युक्तेत्याशयेनाह—तथापीति' इति ग्रन्थो न दृश्य ।
7. ख. ग. तद्घटिततल्लक्षणस्य
8. ख. घ. तत्र च जन्यज्ञानमपि

**यत्र यन्नास्ति तत्र तस्य ज्ञानं, तदभाववति तत्प्रकारकज्ञानं वा अप्रमा ।**

---

**प्रकाशः**

स्मृतेरप्यप्रमात्वादव्याप्तिभिया अनुभवत्वानन्तर्भावेणैव भ्रमलक्षणमाह—**यत्रेति** । यत्र विशेष्ये यस्य प्रकारस्य [1]यः संबन्धो नास्ति तद्विशेष्यकस्तत्प्रकारकस्तत्संबन्धावगाही प्रत्ययः अप्रमा इत्यर्थः । [2]**तदभाववतीति** । [3]अत्रापि पूर्ववदेव न पूर्वलक्षणाभेद इति ध्येयम् ।

---

**न्यायशिखामणिः**

तत्प्रकारकत्वं द्वेधा निरुक्तम् । तत्र पाठक्रमात् प्रथमस्य प्रमालक्षणस्य प्रथमम्, द्वितीयस्य द्वितीयमित्याह—**तथापीति** । [4]इत्यप्याहुः ।

ननु स्मृतिरप्रमात्वेन संग्राह्या न वा । न चेत् अप्रमालक्षणस्यायथार्थस्मृतावतिप्रसङ्गः । संग्राह्यत्वे, [5]तृतीयलक्षणे सत्यन्तेनैव तद्वारणे अनुभवपदवैयर्थ्यम् । किं च [6]प्रमालक्षणस्य यथार्थस्मृतावव्याप्तिः । न च यथार्थस्मृतिरेव नेति वाच्यम् । [7]विषयबाधाभावात् । उक्तप्रमालक्षणद्वये [8]अनुभवत्ववैयर्थ्यं चेत्यत आह—**स्मृतेरपीति** । [9]अयथार्थस्मृतेरित्यर्थः । यथार्थस्मृतिश्च न संग्राह्येति न तत्राव्याप्तिः । नाप्यनुभवपदवैयर्थ्यम् । न चैवमुभयबहिर्भावापत्तिः । एतल्लक्षणासंग्राह्यत्वेऽपि तद्वति तत्प्रकारकानुभवान्यज्ञानत्वेन लक्षणान्तरेण यथार्थस्मृतेरप्रमात्वलाभादिति ध्येयम् ।

ननु यथाश्रुते गगनादिप्रकारकप्रमाया[10]मतिव्याप्तिः । प्रकारसंबन्धाभावविवक्षायां लौहित्यपरंपरासंबन्धवति स्फटिकादौ [11]साक्षात्संबन्धेन तदवगाहिभ्रमे तदव्याप्तिः । वह्निमानिति ज्ञानस्य तत्प्रकारनिरूपिततत्संबन्धाभाववद्वह्नित्वविषयत्वात् तत्रातिव्याप्तिश्चेत्यत आह—**यत्रेति** ।

---

1. ख. यत्संबन्धो
2. क. तदभाववदिति ।
3. क. अत्र पूर्व-
4. क 'इत्यप्याहुः' नास्ति । ग. इत्याहुः
5. ख. तृतीयक्षणे
6. ग. घ. अप्रमालक्षणस्य
7. ख. विषयभावाभावात्
8. क. अनुभवपदवैयर्थ्यं
9. क. ख. यथार्थ-
10. ग. °मव्याप्तिः
11. ख. तत्साक्षात्संबन्धावगाहिभ्रमे

तदन्यत्वे सति अनुभवत्वमेव वा प्रमात्वम् । तत्प्रकारकत्वं च तद्वैशिष्ट्यविषयकत्वं तद्विशेषणज्ञानजन्यत्वं वा ।

---

**प्रकाशः**

निर्विकल्पकसाधारणं लक्षणान्तरमाह—**तदन्यत्व** इति । तत्त्वात्यन्ताभाववत्त्व इत्यर्थः । तेनान्योन्याभावस्य व्याप्यवृत्तित्वनियमेन न भ्रमांशप्रमायामव्याप्तिरिति ध्येयम् ।

केचित्तु अन्योन्याभावस्याव्याप्यवृत्तित्वपक्ष एवेदं लक्षणमित्याहुः । **तद्वैशिष्ट्येति** । तथा च भासमानवैशिष्ट्यप्रतियोगित्वं [1]प्रकारत्वम्, विशेष्यत्वं च तादृशवैशिष्ट्यानुयोगित्वमिति नातिप्रसङ्ग इति [2]भावः । वैशेषिकनये समवायस्यातीन्द्रियत्वात् न्यायनय एवेदमिति ध्येयम् । अतिन्द्रियोऽपि समवायस्संसर्गविधया तन्मतेऽपि भासत इत्यन्ये ।

समवायाभानेऽपि विशेषणविशेष्यभावात्मकस्वरूपसंबन्धस्तत्रापि भासते, अन्यथा समूहालम्बनाविशेषप्रसङ्गादित्यप्याहुः ।

---

**न्यायशिखामणिः**

ननु निर्विकल्पकं यदि प्रमा तदा उक्तलक्षणद्वयस्याव्याप्तिः । [3]न चेदस्य लक्षणस्य तत्रातिव्याप्तिरित्याशङ्क्यात्रैव तत्संग्राह्यं न तूक्तलक्षणद्वय इत्याह—**निर्विकल्पकेति** । आलोककृन्मतमुक्त्वा [4]प्रभाकृन्मतमाह—**केचित्त्विति** । उक्तरीत्या [5]लक्षणस्य सर्वमतसाधारण्यसंभवे [6]मतभेदावष्टम्भो न युक्त इत्यस्वरसं सूचयति—**आहुरिति** । ननु ज्ञानविषयवैशिष्ट्यवत्त्वं विशेष्यसाधारणमित्यत आह—**तथाचेति** । ननु प्रतियोगित्वं निरूपकत्वम्, तच्च विशेष्येऽप्यस्तीत्यत आह—**विशेष्यत्वं चेति** । प्रतियोगित्वमनुयोगित्वं च [7]फलबलकल्प्यस्वरूपसंबन्धविशेष इति नातिप्रसङ्ग इति भावः ।

नन्विन्द्रियजन्यज्ञानाविषयत्वमतीन्द्रियत्वम्, न तु तदप्रकारकत्वादि, गौरवात् । तथा च समवायातीन्द्रियत्वोक्तिरेवायुक्तेत्यरुचेराह—**समवायेति** ।

---

1. क. प्रकारकत्वं
2. क. 'भावः' नास्ति ।
3. ख. न चोक्तस्य क्षणस्य
4. ख. घ. प्रमाकृतमाह
5. ग. 'लक्षणस्य' नास्ति ।
6. क. मतान्तरवष्टम्भो
7. ख. फलबन्धकल्प्य-

प्रकाशः

**तद्विशेषणेति** । न च [1]तज्ज्ञानजन्यत्वमेवास्तामिति वाच्यम् । विशेषण-[2]ज्ञानजन्यत्वेन विशेषलाभार्थं तदुपादानात् । अन्यथा अनुमित्यादौ विशेष्यज्ञान-स्यापि कारणत्वाभ्युपगमेनातिप्रसङ्गः [3]स्यात् इति भावः ।

नन्वत्र घटाभाव इति ज्ञाने कथमभावत्वप्रकारकत्वम् । अभावत्वस्याभाव-वित्तिवेद्यतया पूर्वज्ञानाविषयत्वेन [4]तद्विशेषणज्ञानजन्यत्वाभावात् । एवं घटत्वप्रकार-कत्वादिकं नानुव्यवसाये प्रकारः स्यादिति चेत्—न । यद्विशेषणज्ञानं विना

---

न्यायशिखामणिः

समवायस्थलेऽपि संबन्धान्तरस्वीकारे समवायसाधकानुमानस्य तेनैव सिद्धसाध-नापत्तौ तदसिद्धिप्रसङ्ग इत्यस्वरसं सूचयति—**अपीति** ।

ननु भासमानवैशिष्ट्यप्रतियोगित्वं न [5]प्रकारत्वमित्यस्माभिर्विवक्ष्यत इत्यपरितोषान्मणौ लक्षणान्तरमुक्तम्—**तद्विशेषणेत्यादिना** । तत्र विशेषणपद-वैयर्थ्यमाशङ्क्य निराकरोति—**न चेति** । आदिपदात् विशिष्टप्रत्यक्षोपमितिशाब्द-ज्ञानसंग्रहः । न चोपमित्यादिस्थले विशेष्यगोचरसादृश्यादिज्ञानावश्यंभावेऽपि विशेष्यज्ञानस्य प्रत्यक्षाहेतुत्वान्न तत्परिग्रहो युक्त इति वाच्यम् । निर्विकल्पकस्य वैशिष्ट्याविषयकत्वेऽपि संनिकृष्टविशेष्यविशेषणोभयगोचरत्वात् ।

**नन्विति** । अभावविशेषणकप्रत्यक्षस्य तद्विशेष्यकज्ञानानन्तरमेवाङ्गीकारात् न तत्राभावत्वप्रकारकत्वानुपपत्तिशङ्का, किं तु [6]तद्विशेष्यक इत्याशयेन—**अत्र घटाभाव इति ज्ञान** इत्युक्तम् । **अभावत्वस्येति** । विशेषणज्ञानवृत्तिविशिष्टज्ञान-निरूपितकारणतावच्छेदकत्वं प्रकारत्वम् । तथा चाभावत्वस्य तत्कारणताया [7]विषयतयावच्छेदकत्वाभावात् न [8]प्रकारत्वमिति भावः । **घटत्वेति** । आदिपदात् घटविशेष्यकत्वादिपरिग्रहः । एवं चाभावप्रमायामभावत्वांशेऽनुव्यवसायमात्रे च तत्प्रकारकत्वांशे [9]प्रमालक्षणमव्याप्तमिति भावः ।

---

1. ख तत्तज्ज्ञान-
2. ख. ॰ज्ञानजनकत्वलाभार्थम्
3. क. 'स्यात्' नास्ति ।
4. क. विशेषज्ञान-
5. ख. प्रकारकत्वम्
6. ख. तद्विशेष्य इत्या-
7. ख. ग. घ. विषयतावच्छेदक-
8. ख. ग. घ. प्रकारकत्वमिति
9. ख. प्रमालक्षणाव्याप्तिरिति

### प्रकाशः

यद्धर्मविशिष्टज्ञानं न भवति तद्विशेषणज्ञानजन्यं तद्विशिष्टज्ञानं प्रमेति विवक्षितत्वात्। प्रतियोग्यादिविशेषणज्ञानं विना यथा [1]तद्विशिष्टाभावज्ञानं न भवति तथा अभावत्वविशिष्टाभावज्ञानमपि ।

---

### न्यायशिखामणिः

[2]न ह्युक्तरूपं प्रकारत्वम्, किं तु विशेषणज्ञानजन्यतावच्छेदकत्वम् । तच्चाभावत्वादावप्यस्तीति जयदेवोक्तेन सामाधत्ते-नेति। नन्वभावत्वविशिष्टज्ञानस्य प्रतियोगिवैशिष्ट्यांश एव प्रतियोगिरूपविशेषणज्ञानकार्यतया [3]नाभावत्वविषयकत्वं तत्कार्यतावच्छेदकमित्यत आह—यद्विशेषणेति । [4]यत् यद्विशेषणज्ञानव्यतिरेक-प्रयुक्तव्यतिरेक[5]प्रतियोगि तत् तद्विशेषणज्ञानजन्यमित्युच्यते न तु [6]मुख्यजन्यत्वं विवक्षितम् । तथा च विशेषणज्ञानजन्यतावच्छेदकविषयरूपयद्धर्मावच्छिन्नत्वं यस्य ज्ञानस्य तदेव तस्य तद्धर्मप्रकारकत्वम् । तच्च प्रमालक्षणे विवक्षितमित्यर्थः ।

यद्यपि विशेषणत्वमत्र प्रविष्टमित्यात्माश्रयः, तथापि विशिष्टज्ञानत्वावच्छिन्न-प्रयोज्यतायां [7]यद्विषयकत्वमवच्छेदकं तत्त्वं प्रकारत्वम् । विशिष्टज्ञानत्वं च वैशिष्ट्यज्ञानत्वम् । [8]वैशिष्ट्यं च प्रतियोगित्वादिवदखण्डोपाधिरिति नात्माश्रयाव-काश इति भावः ।

अभावत्वादावप्युक्तं प्रकारत्वमुपपादयति—प्रतियोगीति ।

ननु विशिष्टज्ञानत्वावच्छिन्नकार्यतावच्छेदकत्वं यदि [9]प्रकारत्वं तदा वैशिष्ट्यस्यापि तथात्वापत्तिः । तथा च तद्विशेषणज्ञानजन्यत्वमेव [10]तत्प्रकारकत्वं प्रमालक्षणे विवक्षितमित्यव्याप्तितादवस्थ्यमित्याशङ्क्य न हीदं व्यवहाराय निरुक्तम्, किं तु प्रमालक्षणाय । तथैव चानुपदं विभावनात् । तथा चाभावत्वरूपविशेषण-[11]ज्ञानजन्यत्वेऽपि न तत्राव्याप्तिरित्याह—तथा चेति । तादृशकार्यतावच्छेदकत्वे सिद्धे सतीत्यर्थः ।

---

1. ख. तद्विशिष्टभाव-
2. ख. नोक्तरूपं
3. ख. अभावत्व-
4. ख. यद्यविशेषेण ज्ञान-
5. ख. °प्रतियोगिरूपविशेषण-
6. घ. मुख्यं जन्यत्वं
7. ख. तद्विषयत्वमवच्छेदकत्वं प्रकारत्वम् ।
8. ख. घ. वैशिष्ट्यत्वं च
9. ख. ग. प्रकारकत्वं
10. ख. तत्प्रकारत्वं
11. ख. घ. °ज्ञानाजन्यत्वे

ईश्वरस्य तद्विशिष्टविषयं ज्ञानं न तु तत्प्रकारकम् । निर्विकल्पकं च प्रमाप्रमाबहिर्भूतमेव, व्यवहारानङ्गत्वात् । अव्यपदेश्यपदेन तदुपग्रहस्य नामजात्यादियोजनारहितमपि प्रत्यक्षमस्तीत्यत्र तात्पर्यम् । इदं रजतमिति ज्ञानमिदन्त्ववति तदनुभवत्वात् प्रमा, रजतत्वाभाववति तत्प्रकारकज्ञानत्वादप्रमा । अंशे समूहालम्बनं च नाप्रमा । एकप्रकाराभाववत्यपि तदप्रतीतेः ।

---

प्रकाशः

तथा च प्रतियोग्यादिविशेषणज्ञानजन्यत्वेनैव प्रतियोग्यादिवैशिष्ट्यांश [1]इव अभावत्ववैशिष्ट्यांशेऽपि प्रमात्वमिति । इदं च [2]तत्प्रकारत्वं प्रमालक्षणाय निरुक्तम् । [3]अनुव्यवसाये चान्यदेव [4]तत्प्रकारत्वं भासत इति द्रष्टव्यम् ।

---

न्यायशिखामणिः

ननु निरुक्त[5]प्रकारकत्वं नानुव्यवसायविषयः, तस्यान्वयव्यतिरेकादिप्रमाणगम्यत्वात्, [6]तद्विषयत्वे च विशिष्टज्ञाने विशेषणज्ञानं कारणं न वेति [7]विवादाभावप्रसङ्गाच्च । तथा चानुव्यवसायस्य कुतस्तत्प्रकारकत्वमिति तत्र प्रमालक्षणाव्याप्तिर्दुष्परिहरेत्यत आह—इदं चेति । अन्यदेवेति । भासमानेत्यादिरूपं प्रतियोगित्वादिवदखण्डरूपं वेत्यर्थः । तथा चाभावत्ववत् घटत्वप्रकारकत्वस्य जनकविशेषण[8]ज्ञानाविषयत्वेऽपि तज्जन्यविशिष्टज्ञानकार्यतावच्छेदकत्वात् [9]प्रकारत्वमिति भावः ।

[10]ननु नन्वित्याशङ्काग्रन्थस्य न तावदव्याप्यवृत्तिभावाभावप्रकारकवृक्षविशेष्यकप्रमायामप्रमात्वापादनपरत्वम् । प्रमाप्रमा च स्यादित्यनुपपत्तेः । नापि तत्रोभयापादनपरत्वम् । प्रमात्वे [11]हेत्वनुपन्यासात्तदङ्गीकारेणेष्टापत्तेश्चेत्याशङ्क्य अप्रमात्वमेव तत्रापाद्यम् ।

---

1. क. च for इव
2. क. प्रमाकरणत्वं
3. ख. अनुव्यवसायेऽप्यन्य-
4. क. तत्प्रकारकत्वं
5. क. °प्रकारत्वं
6. ग. तद्विषये च
7. ख. ग. घ. वादिविवादा-
8. ग. ज्ञानविषय-
9. ग. प्रकारकत्व-
10. ख. ग. घ. 'ननु' नास्ति
11. ग. हेतूपन्यासात्तदनङ्गी-

नन्वेवमव्याप्यवृत्तिभावाभावयोरेकत्र प्रमाप्रमा च स्यात् तदभाववति तत्प्रकारकज्ञानत्वादिति चेत्—न। भिन्नभिन्नावच्छेदेन हि वृक्षे संयोगतदभावौ, न वृक्षमात्रे, विरोधादननुभवाच्च।

तथा च यत्र वृक्षे संयोगो न तत्र तदभावः। यदवच्छेदेन यत्र यदस्तीति वा विवक्षितम्।

---

**प्रकाशः**

**ईश्वरस्येति।** तथा च द्वितीयलक्षणे तदीयप्रमा न संग्राह्येति भावः। **निर्विकल्पकं चेति।** तथा [च] [1]प्रमालक्षणद्वये अप्रमालक्षणे च निर्विकल्पकं न संग्राह्यमिति भावः। **अव्यपदेश्यपदेनेति।** प्रत्यक्षलक्षणे—'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति सूत्रस्थेनाव्यपदेश्यपदेनेत्यर्थः। **नन्वेवमिति।** वृक्षः कपिसंयोगी तदभाववांश्चेति ज्ञानं यथा तद्वति तत्प्रकारकत्वेन प्रमा तथा तदभाववति तत्प्रकारकत्वादप्रमापि स्यादित्यर्थः।

**तथा चेति।** अन्योन्याभावस्याव्याप्यवृत्तित्वमङ्गीकृत्येदमुक्तम्। तदनङ्गीकारे त्वाह—**यदवच्छेदेनेति।**

---

**न्यायशिखामणिः**

प्रमात्वग्रहणं तु दृष्टान्तार्थमित्याह—**वृक्ष इति।** वस्तुतस्तु यत्रैकाधिकरणे अव्याप्यवृत्ति[2]भावाभावधीः प्रमा तत्रैव तद्विरुद्धावच्छेदेन तदुभयधीरप्रमेति सर्वसिद्धम्। तथा चैकत्र वृक्षे भावाभावयोर्या प्रमा सा अप्रमा स्यात्, [3]या च तयोरप्रमा सा प्रमा स्यादित्युभयापादनं मूले विवक्षितम्। न चैकत्र हेत्वनुपन्यासः। तदभाववतीत्यस्याभावपदान्तर्भावबहिर्भावाभ्यामुभयहेतुपरत्वादिति द्रष्टव्यम्।

नन्वेकत्र भावभावयोर्विरोधात् [4]अननुभवाच्च तदुभयप्रतीतिर्भिन्नावच्छेदेन वाच्या। तथा चावच्छेदकयोर्मूलाग्रयोर्भेदात् तदवच्छिन्नो वृक्षः परस्परं भिन्न

---

1. ख. प्राथमिकप्रमालक्षणे च
2. ख. °भावाभाववति
3. ग. तथा च
4. ख. अनुभवाच्च

### प्रकाशः

नन्वेवं गोत्ववान् संयोगवानित्यादिशाब्दप्रमायामवच्छेदकविषयत्वाभावाद-व्याप्तिरिति चेत्—न। यदवच्छेदेन यत्र यदस्ति तद्विरुद्धधर्मानवच्छेदेन [1]तत्र तदनुभवः प्रमेति विवक्षितत्वात्। एवं च यदवच्छेदेन यत्र यन्नास्ति तदवच्छेदेन [2]तत्र तज्ज्ञानमप्रमेति तल्लक्षणम्।

---

### न्यायशिखामणिः

एवेति तत्प्रतीतेस्तदभाववद्विशेष्यक[3]त्वाभावान्नातिव्याप्तिरित्युक्तमयुक्तम्। तथा सत्यन्योन्याभावस्याऽव्याप्यवृत्तित्वापत्तेरित्याशङ्क्येष्टापत्तिरित्याह — अन्योन्येति। तथैतावतैवातिप्रसङ्गवारणे यदवच्छेदेनेति विशेषणवैयर्थ्यमित्यत आह—तद-**नङ्गीकारे त्विति।**

ननु यदवच्छेदेनेत्यत्रावच्छेदकत्वं नान्यूनवृत्तित्वम्। मूलस्य [4]संयोगवद-व्याप्यवृत्तित्वात्। नाप्यनतिरिक्तवृत्तित्वम्। व्याप्यवृत्तित्वमते त्वेतदभिधानेन वृक्षत्वाग्रत्वादेरपि संयोगवदन्यावृत्तित्वेन [5]तथात्वापत्तेः। अत एव तत्समानाधि-करणत्वं तदवच्छेदकत्वमिति निरस्तम्। न चैकावच्छेदेन तत्सामानाधिकरण्यम्, अवच्छेदकलक्षणे तत्प्रवेशे आत्माश्रयापत्तेरिति चेत्—न। अवच्छेदकत्वं प्रति-योगित्वादिवत् स्वरूपसंबन्धविशेषः, स चाबाधितव्यवहारकल्प्यः। तथा च मूलावच्छेदेन वृक्षः कपिसंयोगीति व्यवहारस्य बाधाभावात् तस्यावच्छेदकत्वम्। वृक्षत्वादेश्च तादृशव्यवहाराभावान्न तथात्वम्। तथा चाग्रावच्छिन्नः कपिसंयोगीति भ्रमे न [6]प्रमालक्षणातिव्याप्तिरिति भावः।

ननु वस्तुसत्तदवच्छिन्नत्वविवक्षायामुक्तदोषतादवस्थ्यमिति तदवच्छिन्नत्वं ज्ञानविशेषणं वाच्यम्। तथा सत्यव्याप्तिरिति चोदयति — नन्वेवमिति। प्रत्यक्षे [7]सास्नाद्यवच्छिन्नत्वं संनिकर्षवशात् क्वचिद्भासत एवेति नाव्याप्तिरित्यत उक्तं—**शाब्देति। तद्विरुद्धेति।** अत्र तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वं

---

1. क. 'तत्र' नास्ति।
2. क. 'तत्र' नास्ति।
3. ग. °त्वान्नाति-
4. घ. संयोगवत्कप्यवृत्तित्वात्
5. घ. अतथात्वापत्तेः
6. ख. ग. प्रमालक्षणेऽतिव्याप्तिः
7. ख. घ. साधनाद्यव-

### प्रकाशः

नन्विदं [1]शुक्तिविशेष्यके प्रमुष्टतत्ताके रजतत्वमात्रप्रकारके स्मरणेऽव्यापकम्। तस्य तादृशावच्छेदकाविषयत्वात्।

न चावच्छेदकस्योपलक्षणत्वमभिप्रेतम्, तथा च वस्तुगत्या तदवच्छिन्ने तत्र तज्ज्ञानं तत्राप्यस्त्येवेति वाच्यम्। वृक्षः कपिसंयोगीति प्रमायामतिव्याप्त्यापत्तेः। कपिसंयोगाभावावच्छेदकमूलावच्छेदेन तज्ज्ञानाभावेऽपि वस्तुगत्या तदवच्छिन्ने तत्र वृक्षे तज्ज्ञानात्।

---

### न्यायशिखामणिः

तद्विरुद्धत्वम्। [2]तादृशधर्मानवच्छिन्नत्वं तदवच्छिन्नपदेन विवक्षितम्। तच्च शाब्दज्ञानेऽवच्छेदक[3]मात्राभानात् तत्राप्यस्तीति नोक्तदोष इति भावः।

नन्वेवमपि संयोगादिप्रमायामप्रमालक्षणातिव्याप्तिर्न परिहृतेत्याशङ्क्य उपलक्षणपरतया व्याचष्टे—एवं चेति। तत्र तदवच्छिन्नत्वं [4]तत्प्रकाराभावावच्छेदकावच्छिन्नत्वम्, उत [5]तद्विरुद्धावच्छेदकावच्छिन्नत्वम्। आद्येऽपि तदवच्छिन्नत्वं विशेषणमुपलक्षणं वा। तत्राद्यं निराकरोति—इदमिति। तदवच्छिन्नत्वेन ज्ञायमान[6]तत्प्रकारगर्भलक्षणमयथार्थस्मरणेऽव्याप्तिः[ सम् ], तत्र हेतुमाह—तस्येति। [7]तदवच्छिन्नत्वाविषयत्वं तत्रासिद्धमिति चेत्, किं शुक्तित्वं तदवच्छेदकत्वेन भासते उत तत्ता। आद्य आह—शुक्तीति। शुक्तिमात्रविषयक इत्यर्थः। अन्यथा पुरोवर्तिनि शुक्तित्वभाने भ्रमाभावप्रसङ्ग इति भावः। द्वितीये प्रमुष्टेति। यद्यपीदन्तारूपैव [8]तत्ता। सा चानुगतव्यवहारात्सर्वत्रैकैवेति नावच्छेदकत्वम्। तथा च प्रमोषकल्पनवैयर्थ्यम्। तथाप्यन्यदीयेदन्तारोपवादिमते सा नानेति द्रष्टव्यम्। स्मरण इति। यद्यपि [9]तदवच्छेदकत्वं [10]न सामानाधिकरण्यम्। तथा सति भ्रमवान् वृक्षः संयोगवानिति प्रमायास्तादृश[11]धर्मसामानाधिकरण्यविषय-

---

1. क. शुक्तिविषयके
2. ग. तादृशधर्माव-
3. ग. ०मात्राभिधानात्
4. ग. तत्प्रकारकाभावा-
5. घ. तद्विरुद्धान-
6. क. ०तत्प्रकारकत्वलक्षणं
7. ग. तदवच्छिन्नविषयत्वं
8. ग. सत्ता
9. क. ग. घ. 'तद्' नास्ति
10. क. नासामाना-
11. ख. ०धर्मासामाना-

### प्रकाशः

[1]न च तदवच्छेदेनेत्यत्र [2]तद्विरुद्धानवच्छेदेनेति विवक्षितम्। तथा च विशिष्टाभावसत्त्वान्नोक्तातिव्याप्तिरिति[3] वाच्यम्। उक्तदोषात्। न च तद्विरुद्धशाखाद्यवच्छेदेन तज्ज्ञानमिति नोक्तदोष इति वाच्यम्। तादृशशाब्दज्ञाने तथाप्यतिव्याप्तेः।

---

### न्यायशिखामणिः

त्वेन दोषतादवस्थ्यात्। किं तु निरुक्तमवच्छेदकत्वम्। तथा चेदं रजतमिति यत्र भ्रमस्तत्रापि तत्सामानाधिकरण्यभाने[4]ऽप्यवच्छेदकत्वाभानादव्याप्तिरेव। तथापि संनिकर्षादिना तदपि तत्र भासत इत्यभिप्रायेण स्मरणाभिधानम्। तच्च प्रत्यक्षव्यतिरिक्तज्ञानपरम्। प्रमेयं रूप्यमिति शुक्तिपरादनाप्तवाक्यादपि तादृशभ्रमसंभवादिति बोध्यम्।

उपलक्षणपक्षमाशङ्कते—न चेति। उपलक्षणत्वमिति। ज्ञानाविषयत्वमित्यर्थः। [5]प्रकाराभावगर्भप्रमालक्ष(ण)[णा]प्रसिद्धया तृतीयप्रमालक्षणस्य केवलान्वयिप्रमायामव्याप्तिरिति दोषे सत्येव दोषान्तरमाह—वृक्ष इति। एतच्च पुरोवर्तिविशेषणं तदवच्छिन्नत्वं [6]तदाश्रयत्वरूपमभिप्रेत्य। वस्तुतस्तदवच्छिन्नत्वस्य तत्प्रकारविशेषणत्वे तस्य स्वरूपसतः सर्वत्राभावात् भ्रममात्रे असंभव इति दूषणं बोध्यम्। द्वितीयमाशङ्कते—न चेति। तथा चेति। यद्यपि रजतत्वाभावविरुद्धं रजतत्वं तदवच्छेदकं तदेवेति प्रमुष्टतत्ताकतत्प्रकारकस्मरणेऽव्याप्तितादवस्थ्यम्। तथापि निरुक्तमवच्छेदकत्वमवच्छेद्यभेदनिबन्धनम्। अत एव गोत्वादेः सास्नाद्यवच्छेदेन वृत्तेरित्युक्तम्। तथा च तदवच्छेदकं रजतावयववृत्तित्वम् तदवच्छिन्नत्वेन चात्र रजतत्वस्याप्रतीतेस्तत्र[7] नाव्याप्तिरिति भावः। उक्तेति। वृक्षः संयोगी तदभाववांश्चेति प्रमायामवच्छेदकमात्राभानादतिव्याप्तेरित्यर्थः।

नन्वेकत्राव्याप्यवृत्तिभावाभावभानमवच्छेदकभाननियतम्, अन्यथा विरुद्धयोरप्रतीतेः। तथा चोक्तप्रमायां शाखावच्छेदेन कपिसंयोगस्य मूलावच्छेदेन च

---

1. क. न चात्रापि तदवच्छिन्नेत्यत्र
2. क. तद्विरुद्धानवच्छेदो विवक्षितः
3. क. नोक्ताव्याप्तिरिति
4. क. ॰रण्याभाने-
5. ख. ग. घ. 'प्रकाराभाव...... दोषान्तरमाह' इति ग्रन्थः त्रुटितः।
6. ख. तथाश्रयत्व-
7. क. 'तत्र' नास्ति।

## प्रकाशः

[1]वृक्षत्वादेरविरुद्धत्वात् । कपिमात्रसंयोगित्वप्रकारके प्रमुष्टतत्ताके यथार्थस्मरणे चाव्याप्तेः । विशिष्टाभावस्य [2]तत्रापि सत्त्वात् ।

## न्यायशिखामणिः

तदभावस्य भानावश्यंभावान्नातिव्याप्तिरिति शङ्कते—न चेति । किं सामग्रीवशात् शाखादेरवच्छेदकत्वभानम्, उताव्याप्यवृत्तितदुभयभानस्य तद्भाननियतत्वात् । तत्राद्य आह—तादृशेति । अव्याप्यवृत्तितदुभयप्रकारकवृक्षविशेष्यकेत्यर्थः ।

यद्यपि संनिकर्षमात्रं न प्रत्यक्षसामग्री द्रव्यत्वादेरपि भानप्रसङ्गात्, किं तु विशेषणज्ञानादिघटिता । तथा च न शाखादौ तत्सामग्रीनियम इति प्रत्यक्षसंयोगादिप्रमायामतिव्याप्तिरेव । तथाप्यभ्युपेत्याह—तथापीति ।

ननु शाखादेः पदार्थादिभिन्नत्वात् तत्र भानाभावेऽपि वृक्षत्वादेः पदार्थतावच्छेदकस्य संयोगादि[3]सामानाधिकरण्यभानान्नातिव्याप्तिरित्यत आह—वृक्षत्वादेरिति । एतच्चावच्छेदकत्वमभ्युपेत्योक्तम् । वस्तुतो वृक्षत्वादेर्निरुक्तावच्छेदकत्वं नेति बोध्यम् । सामग्रीवशात्तद्भानमिति पक्षं निराकृत्य [4]अव्याप्यवृत्तितदुभयभानान्यथानुपपत्त्या तद्भानमावश्यकमिति पक्षं निरस्यति—कपिमात्रेति । मात्रशब्दो भिन्नक्रमः । शाब्दज्ञान इति चानुषङ्गः । तथा च यत्र वृक्षः संयोगीति शाब्दज्ञानं तत्र संयोगित्वमात्रप्रकारके विरुद्धतदुभयभानप्र[5]योजकावच्छेदकभानानवश्यंभावेन तत्रापि विशिष्टाभावसत्त्वा[6]दतिव्याप्तेरित्यर्थः ।

ननु तद्विरुद्धत्वं तदत्यन्ताभावसामानाधिकरण्यम् । अवच्छेदकत्वं च सामानधिकरण्यमेव । तथा च वृक्षत्वादिकमपि संयोगावच्छेदकं तदभावविरुद्धं च । एवं च शब्दज्ञानस्याव्याप्यवृत्तिभावप्रकारकस्य तादृशतदुभयप्रकारकस्य च तादृशवृक्षत्वाद्यवच्छिन्नविषयतया विशिष्टाभावासत्त्वान्नातिव्याप्तिरित्यरुचेराह—प्रमुष्टेति । अयथार्थस्मरणस्य लक्ष्यत्वादाह—यथार्थेति । [7]गोत्वाभावविरुद्धतत्तासामानाधिकरण्यविषयत्वान्न विशिष्टाभाव [8]इत्यत उक्तं प्रमुष्टेति । तथा च

1. ख. वृक्षत्वादेरपि विरुद्धत्वात्
2. क. तत्रासत्त्वात्
3. ग. ०सामानाधिकरण्याभावात्
4. क. ख. व्याप्य-
5. ख. ०प्रयोजकतावच्छेदक-
6. ग. ०दतिव्याप्तिः
7. ख. गोत्राभावविरुद्धताशामा-
8. क. ख. इत्युक्तं

प्रकाशः

न च प्रमालक्षण इवात्रापि स्मरणमसंग्राह्यमेवेति तदव्याप्तिर्न दोषायेति वाच्यम् । [1]तथा सति तत्रापि प्रमाव्यहाराभाववदप्रमाव्यवहारस्याप्यभावप्रसङ्गात् । न चैवम् । अत एव ग्रन्थकृताप्यनुभवत्वानन्तर्भावेणाप्रमालक्षणं कृतम् ।

अथ प्रमालक्षणं [2]तावन्निरुक्तमेव, तदन्यज्ञानत्वमेवाप्रमालक्षणमस्त्विति चेत्—[3]न ह्यत्राप्रमालक्षणं प्रकृतम्, किं तु तदन्यत्वेन प्रमालक्षणार्थं [4]तदभिधान-

न्यायशिखामणिः

गोत्वाद्येकैकधर्ममात्रप्रकारके यथार्थस्मरणमात्रे तद्विरुद्धेत्यादिविशिष्टाभावसत्त्वात्त-द्धटितलक्षणातिव्याप्तिरित्यर्थः । इदं चोपलक्षणम् । इदं रजतावयवसमवेतं रजतमिति यत्र भ्रमस्तत्र तादृशधर्मसामानाधिकरण्यभानादव्याप्तिरित्यपि बोध्यम् ।

नन्वनुभवत्वमपि लक्षणे विवक्षितम् । तथा च यथार्थस्मरणे नातिव्याप्तिः । न चैवमयथार्थस्मरणे तदव्याप्तिर्दोषः स्मरणमात्रस्यासंग्राह्यत्वादिति जरत्पक्षधरमत-माशङ्क्य निराकरोति—न चेति । अप्रमालक्षणे [5]अनुभवपदान्तर्भावे मूलविरो-धोऽपीत्याह—अत एवेति । अत्र निरुक्तं प्रमालक्षणद्वयं तावत्सुदृढं, संयोगादि-भ्रमातिव्याप्तेर्यदवच्छेदेनेत्यादिना निराकृतत्वात् गोत्वादिमात्रप्रकारक[6]प्रमित्यव्याप्तेश्च तद्विरुद्धेत्यादिविवक्षया निरस्तत्वात् । तथा च अप्रमासामान्यलक्षणं निरुक्तप्रमा-न्यत्वमिति भवस्वामिभट्टानां मतम् । तदाशङ्कते—अथेति ।

[7]किमेतदप्रमालक्षणं प्रमां लक्षयितुं निरुक्तमुत स्वातन्त्र्येण । तत्रान्त्यं निरस्यति—न हीति । किं तत्प्रामाण्यमित्युपक्रमादिना प्रमात्वस्यैव प्रकृतत्वादिति भावः ।

[8]आद्येऽपि किं यत्र यन्नास्तीति वाक्यस्यैव स्वार्थपरित्यागेन निरुक्तप्रमान्य-लक्षणपरत्वम् तदन्यत्वे सतीत्यस्य च निरुक्तप्रमासामान्यलक्षणपरत्वं कल्प्यते उत

1. ख. तथा च तत्र प्रमा॰
2. क. तन्निरुक्तमेव
3. क. न तर्ह्यत्राप्रमा-
4. क. तदभिधानमत्र ।
5. ग. अभावपदा-
6. क. ॰प्रमायामव्याप्तेश्च
7. ख. नन्वप्रमालक्षणं
8. ख. घ. 'आद्येऽपि....दूषयति' इत्यस्य स्थाने—'आद्यं दूषयति' इति पाठः

प्रकाशः

मात्रम् । तथा च प्रमान्यत्वमप्रमात्वं तदन्यत्वं च प्रमात्वमित्यन्योन्याश्रयः, इतरभेदानुमितिदशायां व्यर्थविशेष्यत्वापत्तिश्चेति ।

अत्र ब्रूमः । अन्योन्याभावस्याव्याप्यवृत्तित्वाङ्गीकारे [1]यथाश्रुतस्याप्रमालक्षणस्य साधुत्वात्तन्मतेनैव तदन्यत्वेन प्रमालक्षणमत्राभिमतम्[2] । अत एव भ्रमांशप्रमासंग्रहः । अप्रमालक्षणजिज्ञासायां प्रमाभिन्नज्ञानत्वेनापि तस्य सुकरत्वमिति ।

---

न्यायशिखामणिः

तदुभयं विशेषलक्षणपरम् , इदं च ग्रन्थानुक्तमेव वाच्यमित्यभिमतम् । नान्त्यः, वक्ष्यमाणरीत्यास्य सामान्यलक्षणपरत्वे संभवति विशेषपरत्वयोगात् । किं चैवमव्याप्यवृत्तिप्रमालक्षणस्याप्रमालक्षणस्य च विशिष्याभिधानप्रसङ्गः । [यदि च पूर्वो] क्तप्रमालक्षणस्य यत्तदादिघटिततया अस्यैव विशेषलक्षणपर्यवसन्नत्वात् विशेषलक्षणजिज्ञासा तदा प्रकृतेऽपि तुल्यमित्यभिप्रेत्य दूषयति — **तथा चेति** । [3]नन्वप्रमालक्षणप्रविष्टप्रमाशब्दो नाप्रमान्यत्वपरः, येनान्योन्याश्रयः स्यात् । किं तु तद्वति तत्प्रकारकत्वपरः । तथा च तद्वति तत्प्रकारकान्यज्ञानत्वं प्रमात्वं न तदन्यानुभवत्वं प्रमात्वमिति लक्षणान्तरमविरुद्धमित्यरुचेराह—**इतरेति** । इयं प्रमा इतरेभ्यो भिद्यते प्रमान्यान्यत्वादित्यत्र प्रमात्वस्यैव हेतुत्वसंभवे [4]शेषवैयर्थ्यमित्यर्थः ।

एतच्चापाततः । तदन्यान्यत्वे अवच्छेदकान्तराभावेन तत्र यन्निष्ठेति न्यायेन विशिष्टधर्मस्यैवावच्छेदकत्वात् । वस्तुतो ग्रन्थानुक्ताप्रमालक्षण(स्थानेऽपि) [स्थापनेऽपि] तदुक्तलक्षणे दोषानुद्धारात्तत्र साधितमित्यत्र तात्पर्यम् । अत एव स्वयं तत्र दोषमुद्धरति—**अत्र ब्रूम इति** ।

ननु संयोगवति मूलावच्छिन्नवृक्षे तद्भिन्नाग्रावच्छिन्नवृक्षवृत्तितदभावस्याभावान्न तद्विशेष्यकसंयोगप्रमायामतिव्याप्तिरिति हि ते मतम् । तत्र तदवच्छिन्नवृक्षभेदः किं प्रतीतिबलादुत [5]तत्प्रयोजकसत्त्वात् । नाद्यः, अग्रावच्छिन्नवृक्षो मूलाव-

---

1. ख. यथाश्रुतस्यैव प्रमा
2. क. ०भिहितम् ततो भ्रमांशसंग्रहः
3. क. 'नन्वप्रमालक्षण....मित्यरुचेराह' इति ग्रन्थस्त्रुटितः ।
4. क. विशेष्यवैयर्थ्य-
5. ख. त्वप्रयोजकसत्त्वात्

न्यायशिखामणिः

च्छिन्नो नेति प्रतीतेरेवासिद्धेः। सिद्धौ वा तस्याः श्यामो घटो रक्तो नेतीतिवदावश्यकावच्छेदकभेदविषयत्वेनान्यथासिद्धत्वात्। अन्यथा य एव मूलावच्छिन्नो वृक्षः स एवाग्रावच्छिन्न इत्यबाधितानन्यथासिद्धाभेदप्रतीतिविरोधात्।

नन्वियं प्रतीतिर्वृक्षत्वाभेदमवलम्बत इति न तद्विरोध इति चेत्—तर्हि सोऽयं घट इति प्रत्यभिज्ञाया अपि घटत्वाभेदविषयत्वापत्तेः। यदि च भेदप्रतीतेः श्यामरक्तिमादिगुणविषयत्वेन प्रमात्वोपपत्तौ बाधकान्तराभावेन प्रत्यभिज्ञाया व्यक्त्यभेदविषयत्वं तदा प्रकृतेऽपि तुल्यम्। न चैवं सोऽयं गकार [1]इत्यभेदप्रतीतेरपि वर्णव्यक्त्यभेदविषयत्वापत्तौ शब्दस्थैर्यप्रसङ्ग इति वाच्यम्। तत्रोत्पत्तिविनाशादिविषयबहुप्रतीतिविरोधेन त्यजेदेकमित्यादिन्यायेन अगत्या जात्यभेदविषयत्वकल्पनादित्यादि शब्दखण्डे स्फुटम्। न चेह भेदप्रतीतिविरोधादन्यद्बाधकमस्ति, येन जात्यभेदविषयत्वं स्यात्।

नान्त्यः, अवच्छेदकभेदस्यावच्छेद्यभेदाप्रयोजकत्वात्। अत एव घटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद्भिद्यत इति [2]सर्वतन्त्रसिद्धान्तः। किं चावच्छेदकभेदात्तद्भेदसाधनं न युक्तम्, उक्ताभेदप्रत्यक्षविरोधात्। [3]अपि च मूलाग्ररूपादवयवभेदाद्वृक्षभेदे पुरुषस्यापि पादमस्तकादिभेदेन भेदापत्तिः। तस्मान्मूलाग्रावच्छिन्नवृक्षभेदाभावात् उक्तातिव्याप्तिर्दुर्निवारा।

[4]नन्ववच्छिन्नभेदाभावेऽपि नातिव्याप्तिः। संयोगतदभावयोरावश्यकावच्छेदकवृत्तितया तद्विशेष्यकसंयोगादिप्रमायास्तदभाववद्विशेष्यकत्वाभावात् वृक्षे च विरोधेन भावाभावप्रतीतेरेवासिद्धेस्तत्रापि नातिव्याप्तिरिति भिन्नावच्छेदेनेति समाधानग्रन्थार्थो विवक्षित इति चेत्—तर्हि अन्योन्याभावस्याव्याप्यवृत्तित्वमङ्गीकृत्योक्तमिति [5]त्वद्वचनव्याघातात्।

किं चैवमपि नायं परिहारो युज्यते, वृक्षविशेष्यकसंयोगादिप्रतीतिविरोधेन मूलादौ तत्सत्त्वकल्पनस्याप्रामाणिकत्वात्। न च भावाभावयोरेकत्र [6]बाधात् सविशेषणे हीति न्यायेन तत्प्रतीतेर्मूलादौ पर्यवसानमिति वाच्यम्। यत्रावच्छेदक-

---

1. ख. इत्यभेदप्रतीतोऽपि
2. क. सर्वसिद्धान्तः
3. ख. ग. घ. 'अपि च...दुर्निवारा' इति ग्रन्थो नास्ति।
4. ख. नन्ववच्छिन्ने भेदा-
5. क. ग. तद्वचन-
6. घ. विरोधात्

## न्यायशिखामणिः

भेदेनापि विधिनिषेधयो[1]रनन्वयस्तत्रैव तन्न्यायः, यथा स्वर्गी [2]उत्पन्नो ध्वस्त इत्यादौ। प्रकृते चावच्छेदकभेदेन तदुभयसंभवान्न तन्न्यायावकाशः। अत एवात्मनि सुखादिप्रतीतिः शरीरावच्छेदेन तद्विषयैव। तस्मात् वृक्षः संयोगी तदभाववांश्चेति प्रतीतावप्रमालक्षणमतिव्याप्तमेवेति। [3]किं च यथार्थस्मृतावतिव्याप्तिः। अत एवाप्रमान्यत्वमेतन्मते प्रमालक्षणं युक्तमिति निरस्तम्। अन्योन्याभावव्याप्यवृत्तित्वस्य निराकृतत्वादित्यस्वरसादाह—अप्रमेति। अयं भावः—यत्र यन्नास्तीत्यत्र व्याप्यवृत्तिप्रकारकत्व[4]घटितमप्रमालक्षणम्। तदन्यत्वे सतीत्यत्र तादृशाप्रमान्यत्वं प्रमालक्षणं च विवक्षितम्। तत्र चोभयत्र व्याप्यवृत्तिप्रकारकाप्रमाप्रमयोरेव लक्ष्यत्वान्नोक्तदोषः। [5]तदभाववतीत्यत्र च नञ्व्यत्यासेन तद्वति तत्प्रकारकानुभवत्वाभावोऽप्रमासामान्यलक्षणम्। इदं च जिज्ञासायामभिहितमिति प्रासङ्गिकत्वान्न प्रकृतासंगतिर्दोष इति।

अत्रेदं चिन्त्यम्। वक्ष्यमाणरीत्या सामान्यलक्षणपरत्वसंभवे विशेषपरत्वायोगात्। किं चैवमव्याप्यवृत्तिप्रमालक्षणस्य तदप्रमालक्षणस्य च [6]विशिष्याभिधानप्रसङ्गः। यदि च निरुक्तप्रमालक्षणस्य यत्तदादिघटिततयास्यैव विशेषलक्षणपर्यवसन्नत्वान्न विशेष[7]लक्षणजिज्ञासा, तदा प्रकृतेऽपि तुल्यम्।

अपि चैवमपि भावरूपमप्रामाण्यं [8]न निरूपितं स्यात्। तथा च [9]प्रथममप्रामाण्याभावः साध्य इत्यादि बहु व्याकुलमापद्येत। तथा प्रमालक्षणस्य यदवच्छेदेनेत्यादिना मूलेऽवच्छेदक[10]गर्भत्वोक्तिस्तद्विरुद्धेत्यादिना [11]व्याख्याने तद्विवक्षा च न युक्ता, वक्ष्यमाणरीत्या तदनन्तर्भावेणैव लक्षणसामञ्जस्यादिति।

अत्र ब्रूमः। यथाश्रुतमेव प्रमालक्षणम्। न च मूलावच्छेदेन वृक्षः कपिसंयोगवानग्रावच्छेदेन तदभाववांश्चेति प्रतीतावतिव्याप्तिः। वृक्षप्रकारयोः [12]संयो-

---

1. ख. ग. ०रन्वयः
2. क, म. 'उत्पन्नो' नास्ति।
3. क. 'किं च यथार्थ...यथाश्रुतमेव साधु' इति ग्रन्थस्त्रुटितः।
4. ख. ०घटितं प्रमा-
5. ख. तदभावादित्यत्र च
6. ख विशिष्टाभिधान-
7. ख. 'लक्षण' नास्ति।
8. ग. 'न' नास्ति।
9. ख. प्रथमं प्रामाण्या-
10. ख. ०गर्भोक्तिः
11. ख. व्याख्या न्वेतद्विवक्षा
12. ख. संबन्धयोगतदभावयोः

गोत्वादेरपि सास्नाद्यवच्छेदेन वृत्तेः । पाकरक्ते श्यामोऽयमिति धीः प्रमैव । कदाचित्तत्र तत्सत्त्वात् । इदानीं श्याम इति त्वप्रमैव । न च यत्तद्भ्यां लक्षणाननुगमः, न हि प्रमा सर्वत्र प्रमा, किं तु क्वचित् । तथा च किं ज्ञानं कुत्र प्रमेति तत्तद्विशेषस्य लक्ष्यत्वेन यत्तद्भ्यामेव लक्षणं युक्तम् ।

---

प्रकाशः

नन्वेवं व्याप्यवृत्तिगोत्वादिप्रमायामव्याप्तिः । तस्यावच्छेदकावच्छेदेन वृत्त्यभावादित्यत आह—**गोत्वादेरपीति** । व्याप्यवृत्तिगोत्वादेरपि सास्नादिपरिचायितव्यक्तित्वावच्छेदेन व्यक्तौ व्याप्य वर्तमानत्वादित्यर्थः । **कदाचिदिति** । यत्र यदस्तीति लटा तद्वतीत्यत्र मतुपा वर्तमानत्वस्याविवक्षितत्वात् । अन्यथा अतीतानागतधर्मप्रकारकप्रमानुपसंग्रहापत्तेरिति भावः । **तथा चेति** । लक्ष्याननुगमेन हि लक्षणाननुगमो दोषः । अत्र तु न तथेति भावः ।

---

न्यायशिखामणिः

गतदभावयोस्तत्र सत्त्वेन तत्प्रकारांशे प्रमात्वस्येष्टत्वात् । संयोगतदभावप्रकारयोर्मूलाग्रावच्छिन्नत्वयोस्तत्रासत्त्वेन मूलावच्छिन्नत्वादिप्रकारांशे लक्षणाभावात् । [1]एवमप्रमालक्षणमपि यथाश्रुतमेव साधु । [2]तथा हि [3]तत्प्रकारनिरूपिततत्संबन्धावच्छिन्नप्रतियोगिकान्योन्याभाववद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वमप्रमात्वमिति यत्र यन्नास्तीत्यादिना विवक्षितम् । अन्योन्याभावव्याप्यवृत्तित्वमतेनेदं लक्षणमिति नाव्याप्यवृत्तिप्रकारक[4]प्रमायामतिव्याप्तिः । शब्दे चाकाशत्वावच्छिन्नान्योन्याभावसत्त्वेऽपि तत्संबन्धावच्छिन्नप्रतियोगिकान्योन्याभावासत्त्वान्न [5]तद्विशेष्यकाकाशप्रमायामतिव्याप्तिः । अयथार्थस्मरणे चोक्तलक्षणसत्त्वान्नाव्याप्तिः । मूलावच्छेदेन [6]वृक्षः कपिसंयोगीति प्रतीतेर्मूलांश एव [7]अप्रमात्वम् । [8]तत्र चोक्तलक्षणमस्तीति नाव्याप्तिरिति संक्षेपः ।

---

1. ख. घ. एवं प्रमा-
2. क. अत्र ब्रूमः for तथा हि
3. ख. तत्प्रकारकनिरूपिततत्संबन्धवदन्योन्याभाववद्विशेष्यकत्वे
4. ग. ०प्रमायामव्याप्तिः ।
5. ख. तद्विशेष्यका-
6. क. वृक्षे संयोगादिप्रतीतेः
7. घ. प्रमात्वम्
8. क. अत एवोक्त-

अन्ये तु—अनुभवत्वमेव प्रामाण्यम्, भ्रमेऽप्यंशमादाय प्रमाव्यवहारात्। रजतादिप्रमाप्रमा च विशिष्य लक्षणीया, रजतत्ववति तदनुभवः तदभाववति तदनुभवो वेत्यादिना।

---

प्रकाशः

अननुगमभीरूणां मतमाह—अन्ये त्विति। भ्रमेऽपीति। तथा चान्योन्याभावस्य व्याप्यवृत्तित्वपक्षे भ्रमे प्रमाभिन्नत्वाभावादनुभवत्वेन [1]भ्रमे (तदभेद)[भ्रमेतरभेद]साधनं भवत्येवेति भ्रमांशातिप्रसक्तिर्न दोषायेति भावः।

---

न्यायशिखामणिः

[2]अवच्छेदकावच्छेदेनेति। अव्याप्यवृत्तेर्विरोधपरिहारायावच्छेदकापेक्षायामपि व्याप्यवृत्तिगोत्वादौ तदनवश्यंभावादिति भावः। सास्नाद्यवच्छिन्नत्वानुभवादनुगतधर्मस्य बाधकं विनानुगतावच्छेद्यत्वनियमाच्च [3]गोत्वादौ तदवच्छेदकमित्याह—अत आहेति। ननु सास्ना न व्याप्यवृत्तिगोत्वावच्छेदिका लाङ्गूलावच्छेदेन तदभावादित्यत आह—सास्नादीति। सास्नादीत्यनेन गोत्वव्यञ्जकावयवसंस्थानविशेषो विवक्षितः। अन्यथा छिन्नसास्नायां गवि तदभावप्रसङ्गात्। न च तदापि तदुपलक्षितत्वमस्त्येव, परिचितेत्यनेन तथैव लाभादिति वाच्यम्। तथाप्युपलक्ष्यतावच्छेदकत्वेन तस्यावश्यकत्वादिति भावः।

ननु लडाद्यर्थस्य वर्तमानत्वस्य [4]तत्र बाधात्कथं प्रमात्वमित्यत आह—यत्रेति। तथाप्यननुगमो न निराकृत इत्याशङ्क्य न हि [5]स निराक्रियते, किं तु तद्दोषत्वमित्याह—लक्ष्येति। अनुभवत्वं भ्रमेऽतिप्रसक्तमिति चेत्—किं व्यवहारापादकत्वाद्दोषः उत लक्षणेन व्यतिरेकविधया भेदसाधने भ्रमे व्यभिचारबाधान्यतरापादकत्वात्। तत्राद्यं दूषितं मूले भ्रमेऽपीत्यत्र। स्वयमन्त्यं दूषयति—तथा चेति। प्रमाभिन्नत्वाभावादिति। प्रमाभिन्नत्वरूपसाध्याभावस्याभावादित्यर्थः।

---

1. क. तत्र प्रमेतरसाधनं संभव-
2. ख. ग. घ. अवच्छेदकेति।
3. ख. 'गोत्वादौ...विवक्षितः' इति ग्रन्थस्त्रुटितः।
4. घ. तत्राबाधात्
5. ख. सन्निराक्रियते

नन्वनुभवत्वस्य प्रमाप्रमासाधारण्येन तज्ज्ञानस्य न निष्कम्प-प्रवृत्त्यङ्गत्वमिति चेत्—सत्यम्। विशेषविषयप्रमाया एव प्रवर्तकत्वात्।

---

**प्रकाशः**

**विशेषेति।** तथा च प्रमाव्यवहारार्थं तल्लक्षणे अनुभवत्वगर्भत्वम्, न तु प्रवृत्त्यङ्गत्वेन, स्मृतेरपि निष्कम्पप्रवृत्तेरिति ध्येयम्। तत्रेदमनभिमतिबीजम्। न ह्यत्र इतरभेदसाधनाय प्रामाण्यनिर्वचनम्, किं तु निष्कम्पप्रवृत्त्यङ्गत्वेन। तच्च नानुभवत्वं, भ्रमसाधारण्यादित्याकर एव स्फुटमिति।

---

**न्यायशिखामणिः**

प्रतियोगितावच्छेदकस्यैवान्योन्याभावात्यन्ताभावरूपत्वाभ्युपगमेन प्रमेतरत्वस्य स्वावच्छिन्नान्योन्याभावरूप[1]साध्यात्यन्ताभावत्वादिति भावः। [2]**भ्रमेतरभेदसाधनमिति।** भ्रमतदितरसर्वांशप्रमापक्षकं भेदसाधनमित्यर्थः।

ननु विशेषप्रमात्वस्य रजतत्ववतीत्यादेः [3]प्रवृत्त्यौपयिकत्वेऽनुभवपदवैयर्थ्यमित्यत आह—**तथा चेति। तल्लक्षण इति।** विशेषलक्षणे यदनुभवगर्भत्वं तत्तस्य [4]व्यवहाराङ्गत्वसिद्ध्यर्थमेव। न तु प्रवृत्त्यर्थमपि तदुपात्तम्, येन स्मृत्यापि प्रवृत्तेस्तद्वैयर्थ्यमित्यर्थः। अनुभवत्वरूपं प्रमात्वं किमितरभेदसाधनायैव उत प्रमाव्यवहारायापि, [5]नाद्य इत्याह—**न हीति।** द्वितीयमनूद्य दूषयति—[6]**किं त्विति। निष्कम्पेति।** प्रमापदप्रवृत्तिनिमित्तत्वेनेत्यर्थः। अन्यथा **मणिकृन्मते**ऽप्यगतेः। यत्र यदस्तीत्यादेरप्यनुभवगर्भत्वेन प्रवृत्त्यङ्गत्वाभावात्। प्रत्युत प्रमाव्यवहार[7]जनकमस्त्विति पूर्वपक्षवाक्यस्य, [8]निर्विकल्पकं च प्रमाप्रमाबहिर्भूतं व्यवहारानङ्गत्वादिति सिद्धान्तवाक्यस्य च दर्शनेन व्यवहारोपयोगिप्रमात्वस्यैव निरूप्यत्वात्।

**भ्रमेति।** यत्रेदन्ताप्यन्यदीया आरोप्यते, यत्र वा प्रमुष्टतत्ताकयथार्थस्मरणानन्तरं मनसा तादृशमेव ज्ञानं जायते तत्रोभयत्राप्यनुभवत्वमस्तीति कथं

---

1. ख. °साध्याभावत्व
2. क. भ्रमेतरसाधन-
3. ख. ग. प्रवृत्त्यौपाधिक-
4. ख. °व्यवहारानङ्गत्व-
5. क. इति विकल्प्याद्यं दूषयति न हीति।
6. ख. किंचिदिति।
7. ग. °जनकत्वमस्त्विति।
8. ख. निर्विकल्पकप्रमाप्रमा- क. 'निर्विकल्पकं च प्रमाप्रमाबहिर्भूतम्' इति नास्ति

अतिरिक्तविषयतापक्षे विषयताश्रयावृत्त्यप्रकारकानुभवः प्रमा। केवलान्वयिनि विषयताश्रयावृत्तिरवृत्तिरेव प्रसिद्धः।

यद्वा यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकः, स्वप्रकारसमानाधिकरणविषयताको वानुभवः प्रमा।

---

प्रकाशः

**विषयतेति**। अत्र निर्विकल्पकमपि संग्राह्यमेवेति ध्येयम्। अत्र गगने गगनत्वमित्यादिगगनप्रकारकप्रमायां कथं नाव्याप्तिरिति चिन्त्यम्। न च [1]विषयताश्रयावृत्तिसंबन्धप्रतियोग्यप्रकारकत्वं विवक्षितमिति नोक्तदोष इति वाच्यम्। केवलान्वयिनि तादृशसंबन्धस्याप्रसिद्धेः। न च समवाये प्रसिद्धिः, तद्विषयकगुणादिप्रमाया[2]मव्याप्तेः। **तत्प्रकारेति**। तत्प्रकार(क)संबन्ध[3]समानाधिकरणविषयताक इत्यर्थः। [4]एवमग्रेऽपि। **स्वप्रकारेति**। न च पूर्वेणाभेद इति वाच्यम्। अत्र स्वपदेन ज्ञानस्य विवक्षितत्वात्।

---

न्यायशिखामणिः

तत्प्रवृत्तिनिमित्तं स्यादित्यर्थः। न तु भ्रमांशसाधारण्यादित्यर्थः। प्रमासामान्यव्यवहारप्रयोजकतयान्योक्तस्यानुभवत्वस्य विशेष्यव्यवहारप्रयोजकत्वनिराकरणे अनुक्तोपालम्भप्रसङ्गात्।

नञ्द्वयोपादानप्रयोजनमाह—**निर्विकल्पकमपीति**। **केवलान्वयिनीति**। सर्वस्यापि सर्वं प्रमेयमिति ज्ञानविषयताश्रयत्वेन तदवृत्तिसंबन्धस्याप्रसिद्धेरित्यर्थः। समवायस्य संबन्धान्तराभावादवृत्तित्वमित्यभिमानिनः [5]शङ्कामपनुदति—**न चेति**। समवाये समवायान्तराभावेऽपि स्वरूपसंबन्धसत्त्वान्न तत्र तत्प्रसिद्धिः, अन्यथा [6]अव्याप्तिरित्याह—**तद्विषयकेति**। अत्र स्वविषयताश्रयावृत्तिसंबन्धप्रतियोगिप्रकारकत्वं रजतादिभ्रमे प्रसिद्धम्। [7]तदभावः केवलान्वयिप्रकारकप्रमायां सुग्रहः। न च स्वपदस्य प्रकृतपरामर्शकत्वात् कथं भ्रमे तत्प्रसिद्धिरिति वाच्यम्। अभाव-

---

1. क. विषयतावृत्तिसंबन्ध-
2. क. °मव्याप्तिः।
3. ख. °व्यधिकरण-
4. ख. 'एवमग्रेऽपि....विषयताकमित्यर्थः' इति ग्रन्थो नास्ति।
5. ग. शङ्कामनुवदति।
6. ख. अव्याप्तिरित्यर्थः। अतद्विषयकेति।
7. क. 'तदभावः' नास्ति।

(यत्प्रकारिका)[यत्प्रकारा]या विषयता तत्प्रकारव्यधिकरणविषयताकं स्वप्रकारव्यधिकरणविषयताकं वा ज्ञानं भ्रमः। प्रकारभेदेनैकत्र विषयताभेद इति लक्षणद्वयसमावेशात् प्रमाभ्रमसंकरः।

यद्वा विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी, विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोगी वा, विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वाप्रतियोगी वा, विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा अनुभवः प्रमा।

---

**प्रकाशः**

यत्प्रकारेति। यत्प्रकारसंबन्धव्यधिकरणविषयताकमित्यर्थः। संकर इति। यद्यप्येकविषयतापक्षेऽपि अंशभेदविवक्षया न [1]दोषः, तथापि प्रकारभेदेन विषयताभेदोऽस्तीत्ययमपि प्रकार उक्तः। विशेष्यनिष्ठेति। विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिसंबन्ध([2]प्रकार)[प्रतियोगिप्रकारक]विषयताप्रतियोगित्वमित्यर्थः। तेनावृत्तिप्रकारकप्रमायां नाव्याप्तिरिति ध्येयम्। [3]अत्यन्ताभावे च प्रतियोगिव्यधिकरण्यं (च) विशेषणम्, तेनाव्याप्यवृत्तिप्रकारकप्रमायां नाव्याप्तिरिति ध्येयम्। यत्तु संयोगत्वादेरेव प्रकारत्वम्, तस्य व्याप्यवृत्तित्वमेवेति। तन्न। संयोगप्रकारकप्रमायां तदाप्यव्याप्तेः। संयोगवत् तद्घटितसंयोगित्वस्याप्यव्याप्यवृत्तित्वाच्च। एवमग्रिमलक्षणेऽप्यूह्यम्।

---

**न्यायशिखामणिः**

प्रतियोगिसमर्पकस्वपदस्य यत्र प्रतियोगिप्रसिद्धिस्तत्परत्वात्। अन्यथा स्वोपादानगोचरेत्यादावप्यगतेरिति समाधानमत्र द्रष्टव्यम्।

अवृत्तिप्रकारकप्रमायामव्याप्तेराह—तत्प्रकारसंबन्धेति।

तद्घटितेति। अन्यथा वृक्षत्वावच्छेदेन कपिसंयोगित्वप्रतीत्यापत्तेरिति भावः। यद्यपि [4]कपिसंयोगित्वं तत्समवायः, स च सर्वत्रैकत्वाद्व्याप्यवृत्तिः;

---

1. क. दोष इति,
2. ख. ०शालिप्रकार-
3. ख. 'अत्यन्ताभावे च.........व्याप्यवृत्तित्वमेवेति' इति ग्रन्थो नास्ति।
4. घ. 'कपि नास्ति।

स्वसमानाधिकरणप्रकारानवच्छिन्नविषयताप्रतियोगि ज्ञानं, स्वव्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगि ज्ञानं वा भ्रमः। इदं रजतमिति भ्रमे च विषयताद्वये व्यधिकरणप्रकारावच्छिन्नत्वतदनवच्छिन्नत्वयोः विषयत्वप्रतियोगित्वतदप्रतियोगित्वयोरविरोधात्। समूहालम्बने च विषयताभेदान्न प्रमाप्रमालक्षणेऽव्याप्त्यतिव्याप्ती।

वस्तुतस्तु विशेषणताविशेषो नास्त्येव, मानाभावात्। सामान्यतो ज्ञाने ज्ञाते तस्य क्वचिद्विशेषणतेति सामान्यतो विशेषणताज्ञानेऽपि घटमयं जानाति न वेति संदेहतादवस्थ्यात्।

---

प्रकाशः

स्वव्यधिकरणेति। विषयताव्यधिकरणसंबन्धप्रतियोगि[1]प्रकारावच्छिन्नविषयताप्रतियोगीत्यर्थः। तेन गगने गगनत्वमिति प्रमायां [2]नातिव्याप्तिरिति ध्येयम्।

भ्रमे प्रमाभ्रमसंकरमाह—इदमिति। ननु समूहालम्बने घटपटोभयवृत्तिरेकैव विषयता। सा च घटरूपविशेष्यनिष्ठात्यन्ताभावप्रतियोगिपटत्वावच्छिन्नापीति प्रमालक्षणं तत्राव्यापकं, भ्रमलक्षणं चातिव्यापकमित्यत आह—समूहेति। [3]विषयताभेदे च घटविषयता न पटत्वावच्छिन्नेति नोक्तदोषः। स्वैकदेशिमतं दूषयति—वस्तुत इति। तथा च तद्घटितानि लक्षणानि अप्रसिद्धानीति भावः।

---

न्यायशिखामणिः

तथापि तन्निरूपितसमवायो न तथा। अत एव वायौ रूपसमवायसत्त्वेऽपि तस्य तन्निरूपितत्वं नेति वायुर्न रूपीत्युच्यते।

नन्विदमित्यादेरविरोधादित्यन्तस्य न तावत्समूहालम्बनेनाव्याप्त्यतिव्याप्ती [4]इत्यग्रिमग्रन्थेन संबन्धः, वैयधिकरण्यात्। नापि पूर्वेण भ्रम इत्यनेन। तथापि [5]प्रमालक्षणोपपादनांशानन्वयप्रसङ्गादित्याशङ्क्य [6]प्रमाभ्रमसंकर इति व्यवहितेनानु-

---

1. क °प्रकारकावच्छिन्न-
2. ख. नाव्याप्तिरिति
3. क. 'विषयताभेदे च...अप्रसिद्धानीति भावः' इति नास्ति।
4. ख. ग. घ. इत्यग्रिमेण
5. ख. प्रमालक्षणोपपादनांशान्न्याय-प्रसक्तात्
6. क. ख. ग. भ्रमप्रमासंकरः

तस्मात् घटतज्ज्ञानयोः स्वरूपग्रहेऽपि तदीयत्वं तद्विषयत्वं न गृहीतमिति तद्विषयत्वे संदेहः। तदीयत्वं च संबन्धं विना तत्संबन्धस्वभावत्वम्। तदुक्तम्—'प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषः तद्विषयत्वम्' इति।

---

### प्रकाशः

तदुक्तम्। आत्मतत्त्वविवेक इति शेषः। प्रकाशस्येति। प्रकाशत्वे सतीत्यर्थः। तेन प्रकाशस्यैव स्वाभाविकं [1]सविषयत्वं लाघवात्, इच्छादीनां [2]तु ज्ञानोपाधिकमिति ध्वनितम्।

---

### न्यायशिखामणिः

पक्षेन तमाह—भ्रम इति। अप्रमारूपे च तदुभयस्यादोषत्वादाह—प्रमेति।

नन्वात्मतत्त्वविवेके प्रकाशस्येत्यादिना तदीयतानियामकस्वभावविशेषस्तद्विषयत्वम्। तच्च प्रकाशस्यास्तीत्युक्तमयुक्तम्। घटीयरूपे तस्यातिव्याप्तेरित्यत आह—प्रकाशत्व इति। यद्यपि तदीयतानियामकस्वभावविशेषस्य फलबलकल्प्यस्यानतिप्रसक्तत्वात् सत्यन्तवैयर्थ्यम्, तथापि प्रकाशत्वं सविषयत्वलक्षणं तदीयतेत्यादि [3]तद्विषयलक्षणमित्यत्र तात्पर्यम्। लक्षणद्वयाव्याप्तिं निरस्यति—तेनेति। स्वाभाविकं—मुख्यम्। इच्छादावपि तत्स्वाभाविकं किं न स्यादित्यत आह—लाघवादिति। ज्ञानस्य मुख्यं सविषयत्वमन्यत्र तु [4]तज्जन्यत्वादिनिबन्धनतद्व्यवहारोपपत्तौ सर्वत्र तत्कल्पने गौरवादिति भावः।

अत्रेदं चिन्त्यम्। इच्छाकृत्योरप्यस्तु स्वाभाविकं [5]सविषयत्वम्। घटविषयकं ज्ञानमितिवत् घटगोचरेच्छेत्यादिव्यवहारस्य तत्कल्पकस्याविशेषात्। न च लाघवात् ज्ञानस्यैव मुख्यं तदिति वाच्यम्। तत एवेच्छायां तन्मुख्यम्, [6]ज्ञानप्रयत्नयोस्तु तज्जन्यतज्जनकत्वोपाधिकस्तद्व्यवहार इति वैपरीत्यस्यापि सुवचत्वात्। यदि [7]चेच्छाजनकत्वमज्ञात्वापि ज्ञाने सविषयत्वव्यवहारदर्शनान्न [8]तदुपाधिकस्तत्र

---

1. क. 'स' नास्ति।
2. क. 'तु' नास्ति।
3. क. तद्विषयकलक्षण-
4. क. तज्जन्यत्वादिसंबन्धेन
5. क. ग. सविषयकत्वम् घ. स्वविषयत्वम
6. ख. ज्ञानप्रयुक्तायास्तु
7. ख. चेच्छाजन्यत्वं ज्ञात्वापि
8. क. एतदुपाधिकः

संबन्धं विना कथं तदीयत्वम्, संबन्धस्यैव स्वभावत्वात्, यथा तवैव विशेषणतायाम्। अन्यथानवस्थानात्। अन्यत्रापि स्वरूपसंबन्धे एषैव गतिः। अन्यथा सामान्येनाभावसमवाययोर्ज्ञानेऽधिकरणे ज्ञाते तयोः संशयो न स्यात्, अधिकरणतदुभयस्वरूपाणां ज्ञातत्वात्। तत्राप्यभावसमवाययोर्विशेषणताविशेषो न गृह्यत इति चेत्—न। सामान्यतस्तद्ग्रहेऽपि संशयात्।

---

प्रकाशः

ननु दण्डादेः पुरुषीयत्वं संबन्धे न दृष्टम्, तत्कथमसंबन्धस्य तदीयत्वमित्याह— संबन्धमिति। अतिरिक्तसंबन्धं विनेत्यर्थः। परिहरति—[1]संबन्धस्यैवेति। [2]स्वरूपसंबन्धस्यैवेत्यर्थः। यथेति। न हि विशेषणतायां तदीयत्वं विशेषणान्तराधीनम्, अनवस्थानात्। तथा च यथा तत्र [3]स्वभावत एव तदीयत्वं तथात्रापीत्यर्थः। अन्यथेति। यदि तदीयत्वाग्रहात्संशयो न समर्थनीयस्तदेत्यर्थः। सामान्यत इति। कचिदभावस्य विशेषणतेत्येवंरूपेणेत्यर्थः।

---

न्यायशिखामणिः

तद्व्यवहार इति, तदा प्रकृतेऽपि तुल्यम्। न चेच्छाकृत्योरपि [4]सविषयत्वे ज्ञानवद्विषयप्रकाशकत्वापत्तिरिति वाच्यम्। स्वभावविशेषादेव ज्ञानस्य प्रकाशकत्वमन्ययोर्न तथात्वमिति व्यवस्थोपपत्तेः। अन्यथा ज्ञानादिवद्धर्माधर्मयोरप्यात्मविशेषगुणत्वान्मानसप्रत्यक्षतापत्तेः। यदि च [5]तथात्वेऽपि केषांचित् प्रत्यक्षत्वं केषांचिदतीन्द्रियत्वमित्यत्र अनुभवसिद्धः स्वभावविशेषो नियामक इति, तदा प्रकृतेऽपि तुल्यम्। तस्मात् ज्ञानेच्छाकृतीनां मुख्यं सविषयत्वमित्यलमतिविस्तरेण।

ननु संबन्धस्य संबन्धान्तराभावे संयोगे समवायकल्पनवैयर्थ्यमित्याशङ्क्य, न हि तत्र संबन्धत्वप्रयुक्तं तत्कल्पनम्, किं तु गुणत्वप्रयुक्तम्। अत एव समवाये न स्वरूपातिरिक्तसंबन्धाभ्युपगमः। प्रकृते च गुणत्वाद्यभावान्न स्वातिरिक्तसंबन्धकल्पनमित्यभिप्रेत्याह—स्वरूपेति। एषैव गतिरित्युक्तस्य वैपरीत्यमन्यथाशब्दार्थ इति

---

1. क. संबन्धस्येति।
2. क. स्वरूपसंबन्धस्येत्यर्थः
3. ख. स्वभाव एव
4. क. सविषयकत्वे
5. क. तथापि

यत्तु समूहालम्बनविशिष्टज्ञानयोर्विशेषानुभवाद्विशिष्टज्ञाने विशेषणताविशेषो विषय इति। तन्न। विशेषणतामादायापि समूहालम्बनसंभवात्। तत्रापि विशेषणतान्तरस्वीकारेऽनवस्था।

समूहालम्बनात्तु विशिष्टज्ञानस्य विशेषः कारणकृतः कार्यकृतः प्रकारकृतो वा।

प्रकाशः

विशेषणतामिति। [1]दण्डपुरुषविशेषणता इति समूहालम्बने विशेषणताया अपि भाने [2]तद्विषयकृतापि [कृतोऽपि] न विशिष्टधियो विशेष इत्यर्थः।

ननु [3]विशेषणतायामपि विशेषणतास्ति। सा च [4]विशिष्टज्ञाने भासते न तु समूहालम्बन इति तत्र तत एव विशेषः स्यादित्यत आह—तत्रापीति। तर्हि को वानयोर्विशेष इत्यत आह—समूहेति। कारणकृत इति। विशिष्टज्ञाने विशेषणज्ञानं कारणम्। समूहालम्बनं [5]तु युगपदुभयज्ञानसामग्रीत इत्यर्थः। [6]विशेषणज्ञानहेतुत्वेऽपि तत्स्वरूपाविशेषे कुतो विशेषः स्यात्। कारणकृतो हि विशेषः अत्रापि विशेषणज्ञानजन्यत्वम्। तच्च न शक्यं (तद्गृहीतुं) [ग्रहीतुं] विशिष्टज्ञानत्वं समूहालम्बनव्यावृत्तं कार्यतावच्छेदकं (गृहीतत्वेति) [अगृहीतत्वेति]

न्यायशिखामणिः

भ्रमं वारयति यदीति। ननु विशेषणतां कारणत्वेनादाय समूहालम्बनसंभवेऽपि तद्विषयस्य तद्भेदकत्वे किमपि दूषणं नोक्तमित्यत आह—दण्डेति। नन्विन्द्रियादेरुभयसाधारणत्वात्तज्जन्यत्वं न विशेष इत्यत आह—विशिष्टेति।

ननु कारणकृतविशेषशब्देन विशेषणज्ञानगतं विशिष्टज्ञानहेतुत्वम्, उत विशिष्टज्ञानगतं तज्जन्यत्वम्। तत्राद्यं दूषयति—विशेषणेति। तत्स्वरूपेति। तद्धेतुत्वस्य विशिष्टज्ञानस्वरूपावृत्तित्वेन तद्भेदप्रयोजकत्वालाभे कुतस्तस्य ततो भेदः स्यादित्यर्थः। अन्त्यं प्रत्याह—कारणेति।

1. ख. दण्डः पुरुषो विशेषणता
2. ख. तद्विषयकृत्यतापि
3. क. विशेषणताया एव
4. क. विशिष्टज्ञानेन भासिता
5. क. तदुभयसामग्रीत्यर्थः
6. ख. विशेषणज्ञानहेतुत्वेऽपि...... लक्षणकार्यकृत इत्यर्थः' इति ग्रन्थस्त्रुटितः।

प्रकाशः

भेदकान्तरमवश्यमपेक्षणीयमित्यत आह—कार्यकृत इति। अतव्यावृत्तिबोधलक्षण-कार्यकृत इत्यर्थः।

ननूक्तकार्य(त्व)जनकत्वमपि समूहालम्बनव्यावृत्तं विशिष्टज्ञानत्वमप्रतीत्य दुर्ग्रहमिति भेदकान्तरापेक्षा तदवस्थेत्यरुचेराह—प्रकारकृतो वेति। दण्डीति विशिष्टबुद्धौ दण्डः प्रकारः; समूहालम्बने तु दण्डत्वपुरुषत्वे, दण्डस्यापि तत्र विशेष्यत्वादित्यर्थः।

यद्वा दण्डी पुरुष इत्यत्र पुरुषानुयोगिकवैशिष्ट्यप्रतियोगित्वलक्षणं विशेषणत्वं दण्डस्य विषयः। तादृशवैशिष्ट्यानुयोगित्वं विशेष्यत्वं पुरुषस्य विषयः। समूहालम्बने तूभयोरपि विशेष्यत्वमेवेत्यर्थः।

---

न्यायशिखामणिः

अतदिति। अदण्डपुरुषेत्यर्थः।

[1]ननु प्रकारकृतो विशेषो [2]निर्विकल्पकात् सविकल्पकस्य स्यात् न तु विशिष्टज्ञानस्य समूहालम्बनात्, उभयोरपि सप्रकारकत्वादित्यत आह—दण्डीति। प्रकार इति। भासमानवैशिष्ट्यप्रतियोगीत्यर्थः। तथा च दण्डपुरुषाविति समूहालम्बने दण्डवैशिष्ट्याभानेन तस्य दण्डप्रकारकत्वाभावात् तत्प्रकारकत्वं ततो विशेष इति भावः।

ननु यदि भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं तदा [3]दण्डपुरुषसंबन्धा इति समूहालम्बनेऽपि दण्डस्य प्रकारत्वापत्तौ तस्य विशिष्टज्ञानभेदानुपपत्तिः। तत्रापि तस्य तादृशवैशिष्ट्यप्रतियोगित्वात्। अन्यथा [4]तदैव दण्डी पुरुष इति [5]पुरुषान्तरीयज्ञाने तस्य प्रकारत्वानुपपत्तेः। न हि तदा स एव तत्प्रतियोगी तदप्रतियोगी चेति संभवति, वस्तुनो द्वैरूप्यायोगादिति जयदेवमतेऽपरितोषादुपाध्यायमतमाह—यद्वेति। भासमानत्वं न वैशिष्ट्यविशेषणं येनोक्तदोषः स्यात्। किं तु प्रतियोगित्वविशेषणम्। न च [6]विशेष्यस्य प्रकारत्वापत्तिः। तस्य

---

1. क. 'ननु' नास्ति।
2. ख निर्विकल्पत्वात्
3. क. दण्डस्य पुरुष-
4. क. 'तदैव' नास्ति।
5. ख. घ. पुरुषान्तरज्ञाने
6. ख. विशेष्यप्रकार-

प्रकारोऽपि विशेषणताविशेषः स च धर्मिण्येवास्त्विति चेत्—न। तमादायापि समूहालम्बनसंभवात्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे प्रामाण्यवादे प्रमालक्षणसिद्धान्तः
समाप्तश्चायं प्रामाण्यवादः

---

**प्रकाशः**

न च [1]पूर्वाज्ञातवैशिष्ट्यप्रतियोगित्वादि कथं तत्र स्फुरेदिति वाच्यम्। विशिष्टज्ञानसामग्रीमहिम्ना भूतले घटाभाव इति ज्ञाने अभावत्वप्रतियोगित्वादिवदनन्यगत्या (पूर्वज्ञातस्यैव) [पूर्वाज्ञातस्यैव] तस्य स्फुरणाभ्युपगमादित्याहुः।

---

**न्यायशिखामणिः**

तदनुयोगित्वेन तत्प्रतियोगित्वाभावादित्याह—दण्डेति। विशेष्यतद्वैशिष्ट्यातिरिक्तं सर्वं [2]ज्ञातमेव विशिष्टज्ञाने विषय इत्याशयवतः शङ्कामुद्भाव्य निरस्यति—न चेति। सामग्रीमहिम्नेति। अन्यथा विशिष्टज्ञाने [3]प्रतियोगित्वाभानेन समूहालम्बनात् भेदानुपपत्तेरिति भावः।

अत्रेदं चिन्त्यम्। दण्डपुरुषसंबन्धा इति समूहालम्बने दण्डस्य प्रकारत्वाभावेऽपि दण्डपुरुषसंबन्धप्रतियोगित्वानीति समूहालम्बने प्रतियोगित्वस्यापि भासमानत्वेन तत्र तस्य प्रकारत्वापत्तेः। न च [4]संबन्धितावच्छेदकत्वेन भासमानत्वं विवक्षितमिति वाच्यम्। वस्तुनस्तद्रूपस्य तस्य समूहालम्बनेऽपि भासमानत्वात्। [5]संबन्धितावच्छेदकत्वप्रकारकभानविषयत्वविवक्षायां प्रकारलक्षणस्य तन्निरूप्यत्वेनात्माश्रयापत्तेः। विशिष्टज्ञानस्य तदवच्छेदकत्वप्रकारकत्वाभावाच्च।

यदि च [6]यद्धर्मज्ञानानन्तरं यद्धर्मवैशिष्ट्यज्ञानं [7]तत् तद्धर्मप्रकारकम्। प्रकृते च युगपदेव दण्डपुरुषवैशिष्ट्यादिविषयकसमूहालम्बनोत्पत्तेः न तस्य [8]दण्डप्रकारकत्वम्, तदा सर्वत्र विशिष्टज्ञाने तत एव समूहालम्बनवैलक्षण्योपपत्तौ

---

1. ख. पूर्वज्ञात-
2. ख. ज्ञानमेव
3. ग. प्रतियोगित्वाभावेन
4. क. संबन्धितावच्छेदकरूपेण
5. क. तत्र संबन्धि-
6. ग. यद्धर्मि-
7. ख. ग. घ. 'तत्' नास्ति।
8. क. दण्डपुरुषप्रकार-

प्रकाशः

आशयमविद्वान् शङ्कते—प्रकारोऽपीति। स चेति। तथा च पुरुषादिधर्मनिष्ठविशेषणता[1]विशेषविषयत्वकृत एव विशिष्टज्ञाने विशेष इति भावः। पूर्वोक्तदूषणेनैव निरस्यति—तमादायापीति।

इति श्रीमद्रुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
प्रत्यक्षखण्डे प्रामाण्यवादः समाप्तः

—:*:—

न्यायशिखामणिः

किं [2]प्रतियोगित्वभानकल्पनेन। एवं च पदार्थपक्षज्ञानजन्यशाब्दानुमित्योर्यथा न तत्प्रकारकत्वं [3]तथोक्तमधस्तादिति।

दण्डादिप्रकारकत्वेनैव समूहालम्बनविशेषोपपत्तेः न तदनुपपत्तिर्विशेषणताविशेषे प्रमाणमित्याशयं जानानस्य नेयमाशङ्का। किं तु [4]इममजानानस्य, समूहालम्बनवैलक्षण्यं विशेषणताविशेषपक्षे न संभवतीति विपरीताशयं च मन्वानस्येत्याह—आशयमिति। ननु स चेत्यत्र धर्मिणि तत्सत्त्वैवोच्यते न तु ज्ञाने [5]तद्विषयत्वकृतवैलक्षण्यम्। न च तच्छब्देन [6]प्रकारत्वविशिष्टस्यैव परामर्शात् [7]प्रकारत्वकृतविशेषस्तत्रोक्त एवेति वाच्यम्। तथा सति समूहालम्बने विशेषणता[8]विशेष्यकत्ववर्णनवैयर्थ्यादित्याशङ्क्य, विशिष्टबुद्धौ तस्याः [9]प्रकारत्वाभावेन [10]प्रकारपदस्य विषयपरत्वात् तच्छब्देनापि तथैव [11]परामर्श इत्याशयेनाह—तथा चेति।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
न्यायशिखामणौ प्रामाण्यवादः समाप्तः

———

श्रीमते श्रीनिवासपरब्रह्मणे नमः।

---

1. क. ॰विशेषाविषयत्व-
2. क. प्रतियोगित्वाभान-
3. क. ख. तत्रोक्त-
4. ख. इदम्
5. ख. तद्विषयकृत-
6. क. प्रकारविशिष्ट-
7. ख ग. घ. तत्प्रकारकत्वकृत-
8. क. ॰विशेष्यत्व-
   घ. ॰विशेषणाविशेष्यकत्व-
9. ख. ग. प्रकारकत्वाभावेन
10. ख. घ. प्रकाशशब्दस्य
11. ख. परामर्शात्

# अथान्यथाख्यातिवादः

—:*:—

ननु सर्वज्ञानानां यथार्थत्वात् प्रमाणलक्षणे (विशेषणस्य) व्यावर्त्याप्रसिद्धेर्विशेषणवैयर्थ्यम्, अन्यथाख्यातौ मानाभावात्।

---

**प्रकाशः**

उपोद्घातसंगतिमाह—नन्विति। व्यावर्त्येति। तद्वतीति विशेषणस्येति शेषः। अन्यथाख्याताविति। ज्ञानस्य व्यधिकरणप्रकारकत्वे मानाभावादित्यर्थः।

---

**न्यायशिखामणिः**

ननु न [1]किंचिदस्त्ययथार्थज्ञानं सर्वज्ञानानां यथार्थत्वात् अन्यथाख्यातौ च मानाभावादित्येव पूर्वपक्षकरणसंभवे प्रमाणलक्षण इत्यादेर्वैयर्थ्यमित्याशङ्क्य संगतिपरं तदित्याह—उपोद्घातेति। ननु प्रतिपाद्यमर्थं [2]बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनं ह्युपोद्घातः। तथा चान्यथाख्यातिसाधनस्य प्रमानिरूपणोपोद्घातत्वे तस्य प्राग्भावः स्यादिति चेत्—[3]मैवम्। प्रकृतोपयोगिचिन्ताया एव लाघवेनोपोद्घातत्वात्। तदुक्तम्—

‘चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते’ इति। तत्र च क्वचित् प्रकृते निर्दिष्टे तदुपपादयितुमनन्तरं तदुपयोगि[4]निरूपणम्, क्वचित्तन्निर्देशात् प्राक् तन्निरूपणमित्युभयथाप्युपोद्घातस्य[5] प्रकृतसिद्ध्युपयोगित्वमविशिष्टमिति न प्राग्भावनियमः। अत एवोच्छिन्नशाखवादप्रतिपाद्यमाचार[6]वेदमूलत्वं प्रत्युपोद्घातोऽपि विधिनिरूपणं न प्राग्भावीत्यवधेयम्।

तत्प्रकारकानुभवत्वव्यावर्त्यनिर्विकल्पकस्मृत्योः प्रसिद्धत्वादाह—तद्वतीति। नन्वन्यथाख्याताविर्त्येतत् सिद्ध्यसिद्धिव्याघातादयुक्तमित्याशङ्क्य, ख्यातेरन्यथात्वे

---

1. क किंचिदस्त्ययथार्थत्वादन्यथा-
   ग. किंचिदस्ति यथार्थज्ञानं यथार्थत्वादन्यथा-
2. क. बुद्ध्या
3. क. न
4. क. ०निरूपणात्
5. क. ०द्घातत्वस्य
6. ग. ‘वेद’ नास्ति।

तथा हि—रजतार्थिप्रवृत्तिविषयत्वं रजतत्वप्रकारकानुभवविषयत्वव्याप्यं रजतार्थिप्रवृत्तिविषयमात्रवृत्तिधर्मत्वात् रजतमात्रवृत्तिधर्मवत् इत्यन्यथाख्यातिव्याप्यं सिध्यतीत्यप्रासकालत्वम्, रजतमात्रवृत्तित्वं चोपाधिः।

---

प्रकाशः

रजतार्थीति। [1]सत्यस्थलीयसामानाधिकरण्यमादाय सिद्धसाधनं मा भूदित्यत उक्तं [2]व्याप्यमिति। तथा च [3]नियमांशाप्रवेशेन शुक्त्यादावपि रजतार्थिप्रवृत्ति(विषय)[विषये]तादृशानुभवविषयत्वमायातीत्यन्यथाख्यातिसिद्धिरित्यर्थः।

ननु न्यायनये सर्वं रजतमिति [4]ज्ञानमाहार्यरूपं शाब्दादिरूपं वा संभवतीति तदादाय प्रमेयत्वादेरपि पक्षसमत्वात् व्यभिचाराभावात् धर्मत्वादित्येव हेतुरिति चेत्—न। रजतत्वप्रकारकप्रवृत्तिविषयत्वसहितत्वेन रजतत्वप्रकारकानुभवविषय-

---

न्यायशिखामणिः

मानाभावादिति विशेषणनिरासपरमिदं वाक्यम्। अन्यथात्वं च व्यधिकरण[5]प्रकारकत्वरूपम् तन्मतेऽपि इच्छायां प्रसिद्धमिति नोक्तदोष इत्याशयेनाह—ज्ञानस्येति। अव्यभिचारांशप्रयोजनमाह—सत्येति। ननु व्याप्यत्वसिद्धावपि शुक्तौ रजतत्वप्रकारकानुभवविषयत्वं न सिद्धमित्याशङ्क्य [6]अर्थात्तत्सिद्धिरित्याह—तथा चेति। नियमांशेति। अव्यभिचारेत्यर्थः। [7]आहार्यरूपमिति। मानसमिति शेषः। [8]एतच्च विशेषदर्शनदशामभिप्रेत्य। तददर्शनदशायामाह—शाब्देति। नन्वस्तु न्यायमते व्यभिचाराभावः, तथापि परमते व्यभिचारः स्यादेवेति कोटिद्वयोपस्थितेः संशयः। स च पक्षव्यतिरिक्तविषयकः प्रतिबन्धक एवेति तद्वारकविशेषणवैयर्थ्यमित्यत आह—पक्षसमत्वादिति। व्यभिचाराभावादिति। व्यभिचारसंदेहस्य पक्षसमविषयकत्वेन दोषत्वाभावादित्यर्थः। सहितत्वेनेति।

ननु योग्याधिकरणमादाय तत्समानाधिकरणस्यैव तादृशानुभवविषयत्वस्य प्रवृत्तिविषयत्वायोग्यपरमाण्वादावपि सत्त्वेन मेयत्वादौ व्यभिचाराभावेन दोषताद-

---

1. क. तत्स्थलीय-
2. क. व्याप्यत्वमिति
3. क. नियमांशे
4. ख. ज्ञानमाहार्यारोपरूपं
5. क. ०प्रकारकत्वरूपम्
6. क. अर्थात्सिद्धि-
7. ग. आहार्यारोपरूपमिति
8. क. तच्च

### प्रकाशः

त्वस्य विशेषणात् । एवं च मेयत्वादावेव व्यभिचारवारणाय पूर्वप्रतीकमिति मन्तव्यम् । [1]अतिरिक्तविषयतापक्षे रजतत्वप्रकारकत्वमनुभवविषयत्वविशेषणमिति नेश्वरज्ञानादिनार्थान्तरम् । तर्कसत्त्वाच्च न साध्यहेत्वोर्व्यर्थविशेषणत्वमिति भावः ।

---

### न्यायशिखामणिः

वस्थ्यम् । न च साहित्यपदं व्याप्यत्वपरम् । तादृशानुभवविषयत्वस्य प्रवृत्त्यविषयेऽपि सत्त्वेन तदव्याप्यतया मेयत्वादौ तद्घटितसाध्याभावान्न व्यर्थविशेषणतेति वाच्यम् । शुक्तिवृत्तिरजतत्वप्रकारकानुभवविषयत्वस्यैवास्मन्मते परमाण्वादावपि सत्त्वेन तादृशप्रवृत्तिविषयत्वव्याप्यत्वाभावेन तद्घटितसाध्याप्रसिद्धेरिति चेत्— न । साहित्यपदेन वैशिष्ट्यस्यैव विवक्षितत्वात् । तथा च तादृशप्रवृत्तिविषयत्वावच्छिन्नतादृशानुभवविषयत्वव्याप्यत्वमिह साध्यम् । [2]मेयत्वादेश्च प्रवृत्त्यविषयेऽपि सत्त्वेन तद्विशिष्टव्याप्यभावान्न व्यर्थविशेषणता ।

ननु रजतत्वप्रकारकत्वं न विषयताविशेषणम् । अतिरिक्तविषयतानभ्युपगमात् । किं त्वनुभवविशेषणम् । तथा च सर्वप्रपञ्चस्य सर्वप्रकारकपरमेश्वरीयज्ञानप्रवृत्तिविषयत्वेन मेयत्वादावपि साध्यसत्त्वात् व्यर्थविशेषणत्वतादवस्थ्यम्, तदादायार्थान्तरं [3]च । न च जन्यत्वं ज्ञानविशेषणम् । तथापि योगिज्ञानमादाय दोषतादवस्थ्यादित्यस्वरसादाह—अतिरिक्तेति । रजतत्व[4]प्रकारकत्वमित्युपलक्षणम् । तादृशप्रवृत्तिविषयतासाहित्यं च तद्विशेषणं बोध्यम् । अन्यथा आहार्यादितादृशज्ञानमादाय मेयत्वादावपि साध्यसत्त्वेन व्यर्थविशेषणत्वापत्तेः । साहित्यं चात्र व्याप्यत्वम् । शुक्तिपरमाण्वादिविषयताभेदाच्च न पूर्वोक्तदोषः । नेश्वरज्ञानादिनेति । आदिपदात् [5]योगिज्ञानपरिग्रहः । तथा च विषयताश्रयावृत्तिप्रकारकत्वेन रजतत्वप्रकारकपरमेश्वरज्ञानस्य भ्रमत्वापत्त्या तत्प्रकारावच्छिन्नविषयता तदाश्रयरजतमात्रवृत्तिरेवेति न तद्विषयतामादायार्थान्तरमित्यर्थः ।

---

1. ख. अंशभेदविवक्षया च नेश्वर-
2. क. मेयत्वादिश्च प्रवृत्त्यविषयः, एतेन तद्विशिष्ट-
3. क. 'च' नास्ति ।
4. घ. ०प्रकारकमित्युप-
5. क. ग. योगिज्ञानादि-

### प्रकाशः

रजतमात्रेति । रजतविशेषमात्र[1]वृत्तिधर्मवदित्यर्थः । तेन न साधनवैकल्यमिति ध्येयम् । अप्राप्तेति । शुक्ती रजतत्वप्रकारकानुभवविषयो न वेति विप्रतिपत्तावेतादृशाभिधानस्य प्रथममनाकाङ्क्षितत्वादिति भावः । अप्राप्तकालस्य पुरुषदोषतया वस्तुदोषमाह—रजतमात्रेति ।

---

### न्यायशिखामणिः

ननु साध्ये विशेषणोपादानं व्यर्थम् । न हि हेतुविशेषणसार्थक्यमेव [2]प्रयोजनमित्यतो न वैयर्थ्यमित्यत आह—तर्केति । यदि प्रवृत्तिविषयत्वस्य तादृशानुभवविषयत्वव्याप्यत्वं न स्यात् तदा तादृशानुभवविषयत्वेऽप्युक्तप्रवृत्तिविषयत्वव्याप्यता न स्यात् । यदि चान्वयव्यतिरेकाभ्यां तयोः कार्यकारणभावावगमेन कारणवति कार्यावश्यंभावात्तद्व्याप्यत्वम्, तदा कार्यवत्यपि कारणावश्यंभावात् तादृशप्रवृत्तिविषयत्वस्यापि तादृशानुभवविषयत्वव्याप्यत्वमिति तुल्यम् । तथा च [3]तर्कसूचकतया साध्यविशेषणस्य न वैयर्थ्यमिति भावः । एतच्च पाततः । साध्ये विशेषणाभावेऽप्यावश्यककार्यकारण[4]भावाख्यतर्कसत्त्वेनानुमानप्रवृत्तेः ।

केचित्तु प्रवृत्त्यसाधारणकारणत्वमनुभवविशेषणम् । तेनेश्वरज्ञानमादाय नार्थान्तरम् । तस्यासाधारणकारणत्वाभावात् । अत एव न व्यर्थविशेषणतापीत्याहुः ।

तच्चिन्त्यम् । परमते भेदाग्रहस्यैव प्रवर्तकत्वेन निरुक्तसाध्याप्रसिद्धेः ।

अपरे तु रजतत्वप्रकारांशे अनाहार्यानुभवविशेष्यत्वं विवक्षितम् । तथा च समूहालम्बनमादाय न सिद्धसाधनम् । [5]न वेश्वरज्ञानमादायार्थान्तरमित्याहुः ।

[6]तदपि चिन्त्यम् । एवमप्यनाहार्यतादृशशाब्दज्ञानमादाय न्यायनये [7]प्रमेयत्वादावपि साध्यसत्त्वेन तद्वारकविशेषणवैयर्थ्यानुद्धारात् ।

---

1. क. 'वृत्ति' नास्ति ।
2. घ. प्रयोजनमिति युज्यते वाणीत्यत आह
3. क. तत्सूचक-
4. क. °भावाख्यतः सत्त्वेन
5. क. ईश्वरज्ञानमादाय नार्थान्तर-
6. क. तच्चिन्त्यम् ।
7. ग. घ. साध्यवतः प्रमेयत्वादेः पक्षधर्मत्वेन

प्रकाशः

ननु मात्रपदं व्यर्थम्। न च [1]साधनाव्यापकतार्थं तदिति वाच्यम्। रजतवृत्तित्वस्यापि [2]रजतार्थिप्रवृत्तिविषयमात्रवृत्तित्वात् शुक्तित्वादौ साधनाव्यापकत्वादिति चेत्—

अत्राहुः। यन्मते सत्प्रतिपक्षोत्थापकतया उपाधेर्दूषकत्वम्, तन्मते पक्षे [3]साधनाव्यापकतार्थं मात्रपदम्। अन्यथा व्यतिरेके स्वरूपासिद्धिप्रसङ्गादिति।

---

न्यायशिखामणिः

वयं तु रजतत्वप्रकारकत्वमनुभवविशेषणम्। [4]बहिरिन्द्रियजन्यत्वं चात्र तद्विशेषणम्। तस्य चेश्वरज्ञान[5]निबन्धनार्थान्तरादिवारकत्वेनावश्यकत्वात्। तथा च सर्वं रजतमिति ज्ञानस्यातथात्वान्न व्यर्थविशेषणता। न हि तत् बहिरिन्द्रियजन्यं संभवति। सर्वस्यासंनिकर्षात्। उपनयसहायस्य च बहिरिन्द्रियस्योपनीतविशेष्यकज्ञाने सामर्थ्याभावादिति [6]ब्रूमः।

[7]प्रवृत्त्यविषयोत्पन्नविनष्टरजतेऽपि रजतत्वसत्त्वेन तत्र साध्यसाधनवैकल्यादाह—रजतविशेषेति। पुरुषेति। अप्राप्तकालत्वेन पुरुषः परं निगृह्यते न तावता [8]अन्यथाख्यात्यसिद्धिः। तेनैव वा अन्येन वा शुक्तिपक्षकानुमान[9]पूर्वकमेतदनुमानकरणे तत्सिद्धेरप्रत्यूहत्वादिति भावः।

वस्तुतस्त्विदमनुमानमनित्यत्वानुमानात्प्राक् कृतकत्वानुमानवत् न ज्ञापकसाधकम्, येनाप्राप्तकालत्वं स्यात्, किं तु अन्यथाख्यातिसाधकमेव। अशेषसाधनाश्रयाश्रितेत्यादिव्याप्यत्वस्यैव साध्ये विवक्षितत्वात्। तथा चोक्तप्रवृत्तिविषयत्वं यावत्स्वाधिकरणवृत्तितादृशानुभवविषयत्वसमानाधिकरणमित्यनुमानेन शुक्तावपि तादृशानुभवविषयत्वस्य साधनादन्यथाख्यातिसिद्धिरप्रत्यूहेत्यरुच्या मूले दूषणान्तरमुक्तमिति द्रष्टव्यम्।

---

1. क. साधनव्यापकार्थं
2. क. रजतादिप्रवृत्ति-
3. क. साधनव्यापक-
4. घ. एवं बहि-
5. क. °निबन्धनार्थे तद्वारकत्वेना-
6. ग. भावः
7. ग. प्रवृत्तिविषयो-
8. ग. अन्यथाख्यातिसिद्धिः
9. क. °पूर्वकमेव तदनुमान-

शुक्तिवृत्तिज्ञानविषयता रजतत्वप्रकारिका रजतार्थिताजन्यप्रवृत्तिविषयवृत्तिविषयतात्वात् रजतवृत्तिविषयतावदित्यत्र रजतवृत्तित्वमुपाधिः। रजतत्वम् अरजतवृत्तिज्ञानविषयतावच्छेदकम् अरजतविषयप्रवृत्तिहेतुज्ञानप्रकारत्वात् शुक्तित्ववदित्यत्र रजतावृत्तित्वमुपाधिः।

---

**प्रकाशः**

केचित्तु समव्याप्त्यभिप्रायेण मात्रपदम्। न च यद्रजतमुत्पन्नविनष्टं तत्रापि [1]रजतत्वस्य वृत्तेः तस्य तादृशानुभवविषयत्वव्याप्यत्वं नास्ति, तन्मते ईश्वरादेरङ्गीकारादिति वाच्यम्। रजतत्वप्रकारकशब्दादिवन्धि[ शाब्दादिबुद्धि ]विषयत्वस्य तन्मते तत्रापि सत्त्वादिति भावः। एतच्च यथाश्रुते साध्ये [2]बोध्यम्। विवक्षिते च साध्ये [3]समव्याप्तत्वमपि नेति ध्येयम्।

---

**न्यायशिखामणिः**

जरत्पक्षधरमतमाशङ्क्योपाध्यायोक्तेन निराकरोति—**न चेति**। गौडसमाधिमाह—**अत्राहुरिति**। **अन्यथेति**। उक्तोपाधेः पक्षादन्यत्र [4]साधनाव्यापकत्व इत्यर्थः। **स्वरूपेति**। स्वव्यतिरेकस्येत्यनुषङ्गः। तथा च तुल्यबलत्वाभावान्न सत्प्रतिपक्षतेति भावः। तथापि मतान्तरे मात्रपदवैयर्थ्यं दुर्वारमित्यपरितोषादुपाध्यायमतमाह—**केचित्त्विति**। **विवक्षिते चेति**। रजतत्वस्य प्रवृत्त्यविषयेऽपि सत्त्वेन तादृशप्रवृत्तिविषयत्वावच्छिन्नानुभवविषयत्वव्याप्यत्वाभावात्, [5]परमते तत्र साध्याभावाच्च। तथा चोपाध्यायमतमपि न युक्तमिति भावः।

वयं तु रजतमात्रवृत्तित्वं हि रजतान्यावृत्तित्वे सति तद्वृत्तित्वम्। तत्र विशिष्टमुपाधिरिति न ग्रन्थार्थः। किं तु विशेषणविशेष्ययोर्विवक्षितसाध्ये प्रत्येकमुपाधित्वम्। न चोभयोस्तच्छुक्तित्वादौ [6]साध्याव्यापकत्वम्। एकस्योपाधित्वे अपरस्य साध्यतावच्छेदकत्वात्[7]। न च रजतवृत्तित्वरूपोपाधेः पक्षे साधन-

---

1. क. 'रजतत्वस्य वृत्तेः...॰विषयत्वस्य तन्मते' इति ग्रन्थः नास्ति।
2. ख. 'बोध्यं' नास्ति।
3. क. समव्यापकत्वमपीति
4. घ. साधनव्यापकत्वे
5. ग. घ. 'परमते तत्र साध्याभावाच्च' इति नास्ति।
6. क. ग. साध्यव्यापकत्वम्।
7. ग. घ. एतदनन्तरं 'परमते तत्र साध्याभावाच्च' इत्यधिकपाठः

रजतत्वप्रकारिका ज्ञानविषयता अरजतवृत्तिः अरजतनिष्ठात्यन्ताभाव-[भावा]प्रतियोगिनी वा अरजतविषयप्रवृत्तिहेतुज्ञानविषयतात्वात् शुक्तिवृत्ति-विषयतावदित्यत्र रजतावृत्तित्वमुपाधिः ।

---

प्रकाशः

अप्राप्तकालत्वं च यथा न स्यात्तथाह—शुक्तिवृत्तीति । रजतार्थिप्रवृत्ति-जनकज्ञान[1]विषयतेत्यर्थः । रजतार्थिताजन्यप्रवृत्तिहेतुज्ञानविषयतात्वादिति हेत्वर्थः । तेन शुक्तिवृत्तिप्रमेयत्वप्रकारकविषयतायां न बाधः । रजतवृत्तौ तादृशविषयतायां न व्यभिचारः । रजतवृत्तित्वमिति । विषयतात्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापक-मिदं बोध्यम् । अरजतविषयेति । यद्यपि [2]प्रकारत्वादित्येवास्तु । [3]न चैतद्रजत-त्वादौ व्यभिचारः । आहार्यादिभ्रममादाय तद्विषयतायां पक्षसमत्वात् । तथापि रजतवृत्ति[4]प्रकारविशेषस्य यस्यारजते न कदाप्याहार्यादिरूपोऽप्यारोपस्तत्र व्यभि-चारवारणाय ([5]पूर्वकमिति) [पूर्वप्रतीकमिति] ध्येयम् । रजतावृत्तित्वमिति । अरजतवृत्तित्वमित्यर्थः । [6]तेन द्रव्यत्वादौ न साध्यव्यापकत्वम् ।

---

न्यायशिखामणिः

व्यापकत्वान्न दूषकत्वम् । अन्यत्र [7]तदव्यापकत्वेन व्यभिचारोन्नायकत्वसंभवात् सत्प्र-तिपक्षोत्थापकतायाश्चाश्रावणत्वाद्युपाध्यव्यापनेन दूषकताबीजत्वाभावादिति ब्रूमः ।

ननु [8]विषयतापक्षकानुमानेऽप्युक्तोपाधेः संभवान्नैतदुत्थितिरित्यत आह — अप्राप्तकालत्वं चेति । ननु यथाश्रुते प्रमेयत्वप्रकारकविषयतायां बाधव्यभिचारौ । मात्रपदान्तर्भावे शुक्तिमात्रवृत्तिविषयतामात्रस्य पक्षत्वे तच्छुक्तित्वप्रकारकविषयता-याश्च तदन्तर्भावे बाधः, तद्बहिर्भावे च व्यभिचार इत्याशङ्क्य पक्षहेतू विशिनष्टि —रजतार्थीत्यादिना । रजतत्वप्रकारकज्ञानादौ व्यभिचारादाह—विषयतात्वेति ।

---

1. ख. °विषयकेत्यर्थः
2. ख. °प्रकारकत्वात्
3. ख. न चैवं तत्र रजतत्वादौ
4. क. °प्रकारकवि-
5. ख. पूर्वप्रतिबन्धकमिति
6. ख 'तेन' इत्यतः पूर्वं 'तेन द्रव्यत्वादौ न साध्याव्यापकत्वम् । रजतनिष्ठवृत्तित्व-मिति । रजतमात्रवृत्तित्वमित्यर्थः' इत्यधिक-पाठः ।
7. ग. घ. तदव्यापकत्वेऽपि
8. ग. विषयतापादकानु-

विषयताया निरस्तत्वाच्च। विवादपदं रजतज्ञानं शुक्तिविषयकं शुक्तौ प्रवर्तकज्ञानत्वात् शुक्तिज्ञानवदित्यत्र ज्ञायमानेष्टभेदाग्रहे कारणतावच्छेदकं रजतज्ञानं न प्रवर्तकमित्यसिद्धिः।

प्रकाशः

रजतावृत्तित्वमिति। रजतमात्रावृत्तित्वमित्यर्थः। तेन द्रव्यत्वादिप्रकारकविषयतायां न साध्याव्याप्तिः। न च साधनव्यापकत्वम्। रजतनिष्ठस्मरणविषयतायां तन्मते साधनाव्यापकत्वात्।

केचित्तु विशेषणविशेष्यभेदेन विषयताभेदमते भ्रमस्थलेऽपि रजतमात्रवृत्तिर्विषयतोभयसंमता। तत्र साधनाव्यापकत्वमित्याहुः।

विषयताया इति। त्वयैवेति शेषः। तथा चाश्रयासिद्ध्यादिकमिति भावः। विवादपदमिति। शुक्तिनिष्ठप्रवृत्तिजनकमित्यर्थः। एतच्च भागे बाधवारणाय। अंशतस्सिद्धसाधनवारणाय रजतज्ञानमिति। एतद्भागस्याधिकस्य

न्यायशिखामणिः

एतद्रजतत्वादाविति। यद्रजतं [1]शुक्तिकावर्तितया गृहीतं तन्मात्रवृत्तिधर्मविशेष इत्यर्थः।

ननु द्रव्यत्वादावरजतनिष्ठात्यन्ताभावप्रतियोगित्वाभाववत्युक्तोपाधेः साध्याव्यापकत्वम्। न च तत्र (यत्किंचिद्रजत)[यत्किंचिदरजत]निष्ठात्यन्ताभावप्रतियोगित्वेन साध्याभाव इति वाच्यम्। [2]अरजतत्वावच्छिन्ननिष्ठात्यन्ता[3]भावाप्रतियोगित्वस्यैव साध्यत्वात्। अन्यथा आकाश[4]रूपारजतनिष्ठात्यन्ताभावप्रतियोगित्वेन बाधापत्तेः। न च विषयतात्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वमस्त्येवेति वाच्यम्। तथापि द्रव्यत्वप्रकारकविषयतायां साध्याव्यापकत्वादित्यत आह—रजतमात्रेति। अस्मिन् पक्षे भ्रमस्थलीयरजतत्वप्रकारकविषयतायां रजतमात्रनिष्ठत्वे अरजतवृत्तित्वरूपसाध्यबाध इत्यस्वरसं सूचयन् मतान्तरमाह—केचित्त्विति।

1. ग. घ. शुक्तिकाविविक्ततया
2. ग. रजतत्वा-
3. ग. °भावप्रतियोगि-
4. ग. °रूपरजत-

प्रकाशः

प्रवेशाद्धेतोरेव पक्षतावच्छेदकत्वे व्याप्तिग्रहदशायामेव सिद्धसाधनापत्तिरपास्ता। शुक्ताविति। निर्विषये मनोयोगादौ व्यभिचारवारणाय ज्ञानपदम्। अदृष्टाद्वारकेत्यपि विशेषणम्। तेनादृष्टद्वारकजन्मान्तरीयज्ञानेन न व्यभिचारः।

न च फलज्ञाने व्यभिचार इति वाच्यम्। प्रवर्तकत्वं प्रवृत्तित्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वम्। फलज्ञानं तूपायेच्छायां हेतुः न प्रवृत्तित्वावच्छिन्ने, प्रवृत्त्यभावेऽपि (दृष्टौ)[वृष्टौ]फलज्ञानेनेच्छोत्पत्तेरित्याहुः।

---

न्यायशिखामणिः

पूर्वं मीमांसकेनानिराकरणादाह—त्वयैवेति। [1]आश्रयेति। आदिपदात् साध्याप्रसिद्धिपरिग्रहः। तथा च विषयतापक्षकानुमाने आश्रयासिद्धिः। [2]रजतत्वपक्षकानुमाने विषयताघटितसाध्याप्रसिद्धिरित्यर्थः।

ननु कदाचिद्रजतज्ञानेऽपि शुक्तिविषयकत्वविवादसंभवात् तस्यापि पक्षत्वापत्तिः। न च शुक्तिनिष्ठप्रवृत्तिजनकज्ञानविशेष्यकविवादविषयत्वं विवक्षितमिति वाच्यम्। [3]तथाप्यावश्यकशुक्तिनिष्ठप्रवृत्तिजनकत्वस्यैव पक्षतावच्छेदकप्रवेशापत्तेरित्याशङ्क्य [4]विवादपदमित्यनेन [5]तथैव विवक्षितमित्याह—शुक्तीति। भागे—सत्यज्ञानांशे। अंशत इति। शुक्तिप्रवर्तके शुक्तित्वप्रकारकज्ञान इत्यर्थः। रजतज्ञान[6]पदस्य संप्रदायमतेन प्रयोजनमुक्त्वा नव्यमतेन तदाह—[7]एतदिति। ननु शुक्तीच्छायामपि साध्यसत्त्वात् ज्ञानपदवैयर्थ्यमित्यत आह—निर्विषय इति। जन्मान्तरीयेति। हविःपुरोडाशादिज्ञान इत्यर्थः।

जयदेवसमाधिमाह—प्रवर्तकत्वमिति। किं फलज्ञानमुपायेच्छाद्वारा प्रवृत्तिहेतुः उत तच्चिकीर्षाद्वारा। नान्त्यः, अस्य कृतिसाध्यत्वाप्रकारकत्वेन तत्प्रकारकचिकीर्षाहेतुत्वाभावात्। कृतिसाध्यताज्ञानस्य [8]चैतदजन्यत्वेन तद्द्वारा चिकीर्षाहेतुत्वमित्यस्यापि [9]दुर्वचत्वादित्यभिप्रेत्य आद्यं दूषयति—फलज्ञानं

---

1. क. 'आश्रयेति' नास्ति
2. ग. रजतपक्ष-
3. ग. तस्यावश्यक-
   घ. तस्याप्यावश्यक-
4. क. विवादविषयत्व-
5. ग. घ. तदेव
6. क. ०भानस्य
7. ख. तदिति।
8. ग. चैतजन्यत्वेन
9. ग. दुर्वारत्वात्

**शुक्ती रजतज्ञानविषयताश्रयः रजतार्थिप्रवृत्तिविषयत्वात् रजतवदित्यत्र रजतत्वमुपाधिः । शुक्तौ रजतार्थिप्रवृत्तिः स्वधर्मिधर्मिकरजतत्वप्रकारकज्ञानसाध्या रजतार्थिप्रवृत्तित्वात् रजतप्रवृत्तिवदित्यत्र रजतविषयत्वमुपाधिः स्वपदार्थाननुगमश्च । तत्परित्यागे तु रजतार्थिप्रवृत्तिधर्मिकरजतत्वप्रकारकज्ञानेनोभयसिद्धेन रजतस्मरणेनार्थान्तरम् ।**

---

**प्रकाशः**

**असिद्धिरिति ।** आश्रयासिद्धिरित्यर्थः । विशेषणाभावायत्तविशिष्टाभावात् । न [1]हेत्वसिद्धिः । अप्रसिद्धेऽधिकरणे व्यतिरेकाज्ञानात् 'सद्भ्यामभावो निरूप्यते' इति सिद्धान्तात् । [2]एतच्च स्वमताभिप्रायेण । प्रयोजकत्वाभिप्राये त्वप्रयोजकमिति भावः ।

**शुक्ती रजतेति ।** [3]रजतत्वप्रकारकज्ञानविषय इत्यर्थः । न त्वतिरिक्तविषयताश्रय इत्यर्थः । [4]तस्या निरस्तत्वाभिधानेनानवसरदुःस्थत्वादिति । रजतार्थिताजन्यप्रवृत्तिविषयत्वादिति हेत्वर्थः । **स्वधर्मीति ।** स्वपदं संबन्धिपद-

---

**न्यायशिखामणिः**

**त्विति ।** तद्द्वारा न प्रवृत्तिहेतुः । उपायेच्छायाः [5]कृत्यसाध्यवृष्ट्यादिसाधारणत्वेन [6]व्यभिचारादिति भावः । ननु वृष्ट्यादौ प्रवृत्तिरूपकार्याभावात् तत्रेच्छैव नास्तीति कल्प्यत इत्यत आह—**प्रवृत्त्यभावेऽपीति ।** [7]**फलज्ञानेनेति ।** इष्टसाधनताज्ञानद्वारेति शेषः । तथा च तदभावेऽपि वृष्टाविच्छोत्पत्तेरनुभूयमानत्वात् तदनुत्पत्तिकल्पनमयुक्तमिति भावः ।

नन्वेवमदृष्टाद्वारकपदं ज्ञानपदं च व्यर्थं स्यात् । ज्ञानादिसाधारणकारणस्य मनस्संयोगादेः कार्यमात्रहेतोर्जन्मान्तरीयज्ञानस्य च निरुक्तप्रवर्तकत्वाभावादिति चेत्—न । उक्तविवक्षायामदृष्टाद्वारकपदानुपादानस्येष्टत्वात् । ज्ञानपदोपादानमहिम्ना चोक्तार्थविवक्षालाभेन तद्वैयर्थ्यानवकाशात् ।

---

1. क. हेतुत्वसिद्धिः
2. क. तच्च
3. ख. तत्त्वप्रकारप्रवृत्तिप्रयोजकरजतत्व-
4. ख. तस्य नित्यत्वाभि-
5. ग. कृतिसाध्य-
6. ग. व्यभिचाराभावात्
7. क. फलज्ञानादिति ।

उच्यते। रजतार्थिताजन्या शुक्तौ प्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या प्रवृत्तित्वात् शुक्तौ शुक्त्यर्थिप्रवृत्तिवत्।

---

### प्रकाशः

महिम्ना तत्तत्प्रवृत्तिपरम्। [1]धर्मिपदं च विषयपरम्। रजतार्थितेति। अंशतस्सिद्धसाधनवारणाय। संप्रदायमतेनेदम्।

तदर्थमेव शुक्तावित्यपि। इष्टेति। यद्यप्यत्र द्वंद्वसमासे दृष्टान्तासिद्धिः। कर्मधारये बाधः। तथापि इष्टपदस्येष्टतावच्छेदकपरत्वे इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यक[2]ज्ञानसाध्येत्यर्थः।

---

### न्यायशिखामणिः

आश्रयासिद्धिरिति। पक्षतावच्छेदकासिद्धिरित्यर्थः। न्यायमते ज्ञानस्य प्रवर्तकत्वाभ्युपगमादाह—एतच्चेति। प्रवृत्तिप्रयोजकत्वं हेतौ विवक्षितमिति नासिद्धिरित्यत आह—[3]प्रयोजकत्वेति। एतच्चोपलक्षणम्। तदविषयके प्रवृत्ति[4]प्रयोजनके [5]व्यभिचार इत्यपि बोध्यम्।

जयदेवव्याख्यानं दूषयति—न त्विति। ननु घटप्रवृत्तिमतोऽपि कदाचिद्रजतार्थितया घटे व्यभिचार इत्यत आह—रजतार्थितेति। ननु स्वपदस्य शुक्तिविषयप्रवृत्तिपरत्वे दृष्टान्ते साध्यवैकल्यम्, वक्ष्यमाणाननुगमश्च निरवकाश इत्यत आह—स्वपदमिति। धर्मिशब्दस्य आश्रयपरत्व[6]भ्रमं वारयति—धर्मिपदं चेति। अंशत इति। शुक्तौ शुक्त्यर्थिताजन्यप्रवृत्तावित्यर्थः।

तदर्थमिति। रजतेच्छाजन्यरजतप्रवृत्तौ उक्तदोषवारणार्थमित्यर्थः। दृष्टान्तासिद्धिरिति। द्वन्द्वप्रतिपाद्यस्येष्टपुरोवर्तिभेदस्याभावात् दृष्टान्ते शुक्तित्वप्रकारकप्रवृत्तौ साध्यवैकल्यमित्यर्थः। [7]बाध इति। पक्षीभूतप्रवृत्तौ कर्मधारयप्रतिपाद्येष्टाभेदघटितसाध्याभावादिति भावः।

---

1. क. 'धर्मिपदं च विषयपरम्' इति नास्ति।
2. क. °ज्ञात-
3. ग. प्रयोजकत्वं चेति।
4. ग. घ. °प्रयोजके
5. घ. व्यभिचारश्चेत्यपि
6. ख. °भ्रान्ति
7. क. भान इति।

## प्रकाशः

नन्वेवं यत्रेष्टाभेदज्ञानात्प्रवृत्तिः [1]तत्र व्यभिचारः। अभेदरूपवैशिष्ट्यप्रतियोगित्वेन इष्टस्यैव तत्र प्रकारत्वेन इष्टतावच्छेदकप्रकारकत्वाभावात्। अत एव संसर्गारोपस्तादात्म्यारोपश्चेत्यारोपभेदः सर्वसिद्ध इति चेत्—

अत्राहुः। उभयत्रेष्टतावच्छेदकं [2]रजतत्वादिकमेव प्रकारः। किं त्वेकत्र तत्समवायः संसर्गः अपरत्र स्वाश्रयाभेद इति तयोर्भेदः। अन्यथा अननुगमे प्रवृत्तिलक्षणकार्यस्याकस्मिकत्वापत्तिरिति।

यद्वा इष्टतावच्छेदकत्व[3]मिच्छाप्रकारत्वम्। तथा चेच्छाप्रकारप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानसाध्यत्वं साध्यम्। एवं चेष्टाभेदज्ञानस्थले इष्टस्यैव प्रकारत्वाभ्युपगमेऽपि ज्ञानेच्छयोः समानप्रकारत्वनियमात्तज्जन्येच्छाया अपि इष्टप्रकारकतादृशज्ञानसाध्यतया तत्प्रवृत्तेर्नोक्तव्यभिचार इति[4]।

---

## न्यायशिखामणिः

ननु प्रवृत्तिविषयेष्टतावच्छेदकयोर्भेदात् अस्तु द्वन्द्वः। तथापि ज्ञानेनापि द्वन्द्वादरे प्रकृतान्यथाख्यात्यसिद्धिप्रसङ्गात् षष्ठीतत्पुरुषो वाच्यः। तस्य च न विषयविषयिभावपरत्वम्। ईश्वरज्ञानमादायार्थान्तरप्रसङ्गात्। न च तद्विषयत्वेन प्रवृत्तिहेतुत्वं विवक्षितमिति न दोष इति वाच्यम्। तथा सति बाधकज्ञानस्यापि प्रवृत्तिहेतुत्वापत्तेः। नापि विशेष्यपरत्वम्। तदुभयसमूहालम्बनस्यैव तत्त्वापत्तेः। अत एव न प्रकारत्वपरत्वम्। तदेकप्रकारकापर[5]विशेष्यकज्ञानस्य प्रवृत्तिहेतुत्वानुपपत्तेः इत्याशङ्क्य इष्टतावच्छेदकांशे प्रकारत्वम्, अन्यत्र च विशेष्यत्वं विवक्षितमित्याह—इष्टतावच्छेदकेति। इष्टस्यैवेति।

---

1. ख. अत्र
2. ख. रजतत्वाधिकमेव
3. क. इष्टताप्रकारत्वम्
4. ख. 'इति' इत्यस्यानन्तरम्—'अन्यथा पूर्वकल्पे तादृशशाब्दज्ञानसाध्यप्रवृत्तौ व्यभिचारतादवस्थ्यापत्तेः। पुरोवर्ति रजतमित्यादौ सामानाधिकरण्यानुभवेन अभेदमात्रस्यैव संसर्गत्वे तत्प्रतियोगितया रजतादेरेव प्रकारत्वात्। अन्यथा नीलो घट इत्यादौ नीलत्वलक्षणापि न स्यादिति युक्तमुत्पश्यामः' इत्यधिकपाठः दृश्यते।
5. ख. °विशेष्यज्ञानस्य

प्रकाशः

ननु यत्किञ्चित्प्रवृत्तिविषयतोक्तौ रजतस्मरणमादायार्थान्तरम्। तत्तत्प्रवृत्ति-विषयतोक्तौ सैवाननुगतिरिति चेत्—अत्राहुः। तादृशज्ञानं प्रवृत्तित्वावच्छिन्ने सामान्येन रूपेण हेतुः। तत्तत्प्रवृत्तिं प्रति तदेव विशेषेण। तथा च प्रकृते प्रवृत्ति-विषयत्वेन सामान्येनैव रूपेण तस्य तत्साध्यानुप्रवेशान्नाननुगमः।

न्यायशिखामणिः

यद्यपीष्टांशे इष्टतावच्छेदकप्रकारकत्वमस्तीति न व्यभिचारः, तथापि न प्रवृत्तिविषयांशे तत्प्रकारकत्वम्। तस्यैवात्र विवक्षितत्वात्। अन्यथा बाधक-ज्ञानस्य प्रवृत्तिहेतुत्वप्रसङ्गात् ईश्वरज्ञानेनार्थान्तराच्चेति भावः।

नन्वभेदारोपस्थले नेष्टतावच्छेदकस्य [1]प्रकारत्वम्। भासमानाभेदरूप-वैशिष्ट्यप्रतियोगित्वाभावात्। स्वाश्रयद्वारा प्रतियोगित्वे बाधकज्ञानेऽप्यभावद्वारा प्रतीयमानाधिकरणसंसर्गप्रतियोगित्वेन प्रकारत्वापत्तौ तस्यापि प्रवर्तकतापत्तेः। न च [2]तस्योक्तरूपेणाप्रवर्तकत्वे प्रवर्तकाननुगमः इत्युक्तमिति वाच्यम्। तथापि वक्ष्यमाणरीत्या तदभावादित्यस्वरसादाह—यद्वेति।

किं प्रवृत्तिघटितं साध्यम् तत्प्रवृत्तिघटितं वा। आद्यं निराकृत्यान्त्यं निरा-चष्टे—तत्तत्प्रवृत्तीति। आद्यपक्षमादाय समाधत्ते—अत्राहुरिति। किमस्मिन् पक्षे रजतस्मरणात् पुरोवर्तिनि [3]तदापत्तिरित्यभिमतम्, उत तदादायार्थान्तरमिति। तत्राद्य आह—तादृशेति। सामान्येनेति। प्रवृत्तिविषयविशेष्यकेष्टतावच्छेदक-प्रकारकज्ञानत्वेनेत्यर्थः। विशेषेणेति। तत्पदघटितोक्तरूपेणेत्यर्थः। तथा च रजतस्मरणस्य तत्प्रवृत्तिविषयविशेष्यकत्वाभावान्नातिप्रसङ्ग इति भावः। तर्हि तत्प्रवृत्तिघटितं साध्यं कथं न विवक्षितमित्यत आह—तथा चेति। द्वितीये त्वाह—न चेति। बाधेनेति।

अत्रेदं चिन्त्यम्। रजतस्मरणमादाय प्रवृत्तिगर्भसाध्यस्य न बाधः। तस्य भिन्नविषयत्वेऽपि प्रवृत्तिविषयविशिष्टज्ञानत्वेन स्वरूपयोग्यत्वात्। नापि तत्प्रवृत्ति-

1. क. प्रकारकत्वम्
2. ग. तस्याप्रकारकत्वप्रवर्तकाननुगमः
घ. तस्याप्रकारत्वे प्रवर्तका-
3. घ. प्रवृत्त्यापत्तिः

न चेष्टविषयप्रवृत्तित्वमुपाधिः साधनविशेषितत्वात् ।

---

प्रकाशः

[1]न चार्थान्तरम् । तत्प्रवृत्तिं प्रति समानविषयताद्दृशज्ञानस्यैव हेतुत्वावधारणे भिन्नविषयरजतस्मरणमादाय बाधेन साध्यस्य पर्यवसानाभावात् । अत एवेश्वरानुमाने अस्मदादियत्किंचिदुपादानप्रत्यक्षेण नार्थान्तरमिति ।

प्रवृत्तित्वादिति । चिकीर्षाजन्यप्रवृत्तित्वादित्यर्थः । चिकीर्षाप्रयोज्यजातिविशेषस्यैव वा लिङ्गत्वम् । तेन नेश्वरप्रवृत्तिजीवनयोनिप्रयत्नादौ व्यभिचारः । न चेष्टेति । यद्यप्येतत्सुखादौ [2]साध्याव्यापकम्, तथापि [3]साधनावच्छिन्नसाध्यव्यापकत्वं बोध्यम् । एवं च सत्युपाधौ प्रवृत्तिगर्भत्वं [4]समव्याप्त्यभिप्रायेण ।

---

न्यायशिखामणिः

घटितसाध्यस्य । तस्याननुगमभीरुणा त्वया साध्यत्वेनानुपादानात् । वस्तुतस्तु स्वविषय[5]विशेष्यत्वघटितमेव साध्यम् । [6]तस्याननुगम इति चेत्—किमेतावता प्रवृत्तिरूपानुगतकार्यस्याकस्मिकत्वापत्तिः अनुगतसाध्यतावच्छेदकाभावात् व्याप्तिग्रहानुपपत्तिर्वा । नाद्यः, प्रवृत्तिविषयविशिष्टज्ञानस्य सामान्यकारणस्याप्यङ्गीकारात् । नान्त्यः, सामान्यव्याप्तिग्रहे तस्यादोषत्वात् । [7]या यद्विषया प्रवृत्तिः सा तद्विशेष्यकेष्टतावच्छेदकप्रकारकज्ञानसाध्येति सामान्यव्याप्तेरेव प्रकृतानुमानाङ्गत्वेनाभिमतत्वात् । अन्यथा स्वपदानुपादानेऽपि तादृशविशिष्टज्ञानजन्यत्वस्य नियमगर्भतया इच्छापदस्य [8]स्वासाधारणजनकेच्छापरतया च तद्घटितसाध्य[9]मननुगतं स्यात् । इतरथा इच्छापदस्योक्तार्थपरत्वाभावे परमेश्वरेच्छाप्रकारेदंत्वप्रकारकज्ञानजन्यतया सिद्धसाधनप्रसङ्गात् । न च तावता समानाधिकरणत्वमिच्छाविशेषण[10]मस्त्विति वाच्यम् । तदिच्छाया अपि यत्किंचित्तत्समानाधिकरणत्वेन स्वपदान्तर्भावावश्यंभावादिति ।

---

1. ख. न वा
2. ख. साध्याव्यापकता
3. क. साधनत्वावच्छिन्न-
4. ख. समव्याप्तोपाध्यभिप्रायेण
5. क. °विशेष्यकत्व-
6. घ. तस्याननुगमः
7. क. घ. यावद्विषया
8. घ. साधारण
9. घ. °मनन्वितं
10. ग. °मस्तीति

यद्वा रजतेच्छाजन्यशुक्तिविषयप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं शुक्तिविशेष्यकं शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वात् शुक्तौ शुक्त्यर्थिप्रवृत्तिजनकज्ञानवत् । अवच्छेदकत्वेऽपि प्रयोजकत्वान्नासिद्धिः ।

---

**प्रकाशः**

अन्यथा तत्र तदनुपादेयमिति भावः । साधनेति । वक्ष्यमाणतर्केण [1]साधनस्य व्याप्यत्वं प्रमितम् । तथा च साधनेन व्याप्येन घटितत्वान्नायमुपाधिः । साध्यव्याप्याव्यापकत्वेन साध्याव्यापकत्वादित्यर्थः ।

---

**न्यायशिखामणिः**

चिकीर्षाजन्यत्वमवच्छेदकापरिचये दुर्ग्रहमित्यावश्यकजातिविशेषस्यैव हेतुत्वं विवक्षितमित्याह—चिकीर्षेति । जीवनयोनियत्नादाविति । आदिपदान्निवृत्तियत्नपरिग्रहः । न चेत्यत्र इष्टतावच्छेदकाश्रयविशेष्यकप्रवृत्तित्वमुपाधिरित्युक्तम् । तत्र शङ्कते—यद्यपीति । सुखादाविति । यद्यपि तादृशविशिष्टज्ञानत्वेन तज्जन्यत्वं साध्यम् । अन्यथा भगवज्ज्ञानमादायार्थान्तरतापत्तेः । तथा च सुखादेः [2]प्रवृत्त्यविषयचन्द्रराजकन्यादिदर्शनेनापि संभवात् न[3]तदवच्छिन्नजन्यत्वम् । तथापि तदंशे तत्प्रकारकत्वविवक्षायां यन्मते तन्निबन्धनार्थान्तरनिरासः तन्मते साध्यस्यावच्छेदकाघटितत्वात् तत्र साध्यसंभव इति भावः ।

तर्हीष्टविशेष्यकत्वस्यैवोपाधित्वे विशेष्यांशवैयर्थ्यं स्यादित्यत आह—एवं चेति । ननु पक्षेतरत्ववत् साधनविशेषितत्वं नानुपाधित्वे बीजम्, आर्द्रेन्धनप्रभववह्निमत्त्वादेरप्यनुपाधित्वप्रसङ्गादित्यत आह—वक्ष्यमाणेति ।

ननु ज्ञानान्यथात्वसिद्धावपि तद्विशेष्यकान्यथात्वप्रकारकानुमिते[4]रभानेनाप्राप्तकालत्वमित्यस्वरसात् यद्वेत्युक्तमिति जरत्पक्षधरमिश्राः [5]प्राहुः । तदसारम् । अन्यथाख्यात्यनङ्गीकारवादिनं प्रति तत्सिद्धिमात्रस्योद्देश्यत्वादिति मनसि निधायाह—कार्यपक्षकमिति ।

---

1. क. साध्यव्याप्यत्वम्
2. ग. प्रवृत्तिविषय-
3. ग. 'न' नास्ति ।
4. घ. °रभावेन
5. ग. 'प्राहुः' नास्ति ।

हेतुत्वमपि तस्य साधयिष्यामः। तथाविधमिदं ज्ञानं वा रजतत्व-प्रकारकं रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात् सत्यरजतज्ञानवत्।

---

प्रकाशः

कार्यपक्षकमुक्त्वा कारणपक्षकमाह—यद्वेति। अंशतो बाधवारणाय पक्षविशेषणम्। तत्रेच्छाजन्यत्वं स्वरूपकथनपरम्। पक्षद्वये तात्पर्यमित्यप्याहुः। प्रयोजकत्वमदृष्टाद्वारकं बोध्यम्।

---

न्यायशिखामणिः

ननु रजतत्वप्रकारकत्वं ज्ञानत्वं च विशेषणं व्यर्थम्। [1]संवादिरजतेच्छांशे तद्धेतु[2]धर्मिज्ञानांशे च शुक्तिविषयकेत्यनेनैव बाधनिरासादित्याशङ्क्य. शुक्तिविषयक-प्रवृत्तिजनकत्वमेव विवक्षितम्। अन्यत् सर्वं स्वरूपकथनपरमित्याह—अंशत इति। पक्षद्वयेति। रजतेच्छाजन्यत्वविशिष्टप्रवृत्तिघटितमेकं शुक्तिविषयत्वविशे-षितप्रवृत्तिगर्भं चान्यत् पक्षतावच्छेदकमिति [3]पक्षतावच्छेदकद्वयं विवक्षितम्। अतो न जन्यान्तवैयर्थ्यमिति भावः।

आद्यपक्षतावच्छेदकस्य सत्यरजतज्ञानेऽपि सत्त्वेन तदंशे बाधो दुर्वार इत्यस्वरसं सूचयति—अपीति।

जरत्पक्षधरमिश्रास्तु—शुक्तिरजते इति समूहालम्बनस्यापि पक्षत्वे तदंशे सिद्धसाधनवारणाय जन्यान्तोपादानमित्याहुः। तच्चिन्त्यम्। नव्यमते तस्या-दोषत्वात्। दोषत्वे वा तद्दानेऽपि तत्र प्रवृत्तेरुभयेच्छाजन्यत्वेन दोषतादवस्थ्यात्। यदि च यदंशे तज्जन्यत्वं तदंशे शुक्तिविषयकत्वं विवक्षितमिति, तदा यदंशे तादृशप्रवृत्तिजनकत्वं तदंशे रजतत्वप्रकारकत्वमित्येव विवक्ष्यताम्। तावतैवोक्त-दोषासंस्पर्शादिति।

केचित्तु—वस्तुतो रजतेच्छाजन्यं शुक्तिविशेष्यकप्रवृत्तेश्च यज्जनकं तद्वा, शुक्तिप्रवृत्तेर्जनकं रजतत्व[4]प्रकारकं च यज्ज्ञानं तद्वा पक्ष इति मूलार्थ इत्याहुः।

---

1. ग. घ. न च विसंवादि-
2. क. ॰धर्मि-
3. क. 'पक्षतावच्छेदकद्वयं' नास्ति।
4. क. ॰प्रकारं च

न च ग्रहणस्मरणयोर्विशिष्टस्य ज्ञानस्य वा पक्षत्वे बाध आश्रयासिद्धिर्वा। उभयसिद्धेन शुक्तिनिष्ठप्रवृत्तिहेतुत्वेन पक्षत्वात्। अन्यथा साध्यतदभाववतः पक्षत्वेनानुमानोच्छेदः।

प्रकाशः

ननु प्रयोजकत्वं कारणकारणेऽप्यस्तीति रजतस्मरणे [1]आरोपकारणे व्यभिचार इत्यरुचेराह—हेतुत्वमपीति। तथा च प्रसाध्याङ्कं तादृशप्रवृत्तिजनकत्वमेव लिङ्गमिति भावः। तथाविधमिति। रजतार्थिताजन्यशुक्तिनिष्ठप्रवृत्ति[2]जनकमित्यर्थः।

न च [3]रजतप्रवृत्तिहेतुज्ञानत्वादित्येवास्तु इति वाच्यम्। यथोक्तविशेषणविशेष्यभावे [4]दोषाभावात्। तस्य हेत्वन्तरत्वादिति भावः। न चेति। प्राथमिके

न्यायशिखामणिः

तदपि चिन्त्यम्। तथापि नव्यमते अंशतः सिद्धसाधनस्यादोषत्वेन शुक्तित्वप्रकारकज्ञाने तद्वारकस्य [5]जन्यान्तस्य, द्वितीये रजतत्वप्रकारकत्वस्य च वैयर्थ्यात्।

जन्मान्तरीयज्ञाने व्यभिचारादाह—अदृष्टाद्वारकमिति।

एवं सति संदिग्धासिद्धिं वारयति—तथा चेति। ननु तथाविधशब्देन रजतत्वप्रकारकत्वस्यापि परामर्शे तद्घटितपक्षतावच्छेदकस्य निश्चये सिद्धसाधनम्, अनिश्चये आश्रयासिद्धिरित्यत आह—रजतार्थितेति। समूहालम्बनसाधारणपक्षत्ववारणाय प्रवृत्तौ रजतार्थिताजन्येति विशेषणम्। यद्वा शुक्तिरितिज्ञाने बाधवारणाय जन्यान्तोपादानम्। सत्यरजतज्ञाने विसंवादीच्छायामंशतः सिद्धसाधनवारणाय शुक्तिपदज्ञानपदे। नव्यमते तु तदुभयं नोपादेयमिति ध्येयम्। तस्येति। रजतप्रवृत्तिहेतुत्वस्येत्यर्थः। तथा च नेच्छाजन्यपद[6]वैयर्थ्यमिति भावः।

ननु [7]न चेत्यत्र ग्रहणादिशब्दात् ज्ञानपक्षकानुमानद्वय एव विकल्पत्रयम्, तत्र प्रत्येकं दूषणद्वयान्वय इति च प्रतिभाति। तदयुक्तम्। आद्यानुमाने ग्रहणस्य

1. क. अकारणे
2. क. ०जनकत्वमित्यर्थः
1. ख. रजतेच्छाहेतु-
2. क. दोषत्वाभावात्
4. क. जन्यान्तस्याद्वितीये
4. क. ०वैयर्थ्यादिति
5. ग. नन्वेत्यत्र

समवायातीन्द्रियत्ववादिनं प्रति अगृहीतासंसर्गकधर्मधर्मिविषयकमेकं ज्ञानमेव विशिष्टज्ञानं सिध्यति ।

---

**प्रकाशः**

ज्ञानपक्षकानुमाने रजतस्मरणं पक्षो विशिष्टज्ञानं वा । [1]द्वितीयेऽपि ग्रहणस्मरणात्मकज्ञानद्वयम् उत विशिष्टज्ञानं वा । आद्ययोर्बाधः, अन्त्ययोराश्रयासिद्धिरित्यर्थः ।

ननु न्यायनये विशिष्टज्ञानत्वमेव वैशिष्ट्यविषयज्ञानत्वम्, परेषां त्वन्यादृशमिति साध्याननुगम इत्यत आह—**समवायेति** । विशिष्टज्ञानत्वेन साधारणेन रूपेण साध्यता । तच्च येषां यादृक् तेषां तादृग्भूत्वा सिध्यतीत्यर्थः । अन्यथा वह्न्यादावणुपुञ्जत्वादिविमतौ प्रसिद्धानुमानमपि न स्यादिति भावः ।

**अगृहीतेति** । ननु दण्डपुरुषसंयोगा इति समूहालम्बनेऽतिव्याप्तिः । [2]न च तत्रासंसर्गग्रह एवेति वाच्यम् । दण्डसंसर्गवति पुरुषे तदसंसर्गग्रहे अन्यथाख्यात्यापत्तेः । एवं च निर्विकल्पकाभ्युपगमे तत्राप्यतिव्याप्तिः ।

---

**न्यायशिखामणिः**

पक्षत्वेऽपि बाधाश्रयासिद्ध्योरभावात् । स्मरणस्य पक्षत्वे बाधेऽप्याश्रयासिद्ध्यभावात् । विशिष्टज्ञानस्य च परानङ्गीकृतस्य पक्षत्वे आश्रयासिद्धावपि तत्प्रसिद्धिनिबन्धनबाधानवकाशात् । तथा द्वितीयानुमानेऽपि उभयोः पक्षत्वे आश्रयासिद्ध्यभावात् । स्मरणविशिष्टज्ञानयोस्तत्त्वे बाधाभावादित्याशङ्क्य विकल्प्य तद्दूषणानि व्यवस्थया योजयति—**प्राथमिक इति** ।

विशिष्टज्ञाननिरूपणस्य तद्व्यावर्त्याशङ्काप्रदर्शनेन प्रकृतोपयोगमाह—**नन्विति** । **साध्याननुगम इति** । प्रवृत्तिपक्षकानुमान इति शेषः । तथापि निरुक्तविशिष्टज्ञानत्वस्य साध्यप्रवेशो दोषतादवस्थ्यमित्याशङ्क्य, विशिष्टज्ञानपदवाच्यत्वेन अतद्व्यावृत्तिबोधकज्ञानत्वेन वा अनुगम इत्याह—**विशिष्टेति** । **अणुपुञ्जत्वादीति** । अवयवारब्धत्वमादिशब्दार्थः । समूहालम्बनस्थले धर्मिणि धर्मासंसर्गोऽस्ति न वा । तत्राद्यं निराकृत्य द्वितीयमनूद्य दूषयति—**न चेति** ।

---

1. ख. द्वितीये विशिष्टग्रहणं पक्षे विशिष्टज्ञानं वा
2. ख. न च तत्रासंसर्गाग्रहः

प्रकाशः

अथ धर्मधर्मिविषयत्वं विशेषणविशेष्यभावविषयकत्वम्। समूहालम्बने च दण्डस्य विशेषणत्वं पुरुषस्य तन्निरूपितविशेष्यत्वं विषयः। न च वैशिष्ट्याभाने भासमानवैशिष्ट्यप्रतियोगित्वादिरूपविशेषणत्वादिकं [1]विशिष्टज्ञाने कथं भासतामिति वाच्यम्। समवायाभानेऽपि [2]तद्व्यावृत्तिरूपस्य स्वरूपसंबन्धविशेषस्य परेणापि तद्विषयत्वेनाभ्युपगमात्। अन्यथा 'व्यधिकरणप्रकारकज्ञानस्ये'त्यग्रिमग्रन्थविरोधापत्तिरिति चेत्—न। अगृहीतेत्यादिविशेषणस्यैव व्यर्थत्वापत्तेः। अग्रिमेणैव समूहालम्बनव्यवच्छेदात्। न चैवं नेदं रजतमिति ज्ञानस्यापि रजतत्वविशिष्टज्ञानत्वापत्तिरिति वाच्यम्। अत्र हि रजतांशे रजतत्वविशिष्टज्ञानत्वमापाद्यम्, पुरोवर्तिनि रजतत्वविशिष्टज्ञानत्वं वा। नाद्यः, इष्टापत्तेः। नान्त्यः, तयोर्धर्मधर्मिभावानवगाहनात्। न हि यत्किंचिन्निरूपितधर्मधर्मिविषयकत्वं विवक्षितम्। तथा सति प्रमेयवानित्यस्य पुरोवर्तिनि प्रमेयत्वविशिष्टज्ञानत्वापत्तेः। एवमेकपदमप्यकिंचित्करम्, धर्मधर्मिगोचरत्वस्य [3]प्रत्येकज्ञानेऽसंभवेन ज्ञानद्वये अतिव्याप्त्यसंभवात्।

---

न्यायशिखामणिः

[4]वैशिष्ट्याभान इति। समवायरूपस्य तस्यातीन्द्रियत्वादिति भावः। अन्यथेति। [5]वैशिष्ट्यमात्राभान इत्यर्थः। जयदेवमतमाशङ्क्य निराकरोति—न चेति। विशिष्टज्ञानत्वापत्तेरिति। प्रमेयत्वविशिष्टज्ञानत्वापत्तेरित्यर्थः। तस्मादिति।

अत्र विशिष्टज्ञानसामान्य[6]लक्षणं इदं, समूहालम्बनं च [7]पुरुषादौ पुरुषत्वादिविशिष्टज्ञानं भवत्येवेति न तत्र सामान्यलक्षणातिव्याप्तिर्दोषः। न च निर्विकल्पकातिव्याप्तिः। परमते तदनभ्युपगमात्। तन्मतेनैव विशिष्टज्ञानत्वनिर्वचनात्।

किं च न्यायमत इवाविशिष्टज्ञानव्यावृत्तं न [8]विशिष्टज्ञानत्वं निर्वाच्यम्। किं तु यदेव विशिष्टज्ञानत्वं [9]तदेव तन्मते निष्कम्पप्रवृत्त्यङ्गं प्रामाण्यमिति भ्रम-

---

1. ख. °ज्ञानेऽपि कथं
2. ख. अतद्व्यावृत्ति-
3. क. त्वसंभवेन
4. क. वैशिष्ट्यमान इति।
5. क. वैशिष्ट्यमानमात्र ग. वैशिष्ट्यमात्रमान
6. घ. °लक्षणे
7. क. ग. पुरुषादेः
8. क. विशिष्टज्ञानं
9. क. 'तदेव' नास्ति

न चैवमुभयख्यातिः, नान्यथाख्यातिरिति वाच्यम्। व्यधिकरण-प्रकारकज्ञानस्य तत्त्वात्।

प्रकाशः

तस्मादेतच्चिन्त्यमिति।

उभयख्यातिरिति। शुक्तिरजते इत्युभयख्यातिः स्यात् न त्वसद्विषयकत्वेनान्यथाख्यातिः। वैशिष्ट्यविषयत्वानभ्युपगमादित्यर्थः।

न्यायशिखामणिः

व्यावृत्तमेव तन्निर्वाच्यम्। अत एवोत्पत्तिग्रन्थे अगृहीतासंसर्गधर्मधर्मि[1]विषयकज्ञानत्वं भ्रमव्यावृत्तविशिष्टज्ञानत्वम्। भ्रमव्यावृत्तस्य विशिष्टज्ञानत्वस्य निश्चयः प्रवृत्तिहेतुरिति चोक्तम्। तथा चास्य समूहालम्बनातिप्रसङ्गो न दोषः। अत एव न चैवमुभयख्यातिरित्यादिना समूहालम्बननिबन्धनार्थान्तरमाशङ्क्य निवारयिष्यति।

तर्हि धर्मधर्मिविषयकज्ञानत्वेनैव भ्रमेऽतिप्रसङ्गवारणे शेषवैयर्थ्यं स्यात्। न च धर्मधर्मिविषयकत्वघटितं न विशिष्टज्ञानत्वम्। किं त्वगृहीतज्ञायमान[2]धर्मासंसर्गकधर्मिविषयकैकज्ञानत्वं विवक्षितम्। भ्रमस्थले च धर्मिणि ज्ञायमानरजतत्वप्रतियोगिकासंसर्गस्यागृहीतत्वेन तत्रैकपदस्यातिव्याप्तिवारकत्वान्न वैयर्थ्यमिति वाच्यम्। तस्याप्येकत्वादिति चेत्— न। [3]धर्मधर्मिविषयकज्ञानत्वमेव विशिष्टज्ञानत्वम्। अन्यत् स्वरूपकथनपरम्। अत एव वक्ष्यति 'अर्थसिद्धं धर्मधर्मिविषयकज्ञान'मिति। यद्वा अगृहीतासंसर्गैकज्ञानं धर्मधर्मिगोचरज्ञानं वा विशिष्टज्ञानम्। तत्र नञ्द्वयेन गृहीतसंसर्गत्वं विवक्षितम्। [4]गृहीतपदे च व्यवहृतः संसर्गो येनेति व्युत्पत्त्या संसर्गगोचरव्यवहारजनकत्वं पर्यवस्यति। एवं च संसर्गगोचर[5]व्यवहारजनकताविश्रान्त्यधिकरणैकज्ञानत्वं धर्मधर्मिगोचरज्ञानत्वं वा विशिष्टज्ञानत्वमिति लक्षणद्वयपरत्वान्न वैयर्थ्यमिति समाधानमाकलनीयम्।

1. घ. °विषयकैकज्ञानत्वं
2. ग. °धर्मासंसर्गकं धर्मधर्मिविषयकैकज्ञानत्वं
3. ख. 'धर्मधर्मि°···लक्षणद्वयपरत्वमिति' इति ग्रन्थः लुप्तः।
4. क. अगृहीतं च व्यवहितपरम्।
5. घ. व्यवहारज्ञानजनकता

न च विसंवादिप्रवृत्त्यजनकत्वमुपाधिः । तथाविधे इदंज्ञाने रजतज्ञाने च त्वन्मते साध्याव्यापकत्वात् ।

---

**प्रकाशः**

यद्यपि समवायाविषयत्वेऽपि वैशिष्ट्यान्तरविषयत्वमभ्युपगन्तव्यमेव । अन्यथा व्यधिकरणप्रकारकत्वासंभवात् । तथाप्यसद्वैशिष्ट्यविषयत्वेन न भ्रमत्वम्, भ्रमविषयाणां सत्त्वात् । किं तु व्यधिकरणप्रकारत्वेनैवेत्याशयेनाह— व्यधिकरणेति । ज्ञानपक्षकानुमानद्वये [1]उपाधिमाशङ्क्य निराकरोति—न चेति । प्रथमानुमाने [2]साध्याव्यापकत्वमाह—इदंज्ञान इति । द्वितीये त्वाह—रजतज्ञान इति । [3]त्वन्मत इति । [4]मन्मते भ्रम एव भगवज्ज्ञाने वा साध्याव्यापकत्वमिति भावः ।

---

**न्यायशिखामणिः**

ननु न चैत्रमित्यत्रोभयविषयत्वापादनमन्यथाख्यातेरपि धर्मधर्म्युभयविषयत्वान्नानिष्टमित्याशङ्क्य, [5]विशिष्टज्ञानपदस्य परमतसिद्धविशिष्टज्ञानसाधारणत्वात् तस्य च निरुक्तस्य समूहालम्बनसाधारण्यात् पुरोवर्तिरजते इति समूहालम्बनमादायैव साध्यं सिध्येत्, न तु नैयायिकसंमतवैशिष्ट्यावगाहिलक्षणविशिष्टज्ञानमादाय, वैशिष्ट्यविषयत्वानभ्युपगमात् । तथा च नासद्वैशिष्ट्यविषयत्वरूपभ्रमत्वसिद्धिरित्याशङ्काग्रन्थार्थे इत्याह—शुक्तीति । एतच्च यथाश्रुतसाध्यमभिप्रेत्य । विवक्षिते तु प्रवृत्तिविषयविशेष्यतावच्छेदकप्रकारकज्ञानजन्यत्वे समूहालम्बनस्यातथात्वान्नार्थान्तरम् । तत्र च ज्ञानपक्षकानुमाने च वैशिष्ट्यविषयत्वानभ्युपगमे तत्प्रकारत्वादिघटितसाध्यसिद्ध्ययोगान्नान्यथाख्यातिसिद्धिरित्यत्र तात्पर्यम् । परैरपि समवायातिरिक्तवैशिष्ट्यभानाभ्युपगमात् विवक्षितसाध्यं तन्मतेऽपि प्रसिद्धम् । तत्र च नार्थान्तरमित्युक्तं व्यधिकरणेत्यत्र । तत्र शङ्कते—यद्यपीति । प्रवृत्तिपक्षकानुमाने उपाधेः साधनव्यापकत्वादाह—ज्ञानपक्षकेति । ननु [6]दोषाजन्यत्वावच्छिन्नसाध्यव्यापकत्वं विवक्षितम्, अतो न दोषः इत्यरुचेराह—भगवदिति । ननु सत्यस्थले

---

1. ख. उपाधिद्वय-
2. ख. साध्यव्यापक.
3. क. तव मत इति
4. ख. एतन्मते भ्रमे वा
5. क. विशिष्टज्ञानवदस्य
6. क. ग. दोषजन्य-

नापि दोषाजन्यत्वम्, परस्य ज्ञानमात्रे तथात्वात् । अन्यथा तयोरेव साध्याव्यापकत्वात् । न चाप्रयोजकत्वम् । इष्टपुरोवर्तिविशिष्टज्ञानस्य प्रवृत्तिहेतुत्वात् ।

अत्र प्राभाकराः—अप्रयोजकमिदम् । स्वतन्त्रोपस्थितेष्टभेदाग्रहादेव प्रवृत्त्युपपत्तेः किं विशिष्टज्ञानेन । परेणाप्यारोपनियमार्थं तदभ्युपगमात् । न च रजते प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वात् इहापि तत्सिद्धिः । प्रवृत्तिमात्रे भेदाग्रहे सतीष्टपुरोवर्तिज्ञानस्य लाघवेन हेतुत्वात्, न तु सदपि विशिष्टज्ञानं तन्त्रं, गौरवात् ।

---

प्रकाशः

तथात्वादिति । दोषाजन्यत्वादित्यर्थः । तथा च साधनव्यापकत्वमित्यर्थः । अन्यथेति । ज्ञानस्य दोषजन्यत्व इत्यर्थः । तयोरिति । भ्रमस्थलीययोरिदंग्रहणरजतस्मरणयोरित्यर्थः । परेणापीति । तथा चावश्यकत्वात्स एव हेतुरित्यर्थः । पुरोवर्तीति ।

---

न्यायशिखामणिः

तयोर्व्यभिचारान्न दोषजन्यत्वमत आह—भ्रमेति । तथा च तद्व्यावृत्तमेव [1]जन्यतावच्छेदकं किंचित् कल्प्यत इति भावः । ननु भेदाग्रहस्य विशिष्टज्ञानहेतुत्वेऽपि ततो लाघवात् प्रवृत्तौ विशिष्टज्ञानमेव हेतुरित्यत आह—तथा चेति ।

[2]पुरोवर्तीत्यादिना इष्टभेदाग्रहशब्दार्थौ द्वेधा निरूपितः । तत्रोभयत्र पूर्वोक्तं स्वातन्त्र्यमिष्टविशेषणं विवक्षितं न वा । तत्रान्त्यं निराकृत्य आद्यमनूद्य विकल्प्य दूषयति—न चेत्यादिना । [3]विशेषणत्वेनेति । प्रतियोगित्वेनेत्यर्थः ।

जयदेवमतमाह—[4]न पुरोवर्तीति । [5]पुरोवर्त्यगृहीतेति । तथा च रजते नेदं रजतमित्यत्र ज्ञानद्वयाङ्गीकारेऽपि स्मर्यमाणरजतभेदस्य पुरोवर्तिनि [6]असं-

---

1. घ. तज्जन्यता-
2. क. पुरोवर्तित्वादिना
3. क. 'विशेषणत्वेनेति । प्रतियोगित्वेनेत्यर्थः' इति ग्रन्थो नास्ति ।
4. ग. 'न' नास्ति ।
5. ग. पुरोवर्तिगृहीतेति ।
6. ग. असंसर्गाग्रहा-

## प्रकाशः

ननु रजत एव नेदं रजतमिति ज्ञानादपि प्रवृत्त्यापत्तिः । अन्यथाख्यातिभयेन तत्रापि ग्रहणस्मरणात्मकज्ञानद्वयस्वीकारे रजत[1]प्रतियोगित्वस्मृतेः पुरोवर्तिरजतनिष्ठभेदाविषयत्वात् रजतभेदे इष्टप्रतियोगिकत्वज्ञानेऽपि तस्य पुरोवर्तिनिष्ठत्वाभावात् । न च स्वातन्त्र्यविशेषणेनैवायं न दोष इति वाच्यम् । [2]तद्धि नाभावविशेषणत्वेनानुपस्थितत्वम्, अभावप्रतियोगि इदं रजतमिति ज्ञानादपि प्रवृत्त्यापत्तेः । किं तु पुरोवर्तिवृत्तित्वेन गृहीतभेदविशेषणत्वेनानुपस्थितत्वम् तच्च तत्राप्यस्त्येवेति कथं नातिप्रसङ्ग इति चेत्—न ।

पुरोवर्तिनिष्ठभेद इत्यस्य [3]पुरोवर्त्यगृहीतासंसर्गकभेद इत्यर्थस्यैव विवक्षितत्वात् । एवं च पुरोवर्त्यगृहीतासंसर्गे इष्टतावच्छेदकाभावज्ञानस्यापि प्रवृत्तिप्रतिबन्धकतया तदभावोऽपि हेतुः । एवं च वाशब्दः समुच्चय इत्याहुः ।

---

## न्यायशिखामणिः

सर्गग्रहाभावेन सोऽपि तादृश एव । तत्र च तत्प्रतियोगिकत्वज्ञानविषयत्वासत्त्वान्नातिप्रसङ्ग इति भावः ।

नन्वेवमपि [4]पुरोवर्तिनीष्टभिन्नत्वज्ञानविषयत्वाभावस्य [5]प्रवर्तकत्वं स्यात् । रजते नेदं रजतमित्यत्र तत्प्रसङ्गतादवस्थ्यात् न च तादृशभिन्नत्वे इष्टप्रतियोगिकज्ञानविषयत्वाभावः प्रवर्तक इत्यत्र तात्पर्यमिति वाच्यम् । तथा सति पूर्वभेदप्रसङ्गादित्याशङ्क्य, इष्टभिन्नत्वपदमिष्टतावच्छेदकात्यन्ताभावपरम् । [6]तथा च तदत्यन्ताभावाग्रहस्य प्रवर्तकत्वं तत्राभिप्रेतमित्याह—**एवं चेति । तदभावोऽपीति ।** पुरोवर्त्यगृहीतासंसर्गकात्यन्ताभावे इष्टतावच्छेदकप्रतियोगिकज्ञानविषयत्वाभावः प्रवृत्तिहेतुरित्यर्थः, न तु तादृशेष्टतावच्छेदकात्यन्ताभावज्ञानविषयत्वाभाव इत्यर्थः । तथा सति रजत एव नात्र रजतत्वमित्यत्रान्यथाख्यातिभयात् तज्ज्ञानविषयत्वा-

---

1. क. •प्रतियोगिकत्वास्मृतेः
2. क. तद्धि नानुपस्थितत्वाभावप्रतियोगि ।
3. क. पुरोवर्तिगृहीतस-
4. क. पुरोवर्तिनिष्ठभिन्नत्व-
5. क. न प्रवर्तकत्व
6. क. 'तथा च....प्रवृत्तिहेतुरित्यर्थः' इति ग्रन्थः नास्ति

### प्रकाशः

अत्र प्रमेयार्थिनां तादृशज्ञानाप्रसिद्धौ तदभावाप्रसिद्धेः कथं प्रवृत्तिरिति चिन्त्यम् ।

---

### न्यायशिखामणिः

भावेन तत्र रजतार्थिप्रवृत्तिप्रसङ्गादित्यत आह—एवं चेति । तर्हि [1]विकल्पवाचिवाशब्दानुपपत्तिरित्यत आह—एवं चेति । समुच्चय इति । उक्तसमुच्चय इत्यर्थः ।

तादृशज्ञानेति । इष्टप्रतियोगिकत्वं हि इष्टतावच्छेदकावच्छिन्नप्रतियोगिकत्वम् । प्रकृते च तादृशप्रमेयत्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्तदवच्छिन्नात्यन्ताभावस्याप्यनभ्युपगमेन [2]तदवच्छिन्नप्रतियोगिकत्वस्याप्रसिद्ध्या तज्ज्ञानाप्रसिद्धिः । न चेष्टप्रतियोगिकत्वमेव विवक्षितम्, लाघवात्, तच्च घटाभावादौ प्रसिद्धमिति वाच्यम् । वस्तुतो यत्र रजते रजतमिदं न द्रव्यमिति ज्ञानं तत्राप्यप्रवृत्त्यापत्तेः । पुरोवर्त्यगृहीतासंसर्गके द्रव्यत्वावच्छिन्नभेदे रजतस्यापि प्रतियोगित्वेन भानात् । न च तदवच्छिन्नप्रतियोगिकत्वं तत्संबन्धे प्रसिद्धमिति वाच्यम् । प्रवृत्तिप्रतिबन्धकज्ञानविषयतावच्छेदकप्रतियोगिकत्वस्यैव प्रकृतेऽभिमतत्वात् । [3]संबन्धसाधारण[4]प्रतियोगिकत्वस्यातथात्वात् । तथा इष्टतावच्छेदकप्रतियोगिकत्वमपि [5]तद्विरहात्मकत्वमेवाभिमतम् । तज्ज्ञानस्यैव प्रवृत्तिप्रतिबन्धकत्वात् । तथा च प्रमेयत्वविरहात्मकत्वस्याप्रसिद्ध्या तज्ज्ञानाप्रसिद्धिः । एवं च तादृशज्ञानाभाव[6]द्वयस्याप्रसिद्ध्या प्रमेयार्थिनां तत्प्रकारकप्रवृत्तिर्न स्यादिति भावः ।

प्रमेयत्वस्यानिष्टसाधारणत्वेनेष्टतावच्छेदकत्वाभावात् न प्रमेयार्थिप्रवृत्तिरिति तदभावापादनं नानिष्टमिति समाधानमत्र द्रष्टव्यम् ।

ननु रजते नेदं रजतमित्यत्र रजतार्थिप्रवृत्तिप्रसङ्गवारणायैव स्वातन्त्र्यमिष्टविशेषणमभिमतम् । तच्चैवं सति व्यर्थं स्यादित्यरुचेराह—वस्तुतस्त्विति ।

---

1. क. विकल्पशब्दा-
2. ग, 'तदवच्छिन्न...तत्राप्यप्रवृत्त्यापत्तेः' इति ग्रन्थो नास्ति ।
3. ग. तत्संबन्ध-
4. ग. °प्रतियोगित्व-
5. क. तद्विरहात्मकमेव
6. क, 'द्वय' नास्ति ।

### प्रकाशः

वस्तुतस्तु पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वमिष्टे स्वातन्त्र्यम् । तादृशात्यन्ताभावप्रतियोगित्वेनानुपस्थितत्वमिष्टतावच्छेदके तदिति ध्येयम् ।

यद्यप्येवमिदं भेदप्रतियोगि रजतमिति ज्ञानाच्छुक्तौ प्रवृत्तिर्न स्यादिति [1]दोषः, तथापि [2]पुरोवर्तिनि भेदविशिष्टव्यवहारप्रयोजकोऽसंसर्गाग्रहो विवक्षित इति केचित् ।

अन्ये तु तदगृहीतासंसर्गकत्वं तत्साकाङ्क्षत्वम् । [3]तच्च तद्व्यावर्तकत्वेनोपस्थितत्वादित्याहुः ।

---

### न्यायशिखामणिः

अस्मिन् पक्षे पुरोवर्तिनि स्वतन्त्रोपस्थितेष्टभिन्नत्वज्ञानविषयत्वाभावः प्रवर्तकत्वेनाभिमतः । तत्स्वातन्त्र्यं च पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वज्ञानविषयत्वाभावरूपम् । तच्च पुरोवर्तिनिष्ठत्यनेन विवक्षितमित्यभिप्रेत्याह—**पुरोवर्त्यगृहीतेति** । **तादृशेति** । एवं च स्वतन्त्रेष्टतावच्छेदकात्यन्ताभावज्ञान[4]विषयत्वाभावस्यापि प्रवृत्तिकारणत्वात् अनुक्तसमुच्चयार्थो वाशब्द इति द्रष्टव्यम् ।

रजते नेदं रजतमित्यत्रोक्तस्वातन्त्र्याभावात् प्रवृत्तिप्रसङ्गदोषाभावेऽपि यत्र शुक्तौ [5]भेदप्रतियोगीदं रजतमिति ज्ञानं तत्रेष्टस्य निरुक्तस्वातन्त्र्याभावात् अप्रवृत्तिप्रसङ्गदोषो दुर्वार इति शङ्कते **यद्यपीति** । **भेदविशिष्टेति** । इष्टभेदविशिष्टपुरोवर्तिव्यवहारप्रयोजकासंसर्गग्रहविषयत्वाभाववद्भेदप्रतियोगिकत्वेनानुपस्थितत्वं स्वातन्त्र्यम् । शुक्तौ [6]सत्यपि भेदासंसर्गाग्रहे तद्विशिष्ट[7]व्यवहारादर्शनेन तस्य तत्प्रयोजकत्वाभावात् अस्ति विशेषणाभावप्रयुक्तविशिष्टाभावरूपं स्वातन्त्र्यमिति भावः ।

ननु भेदासंसर्गाग्रहस्य तद्व्यवहारप्रयोजकता तदवच्छेदकापरिच्छेदे दुष्परिच्छेदेति तद्घटितस्वातन्त्र्यमपि दुर्घटावगमं स्यात् । तथा च तत्प्रयोजकतावच्छेदकं

---

1. ख. शेषः
2. ख. पुरोवर्तिभेद-
3. क. तच्च न
4. ग. °विषयत्वस्यापि
5. क. °प्रतियोगिनीदं
6. ग. °सत्यभेदा-
7. ग. °व्यवहारदर्शनेन

## न्यायशिखामणिः

न तावत्तदसंसर्गाग्रहत्वम् । उक्तज्ञानकालेऽपि शुक्तौ भेदव्यवहारप्रसङ्गात् । न चान्यविशेषणत्वेनानुपस्थितभेदासंसर्गाग्रहत्वं तदवच्छेदकम्, भेदप्रतियोगीदं रजतमित्यत्रान्यविशेषणत्वेन तस्योपस्थितत्वान्न दोष इति वाच्यम् । शुक्तौ नेदं रजतमित्यत्र भेदस्य शुक्तिविशेषणत्वेनावगतेः तत्र रजतभेदव्यवहाराभावप्रसङ्गादिति अपरितोषादाह—अन्ये त्विति ।

तत्साकाङ्क्षत्वमिति । तदतिरिक्तविशेषणत्वेनानुपस्थितत्वमित्यर्थः । न तु तद्विशेषणत्वेनोपस्थितत्वमित्यर्थः । तथा सति यत्र शुक्तौ भेदप्रतियोगिरजताभिन्नमिदमिति [1]ज्ञानं तत्र रजतद्वारा भेदस्य विशेषणत्वेनोपस्थितत्वात् [2]स्वातन्त्र्याभावप्रसङ्गः । न च साक्षात्तद्विशेषणत्वेनोपस्थितत्वं तत्साकाङ्क्षत्वमिति वाच्यम् । तद्धि तदतिरिक्तविशेषणत्वेनानुपस्थितत्वे सति तद्विशेषणत्वेनोपस्थितत्वम् । तत्र च लाघवात् तदतिरिक्तविशेषणत्वेनानुपस्थितत्वमेव तदिति विवक्ष्यताम् । तच्च प्रकृते न संभवति । भेदस्य पुरोवर्त्यतिरिक्तरजतव्यावर्तकत्वेनोपस्थितत्वात् । तथा च स्वातन्त्र्यसत्त्वान्नोक्तदोष इति भावः ।

ननु रजत एव रजतप्रतियोगिकभेदवदिदमित्यत्रान्यथाख्यातिभयेन ज्ञानद्वयं, तत्र भेदवदिति स्मरणस्य पुरोवर्त्यतिरिक्ते[3] भेदविशिष्टज्ञानतया विशेषणाभावायत्तविशिष्टाभावरूपस्वातन्त्र्यसत्त्वेन प्रवृत्तिप्रसङ्गतादवस्थ्यम् ।

न च पुरोवर्त्यतिरिक्तप्रतियोगिकत्वेनानुपस्थितत्वं तत्साकाङ्क्षत्वं विवक्षितम् । रजतस्थले च निरुक्तस्वातन्त्र्याभावान्नोक्तदोष इति वाच्यम् । यत्र रजतभेदप्रतियोगीदं रजतमिति ज्ञानं तत्रोक्तस्वातन्त्र्याभावादप्रवृत्तिप्रसङ्ग इत्यस्वरसोऽत्र बोध्यः ।

अत्र ब्रूमः । पुरोवर्त्यगृहीतविद्यमानासंसर्गकभेदविशेषणत्वेनानुपस्थितत्वमिष्टे स्वातन्त्र्यम् । तादृशात्यन्ताभावविशेषणत्वेनानुपस्थितत्वमिष्टतावच्छेदके स्वातन्त्र्यम् । शुक्तौ च भेदप्रतियोगीदं रजतमित्यत्र रजतस्य भेदविशेषणत्वाभावात्

---

1. क. ग. 'ज्ञानं' नास्ति
2. ग. 'स्वातन्त्र्याभावप्रसङ्गः....स्थितत्वम्' इति ग्रन्थस्त्रुटितः ।
3. ग. ॰रिक्तभेद-

न्यायशिखामणिः

रजतभेदाभाववदित्यत्र च पुरोवर्त्यगृहीता[1]संसर्गकभेदविशेषणत्वेनोपस्थितत्वेऽ[2]प्य-संसर्गस्य तत्र विद्यमानत्वाभावात् अविकलो विशिष्टाभावः। रजते च रजतभेदाभाव-वदित्यत्र अगृहीतत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वान्न प्रवृत्त्यनुपपत्तिः। [3]तत्रैव नेदं रजतमित्यत्र विशेष्यविशेषणसत्त्वान्न विशिष्टाभाव इति नातिप्रसङ्गः।

वस्तुतस्तु स्वातन्त्र्यमुपस्थितिविशेषणं [4]न तु वस्तुविशेषणम्। अत एव वक्ष्यति—'दोषमहिम्ना ह्येकस्य न स्वतन्त्रोपस्थितिः' इति। तत्र चेष्टांशे पुरोव-र्त्यगृहीतविद्यमानासंसर्गकभेदाविशेष्यकत्वमिष्टोपस्थितेः स्वातन्त्र्यम्। इष्टतावच्छे-दकांशे च तादृशात्यन्ताभावाविशेष्यकत्वमिष्टतावच्छेदकोपस्थितेः स्वातन्त्र्यम्।

एतेन भेदग्रहे असंसर्गग्रहे च न प्रवृत्तिरिति तद्ग्रहाभावयोर्यथा कारण-त्वम्, तथा रजते नेदं रजतमिति ग्रहे तदुभयसत्त्वेऽपि प्रवृत्तिर्नेति प्रवृत्तिविषया-गृहीतासंसर्गभेदविशेषणत्वेनोपस्थित्यभावस्यापि कारणत्वम्। तथा च तस्य पृथक्कारणत्वान्न कारणतावच्छेदकप्रवेश इति नरहरिमिश्रोक्तमपास्तम्।

[5]तादृशविशेष्यकत्वाभावस्योपस्थितिविशेषणतयात्र प्रवेशोऽपि इष्टादिविशेष-णतया तादृश[6]भेदप्रकारकत्वोपस्थित्यभावस्याप्रवेशात्। तथा च तादृशेष्टाद्युप-स्थितिसाहित्यं तु न भेदाग्रहकारणतावच्छेदकाभिप्रायेणात्रोपात्तम्। प्रतिबन्ध-कतावच्छेदकरूपावच्छिन्नाभावत्वेनैव प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमात्। किं तु तत्सहकारिताभिप्रायेण। न चैवमेतादृशेष्टोपस्थितिरेव प्रवृत्तिहेतुः स्यात्, तत्सत्त्वे भेदाग्रहविलम्बेन तद्विलम्बादर्शनादिति वाच्यम्। शुक्तौ रजतभेदग्रहेऽपि तत्सत्त्वेन प्रवृत्तिप्रसङ्गात्।

[7]जयदेवमिश्रास्तु—इष्टभेदाग्रहवत् पुरोवर्तिनीष्टभिन्नत्वज्ञानसमानकालीनस्य इष्टभिन्नत्वासंसर्गाग्रहस्य पुरोवर्तिनिष्ठे भेदे इष्टप्रतियोगिकत्वज्ञानसमानकालीनस्य इष्टप्रतियोगिकत्वासंसर्गाग्रहस्य चाभावः प्रवृत्तिकारणम्। तथा च यत्रेष्टभिन्नत्वं

---

1. क. °तसंसर्ग-
2. ग. °पि संसर्गस्य
3. क. तत्रैवं
4. ग. 'न तु वस्तुविशेषणम्' इति नास्ति।
5. ग. घ. तादृशभेदविशेष्य-
6. ग. °भेदोपस्थि-
7. ख. 'जयदेवमिश्रास्तु......कारणान्तर-तदवच्छेदककल्पनस्यायुक्तत्वात्' इति ग्रन्थस्त्रुटितः।

न च रजते इष्टपुरोवर्तिभेदग्रहस्याप्रसिद्ध्या कथं तदभाव इति वाच्यम्। पुरोवर्तिनिष्ठे भेदे रजतप्रतियोगित्वज्ञानविषयत्वाभावस्य पुरो-

प्रकाशः

नन्विच्छाभिलापादयः अभेदविषयकधीसाध्या इत्याशङ्क्य निराकरोति—न चेति। इच्छादीनामिति। ज्ञातरजतत्वादिमात्रविषयत्वेनाभेदविषयत्वमसिद्ध-

न्यायशिखामणिः

तत्प्रतियोगिकत्वं वा न ज्ञातं तत्र विशेषणाभावात् यत्र [1]तयोरसंसर्गग्रहः तत्र विशेष्याभावादविकलो विशिष्टाभावः। एवं ज्ञायमानेष्टतावच्छेदकात्यन्ताभावासंसर्गाग्रहस्य पुरोवर्तिनिष्ठात्यन्ताभावे ज्ञायमानेष्टतावच्छेदकप्रतियोगिकत्वासंसर्गाग्रहस्य चाभावः प्रवृत्तिहेतुः। अयं च विशिष्टाभावः क्वचिद्विशेषणाभावात् क्वचिद्विशेष्याभावात् सर्वत्राविकल इत्याहुः।

तच्चिन्त्यम्। [2]उक्ताभावचतुष्टयस्य प्रवर्तकत्वे मानाभावात्। न च यत्र रजत एव नेदं रजतं नात्र रजतमिति वा ज्ञानं तत्र [3]भेदाग्रहासंसर्गाग्रहसत्त्वेऽपि प्रवृत्त्यनुत्पत्तिरुक्ताभावानां कारणत्वे मानमिति वाच्यम्। तत्र निरुक्तस्वतन्त्रेष्टोपस्थितिविरहादेव प्रवृत्त्यभावोपपत्तेः। न चोक्ताभावविलम्बादेव तत्र तद्विरह इति वैपरीत्यमर्हम्। क्लृप्तकारणाभावेनेष्टोपस्थितौ स्वातन्त्र्यस्य अवच्छेदकत्वकल्पनादेवातिप्रसङ्गनिरासोपपत्तौ गौरवेण कारणान्तरतदवच्छेदककल्पनस्यायुक्तत्वात्।

न चेष्टपुरोवर्तिज्ञानस्य तन्मते प्रवर्तकत्वानभ्युपगमात् एवं [4]व्याख्याने अपसिद्धान्तापत्तिरिति वाच्यम्। प्रवृत्तिमात्र इत्यादिना तेनैव तत्प्रवर्तकत्वस्योक्तत्वात्। अत एव सिद्धान्ते इष्टपुरोवर्तिज्ञानस्य प्रवृत्तिमात्रहेतुत्वमुभयसंमतमिति तत्सिद्धवत्कृत्य वैशिष्ट्यविषयकत्वमेव तत्कारणतायामवच्छेदकं न तु भेदाग्रहः कारणमिति वक्ष्यति। न चैवं यद्वेति वक्ष्यमाणपक्षाभेदापत्तिः। तस्य ज्ञानवृत्ति[5]प्रवृत्तिकारणतायां भेदाग्रहोऽवच्छेदक इत्यर्थपरत्वात् इति दिक्।

1. ग. तयोरसंसर्गाग्रहः
2. ग. उक्तभाव-
3. ग. भेदाग्रहसंसर्गा-
4. ग. घ. व्याख्यायमाने
5. ग. 'प्रवृत्ति' इति नास्ति।

वर्तिनीष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभावस्य वा हेतुत्वात्। न चाभेदव्यवहारो व्यवहर्तव्यधीसाध्यो न तु तदभावाग्रहात्, अन्यथा भेदाग्रहात् भेद-

---

प्रकाशः

मित्यर्थः। अभेदाभिलापरूपव्यवहारस्य तद्विषयकधीसाध्यत्वेऽपि शुक्ताविदं रजतमितिवत् इदं रजताभिन्नमिति ज्ञाताभेदस्यासंसर्गाग्रहादेवोपपन्नत्वान्न

---

न्यायशिखामणिः

ननु न चेत्यत्र व्यवहारशब्दस्य प्रवृत्तिपरत्वे पौनरुक्त्यम्। अभेदाभिलाप इति परिहारपरग्रन्थासंगतिश्च। न चाभेदाभिलापपरत्वम्। तथापीच्छादीनामित्यसंगतेरित्याशङ्क्य, शुक्तौ रजताभेदविषयकेच्छाप्रवृत्त्यभिलापाः करणसाधनभावसाधनाभ्यां व्यवहारपदवाच्याः। ते च व्यवहर्तव्यधीसाध्याः व्यवहारत्वादित्यनुमानं विवक्षितमित्याह—नन्विति। ननु तत्रोक्ताप्रयोजकत्वस्यात्रापि तुल्यत्वात् व्यवहारसामान्यपक्षकमप्यनुमानं नोत्तिष्ठतीत्याशङ्कां वारयितुं मूले—अन्यथेत्यादीति द्रष्टव्यम्।

[1]किं व्यवहारमात्रस्य पक्षता उताभिलापस्य। अद्येऽपि शुक्तिरजततदभेदविषयकव्यवहारत्वं पक्षतावच्छेदकम्, उत रजताभेदविशिष्ट[2]पुरोवर्तिव्यवहारत्वम्। नाद्यः, अस्मिन् कल्पेऽपि व्यवहारविषयाः पुरोवर्तिरजततदभेदा एव। [3]तथा च ज्ञानद्वयवादिमतेऽपि तेषां [4]ज्ञातत्वे(न)व्यवहर्तव्यधीसाध्यत्वसाधने [5]सिद्धसाधनमित्यभिप्रायेणोक्तम् इच्छादीनामित्यादिना। स्वयं द्वितीयं दूषयति—इच्छादीनामिति।

अभेदेति। अभेदविशिष्टपुरोवर्तिव्यवहारत्वरूपं पक्षतावच्छेदकं न संभवतीत्यर्थः। यद्यपि रजताभेदविशिष्टशुक्तिव्यवहारः सर्वसिद्धः। अन्यथा अयथार्थव्यवहारजनकत्वनिबन्धनो ज्ञानायथार्थत्वव्यपदेश इति परसिद्धान्तव्याकोपप्रसङ्गात्। तथा च नाश्रयासिद्धिः। तथापि ज्ञाताभेदासंसर्गाग्रहादभेदविशिष्टेच्छादिव्यवहारोपपत्तेर्न विशिष्टज्ञानापेक्षेत्यप्रयोजकत्वे तात्पर्यम्।

---

1. क. 'किं' नास्ति।
2. क. °शुक्तिव्यव-
3. घ. 'तथा च ज्ञानद्वय···सर्वसिद्धः' इति ग्रन्थो नास्ति।
4. ग. ज्ञानत्वेन
5. क. घ. सिद्धसाधनमि-

व्यवहारापत्तिरिति वाच्यम् । इच्छादीनां ज्ञातपुरोवर्तिमात्रविषयत्वात् । अभेदाभिलापोऽपि ज्ञातभेदस्यासंसर्गाग्रहादिति नाज्ञाते व्यवहारः ।

ननु पीतः शङ्खो न श्वेत इति भेदज्ञानेऽपि श्वेताभेदानुमित्या श्वेतार्थिप्रवृत्तेरभेदधीस्तद्धेतुरिति चेत्—न । तवापि पीतः शङ्खः इत्यभेदज्ञानात् पीतार्थी न प्रवर्तते भेदानुमितेरिति भेदाग्रह एव तद्धेतुः स्यात् ।

---

**प्रकाशः**

विशिष्टज्ञानापेक्षेत्याह—**अभेदेति** । एतच्चाभ्युपेत्योक्तम् । वस्तुतः शुकबालादिवाक्ये व्यभिचारादभिलापे समानविषयधीसाध्यत्वं नेति ध्येयम् ।

**भ्रमत्वेनेति** । यथा अप्रामाण्यशङ्काशून्यमभेदज्ञानं तव प्रवर्तकम् तथा तच्छून्यभेदग्रहविरहो ममापि श्वेताभेदानुमितिस्थलेऽप्यस्तीत्यर्थः । प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमे शक्तिरप्यस्माकं न सिध्येदित्याशयेनाह—**यद्वेति** । **इष्टभेदाविषयकमिति** । तच्चात्र पूर्वं श्वेतभेदप्रत्ययेऽपि श्वेताभेदानुमितिरूपमस्त्येवेति

---

**न्यायशिखामणिः**

शुक्तौ रजताभेदाभिलापस्य पक्षतेत्यत्रापि किं तदभेदविषयकज्ञानजन्यत्वं साध्यम् उताभेदविशिष्टपुरोवर्तिज्ञानजन्यत्वम् । नाद्यः, सिद्धसाधनात् इत्यभिप्रेत्यान्त्यं निराकरोतीत्याह—**अभेदेति** । **ज्ञाताभेदस्येति** । तद्विशिष्टव्यवहारे ज्ञात[1]तदसंसर्गाग्रहस्यैव लाघवेन हेतुत्वम् । अत एव [2]रजते नेदं रजतमित्यत्र भेदाभेदोभयासंसर्गाग्रहेऽपि भेदस्यैव व्यवहार इति भावः ।

नन्वभेदाभिलापस्याभेदविषयकज्ञानजन्यत्वमपि न युक्तम्, वाक्यप्रयोगे वाक्यार्थज्ञानहेतुत्वनिराकरणपरोत्पत्तिग्रन्थविरोधादित्यत आह—**एतच्चेति** । परमार्थतोऽपि तस्य व्यवहर्तव्यधीसाध्यत्वं [3]किं न स्यादित्याशङ्क्य पूर्वोक्तं स्मारयति—**वस्तुत इति** ।

नन्वस्त्वप्रामाण्यशङ्काशून्यत्वेन भेदग्रहस्य प्रतिबन्धकत्वम् । तथापि [4]भेदग्रहाभावो न हेतुः, व्यभिचारादित्यत आह—**यथेति** ।

---

1. क. तदसंसर्गग्रह-
2. ग. परमते
3. क. 'किं' नास्ति ।
4. ग. भेदाग्रहाभावो

भ्रमत्वेन ज्ञातमभेदज्ञानमकिंचित्करमिति यदि, तदा भ्रमत्वेन ज्ञातं भेदज्ञानमपि तथा।

यद्वा इष्टभेदाविषयकं ज्ञानं प्रवर्तकम्। न चाभेदानुमिताविष्टभेदो

---

**प्रकाशः**

भावः। ननु पर्वतत्वादिपक्षतावच्छेदकवत् पूर्वज्ञानोपनीतश्वेतभेदः[1] पक्षीभूते शङ्खे श्वेताभेदानुमित्या विषयीकर्तव्य एवेत्याशङ्क्य निराकरोति-- **न चेति**। अविरोधिनोरेकनिश्चयप्रकारत्वम्। प्रकृते च न तथेति भावः।

**अत एवेति**। यत एवाभेदज्ञाने भेदो न विषयः अत एव पूर्वं प्राच्यां प्रतीचीभेदप्रत्यये विद्यमानेऽपि स प्रत्ययो न भेदग्राही न तदुत्तरकालीनदोषजन्य-

---

**न्यायशिखामणिः**

ननु यद्वेत्यत्र इष्टभेदाविषयकं धर्मिज्ञानं प्रवर्तकमित्युक्तमयुक्तम्। रजत एव नेदं रजतमित्यत्र प्रवृत्तिप्रसङ्गात्। न च स्वतन्त्रेष्टोपस्थितेरपि कारणत्वात् न दोष इति वाच्यम्। तथापि श्वेताभेदज्ञानं कथं प्रवर्तकमिति चेत्—किं भेदग्रहेण प्रतिबन्धात् तस्यैवानुदयः उत तस्य भेदविषयत्वात् प्रवर्तकत्वानुपपत्तिः। तत्राद्यं निराकरोति—**तच्चेति**। **श्वेतभेदेति**। तत्प्रत्ययस्य भ्रमत्वेन ज्ञातत्वान्न प्रतिबन्धकतेति भावः। द्वितीयमाशङ्कते—**नन्विति**। **अविरोधिनोरिति**। विरोधित्वेनाभासमानयोरित्यर्थः। तथाभूतयोरपि संशयप्रकारत्वादाह— **निश्चयेति**। [2]नन्विष्टभेदाविषयकज्ञानप्रवर्तकत्वं नातश्शब्दार्थः। तथा सति भेदग्राहीति विधेयानन्वयप्रसङ्गात्। भेदप्रत्ययो न भेदग्राहीति च व्याघात इत्यत आह—**यत इति**।

---

1. क. '॰भेदः' इत्यस्यानन्तरम्—
 'यद्यप्येवं भेदप्रतियोगीदं रजतमिति ज्ञानाच्छुक्तौ प्रवृत्तिर्न स्यादिति दोषः, तथापि पुरोवर्तिनि भेदविशिष्टव्यवहारप्रयोजकासंसर्गाग्रह इति' इत्यधिकपाठो दृश्यते।
2. क. नन्विष्टभेदादिविषयक-
 ग. 'नन्विष्टभेदादि······यत इति' इति ग्रन्थस्त्रुटितः।

विषयः । अत एव पूर्वं भेदप्रत्ययेऽपि स प्रत्ययो न भेदग्राहीति दिङ्मोह-प्रतिबिम्बादिप्रत्ययाः ।

नन्वेवं रजतेऽपि विशिष्टज्ञानं न सिध्येत् प्रवृत्तेर्भेदाग्रहादेवोपपत्तेः । इदं रजततया जानामि रजततया ज्ञातमित्यनुभवः शुक्तावपि तुल्यः । न

---

प्रकाशः

प्रतीच्यभेदज्ञाने स्वविषयीभूतभेदविषयत्वस्वीकारीति केवलप्रतीच्यभेदविषयो दिङ्मोहो जायते । अन्यथा तत्रापि भेदाभेदविषयक एव प्रत्ययः स्यात् । एवं प्रतिबिम्बादिज्ञाने जले चन्द्रवद्भेदप्रत्ययानन्तरं दोषजन्याः चन्द्रवदभेदमात्रगोचराः प्रत्यया उत्पद्यन्त इत्याहुः ।

केचित्तु यत एवेष्टभेदाविषकं ज्ञानं प्रवर्तकम् अत एव दोषबलेन [1]भेद-प्रत्ययोऽपि सूर्योदयवत्त्वेन प्राच्यभेदप्रत्ययो न प्राचीभेदग्राहीति प्राच्यर्थिप्रवर्तकः । एवमादर्शे मुखमिति भ्रमेऽपि आदर्शत्वेन मुखाभाववदनुमितिर्न मुखाभावबद्भेद-ग्राहिणीति मुखाभावार्थिप्रवर्तिकेत्यर्थः । दिङ्मोहादौ सति प्रत्यया उक्तानुमिति-रूपाः [2]प्रवर्तका इति शेषः इत्याहुः ।

---

न्यायशिखामणिः

नन्विष्टभेदाविषयकज्ञानप्रवर्तकत्वस्य व्यवहितत्वेऽपि [3]प्रकृतत्वात्तदेवात-श्शब्दार्थः । न त्वव्यवहितमप्यभेदज्ञानस्य भेदाविषयकत्वम्, तस्याप्रकृतत्वात् । किं च प्राच्यां प्रतीच्यभेदप्रत्ययस्य तद्भेदविषयत्वापादनं नानिष्टम् । न चैवं ततः प्रवृत्तिर्न स्यादिति वाच्यम् । शङ्खे पीताभेदप्रत्ययवत् तदभेदप्रत्ययस्या-प्रामाण्यशङ्कास्कन्दितत्वेनाप्रवर्तकतया [4]ततस्तदभावापादनस्येष्टत्वात् । अपि च [5]भेदग्राहिशब्दस्य मुख्यार्थपरित्यागेन भेदोपनायकत्वपरत्वकल्पनाप्रसङ्गः । [6]न चैवं वक्ष्यमाणरीत्या मुख्यार्थसंभवे [7]न्याय्यम् । न च वक्ष्यमाणमतेऽपि

---

1. ख. भेदप्रत्ययेऽपि
2. क. प्रवर्तिकाः
3. ग. प्रवर्तकत्वात्
4. क. तत्तदभावा-
5. क. अभेदावगाहिशब्दस्य
6. घ. न चैषः
7. क. न्यायः

च शुक्तौ रजतत्वबाधात् सोऽप्यसंसर्गाग्रहः, बाधस्यापि विशिष्टज्ञानत्वे मानाभावादिति चेत्—न। तत्र हि रजतस्य न स्मृतिः प्रागननुभवात्।

---

### प्रकाशः

सोऽपीति। यथा शुक्तौ रजतत्वासंसर्गाग्रहः तथा तद्विषयकज्ञाने रजतविषयकत्वासंसर्गाग्रह इत्यर्थः। बाध(क)स्येति। पुरोवर्तिनि रजतत्वाभावासंसर्गाग्रहरूपत्वात्तस्यापि विशिष्टज्ञानत्वे मानाभाव इत्यर्थः। बाधशून्यानुव्यवसायबलेन यदि विशिष्टधीः स्यात्तदा शुक्तावपि स्यात्। अतो न स तस्यां प्रमाणमिति भावः। तत्र हीति। आद्यरजतानुभव इत्यर्थः। प्रागिति। तज्जन्मनीति

---

### न्यायशिखामणिः

प्रवर्तकशब्दकल्पनं दोष इति वाच्यम्। एतन्मतेऽपि तदुत्तरकालीनदोषजन्यप्रतीच्यभेदज्ञान इति गुरुशब्दस्यावश्य कल्पनीयत्वात् इत्युपाध्यायमतेऽपरितोषात् जरन्मतमाह—केचित्त्विति।

ननु [1]सोऽपीत्यत्रानुभवपरामर्शे असंसर्गाग्रह इत्यसंगतिरित्याशङ्क्य, अपिशब्दो भिन्नक्रमः। तथा च यत्र पुरोवर्तिज्ञाने रजतविषयत्वानुभवोऽभिमतस्तत्राप्यसंसर्गाग्रह इत्यर्थो विवक्षित इत्याह—यथेति। [2]अग्रहरूपत्वात् अग्रहसंनिहितत्वात् तस्यापीति। बाधकत्वेनाभिमतपुरोवर्तिज्ञानस्यापीत्यर्थः। ननु मा भूद्बाधः, ततः किमित्यत आह—बाधेति।

ननु सत्यस्थले रजतमिति ज्ञानस्य विशिष्टज्ञानत्वमुपेत्यानुभवत्वं निराचिकीर्षितम्, उत तस्यानुभवत्वमङ्गीकृत्य विशिष्टज्ञानत्वम्। आद्ये रजतत्वविशिष्टज्ञानं न स्मृतिः, प्रागननुभूतविषयत्वादित्युक्तं न युक्तम्। द्वितीयादिरजतज्ञानस्यापि पक्षत्वे अंशतो बाधात्। [3]जन्मान्तरे रजतत्वस्यानुभूतत्वेन [4]हेत्वसिद्धेश्च इत्यतः पक्षहेतू व्याचष्टे—आद्यरजतेत्यादिना। आद्यरजतानुभवस्थल इत्यर्थः। तथा च एतज्जन्मन्याद्यरजतत्वविशिष्टज्ञानं पक्षः, एतज्जन्मान्तर्गतप्राक्कालाननुभूतविषयत्वं हेतुरिति भावः।

---

1. क. नापीत्यत्र
2. ग. अगृहीतरूपत्वात् अग्रहसहित-
3. क. ज्ञानान्तरे
4. क. हेत्वसिद्धिश्च

ग्रहणं च तस्य धर्मिविषयकं योग्यधर्मियोगेन रजतत्वजातिग्रहादित्यर्थसिद्धं धर्मधर्मिविषयकमेकं ज्ञानम्। न च रजतत्वस्य शुक्त्यनुभवविषयत्वे हेतुरस्ति। न च प्रत्यभिज्ञानवत् संस्कारेन्द्रिये हेतू। तयोरत्र भिन्नविषयकत्वात्। एकदा स्वतन्त्रोपस्थितविरुद्धानेकभेदाग्रहे संशयः।

---

**प्रकाशः**

शेषः। वस्तुत इदानीमुत्पन्ने चैत्रे विशिष्टबोधे न स्मरणसंभावनापीति ध्येयम्।

**ग्रहणं चेति**। तथा च सामग्र्येव विशिष्टबुद्धौ मानमित्यर्थः। जातीति न्यायविदोक्तम्। मिथ्याज्ञानाभावेऽपि संशयव्यवहारं समर्थयति—एकदेति। भ्रमव्यावृत्त्यर्थम् अनेकेति। एवमपि रजत एव नेदं रजतं किं तु शुक्तिरिति भ्रमे

---

**न्यायशिखामणिः**

ननु सामान्यव्याप्तौ जातमात्रस्याद्यप्रवृत्तिहेतुस्मरणे व्यभिचारः। विशेषव्याप्तौ च तद्विषयरजतव्यक्तेः प्राचीनभवेऽप्यननुभूतत्वेन हेतुविवक्षावैयर्थ्यम्। किं च रजतत्वविशिष्टज्ञानवदपूर्वचैत्रत्वादिविशिष्टज्ञानेऽप्येतदनुमानावतारे तत्र चैत्रत्वविशिष्टव्यक्तेरनुभूतत्वस्यासंभावितत्वेन तद्विवक्षावैफल्यं दुर्वारमित्यस्वरसात् यथाश्रुत एव हेतुः साधुरित्याह—**वस्तुत इति**।

द्वितीये रजतत्वानुभवो धर्मिविषयकः योग्यधर्मीन्द्रियसंनिकर्षसत्त्वादिति दूषणमुक्तं [1]**ग्रहणं चे**त्यादिना। तदसारम्। अन्धकारस्थले व्यभिचारादित्याशङ्क्य धर्मिप्रत्यक्षजनकसामग्र्येव लिङ्गमित्याह—**तथा चेति**। नन्वनेनैव प्रमाणोपन्यासे रजतत्वेत्यादि व्यर्थमित्याशङ्क्य, रजतत्वग्रहो धर्मिविषयकः जातिप्रत्यक्षत्वादित्यनुमानान्तरसूचकं तदित्याह—**जातीति**। अथ वा रजतत्वग्रहणस्य धर्मिविषयकत्वे लिङ्गानुपन्यासात् स्वयं तदाह—**तथा चेति**। [2]**सामग्र्येवेति**। यद्यपि धर्मिग्राहक[3]सामग्रीसत्त्वं धर्मिविषयत्वव्याप्यतया तत्रैव [4]मानम्, न तु धर्मधर्मिविषयकैकज्ञानत्वरूपविशिष्टज्ञानत्वे; तथाप्येकमिदं [5]धर्मिविषयकग्रहणमिति पक्षतावच्छे-

---

1. क. ग्रहाणां चे-
2. ग. सामग्र्येवेति।
3. घ. ॰सामग्रीत्वं
4. ग. अनुमानम्
5. ग. घ. धर्म

(न च) [न तु] क्रमेणोपस्थितानेकभेदाग्रहो येन स क्रमिकविपर्ययद्वयरूपः स्यात्। अन्यथा तवाप्यप्रतीकारात्। न च संशयानन्तरं विपर्ययदशायामुभयभेदाग्रहे संशयः, एकभेदाग्रहे अन्यथाख्यातिः, दोषमहिम्ना

---

प्रकाशः

संशयत्वापत्तिरित्यत उक्तम्—स्वतन्त्रोपस्थितेत्यनेकविशेषणम्। एकस्मिन् धर्मिणीत्यपि बोध्यम्। संशय इति। व्यवह्रियत इति शेषः। तेन न सप्तम्यनुपपत्तिः।

---

न्यायशिखामणिः

दकमहिम्ना [1]धर्मविषयकैकग्रहणत्वविशिष्टधर्मिविषयकत्वलाभात्। एतदेवाभिप्रेत्य अर्थात् सिद्धं धर्मधर्मिविषयकमेकज्ञानमित्युक्तम्।

ननु रजतत्वग्रहो व्यक्तिवैशिष्ट्यविषयकः जातिप्रत्यक्षत्वात्। न चाप्रयोजकत्वम्, व्यक्तेरपि योग्यत्वेन संनिकृष्टत्वेन च तद्युक्ताया एव जातेः सर्वत्र प्रत्यक्षेण ग्रहात्। अन्यथा [2]व्यक्त्यभाने जातिरेव न भासेत। ततश्च वैशिष्ट्यविषयत्वमपि विशिष्टज्ञानत्वं न दुर्लभमित्युक्तं मणौ—योग्येत्यादि। तदचारु। गुरुमते समवायस्यातीन्द्रियत्वेन धर्मियोगेन जातिग्रहादित्यनुपपत्तेरित्याशङ्क्य, तदतीन्द्रियत्वेऽपि तद्भिन्नवैशिष्ट्यं तत्र भासत इत्यवश्यं वाच्यम्। अन्यथा विशिष्टज्ञानस्य समूहालम्बननिर्विकल्पका[3]विशेषप्रसङ्गात् इति न्यायं जानतैव गुरुणा धर्मियोगेन जातिग्रहादित्युक्तम्। अतो न विरोध इत्याह —जातीति।

नन्विदं ज्ञानं संशयः इदं ज्ञानं विपर्यय इति विचित्रव्यवहारस्तत्र मानम्। अन्यथा तदनुपपत्तेः। न चायमपि भेदाग्रहादुपपन्नः। तस्य विपर्ययेऽप्यविशेषात्। [4]अयथार्थज्ञानस्वीकारे च विरुद्धनानाकोटिकविशिष्टज्ञानं संशय इति तद्व्यवहारसंभव इत्याशङ्कां वारयितुं मणौ [5]एकदेत्याद्युक्तमसंगतम्। भेदाग्रहे सति संशयोत्पत्तिज्ञप्त्योः परैरनङ्गीकारादित्यत आह—मिथ्येति। ज्ञानस्य

---

1. ग. धर्मि-
2. क. ग. व्यक्तिभाने
3. क. ०कामेद-
4. ग. घ. मिथ्याज्ञान-
5. क. एकदेत्युक्तम्

ह्येकस्य न स्वातन्त्र्येणोपस्थितिः किं त्वभावविशेषणतयेति तद्भेदाग्रहोऽप्यकिंचित्करः । न च संशयानन्तरं धूमभ्रमादस्ति क्वचिद्वह्न्यर्थिप्रवृत्तिर्न तु तेन विना । न च तस्य स्वतन्त्रोपस्थितवह्न्यसंसर्गाग्रहो द्वारम्, संशयानुरोधेन तस्य प्रागपि सत्त्वाद्वह्न्यनुमितिर्द्वारमिति वाच्यम् । लिङ्गभ्रमस्य हि निर्वह्नित्वस्य स्वातन्त्र्येणोपस्थितिप्रतिबन्धकत्वेन नियमतः स्वतन्त्रवह्निस्मृतिर्द्वारमिति न संशयान्यथाख्याती । न च पर्वतस्य प्रत्यक्षत्वे वह्नेश्च स्मरणे प्रत्यक्षभ्रमान्न विशेष इति साक्षात्करोमीति स्यात् न त्वनुमिनोमीति

---

प्रकाशः

युगपद्विशेषणफलमाह—न त्विति । ननु स्थाणौ स्थाणुपुरुषसंशयानन्तरम् अयं पुरुष इति भ्रमे सति भ्रमानुरोधात् पुरुषभेदाग्रहेऽन्यथाख्यातिभिया स्थाणुभेदाग्रह इति संशयापत्तिरित्याशङ्क्य निराचष्टे—न चेति । संशयोत्तरप्रत्यक्षस्य विशेषदर्शनजन्यत्वेनावधारणात्मकतया दोषप्राबल्येन [1]वा पुरुष एव [2]न स्थाणुरिति तत्र भ्रमः । तथा च स्थाणुकोटौ न स्वातन्त्र्यमिति नोक्तदोष इत्याह—दोषेति । न चेति । यद्यपि धूमभ्रमो न प्रवृत्तिकारणम्, तथापि मध्यवर्तितासाधर्म्येण द्वारमित्युक्तम् ।

---

न्यायशिखामणिः

मिथ्यात्वाभावेऽपीत्यर्थः । समूहालम्बनस्थलेऽतिप्रसङ्गादाह—[3]एकस्मिन्निति । व्यवहारं समर्थयतीत्येतदेवाध्याहारेण द्रढयति—व्यवह्रियत इति ।

नन्वस्य ग्रन्थस्य नान्यथाख्यातिपरत्वम्, समाधानविरोधात् । नापि संशयापत्तिपरत्वम्, तावता स्थाणुभेदाग्रहेऽपि [4]पुरुषभेदाग्रहानवश्यंभावादित्याशङ्क्याह—नन्विति । [5]विशेषदर्शनजन्यत्वेनेति । एतच्च न्यायमताभिप्रायेण । परमते स्थाणावन्यथाख्यातिभयेन पुरुषत्वव्याप्यज्ञान[6]पुरुषत्वज्ञानयोरभावेन तज्जन्यत्वेनावधारणात्मकतयेत्यनुपपत्तेः । वस्तुतो लिङ्गासंसर्गाग्रहस्यापरकोटिस्वातन्त्र्यप्रतिबन्धकत्वान्न स्वतन्त्रोपस्थितोभयभेदाग्रह इत्यत्र तात्पर्यम् ।

---

1. क. 'वा' नास्ति ।
2. ख. 'न' नास्ति ।
3. ग. तस्मिन्निति
4. ग. पुरुषभेदावश्यं-
5. ग. विशेषादर्शन-
6. क. घ. °पुरुषज्ञान-

ध्यम् । लिङ्गज्ञानानन्तरभावित्वप्रतिसन्धानाप्रतिसन्धानाभ्यामुभय-संभवात् ।

एवं स्वतन्त्रोपस्थितानिष्टभेदाग्रहोऽपि निवर्तकः । तेनेदं रजतं न शुक्तिरित्यभावप्रतियोगित्वेनानिष्टोपस्थितेस्तद्भेदाग्रहो न निवर्तकः ।

---

प्रकाशः

लिङ्गज्ञानेति । यद्यपि तन्मतेऽनुमितित्वजात्यभावेन लिङ्गज्ञानजन्यत्वेनैवानुमिनोमीत्यनुव्यवसायोऽन्यत्रापीत्यत्र नारोपः । तथाप्यत्र लिङ्गज्ञानस्य [1]निर्वह्नित्वे स्वतन्त्रोपस्थिति[2]मात्रप्रतिबन्धकत्वम्, न तु पर्वतानुभवजनकत्वम् । अन्यत्र तु न तथेति लिङ्गज्ञानजन्यत्वस्यारोप एव । अत एव तदनन्तरभावित्वमात्रमुक्तमित्याहुः ।

ननु शुक्तौ रजतभेदाग्रहात् यथा प्रवृत्तिः तथा शुक्तिभेदाग्रहान्निवृत्तिः स्यात् । तद्ग्रहेऽन्यथाख्यात्यापत्तेरित्यत आह—एवमिति । तेनेति । एतच्चोपलक्षणम् । इदं रजतमित्येव यत्र ज्ञानं तत्रोपस्थितत्वाभावात् तद्भेदाग्रहोऽपि न निवर्तक इत्यपि बोध्यम् ।

---

न्यायशिखामणिः

ननु लिङ्गज्ञानेत्यत्रानुमितित्वजातिरिति विवक्षितं, लिङ्गज्ञानजन्यत्वं वेति विकल्प्य दूषयति—यद्यपीति । लिङ्गेति । यद्यपि विशेषदर्शनजन्यसंशयोत्तर-[3]प्रत्यक्षे तत्प्रतिसन्धानेऽपि नानुमितित्वव्यवहारः, तथापि पक्षतासहकृततज्ज्ञानजन्यत्वस्य विवक्षितत्वान्न दोष इति भावः । [4]नारोप इति । अनुमिनोमीत्यनुव्यवसायस्य नारोपरूपत्वम्, किं तु सत्यत्वमेवास्त्वित्यर्थः । निवर्तकनिरूपणस्य प्रकृतसंगतिमाह—नन्विति । तथा शुक्तीति । तथाच प्रसङ्गात्तन्निरूपणमिति भावः ।

वस्तुतस्तु रजतविशेष्यकशुक्तित्वप्रकारकनिवृत्तिपक्षकानुमानमपि सिद्धान्त्यभिप्रेतम् । [5]तदप्यप्रयोजकत्वान्निराकर्तुमनिष्टभेदाग्रहस्य निवर्तकत्वमुक्तमिति द्रष्ट-

---

1. क. निर्वह्नित्वस्य
2. क. ०मात्रे प्रति-
3. क. ०प्रत्यक्षप्रति-
4. ग. घ. 'नारोप इति ।......सत्यत्वमेवास्त्वित्यर्थः' इति ग्रन्थो नास्ति ।
5. क. तदप्यप्रयोजकत्वानिरासात् कथमनिष्ट-

शुक्त्यभावासंसर्गाग्रहश्च नकारस्यार्थ इति नान्यथाख्यातिः।

---

प्रकाशः

यद्यपि धर्मिज्ञानरूपा शुक्त्युपस्थितिस्तत्राप्यस्ति, तथापि अनिष्टतावच्छेदकप्रकारेणोपस्थितानिष्टभेदाग्रहो नास्तीति भावः।

न(तु)शुक्तिरित्यत्रापि प्रतियोगिस्मृतिमादाय यद्यपि स्वतन्त्रोपस्थितत्वमस्त्येव, तथापि [1]भेदग्रहकाले नास्तीति तेन न तदनन्तरं निवृत्तिः। न च रजते नेदं रजतमिति भेदग्रहकाले प्रतियोगिस्मृतिकालीनस्वतन्त्रोपस्थितरजतभेदाग्रहमादाय प्रवृत्त्यापत्तिरिति वाच्यम्। प्रतिबन्धकाभावत्वेन तस्य हेतुत्वात्। तस्य च कार्यसह(भूतत्वादिति भावः) [भूतत्वेन हेतुत्वादितिभावः]।

वस्तुतः[तु] शुक्तिभेदस्य विशिष्टस्यैव स्मृत्युपनीतस्य तत्रासंसर्गाग्रह इति न प्रतियोगिस्मृत्यपेक्षा। अत एवाह—शुक्त्यभावेति।

एकदेशिमतं दूषयति—अनिष्टाभेदग्रहस्येति। यद्वा नन्वनिष्टाभेदग्रहस्यैव निवर्तकत्वे प्राभाकरमते को दोषः, येन तदेव नाभ्युपेयत इत्यत आह—अनिष्टाभेदग्रहस्येति। अत्र इतिपदपूर्वं किं तु शुक्तिरिति शेषः। अन्यथेति। शुक्त्यभेदग्रहाभ्युपगम इत्यर्थः। अत एवेति। स्वातन्त्र्यविशेषणादित्यर्थः। तथा च प्रवर्तकभेदाग्रहे स्वातन्त्र्यविशेषणात् रजत एव नेदं रजतं किं तु शुक्ति-

---

न्यायशिखामणिः

व्यम्। न शुक्तिरिति। एतच्चोपलक्षणम्। रङ्गमिदं न रजतमित्यत्रापीत्यपि बोध्यम्। किं भेदग्रहकालीनां स्वतन्त्रोपस्थितिमादायातिप्रसङ्गः उत प्रतियोगिस्मृतिकालीनाम्। तत्राद्य आह—भेदग्रहेति। न निवृत्तिरिति। न प्रवृत्तिरपीत्यपि द्रष्टव्यम्। द्वितीयमाशङ्क्य निषेधति—न चेति। प्रवृत्त्यापत्तिरिति। एतच्च निवृत्त्यापत्तेरप्युपलक्षणम्। ननु ज्ञानातिरिक्तप्रतिबन्धकाभाव एव तथा हेतुत्वनियम [2]इत्यरुचेराह वस्तुतस्त्विति। शुक्तिभेदस्येति। रजतभेदस्येत्यपि बोध्यम्।

---

1. ख. भेदाग्रह-
2. ख. इत्यत आह

अनिष्टाभेदग्रहस्य निवर्तकत्वे च रजत एव नेदं रजतमिति कृत्वा न निवर्तेत, अन्यथा अन्यथाख्यात्यापत्तेः। अत एव रजत एव नेदं रजतमिति ज्ञानेऽपि न प्रवृत्त्यन्यथाख्याती रजतभेदासंसर्गाग्रहात्।

ननु रजतरङ्ग्योरिमे रङ्गरजते इत्यत्र प्रत्येकमुभयभेदाग्रहे युगपत्प्रवृत्तिनिवृत्ती स्यातामिति चेत्—न। एवंविधभ्रमे मानाभावात्। कार्योन्ने-

प्रकाशः

रिति ज्ञाने सति यथा न प्रवृत्त्यन्यथाख्याती तथा निवर्तकभेदाग्रहेऽपि स्वातन्त्र्यविशेषणाच्छुक्तौ रजतमिदं न शुक्तिरिति ज्ञाने सति न निवृत्त्यन्यथाख्याती इत्यर्थः। **रजतभेदेति**। रजते रजतभेदसंसर्गग्रहे अन्यथाख्यातिः स च [1]नाभ्युपेयत इति भावः।

**अभयेति**। स्वतन्त्रोपस्थितेष्टानिष्टभेदाग्रह इत्यर्थः। **अन्यथेति**। [2]यद्यप्यस्मन्मते तत्र [3]भेदग्रहान्न संशयः, अन्यथाख्यात्यापत्तेरिष्टत्वात्। तथापि

न्यायशिखामणिः

**एकदेशीति**। न तु न्यायमतम्। तथा सत्यन्यथाख्यात्यापत्तेरिति दूषणस्यासंगतत्वापातादिति भावः। नन्वेतादृशैकदेश्येव नास्ति। अन्यथाग्रे [4]तदापादनस्येष्टप्रसङ्गत्वापत्तेरित्यपरितोषादाह—**यद्वेति**। ननु तवाप्युपस्थितानिष्टभेदाग्रहाभावात् दोष[5]तुल्यत्वमित्यत आह—**अत्रेति**। एतच्चापाततः। इष्टाभेदज्ञानप्रवर्तकत्वे सति तस्यातिरिक्तविशिष्टज्ञानकल्पनादिदोषस्यात्रापि [6]संभवेन को दोष इति प्रश्नानवकाशात्।

ननु स्वतन्त्रोपस्थितं यदिष्टं तद्भेदग्रहाभावस्य प्रवर्तकत्वे स्वातन्त्र्यं प्रतियोगिविशेषणं [7]स्यात्। तथा च तदुपादानेऽप्युक्तस्थले विशिष्टाभावसत्त्वात् वृत्त्यादिप्रसङ्गो दुर्वार इत्याशङ्क्य, स्वतन्त्रोपस्थितिकालीनत्वं प्रवर्तकनिवर्तक-

1. क. नाभ्युपेय इति
2. ख. यद्यप्यस्मिन्मते
3. क. भेदाग्रहान्न
4. क. अनिष्टापादन-
5. ग. घ. °तौल्य-
6. ग. असंभवेन
7. घ. इत्युक्तं स्यात्

यधर्माणां यथाकार्यमुन्नयनात् । क्रमोत्पन्नज्ञानयोर्भेदाग्रहादेकत्वाभिमानः । अन्यथा तवापि स्वतन्त्रोभयभेदाग्रहात् प्रत्येकं रजतं रङ्गं वेति संशयः स्यात् । यदेव वा तत्र विपर्ययनियामकं तत एव प्रवृत्तिनिवृत्ती स्याताम् तद्वतोरेवेति न्यायात् ।

यत्तु—'प्रसक्तप्रतिषेधात्मा बाधोऽख्यातौ न युज्यते ।
साधयत्यन्यथाख्यातिं बाध एव हि नः स्फुटम् ॥'

---

**प्रकाशः**

यत्र [1]दोषवशान्न भेदग्रहः, किं तु इमे रङ्गरजते इत्येव निश्चयस्तत्र संशयापत्तिर्बोध्या ।

[2]नन्वस्मन्मते तत्तद्धर्मिज्ञानजन्यकोटिद्वयस्मरणस्य तत्र संशयजनकत्वम् अतो नोक्तदोष इत्यत आह—**यदेवेति** । तर्हि [3]यद्धर्मज्ञानात् यदुपस्थितिस्तद्भेदाग्रहः प्रयोजक इति द्वितीयभेदाग्रहः सन्नप्यकिंचित्कर इति भावः । **यत्त्विति** । नेदं रजतमिति बाधः अख्यातौ भेदाग्रहपक्षे न युज्यते, किं त्वन्यथाख्यातिपक्ष एव । प्रसक्तस्यैव प्रतिषेधात् । प्रसङ्गस्य चारोपरूपत्वादित्यर्थः । **विपरीतमिति** । अन्यथाख्यातिपक्षे ज्ञानयोर्बाध्यबाधकभावव्यवस्थैव न स्यादित्यर्थः । तदेव दर्शयति—**परस्परेति** । न चोत्तरत्वमेव बाधकत्वे बीजमित्याह—

---

**न्यायशिखामणिः**

भेदाग्रहयोरेव विशेषणमित्याह—**तथा चेति** । नन्वन्यथाख्यातिभयाभावेन संनिकर्षबलाद्रङ्गे रजतभेदस्य रजते रङ्गभेदस्य ग्रहसंभवेन स्वातन्त्र्याभावान्न प्रत्येकं प्रवृत्तिनिवृत्तिप्रसङ्ग इत्यत आह—**स्वतन्त्रेति** । दोषान्नोभय[4]भानम् । 'आरोपे सति निमित्तानुसरण'मिति न्यायाच्च न प्रत्येकं स्वप्रतियोगिकभेदभ्रम इति भावः ।

ननु दोषविशेषः संशयनियामकः, न हि तत एव प्रवृत्तिनिवृत्ती इति युक्तं, दोषस्य भेदाग्रहप्रयोजकत्वेन तन्मतेऽपि प्रवृत्त्यादिहेतुत्वानभ्युपगमादि-

---

1. ख. दैवान्न
2. ख. नन्वस्मिन्मते
3. ख. यद्धर्मि-
4. क. °भेदमानम्

इति । तद्विपरीतम् । परस्परविरुद्धत्वाविशेषेण बाध्यत्वाव्यवस्थितेः । विरुद्धार्थकृतयोत्पन्नत्वं च तुल्यम् । पूर्वेणापि क्वचित्परस्य बाधात् । तस्मादभेदाग्रहात् प्रसञ्जितो व्यवहारो भेदग्रहात् बाध्यत इति युक्तम् ।

उपेक्षाभ्रमे च शब्दप्रयोगो बाध्यः । तदीयतामात्रस्वभावत्वात् तद्विषयत्वस्य । कथं रजतीयमात्रज्ञानमरजतीयं स्वभावव्याघातात् । न चोभयीयम्, समूहालम्बनापत्तेः । तदुक्तम्—

'अन्यस्य ह्यन्यथाभानं प्रतीत्यैव पराहतम् ।
परस्मिन् भासमाने तु न परं भासते यतः ॥' इति ।

---

प्रकाशः

पूर्वेणापीति । यदनेन बोध्यं तदसत्यमित्याप्तवाक्यादित्यर्थः । कस्तर्हि [1]बाध्यत इत्यत आह— तस्मादिति ।

अन्यथाख्यातौ [2]बाधकान्तरमाह—तदीयेति । समूहेति । धर्मधर्मिभावानापन्नोभयज्ञानस्य [3]समूहालम्बनत्वनियमादित्यर्थः । प्रतीत्यैवेति । प्रतीति-

---

न्यायशिखामणिः

त्याशङ्क्य दोषभिन्नमेव तन्नियामकं विवक्षितमित्याह—नन्विति । द्वितीयेति । रङ्गे [4]रजतभेदाग्रहो रजते तद्भेदाग्रहश्च न निवृत्ति[5]प्रवृत्तिप्रयोजकावित्यर्थः ।

ननु शुक्तौ रजतत्वप्रतिषेधरूपबाधस्याख्यातिमतेऽपि संभवात् प्रसक्तस्य च तस्य तत्र न्यायमतेऽप्यसंभवादित्यत आह—नेदमिति । [6]प्रसक्तस्यैवेति । तथा च प्रसक्तत्वं प्रतियोगिविशेषणमिति नोक्तदोष इति भावः ।

नन्वन्यथाख्यातिं बाधः [7]साधयतीति विपरीतशब्दार्थो न युक्त इत्यत आह—अन्यथेति ।

---

1. ख. बाधकः
2. ख. बाधकमाह
3. क. समूहालम्बननियमा-
4. घ. रङ्गभेदा-
5. क. 'प्रवृत्ति' नास्ति ।
6. ग. प्रसक्तस्य चेति ।
7. क. बाधयतीति ।

विषयं विनैव तदाकारं ज्ञानमिति साकारवादः। ज्ञानायथार्थत्वे च ज्ञानमात्रस्य तच्छङ्कया न निष्कम्पप्रवृत्तिः। न च दोषाजन्यत्वादिना विश्वासः। अप्रमादविश्वासे प्रवृत्त्यभावापत्तेः। नापि तज्ज्ञानात्। ज्ञानत्वेन तत्राप्यविश्वासात्। तदुच्यते—

---

**प्रकाशः**

स्वभावेनेत्यर्थः। **परस्मिन्निति**। अन्यस्मिन्नन्यधर्मवैशिष्ट्यं न भासत इति प्रतीतिस्वभाव इत्यर्थः।

**विषयमिति**। पुरोवर्तिनि रजतत्वाभावात् ज्ञानाकारस्यैव रजतत्वस्य तत्र भानाभ्युपगमादित्यर्थः। असंनिकृष्टरजतस्य भानाभ्युपगमे वा समूहालम्बनत्वा-

---

**न्यायशिखामणिः**

ननु प्रयोगो [1]बाध्यत इत्यत्र तदीयतामात्रस्वभावत्वादित्यस्य हेतुत्वाभावेन [2]तेनैकग्रन्थ्यायोगात् बाधकान्तरसूचककिंचेत्याद्यभावाच्चासंगतिरित्यत आह— **अन्यथाख्याताविति**। **बाधकान्तरमिति**। संविद्विरोधलक्षणमित्यर्थः। यज्ज्ञानं रजतीयमात्रस्वभावं तस्य किं शुक्तिविषयत्वं [3]तदुभयीयमात्रस्वभावस्य वा। तत्राद्यं निराकृत्यान्त्यं निरस्तं—[4]**न चोभयीयमित्यत्र**। तदयुक्तम्। उभयविषयकत्वस्य समूहालम्बनत्वाप्रयोजकत्वादित्यत आह—**धर्मेति**। एतच्चापाततः। यज्ज्ञानं विशेषणविशेष्यतत्संबन्धीयमात्रस्वभावं तस्य सत्यस्थलीयविशिष्टज्ञानवत् पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकत्वे विरोधाभावात्।

वस्तुतः परस्मिन् [5]परधर्मानवगाहित्वमेवात्र संवित्स्वभावोऽभिमतः। स च [6]परत्र तद्भाने व्याहन्येतेत्यत्र तात्पर्यम्। अत एव तदुक्तमित्यत्र तत्रोपोद्बलकमुक्तमिति द्रष्टव्यम्।

नन्वयं घट इति विशिष्टज्ञाने घटघटत्वयोः परस्परं भिन्नयोरेव भानदर्शनात् परस्मिन्नित्यसंगतिरित्यत आह—**अन्यस्मिन्** इति। ननु ज्ञानाकारं रजतं

---

1. घ. बोध्यते
2. क. तेनैकग्रन्थ्यायोगात् बाधकान्तरस्य च किं चेत्याद्यभावाच्च
   ग. तेनैव ग्रहायोगात् बाधकान्तरसूचकं किं चेत्या-
3. ग. तदुभयमात्र-
4. ग. न चोभयविषयमित्यत्र
5. क. विरोधानवगाहित्व-
6. क. परतन्त्रतद्भाने

'अहो बत महानेष प्रमादो धीमतामपि ।
ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः ॥' इति ।

भ्रमस्य च सन्मात्रविषयकत्वेनायथार्थता । असद्विषयकत्वेऽसत्ख्यातिः । न च तत्र हेतुरस्ति । शब्दस्याप्तोक्तस्य निर्दोषस्य लिङ्गस्य चाहेतुत्वात् । न च शब्दानुमानाभासात्सा । योग्यतादिमत्तया शब्दस्य लिङ्गवत्तया पक्षस्य ज्ञानाच्छाब्दानुमिती । न चाभासे तज्ज्ञानमस्ति, हेत्वभावादेव । किं त्वगृहीतासंसर्गज्ञानद्वयम् । तत्र इन्द्रियस्य संबद्धग्राहकत्वात्

---

प्रकाशः

पत्तेरिति भावः । [1]दूषणान्तरमाह—ज्ञानेति । दोषाजन्यत्वं स्वरूपसत् विश्वासाय, ज्ञातं वा । आद्ये—भ्रमादिति । अन्त्ये—नापीति ।

योग्यता(षी)[दी]ति । स्वमतावष्टम्भेनेदं बोध्यम् । न च तत्रापि लिङ्गाद्यसंसर्गाग्रहस्यैव हेतुत्वमस्त्विति वाच्यम् । लाघवेन विशिष्टज्ञानस्यैवानुमितिहेतु(त्वमिति)[त्वादिति]भावः ।

---

न्यायशिखामणिः

बहिरिव भासत इति हि साकारवादः । अन्यथाख्यातौ तु [2]व्यवहितं रजतं शुक्त्यात्मकं प्रतीयत इत्यभ्युपगमात् महद्वैलक्षण्यमित्याशङ्क्य, [3]देशान्तरस्थस्य संनिकर्षाभावेन भानायोगात् परिशेषात् ज्ञानाकाररजतमङ्गीकृत्य तद्बहिरवभासत इत्यकामेनाप्यवश्यमभ्युपगमनीयमित्याह—पुरोवर्तिनीति । असंनिकृष्टभानपक्षे परिशेषासिद्धिमाशङ्क्य [4]समूहालम्बनत्वप्रसङ्गदोषात्तत्पक्ष एवायुक्त इत्याह—असंनिकृष्टेति । दूषणान्तरमिति । अनाश्वासरूपमित्यर्थः ।

उद्भवस्य गुणगतजातित्वादाह—वह्नीति । तर्हि पुरुषान्तरीयोदर्यवह्निरपि तथा स्यादित्यत आह—[5]अन्यत्रेति । न तथेति । नोद्भव इत्यर्थः । न भक्ष्येति । पुष्टिप्रतिबन्धकभक्ष्यदाहो नेत्यर्थः । नन्वन्यत्रोद्भवाभावे किमप्यशित-

---

1. ख. दोषान्तरमाह
2. क. व्यवहितं शुक्त्यामेकं
3. ग. घ. देशान्तरीयस्य
4. क. समूहालम्बनप्रसङ्ग-
5. ग. अन्यथेति

न च प्रत्यभिज्ञानवत्, उक्तोत्तरत्वात्। न च दोषवशादसंबद्धेऽपि विजातीयं कार्यम्। दोषस्याजनकत्वात्। न हि दुष्टात् कुटजबीजाद्यवाङ्कुरः। भस्मकं च न दोषः। किं तु वह्नेरुद्भवः। तस्य च दाहसामर्थ्यं दृष्टमेव। रसार्जनं तु न भवति, भक्ष्यदाहात्। दवदहनदग्धवेत्रबीजं च नष्टमेव।

तद्भस्मनः कदलीजनकत्वम्। तदुक्तम्—

'साकारवादादसतो न भानात्
संविद्विरोधादथ हेत्वभावात्।
धियामनाश्वासभयाच्च नेष्टा
यतोऽन्यथाख्यातिरतो यथार्था॥

---

प्रकाशः

ननु भस्मकदोषस्य विपरीतकार्यजनकत्वं दृष्टमित्यत आह—भस्मकं चेति। [1]वह्नेरिति। वह्निस्पर्शस्योद्भव इत्यर्थः। अन्यत्र तु न तथा। अत एव न [2]भक्ष्यदाह इति भावः। स्पर्शगत उद्भवविशेषस्तत्रैवेत्यप्याहुः[3]।

यतः ख्यातिः अन्यथा—व्यधिकरणप्रकारिका नेष्टा ततो यथार्थैवेति योजना। न व्यधिकरणेति। न परस्परव्यधिकरणप्रकारकं विषयताऽसमानाधिकरणप्रकारकं वेत्यर्थः। शुक्तीच्छायामिति। ननु तत्रापीच्छाद्वये भेदाग्रहो ज्ञानवदेव किं न स्यात् इति चेत्—अत्राहुः। इच्छायामिष्टतावच्छेदकेष्टसाधनताव-

---

न्यायशिखामणिः

पीतान्नोदकादि न जीर्येतेत्यस्वरसादाह—स्पर्शेति। उद्भवविशेष इति। अन्यत्र च भक्ष्यदाहप्रयोजकतद्विशेषाभावेऽप्युद्भवसत्त्वान्नोक्तदोष इति भावः।

सिद्ध्यसिद्धिव्याघातभयान्नेष्टान्यथाख्यातिरित्येतत् विशेषणनिरासपरमित्याह यत इति। घटत्वस्यापि यत्किंचिदपेक्षया व्यधिकरणत्वेन तज्ज्ञाने साध्यवैकल्यमित्यत आह—न परस्परेति। न स्वविशेष्यावृत्तिप्रकारकमित्यर्थः। जयदेव-

---

1. क. वह्निरिति स्पर्श-
2. ख. भक्ष्यादाहः
3. क. तत्रेतीत्यप्याहुः

तस्माद्विवादपदं ज्ञानं न व्यधिकरणप्रकारकं ज्ञानत्वात् सत्यज्ञानवत्। भेदाग्रहजन्यरजतत्वप्रकारकशुक्तीच्छायां प्रतियोगिप्रसिद्धिः। ज्ञानत्वं स्वव्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगिवृत्ति न भवति ज्ञानमात्रवृत्तिधर्मत्वात् प्रमात्ववत्।

न च चक्षुश्चाक्षुषसत्यज्ञानातिरिक्तज्ञानजनकं, इन्द्रियत्वात् रसनवदिति प्रतिरोधः, अप्रयोजकत्वात्। चाक्षुषज्ञानातिरिक्तज्ञानजनकत्वोपाधेः

---

प्रकाशः

च्छेदकान्यतरप्रकारकत्वनियमात् केवलेदन्ताप्रकारत्वाभावेनानन्यगतिकतया व्यधिकरणप्रकारकत्वम्। ज्ञाने तु न तथा। अत्र स्वभाव एव शरणम्।

पक्षविकल्पभयादाह—ज्ञानत्वमिति। व्यधिकरणप्रकारकेच्छावृत्तिगुणत्वादौ व्यभिचारवारणायाह—मात्रेति। प्रमात्ववदिति। इदंप्रमात्ववदित्यर्थः। यद्यपि विषयताया निरस्तत्वादित्युक्तमस्ति तथापि परमतेनेदम्। इन्द्रियत्वा-

---

न्यायशिखामणिः

मतमाह—अत्रेति। ननु पूर्वोक्तपक्षे तेनैव हेतुना विषयतागर्भसाध्यान्तरसाधनसंभवे पक्षान्तरादिपरिग्रहगौरवमित्यत आह—पक्षेति। ननु प्रमात्वस्य [1]धर्म्यंशमादाय भ्रमेऽपि सत्त्वात् साध्यवैकल्यमित्यत आह—इदमिति। या सर्वांशप्रमा तन्मात्रवृत्तिधर्मवदित्यर्थः। यद्यप्युक्तधर्मस्य दृष्टान्तत्वेऽपि प्रमात्वे व्यभिचार एव; तथापि [2]पक्षसमत्वान्न दोष इति ध्येयम्।

ननु न चेत्यत्र वटेश्वरोपाध्यायमतमाशङ्कितम्। तत्रेन्द्रियत्वं हि शब्देतरेत्यादि। तथा चात्मन्यपि साध्यसत्त्वेन तद्वारकविशेषणवैयर्थ्यम्। श्रोत्राव्याप्ति[3]वारकविशेषणस्य [4]श्रोत्रसत्यज्ञानातिरिक्तज्ञानजनकत्वरूपसाध्यकतत्पक्षकानुमानेऽप्रसिद्धिवारकत्वेऽपि प्रकृतानुमाने तद्वैयर्थ्यं चेत्यत आह—ज्ञानेति। न च घटादावपि साध्यसत्त्वान्मनःपदमपि व्यर्थमिति वाच्यम्। [5]चान्द्रालोके व्यभिचारवारकत्वात्।

---

1. ग. घ. स्वधर्म्यंश-
2. क. पक्षसत्त्वान्न
3. घ. ०वारकस्य विशेषणस्य
4. क. श्रौत्र-
5. घ. चान्द्रालोकादौ

अन्यथाख्यातेरपि धर्म्यंशे सत्यत्वात् तुल्यन्यायतया व्यापकेऽपि व्यर्थविशेषणत्वाच्च।

एवं [च] स्वरूपतो विषयतश्चागृहीतभेदं ज्ञानद्वयमेव विसंवादिप्रवृत्तिहेतुः। तदुक्तम्—

'संनिहितरजतशकले रजतमतिर्भवति यादृशी सत्या।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति॥'

इति। व्यवहारमात्रस्य भेदाग्रहजन्यत्वेऽपि तस्य संवादतदभावाभ्यां ज्ञाने यथार्थत्वायथार्थत्वव्यपदेशः। अत एव लोके उष्णं जलमिति ज्ञाने नायथार्थत्वव्यपदेशः। उपेक्षाज्ञाने तु तद्व्यपदेशस्तद्योग्यत्वात्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे अन्यथाख्यातिवादपूर्वपक्षः

—:o:—

---

प्रकाशः

दिति। ज्ञानकारणमनस्संयोगाश्रयत्वादित्यर्थः। प्रतिरोध इति। केवलान्वयिवद्विषयविरोधमात्रेण सत्प्रतिपक्षत्वं बोध्यम्। अन्यथाख्यातेरिति। तथा च बाध इत्यर्थः।

---

न्यायशिखामणिः

एतेन ज्ञानकारणत्वादित्येव हेतुः। व्यभिचारावारकत्वाच्छेषवैयर्थ्यमेवेति कस्यचिद्व्याख्यानमपास्तम्। प्रत्यक्ष[1]रूपमात्रे व्यभिचारवारकत्वाच्च। तस्य स्वगोचरभ्रान्तिज्ञाने रासनादिज्ञाने चाहेतुत्वेन साध्यासत्त्वात्।

केवलेति। अभिधेयत्वं शब्दनिष्ठात्यन्ताभावप्रतियोगीत्यनेनाभिधेयत्वानुमानस्य यथा सत्प्रतिपक्षत्वं तथेत्यर्थः। विषयेति। न तु [2]समानधर्मिविषयकत्वमपि

---

1. ग. 'रूप' नास्ति। 2. क. समूहालम्बनधर्मिक-

प्रकाशः

ननु विषययोर्भेदाग्रहसत्त्वेऽपि ज्ञानयोर्भेदग्रहे [1]कथं च तव मते प्रवृत्तिरिति शङ्कां निराकर्तुमुपसंहारव्याजेनाह—एवं चेति। तद्योग्यत्वादिति। संवादि-विसंवादिव्यवहारजननयोग्यत्वात्, तदवच्छेदकं च सदसदसंसर्गाग्रहत्वमित्यर्थः।

---

न्यायशिखामणिः

तन्त्रम्, गौरवादिति भावः। ननु विषयभेदाग्रहादेव[2] प्रवृत्त्युपपत्तौ ज्ञानभेदा-ग्रहस्य तद्धेतुत्वे गौरवम्। अनुपपादितैतत्प्रवर्तकत्वोपसंहरणमयुक्तं चेत्यत आह—नन्विति। ननु सुषुप्तौ ज्ञानाभावादेव प्रवृत्तिप्रसङ्गवारणान्नावच्छेदकापेक्षेत्याशङ्क्य जागरण एव तत्प्रसङ्गवारणाय तदित्याह—भेदग्रह इति। इष्टभेदग्रह इत्यर्थः।

---

1. ख. कथंचित्तव 2. ग. भेदग्रहादेव

# अथान्यथाख्यातिवादसिद्धान्तः

—: * :—

सिद्धान्तस्तु—सत्यस्थले प्रवृत्तिमात्रं प्रतीष्टपुरोवर्तिज्ञाने हेतुतया व्यवस्थितेऽतिप्रसङ्गवारणार्थं विषयतया वैशिष्ट्यमेव कारणतावच्छेदकं कल्प्यते लाघवात्। कारणताग्रहसमये ज्ञानवित्तिवेद्यतया शीघ्रोपस्थितिकत्वात् बाधकाभावाच्च।

---

प्रकाशः

अतिप्रसङ्गेति। भेदग्रहे प्रवृत्तिप्रसङ्गवारणायेत्यर्थः। लाघवादिति। क्लृप्त एव कारणेऽवच्छेदकान्तरकल्पने लाघवम्। कल्पनीये तत्र कारणतावच्छेदकान्तरकल्पने गौरवमित्यर्थः। ज्ञान(वृत्तीति)[वित्तीति]। नन्वस्मिन्न्यायनये प्रामाण्यस्य स्वतोग्राह्यत्वापत्त्या व्यवसायविषयोऽपि वैशिष्ट्यं नानुव्यवसायविषयः। परमते तदतीन्द्रियमेव। तत्कथमेतदिति चेत्—न। व्यवसायस्य वैशिष्ट्यविषयतां प्रसाध्य तन्मतानुसारेण सिद्धान्तादित्येके।

---

न्यायशिखामणिः

ननु [1] कारणतेत्यादिना लाघवहेतुमाहेति प्रतिभाति। तथा चोपस्थितिलाघवमेवोक्तं स्यान्न वस्तुलाघवमित्यत आह—क्लृप्त इति। तथा च लाघवादित्यत्र वस्तुलाघवम्, [2]कारणतेत्यादिना चोपस्थितिलाघवमुक्तमिति भावः।

ज्ञानवित्तिवेद्यतयेत्येतत् न्यायनये परनये वा। तत्राद्यं निराकृत्यान्त्यं निरस्यति—परनय इति। अन्त्यपक्षमादाय समाधत्ते—न व्यवसायस्येति। वैशिष्ट्येति। समवायेत्यर्थः।

ननु स्वतःप्रामाण्यवादिमते समवायभिन्नवैशिष्ट्यस्यावश्यं प्रत्यक्षत्वाभ्युपगमात् समवायविषयत्वसाधने गौरवम्। वक्ष्यमाणरीत्या [3]मतद्वयेन तद्ग्रन्थोपपत्तिश्चेत्यपरितुष्यन्नाह—वस्तुत इति।

---

1. क. कारणेत्यादिना
2. क. कारणेत्यादिना
3. ग. तद्ग्रहेऽप्येतद्ग्रन्थो-
   घ. मतद्वयेऽप्येतद्ग्रन्थोप-

प्रकाशः

वस्तुतो ऽनुव्यवसायोपनीतत्वात् विशेषणवैशिष्ट्यमनुव्यवसायविषय एव। अन्यथा घटत्वप्रकारकत्वमपि तत्र न भासेत, भासमानवैशिष्ट्यप्रतियोगित्वस्यैव प्रकारत्वात्। न चैवं स्वतस्त्वापत्तिः। ज्ञानविषयतामात्रेण तद्ग्रहस्वीकारेऽपि स्वातन्त्र्येण तदस्वीकारात्। तेनैव च रूपेण तद्ग्राहकस्य (तत्सत्ता)[तद्वत्ता]निश्चय-रूपत्वेन तद्घटित[प्रामाण्य]निश्चयरूपत्वादित्युक्तम्। परमते च समवायातीन्द्रिय-त्वेऽपि तद्भिन्नं वैशिष्ट्यं प्रत्यक्षमेव। अन्यथा प्रामाण्ये स्वतस्त्वं न स्यात्।

ननु सत्यस्थले प्रथमं प्रवृत्तिरित्यस्तु। कारणताग्रहोऽपि प्रथमं तत्रैवेति कुतो नियमः। कार्यकारण[1]भावाज्ञानेऽपि स्वरूपसत एव ज्ञानस्य प्रवर्तकत्वात्। तथा च यदि [2]विसंवादिप्रवृत्तिस्थल एव प्रथमं हेतुताग्रहस्तदा तज्ज्ञानस्य वैशिष्ट्यागोचरत्वे कुतो [3]वैशिष्ट्यं ज्ञानवित्तिवेद्यतया शीघ्रोपस्थितिकं स्यात्। भावे वा प्रत्यक्षत एवान्यथाख्यातिसिद्धौ किं युक्त्यन्तरानुसरणप्रयासेनेति चेत्—

---

न्यायशिखामणिः

[4]ज्ञानवित्तीत्यत्रोपस्थितिलाघवं विवक्षितं प्रत्यक्षप्रमाणं वा। नान्त्यः, 'प्रत्यक्षमप्यन्यथाख्यातौ मान'मित्यग्रे वक्ष्यमाणस्य तस्य पुनरुक्तत्वापत्तेरित्यभिप्रेत्य आद्यं दूषयति—सत्यस्थल इति। यद्यप्यारोपस्य प्रमापूर्वकत्वात् सत्यस्थलीय-ज्ञानस्य प्राथमिकत्वनियमो न प्रवृत्तेः, तथाप्यभ्युपेत्याह—अस्त्विति। [5]भावे वेति। ज्ञानवित्तिवेद्यत्व[6]भावे वेत्यर्थः। तथा चान्यथाख्यातौ नानुमानं प्रमाणम्। तदनुग्राहकविशिष्टज्ञानप्रवृत्तिकार्यकारणभावग्राहकस्योपस्थितिलाघवस्यानुव्यवसाय-रूपप्रत्यक्षोपजीव्यत्वात्। तस्य च परेणानङ्गीकारात्। [7]तदङ्गीकारे वा तत एवान्यथाख्यातिसिद्धौ पर्यवसितं विवादेन। न चैवमग्रे [8]प्रत्यक्षोपन्यासोऽप्यसंगतः स्यादिति वाच्यम्। विनीतं प्रति तदभिधानादिति भावः।

---

1. ख. ०भावज्ञानेऽपि
2. ख. संवादि-
3. ख. 'वैशिष्ट्यं······यद्विसंवादिस्थले' इति ग्रन्थो नास्ति।
4. क. ग. ज्ञानवृत्तीत्यत्र-
5. क. माने वेति।
6. क. ०माने वेत्यर्थः।
7. घ. अङ्गीकारे
8. घ. प्रत्यक्षापत्त्या सोऽप्यसंगतः।

प्रकाशः

अत्राहुः । वस्तुगतिस्तावदियं यद्विसंवादिस्थले वैशिष्ट्यं ज्ञानविच्चिवेद्यमेव । परविप्रतिपत्त्या तूच्यते । मास्तु तत्र वैशिष्ट्यस्यावच्छेदकत्वग्रहः, अस्तु भेदाग्रहस्यैव हेतुत्वग्रहः, तथापि उभयोपस्थितिदशायामुक्तलाघवेन वैशिष्ट्यस्यावच्छेदकत्वं कल्प्यते । भेदाग्रहहेतुत्वं च गौरवग्रस्तं त्यज्यते । अत एव [1]प्रथमं गृहीतापि कार्यान्विते शक्तिरग्रे लाघवावतारात्त्यज्यत इति ग्रन्थकार एव वक्ष्यति ।

यत्तु—गृहीतहेतु[2]भावस्य फलव्यभिचारेण सहकार्यन्तरकल्पनं युक्तम्, न तु क्लृप्तहेतुतावच्छेदकान्तरकल्पनम् । अन्यथा दण्डस्यापि [3]चक्रं विना फलव्यभिचारे [4]चक्रस्य सहकार्यन्तरत्वं न कल्प्येत, किं तु दण्डावच्छेदकत्वमिति ।

तन्न । एवं हि सहकार्यन्तरत्वाभिमतस्य भेदाग्रहस्यावच्छेदकत्वं मास्तु, वैशिष्ट्यस्यावच्छेदकत्वे को दोषः । तस्मात् विनिगमनाविरहेण सहकारित्वाभिमतस्य चक्रादेरवच्छेदकत्वमयुक्तम् । अतो भेदाग्रहस्य यदि कश्चिदवच्छेदकत्व-

न्यायशिखामणिः

जयदेवसमाधिमाह—अत्राहुरिति । अयमर्थः । प्रकृतानुमानप्रयोजकस्तर्को वस्तुलाघवमेव नोपस्थितिलाघवम्, येन प्रत्यक्षप्रमाणापेक्षा स्यात् । वैशिष्ट्यभेदाग्रहयोरुपस्थित्यभिधानं च लाघवावताराय । न ह्युभयानुपस्थितौ तदवतारः संभवति । ज्ञानविच्चिवेद्यतया तस्य शीघ्रोपस्थितिकत्वं तु [5]वस्तुगतिमभिप्रेत्योक्तमिति न तद्वैयर्थ्यमिति । उक्तेति । वस्तुलाघवेनेत्यर्थः । न त्विति । प्रथमगृहीतावच्छेदकविरोधात्, अन्यथा प्रथममवच्छेदकापरिचये प्राथमिकहेतुत्वकल्पनानुदयप्रसङ्गादिति भावः । अन्यथेति । अवच्छेदकक्लृप्तावपि व्यभिचारनिरासो यद्यवच्छेदकान्तरकल्पनया तदेत्यर्थः । दण्डावच्छेदकत्वमिति । चक्रसहितदण्डत्वस्य दण्डनिष्ठकारणतावच्छेदकत्वं [6]कल्प्येतेत्यर्थः ।

[7]किमवच्छेदकान्तरावरोधात् वैशिष्ट्यविषयकत्वस्यावच्छेदकत्वं निराचिकीर्षितम्, चक्रसाहित्यप्रतिबन्ध्या वा । आद्य आह—वैशिष्ट्यस्येति । को दोष

1. क. प्रथमगृहीतेऽपि
2. क. °भायसफल-
3. क. च कविना
4. क. च कार्यान्तरत्वं
5. क. वस्तुगतिरित्यभि-
6. क. ग. कल्प्यत इत्यर्थः ।
7. क. किमवच्छेदकान्तरविरोधात्

### प्रकाशः

मिच्छेत् तं प्रत्ययमनुयोगः सावकाशः। यस्तु लघुनावच्छेदकान्तरेण अतिप्रसङ्ग-निरासे संभवति भेदाग्रहस्य न हेतुत्वमवच्छेदकत्वं वेति ब्रूयात् तं प्रति नायमनुयोगः, विनिगमनाविरहानवतारात्। किं च ज्ञानस्य मणिमन्त्रादिवत् प्रतिबन्धकत्वाभावात् विषयविरोधेनैव प्रतिबन्धकत्वम्। एवं चाभेदज्ञान[1]विघटनद्वारैव भेदज्ञानस्य प्रतिबन्धकत्वम्।

साक्षादविरोधिनो ज्ञानस्य तथैव प्रतिबन्धकत्वमिति व्याप्तेः। तथा च भेदाग्रहस्याभेदग्रहहेतुत्वं न तु प्रवृत्ताविति युक्तमुत्पश्यामः।

---

### न्यायशिखामणिः

इति। अवच्छेदकावरुद्धत्वं नावच्छेदकान्तरकल्पनविरोधि, प्रथमगृहीतावच्छेदकपरि[2]त्यागेनैव तत्कल्पनात्। अत एव दण्डे दृढत्वमप्यवच्छेदकमिति भावः। द्वितीये त्वाह—तस्मादिति। पक्षद्वयसाधारणं दूषणमुक्त्वा भेदाग्रहः कारणमिति पक्षे दूषणान्तरमाह—किं चेति। ज्ञानस्य हि प्रतिबन्धकत्वं प्रतिबध्यत्वाभिमतविषयाभावावगाहितया, [3]तज्जनकज्ञानविषयाभावावगाहितया वा। तत्राद्यं साक्षाद्विरोधीत्युच्यते, यथानुमितौ बाधज्ञानम्। द्वितीयं तु [4]जनकज्ञानविघटनद्वारा विरोधीति व्यवह्रियते। [5]यथा तत्रैव व्यभिचारज्ञानम्। प्रवृत्तौ च भेदज्ञानं न साक्षाद्विरोधि। सा हि इष्टतावच्छेदकरजतत्वप्रकारिका। न च तदभावो भेदज्ञाने विषयः। तथा च परिशेषात् जनकज्ञानविघटनद्वारैव तत्प्रतिबन्धकमित्याह—एवं चेति।

ननु ज्ञानघटितसाध्यं प्रति हेतोरप्रयोजकत्वम्। तथा च जनकविघटकत्वे साध्ये भेदाग्रहमादायार्थान्तरमित्यत आह—साक्षादिति। अत्र जनकज्ञानविघटकत्वं प्रति साक्षादविरोधित्वे सति प्रतिबन्धकत्वं व्याप्यत्वेनाभिमतम्। न तु साक्षादविरोधित्वमात्रम्। तेन प्रमेयमिति ज्ञाने न व्यभिचारः। प्रतिबन्धकपदं चाप्रामाण्यशङ्काशून्यत्वातिरिक्तविशेषणाविशेषितप्रतिबन्धकपरमिति न सिद्धौ व्यभि-

---

1. क. ०विघ्नद्वारैव
2. क. ०त्यागेन चैतत्कल्पनात्
3. घ. तज्जन्यज्ञान-
4. क. 'जनकज्ञान…तथा च परिशेषात्' इति ग्रन्थस्त्रुटितः।
5. ग. घ. तथा

(ननु) [न तु] स्वतन्त्रोपस्थितेष्टभेदाग्रहः कारणम्, तादृशभेदाग्रहत्वं च कारणतावच्छेदकं, गौरवात् कल्पनीयोपस्थितिकत्वाच्च। विशिष्टज्ञानेऽपि हेतुत्वेनावश्यकत्वात् भेदाग्रह एव हेतुरिति चेत्— न।

---

**प्रकाशः**

विपरीतमपि लाघवमाशङ्कते—विशिष्टेति।

---

**न्यायशिखामणिः**

चारः। जनकज्ञानविघटके चायोग्यताज्ञानादौ [1]तद्विघटकतावच्छेदकं नायोग्यताज्ञानत्वादि। किं तु लाघवादनुगतं साक्षादविरोधि विरोधित्वमिति न विशिष्टसाध्यं प्रति हेतोरप्रयोजकत्वमिति भावः। उत्पश्याम इति।

अत्रेदं चिन्त्यम्। [2]इष्टाभेदस्यापि प्रवृत्तिविषयत्वेन भेद[3]ज्ञानस्य प्रतिबध्यत्वाभिमतप्रवृत्तिविषयाभावावगाहितया साक्षाद्विरोधित्वेन [4]हेत्वसिद्धेः। न चेच्छाकृत्योर्न मुख्यं सविषयकत्वम्, किं तु तज्जनकज्ञानोपाधिकम्, तथा चाभेदज्ञानस्य तज्जनकत्वानभ्युपगतौ तस्य प्रवृत्तिविषयत्वमसिद्धमिति नासिद्धिरिति वाच्यम्। विनिगमकाभावेन तयोरपि तथात्वात्। अन्यथा प्रवृत्तिगतविशिष्टविषयकत्वानुपपत्तेरेव तज्जनकविशिष्टज्ञाने प्रमाणत्वापत्तौ प्रमाणान्तरोपन्यासवैयर्थ्यात्।

किं च निरुक्तहेतोर्जनकविघटकं प्रत्येव [5]व्याप्तिरस्ति। तत्र ज्ञानपदप्रवेशो गौरवात्। एवं च सिद्धावपि साध्यसत्त्वात् [6]न तद्वारणाय प्रतिबन्धकत्वविवक्षाप्रयासोऽपि। न च शाब्दज्ञानप्रतिबन्धकायोग्यताज्ञाने लाघवाद्विशिष्टसाध्यव्याप्तिग्रह इत्युक्तमिति वाच्यम्। अनुमितौ लिङ्गासंसर्गाग्रहवत् शाब्दज्ञाने योग्यतासंसर्गाग्रहस्यैव हेतुत्वाभ्युपगमेन तत्र साध्यस्यैवासिद्धेः। तस्माद्वैशिष्ट्यविषयकत्वं लाघवादवच्छेदकं, न तु भेदाग्रहः प्रवृत्तिकारणं तदवच्छेदको वेति पूर्वोक्त एव तात्पर्यम्।

---

1. ग. 'तद्' नास्ति
2. ग. इष्टभेद-
3. क. ॰ज्ञानस्याप्रतिबन्धकत्वाभि-
   ग. ज्ञानस्य प्रतिबन्धकत्वाभि-
4. क- हेतुत्वसिद्धेः।
5. क. व्याप्तिरस्तु
6. क. 'न' नास्ति

विशिष्टज्ञाने तद्धेतुत्वस्य तत्कल्पनोत्तरकल्प्यत्वेन प्रवृत्तिकारणताग्रहसमये तदनुपस्थितेः । न चैवं मिथ्याज्ञानकल्पने गौरवम् । प्रमाणप्रवृत्तिसमये सिद्ध्यसिद्धिपराहतत्वेन फलमुखगौरवस्यादोषत्वात् । प्रमाणवतस्तस्य न्याय्यत्वात् ।

---

प्रकाशः

विशिष्टज्ञान इति । (सत्यस्थले) [सत्यप्रवृत्तिस्थले] विशिष्टज्ञानहेतुत्वेन भेदाग्रहकल्पनस्य तत्र विशिष्टज्ञानकल्पनोत्तरकालीनत्वेन, प्रथमोपस्थितमात्र एव विशिष्टज्ञाने प्रवृत्तिकारणताग्रहसमये भेदाग्रहस्यानुपस्थितेरित्यर्थः । सिद्धीति । विसंवादिप्रवृत्तिस्थले विशिष्टज्ञानसिद्धौ तदादाय गौरवज्ञानस्योपजीव्यविरोधेनाकिंचित्करत्वात्, तदसिद्धौ गौरवज्ञानाभावादित्यर्थः ।

ननु विशिष्टज्ञानत्वेन रूपेण तदन्यत्र प्रसिद्धम् । तदादायैव गौरवज्ञानं स्यात् । न हि तत्रत्यधर्मिणमादायैव गौरवज्ञानम् । तथात्वे क्षित्यादावपि गौरवान्न कर्तृद्वयमित्यादिकं न स्यादित्यत आह—प्रमाणवत इति ।

---

न्यायशिखामणिः

परमार्थतस्तु परोक्षस्थले लिङ्गाद्यसंसर्गाग्रहरूपसामग्रीसत्त्वमन्यथाख्यातौ मानमिति दिक् ।

तथापि भेदाग्रहस्य [1]गौरवं न निराकृतमित्यत आह—विपरीतमिति । आवश्यकत्वात् [2]भेदाग्रहस्य नियतपूर्ववर्तित्वमुभयसिद्धम्, [3]अनन्यथासिद्धत्वं तु कल्पनीयमिति लाघवम् । विशिष्टज्ञानस्य च नियतपूर्ववर्तित्वमपि कल्प्यमिति गौरवम् । विसंवादिस्थले तस्य कल्पनीयत्वादिति भावः ।

ननु भेदाग्रहगतविशिष्टज्ञानहेतुत्वस्य तत्कल्पनोत्तरकल्प्यत्वेऽपि तदावश्यकत्वे किमायातमित्याशङ्क्य, किमेतावता विशिष्टज्ञानरूपकार्यलिङ्गेन प्रथमं तस्योपस्थितत्वात्तत्र कारणताग्रह इत्यभिमतम्, उत निरुक्तलाघवात् । तत्राद्यनिरासपरतया मूलं योजयति—सत्यप्रवृत्तीति । लिङ्गतया प्रथमोपस्थित एव

---

1. क. गौरवान्न
2. क. भेदाग्रहनियत- ग. घ. भेदग्रहस्य
3. क. अन्यथा-

## प्रकाशः

एवं गौरवेण क्षित्यादावपि सकर्तृकत्वसिद्धिर्न स्यात्। यदि कर्तृकार्ययोः कार्यकारणभावग्रहात् तन्मूलप्रमाणसिद्धतया तत्र गौरवं न दोष इति मन्यसे, तदा इहापि विशिष्टज्ञानप्रवृत्त्योः कार्यकारणभावग्रहात्तन्मूलकप्रमाणसिद्धतया तत्र दोष इति तुल्यम्। अत एवेच्छादिना गुणेन [1]द्रव्यान्तरकल्पनापि। कर्तृद्वयत्वेन च कार्यहेतुत्वाभावादप्रामाणिकतया तद्गौरवं दोष एवेति न तत्सिद्धिरिति भावः। तर्कितं च गौरवं यथा न दोषस्तथा परामर्शग्रन्थे वक्ष्यामः।

---

## न्यायशिखामणिः

विशिष्टज्ञाने तत्कारणताग्रहः न भेदाग्रहे, तदुपस्थितेः विशिष्टज्ञान[2]लिङ्गजन्यायास्तदुत्तरकालीनत्वादित्यर्थः। द्वितीयमनूद्य निरस्तं—न चैत्रमित्यत्र। तदयुक्तम्। गौरवविषयकसिद्ध्या न तस्य पराहतिरित्यत आह—विसंवादीति। तदादाय विसंवादिस्थलीयविशिष्टज्ञानमादाय। अकिंचित्करत्वादिति। कारणताग्रहे [3]तन्मूलकविशिष्टज्ञानानुमाने वा तस्यादोषत्वादित्यर्थः।

गौरवमिदं [4]तत्रत्यविशिष्टज्ञानसिद्धिं नोपजीवतीत्यतः तत्र [5]दोषः स्यादिति शङ्कते—नन्विति। ननु गौरवेण विशिष्टज्ञानसाधकप्रमाणस्यैवाप्रवृत्तेः प्रमाणत्वत इत्ययुक्तमित्याशङ्क्य, किमतर्कितं गौरवं तद्विरोधि उत तर्कितम्। तत्राद्यं दूषयति—[6]एवमिति। [7]तन्मूलेति। [8]गौरवं हि हेतावप्रयोजकत्वमापादयद्व्याप्तिग्रहप्रतिबन्धद्वारानुमानदोषः। सत्यां च हेतोः कार्यकारणभावग्रहमूलकव्याप्तिप्रमितौ तदकिंचित्करमित्यर्थः।

क्षित्यादेः सकर्तृकत्वासिद्धौ परस्येष्टापत्तिरित्यत उपष्टम्भकान्तरमाह—अत एवेति। अन्त्यं निराचष्टे—तर्कितं चेति। परामर्शग्रन्थ इति। [9]तत्र हि 'एतया निषादस्थपतिं याजयेत्' इत्यत्र लाघवेन कर्मधारयाश्रयणान्निषादस्यैव स्थपतेरधिकारः। न तु रौद्यामिष्टौ निषादानामधिपतेस्त्रैवर्णिकस्येति निषादस्थप-

---

1. ख. द्रव्यावान्तर-
2. ग. 'लिङ्ग' नास्ति
3. क. तज्जनक-
4. क. ग. तत्र विशिष्ट-
5. क. दोषस्यापि तदिति
6. क. 'एवमिति' इति नास्ति।
7. क. एतन्मूलकेति।
8. क. गौरवमहिम्ना अप्र-
9. क. 'तत्र हि' नास्ति।

एवं च विसंवादिप्रवृत्तिरपि विशिष्टज्ञानसाध्या प्रवृत्तित्वात् सत्यप्रवृत्तिवत् । क्लृप्तकारणं विनानुपपत्तेः अनन्यथासिद्धतया प्रवृत्त्या समानीतविशिष्टज्ञानबलात् तत्कारणं सदोषमिन्द्रियाद्येव । सर्वतो बलवती ह्यन्यथानुपपत्तिः । न च भेदाग्रहात् प्रवृत्त्युपपत्तिरपि । विपरीतचतुष्के युगपत् प्रवृत्तिनिवृत्त्यापत्तेः ।

---

**प्रकाशः**

प्रमाणमेव दर्शयति—एवं चेति । हेत्वभावं निरस्यति—इन्द्रियादीति । दोषाणां विपरीतकार्यजनकत्वे मानमाह—[1]सर्वत इति । विपरीतेति । रजतरङ्गयोरिमे रङ्गरजते नेमे रजतरङ्गे इत्यत्र समूहालम्बन[2]रूपभ्रम इत्यर्थः । यद्यपीमे रङ्गरजते इत्येतावतैव स्वतन्त्रोभयभेदाग्रहात् तन्मते प्रवृत्तिनिवृत्त्यापत्तिः, तथापि प्रत्येकं तत्रापि रङ्गं रजतं वेति संशयः स्यादिति परोक्तातिप्रसङ्गनिरासाय चतुष्कपर्यन्तम् । अत एव वक्ष्यति मम दोषेति ।

---

**न्यायशिखामणिः**

त्यधिकरणे व्यवस्थापितम् । [3]तच्चैवं सति विरुध्येत । यदि कर्मधारयः स्यात् शूद्रस्य विद्याप्रयुक्तिरपूर्वा [4]कल्प्येतेति तर्कितगौरवस्य तत्रापि संभवादिति वक्ष्यत इत्यर्थः ।

ननु यथाश्रुते धर्मिज्ञानमादाय सिद्धसाधनम्, जीवनयोनिप्रवृत्तौ व्यभिचारश्च । न च पूर्ववदेवात्रापि साध्यहेत्वोर्विवक्षितत्वान्न दोषः । तथा सति पूर्वाभेदापत्तेरित्याशङ्क्य पूर्वोक्तमेव लिङ्गम्, पक्षमात्रं तु भिद्यत इत्याह—प्रमाणमिति । हेत्वभावमिति । हेत्वभावलक्षणबाधकमित्यर्थः । ननु रजतरङ्गयोरिमे रजतरङ्गे नेमे रङ्गरजते इति समूहालम्बनप्रमास्थले भेदग्रहसत्त्वान्न प्रवृत्त्यादिप्रसङ्गः । इमे रजतरङ्गे नेमे स्फटिकशुक्ती इति तद्विपयसमूहालम्बनभ्रमे भेदाग्रहसत्त्वात् तत्प्रसङ्गश्चेत्, तर्हि न्यायमतेऽपि संशयप्रसङ्गो दुर्वार इत्यत आह—रजतेति । चतुष्कपर्यन्तमिति । रङ्गभेदरजतभेदघटितचतुष्कपर्यन्तमित्यर्थः ।

---

1. ख. पर्वत इति
2. ख. ॰रजतभ्रम
3. घ. एतच्चैवं
4. क. कल्प्यत इति ।

न च तत्र मानाभावः। इमे रङ्गरजते इति सत्यज्ञानवत् रजत-रङ्गयोः प्रत्येकभ्रमसामग्र्योरेकदा सत्त्वेन तादृशभ्रमोत्पत्तेरानुभविकत्वात्। अन्यथा समूहालम्बनोच्छेदे द्वित्वाद्यप्रत्यक्षतापत्तेः। इमे रङ्गरजते इति शब्दाभासादेवंविधभ्रमसंभवाच्च।

---

**प्रकाशः**

[1]वस्तुतश्चतुष्कपर्यन्तमयुक्तम्। अन्यथा पूर्वनिरुक्तस्वातन्त्र्याभावादेव प्रवृत्त्यादि-यौगपद्यानुपपत्तिः, संशयजनकदोषविशेषाभावेन संशया(पत्तिर्वा) [पत्तिर्न]।

---

**न्यायशिखामणिः**

[2]ननु दोषविशेषाभावादेव संशयाभावोपपत्तेस्तदुपादानमयुक्तमित्यत आह—अत एवेति। ननु ममेत्यादिग्रन्थस्य भेदग्रहादिविपर्ययजनकदोषान्न संशय इति दृष्टान्तपरत्वान्न तद्विरोध इत्यरुचेराह—वस्तुत। चतुष्केति। गौरवादनुपयोगाच्चेति भावः। प्रत्युत प्रतिकूलमित्यत आह—अन्यथेति। ननु पुरोवर्तिवृत्तित्वेन गृहीतभेदप्रतियोगित्वेनानुपस्थितत्वलक्षणस्वातन्त्र्यमस्तीत्याशङ्क्य, रजते नेदं रजतमित्यत्र तत्सत्त्वेन प्रवृत्तिप्रसङ्गान्नोक्तरूपं स्वातन्त्र्यम्। किं तु पुरोवर्त्यगृहीतासंसर्गकेत्यादीत्याह—(पूर्वोक्तेति) [पूर्वनिरुक्तेति] इदमप्यापाततः। विपरीतचतुष्क इति मूलानार्जवापत्तेः।

परमार्थतस्तु प्रत्येकवृत्तीदंत्वद्वयघटितमेव चतुष्कम्। अत एवेमे रङ्गरजते इति सत्यज्ञानवदिति दृष्टान्तः इमे रङ्गरजते इति [3]शब्दाभासादिति द्वयं संगच्छते। [4]अन्यथा नेमे रङ्गरजते इत्यप्युदाह्रियेत। न चैवं भेदग्रहादित्यनुपपत्तिः। यथा भेदग्रहान्न संशयस्तथा विपर्ययजनकदोषप्रतिबन्धेन संशयजनकदोषाभावेन वा न संशय इति दृष्टान्तपरत्वात्। इदंत्वघटितचतुष्कपर्यन्तोपादानं च भेदग्रहस्य प्रवर्तकत्वसिद्धये। अन्यथा धर्मिज्ञानसाहित्याभावेन तस्य तदनुपपत्तेः।

---

1. ख. 'वस्तुतश्चतुष्क.......संशयापत्तिर्वा' इति ग्रन्थस्त्रुटितः।
2. क. 'ननु दोषविशेषाभावादेव........मूलानार्जवापत्तेः' इति ग्रन्थो नास्ति।
3. क. शब्दामानादिति। ग. शब्दाभावादिति
4. ग. घ. 'अन्यथा.......दृष्टान्तपरत्वात्' इति ग्रन्थस्त्रुटितः।

मम दोषमहिम्ना रजतरङ्गयो रजतरङ्गभेदग्रहान्न संशयः। तव चैकत्र स्वतन्त्रोभयभेदाग्रहात् प्रत्येकं रङ्गं रजतं वेति संशयः स्यात्।

अथ यद्धर्मज्ञानाद्यदुपस्थितिस्तत्र तद्भेदाग्रहात् प्रवृत्तिनिवृत्ती। रङ्ग-रजतधर्मेण रजतरङ्गे स्मारिते न तु रङ्गरजते। माषराशिस्थमसीविषये माषा-

---

प्रकाशः

द्वित्वादीति। उभयाश्रितद्वित्वस्य समूहालम्बनमात्रविषयत्वादित्यर्थः। अन्यथा-ख्यातिव्यवस्थापनेन योग्यताज्ञानसत्त्वात् शाब्दभ्रमो नानुपपन्न इत्याह—इमे

---

न्यायशिखामणिः

[1]अत्र केचित्। दोषहेतुकेष्टादिभेदाग्रहस्य प्रवृत्त्यादिहेतुत्वेनाभिमतस्यात्रा-भावान्न रजतरङ्गयोः प्रवृत्तिनिवृत्ती। तत्र स्वप्रतियोगिकभेदाभावेन तदग्रहस्य स्वतस्सिद्धत्वादिति।

तन्न। एवं सति सत्यस्थले प्रवृत्त्याद्यभावप्रसङ्गात् तत्र दोषहेतुकभेदा-ग्रहाभावात् अस्य च विसंवादिप्रवृत्त्यादिहेतुत्वे प्रकृतेऽपि तयोः संवादित्वेन तद-नपेक्षत्वात्।

ननु घटत्ववदनेकाश्रितमपि द्वित्वमेकस्वाश्रयप्रत्यक्षगम्यं किं न स्यादित्या-शङ्क्य व्यासज्यवृत्तित्वान्नैवमित्याह—उभयेति। ननु [2]शब्दाभासाद्भ्रमोत्पत्तिवर्णनं योग्यतादिमत्तया शब्दस्याज्ञानादित्युक्तत्वादयुक्तमित्यत आह—अन्यथाख्या-तीति।

ननु पूर्वपक्षे यदेव विपर्ययनियामकं तत एव प्रवृत्तिनिवृत्ती इत्यत्रास्य समाधानस्योक्तत्वात् पौनरुक्त्यमित्याशङ्क्य तस्यैवात्रानुवादात् प्रपञ्चनाद्वा न दोष इत्याह—युगपदिति। [3]न तु संशयापादन इत्यर्थः, तत्समाधानस्यात्रानु-पन्यासादिति कस्यचिद्व्याख्यान[4]मनादेयम्। तद्धर्मिज्ञानजन्यकोटिस्मरणस्य

---

1. क. 'अत्र केचित्.......तदनपेक्षत्वात्' इति ग्रन्थो नास्ति।
2. क. शब्दामानात्प्रमो-
3. ग. घ. ननु
4. घ. ॰मनुपादेयम्।

र्थिप्रवृत्तिः मसीनीलिमस्मारितमाषभेदाग्रहात् । अनुभूयमानारोपोऽसिद्ध एव । अन्यथा तत्रापि प्रत्येकमुभयज्ञानं स्यादिति चेत्—

नैवम् । शब्दाभासात् प्रत्यक्षाद्वा इष्टानिष्टोपस्थितौ तदभावात् ।

---

### प्रकाशः

रङ्गेति । ममेति । अन्यथाख्यातिवादिन इत्यर्थः । युगपत्प्रवृत्तिनिवृत्त्यापत्तौ समाधिं शङ्कते—अथेति । एवं सत्यनुभूयमान[1]भेदाग्रहे कथं नियम इत्यत आह—माषेति । अन्यथेति । यद्यपि न्यायनये भेदग्रह एव ; तथापि स्वमतदार्ढ्याभिमानेनेदं बोध्यम् ।

शब्दाभासादिति । ननु प्रवृत्तिविषयप्रत्यक्षं विना न प्रवृत्तिः । तत्प्रत्यक्षे च सति [2]तद्वृत्तिधर्मस्मारितारोपः संभवत्येवेति चेत्—न । त्वयोपादानप्रत्यक्षस्य प्रवृत्तिहेतुत्वानभ्युपगमात् । अभ्युपगमे वा ( त्वचापि ) [ तत्रापि ] तत्संभवादिति भावः ।

---

### न्यायशिखामणिः

प्रवृत्तिप्रयोजकस्यैव तत्र संशयव्यवहारप्रयोजकत्वमिति प्रवृत्तिप्रसङ्गनिराकरणन्यायेन संशयप्रसङ्गस्यापि निरस्तत्वात् । अत [3]एवान्यथेत्यत्र निरुक्तप्रयोजकानभ्युपगतौ संशयापादनं युज्यते । एवमिति । [4]तद्धर्मिज्ञानजन्येष्टाद्युपस्थितेस्तत्र प्रवृत्त्यादिप्रयोजकत्व इत्यर्थः । कथमिति । माषराशिस्थमषीपिण्डेऽनुभूयमानमाषस्यैव यत्रारोपस्तत्र मषीरूपधर्मिज्ञानजन्यमाषस्मरणाभावात् माषार्थिप्रवृत्तिर्न स्यादित्यर्थः ।

अतिप्रसङ्गनिरासायेष्टाद्युपस्थितिस्तद्धर्मिज्ञानजन्यत्वेन विशेषणीयेत्युक्तम् । तथा च माषराशिस्थले मषीनीलिमज्ञानजन्यमाषोपस्थितिः कल्प्यत इत्याशयेनाह—अत आहेति । तत्रेष्टाद्युपस्थितेरेकधर्मिज्ञानजन्यत्वे संशयः स्यादित्युक्तमन्यथेत्यत्र । तदयुक्तम् । अन्यथाख्यातिव्यवस्थापनेन तत्र स्वप्रतियोगिकभेद[5]ग्रहसंभवादिति शङ्कते—यद्यपीति । स्वमतेति । यैव गुरुमते [6]संशयव्यवहारहेतुः सैव तद्धर्मि-

---

1. ख. °भेदग्रहे
2. क. तद्वित्ति-
3. क. एव वान्यथेत्यत्र
4. क. तद्धर्म°
5. क. °ग्रहासंभवात्
6. ग. 'संशय' नास्ति ।

**मम त्वेकधर्मादुभयोपस्थितावपि रजतरङ्गयोस्तत्तया न ज्ञानं दोषादित्युभयसिद्धं विपरीतज्ञानं च दोषात्। न चैत्रमात्रश्यकदोषादेव प्रवृत्तिनिवृत्ती, सत्यस्थले तदभावात्। न च विसंवादिनी दोषात्, इन्द्रियलिङ्गशब्दादिदोषाणामननुगतत्वात्। तज्जन्यज्ञाने च जातिभेदात्।**

---

**प्रकाशः**

अपि चानुभूयमानस्यारोपसंभवे पुनस्तस्य स्मरणकल्पनागौरवमित्यनुभूयमानारोपोऽपि प्रामाणिक इत्याह—**प्रत्यक्षाद्धेति**। स्वमतदाढर्याभिमानेनापादितं संशयं निरस्यति—**मम त्विति**। मन्मते दोषेण रजते रजतभेदो रङ्गे रङ्गभेद एव गृह्यते, अन्यथाख्यातिभयाभावात्। अतो न संशय इत्यर्थः। **तज्जन्येति**। शब्दभ्रमाच्छाब्दभ्रमत्वादिकमिति भावः। तत्प्रवृत्तौ वैजात्यकल्पने मानाभावात्

---

**न्यायशिखामणिः**

ज्ञानजन्यविरुद्धानेकोपस्थितिः न्यायमते संशयहेतुः। तथा चोभयोपस्थितेरेकधर्मिज्ञानजन्यत्वे तत्र [1]तत्संशयो दुर्वार इत्यर्थः।

प्रवृत्तिविषयो ह्युपादानम्। [2]शब्दाभासस्थले च तत्प्रत्यक्षमस्ति [3]वा न वा। नाद्य इत्युक्त्वा द्वितीयं निरस्यति —[4]**तत्प्रत्यक्षेति**। **उपादानेति**। शब्दफूत्कारादिप्रवृत्तेस्तत्समवायिकारणाकाशादिप्रत्यक्षं विनापि दर्शनेन व्यभिचारात्, परैः समवायिकारणानभ्युपगमाच्चेति भावः।

ननूपादानप्रत्यक्षं न तत्त्वेन हेतुः, येन व्यभिचारः स्यात्। किं तु प्रवृत्तिविषयप्रत्यक्षत्वेन। तच्च परैरप्यभ्युपगतम्। न च विसंवादिस्थले व्यभिचारः, [5]इदमः प्रवृत्तिविषयस्य तन्मतेऽपि प्रत्यक्षत्वादित्यत आह—**अभ्युपगमे वेति**। **तदिति**। प्रवृत्तिविषयप्रत्यक्षेत्यर्थः।

ननु रजतरङ्गयोरिष्टानिष्टयोरिदंत्वेन यत्र प्रत्यक्षोपस्थितिस्तत्र स्मर्यमाणारोपस्थले निरुक्तप्रवर्तकसत्त्वेन कथं तदभावाभिधानम्। न च पूर्वोक्तानुभूयमाना-

---

1. ग. घ. 'तत्' नास्ति।
2. ग. शब्दाभाव-
3. क. 'वा' नास्ति।
4. ग. घ. 'तत्प्रत्यक्षेति' इति नास्ति
5. क. ग. 'इदमः' नास्ति।

नव्यास्तु—रङ्गवृत्तितया ज्ञातधर्मस्य रजते उत्कटाकाङ्क्षा, तेन सह भूयस्सहचारदर्शनात्, न रङ्गे अल्पतथात्वादिति तत्रानुत्कटा सा। एवं रजतवृत्तितया ज्ञातधर्मस्यापि। अतः उत्कटाकाङ्क्षया अनुत्कटाकाङ्क्षा-प्रतिबन्धान्न रङ्गे निवृत्तिः। एवं रजते न प्रवृत्तिरिति।

तन्न। इमे रङ्गरजते इति शब्दाभासाद्युगपत्प्रवृत्तिनिवृत्तिप्रसङ्गात् शब्दादुपस्थितावाकाङ्क्षायास्तुल्यत्वात्।

---

प्रकाशः

प्रवृत्तिमात्रे विशिष्टज्ञानहेतुत्वकल्पनादिति भावः। नव्याः—प्राभाकरनव्याः। रङ्गवृत्तितयेति। (वस्तुगत्या) [वस्तुतः] यद्रङ्गं तद्वृत्तितयेत्यर्थः। प्रतिबन्धादिति। [1]अप्रतिबन्धा इच्छा तथेति भावः।

---

न्यायशिखामणिः

रोपपरं तदिति वाच्यम्। अनुभूयमानारोपोऽसिद्ध इत्युक्तत्वादित्यत आह—अपि चेति। स्मरणेति। न चातिप्रसङ्गनिरासाय तद्धर्मिज्ञानजन्यत्वस्यावश्यकत्वात् तत्कल्पनागौरवं न दोष इति वाच्यम्। प्रवर्तकतया व्यवस्थापितविशिष्टज्ञानविरहादेव तत्र प्रवृत्त्यादियौगपद्याभावादिति भावः।

परोक्षापरोक्षभ्रमेषु नैकजातिर्दोषजन्यतावच्छेदिका साक्षात्त्वादिना संकरापत्तेरित्यत आह—शब्दादिति। [शब्देति]। [2]शब्दादिकृतयोग्यतादि[3]भ्रमादित्यर्थः। यद्यपि शाब्दभ्रमे अनुगतदोषसंभवेऽपि न प्रत्यक्षादिस्थले तत्संभवः। काचादीनामननुगतत्वात्। तथा च तज्जन्यतावच्छेदिका [4]जातिर्न प्रत्येकमप्येका। तथापि यावत्यनुगतदोषसंभवस्तावद्भ्रमवृत्तिरेकेति भावः।

तद्वैजात्यं प्रवृत्तावेवाङ्गीकृत्य दोषस्तत्र हेतुः कल्प्यताम् इत्याशङ्क्य, किं तत्र वैजात्ये प्रत्यक्षं मानमुत दोषजन्यत्वानुपपत्तिः। तत्राद्यं निराचष्टे—तत्प्रवृत्ताविति। द्वितीयं निरस्यति—प्रवृत्तिमात्र इति। न च विनिगमकाभावः। सत्यस्थले विशिष्टज्ञानस्य क्लृप्तत्वेन तत्रानुगतहेतुसंभवेऽननुगतदोषहेतुत्वकल्पन-

---

1. ख. प्रति-
2. ग. घ. शब्दादिगत-
3. ग. घ. पुं॰भ्रमजन्येष्वित्यर्थः।
4. क. ग. जातिः प्रत्येक-

किं चैवं धर्मयोर्भूयोल्पसहचारावगमादुत्कटानुत्कटकोटिको रङ्गं रजतं वेति संशयः स्यात्। उत्कटानुत्कटाकाङ्क्षाकल्पने मानाभावात् उत्कटत्वानिरुक्तेश्च।

---

प्रकाशः

तत्र तथेच्छायां मानाभाव इत्याह—उत्कटेति। प्रवृत्तेरन्यथोपपत्तेरिति भावः। दोषान्तरमाह—उत्कटत्वेति। न चोत्कर्षापकर्षरूपो जातिभेद

---

न्यायशिखामणिः

स्यान्याय्यत्वात्। भ्रमे चागत्या तद्धेतुत्वकल्पनादिति भावः। चाकचक्यमिदमेतद्रङ्गवृत्तीत्यज्ञानादाह—वस्तुत इति।

[1]तन्नेत्यादिमणेरयमर्थः—किमुत्कटत्वानुत्कटत्वे उपाधी जाती वा। आद्ये यद्धर्मिगतज्ञायमानधर्मेण यत्कोटेर्भूयस्सहचार उपलब्धस्तत्कोटिविषयत्वमुत्कटत्वमिच्छायास्तद्धर्म्यंशे विवक्षितम् उत तद्धर्मिगत[2]ज्ञायमानैकधर्मसहचरितत्वेनोपलब्धतत्कोटिविषयत्वम्। तत्रोभयत्र दोषमाह—इमे इति।

आकाङ्क्षेति। येन सह [3]रजतत्वस्य भूयस्सहचार उपलब्धो यैर्वा सहचारस्तस्य चाकचक्यस्य तेषां वा धर्माणां शब्दानुपस्थितत्वेन आकाङ्क्षायास्तत्र निरुक्तोत्कटत्वाभावादिति भावः।

ननु यत्र घटमानयेत्यत्र प्रकरणाज्जलाहरणोपयोगिघटान्वयपरत्वमवगम्यते तत्रान्वयप्रयोजकरूपस्य छिद्रेतरत्वस्य यथोपस्थितिस्तथा प्रवृत्तिनियमोपयोगिरजतत्वोपस्थितिपरत्वानुरोधात् रजतत्वेन सहोपलब्धभूयस्सहचारस्य चाकचक्यादेरुपस्थितिः कल्प्यते। तथा च रङ्ग एव प्रवृत्तिर्न रजत इति नियमः संभवत्येवेत्यपरितोषादाह—किं चैवमिति। तत्कोट्या सहोपलब्धभूयस्सहचारस्याल्पसहचारस्य च धर्मस्य तत्रोपस्थितिकल्पन इत्यर्थः। संशयः स्यादिति। न च विरुद्धानेकोपस्थितेस्तद्धर्मिज्ञानजन्यत्वाभावान्न संशयव्यवहारप्रसङ्ग इति वाच्यम्। अन्यथाख्यातिव्यवस्थापनेन भेदाग्रहादेव तत्प्रसङ्गवारणे तद्धर्मिज्ञानजन्यत्वस्य गौर-

---

1. क. तेनेत्यादि-
2. ग. ज्ञायमानानेक-
3. क. रजतत्वभूयः-

**स्यादेतत् । संवादिविसंवादिप्रवृत्त्योर्वैचित्र्ये विशिष्टज्ञानभेदाग्रहो हेतुः क्लृप्तत्वात्, न तु विशिष्टज्ञानसत्यत्वासत्यत्वे गौरवात् ।**

---

**प्रकाशः**

एवास्तामिति वाच्यम् । जातेर्व्याप्यवृत्तितानियमेन एकत्रेच्छायां तद्विरोधात् इच्छादेर्भेदकल्पने मानाभावादिति भावः । पर एव पुनराह—**स्यादेतदिति** । संवादिविसंवादिप्रवृत्त्योरित्युपलक्षणम् । तादृशनिवृत्त्योरित्यपि द्रष्टव्यम् । **क्लृप्तत्वादिति** । सत्यस्थले विशिष्टज्ञानस्य क्लृप्तत्वादसत्यस्थले च तद्धेतुतया भेदाग्रहस्यावश्यकत्वादित्यर्थः । **सत्यत्वासत्यत्वे** इति । प्रयोजके इत्यर्थः । **गौरवादिति** । [1]असत्यज्ञाने तद्धेतुत्वादिकल्पनागौरवादित्यर्थः ।

---

**न्यायशिखामणिः**

वेणानुपादेयत्वात् । अन्यथा अदृष्टादिकारितकोटिस्मृतिस्थले [2]संशयाभावप्रसङ्गादिति भावः ।

ननूत्कटेत्यत्र द्वितीयं निरस्तम्, तदयुक्तम् । लोके उत्कटानुत्कटेच्छयोरनुभवसिद्धत्वादित्याशङ्क्य तत्रेति पदमध्याहृत्य व्याचष्टे—**तत्रेति** ।

रङ्गरजतादिविषयोत्कटानुत्कटाकाङ्क्षा नास्ति मानाभावादिति [3]वा मूलार्थः । मानाभावोऽसिद्ध इति चेत्—किं तादृशजातौ प्रत्यक्षं मानमर्थापत्तिर्वा । तत्रान्त्यं निराकृतम् 'कल्पने मानाभावात्' इत्यत्र । तदयुक्तम् । प्रवृत्तिनिवृत्तिनियमस्य तत्कल्पकत्वादित्यत आह—**प्रवृत्तेरिति** । ननु जातेरखण्डत्वान्नानिर्वचनं दोषः । न चोपाधिपक्षनिराकरणाभिप्रायं तदिति वाच्यम् । तत्पक्षे दोषस्योक्तत्वादित्यत आह—**दोषान्तरमिति** । यत्रानेकधर्माणां सहचारस्तत्राद्यस्य, यत्र [4]धर्मिगतैकधर्मस्य तत्कोट्या सह भूयस्सहचार उपलब्धस्तत्र द्वितीयस्योत्कटत्वस्याव्यापनान्नोपाधिपक्षः साधुरिति मूलार्थो बोध्यः ।

प्रत्यक्षपक्षं स्वयमाशङ्क्य निरस्यति—**न चेति** । **जातिभेद** इति । यथा इक्षुक्षीरादिरसे मधुरतरत्वादिर्जातिविशेषोऽनुभवसिद्धस्तथास्त्वित्यर्थः । **तद्विरोधा-**

---

1. क. असत्ये ज्ञान-
2. ग. संशयप्रसङ्गाभावात्
3. क. 'वा' नास्ति
4. घ. तद्धर्मिगतधर्मस्य

प्रकाशः

केचित्तु—विशिष्टज्ञानत्वेनैव संवादिप्रवृत्तिजनकत्वे संभवति सत्यविशिष्टज्ञानत्वस्य गौरवादित्यर्थ इत्याहुः ।

---

न्यायशिखामणिः

दिति । तथा च तादृशानुभव एवासिद्ध इति भावः । इच्छाभेदादेव न विरोध इत्यत आह—इच्छेति ।

ननु विशिष्टज्ञानहेतुत्वे गौरवस्य परोक्तस्य राद्धान्त इत्यत्र निराकृतत्वात् पुनराशङ्कानुपपत्तिरित्यत आह—पर एव इति । पूर्वं स्वतन्त्रेष्टोपस्थिति-[1]रहितत्वेन रूपेण भेदाग्रहः प्रवृत्तिमात्रे हेतुर्न तु विशिष्टज्ञानं सामान्ये विशेषे वेत्युक्तम् । संप्रत्यविसंवादिन्यां प्रवृत्तौ विशिष्टज्ञानं विसंवादिन्यां भेदाग्रह इत्युच्यत इति भेद इति भावः ।

नन्वत्र निवर्तकानुपन्यासे रङ्गे निवृत्तिप्रसङ्गनिराकरणमप्रेतनं विरुध्येतेत्यत आह—उपलक्षणमिति । एकत्र तयोः क्लृप्त्यभावात् स्थलभेदेन तामाह—सत्येति । आवश्यकत्वादिति । तथा च तद्धेतोरेवेति न्यायेन भेदाग्रहस्यापि हेतुत्वं क्लृप्तमिति भावः । ननु हेतुत्वप्रतिषेधस्तदनङ्गीकारादप्रसक्तविषयः स्यादित्यत आह—[2]प्रयोजक इति । हेतुतावच्छेदकप्रविष्ट इत्यर्थः ।

केचित्तु सत्यत्वासत्यत्वे इति धर्मिप्रधानो निर्देशः । तथा च हेतुपदं मुख्यार्थमेवेत्याहुः ।

ननु धर्मिकल्पनं धर्मकल्पनं चेत्येतत् गौरवं सत्यविशिष्टज्ञानत्वेन तस्य हेतुत्वे न संभवतीत्यरुचेराह—[3]केचित्त्विति । गौरवादिति । यद्यपि सत्यविशिष्टज्ञान एवेदमवच्छेदकगौरवमभिहितं स्यान्न त्वसत्यज्ञाने । न चैतद्गौरवपर्यालोचनया सत्यविशिष्टज्ञानहेतुत्वनिरासपर एवायं ग्रन्थ इति वाच्यम् । तथा सति सत्यज्ञानस्योभयसिद्धत्वेन असिद्धेरित्यग्रिमदोषानन्वयप्रसङ्गात् । न चासत्यज्ञानेऽप्येतद्गौरवमस्त्विति वाच्यम् । तदनङ्गीकारेणावच्छेदकगौरवस्य तत्रासंभवदुक्तिकत्वात् । तदङ्गीकारे च सत्यस्थलेऽतिप्रसङ्ग[4]वारणायासत्यविशिष्टज्ञानत्वस्यावश्य-

---

1. ग. घ. ॰सहितत्वेन
2. ग. अप्रयोजक इति ।
3. ग. क्वचित्त्विति
4. क. ॰वारणाय सत्य-

असिद्धेश्च। प्रवृत्तिनिवृत्तिमात्रे चेष्टानिष्टपुरोवर्तिज्ञानं हेतुरिति नाननुगमः। न तु विशिष्टज्ञानं गौरवात्। न च भेदग्रहेऽतिप्रसङ्गः। विशिष्टज्ञानं भेदाग्रहं च विशेषद्वयहेतुं विना सामान्यहेतोः कार्यानुत्पादात्। न हि निर्विशेषं सामान्यं नाम। अन्यथा अन्धस्य त्वक्संबन्धे महत्युद्भूतरूपवति चन्द्रमहसि प्रत्यक्षतापत्तिः। द्रव्यसाक्षात्कारहेतोः सत्त्वात्।

एवं रङ्गे रजते च विसंवादिन्यौ भवतः भेदाग्रहात्। न च संवादिन्यौ, विशिष्टज्ञानाभावात्।

---

प्रकाशः

असिद्धः—अन्यतरासिद्धेः। प्रवृत्तीति। वैशिष्ट्य(ज्ञान)स्यावच्छेदकान्तर्भूतत्वे गौरवादिति भावः। यद्यपीष्टविषयपुरोवर्तिज्ञानत्वस्य हेतुतावच्छेदकत्वेऽन्यथाख्यात्यापत्तिः (प्रयोजक)[प्रत्येक]ज्ञानद्वये तदभावात्। तथापि पुरोवर्तिज्ञानं हेतुः, इष्टज्ञानं भेदाग्रहेऽवच्छेदकमिति भावः। द्रव्येति। महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारहेतोः सत्त्वात्। [1]पुंसोऽन्धत्वान्न चाक्षुषत्वम्। ग्राह्यस्यानुद्भूतस्पर्शत्वान्न [2]स्पार्शनत्वमिति भावः।

---

न्यायशिखामणिः

कत्वात्। तथापि सत्यविशिष्टज्ञानहेतुतायामाद्यो दोषः, असत्यविशिष्टज्ञानस्य तद्धेतुत्वे द्वितीय इत्यत्र तात्पर्यम्।

इष्टानिष्टपुरोवर्तिज्ञानं हेतुर्न तु विशिष्टज्ञानमित्यत्र विनिगमकमाह – वैशिष्ट्यस्येति। नन्विष्टज्ञानं पुरोवर्तिज्ञानं च हेतुः, उतेष्टविषयपुरोवर्तिज्ञानम्। नाद्यः, सत्यस्थले तदभावात् इत्यभिप्रेत्य द्वितीयमाशङ्क्य निषेधति—यद्यपीति। पुरोवर्तीति। प्रवृत्तिविषयेत्यर्थः। तर्हीष्टज्ञानोपादानवैयर्थ्यमित्यत आह—इष्टेति।

नन्वन्धस्येत्युक्त्या चक्षुषो विशेषकारणत्वावगमेऽपि द्रव्येत्यादिना किं सामान्यकारणत्वेनाभिमतम्। न तावन्मनोयोगादि, तस्य ज्ञानमात्रहेतुत्वात्। नापि महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वम्, तस्यात्माव्यापनात्। किं च [3]चन्द्रमहसीति विशेषग्रहणं व्यर्थम्, न हि तदन्यद्रूपद्वस्तु अन्धः पश्यतीत्याशङ्क्य, न हि

---

1. क. पुंसा अन्धत्वात्
2. क. स्पार्शत्वमिति
3. क. चन्द्रमहानिति ग. चन्द्रमसीति

अथ रजतरङ्गयोः रजतरङ्गभेदाग्रहात् विसंवादिन्यौ बलात् स्याताम्, तत्सामग्रीसत्त्वात् । विसंवादिनी तत्र सत्यरजते न संभवतीति चेत्—अत एव भेदाग्रहो न तद्धेतुः, तत्सत्त्वेऽपि तदभावात् । न च प्रवृत्तिनिवृत्तिगतं विसंवादित्वं संवादित्वमपेक्ष्य तद्धेतुना ते जन्येते । कारणस्य कार्यानपेक्षणादिति ।

मैवम् । प्रवृत्तेरनिष्टविषयत्वं निवृत्तेरिष्टविषयत्वं विसंवादः । तथा चानिष्टविषयप्रवृत्ताविष्टविषयनिवृत्तौ च भेदाग्रहो हेतुरिति कथं तत इष्टानिष्टविषयप्रवृत्तिनिवृत्ती स्यातां, तत्र तस्यासामर्थ्यादिति ।

---

प्रकाशः

कारणभेदव्यवस्थापनफलमाह—एवमिति । ननु विसंवादिप्रवृत्त्यादिहेतुभेदाग्रहसत्त्वेऽवश्यं तदुत्पत्तिरिति पुनः प्रवृत्त्यादि[1]यौगपद्यमित्याह—अथेति । गूढाभिसन्धिः शङ्कते—विसंवादिनीति । अभिसन्धिमविद्वानाह—अत एवेति ।

---

न्यायशिखामणिः

चाक्षुषप्रत्यक्षत्वमापाद्यम्, किं तु प्रत्यक्षत्वमात्रम् । तत्र च सौरालोकघटादेस्तदीयत्वाचप्रत्यक्षविषयत्वात् चान्द्रालोकस्य चातथात्वात् [2]न तद्ग्रहणवैयर्थ्यम् । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपवत्त्वादेः कारणत्वस्य विवक्षितत्वात् [3]नात्माव्याप्तिर्दोष इत्याह—महत्त्वेति ।

ननु रङ्गरजतयोर्विसंवादिप्रवृत्तिनिवृत्त्यापादनं नानिष्टप्रसङ्ग इत्याशङ्क्य प्रत्येकं विसंवादितदुभयापादने तात्पर्यमित्याह—नन्विति । [4]गूढेति । रङ्गे रजतार्थिनिवृत्तिः रजते रजतार्थिप्रवृत्तिश्च आपाद्यत्वेनाभिमता । सा च संवादिन्येवेति विशिष्टज्ञानाभावान्न भवतीत्यभिसन्धिः ।

भेदाग्रहस्येति । [5]अविद्यमानभेदाग्रहस्येत्यर्थः । अन्यथा सत्यपि भेदाग्रहे रजते विसंवादिप्रवृत्त्यनुदयेनान्वयव्यभिचारापत्तेरिति बोध्यम् । किमिष्टज्ञानं

---

1. ख. यौगपद्यं मन्वान आह
2. क. न त तद्ग्रहणं-
3. क. नात्माव्याप्तिदोषः ग. नाव्याप्ति-
4. ग. घ. 'गूढेति ।.......भवतीत्यभिसन्धिः' इति नास्ति ।
5. क. ग. विद्यमान-

अत्र ब्रूमः। ज्ञानं स्वविषये प्रवर्तकमित्याद्यप्रवृत्तौ संवादिप्रवृत्तौ च सर्वैरेवधारितं, लाघवाद्बाधकाभावाच्च।

तत इष्टज्ञानं शुक्तौ प्रवर्तकं तद्विषयकं तद्व्यवहारहेतुत्वात् स्वाविषये तस्यासामर्थ्यात्।

---

प्रकाशः

अभिसन्धिमुद्घाटयन् पुनः परिहारमाह—**नैवमिति**। **तत्रेति**। इष्टविषयकप्रवृत्तावनिष्टविषयकनिवृत्तौ चेत्यर्थः। तस्य [1]भेदाग्रहस्य स्वरूपायोग्यत्वात् तद्योग्यस्य च विशिष्टज्ञानस्यासत्त्वान्न प्रवृत्त्यादियौगपद्यमित्यर्थः। **ज्ञानमिति**।

ननु फलज्ञाने व्यभिचारः। तस्य [2]स्वविषयीभूतोपाये प्रवर्तकत्वात्। न च फलेच्छयैव तदन्यथासिद्धमिति वाच्यम्। तस्यास्तद्व्यापारत्वात्। अन्यथा उपायगोचरकार्यताज्ञानस्यापि चिकीर्षात एवान्यथासिद्धत्वेनाहेतुत्वापातादिति चेत्—न। फलज्ञानातिरिक्तविषयताकत्वाद्व्याप्तेरित्येके।

वयं तु ब्रूमः। फलेच्छाया इष्टसाधनताज्ञानोपक्षीणत्वेनान्यथासिद्धत्वात् फलज्ञानं प्रवृत्तौ सुतरामन्यथासिद्धम्। यत्रेच्छा तत्साधनज्ञानत्वेन हेतुत्वेन तस्यास्तदवच्छेदकत्वात्।

---

न्यायशिखामणिः

सामान्यकारणमित्यभिमतम्, उतेष्टपुरोवर्तिज्ञानम्, पुरोवर्तिज्ञानमात्रं वा। नाद्यः, [3]अन्यथाख्यात्यनभ्युपगतौ तस्य प्रवृत्तिमात्रकारणत्वासिद्धेः। न हि रजतस्मरणं शुक्तौ प्रवर्तकमिति युज्यते, भिन्नविषयत्वात्। यत् यद्विषयप्रवृत्तिजनकं तत् तद्विषयमिति व्याप्तेः सत्यस्थले निर्णीतत्वादित्युक्तम्—**अत्र ब्रूम** इत्यत्र। तत्र व्यभिचारं चोदयति—**नन्विति**।

यथाश्रुतेऽपि न दोष इत्याह—**वयं त्विति**।

ननु नेच्छाया विषयत्वेनेष्टसाधनताज्ञाने हेतुत्वम्। तस्यानुमानिकत्वेन विषयाजन्यत्वात् तस्या [4]ज्ञानविषयत्वानभ्युपगमाच्चेत्याशङ्क्य, न हि तद्धेतुत्वेने-

---

1. ख. भेदग्रहस्य स्वरूपयोग्यत्वात्
2. क. स्वाश्रयविषयीभूतो-
3. क. अन्यथाख्यात्यनभ्युपगमात्
4. ग. ज्ञानविशेषणत्वा-

अथ भेदाग्रहात् ग्रहणस्मरणाच्चावश्यकाद्विसंवादिप्रवृत्त्युपपत्तेर्विशिष्टज्ञानकल्पने गौरवाच्च स्वाविषयेऽपि ज्ञानं प्रवर्तकमिति कल्पनात् सर्वैः प्रथममवधारितमपि त्यज्यतामिति चेत्—न । प्रथमप्रवृत्तप्रमाणबलेन तत्रापि विशिष्टज्ञानकल्पनात् ।

---

**प्रकाशः**

अथ यत्र यत्साध्यत्वज्ञानं तदिच्छा तत्र प्रवर्तिका । तथा चेष्टसाधनताज्ञानमेवावच्छेदकमस्तु । एवं च विनिगमनाविरहादुभयोरपि हेतुत्वं दण्डचक्रादिवदिति चेत्—न । फलेच्छाया भिन्नविषयत्वमिष्टसाधनताज्ञानस्य समानविषयत्वमिति विनिगमकस्य संभवात् । दण्डादौ तु नैवमिति । तद्व्यवहारेति । तत्र प्रवर्तकत्वादित्यर्थः । प्रथमप्रवृत्तेति ।

ननूक्तलाघवेन प्रथममेवेष्टपुरोवर्तिज्ञानत्वेन प्रवर्तकत्वं कल्प्यम्, न तु तद्विशिष्टज्ञानत्वेन । संवादिविसंवादिप्रवृत्तौ विशेषसामग्र्यन्तर[1]कल्पनस्यावश्यकत्वादिति चेत्—न । तावताप्यन्यथाख्यातिसिद्धेः । ज्ञानद्वये प्रत्येकमिष्टपुरोवर्तिज्ञानत्वस्याभावात् । न च पुरोवर्तिज्ञानं हेतुः, इष्टज्ञानमवच्छेदकमिति वाच्यम् । अनुपदं ग्रन्थकृतैव निरस्यत्वात् । एवं च तत्सत्यत्वासत्यत्वघटितैव विशेषसामग्री न तु भेदाग्रहघटिता गौरवादिति भावः ।

---

**न्यायशिखामणिः**

च्छायास्तत्रान्यथासिद्धिरभिमता, किं तु दण्डत्वादिवदवच्छेदकत्वेनेत्याह—यत्रेति । इच्छेति । वर्तमानेति शेषः । अन्यथा तृप्तस्य भोजने सिद्धौ इनस्यापि पाके प्रवृत्त्यापत्तेः । नन्वभिलापे पदावलिज्ञानमेव हेतुरित्युक्तम् । तथा च तज्जनकत्वमिष्टज्ञानस्यासिद्धमित्यत आह—यत्रेति ।

द्वितीयं पक्षं स्वयमाशङ्क्य निरस्यति—नन्वित्यादिना । [2]न त्विति । वैशिष्ट्यस्यावच्छेदकान्तर्भावे गौरवादिति भावः । एवं सति भेदग्रहे [3]प्रवृत्तिप्रसङ्गं वारयति—विसंवादीति । नन्वित्यत्र वक्ष्यमाणं तृतीयं पक्षमाशङ्कते—न चेति । अनुपदमिति । 'स्वतन्त्रान्वयव्यतिरेका'दित्यत्रेत्यर्थः ।

---

1. क. 'कल्पन' नास्ति ।
2. ग. नन्विति ।
3. ग. अतिप्रसङ्गं

तत्र बाधकं विना तद्विरोधेन कल्पान्तरानुदयाच्च फलमुखगौरवस्यादोषत्वात्। अन्यथा प्रथमं सर्वैर्गृहीतापि कार्यान्विते शक्तिः सिद्धार्थदर्शनाद्गौरवाच्च परित्यज्येतेति साधु समर्थितं गुरुमतम्।

ननु स्वविषये ज्ञानं प्रवर्तकमिति सत्यम्। किं तु विसंवादिप्रवृत्ताविदं ज्ञानमेव प्रवर्तकं न त्विष्टज्ञानमपि। तद्धि ज्ञायमानेष्टभेदाग्रहे कारणतावच्छेदकं लाघवादिति दण्डत्ववदन्यथासिद्धम्। एवं हि तत्प्रतिबद्धव्यवहारानुकूलत्वं तद्विषयत्वं रजतज्ञानस्य शुक्तौ नास्ति। अन्यथा रजतज्ञानस्य शुक्तिविषयत्वापत्तेः। संवादिप्रवृत्तौ चेष्टज्ञानं प्रवर्तकम्, तस्य विशिष्टज्ञानत्वात् अभेदेनावच्छेदकत्वाभावादिति मम सिद्धान्तसार इति चेत्—

---

प्रकाशः

साध्विति। यद्यपि प्रथमगृहीतस्यात्याज्यत्वे कार्यान्वितशक्तिरपि न त्याज्या स्यादिति साधु समर्थितं न्यायमतमिति परैरपि वक्तुं शक्यमेव। तथापि फलमुखगौरवस्यादोषत्वादत्र त्यागबीजमेव नास्ति, तत्र तु न तथेति भावः।

---

न्यायशिखामणिः

ननु विसंवादिप्रवृत्ताविदंज्ञानं [1]संवादिप्रवृत्तौ चेष्टज्ञानं प्रवर्तकमिति वाक्यद्वयस्वरसात् [2]इष्टज्ञानं पुरोवर्तिज्ञानं च विशेषकारणमुक्तम्। तच्चायुक्तम्। तयोः सत्यासत्यस्थलसाधारणत्वात्। न च विसंवादाविसंवादौ न विवक्षितौ, किं तु इदंज्ञानमिष्टज्ञानं च प्रवृत्तिमात्रे कारणमिति वाच्यम्। इष्टज्ञानं भेदाग्रहे कारणतावच्छेदकमित्यनेन विरोधात्। सत्यस्थले ज्ञानद्वयाभावेनाननुगमतादवस्थ्याद्विपरीतचतुष्के [3]दोषानिरासाच्चेत्याशङ्क्य तात्पर्यमाह—एवं चेति।

[4]अन्यथासिद्धिसामान्याभावो हि यावद्विशेषाभावायत्त इति संभावितमन्यथा-

---

1. घ. अविसंवादि-
2. क. नेष्टज्ञानं
3. ग. दोषनिरासाच्च
4. घ. अन्यथासिद्ध-

उच्यते। स्वतन्त्रान्वयव्यतिरेकादिष्टज्ञानं हेतुरेव न त्वितरहेतुतावच्छेदकमन्यथासिद्धं वा। न हीष्टज्ञानमादायैव इष्टभेदाग्रहस्यान्वयव्यतिरेकौ येन दण्डत्ववत्तदवच्छेदकम्। नापीष्टज्ञानस्य भेदाग्रहगर्भत्वेनान्वयव्यतिरेकौ, येन दण्डरूपवत्तदन्यथासिद्धम्।

अन्यथा अगृहीतभेदेष्टज्ञानं हेतुरवच्छेदको भेदाग्रह इत्येव किं न स्यात्। तस्मात् स्वतन्त्रान्वयव्यतिरेकादुभयोरपि हेतुत्वम्।

किं चेष्टविषयप्रवृत्तिस्थले प्रवृत्तिमात्रं प्रतीष्टज्ञानस्य हेतुत्वादियमपि प्रवृत्तिस्तज्जन्या क्लृप्तहेतु विना कार्यानुत्पत्तेः। न चेष्टज्ञानजन्यत्वे इष्टविषयप्रवृत्तित्वमवच्छेदकं गौरवात्। बाधकं विना सामान्ययोः कार्यकारणभावनियमात्। अत एव तन्नोपाधिरपि।

---

प्रकाशः

कारणतावच्छेदकमिति। एवं च प्रवृत्तिमात्रे इदं ज्ञानं हेतुः। संवादिविसंवादिप्रवृत्त्याश्च उक्तभेदाग्रहविशिष्ट(ज्ञानेत्यर्थः) [ज्ञानमित्यर्थः]। दण्डरूपवदिति। अन्वयव्यतिरेकप्रतियोगिना दण्डेन साहित्यप्रतियोगि दण्डत्वमन्यथासिद्धमिति पूर्वमुक्तम्। संप्रति दण्डरूपत्वेन कारणत्वे साहित्यप्रतियोगिना दण्डेनान्वयव्यतिरेकप्रतियोगि दण्डरूपमन्यथासिद्धमित्युच्यत इति विशेषः। अगृहीतेति। पुरोवर्त्यगृहीतेत्यर्थः। उभयोरपीति। तथा चेष्टज्ञानस्य शुक्तिविषयकत्वमावश्यकं

---

न्यायशिखामणिः

[1]सिद्धिद्वयं निरस्तं मूले न हीत्यादिना। [2]तत्राविशेषमाशङ्क्याह—अन्वयेति।

नन्विष्टज्ञानस्य हेतुत्वेऽपि वैशिष्ट्यविषयत्वस्यानावश्यकत्वान्नान्यथाख्यातिसिद्धिरित्यत आह—तथा चेति।

नन्वस्त्विष्टज्ञानं प्रवर्तकं, तथापि तत्त्वं नावच्छेदकम्। पुरोवर्तिज्ञानत्वरूपसामान्यापेक्षयास्य गुरुत्वात्। विशेषसामग्रीविरहाच्च नातिप्रसङ्ग इत्याशङ्क्य, पूर्वोक्तलाघवात् प्रवृत्तिमात्रे विशिष्टज्ञानं कारणं न तु सामान्ये विशेषे वा भेदाग्रहः। न वा विशिष्टज्ञानकारणतायामिष्टविषयप्रवृत्तित्वमवच्छेदकम्, विशेष-

---

1. घ. °सिद्धद्वयं　　2. घ. तत्र विशेष-

अथ तत्रापीदं ज्ञानं प्रवर्तकम्, दैवाधीनं तस्येष्टविषयत्वमपीति चेत्—तर्हीष्टे इदमिति ज्ञानादेव प्रवृत्तिः स्यात्। न ह्यत्र तत्रापि ज्ञायमानेष्टभेदाग्रहः प्रवर्तकः। एतेन न रजतज्ञानं शुक्तिविषयकं तत्प्रतिबद्धव्यवहाराहेतुत्वादिति निरस्तम्। असिद्धः।

ननु ज्ञानं यथार्थमेवेति व्याप्तिरेव तद्बाधिका। अत एव प्रवृत्तिमात्रे विशिष्टज्ञानमिष्टज्ञानं च हेतुर्लाघवात् स्वविषये ज्ञानं प्रवर्तकम्, सर्वैरेवाद्यप्रवृत्तौ तथावगमात्। असत्यस्थले इष्टज्ञानमपि प्रवर्तकं, न तु भेदाग्रहे हेतुतावच्छेदकमित्यन्यथाख्यातिसाधनं न भवतीति चेत्—

---

**प्रकाशः**

स्वाविषये तस्याप्रवर्तकत्वात् इत्यन्यथाख्यातिसिद्धिरिति भावः। पूर्वोक्तयुक्तिमेव स्मारयति—किं चेति।

व्यवहाराहेतुत्वादिति। उपेक्षाज्ञानेऽपि योग्यतास्तीति भावः। (तत) [अत] एवेत्यादि। [1]अन्यथाख्यातिसाधनं न भवतीति योजना।

---

**न्यायशिखामणिः**

तथा गुरुत्वादित्युक्तं किं चेत्यत्र। तदयुक्तम्। पौनरुक्त्यादित्यत आह—पूर्वोक्तेति।

यत्तु—ननु प्रकारान्तरोपस्थितरजतभेदग्रहे सत्यपि प्रवृत्तेर्दर्शनादिष्टतावच्छेदकरूपेणोपस्थितस्य तस्य भेदग्रहः प्रतिबन्धक इति तदभावत्वेन हेतुत्वं वाच्यम्। तथा चोपस्थित्यन्तर्भावेणान्वयव्यतिरेकग्रहात् दण्डत्वादिवदुपस्थितिरवच्छेदिकैवेत्यरुच्या—किं चेत्युक्तमिति जयदेवमिश्रा व्याचक्षते।

तदयुक्तम्। इष्टतावच्छेदकावच्छिन्नप्रतियोगिकान्योन्याभावज्ञानस्यैव प्रतिबन्धकत्वात्। द्रव्यत्वावच्छिन्नतद्भेदग्रहे च तदभावादेव प्रवृत्त्यप्रतिबन्धात्।

ननु ततोऽपि लाघवात् पुरोवर्तिज्ञानत्वेनैव हेतुत्वम्। विशिष्टज्ञानरूपविशेषकारणानङ्गीकाराच्च नोक्तगौरवमित्याशङ्कां सत्यस्थले प्रवृत्तिप्रसङ्गेन अथेत्यादिना निराकृत्य, एवं हीत्यत्र सामान्यव्याप्तिमूलकानुमानं [2]परेण बाधक-

---

1. ख. 'अन्यथाख्यातिसाधनं ....... तेषामिति' इति ग्रन्थो नास्ति।
2. क. अपरेण बाधकत्वेनोक्त्वा

न । तेषामन्यथासिद्धावन्वयव्यतिरेकावधारितकारणतामूलकत्वेन तेरैव व्याप्तिबाधात् । क्लृप्तहेतुं विना कार्यानुत्पत्तेः विपक्षे बाधकाभावाच्च । ज्ञानायथार्थत्वेऽपि निष्कम्पप्रवृत्त्याद्युपायस्य वक्ष्यमाणत्वात् ।

एतेन संस्कारेन्द्रियाभ्यां प्रत्यभिज्ञानवच्छब्दाभासादितो वा परस्परं संबन्धविरहिणि एकं ज्ञानं न भवतीति ज्ञानं यथार्थमेवेति व्याप्तिरिति निरस्तम् । व्याप्त्याद्यसिद्धेः सामग्रीसत्त्वे कार्यावश्यकत्वाच्च ।

एकदेशिनस्तु—रजतरङ्गयो रजतरङ्गभेदाग्रहान्न युगपत् प्रवृत्ति-निवृत्ती । न चान्यथाख्यातिः, दोषवशात् पुरोवर्तिनं विहाय स्मृत-रजतरङ्गाभ्यां पुरोवर्तिनि भेदग्रहात् ।

---

### प्रकाशः

तेषामिति । अन्यथाख्याति[1]बाधकत्वेनोक्तानामित्यर्थः । व्याप्तिबाधकत्वे हेतुमाह—क्लृप्तेति । विपक्ष इति । ज्ञानत्वेऽप्ययाथार्थ्यं स्यादित्यर्थः । वस्तुतो ज्ञानमनित्यमितिवत् भिन्नविषयतया नेयं व्याप्तिर्बाधिकेति भावः । स्मृतेति । न चेदं रजतं तद्रजतभिन्नमित्यादिज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वापत्तिरिति वाच्यम् । रजतत्वेन प्रकारेण तद्भेदग्रहस्य प्रतिबन्धकत्वम्, तत्र च तद्रजतत्वं प्रकार इत्याशयात् ।

---

### न्यायशिखामणिः

त्वेनोक्तं निराकर्तुम् एतेन इत्यनेनानूदितम् । तत्र यथाश्रुते व्यभिचारमुपेक्षाज्ञाने निरस्यति—उपेक्षेति । [2]अत एवेत्यस्याव्यवहितेन हेतुरित्यनेन [3]हेत्वन्तरा-वरुद्धेन विरोधान्नान्वयः, किं तु न भवतीत्यनेन हेत्वाकाङ्क्षेणेत्याह—[4]अत एवेत्यादीति ।

अन्यथाख्यातिसाधनमित्येकत्वेन निर्दिष्टस्य बहुवचनानन्वयादाह—अन्यथाख्यातीति । तथा च मूलेऽ[5]न्यथाख्यातिसिद्धिर्न भवति पूर्वोक्तानुमानैरिति शेषः । निरुपाधिसहचारभङ्ग एव विपक्षे बाधक इति यदि ब्रूयात् तदाह—वस्तुत इति ।

---

1. ख. °बाधकत्वेन
2. क. घ. तत एव
3. घ. हेत्वविरुद्धेन
4. क. घ. तत एवे-
5. ग. अन्यथाख्यातिसाधनमन्यथाख्यातिसिद्धिर्न-

न च रजतत्वेन स्मृतिः संस्कारगोचरसर्वरजतविषया स्यात् सामान्यप्रत्यासत्तेस्तुल्यत्वादिति वाच्यम्। तत्तांशे रजतत्वे च प्रत्यासत्तावपि दोषात् स्मृत्यनुभवप्रतिबन्धवदुपपत्तेः।

किं च प्रत्यक्षे सामान्यं प्रत्यासत्तिः, स्मरणे तु मनः करणं संस्कारः प्रत्यासत्तिः, न तु तस्य सामान्यं प्रत्यासत्तिरकरणत्वात्।

---

## प्रकाशः

स्मृत्यनुभवेति[1]। प्रमुष्टतत्ताकस्मरणे तत्तांशे संस्काररूपप्रत्यासत्तिसत्त्वेऽपि यथा दोषात् स्मृतिप्रतिबन्धो यथा वा रजते रङ्गभ्रमदशायां संयुक्तसमवायप्रत्यासत्तावपि रजतत्वानुभवप्रतिबन्धस्तथात्रापीत्यर्थः। ननु संस्कारस्यैव सामान्यं प्रत्यासत्तिरस्त्वित आह—न तु तस्येति। संस्कारस्येत्यर्थः।

---

## न्यायशिखामणिः

ननु तत्तायाः स्मृतिमात्रविषयत्वात् अनुभवाप्रसक्तेः रजतत्वस्यापि दोषे सत्यपि स्मृतस्य शुक्तावारोप्यत्वात् तत्र तदुभयप्रतिबन्धो न युक्तः। परमते च रजतत्वस्य तत्रासत्त्वेनासंनिकर्षादेवानुभवाप्रसङ्ग इत्याशङ्क्य, स्मृतेस्तत्तांशेऽनुभवस्य रजतत्वे प्रतिबन्ध इति विवक्षितम्। अनुभवप्रतिबन्धाभिधानं च रजते रङ्गत्वभ्रमकालाभिप्रायमित्याह— प्रमुष्टेति।

किंचेत्यादिमणेरेषोऽर्थः—ननु प्रत्यासत्तित्वेऽपि अनुभवो दोषेण [2]प्रतिबध्यो दृष्टः। स्मृतिस्तु न तथा। तत्तायाश्च क्वचित् उद्बुद्धसंस्कारविरहादेव प्रमोषः। तथा च सामान्यप्रत्यासत्तेः सर्वत्रावैकल्यात् पुरोवर्ति[3]रजतांशेऽपि स्मृतिर्दुर्वारेत्यस्वरसादाह—किं चेति। सामान्यमिति। यदिन्द्रियं यद्व्यापाररूपप्रत्यासत्तिमत् यथा चक्षुर्मनश्चेन्द्रियं, तस्मात् स्मरणे जनयितव्ये तादृशप्रत्यासत्तिमत्, तादृशी च प्रत्यासत्तिः संस्कार एव, न तु मनसः सामान्यं तादृशप्रत्यासत्तिः। अजन्यत्वेन [4]अव्यापारत्वात्। अन्यथा अव्यापारस्यापि प्रत्यासत्तित्वे व्यापारान्तरा-

---

1. ख. एतदनन्तरं 'अन्यथाख्यातिसाधनं भवतीति योजना' इति पाठः।
2. क. प्रतिबन्धो
   ग. प्रतिबन्ध्यो द्रष्टव्यः
3. क. रजतांशस्मृतिः
4. घ. अस्याव्यापारत्वात्

तन्न। एकरङ्गरजतमात्रज्ञानानन्तरं तयोरेव यमजयोर्वा विपरीतचतुष्केऽतिप्रसङ्गादन्यथाख्यातेर्वा।

प्रकाशः

रजतत्वासंसर्गेति। अन्यवृत्तितयोपस्थितेत्यपि विशेषणं बोध्यम्। अग्रहरूपमिति। अदूरविप्रकर्षेण ज्ञानत्वाभिधानमित्येके। असंसर्गं न गृह्णातीति

न्यायशिखामणिः

भावेन तस्याकरणत्वप्रसङ्गात्। न च सामान्यं प्रत्यासत्तिः, संस्कारस्तु व्यापार इति नोक्तदोष इति वाच्यम्। इन्द्रियस्थले प्रत्यासत्तेरेव व्यापारत्वनियमात्।

न च यत्र प्रत्यक्षे सामान्यमिन्द्रियस्य प्रत्यासत्तिः तत्र व्यभिचारान्नायं नियमः साधुरिति वाच्यम्। तत्रेन्द्रियसंयुक्तधूमव्यक्तिसमवेतमेव धूमत्वं प्रत्यासत्तिरिति विशेषणीभूतसंयोगस्य व्यापारतया विशिष्टे व्यापारपदप्रयोगात्।

न चैवं प्रकृतेऽपि सामान्यं तथास्त्विति वाच्यम्। मनसो बहिर्निर्गमनाभावेन विषयसंयोगाभावात्।

न च [1]जन्यसंस्कारविषयं सामान्यं तथा, विशेषणस्य व्यापारत्वात् तद्विशिष्टे तत्प्रयोगसंभवादिति वाच्यम्। आवश्यकसंस्कारस्यैव प्रत्यासत्तित्वोपपत्तेः।

किं च यत् सामान्यप्रत्यासत्तिजन्यं तत्प्रत्यक्षमिति नियमात् स्मरणस्य तज्जन्यत्वे प्रत्यक्षान्तर्भावापत्तिः। न चेष्टापत्तिः। स्मरणे मनस्त्वेन मनः [2]करणम्, संस्कारो व्यापारः, न त्विन्द्रियत्वेनेति सिद्धान्तव्याकोपप्रसङ्गात्। तस्यापि प्रत्यक्षत्वे इन्द्रियत्वेन करणत्वे विरोधाभावात्। तस्माद्यदा मनः स्मृतिकरणं तदा संस्कार एव प्रत्यासत्तिः, न तु तस्य सामान्यं प्रत्यासत्तिः, तदा तस्य प्रत्यक्षाकरणत्वादिति।

अत्र रजतत्वाश्रयभेदवदित्यादिज्ञानस्याविरोधितया रजतत्वावच्छिन्नप्रतियोगिकभेदवदित्यादिज्ञानस्य स्वीकारे अन्यथाख्यात्यापत्तेरिति दोषे सत्येव दोषान्तरमुक्तं तत्रेत्यत्रेति द्रष्टव्यम्।

1. ग. तज्जन्य- 2. क. कारणम्

अन्ये तु—रजते नेदं रजतमिति ज्ञानं रजतत्वासंसर्गाग्रहरूपं रजतभेदासंसर्गाग्रहरूपं प्रवृत्तिप्रतिबन्धकमिति ।

तन्न । अन्यवृत्तितयोपस्थितस्य रजतत्वासंसर्गस्य रजतभेदस्य च रङ्गेऽसंसर्गाग्रहात् निवृत्तिप्रसङ्गात् रङ्गे च तयोरसंसर्गग्रहेऽन्यथाख्यातिः ।

---

**प्रकाशः**

व्युत्पत्त्या संसर्गाज्ञानमेवोक्तमित्यन्ये । निवृत्तिप्रसङ्गादिति । प्रवृत्त्यभावप्रसङ्गादित्यर्थः ।

---

**न्यायशिखामणिः**

ननु शुक्ताविदं रजतमित्यत्रोक्तासंसर्गाग्रहसत्त्वात् प्रवृत्तिर्न स्यात् । उपस्थितत्वविशेषणे च तत्रैव रजतभेदाभाववदिति ज्ञानसमये सा न स्यादित्यत आह—अन्यवृत्तितयेति । अन्यवृत्तित्वप्रकारकभेदाद्युपस्थितिसाहित्यं प्रतिबन्धकविशेषणम् । ततो नोक्तदोषः । न चैवं शुक्तौ नेदं रजतमित्यत्र भेदस्य शुक्तिवृत्तितयोपस्थितस्यान्यवृत्तितयानुपस्थितेः प्रवृत्तिप्रतिबन्धो न स्यादिति वाच्यम् । एतद्ग्रन्थस्येष्टभेदतदवच्छेदकात्यन्ताभावग्रहवत्तदसंसर्गाग्रहोऽपि प्रवृत्तिप्रतिबन्धक इत्यर्थपरत्वेन भेदग्रहसत्त्वे प्रवृत्तिशङ्कानवकाशादिति भावः ।

नन्वेवं सति मुख्यार्थत्यागो वक्ष्यमाणमताभेदश्चेत्यरुचेराह—असंसर्गेति । ननु प्रवृत्तिप्रतिबन्धकवचनेन निवृत्तिप्रतिबन्धकस्याप्यनिष्टभेदासंसर्गाग्रहस्योपलक्षणात् [1]तत्सत्त्वे निवृत्त्यापादनमसंगतमित्यत आह—प्रवृत्त्यभावेति । ननूक्तदोषानतिवृत्तौ कथं शङ्कान्तरावकाशः । न चोक्तदोषातिदेशायैव मतान्तराभिधानमिति वाच्यम् । एकार्थत्वेन मतान्तरत्वानुपपत्तेः । न च [2]भेदस्यात्यन्ताभावाग्रहः प्रागुक्तः, [3]भेदात्यन्ताभावात्यन्ताभावस्य भेदभिन्नस्य तत्समनियतस्यात्यन्ताभावाग्रहोऽत्र प्रतिबन्धक उच्यत इति भेद इति वाच्यम् । तथा सत्यपसिद्धान्तादित्यत आह—रजतभेदस्येति ।

---

1. क. तदसत्त्वे

2. ग. भेदस्यात्यन्ताभावस्य भेदभिन्नस्य 3. क. भेदात्यन्ताभावादत्यन्ता-

रजते रजतभेदासंसर्गासंसर्गस्यासंसर्गाग्रहान्निवृत्तिरिति चेत्—न। भेदासंसर्गासंसर्गस्य भेदसंसर्गरूपत्वेन रजतभेदसंसर्गासंसर्गग्रहाद्रङ्गे निवृत्तिप्रसङ्गात्। रजतभेदसंसर्गासंसर्गग्रहे चान्यथाख्यातिः।

रजतवृत्तितयोपस्थिते भेदे रजतभेदेन सह भेदाग्रहः प्रवृत्तिप्रतिबन्धकः, एवं रङ्गे निवृत्तावपीति चेत्—न। एवमपि शब्दाभासात् युगपत्

---

प्रकाशः

रजत इति। रजतभेदस्य त्रिभिरसंसर्गैः रजतभेदासंसर्गः सिध्यति। [1]तस्याग्रहो नकारार्थः। स एव रजते प्रवृत्तिप्रतिबन्धक इति शङ्कार्थः।

ननु रजतवृत्तितया यो घटादिभेद उपस्थितः तस्य रजतभेदेन सह विद्यमानोऽपि भेदो दोषान्न भासत इति रजतभेदकार्यकारितया स एव रजते प्रवृत्ति-

---

न्यायशिखामणिः

नन्वस्य रजतभेदासंसर्गाग्रहपरत्वान्मा भूदपसिद्धान्तः। तथापि मतभेदो नोपपादित एवेत्यत आह—स एवेति। पूर्वत्र ज्ञानपदप्रयोगात् असंसर्गानवगाहिज्ञानं प्रतिबन्धकम्। प्रकृते च तदभावादसंसर्गाग्रहाभावस्तथोच्यत इति स्पष्टो [2]मतभेद इति भावः।

वस्तुतस्तु रजतभेदेन रजतत्वासंसर्गेण संसर्गस्तादात्म्यं यस्य नास्ति [3]स तथोक्तस्तादृशश्च [4]घटादिभेदो घटत्वात्यन्ताभावश्च तस्य रजते विद्यमानस्य रजतभेदरजतत्वात्यन्ताभावाभ्यां [5]भेदाग्रहात् रजते न प्रवृत्तिरित्येवाशङ्कार्थः। अन्यथा संसर्गद्वय[6]ग्रहणवैयर्थ्यापत्तेः।

केचित्तु—तदुभयग्रहणमिष्टभेदेष्टतावच्छेदकात्यन्ताभावयोरिष्टभेदासंसर्गासंसर्गत्वेनानुगमार्थम्। अत एवेष्टतावच्छेदकासंसर्गो नेह पृथग्गृहीत इत्याहुः। तच्चिन्त्यम्। भेदात्यन्ताभावः प्रतियोगितावच्छेदकः तदत्यन्ताभावो न भेद

---

1. क. ग्रहो ('तस्या' इति नास्ति)
2. क. ग. मतिभेदः
3. क. 'स' नास्ति।
4. ग. घटाभेदो
5. क. अभेदा-
6. ग. 'ग्रहण' नास्ति

प्रवृत्तिनिवृत्त्यापत्तेः प्रवृत्तिनिवृत्तिविषयनिष्ठभेदयो रङ्गरजतभेदयोश्च शब्दादनुपस्थित्या प्रतिबन्धकत्वाभावात् ।

अपरे तु पुरोवर्तिनिष्ठतया ज्ञाते भेदे इष्टानिष्टप्रतियोगित्वाभावग्रहात् प्रवृत्तिनिवृत्ती । तथा हि—रङ्गे रजतभेदः सन्नपि दोषान्न भासतेऽन्यस्माद्भासत एव । तथा च रङ्गवृत्तितया ज्ञाते भेदे रजतप्रतियोगित्वाभावग्रहाद्यथार्थादेव रङ्गे प्रवृत्तिः, रङ्गप्रतियोगित्वाभावः सन्नपि दोषान्न भासत इति तत्र न निवर्तते । एवं रजतनिष्ठतयोपस्थिते भेदे रङ्गप्रतियोगित्वाभावग्रहात् रजते निवर्तते । रजतप्रतियोगित्वाभावः सन्नपि दोषान्न गृह्यत

---

प्रकाशः

प्रतिबन्धक इति शङ्कते—रजतवृत्तितयेति । पुरोवर्तिनिष्ठतयेति । अत्र भेद इत्यत्र यावतीति विशेषणं बोध्यम् । एवं चान्यथाख्यातिभिया ज्ञात इत्युक्तम् ।

---

न्यायशिखामणिः

इति व्यतिरेकिग्रन्थे स्फुटत्वेनानुगमासिद्धेः । भेदग्रहासंसर्गग्रहयोः [1]पृथक् प्रतिबन्धकत्वेनानुगमानपेक्षणाच्च ।

ननु विवक्षितार्थमजानानेन [2]परमते दूषितेऽनेन सोऽर्थ उद्घाटितो रजतवृत्तितयेत्यत । तदयुक्तम् । अन्यथाख्यातिभयाभावेन रजतवृत्तिघटादिभेदे तद्भेदेन सह भेदग्रहसंभवादित्यत आह—नन्विति ।

उक्तदोषातिदेशाय अपरे तु इत्यत्र मतान्तरमुक्तमयुक्तम् । [3]शुक्तौ नेदं रजतमिति ज्ञानदशायामपि तन्निष्ठतया ज्ञाते घटादिभेदे रजतप्रतियोगिकत्वाभावग्रहात् प्रवृत्त्यापत्तेः । न च ज्ञात इति विशेषणस्थाने यावतीत्यभिमतमिति नोक्तदोष इति वाच्यम् । तथापि रङ्गे अन्यथाख्यात्यप्रवृत्त्योः अन्यतरापत्तेरित्यत आह—अत्रेति ।

नैवमित्यादिमणेरेषोऽर्थः । तादृशेष्टप्रतियोगित्वाभावज्ञानं [4]न प्रवर्तकं, तत्र प्रमाणाभावादित्याह—नैवमिति । न च हेत्वसिद्धिरित्याह—इदमिति । न तु

---

1. क. 'पृथक्' नास्ति ।
2. क. स्वमते
3. क. शुक्ताविदं
4. ग. 'न' नास्ति ।

इति न युगपत्प्रवृत्तिनिवृत्ती। न च रङ्गवृत्तिभेदत्वं रजतभेदेऽप्यस्तीति तेन रूपेण सोऽपि भासते सामान्यबुद्धेः सर्वविशेषविषयत्वात्। तथा च रजतभेदेऽपि तत्प्रतियोगित्वाभावग्रहेऽन्यथाख्यातिरिति वाच्यम्। प्रत्यासत्तावपि रङ्गवृत्तिभेदत्वेन रजतभेदस्य दोषेणाग्रहादिति।

मैवम्। इदं रजतमिति ज्ञानमन्वयव्यतिरेकाभ्यां प्रवर्तकमित्यनुभवसिद्धम्। तच्च सत्यस्थले विशिष्टज्ञानं अन्यत्र ज्ञानद्वयमेकं वा ज्ञानमिति विवादः। तत्र तज्ज्ञानं न प्रवर्तकमित्यनुभवबाधितम्। तदपि हेतुरित्यपि न। तस्य सत्यस्थलेऽसिद्धत्वात्। विशिष्टज्ञानापेक्षया गुरुत्वात् शब्दाभासात् प्रवृत्तौ भेदादिज्ञानाभावाच्च। एवं निवृत्तावपि।

प्रकाशः

एवं निवृत्ताविति। निवर्तकमप्यनिष्टज्ञानमेवेत्यादि पूर्ववदित्यर्थः। अन्ये त्विति। इष्टं—इच्छाविषयीकृतम्, सत्यस्थले रजतं भ्रमस्थले रङ्गादि।

न्यायशिखामणिः

पराभिमतज्ञानं तथानुभवाभावादिति भावः। विवाद इति। तथा च विवादेन क्रोडीकृतं ज्ञानद्वयमेकं वा विशिष्टज्ञानं हेतुर्भवेत् न तु तदनास्पदं पराभिमतज्ञानमित्यर्थः। एवमनुभवाविषयत्वात् विवादाविषयत्वाच्च तादृशेष्टप्रतियोगिकत्वाभावज्ञानं न प्रवर्तकम्। विशिष्टज्ञानस्य तु तद्विषयत्वात्तथात्वम्। अन्यथा तादृशानुभवः [1]पीड्येतेत्याह—तत्रेति।

तर्हि ज्ञानद्वयमपि हेतुः स्यात् विवादविषयत्वाविशेषादित्यत आह—[2]तदपीति। तस्येति। ज्ञानद्वयस्येत्यर्थः। ननु तथापि बाधकाभावविशेषितं [3]विवादविषयत्वं तत्र लिङ्गं वाच्यमित्यावश्यकत्वात् बाधकाभाव एव लिङ्गम्। तथा च पुरोवर्तिनिष्ठतया ज्ञाते यावति भेदे इष्टप्रतियोगिकत्वाभावज्ञानं तत एव प्रवर्तकमस्त्वित्यत आह—विशिष्टेति। गुरुत्वादिति। निरुक्तज्ञानस्येति शेषः। तथा च गुरुशरीरत्वरूपबाधकसत्त्वात् तदभावोऽसिद्ध इत्यर्थः। व्यतिरेकव्यभिचारादपि तन्न प्रवृत्तिहेतुरित्याह—[4]शब्दाभासादिति।

1. क. पीड्येतेत्यत आह
2. क. अत एवेति।
3. क. 'विवाद' नास्ति।
4. क. शब्दभावादिति।

अन्ये तु—इष्टवृत्तितया गृह्यमाणोऽनिष्टवृत्तितया चागृह्यमाणो धर्मः स्वाश्रये प्रवर्तक इति स च धर्मो रजते रजतत्वं रङ्गे रजतसादृश्यम्। एवं निवृत्तावपीति न युगपत्प्रवृत्तिनिवृत्ती इति।

तन्न। एवं हि इमे रङ्गरजते इति शब्दाभासात् रङ्गरजतयोः प्रवृत्तिनिवृत्ती न स्याताम्। रजतवृत्तिधर्मस्य च रङ्गे रङ्गवृत्तिधर्मस्य रजते शब्दादनुपस्थितेः। न च शब्दानन्तरं प्रत्यक्षेण तयोरुपस्थितिः, तत्र हेतुर्न शब्द इति वाच्यम्। अनन्यथासिद्धशब्दानुविधानात् इमे रजतरङ्गे इति स्वकीयं-यथार्थज्ञानमनादृत्य तत्रैवेमे रङ्गरजते इति प्रतारकवाक्ये विश्वासेन प्रवृत्तिनिवृत्तिदर्शनाच्च।

इतरे तु—रजते रजतत्वं न गृह्यते दोषात्। तथा च रजतवृत्तितया यावदुपस्थितधर्मस्य रजतत्वेन भेदाग्रहान्न प्रवर्तते। रङ्गवृत्तितयोपस्थितस्य च कस्यचिद्धर्मस्य रजतत्वेन भेदाग्रहाद्रङ्गे प्रवर्तते। एवं निवृत्तावपि। यथा तवाभेदग्रहेऽपि मानान्तरात् भेदग्रहः प्रवृत्तिप्रतिबन्धकस्तथा रजते रजतभेदग्रहेऽपि रजतवृत्तितया यावदुपस्थितस्य रजतत्वेन मम भेदग्रहः प्रवृत्तिप्रतिबन्धक इति।

---

प्रकाशः

एवमिति। अनिष्टवृत्तितया गृह्यमाण इष्टवृत्तितया च अगृह्यमाणो धर्मः स्वाश्रयान्निवर्तयति। स च धर्मो रङ्गे रङ्गत्वं रजते रङ्गसादृश्यमित्यर्थः। रजतवृत्तिधर्म-

---

न्यायशिखामणिः

इच्छेति। [1]न त्विष्टतावच्छेदकाधिकरणमिष्टशब्दार्थः, येन रङ्गवृत्ति-[2]सादृश्यमिष्टवृत्ति न स्यादिति भावः।

न च हेत्वभाव इत्यादिमणेरयमर्थः—एवं गौरवान्वयव्यभिचाराभ्यां भेदाग्रहस्य प्रसङ्गादेकदेशिसंमतस्य [3]तादृशेष्टप्रतियोगित्वाभावज्ञानस्य च प्रवर्तक-

---

1. क 'न तु' नास्ति।
2. ग. •सामान्य-
3. क. तावदिष्ट-
ग. 'तादृशेष्ट...न्यथाख्यातौ' इति ग्रन्थो नास्ति।

तन्न । एतदपेक्षया विशिष्टज्ञानस्य लघुत्वेनान्वयव्यतिरेकाभ्यां च हेतुत्वात् । न च हेत्वभावः । प्रत्यभिज्ञानवत् संस्कारेन्द्रियाभ्यां विशिष्टधीसंभवात् ।

तस्य ज्ञानद्वयत्वेऽभेदोच्छेदः, तस्य तदेकमानत्वात् । न चैकविषयत्वेन तयोः परस्परसहकारिता । नामविशिष्टनामिप्रत्यक्षे तत्तांशे च तदभावात् गौरवाच्च । न चातिप्रसङ्गः । भेदाग्रहस्यापि तद्धेतुत्वात् ।

---

**प्रकाशः**

स्येति । रजतसादृश्ये चाकचक्यादेर्विशेषस्येत्यर्थः । रङ्गवृत्तिधर्मस्य रङ्गसादृश्यस्येत्यर्थः । रजतवृत्तितयेति । वस्तुतो यद्रजतं तद्वृत्तितयेत्यर्थः ।

नन्वस्मन्मते प्रत्यभिज्ञापि ज्ञानद्वयमेव भ्रमवदित्यत आह—(तस्या इति) [तस्येति] । पूर्वोक्तदोषं निरस्यति—न चेति । नामेति । स्वमतावष्टम्भेनेदं बोध्यम् । भेदाग्रहस्येत्युपलक्षणम्, दोषस्यापीति द्रष्टव्यम् ।

---

**न्यायशिखामणिः**

त्वनिराकरणेन प्रवृत्तेरनन्यथासिद्धत्वमुपपाद्य तदुपपादनेन हेतोरप्रयोजकत्वं परोक्तं निराकृतम् । ततश्चोक्तानुमानमन्यथाख्यातौ प्रमाणमिति सिद्धम् । संप्रति यथा सत्यस्थले विशिष्टज्ञाने सामग्री मानं तथा शुक्त्यादौ सैव तत्र मानम् । न चासावसिद्धेत्याह—न च हेत्वभाव इति । एवं परपक्षं दूषयित्वा न च हेत्वभाव इत्यादिना स्वपक्षे परापादितहेत्वभावादित्यादि[1]दोषानुद्धरतीति बहवः ।

तत्तुच्छम् । 'ज्ञाने च रजतत्वानभ्युपगमा'दित्यतः प्राक्तनग्रन्थेनैव प्रमाणप्रतिपादनपरिसमाप्तौ 'एवं प्रत्यक्षमप्यन्यथाख्यातौ मानम्' इत्यग्रिमग्रन्थविरोधात् । तत्र हि यथा प्रमाणान्तरं तत्र मानं तथा प्रत्यक्षमपीत्यभिधानेन तत्पूर्वग्रन्थस्यापि प्रमाण[2]परत्वानपायात् । किं चास्य हेत्वभावलक्षणबाधकनिरासपरत्वे पौनरुक्त्यापत्तिः । '[3]तत्करणं सदोषमिन्द्रियाद्येव' इत्यनेन तस्य निरस्तत्वात् । अत एव तद्वाक्यं व्याकुर्वता प्रकाशकृता 'हेत्वभावं निरस्यति' इति

---

1. ग. घ. °दोषानुद्धियरिति
2. घ. °परत्वानवद्यायात् 3. ख. तत्कारणं
ग. 'प्रमाणपरत्वानपायात्...तत्र सामग्रीरूप' इति ग्रन्थस्त्रुटितः ।

अथ प्रत्यभिज्ञाया एकत्वेऽपि तत्तांशे न साक्षात्कारित्वम् । तत्रे- न्द्रियासंनिकर्षात् तज्ज्ञानजन्यत्वाच्च । किं तु स्मृतित्वम् । पुरोवर्त्यभेदांशे च साक्षात्त्वं स्मृतित्वमनुभूतित्वं च न जातिरव्याप्यवृत्तिर्वेति चेत्—तर्हि संस्कारादसंनिकृष्टमपि भासत इति तवाप्यनुमतम् । तथा च तवैव रीत्या प्रत्यभिज्ञानवदिदं रजतमित्येकं ज्ञानमस्तु, तत्सामग्रीसत्त्वात् । मम त्विन्द्रियजन्यत्वात् जात्यसंकराच्च साक्षात्कारित्वमेवोभयत्र ।

---

प्रकाशः

तत्रेति । तत्तांश इत्यर्थः । तज्ज्ञानेति । संस्कारद्वारा तत्तांशे सवि- कल्पकजन्यत्वात् सविकल्पकाजन्यज्ञानस्यैव परमते साक्षात्त्वादित्यर्थः । नन्वेवं स्मृतित्वसाक्षात्त्वजात्योः संकर इत्यत आह—स्मृतित्वमिति । अव्याप्येति । एकावच्छेदेनैव विरुद्धजातिसंकरस्य दोषत्वमिति भावः । मम त्विति । इन्द्रिय- त्वेनेन्द्रियजन्यत्वस्य साक्षात्कारित्वनियामकत्वात् सर्वांशेऽपि साक्षात्त्वमित्यर्थः । जातीति । गुणगतजातेरस्मन्मते व्यवस्थापितत्वात् । न चाव्याप्यवृत्तित्वम् । जातेर्व्याप्यवृत्तित्वनियमात्, विरुद्धजात्योरैकाधिकरण्यमात्रेणैव संकरस्य दोषत्वाच्च । साक्षात्त्वस्य सकलज्ञानवृत्तित्वमग्रे निराकर्तव्यमेवेति भावः ।

---

न्यायशिखामणिः

प्रागुक्तम् । तस्मादस्य ग्रन्थस्य तत्र सामग्रीरूपप्रमाणपरत्वमिति युक्तमुत्पश्यामः ।

नन्वस्मन्मत इति । तथा च प्रत्यभिज्ञानस्य विशिष्टज्ञानत्वं नोभयसंमत- मिति न तद्दृष्टान्त इति भावः । चक्षुरसंनिकृष्टतत्तादिस्थले परैर्विशिष्टज्ञानानभ्यु- पगमादाह—स्वमतेति । ननु भेदग्रहानन्तरं मा भूद्विशिष्टज्ञानम् । तद्ग्रहोत्पत्ति- काले तन्न दण्डवारितम् । तत्पूर्वं भेदाग्रहसत्त्वादित्यत आह—उपलक्षणमिति ।

नन्वनुभवत्वस्य 'अव्याप्यवृत्तिर्वा' इत्यत्र जातित्वमुक्तमयुक्तम् । तस्य सर्वमतेऽप्युपाधित्वाभ्युपगमादित्यत आह—नन्विति । साक्षात्त्वेति । तथा च मूले अनुभवत्वपदं साक्षात्त्वपरमिति भावः । तर्हि जातिसंकरस्य तस्य दोषत्वं न स्यादित्यत आह—एकेति । किमस्य ज्ञानस्य एकज्ञानत्वं निराचिकीर्षितं साक्षात्त्वं वा । तत्राद्यं निराकृत्य द्वितीयं निरस्यति [1]मम त्वित्यत्र । तदसारु । इन्द्रियजन्य-

---

1. ख. न त्वित्यत्र

ननु यो यत्साक्षात्कारः स तदिन्द्रियसंनिकर्षजन्यः। न च रजते स इहास्तीति चेत्—न। प्रत्यभिज्ञाया इन्द्रियजन्यतया साक्षात्कारित्वेन तत्तायां नाम्नि च व्यभिचारात्। संस्कारस्य स्मृतेर्वा संनिकर्षत्वाच्च।

---

प्रकाशः

स्वमतावष्टम्भेनाह—प्रत्यभिज्ञाया इति। यदि प्रत्यभिज्ञादौ संस्कारः स्मृतिर्वा प्रत्यासत्तिस्तदा प्रकृतेऽपि तथाऽस्त्वित्याह—संस्कारस्येति। न च यद्धर्मिगतत्वेन विशिष्य यद्भानं तत्रैव तज्ज्ञानजन्यसंस्कारादेः प्रत्यासत्तित्वमिति सिद्धान्तादिदमयुक्तमिति वाच्यम्। एवमपीदानीं स श्याम इत्यादावन्यथाख्यात्यागमनात् [1]तद्गतत्वभानस्याप्रयोजकत्वाच्च।

वस्तुतस्त्वसंनिकृष्टमपि दोषाद्भासत इत्यग्रे वक्ष्यमाणे तात्पर्यम्।

---

न्यायशिखामणिः

त्वस्यानुमित्यादिसाधारणत्वादित्यत आह—इन्द्रियत्वेनेति। सामानाधिकरण्यमात्रेणेति। [ऐकाधिकरण्यमात्रेणेति।] न त्वेकावच्छेदेनेत्यपि। गौरवादिति भावः। नन्वनुमित्यादेः स्वप्रकाशतया स्वांशे साक्षात्त्वं विषयांशे परोक्षत्वमिति कथं जातेर्व्याप्यवृत्तितानियम इत्यत आह—साक्षात्त्वस्येति।

ननु तथापि शुक्त्यादौ रजतत्वारोपो न सिद्ध्येदित्यत आह—तद्गतेति।

ननु ज्ञानमात्रस्य प्रत्यासत्तित्वे देवदत्तानुभवजन्यतत्तास्मृत्या यज्ञदत्तेऽपि प्रत्यभिज्ञापत्तिः। न च यद्धर्मावच्छेदेन पूर्वं यद्धर्मग्रहस्तद्धर्मग्रह एव तदुपनीतभानहेतुर्विवक्षितः। यज्ञदत्तत्वावच्छेदेन पुराननुभवाच्च नातिप्रसङ्गः। प्रकृते च चाकचक्यावच्छेदेन रजतत्वं गृहीतमिति शुक्तौ तद्ग्रहात् रजतत्वभानं न विरोत्स्यत इति वाच्यम्। यत्र चन्दने सौरभमुपलब्धं [2]तत्र तदुपनयः। अन्यत्र अनुमानात्तदवगम इति सिद्धान्तः। स एवं सति व्याहन्येत। तत्र चन्दनत्वरूपावच्छेदकाग्रहे [3]लिङ्गाग्रहः तद्ग्रहे सौरभो[4]पनयापत्तिरित्युभयथाप्यनुमानानवकाशादिति चेत्—

1. क. तद्गतमान-
2 ग. न तत्र
3. ग. लिङ्गग्रहः
4. क. ०पनयापत्तिः

न च रजतत्वप्रत्यक्षे संयुक्तसमवायस्य प्रत्यासत्तित्वेन हेतुत्वात्तं विना न तदिति वाच्यम् । तद्विशिष्टज्ञाने विशेषणज्ञानोपक्षीणत्वेन तस्याहेतुत्वात् ।

---

प्रकाशः

तस्याहेतुत्वादिति । एतच्चैकदेशिमते । वस्तुतो विशेषणसंनिकर्षस्यापि हेतुत्वमेव सामान्यतो न तु विशेषरूपेण । अत एव वह्नेरसंनिकर्षान्न वह्निप्रत्यक्षमित्यनुमानखण्डे वक्ष्यति ।

---

न्यायशिखामणिः

न । ज्ञानादिरेव प्रत्यासत्तिः, न तु तद्धर्मिगतत्वेन विशिष्य तज्ज्ञानम्, गौरवात् । अन्यथा अनुव्यवसाये घटादेरभानापत्तेः । न च बहिरिन्द्रियजोपनीतप्रत्यक्षे तथा नियम इति वाच्यम् । लाघवादेकरूपेणैव ज्ञानादेः सर्वत्र प्रत्यासत्तित्वात् । तर्ह्यतिप्रसङ्गस्य कः प्रतीकार इति चेत्—न । न तावत् यज्ञदत्तप्रत्यभिज्ञापत्तिः । तत्तायाः प्रतिव्यक्ति नानात्वेन यज्ञदत्तीयतत्तायाः पुरा देवदत्तेनाननुभूततया स्मरणाभावात् । देवदत्तीयतत्तायाश्च दोषे सति तत्रारोपस्येष्टत्वात् । [1]नाप्यनुपलब्धसौरभे चन्दनखण्डे तदुपनयापत्तिः । खण्डान्तरवृत्तिगन्धव्यावृत्तजातिविशेषवत् [2]गन्धस्यान्यात्माननुभूतत्वेन स्मरणाभावात् । अनुभूतस्य च समानजातीयगन्धस्य स्मृतिसंभवेऽपि चन्दनत्वे तद्व्याप्ति[3]स्मरणे सत्यनुमितेरेवोत्पत्तेः । अलौकिकप्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात् । अत एव पर्वते नालौकिकवह्निप्रत्यक्षमित्यनुमाने स्फुटम् । तद्व्याप्त्यस्फुरणे [4]तत्र सौरभोपलम्भस्येष्टत्वादिति ।

ननु परेण [5]ज्ञानस्य प्रत्यासत्तित्वानभ्युपगमात् तदादाय समाधानमयुक्तमित्यपरितोषादाह—वस्तुतस्त्विति ।

ननु जात्यादिप्रत्यक्षे संयुक्तसमवायस्याहेतुत्वे संनिकर्षवादविरोध इत्यत आह—एतच्चेति । तर्हि संयुक्तसमवायस्य तत्र स्वमते हेतुत्वात् शुक्तौ रजतत्व-

---

1. क. नाप्यनुपलब्धिः सौरभे
2. घ. गन्धस्यान्यत्वाननु-
3. ग. ०स्फुरणे
4. क. ग. 'तत्र' नास्ति ।
5. क. ज्ञानज्ञानस्य

प्रकाशः

अत एव ज्ञानादिरेव संनिकर्षः, यथार्थविशिष्टप्रत्यक्षे वा तस्य हेतुत्वमिति भावः।

---

न्यायशिखामणिः

प्रत्यक्षं तदभावे कथं जायेतेत्यरुचेराह—वस्तुत इति। सामान्यत इति। तस्य [1]विशेषणसंनिकर्षत्वेन हेतुत्वान्नोत्तरग्रन्थविरोधः। संयुक्तसमवायत्वेन हेतुत्वानभ्युपगमान्नान्यथाख्यातिसिद्धिविरोध इति भावः।

ननु संयुक्तसमवायस्य विशेषणसंनिकर्षत्वेन न हेतुत्वं मानाभावात्। संनिकर्षग्रन्थस्य [2]च जात्यादिविशेष्यकप्रत्यक्षे संयुक्तसमवायो विशेष्यसंनिकर्षत्वेन हेतुरित्यर्थपरत्वेनोपपत्तेर्न तद्विरोधः। तथा च तस्याहेतुत्वादित्यस्य न विशेषनिषेधपरत्वमित्यत आह—अत एवेति। न वह्निप्रत्यक्षमिति। न च वह्निविशेष्यकप्रत्यक्षमेव संनिकर्षाभावात् [3]प्रतिषिद्धमिति विशेषणसंनिकर्षहेतुत्वं परामर्शग्रन्थेऽपि न साधितमिति शक्यते वक्तुम्। पर्वतसंनिकर्षे सति स वह्निमानिति प्रत्यक्षस्य दुर्वारत्वात्। न चेष्टापत्तिः। रूपवन्तं घटं पश्यामीतिवत् वह्निमन्तं पर्वतं पश्यामीत्यनुव्यवसायापत्तेरिति भावः।

किं च ज्ञानं प्रत्यासत्तिः संस्कार इति च तत्र तत्र व्यवस्थापितम्। तच्च विशेषणसंनिकर्षस्य [4]हेतुत्वे संगच्छते। बहिरिन्द्रियजन्योपनीतविशेष्यकप्रत्यक्षाभावेन [5]विशेष्यसंनिकर्षादित्यशक्यशङ्कत्वादित्याशयेनाह—अत एवेति। यद्वा —ननु विशेषणसंनिकर्षस्य सामान्यतो हेतुत्वे शुक्तौ कथं रजतत्वप्रत्यक्षम् तत्र संयुक्तसमवायस्याभावादित्यत आह—अत एवेति। ज्ञानादिरिति॥ संस्कारस्य स्मृतेर्वेत्यत्रोक्त इति शेषः।

ननु तस्याहेतुत्वादित्यस्य विशेषहेतुत्वनिषेधपरत्वे तस्य सामान्यतस्तद्धेतुत्वाभ्युपगमापत्तौ विशेष्येन्द्रियसंनिकर्षादिविशिष्टप्रत्यक्षकारणाभिधायके किं

---

1 घ. 'विशेषणसंनिकर्षत्वेन' 'जात्यादिविशेष्यकप्रत्यक्षे संयुक्तसमवायः' इति ग्रन्थस्त्रुटितः।

2. ग. न

3. क. प्रतिबद्धमिति।

4. घ. हेतुत्वे संगच्छते....यद्वा ननु विशेष्यसंनिकर्षस्य' इति ग्रन्थस्त्रुटितः।

5. क. विशेष्यसंनिकर्ष .. ज्ञानादिरीत्याशङ्कयशङ्कत्वात्

न हि विशिष्टधीसामग्रीसत्त्वे तेन विना तद्विलम्बः ।

किं च विशेषणज्ञानं विशेष्यसंबन्धस्तयोरसंसर्गाग्रह इति प्रत्यभिज्ञासत्यप्रत्यक्षसाधारणस्य विशिष्टप्रत्यक्षहेतोर्भ्रमेऽपि संभवात् । रजतसाक्षात्कारे रजतसंयोगस्य हेतुत्वेऽपि विशेष्यसंनिकर्षत्वेन हेतुता, न तु रजतसंयोगत्वेन । यत्सामान्ये यत्सामान्यं हेतुस्तद्विशेषे तद्विशेषस्य हेतुत्वनियमात् ।

---

**प्रकाशः**

ननु सत्यस्थले रजतसाक्षात्कारे रजतेन्द्रियसंयोगो हेतुर्दृष्ट इत्यत आह—रजतसाक्षात्कार इति । सत्यस्थल इति शेषः । [1]भ्रमरूपरजतसाक्षात्कारे च रजतं विशेषणमिति न तदिन्द्रिय[2]संयोगोऽपेक्षणीयः, शुक्त्यादि तु यत्र विशेष्यं

---

**न्यायशिखामणिः**

चेत्यग्रिमग्रन्थे विशेषणसंनिकर्षाभिधानापत्तिः । किं चैवं विशेषणविशेष्येन्द्रियसंनिकर्षे गौरवमित्यादि यथार्थविशिष्टप्रत्यक्षे कारणमिति परामर्शग्रन्थविरोधः । अपि च ज्ञानस्य परैः प्रत्यासत्तित्वानभ्युपगमात् तदादाय समाधानमयुक्तमित्यपरितोषादाह—यथार्थेति । तथा च तस्येति ग्रन्थस्य यथार्थविशिष्टप्रत्यक्षा[3]दन्यत्राहेतुत्वपरत्वान्नोक्तदोषः । 'असंनिकृष्टमपि दोषाद्भासत' इति वक्ष्यमाणत्वान्न भ्रमानुपपत्तिरिति भावः ।

यद्वा संयुक्तसमवायस्य विशेषरूपेण हेतुत्वेऽपि नायथार्थप्रत्यक्षानुपपत्तिः । जातिगुणादिप्रत्यक्षत्वस्याननुगमेन जन्यतानवच्छेदकतया संयुक्तसमवेतप्रत्यक्षत्वस्यैव [4]तथावश्यवाच्यत्वेन तस्य यथार्थजात्यादिविशिष्ट[5]प्रत्यक्ष एव हेतुत्वपर्यवसानादित्याह—यथार्थेति । तथा चास्मिन् पक्षे संयुक्तसमवेतप्रत्यक्षादन्यत्र संयुक्तसमवायस्याहेतुत्वादिति मूलार्थो बोध्यः ।

दृष्ट इति । तथा च तदभावाच्छुक्तौ रजतसाक्षात्कारो न स्यादिति भावः । सर्वत्र रजतसाक्षात्कारस्थले तद्धेतुत्वादर्शनादाह—सत्येति । तथा च

---

1. ख. तथा च भ्रमरूप-
2. ख. °संयोग उपेक्षणीयः
3. ग. °दन्यत्र हेतुत्व-
4. क. यथावश्य-
5. घ. °प्रत्यक्षहेतुत्व-

संयोगस्य विशेष्यभानसामग्र्यन्तरितत्वेनान्यथासिद्धतया विशेषसामग्र्यन्तराकल्पनात् गौरवाच्च। प्रत्यक्षहेतुत्वेन क्लृप्तविशेष्यसंबन्धादेव तदुपपत्तेः।

---

**प्रकाशः**

तत्संयोगोऽस्त्येवेत्यर्थः। नन्वेवं अरजतसंनिकर्षेऽपि रजतप्रत्यक्षं स्यात् विशेष्यसंनिकर्षत्वावच्छिन्नसंत्त्वादिति तत्र रजत(संयोगित्वमेव) [संयोगत्वेन]विशेषसामग्र्यन्तरं कल्प्यमित्यत आह—यत्सामान्य इति। तथा च तद्विशेष्यकप्रत्यक्षे [1]तद्विशेष्यसंनिकर्षो हेतुर्वाच्यः। तेन नोक्तातिप्रसङ्गः। अन्यथा [2]अन्यरजतसंयोगेनान्यरजतप्रत्यक्षं स्यादिति भावः।

एतावतैवोपपत्तौ रजतसंयोगत्वेनापि विशेषसामग्र्यन्तरं न कल्प्यं गौरवादित्याह—संयोगस्येति। गौरवमेव स्पष्टयति—प्रत्यक्षेति।

---

**न्यायशिखामणिः**

सत्यस्थले संयोगस्य हेतुत्वे दृष्टेऽपि इति मूलार्थः। ननु यत्र भ्रमे रजतं विशेष्यं तत्र तत्संयोगापेक्षा स्यादित्याशङ्क्य न तावद्रजतविशेष्यके तदपेक्षा, बहिरिन्द्रियजारोप्यविशेष्यकभ्रमानभ्युपगमात् इत्याह—भ्रमरूपेति। बहिरिन्द्रियजेति शेषः। तथा च रजतविशेषणकभ्रमे[3] विशेष्येन्द्रियसंयोगापेक्षा वाच्या। तत्र च तादृशशुक्तिसंयोगसत्त्वेनेष्टापत्तिरित्याह[4]—शुक्त्यादि त्विति।

नन्वस्य न तज्ज्ञानविशेष्यसंनिकर्षत्वेन विशिष्टप्रत्यक्षहेतुत्वम् अननुगमात्। किं तु विशेष्यसंनिकर्षत्वेन। तथा चातिप्रसङ्ग इति शङ्कते—नन्विति। यदि च तत्सत्त्वेऽपि विशेषसामग्रीविरहान्नातिप्रसङ्गस्तदापि रजतसंयोगस्तत्र विशेषसामग्री कल्प्यताम् विनिगमनाविरहादित्यत आह—[5]तत्रेति।

ननु रजतसंयोगस्यापि विशेष्यसंनिकर्षविशेषत्वात् तत्रापि यत्सामान्य इति न्यायः समान इत्याशङ्क्य, अग्रे तस्य गौरवेण विशेषहेतुत्वनिराकरणादस्य च तत्त्वे लाघवमप्यभिमतम्। तत्र चावश्यकत्वरूपे तात्पर्यमित्याह—तथा चेति।

---

1. ख. तद्विशेष्यक-
2. ख. अन्यतरसंयोगेन
3. घ. °भ्रम एव
4. ग. रित्यत आह
5. क. इति तत्रेति।

अपि च प्रवृत्तौ स्वतन्त्रोपस्थितेष्टभेदाग्रहकारणत्वापेक्षया रजतसाक्षात्कारे विशेष्यसंनिकर्षत्वेन हेतुत्वस्य लघुत्वात् ।

---

प्रकाशः

अपि चेति । नन्विदं गौरवाभिधानं व्यधिकरणमिति चेत्—न । रजतसाक्षात्कारे तत्संयोगस्य विशेष्यसंनिकर्षत्वेन हेतुतां कल्पयित्वा प्रवृत्तौ विशिष्टज्ञानं कारणं कल्प्यताम्, ([1]उतात्र)[उत तत्] संयोगत्वेन कारणतां कल्पयित्वा उक्तभेदाग्रहस्य कारणता कल्प्यताम् । आद्ये लाघवम्, अन्त्ये गौरवमित्यर्थ इत्याहुः ।

---

न्यायशिखामणिः

ननु संयोगस्यान्यथासिद्धिगौरवाभ्यां हेतुत्वं निराकृतमयुक्तम् । विशेष्यसंनिकर्षत्वरूपेण सामान्यकारणस्यापि विशेषकारणत्वे विरोधाभावादित्याशङ्क्य तत्रापि गौरव एव तात्पर्यमित्याह—एतावतेति । आवश्यकतद्विशेष्य(क)संनिकर्षेणैवात्रातिप्रसङ्गनिरासोपपत्तावित्यर्थः । गौरवादिति । आवश्यकत्वादित्यर्थः । स्पष्टयतीति । तथा चोभयोरपि भावत्वात् कथमस्य गौरवमित्यस्पष्टता [2]निराकृता वेदितव्या । व्यधिकरणमिति । एकस्मिन् कार्ये कारणद्वयप्रसक्तौ हि यत्र लाघवं तदुपादेयम् । प्रकृते च प्रवृत्तिविशिष्टज्ञानरूपकार्ययोर्भेदाग्रह[3]विशेष्यसंनिकर्षयोरेककार्यत्वाभावादिति भावः । रजतसाक्षात्कार इति । सप्तम्यन्तस्य षष्ठ्यन्तत्वेनापि विपरिणामोऽभिमतः । तथा च प्रवृत्तौ तस्य हेतुता । तत्र च विशेष्यसंनिकर्षस्य तत्त्वेन हेतुत्वम्, भेदाग्रहत्वसंयोगत्वापेक्षया तयोर्लघुत्वादिति मूलार्थ इत्याह—रजतेति ।

[4]वस्तुतस्तु—विशेष्यसंनिकर्षस्य विशेषतो रजतसंयोगत्वेन विशिष्टप्रत्यक्षहेतुत्वाभावेऽपि सामान्यतो विशेष्यसंनिकर्षत्वेनैव हेतुत्वम्, न तु तज्ज्ञानविशेष्यसंनिकर्षत्वेन, तस्यापि विशेषरूपत्वे गुरुत्वात् । तथा च रजतस्यापि क्वचिद्विशेष्यत्वात् तत्संयोगापेक्षा स्यादित्यत आह—अपि चेति । प्रवृत्ताविति । भेदाग्रहापेक्षया लाघवात् प्रवृत्तौ कारणतया रजतत्वविशिष्टसाक्षात्कारे सिद्धे

---

1. ख. उत्तरत्र
2. क. निराकृतेति
3. ग. 'विशेष्य' नास्ति ।
4. क. 'वस्तुतस्तु' इत्यतः पूर्वं 'अन्ये तु' इत्यधिकपाठः ।

वस्तुतस्तु—दोषाद्भ्रम इत्युभयसिद्धम्, तत्र भ्रमो नासंसर्गग्रहाभावः। तस्याधिकरणरूपत्वे असाध्यत्वात्। तज्ज्ञानरूपत्वे च तस्य प्रमात्वेन दोषाजन्यत्वात्। भ्रमस्थानाभिषिक्तप्रमा दोषजन्यैवेति चेत्—न। तस्याः क्लृप्तसामग्र्यन्तरजन्यत्वादिति भ्रमोऽसत्यज्ञानमित्यसंनिकृष्टमपि दोषात् भासत इत्यभ्युपेयम्। अपि च दोषस्य विशिष्टमेव ज्ञानं

---

**प्रकाशः**

उभयेति। न च दोषाः प्रकृतकार्यप्रतिबन्धकाः न तु विपरीतकार्यजनका इत्यनेन विरोध इति वाच्यम्। तस्य विशिष्टज्ञानं न [1]दोषादित्येवंपरत्वादित्येके। मतान्तरेणैव तदुक्तमित्यन्ये। इत्यभ्युपेयमिति। एवं चैतन्मते विशेषणसंनिकर्षस्य यथार्थप्रत्यक्षं प्रति हेतुत्वमिति ध्येयम्। ननु दोषो न भ्रमस्वरूपे हेतुः, किं तु तज्जन्यविसंवादि[2]प्रवृत्तावित्यत आह—अपि चेति। यद्यपि न्यायनये प्रवृत्तौ न दोषहेतुत्वम्, तथापि परपरीत्यैतदुक्तम्। तद्धेतुत्वस्येति। सत्यस्थले प्रवृत्तिमात्रं प्रतीष्टपुरोवर्तिविशिष्टज्ञानस्य हेतुत्वकल्पनादित्यर्थः। न चेति। न

---

**न्यायशिखामणिः**

सति तदनुरोधात्तत्र विशेष्यसंयोगस्य [3]तज्ज्ञानविशेष्यसंनिकर्षत्वेनैव हेतुता। तथा च फलमुखं गौरवं न दोष [4]इति मूलार्थो बोध्यः।

दोषाद्भ्रम इति प्रसिद्धिरप्यन्यथाख्यातौ मानमित्युक्तं वस्तुतस्त्वित्यत्र। [5]तद्विरोधमाशङ्क्य निषेधति—न चेति। ननु तस्य विशिष्टज्ञानं [6]न दोष इत्यर्थपरत्वे तदतिरिक्तविपरीतकार्यं [7]दोषादित्युक्तं स्यात्। तच्चायुक्तम्। 'न हि दुष्टात्कुटजबीजाद्यवाङ्कुर' इति ग्रन्थविरोधादित्यस्वरसादाह—मतान्तरेणेति। नन्वेवं विशेषणसंनिकर्षहेतुत्वव्यवस्थापकोत्तरग्रन्थविरोध इत्यत आह—एवं चेति।

[8]ननूक्तप्रसिद्धिर्नासत्यज्ञानसाधिका, विसंवादिप्रवृत्तिजनकज्ञानद्वयमादाय

---

1. ख. दोषत इत्येवं-
2. क. ०प्रसक्तावित्यत
3. ग. तज्ज्ञानविशिष्ट-
4. क. इति भाव इत्याहुः।
5. घ. तत्र विरोधम्
6. क. न दोषपरत्वे
7. क. दोषादित्यर्थः स्यात्
8. क. ननूक्तप्रसिद्धिर्न सत्य-

व्यापारः, प्रवृत्तौ तद्धेतुत्वस्य क्लृप्तत्वात्। न च भेदाग्रहः, कल्पनीयकारणभावत्वात्। यत्तु दुष्टात्कार्यं नेति तत्र बीजेन्द्रियसाधारणं न दुष्टत्वमेकमस्ति।

एवं प्रत्यक्षमप्यन्यथाख्यातौ मानं कारणबाधाभावात्। तथा हि—इदं रजततया जानामीत्यनुव्यवसायसाक्षिकमेवान्यस्यान्यथा भानम्। न हि विषयत्वेऽनुव्यवसायादन्यत् प्रमाणम्। न ह्यतद्विषयस्तज्ज्ञानविषयत्वेन न वा तदविषयकं तद्विषयकत्वेनानुव्यवसीयते। अनुव्यवसायस्य प्रमात्व-

---

प्रकाशः

त्वित्यर्थः। नैकमिति। तथा च दुष्टबीजाद्विपरीतकार्यानुदयेऽपि तादृशेन्द्रियात्तत्स्यादेव, बीजेन्द्रियदोषयोर्भेदादित्यर्थः।

एवमिति। अन्यथाख्यातिसत्त्वे दर्शिते [1]तद्धेतोः दुष्टकारणस्य सत्त्वात् कारणबाधाभावादित्यर्थः। इदं रजततयेति। न चैतादृशानुव्यवसायस्वीकारे

---

न्यायशिखामणिः

तदुपपत्तेरित्याशङ्क्य, किं दोषस्तादृश[2]ज्ञानद्वये हेतुरुत तद्विशेषणीभूतविसंवादिप्रवृत्तौ। तत्राद्यं भ्रमस्थानेत्यत्राशङ्क्य निराकृतम्। द्वितीयं शङ्कते—नन्विति। भ्रमस्वरूप इति। विसंवादिप्रवृत्तिजनकज्ञानद्वय इत्यर्थः।

नन्विन्द्रियं न विपरीतकार्यजनकं [3]दुष्टत्वात् दुष्टबीजवदिति पूर्वपक्ष्यभिप्रेतमनुमानं बीजेन्द्रियदोषयोर्भेदादयुक्तमित्युक्तं यत्त्वित्यत्र। तदचारु। भेदेऽपि धूमवत्सामान्यधर्मपुरस्कारेण तत्र व्याप्यत्वग्रहसंभवादित्यत आह—तथा चेति। भेदादिति। दोषत्वरूपानुगतधर्माभावादित्यर्थः। तथा च बीजेन्द्रियगतदोषसाधारणमेकं दोषत्वं नास्तीति मूलार्थः। ततश्चानुगतव्याप्यतावच्छेदकाभावान्नोक्तानुमानावकाश इति भावः।

एवंशब्दस्योक्तप्रमाणसमुच्चयार्थत्वे अपिशब्दवैयर्थ्यमित्यतोऽन्यथा व्याचष्टे—अन्यथाख्यातीति। [4]दर्शित इति। अनुमानेनेति शेषः। एतेन प्रत्यक्षस्य

---

1. ख. ततो
2. ग. ज्ञानहेतुः
3. क. दोषात्
4. ग. दर्शयतीति।

नियमात्। अन्यथा घटज्ञानेऽपि कदाचित्पटं जानामीति स्यात्। न च भेदाग्रहदशायां रजतज्ञानविषयत्वासंसर्गाग्रहः। शुक्तौ भेदग्रहेऽपि शुक्ती रजतत्वेन मया ज्ञाता शुक्तौ रजतज्ञानं मे वृत्तमित्यनुव्यवसायात्।

---

प्रकाशः

स्वतःप्रामाण्यापत्तिरिति वाच्यम्। वैशिष्ट्यस्य स्वातन्त्र्येणाभानादित्युक्तत्वादिति भावः। न च भेदेति। शुक्तौ भेदाग्रहदशायामित्यर्थः। तथा च शुक्तौ रजतत्वासंसर्गाग्रहो (यत्तत्र)[यत्र तत्र] रजतज्ञानविषयत्वासंसर्गाग्रहात्तथा व्यवहार इति भावः।

अथ विचारेति। सति विचारे तादृशानुव्यवसायोऽसिद्ध इति भावः। इदमिति। रजतत्वासंसर्गाग्रहेण शुक्तौ रजतव्यवहारवत् उक्तज्ञानासंसर्गाग्रहात्

---

न्यायशिखामणिः

ज्येष्ठत्वात् [1]तत्कथमनुमानात्प्राङ्नोक्तमित्यपास्तम्। अस्यान्यथाख्यातिसाधनायानुमानसापेक्षत्वात्।

नन्वस्त्वयमेवंशब्दार्थः ततः किमित्याशङ्क्य, विशेषणसंनिकर्षबाधात् बाधितं विशिष्टज्ञानमित्यनुव्यवसायरूपमपि प्रत्यक्षं ज्ञानद्वयमेवेत्याशङ्कां वारयितुं कारणबाधाभावादिति यदुक्तं तदनेन समर्थितमित्याह—तत इति। तदनुपपत्त्या दुष्टकारणस्याक्षेपादिति भावः।

नन्विदं रजततया जानामीति व्यवहारस्य सत्यस्थलीयव्यवहारात् स्वरूपतो वैलक्षण्याभावात् अत्रापि विशिष्टानुव्यवसायः स्यादित्याशङ्क्य [2]विषयविसंवादसंवादवैलक्षण्यसत्त्वाद्युक्ता विलक्षणहेतुकतेत्येतत् सदृष्टान्तमाह—तथा चेति।

ननु विशिष्टज्ञानाप्रसिद्धावपि रजतज्ञानासंसर्गाग्रहादात्मनि विशिष्टव्यवहारः स्यादित्याशङ्क्य, किं रजतज्ञानस्य आत्मन्यसंसर्गाग्रहात्तत्र विशिष्टवैशिष्ट्यव्यवहारः, उत इदन्त्वरजतत्वप्रकारकज्ञानस्य, आहोस्वित् ज्ञानद्वयस्य। नाद्यः, तावता रजतं

---

1. क. ग. 'तत्' नास्ति।
2. ग. घ. विसंवादाविसंवादावैलक्षण्य-

अथ विचारसाध्यासंसर्गग्रहबाध्योऽयमसंसर्गाग्रहः, तेन विचारं विना भेदग्रहेऽप्यवतिष्ठत इति चेत्—न। इदं रजततया जानामीत्यत्र शुक्तिकर्मकरजतत्वप्रकारकज्ञानासंसर्गाग्रहस्यात्मन्यसंभवात् तादृशज्ञानाप्रसिद्धेः।

न चेदं जानामीति रजतं जानामीति तदाकारः, तृतीयार्थस्य प्रकारत्वेन प्रकारिणोऽभानेऽभानप्रसङ्गात्।

---

**प्रकाशः**

आत्मनि तथा (व्यवहारो भावी)[व्यवहाराभावः]। तस्य च तादृशज्ञानाप्रसिद्ध्या असिद्धेः, तत्प्रसिद्धौ वा पर्यवसितं विवादेनेति भावः।

ननूक्तविशिष्टज्ञानासंसर्गाग्रहो नात्मनि, किं तु इदंविषयकग्रहणस्य रजतविषयकस्मरणस्य [1]चासंसर्गाग्रहः, तद्वैशिष्ट्यज्ञानमेव [2]वा तत्रेत्यत आह—न चेति। तथा सत्येतदाकारोऽनुव्यवसायः स्यादित्यर्थः। प्रकारिण इति। पुरोवर्तिविशेष्यकमेव ज्ञानं प्रकारि, तत्रेदन्त्वरजतत्वे प्रकारौ। तथा च प्रकारिणोऽभाने इदन्तया रजततया च प्रकारभानमसंगतम्। अतोऽस्त्येव तज्ज्ञानं यत् रजतत्वेनानुव्यवसीयत इत्यभ्युपेयमित्यर्थः।

---

**न्यायशिखामणिः**

जानामीति व्यवहारापत्तेरित्यभिप्रेत्य द्वितीयं निराकरोति—रजतत्वेति। तृतीयं शङ्कते—नन्विति।

नन्वात्मनः प्रकारिणो भानाभ्युपगमात् अभान इत्यसंगतमित्याशङ्क्य इदन्त्वरजतत्वप्रकारापेक्षया प्रकार्यभिमतम्। तच्च विशिष्टज्ञानमेव न तु ज्ञानद्वयमित्याह—पुरोवर्तीति। नन्विदन्त्वप्रकारकरजतत्वप्रकारकज्ञानवानहमिति व्यवहारः सर्वधीयाथार्थ्यमते सर्वांशेऽपि न, विसंवादिरजतज्ञानस्यात्मनि सत्त्वात् किं तु तज्ज्ञान [3]इदन्त्वप्रकारकत्वासत्त्वात् तदंश एव। तत्र चेदन्त्वप्रकारकज्ञानभेदाग्रहः कारणमस्त्येवेति कथं तादृशव्यवहारानुपपत्तिरिति चेत्—न। यस्य विशिष्टस्य यत्र वैशिष्ट्यज्ञानात् न्यायमते विशिष्टवैशिष्ट्यव्यवहारः स परमते तस्य

---

1. क. च संसर्गाग्रहः
2. क. नेत्यतः
3. ग. इदन्त्वप्रकारतासत्त्वात्

विशिष्टज्ञानं च सर्वत्र विशेषणविशेष्यीयमित्यन्यथाभानमपि तथा। ज्ञाने रजतत्वानभ्युपगमाद्विशेषणविशेष्यविषयकत्वाच्च न साकारवादः।

यत्तु ज्ञानमिथ्यात्वे बाध्यबाधकव्यवस्था न स्यादविशेषादिति। तन्न। अनन्यथासिद्धाया धियो बाधकत्वात्। तथा हि यत्र दुष्टादुष्टेन्द्रियजन्यं परस्परनिरपेक्षमेकत्र विरुद्धं ज्ञानद्वयमुत्पद्यते, तत्र प्रथममनुपजातविरोधित्वान्नानागतं बाधते, तस्याप्राप्तत्वात्। उत्तरं तु स्वकारणादुत्पद्य-

---

प्रकाशः

संविद्विरोधं परिहरति—विशिष्टेति। साकारवादं परिहरति—ज्ञान इति। सौगतमते ज्ञानीयमेव रजतत्वं ज्ञानविषयो न तु बाह्यम्, अत्र तु न तथेति भावः। अविशेषादिति। परस्पर[1]विरुद्धार्थत्वाविशेषादित्यर्थः। अनन्यथासिद्धाया इति। अप्रामाण्यशङ्काशून्याया इत्यर्थः।

---

न्यायशिखामणिः

विशिष्टस्य तत्रासंसर्गाग्रहाद्भवतीत्यभ्युपेयम्। अन्यथा प्रत्येकप्रसिद्धतदसंसर्गाग्रहमात्रेण विशिष्टवैशिष्ट्यव्यवहारोपपादने शशीयत्वविषाणोल्लिखितत्वादीनां प्रत्येकं प्रसिद्धतया विषाणे शशीयत्वासंसर्गाग्रहाच्च शशीयविषाणोल्लिखिता भूरिति [2]व्यवहारापत्तेः। [3]तथा चासत्यस्थलीयविशिष्टज्ञानवैशिष्ट्यव्यवहारो न धर्मिज्ञानासंसर्गाग्रहात् समर्थयितुं शक्यः। ततश्च विशिष्टवैशिष्ट्यज्ञानादेव स उपपादनीय इत्यभिप्रायेणोपसंहरति—अत इति।

अन्यथाख्यातिसाधक[4]प्रमाणपरपूर्वग्रन्थैकवाक्यत्वाभावात्तत्र परोक्तबाधकनिराकरणपरतया व्याचष्टे—संविद्विरोधमिति। अत्र त्विति। न्यायमते तु बाह्यं व्यवहितमपि दोषाद्भासत इति न बौद्धमतप्रवेशः। यत्किंचित्सामान्येन तदापादने सर्वसिद्धान्तसंकर इति भावः।

संशयोत्तरपुरुषभ्रमस्यापि बाधकत्वात् प्रामाण्यं नान्यथासिद्धशब्दार्थः। नापि निश्चितप्रामाण्यम्, स्वतस्सिद्धशङ्काविरहदशायां ज्ञानस्य बाधकत्वानुपपत्तेरित्यतोऽन्यथा व्याचष्टे—अप्रामाण्येति।

---

1. ख. ॰विरुद्धत्वा-
2. ग. घ. व्यवहारोपपत्तेः
3. ग. तथा च सत्य-
4. क. प्रमाणपूर्वग्रन्थ-

मानमुपजातविरोधितया नानुपमृद्य पूर्वमुत्पत्तुमर्हतीति पूर्वं बाधात्मकमुत्पद्यते अन्यथा नोत्पद्येतैव । न चैवमेवेति वाच्यम् । अनुभवविरोधात् । यदाहुः—

'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयते ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥'

इति । यत्र पूर्वापेक्षमुत्तरं ज्ञानमुत्पत्तुमुन्मुखं तत्रोपजीव्यपूर्वविरोधेनोत्तरं नोत्पद्यते । अतोऽजातं सत्पूर्वं कथं बाधताम् । यथा प्रत्यक्षादिविरुद्धानुमितिः ।

प्रकाशः

यथा प्रत्यक्षादीति । [यथा] अनौष्ण्यज्ञानस्य औष्ण्यज्ञानसापेक्षत्वाद्वह्न्यौष्ण्यप्रत्यक्षानन्तरमनौष्ण्यानुमितिर्न भवतीत्यर्थः । यद्यप्येवं रजतज्ञानानन्तरं नेदं रजतमिति बाधकज्ञानमपि नोत्पद्येत, तस्यापि तत्सापेक्षत्वात् । तथाप्यप्रामाण्यशङ्का-

न्यायशिखामणिः

ननु [1]पूर्वनिरपेक्षमुत्तरं विरुद्धार्थावगाहिज्ञानं बाधकमित्येतदभियुक्तसंमत्या दृढीकृत्य निरपेक्षपदप्रयोजनाय पूर्वसापेक्षमुत्तरं न बाधकमिति सदृष्टान्तमुपपादितं यत्र पूर्वेत्यादिना । तदयुक्तम् । [2]पीतिमप्रत्यक्षानन्तरमपि तत्त्वानुमित्युत्पत्तेरित्याशङ्क्य क्वाचित्काभिप्रायेण व्याचष्टे—अनौष्ण्येति ।

ननु बाध्यत्वाभिमतज्ञाननिरपेक्षविरोधिज्ञानत्वं बाधकत्वप्रयोजकं न तूत्तरत्वमपि प्रवेश्यम् । यदनेन बोध्यं तदसदिति वाक्यजन्यज्ञानस्य पूर्वस्यापि बाधकत्वात् । एवं च यत्र भ्रमे [3]बाधस्तद्बाधके च तदभावो विषयस्तत्र तयोर्विपरीतो बाध्यबाधकभावः स्यादिति शङ्कते—यद्यपीति । नोत्पद्येतेति । यद्यपि 'भ्रमत्वबुद्धिरेव' बाध इत्यग्रे विभावनादत्र तद्बुद्धिरेवापादनीया नानुत्पत्तिः, तथाप्यग्रे [4]बाधनिरूपणम् उत्पन्नज्ञानाभिप्रायम् । अनागतज्ञानस्य [5]त्वनुत्पत्तिरेव बाधः ।

1. ग. पूर्वनिरपेक्ष्योत्तरं
2. ग. घ. पीतप्रत्यक्षा-
3. क. ग. भाव:
4. क. 'बाघ' नास्ति ।
5. क. त्वनुत्पत्तेरेव

ननु भ्रमस्य किं बाध्यते। न स्वरूपं तस्य सत्त्वात्। नापि रजतत्वप्रकारकत्वं शुक्तिविषयकत्वं वा, तयोरपनेतुमशक्यत्वात्। जातं हि तद्रजतत्वेन शुक्तिं विषयीकृत्य। नापि व्यवहारः, प्रवृत्त्यादेर्वृत्तत्वात्। नाप्यनागतव्यवहारजनकत्वम्, तस्य कारणाभावादेवासंभवात्।

---

**प्रकाशः**

स्कन्दितत्वं बाध्यत्वप्रयोजकं, [1]तदनास्कन्दितविरुद्धज्ञानस्यैव बाधकत्वम्। अत एव शङ्खे पीतप्रत्यक्षविरुद्धाप्यपीतत्वानुमितिरुत्पद्यते। अत एव दुष्टेन्द्रियजन्यरजत-

---

**न्यायशिखामणिः**

अन्यथा बाधकज्ञानानन्तरं तदुत्पत्त्यापत्तेरिति भावः। **अप्रामाण्येति**। यद्यप्येवं सति **तथा हीति** ग्रन्थवैयर्थ्यम्, विवक्षितस्य बाधकत्व[2]प्रयोजकस्यानन्यथासिद्धाया इत्यनेनैवोक्तत्वात्। न हि तदर्थासंस्पर्शिनानेन सोऽर्थः स्पष्टीकृतः, येन सार्थक्यं स्यात्। तथापि कीदृशं ज्ञानमप्रामाण्यशङ्काशून्यमित्याकाङ्क्षायां प्रायेण पूर्वनिरपेक्षोत्तर[3]विरुद्धज्ञानं [4]तादृशमित्यर्थपरत्वादिति ध्येयम्।

ननु प्रत्यक्षानुमित्योः [5]सापेक्षविरुद्धज्ञानं यत्तद्बाध्यम्, यन्निरपेक्षं तद्बाधकमित्येतत् **यथा हीत्यादिना** विवक्षितम्। **अन्यथासिद्धाया** इत्यनेन तु प्रत्यक्षयोर्मध्ये यद्विशेषदर्शनजन्यं तद् बाधकं [6]यद्विशेषदर्शनाजन्यं तद्बाध्यमिति विवक्षितम्। अत एवोत्पत्तिप्रामाण्यवादे अनन्यथासिद्धं बाधकमिति चेत्—न। विशेषदर्शनजन्यत्वस्य तदर्थत्वा[7]दित्यनन्यथासिद्धशब्दो ग्रन्थकृतैव व्याख्यातः। तथा च नेदं रजतमिति ज्ञानस्य तत्सापेक्षत्वेऽपि विशेषदर्शनजन्यत्वाद्बाधकत्वमित्यत आह—**अत एवेति**। ननु [8]भवतूक्तविधया प्रत्यक्षानुमित्योर्बाध्यबाधकभावस्तथापि विशेषदर्शनजन्यं प्रत्यक्षं [9]तदजन्यप्रत्यक्षस्य बाधकमित्यत्र किमा-

---

1. ख. तदनास्कन्दिताविरुद्ध-
2. ग. घ. 'प्रयोजक' नास्ति।
3. ग. 'विरुद्ध' नास्ति।
4. घ. न तादृश-
5. ग. घ. यत्सापेक्षं
6. घ. यत्तदर्शनजन्यं
7. ग. °दित्यन्यथा-
8. क. भवतोक्त-
9. घ. तददर्शनजन्य-

उच्यते। बाधकेन भ्रमस्य भ्रमत्वबुद्धिरेव बाधः। यत्तु धियामयथार्थत्वे कथमाश्वास इति। तन्न। प्रामाण्यग्रहोपायस्य दर्शितत्वात्। सत्यत्वनियमेऽपि सदसंसर्गाग्रहस्यागृहीतासंसर्गस्य ज्ञानद्वयस्य च बहुषु दर्शनात्कथमाश्वासः।

अथ सदसंसर्गाग्रहस्य प्रतिसन्धानं विलम्बितम्। सद्विषयत्वं च शीघ्रोपस्थितमित्यौत्सर्गिकसद्विषयत्वज्ञानाद्विश्वासः। यत्र तु कदाचित्संशयस्तत्र ज्ञानान्तरादेव संशयनिवृत्तिरिति चेत्—ममाप्यौत्सर्गिकं धियां सत्यत्वं बाधकेनापनोद्यत इति तदनवतारात् सत्यत्वविश्वासः।

किं च तव ज्ञानान्तरेऽप्यविश्वासः। विशेषदर्शनाद्विश्वासस्तुल्य एव। यथा च तत्रापि न संदेहस्तथोक्तं परतःप्रामाण्ये।

---

प्रकाशः

ज्ञानादेर्विशेषदर्शनादिना अप्रामाण्यशङ्कानन्तरमेव बाधकज्ञानोदयो नान्यथेति भावः। भ्रमत्वबुद्धिरिति। भ्रमत्वनिश्चय इत्यर्थः।

किं च तवेति। मम बाधकानवताराादेव ज्ञाने विश्वासः, तव तु ज्ञाने (प्रवृत्ते)[वृत्ते]तत्रौत्सर्गिकसद्विषयत्वज्ञानाद्विश्वास इत्यभ्युपगमेन सद्विषयत्वज्ञाने तत्र

---

न्यायशिखामणिः

यातम्। [1]युक्तं चैतत्। न त्वप्रामाण्यशङ्काशून्यं तदास्कन्दितस्य बाधकम्। तथा सति शङ्काविरहदशायां भ्रमस्यापि बाधकत्वापत्तौ तस्मिन् सति विशेषदर्शनात् बाधकज्ञानोदयो न स्यादित्यत आह—अत एवेति। शङ्कानन्तरमेवेति। तथा च तद्विरहसमये बाधकज्ञानानुदयप्रसङ्ग इष्ट एव। प्रत्युत विशेषादर्शनजन्यस्य स्वरूपत एव बाध्यत्वे स्वतस्सिद्धशङ्काविरहे प्रामाण्यभ्रमे वा [2]बाधकज्ञानोत्पत्तिप्रसङ्ग इति बोध्यम्।

ननु स्वमते [3]विशेषाभावाचवेत्युक्तिरयुक्ता। किं च तन्मते स्वत एव विश्वासाभ्युपगमात् ज्ञानान्तरस्यैवाप्रसङ्ग इत्यत आह—ममेति। नन्वस्तु तन्मते

---

1. ग. अयुक्तं
2. ग. बाधकज्ञानोक्तिप्रसङ्ग
3. ग. विशेषाभावाभावेत्युक्तिं

प्रकाशः

[1]तादृशज्ञानान्तरं विना न विश्वास इति तत्रापि तदपेक्षायामनवस्थापत्तिरिति [2]तात्पर्यार्थ इत्याहुः ।

**विशेषदर्शनादिति** । विशेषदर्शनजन्ये ज्ञाने सद्विषयत्वज्ञानं [3]विनैव समाश्वास इति यदि तव मतम्, (तथा) [तदा] अन्यथाख्यातिवादिनो ममापि तादृशज्ञानान्तरं विनैव समाश्वास इति तुल्यमित्यर्थः । **तथोक्तमिति** । कोटिस्मरणाभावादुत्कटसामग्र्यन्तरप्रतिबन्धाद्वेत्यर्थः ।

---

न्यायशिखामणिः

ज्ञानान्तराभ्युपगमः, ततः किमित्यत आह—**तत्रेति** । ननु न्यायमते बाधकानवताराद्विश्वासः, परमते च ज्ञानान्तरात्स इति न युक्तम् । व्यवसायस्य स्वप्रकाशतया तस्यैव याथार्थ्यलक्षणसद्विषयत्वगोचरत्वात् । अन्यथा स्वतस्त्वभङ्गप्रसङ्गात् । न च यत्र दोषप्राबल्यात् सत्यपि तस्मिन् भ्रमत्वसंशयस्तदभिप्रायं ज्ञानान्तराभिधानमिति वाच्यम् । तत्र नैयायिकैरपि तादृशज्ञानेनाप्रामाण्यशङ्कानिवृत्तौ विश्वासाभ्युपगमेन विशेषासिद्धेरित्यस्वरसं सूचयति—**आहुरिति** ।

वस्तुतः—**तत्रेत्यादिमणेरयमर्थः** । [4]किं कस्यचित् ज्ञानस्याप्रमाणत्वे ज्ञानत्वादेस्तत्रैव व्यभिचारान्न तेन तदनुमितिरिति तदभावादविश्वासः, उत सर्वत्रापि विषयव्यभिचारशङ्कया अनाश्वासः । तत्र नाद्य इत्याह—**प्रामाण्येति** । समर्थप्रवृत्तिजनकत्वादेरप्रमाणव्यावृत्तस्यैव प्रामाण्यलिङ्गस्य प्रदर्शितत्वादित्यर्थः । द्वितीये प्रतिबन्द्या [5]समाधानं वक्तुं परमते [6]तद्दोषसाम्यमाह—**सत्यत्वेति** । परस्तु स्वमते न दोष इत्याह—**अथेति** । यत्राप्रामाण्यशङ्काविरहः स्वतस्सिद्धः तत्र केवलप्रामाण्यनिश्चयादेव विश्वास [7]इत्यभिप्राय, यत्र दोषप्राबल्यात्तच्छङ्का तत्र विशेषदर्शन[8]जन्यतन्निश्चयात्स इत्याह—**यत्र (त्वदिति) [त्रेति]** । किं न्यायमते संशयस्थलेऽविश्वासः, तदभावस्थले वा । आद्येऽपि संशयनिवर्तक[9]ज्ञानान्तरासंभ-

---

1. ख. तादृशज्ञानानन्तरं
2. ख. तात्पर्यमित्याहुः ।
3. ख. 'विनैव .... तादृशज्ञानान्तरम्' इति ग्रन्थस्त्रुटितः
4. क. 'किं' नास्ति ।
5. ग. घ. समाधातुं
6. ग. घ. तावद्दोष-
7. ग. इत्यभिप्रायः
8. घ. ॰जन्यतानिश्चयात्
9. क. ॰ज्ञानान्तराभावात्

अन्ये तु—स्मृतयोग्यवैधर्म्याभावोऽधिकरणं तज्ज्ञानं वा। तच्च प्रत्यक्षत एव गृहीतमिति युक्तो विश्वासः। अयोग्ये भेदकेऽधिकरणे च भेदसंशये ज्ञानान्तराद्विश्वास इति।

---

प्रकाशः

स्मृतेति। पुरोवर्तिनि रजतादौ रजतादिवैधर्म्यस्य रङ्गत्वादेरभावग्रहादेव रजतादिज्ञाने समाश्वास इत्यनुभवसिद्धम्। तत्र तद्वैधर्म्याभावश्च रजतादिस्वरूपमेव वा तज्ज्ञानं वा। तच्च योग्यभूते तद्वैधर्म्ये स्मर्यमाणे न तद्वैधर्म्याभावत्वेन प्रत्यक्षतया गृह्यत इति [1]तज्ज्ञाने युक्तो विश्वासः। यत्र तु भेदकं वैधर्म्यं भेद्यमधिकरणं वा अयोग्यं तत्र तदभावस्य प्रत्यक्षेणानिश्चयात् भेदसंशये सति सद्विषयत्वरूपविशेष दर्शनाद्विश्वास इत्यर्थः।

---

न्यायशिखामणिः

वादविश्वासः, उत तत्संभवेऽपि [2]तत्राप्रामाण्यसंशयसंभवेन [3]तस्य संशयानिवर्तक-त्वादविश्वासतादवस्थ्यम्। तत्र नाद्य इत्याह—ममापीति। तत्र ज्ञानान्तरादेव संशयनिवृत्तिरित्यनुषङ्गः। तथा च तन्निवृत्तौ निष्कम्पप्रवृत्तिर्ममापि तुल्येति भावः। अन्त्यं प्रत्याह—औत्सर्गिकमिति। आद्यद्वितीयं निराचष्टे—किं चेति। ज्ञानान्तरेऽपीति। प्रामाण्यगोचर[4]ज्ञानान्तरेऽप्यप्रामाण्यसंशयादविश्वासस्तवापि तुल्य इत्यर्थः। दोषप्राबल्याद्व्यवसाय इव तत्रापि तन्मते प्रामाण्यसंशयसंभवादिति भावः—इति।

ननु प्रामाण्यव्याप्यदर्शनस्य न तत्संशयनिवृत्तिद्वारा विश्वासहेतुत्वम्, धूम दर्शने सत्यपि व्यापकसंशयदर्शनादित्यत आह—विशेषदर्शनेति। ननु प्रामाण्य-निश्चयस्य विशेषदर्शनजन्यत्वेऽपि निवर्तकाभावात्स्वविषयकप्रामाण्यसंशयः स्यात् इत्याशङ्कां वारयितुं मूले यथा चेत्युक्तम्। तत्रोक्तमित्यनेन ज्ञप्तिग्रन्थोक्तस्य परामर्श इत्याह—कोटीति।

ननु भेदाभावनिश्चयाद्विश्वास इति गुर्वेकदेशिनां मतमयुक्तम्। ज्ञान-भेदाभावविवक्षायां सर्वस्य ज्ञानरूपाधिकरणस्य योग्यत्वेनायोग्य इति ग्रन्थासंगतेः,

---

1. ख. 'तज्ज्ञाने' नास्ति।
2. घ. तत्राप्यप्रामाण्य-
3. ग. तत्र
4. क. °ज्ञानान्तरे प्रामाण्य-

तन्न । उभयत्रापि ज्ञानान्तराद्विश्वासतुल्यत्वेन शिष्यदन्धनमात्रत्वात् ।

वस्तुतस्तु भेदाग्रहादेवाभेदव्यवहारोपपत्तावभेदविषयत्वं क्वापि न सिद्धमस्तीति कथं सद्विषयत्वसिद्धिः ।

---

प्रकाशः

[1]तन्नेति । रजतादिज्ञाने जाते पुरोवर्तिनि स्मृतयोग्यवैधर्म्याभावप्रत्यक्षाद्विशेषदर्शनाद्वा[2] विश्वासस्तव मते, मन्मते प्रामाण्यग्रहाद्विश्वास इत्युभयत्रापि ज्ञानान्तराद्विश्वासस्तुल्य इत्यर्थः ।

केचित्तु—त्वन्मत एवोभयत्रापि ज्ञानान्तराद्विश्वासे अयोग्यवैधर्म्यप्रतिसन्धानापेक्ष एव ज्ञानान्तराद्विश्वास इत्यभिधानं शिष्यदन्धनमित्यर्थ इत्याहुः ।

---

न्यायशिखामणिः

विषयभेदाभावोक्तौ ज्ञानभेदाभावसंशयेऽपि विश्वासापत्तिरित्याशङ्क्य, यद्भेदसंशये विश्वासप्रतिबन्धः तदभावनिश्चयो विवक्षितः । स च ज्ञानभेदाभावो विषयभेदाभावश्चेत्याशयेनाह—पुरोवर्तिनीति । रजतादावित्यादिपदेन रजतज्ञानस्य रङ्गत्वादेरित्यनेन तद्वैधर्म्यस्य परिग्रहः । अनुभवसिद्धमित्यनेन [3]ज्ञानतद्विषयगतभेदाभावनिश्चयस्य विश्वासहेतुत्वमुपपादितम् ।

ननु [4]स्मृतेतिविशेषणाद्वैधर्म्यस्मरणस्यावश्यकत्वं [5]सूचितं यत् तदसमञ्जसम् तस्याभावस्वरूपे तज्ज्ञाने वा विनियोगाभावादित्याशङ्क्य अभावत्वप्रकारकज्ञाने तदुपयोगमाह — तच्चेति । अधिकरणमिति । विषयरूपाधिकरणमित्यर्थः । एतच्चोपलक्षणम् । ज्ञानस्य योग्यत्वेऽपि स्थाणाविव दोषविशेषात्तत्र भेदसंशय इति द्रष्टव्यम् ।

ननु योग्येऽप्यभावत्वप्रकारकज्ञानं केवलाधिकरणज्ञानात् ज्ञानान्तरमिति कथमयोग्याधिकरण एव तदभिधानमित्यत आह—सद्विषयत्वेति । अगृहीतासंसर्गधर्मधर्मिगोचरैक[6]ज्ञानत्वेत्यर्थः ।

---

1. क. तेनेति
2. क 'विशेषदर्शनाद्वा' इति नास्ति ।
3. ग ज्ञानतद्विषयाभेदाभेदाभावनिश्चयस्य
4. ग. स्मृतेरिति
5. ग. घ. सूचितमयुक्तम् ।
6. ग. ॰ज्ञानत्वेनेत्यर्थः,

प्रकाशः

अयोग्यभेदकस्थले सद्विषयत्वरूपविशेषदर्शनाद्विश्वास इत्यत्र पक्षे दोषमाह—वस्तुतस्त्विवति । अन्ये तु औत्सर्गिकसद्विषयत्वग्रहाद्विश्वास इति यत्परैरुक्तं तत् सद्विषयत्वाप्रसिद्ध्या दूषयति—वस्तुतस्त्विवति । इत्याहुः ।

---

न्यायशिखामणिः

ननु मतद्वयेऽपि न स्थलद्वये ज्ञानान्तरापेक्षा, [1]योग्यस्थल एव तन्मते सद्विषयत्वरूपविशेषदर्शनस्यावश्यकत्वादित्याशङ्क्य[2] किं [3]ज्ञानान्तरपदेन विशेषदर्शनमात्रं विवक्षितं सद्विषयत्वरूपविशेषदर्शनं वा । आद्येऽपि विशेषपदं न व्याप्यपरम्, सद्विषयत्वज्ञानस्य व्याप्यत्वाप्रकारकत्वात् । किं तु विरोधिपरमित्यवश्यं वाच्यम् । तथा च योग्यस्थले [4]यद्वैधर्म्याभावज्ञानं तदपि ज्ञानान्तरपदनिर्देश्यमित्याह—रजतादीति । उभयत्रापीति । तथा च मतद्वयेऽपि योग्यायोग्यस्थलयोर्विशेषदर्शनाद्विश्वासतौल्ये न्यायमत एवोभयत्र ज्ञानान्तराद्विश्वास इत्यसंगतमिति भावः ।

ननु मतद्वयेऽपि स्थलद्वये ज्ञानान्तराद्विश्वास इति व्याख्यानं न युक्तम् । न्यायमते स्वतस्सिद्धाप्रामाण्यशङ्काविरहस्थले तदनभ्युपगमादित्यपरितुष्यन्मतान्तरमाह—केचित्त्विति । उभयत्रेति । स्थलद्वय इत्यर्थः । ज्ञानान्तरादिति । विशेषदर्शनादित्यर्थः । योग्यस्थलेऽपि वैधर्म्याभावप्रत्यक्षरूपविशेषदर्शनसत्त्वादिति भावः ।

ननु विशेषदर्शनमात्रं विवक्षितमिति पक्षे सद्विषयत्वासिद्धावपि न काचित् क्षतिः, योग्यस्थले प्रत्यक्षरूपेण वैधर्म्याभावज्ञानेनायोग्यस्थले चानुमानिकेन विस्रम्भोपपत्तेरित्याशङ्क्य, ज्ञानान्तरपदेन सद्विषयत्वरूपविशेषदर्शनं विवक्षितमिति पक्षनिराकरणपरतया व्याचष्टे—[5]अयोग्येति । परैरिति । प्राभाकरैरित्यर्थः । तथा च व्यवहितेऽपि तन्मते सिंहावलोकनन्यायेन दूषणमुच्यते न त्वेकदेशिमत इतीति भावः ।

---

1. ग. घ. अयोग्य-
2. ग. °दित्याद्येन
3. ग. ज्ञानपदेन
4. ग. यद्वैयर्थ्याभाव-
5. घ. अयोग्यतेति

**यत्तु दोषो न हेतुरिति, तन्न । फलबलेन तथात्वात् ।**

---

### प्रकाशः

इन्द्रियदोषस्य बीजदोषात् भिन्नत्वमात्रेणैव न विपरीतकार्यजनकत्वं सिध्यतीत्यतः पुनराशङ्क्य साधयति–[1]यत्त्विति । फलेति । भ्रमरूप[2]कार्यान्यथानुपपत्तिरेव दोषहेतुत्वे मानमित्यर्थः ।

---

### न्यायशिखामणिः

ननु भेदाग्रहस्याभेदव्यवहारप्रयोजकत्वेऽ[3]प्यस्यैव ज्ञानद्वयस्य प्रत्येकं याथार्थ्यमिति न तद्रूपसद्विषयत्वस्याप्रसिद्धिरापाद्या[4] । किं तु विशिष्ट[5]ज्ञानत्वस्य । तच्च पराभिमतम् । [6]अगृहीतासंसर्गेत्यादिपूर्वग्रन्थे च सद्विषयत्वं [7]याथार्थ्यमेव परस्याभिमतम् । यत्र न्यायमते स्वतस्सिद्धाप्रामाण्यशङ्काविरहाद्विश्वासस्तत्रैव तज्ज्ञानस्य परेण तद्धेतुत्वेनोक्ततयातिप्रसङ्गाभावात् । तथा च [8]पराभिमतसद्विषयत्वस्य नाप्रसिद्धिरित्यस्वरसं सूचयति—आहुरिति ।

वस्तुतः — पूर्वव्याख्यानमप्यसंगतम् । आनुमानिकवैधर्म्याभावज्ञानस्यैव ज्ञानान्तरपदनिर्देश्यस्यायोग्यभेदकस्थले [9]विश्वासहेतुत्वेन पराभिप्रेतत्वात् ।

वयं तु—स्वमते परापादितबाधकं निराकृत्य विशिष्टव्यवहारबलादसत्यस्थले विशिष्टज्ञानानभ्युपगमे [10]तत् क्वापि न सिध्येदिति बाधकं परमते दुर्वारमित्याह—वस्तुतस्त्विति । ननु विशिष्टज्ञानत्वं सत्यस्थलेऽपि ज्ञानस्य न सिध्यतु, ततः किमित्यत आह—इति कथमिति । विशिष्टज्ञानत्वासिद्धावसत्यस्थलव्यावृत्तप्रामाण्यमपि न सिध्येत् । तन्मते तस्यैव प्रामाण्यरूपत्वात् । यदि च सत्यस्थले सामग्रीबलाद्विशिष्टज्ञानसिद्धिस्तदा तत एवासत्यस्थलेऽपि तत्सिद्धिरस्तु,

---

1. क. 'यत्त्विति' इति नास्ति ।
2. ख. ॰कार्यानुपपत्तिरेव
3. ग. ॰प्यस्त्येव
4. ग. ॰रापाद्यताम् ।
5. ग. ॰ज्ञानस्य
6. क. ग. गृहीता-
7. क. यथार्थमेव
8. ग. घ. पराभिप्रेत-
9. क. 'विश्वासहेतुत्वेन.......असत्यस्थले' इति भागो नास्ति ।
10. ग. तदपि

अथेदं रजतमिति ज्ञानं कथमयथार्थम्, इदंरजतयोः सत्त्वात्। न च तदुभयतादात्म्यमसत्ः, उभयं तादात्म्यं चेत्यतोऽधिकस्याभावात्। तयोश्च सत्त्वात्। असत्त्वे वा असत्ख्यातिः। एवं संसर्गारोपोऽपीति।

---

प्रकाशः

तयोरिति। तदुभयस्य तादात्म्यस्य चेत्यर्थः। न चोभयतादात्म्यमखण्डमसदेवेति वाच्यम्। रजततादात्म्यं हि तत्र भासते, तच्च सदेव, अखण्डभानं च नाभ्युपेयत इति भावः। असत्त्वे—(ये)[ए]षामन्यतमस्यासत्त्वे। एवमिति। रजतत्वादिसंसर्गोऽपि सन्नेव भासत इत्यर्थः।

---

न्यायशिखामणिः

सदोषस्येन्द्रियादेस्तद्धेतोः सत्त्वादित्याशयः। अत एव [1]दोषस्य हेतुत्वं साधयति —यत्त्विति। इति ब्रूमः।

ननु बीजेन्द्रियेत्यत्र [2]दोषहेतुत्वसाधनात् पौनरुक्त्यमित्यत आह—इन्द्रियेति। अन्यथानुपपत्तिरेवेति। एतच्च प्रमाणं यद्यपि बीजेन्द्रियेत्यत्र नोक्तमिति तदादाय न पौनरुक्त्यम्। 'सदोषमिन्द्रियाद्येव [3]कारणं कल्प्यते सर्वतो बलवती ह्यन्यथानुपपत्तिः' इत्यत्र तु उक्तमिति तदादाय तत्स्यादेव। तथापि विस्मरणशीलं प्रति [4]तत् स्मारितमिति न दोषः।

वयं तु—'सदोषमिन्द्रियाद्येवे'त्यत्र दोषस्य सामान्यतो विपरीतकार्यहेतुत्वे प्रमाणमुक्तम्। 'बीजेन्द्रिये'त्यत्र तु [5]तद्व्यावर्तककारणतावच्छेदकप्रदर्शनेनान्वयव्यभिचारो निराकृतः। संप्रति व्यतिरेकव्यभिचारमाशङ्क्य परिहरति—यत्त्विति। फलेति। न हि काचपित्तादिदोषाणामनुगतकिंचिद्धर्मावच्छिन्नं प्रति कारणता। फलबलेन परस्परव्यावृत्तधर्मावच्छिन्नं प्रत्येव हेतुत्वकल्पनादित्यर्थ इति ब्रूमः।

ननु प्रामाण्यसिद्धिस्तवापि तुल्या। न च तद्वति तत्प्रकारकज्ञानत्वमिति तन्निरुक्तमिति वाच्यम्। लक्षणाभावेनान्यथा[6]ख्यात्यसिद्धौ विशेषणवैयर्थ्यतादव-

---

1. ग. 'दोषस्य हेतुत्वं···ननु बीजेन्द्रियेत्यत्र' इति ग्रन्थस्त्रुटितः।
2. ग. दोषस्य हेतुत्व-
3. क. करणं
4. क. 'तत्' नास्ति।
5. ग. घ. तद्व्यावृत्तिकारण-
6. ग. ॰ख्यातिसिद्धौ

उच्यते । सन्मात्रविषयत्वेऽपि तदभाववति तत्प्रकारकत्वं प्रकार-व्यधिकरणविषयताकत्वं वा अयथार्थत्वम् ।

प्राञ्चस्तु—तादात्म्यसंसर्गयोरसतोरेव मन्यन्ते विषयत्वम् । न चैवमसत्ख्यातिः, सदुपरक्तस्यात्यन्तासतः ख्यात्यभ्युपगमात् । सदनुपरक्तस्याखण्डस्यात्यन्तासतः ख्यातिरसत्ख्यातिर्नाभ्युपेयते कारणाभावात् । तदनुपपत्तिस्तुल्यैवेति चेत्—न । अत्र विशिष्टज्ञानसामग्र्या दर्शितत्वात् । तदुक्तं वाचस्पतिमिश्रैः—

---

प्रकाशः

विशिष्टज्ञानेति । तत एवासद्वैशिष्ट्यभानं, न त्वतिरिक्ततज्ज्ञानसामग्रीति न कारणानुपपत्तिस्तुल्येत्यर्थः ।

---

न्यायशिखामणिः

ख्यात् । न चासद्विषयत्वं तल्लक्षणमसंभवादित्याशङ्कितमथेत्यत्र । तदयुक्तम् । तयोरिति वचनस्वरसाद्रजतादीनामन्यतमस्यासत्त्वेन लक्षणसंभवात्, अन्यथा द्विवचनानुपपत्तेरित्यत आह—तदुभयस्येति । नन्वसत्त्वमात्रमसच्छब्दार्थश्चेत् समुदितरूपेणासत्त्वस्य सिद्धान्तेऽप्यभ्युपगमात् असत्ख्यातिस्तत्रापि दुर्वारेत्यत आह—एषामिति । असत्त्व इति । स्वरूपेणासत्त्व इत्यर्थः ।

ननु विशेषणसंनिकर्षादिरूपा हि विशिष्टज्ञानसामग्री, तत्र च न विषयसंनिकर्षत्वं कारणतावच्छेदकम्, अतिप्रसङ्गात् । किं तु यावद्विषयसंनिकर्षत्वम् । तथा च वैशिष्ट्यसंनिकर्षोऽपि कारणमिति तदभावात्कथमसद्वैशिष्ट्यभानमित्यत आह—तत एवेति । [1]विशेषणविशेष्यसंनिकर्षघटिता या विशिष्टज्ञानसामग्री तत एवेत्यर्थः । न त्विति । या वैशिष्ट्यसंनिकर्षघटिता सा विशिष्टज्ञानसामग्री न भवति इत्यर्थः ।

अयमाशयः—न तावद्वैशिष्ट्यसंनिकर्षस्यान्वयव्यतिरेकाभ्यां वैशिष्ट्यसंनिकर्षत्वेन कारणता, विशेषणादिसंनिकर्षे सति तद्विलम्बेन [2]कार्याविलम्बात् ।

---

1. ग. विशेष्यविशेषण- 2. ग. कार्यविलम्बात्

'तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनं ज्ञानमसदालम्बनं मतम् ॥' इति ॥

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे अन्यथाख्यातिवादः

—: * :—

---

**प्रकाशः**

तन्निरालम्बनमित्यस्यैव विवरणम् असदालम्बनमिति । अत्र क्लृसेनैवोपपत्तौ अक्लृप्तासद्विषयत्वे गौरवं प्रमा(ण)[णा]भावश्चेत्यस्वरसो बोध्यः ।

नव्यास्तु — तदभाववद्विशेष्यकतत्प्रकारकत्वमेव भ्रमस्यायाथार्थ्यमिति सत्यम् । तदेव तु तस्यासद्वैशिष्ट्यविषयकत्वं विना न संभवति । तत्प्रकारकविशेष्यं हि तदेव, यदाधारं [1]तत्प्रकारकवैशिष्ट्यं तत्प्रकारकज्ञाने भासते ।

---

**न्यायशिखामणिः**

नापि विशेषणसंनिकर्षादेर्यत् कारणतावच्छेदकं तदवच्छिन्नत्वात् सोऽपि हेतुरिति युक्तम् । लौकिकालौकिकसाधारणस्य विशेषणसंनिकर्षस्य कारणता, विशेष्यसंनिकर्षस्य तु लौकिकस्यैव । न ह्यनयोरेकमवच्छेदकम् । अलौकिकोभयसंनिकर्षे सति विशिष्टप्रत्यक्षापत्तेः । तथा च तयोः [2]प्रत्येकरूपेण हेतुत्वान्न यावद्विषय-[3]संनिकर्षत्वमवच्छेदकमिति ।

उपाध्यायमतमाह—नव्यास्त्विति । तदेवेति । न तु [4]तत्प्रकारवैशिष्ट्यज्ञाने यदनुयोगितया भासते तद्विशेष्यम्, तथा सति शुक्तिरजते इति समूहालम्बने रजतत्ववैशिष्ट्यविषयके शुक्तेरपि रजतत्वं प्रति विशेष्यत्वापत्तेरिति भावः ।

यदाधारमित्यत्र यदाधारत्वेन भासमानं विवक्षितमिति नासद्भानावकाश इत्याशङ्क्य निरस्यति—न चेति । किं वैशिष्ट्यस्य तदाधारत्वेन प्रकारेण [5]ज्ञानं

---

1. क. तत्प्रकारवैशिष्ट्यं
2. ग. प्रत्यक्षरूपेण
3. क. संनिकर्षोऽवच्छेदक इति
4. ग. तत्प्रकारक-
5. ग. घ. मा

प्रकाशः

न च शुक्तौ रजतत्वसंसर्गभ्रमे रजततादात्म्यभ्रमे च रजतत्वसंसर्गरूपं रजततादात्म्यरूपं च वैशिष्ट्यं शुक्त्याधारं यत्प्रकाशते तत्सद्रूपम् । सतोस्तयोः शुक्त्यनाधारत्वात्, किं त्वसदेव तदुभयमकामेनापि स्वीकरणीयम् । न च सदेव [1]रजतत्वसंसर्गादिकं शुक्तिनिष्ठतया भासत इत्येतावतैव तस्यास्तत्प्रकारकविशेष्यतेति वाच्यम् । शुक्तिनिष्ठतया भासत इत्यत्र हि शुक्तिनिष्ठत्वेन प्रकारेण भासत इत्यर्थो [2]न वाच्यः । वैशिष्ट्यात्मनि विशेष्यनिष्ठत्वस्य पूर्वानुपस्थितत्वेनाप्रकारत्वात् । नापि वस्तुगत्या शुक्त्याधारं भासत इत्यर्थो वाच्यः, सतोस्तयोर्वस्तुगत्या तदनाधारत्वादिति पूर्वास्वरसादेवायं कल्प इत्याहुः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे प्रत्यक्षखण्डे अन्यथाख्यातिवादः ।

---

न्यायशिखामणिः

विवक्षितम्, उत तदाधारस्य सतस्तस्य भानम् । तत्राद्यं निराकृत्य द्वितीयं निरस्यति —नापीति । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु—

[3]यदाधारं यस्य वैशिष्ट्यं ज्ञाने भासते तत्प्रति तस्य [4]विशेष्यत्वमिति न युक्तम् । वैशिष्ट्यस्य प्रकारप्रकार्युभयाश्रयतया प्रकारस्यापि विशेष्यत्वापत्तेः । न चाधारपदमनुयोगिपरम्, रजतत्वादेश्च प्रतियोगित्वेन तदभावान्नातिप्रसङ्ग इति वाच्यम् । भासमानवैशिष्ट्यानुयोगित्वं [5]विशेष्यत्वम्, तादृशवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति [6]पर्यवसितार्थः । रजतत्वादेश्च कदाचिद्रजतं प्रति विशेष्यतया तत्राप्यनुयोगित्वसत्त्वेन रजतमिदमिति ज्ञानेऽपि विशेष्यतापत्तेः । रजतरजतत्वतत्समवाया इति समूहालम्बने तस्य प्रकारत्वापत्तेश्च ।

---

1. क. रजतत्वासंसर्गादिकं
2. ख. 'न वाच्यः वैशिष्ट्यात्मनि......भासत इत्यर्थो' इति ग्रन्थो नास्ति ।
3. क. यदाधारस्य वै-
4. क. वैशिष्ट्यत्वं
5. क. 'विशेष्यत्वं, तादृशवैशिष्ट्यप्रतियोगित्वं' इति न दृश्यते ।
6. घ. 'इति पर्यवसितार्थः.........प्रकारत्वापत्तेश्च ननु' इति ग्रन्थो न दृश्यते ।

न्यायशिखामणिः

ननु तादृशवैशिष्ट्यप्रतियोगित्वेन भासमानत्वं प्रकारत्वम् । तादृशवैशिष्ट्यानुयोगित्वेन भासमानत्वं विशेष्यत्वम् । रजतत्वादेश्च तदुभयसत्त्वेऽपि विशिष्टज्ञाने प्रतियोगित्वं समूहालम्बने चानुयोगित्वं भासत इति चेत्—हन्त ! रजतत्ववैशिष्ट्यानुयोगित्वं यद्रजते प्रसिद्धं तद्दोषवशाच्छुक्तौ भासत इति कासद्ख्यातिवार्तावकाश इति संक्षेपः ।

इति [1]श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरि-
विरचिते न्यायशिखामणौ अन्यथाख्यातिवादः

—:0:—

1. क. श्रीधर्मराजा-

# अथ प्रत्यक्षलक्षणवादः

—:*:—

सा च प्रमा चतुर्विधा प्रत्यक्षानुमित्युपमितिशाब्दीभेदात् । एवं चतसृणां तासां करणं प्रमाणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् । अन्येषां यथायथमेष्वेवान्तर्भावात् । तथा च वक्ष्यामः ।

---

**प्रकाशः**

चतुर्विधमिति । यद्यपि शरीरादेरपि शरीरमनस्संयोगद्वारा कारणत्वम्, तथाप्यसाधारणं यत्प्रमाकरणं तच्चतुर्विधमित्याहुः ।

---

**न्यायशिखामणिः**

एवमन्यथाख्यातौ समर्थितायां तद्व्यावर्तकतया तद्वतीति विशेषणस्यावश्यकत्वे तद्घटितमेव प्रमासामान्यलक्षणम् । अर्थाच्च तत्करणत्वं प्रमाणसामान्यलक्षणमिति सिद्धम् । संप्रति व्याप्ति[1]ज्ञानत्वादेर्विशेषलक्षणस्य सर्वमतसाधारण्याभावात् तदपि [2]क्रियाद्वारकमेव वाच्यम् । तत्र च प्रमायाश्चार्वाकमतवदेकरूपत्वे [3]वक्ष्यमाणविशेषलक्षणानवकाश इत्यतस्तां विभजते—सा चेति । चकार एवकारार्थो भिन्नक्रमश्च । तथा च प्रमा प्रत्यक्षादिरूपेण चतुर्विधैव न त्वेकरूपा उक्ताधिकरूपा वेत्यर्थः । तत्रोक्तरूपादधिकरूपत्वाभावे हेतुः—अन्येषामिति वक्ष्यते । एकरूपत्वाभावे हेतुः प्रत्यक्षेति । भेदादिति । यथा च प्रत्यक्षादिप्रमितीनां भेदस्तथा तत्तन्निरूपणावसरे वक्ष्यत इति भावः ।

व्यापारवत्त्वं करणत्वं [4]विवक्षितमिति मन्वानः शङ्कते—यद्यपीति । यद्यपि शरीरादेः करणत्वेऽपि न चातुर्विध्यविरोधः । अन्यथा लिङ्गकरणतावादिमते चक्षुरादेरप्यनुमित्यसाधारणकारणत्वेन तवापि विभागव्याघातात् । उपधेयसंकरे-

---

1. क. ज्ञानस्य पद-
2. ग. क्रियाद्वारा करणमेव
3. क. वक्ष्यमाणलक्षणावकाशः ।
4. ग. विवक्षितं मन्वानः
   क. 'विवक्षितं' नास्ति ।

ननु न प्रत्यक्षं तावदिन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यभिचारि। आत्मानुमितिस्मृत्योर्ज्ञानमात्रे चातिव्याप्तेः। आत्मनोऽर्थस्य मनसेन्द्रियेण संयोगादुत्पत्तेः। ईश्वरप्रत्यक्षाव्याप्तेश्च। संनिकर्षस्य च संयोगादिरूपत्वे-नाननुगमाच्च। संयोगाद्यन्यतमस्य चानिर्धारितैकपरत्वे भागासिद्धि-रितरभेदसाधने, व्यर्थविशेषणत्वं च। इन्द्रियार्थयोरेकजन्यत्वस्य लक्षणत्वे

---

प्रकाशः

नन्वर्थपदेन तज्ज्ञानार्यमाणो विवक्षितः अर्यमाणमात्रं वा विवक्षितम्। आद्य आह—आत्मेति। अन्त्य आह—ज्ञानमात्रेति। ईश्वरेति। यद्यपि करणलक्षणप्रस्तावे तदव्याप्तिर्न दोषः, तथापि ईश्वरस्यापि प्रत्यक्षप्रमाणत्वमित्यभि-

---

न्यायशिखामणिः

ऽप्युपाधेरसंकर इत्येतन्ममापि तुल्यम्। तथापि प्रत्यक्षप्रमा[1]करणत्वलक्षणं तत्राति-व्याप्तमित्याशयः। असाधारणमिति। प्रमां प्रत्यसाधारणकारणत्वे सति व्यापार-वत्त्वं तत्करणत्वमिह विवक्षितम्। तदसाधारणकारणत्वं च अनुभवत्वसाक्षाद्व्याप्य-जात्यवच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वम्। न चान्यतरवैयर्थ्यम्। शरीरा-दाविन्द्रियसंनिकर्षादिरूपव्यापारे च प्रमाणव्यवहारव्यावर्तनार्थत्वात्। व्यवहारार्थ-मेव चात्र तल्लक्षणप्रणयनात्।

[2]ननु किं संनिकर्षगर्भं लक्षणं तदगर्भं वा। तत्र द्वितीये इन्द्रियार्थजन्य-त्वम् इन्द्रियजन्यत्वमर्थजन्यत्वमिन्द्रियत्वेन [3]तज्जन्यत्वं वा न तल्लक्षणमितीन्द्रि-यार्थयोरित्यादिना वक्ष्यते। आत्मेत्यत्र त्वाद्यं निराकृतम्। तदचारु। स्वविषयार्थ-संनिकर्षजन्यत्वस्य सर्वज्ञानेऽसंभवेन तत्रातिव्याप्त्ययोगादित्याशङ्क्य [4]विकल्प-परतया व्याचष्टे—नन्वर्थेति।

प्रमाणव्यवहाराभावात् परमेश्वरो न प्रमाणलक्षणलक्ष्यः इत्यरुचेराह—

---

1. घ. ॰करणत्वादिलक्षणम्
2. क. घ. 'ननु' नास्ति।
3. क. इन्द्रियजन्यत्वं
4. क. ग. 'विकल्पपरतया' नास्ति।

व्यर्थविशेषणत्वम् । न च तयोरेकैकजन्यत्वमेव लक्षणम् । आत्ममनोजन्यत्वेन ज्ञानमात्रे गतत्वात्, इन्द्रियस्य प्रत्यक्षनिरूप्यत्वाच्च ।

नापि ज्ञातकरणाजन्यत्वे सति सत्योऽनुभवः प्रत्यक्षम् । लिङ्गादेरजनकतया ज्ञानस्याज्ञातस्य करणत्वे अनुमित्यादौ गतत्वात् ।

ज्ञानाजन्योऽनुभवः सत्य इत्यपि न । विशिष्टप्रत्यक्षाव्याप्तेः तस्य विशेषणज्ञानजन्यत्वात् ।

नापि सत्यत्वे सति साक्षात्कारित्वम्, नियतव्यञ्जकाभावेन ग्रहीतुमशक्यतया तस्य जातित्वासिद्धेः । सत्त्वे वा तदेव लक्षणं व्यवहारनिमित्तं चास्तु, किं जात्या ।

---

प्रकाशः

प्रायेणेदमित्यभिप्रेत्यैतदुक्तमित्येके । प्रत्यक्षज्ञानलक्षणाभिप्रायेणेदमित्यन्ये । ननु संयोगाद्यन्यान्यत्वविवक्षायां न [1]लक्षणाननुगमो न वा [2]इतरभेदसाधने भागासिद्धिरित्यत आह—इतरेति । संनिकर्ष[3]जन्यत्वस्यैव व्याप्यत्वादिति भावः ।

तदेवेति । नियतव्यञ्जकमेवेत्यर्थः । तथेति । अनुगतबुद्धिविषय इत्यर्थः । अन्योन्येति । इन्द्रियस्य साक्षात्प्रतीतिसाधनत्वादिति भावः । यदि चान्यथैवेन्द्रियनिर्वचनं तदा दोषमाह—इन्द्रियस्येति । अतीन्द्रियेन्द्रियघटित उक्त

---

न्यायशिखामणिः

प्रत्यक्षेति । नन्विदं जन्यप्रत्यक्षज्ञानलक्षणमित्यजन्यप्रत्यक्षज्ञानाव्याप्तिर्न दोष इत्यरुच्या मूले संनिकर्षस्येत्यादिना दूषणान्तरमुक्तम् । तत्राप्यपरितोषमाह—नन्विति । संनिकर्षजन्यत्वस्येति । संयोगाद्यन्यान्यजन्यत्वापेक्षया संयोगजन्यत्वस्य लघुत्वादिति भावः । एतच्चापाततः । गुरुत्वेऽपि यन्निष्ठेति न्यायेन तस्य तेन रूपेणैव व्याप्यत्वात् । अत एव [4]धूमालोकान्यान्यत्वमपि वह्निव्याप्तिव्याप्यमित्यनुमाने स्फुटम् । वस्तुतस्त्वाद्यदोष एव तात्पर्यम् ।

---

1. क. लक्षणानुगमो
2. क. इतरभेदे साधने
3. क. ॰जन्यत्वस्य व्याप्य-
4. क. घ. धूमालोकान्यत्वमपि

उच्यते । प्रत्यक्षस्य साक्षात्कारित्वं लक्षणम् । चाक्षुषादिज्ञाने साक्षात्करोमीत्यनुगतबुद्धेर्बाधकं विना जातिविषयत्वात् । न चेन्द्रियजन्यत्वं तथा । अन्योन्याश्रयादिन्द्रियस्यातीन्द्रियत्वाच्च । न च नियतव्यञ्जकाभावान्न जातिः । गोत्वादौ सास्नादेरिवाननुगतस्यापि चक्षुःकरणकानुभवत्वादेर्व्यञ्जकत्वात् ।

न च जातावनुगतव्यञ्जकनियमः । ज्ञानेच्छाप्रयत्नसुखदुःखादेस्तदभावात् । प्रत्युत नियतव्यञ्जकसत्त्वे जात्यसिद्धिरेव । तत एवानुगत-

---

**प्रकाशः**

उपाधिः प्रत्यक्षानुगतबुद्धौ न विषय इत्यर्थः । गोत्वेति । न च सास्नावत्त्वमनुगतमेवेति वाच्यम् । व्यञ्जकान्तरस्यापि संभवेन विनिगमकाभावादिति भावः । चक्षुरिति । न च चक्षुःकरणत्वमप्यतीन्द्रियं कथं व्यञ्जकमिति वाच्यम् । तेन चाक्षुषत्वजातेरुपलक्षणात् ।

अस्तु वा द्रव्यमात्रवृत्तिजातौ तदपेक्षा, तथापि गुणगतजातौ नानुगत-

---

**न्यायशिखामणिः**

लक्षणस्य तथाशब्दार्थत्वे इन्द्रियस्येत्यग्रिमग्रन्थविरोधादाह—अनुगतेति । अन्यथेति । साक्षात्त्वाघटितेन स्मृत्यजनकेत्यादिनेत्यर्थः । इन्द्रियजन्यत्वस्य प्रत्यक्षानुगतबुद्ध्यविषय[1]त्वप्रतिज्ञायामिन्द्रिय[2]गतातीन्द्रियत्वहेतूक्तिरयुक्तेत्यत आह—अतीन्द्रियेति । चाक्षुषत्वेति । चक्षुर्जन्यतावच्छेदकेत्यर्थः । न च जातिव्यञ्जकत्वं तत्साक्षात्कारकारणज्ञानविषयत्वम् । तच्च नाननुगतस्य, व्यभिचारादिति वाच्यम् । व्यङ्ग्यजातिव्याप्यत्वस्य व्यञ्जकतावच्छेदकत्वात् । न चैवं तत्तद्व्यक्तिमात्रवृत्ति[3]धर्मस्य व्यञ्जकत्वापत्तिः । तेन रूपेणेष्टत्वादिति भावः ।

[4]नन्वेवं जातावेकव्यञ्जकनियमभङ्गेऽपि अनुगतव्यञ्जकनियमे किमायातम् । सास्नावत्त्वादेरनेकत्वेऽप्यनुगतत्वादित्यरुच्या मूले न चेत्युक्तम् । तथा

---

1. क. ॰त्वस्य प्रतिज्ञायाम्
   ग. ॰त्वप्रत्यभिज्ञायाम्
2. ग. 'गतातीन्द्रिय—' नास्ति ।
3. ग. घ. ॰धर्मस्यापि
4. ग. नन्वेतावता जाता-

बुद्ध्युपपत्तेः । निर्विकल्पकेश्वरयोगिप्रत्यक्षे च प्रत्यक्षत्वं धर्मिग्राहकमानसिद्धम् ।

योगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यसामान्यलक्षणप्रत्यासत्त्यजन्यजन्यप्रत्यक्षस्य लक्षणमनागतगोचरसाक्षात्कारहेतुप्रत्यासत्त्यजन्यजन्यसाक्षात्कारत्वम् ।

---

प्रकाशः

व्यञ्जकापेक्षेत्याह—न चेति । प्रत्युतेति । यद्यपि व्यञ्जकम् उपाधितया गुरु, जातिस्तु लघुः । तथापि क्लृप्तत्वादुपाधिरेवास्तु किं जात्येति भावः ।

प्राचीनं लौकिकप्रत्यक्षलक्षणं लक्ष्यतावच्छेदकत्वेनादाय स्वयं तस्य [1]लक्षणान्तरमाह—योगजेति । अत्र जन्येत्यादिना स्वविषयकज्ञानलक्षण[2]प्रत्यासत्त्यजन्यत्वं विवक्षितम् ।

---

न्यायशिखामणिः

सति तान्त्रिकाणामनुगतव्यञ्जकनियमोक्तिर्निर्विषया स्यादित्यत आह—अस्तु वेति ।

नन्विदं न प्रत्यक्षलक्षणम्, ईश्वरप्रत्यक्षाव्याप्तेः । न च जन्यप्रत्यक्षस्य, अलौकिकप्रत्यक्षाव्यापनात् । [3]नापि लौकिकप्रत्यक्षस्य, करणलक्षणे तस्यानुपयोगादित्याशङ्क्य, यद्यपि [4]करणलक्षणमेवात्र प्रस्तुतम् । तदुपयोगाय जन्यप्रत्यक्षमेव लक्षणीयम् । तथापि प्रासङ्गिकं स्वतन्त्रमेवात्र लौकिकप्रत्यक्षलक्षणं विवक्षितम् । तच्च लौकिकमिदं प्रत्यक्षमिति व्यवहाराय । अत एव सांप्रदायिकैरपि तथैव लक्षणमुक्तम् । तत्सूचनाय तदीयमेव लक्षणं लक्ष्यतावच्छेदकत्वेनोपात्तमित्याह प्राचीनमिति ।

[5]वयं तु—यद्यपि जन्यप्रत्यक्षलक्षणमेव करणलक्षणोपयोगि, तथापि

---

1. क. लक्षणमाह
2. ख. ॰प्रत्यासत्तिजन्यत्वम्
3. ख. 'नापि लौकिकप्रत्यक्षस्य...प्रत्यक्षमिति व्यवहाराय' इति ग्रन्थस्त्रुटितः ।
4. करणमेवात्र
5. क. 'वयं तु.......इति ब्रूमः' इति ग्रन्थस्त्रुटितः ।

प्रकाशः

प्रत्यासत्तित्वलाभायैव सविकल्पकपदं जन्यपदं चोक्तम्। निर्विकल्पकस्याजन्यज्ञानस्य च प्रत्यासत्तित्वाभावात्। न च स्वविषयकेति व्यर्थमिति वाच्यम्। प्रतियोगि[1]विशिष्टाभावप्रत्यक्षे प्रतियोगिज्ञानस्य प्रतियोगिरूपविशेषणप्रत्यासत्तित्वेनाप्युपयोगितया तदनुपादाने तत्राव्याप्तिप्रसङ्गात्। सत्यविशिष्टप्रत्यक्षमात्रे विशेषण-

न्यायशिखामणिः

तद्द्वारा इदमपि तदुपयोगि। तथा हि [2]इन्द्रियजन्यत्वं हि जन्यप्रत्यक्षलक्षणम्। इन्द्रियत्वं च ज्ञानकारणत्वगर्भम्। ज्ञानं च लौकिकत्वविशेषितम्। अत एव वक्ष्यति 'लौकिकत्वेन ज्ञानविशेषणा'दिति। यद्यपि लौकिकत्वविशेषणं नावश्यकमिति वक्ष्यते। तथाप्युद्भूतविशेषपदं लौकिकप्रत्यक्षपरमित्यस्माभिर्वक्ष्यते [3]इति (प्रमा ररतया)[परंपरया] तदुपयोगीति ब्रूमः।

नन्वत्र योगिप्रत्यक्षवारणाय प्रथमं, ज्ञानप्रत्यासत्तिजन्यज्ञानवारणाय द्वितीयम्, सामान्यप्रत्यासत्तिजन्यप्रत्यक्षवारणाय तृतीयम्, ईश्वरप्रत्यक्षवारणाय चतुर्थम् अनुमित्यादिवारणाय पञ्चमं विशेषणमित्यस्तु। तत्र द्वितीयविशेषणजन्यस्वविषयकसविकल्पकेति तु व्यर्थम्। ज्ञानाजन्यत्वविशेषणेनैव तद्वारणीयस्य वारितत्वात्। न च विशिष्टप्रत्यक्षस्य निर्विकल्पकजन्यतया तत्राव्याप्तिवारणाय सविकल्पकपदम्, परमेश्वरज्ञाननिबन्धनासंभववारणाय जन्यपदम्, विशिष्टवैशिष्ट्यप्रत्यक्षाव्याप्तिवारणाय स्वविषयपदमिति वाच्यम्। उपनीतप्रत्यक्षमात्रस्य तादृशतया तत्रातिव्याप्तितादवस्थ्यात्। न च मध्यमपदलोपिसमासाश्रयणेन स्वविषयविषयकत्वलाभान्नोक्तदोष इति वाच्यम्। तथापि विशेषणज्ञानस्य विशिष्टवैशिष्ट्यप्रत्यक्षविषय[4]विशेषणविषयकत्वेन तत्राव्याप्तितादवस्थ्यादित्याशङ्क्य उपाध्यायमतमाह—अत्रेति। ननु स्वविषयकेति व्यर्थम्, विवक्षितस्य ज्ञानप्रत्यासत्त्यजन्यत्वस्य विशिष्टवैशिष्ट्यप्रत्यक्षेऽपि सत्त्वेन तदनुपादानेऽपि तत्राव्याप्तिविरहादित्याशङ्क्य निराकरोति—न चेति। सत्येति। न तु वर्तमानविशेषणकप्रत्यक्षे तस्य तथात्वम्, गौरवादिति भावः।

1. क. °विशिष्टानां प्रत्यक्षे
2. ग. 'इन्द्रियजन्यत्वं हि....यद्यपि' इति भागस्त्रुटितः।
3. ग. तथापि परंपरया
4. क. °विशेषणत्वेन

प्रकाशः

संनिकर्षस्य हेतुत्वेन तत्रान्यसंनिकर्षस्याभावेन तस्यैव तथात्वाभ्युपगमात् । न चैवं वह्निज्ञानरूपप्रत्यासत्त्या पर्वते वह्निप्रत्यक्षोत्पादप्रसङ्ग इति वाच्यम् । [1]अलौकिकप्रत्यक्षसामग्रीतोऽनुमित्यादिसामग्र्या बलवत्त्वात् ।

एवं च [2]स्वविषयकेत्यस्योपादाने यदंशे साक्षात्कारः स्वविषयप्रत्यासत्तिभूतज्ञानाजन्यस्तदंशे लौकिकप्रत्यक्षमिति लभ्यते । तथा चाभावसाक्षात्कारः प्रतियोग्यंशे न तथा, अभावांशे तु तथैव । एवं च परमाणुमहं जानामीत्यनुव्यवसायः परमाण्वंशे न तथा ज्ञानत्वांशे तथैवेत्यूहनीयम् । दण्डिप्रत्यक्षादौ दण्डादिसंयोगरूपप्रत्यासत्त्यादेः सत्त्वे दण्डादिज्ञानस्य विशेषण[3]ज्ञानत्वमात्रेणैवोपयोग इति दण्डाद्यंशे नालौकिकत्वापत्तिरित्याहुः ।

अत्र वदन्ति । एवमप्यंशविवक्षाया आवश्यकत्वाद्यदंशे प्रत्यासत्तिभूत[4]ज्ञानाजन्यत्वं तत्र [5]लौकिकत्वमित्येतावतैवोपपत्तौ स्वविषयकमिति व्यर्थमेव । भिन्नविषयकस्य प्रत्यासत्तित्वाभावात् ।

---

न्यायशिखामणिः

ननु स्वविषयविषयकत्वमवश्यं वाच्यम्, अन्यथा उक्तदोषात् । तथा चाभावप्रत्यक्षे प्रतियोगिनो विषयत्वात् तदव्याप्तितादवस्थ्यमित्यत आह—एवं चेति । न तथेति । न लभ्यत इत्यर्थः । [6]अभावेति । अत्र प्रतियोग्यंशे लौकिकत्वप्रयोजकसंयोगादिसंनिकर्षाभावेन अभावसाक्षात्कारस्यालौकिकत्वौचित्यान्न तदंशाव्याप्तिर्दोष इति भावः ।

प्रगल्भोक्तेन दूषयति—अत्रेति । किं स्वविषयकत्वं प्रत्यासत्तिविशेषणतया [7]पृथगुपादीयते जन्यादिपदवत् तल्लाभाय वा । तत्राद्यं निराकृत्य द्वितीयं निरस्यति—भिन्नेति ।

ननु लाघवाज्जन्यविशिष्टप्रत्यक्षे विशेषणसंनिकर्षो हेतुरिति भ्रमेऽपि[8] संबन्धान्तराभावेन रजतांशे ज्ञानस्य प्रत्यासत्तित्वकल्पनान्नातिव्याप्तिरित्यरुचेराह—

---

1. ख. लौकिक-
2. क. स्वविषयगेत्यस्य
3. क. °ज्ञानमात्रेण
4. ख. °ज्ञानजन्यत्वं
5. क. लौकिकमित्ये-
6. ग. 'अभावेति । अत्र' नास्ति ।
7. ग. पृथगुपनीयते
8. ख. 'अपि' नास्ति ।

### प्रकाशः

जन्यादिपदवत्तल्लाभायैव तदुपादाने इदं रजतमिति भ्रमेऽतिप्रसङ्गात्, तस्य सत्य-विशिष्टप्रत्यक्षत्वाभावेन ज्ञानरूप(संनिकर्षात्) [संनिकर्षाजन्यत्वात्]घटाभाव इत्यादौ प्रतियोगित्वांशेऽतिव्याप्तिः आत्मानं जानामीत्यात्मांशेऽव्याप्तिश्च। न च परमाणुमहं जानामीत्यत्र परमाण्वंश इवात्मांशेऽप्यलौकिकत्वमेवेति वाच्यम्। संयोगरूपसंनिकर्षस्य सत्त्वात् तज्जन्यत्वेन लौकिकत्वस्यावश्यकत्वात्।

---

### न्यायशिखामणिः

**घटाभाव** इति। **प्रतियोगित्वांश** इति। अज्ञातस्यैव तस्य प्रकारत्वाभ्युपगमेन [1]तत्र ज्ञानरूपसंनिकर्षकल्पनानवकाशादिति भावः।

नन्वंशविवक्षा [2]नाश्रीयत इति न प्रतियोगित्वांशेऽतिव्याप्तिः। न चैवमभाव-प्रत्यक्षाव्याप्तिः। सर्वांशलौकिकप्रत्यक्षस्यैवात्र संग्राह्यत्वादित्यरुचेराह—**आत्मान-मिति**। नन्वात्मानमादाय ज्ञानप्रत्यासत्तिजन्यत्वादनुव्यवसायस्य [3]तत्राव्याप्तिरिति न युक्तम्, सर्वांशे तस्य लौकिकत्वाभावेनासंग्राह्यत्वादित्याशङ्क्य निराकरोति—**न चेति**।

ननु ज्ञानस्य [4]प्रत्यासत्तित्वमसत्येव योग्यगोचरलौकिकसंनिकर्षे कल्प्यम्। अन्यथा विशेषणांशे ज्ञानस्य विशेष्यांशे सामान्यस्य च सर्वत्र सत्त्वेन सर्वांशे प्रत्यक्षमात्रस्यालौकिकत्वापत्तौ लक्ष्यलौकिकप्रत्यक्षस्यैवासिद्धेः। तथा चात्मविशेष्य-कप्रत्यक्षजनकमनस्संयोगः आत्मनि योग्यसंनिकर्ष इति स एव [5]हेतुर्न ज्ञान-मित्यात्मज्ञानानुव्यवसाये नाव्याप्तिः। अत एव घट इत्यादिज्ञानेऽपि नाव्याप्तिः। उक्तयुक्त्या तत्रापि संयोगस्यैव प्रत्यासत्तित्वात्। तस्मादेतच्चिन्त्यम्।

जयदेवमतमाह—**एतेनेति**। **जन्येति**। अन्यथा यथाश्रुते धारावाहिक-बुद्ध्यव्याप्तिः अनुमित्यादिवारकविशेषणवैयर्थ्यं चेति भावः।

---

1. ग. 'तत्र ज्ञानरूप.... ...आत्मानमिति' इति ग्रन्थः त्रुटितः।
2. घ. न क्रियते
3. क. तत्रातिव्याप्तिः
4. ग. प्रत्यासत्तित्वमस्त्येव घ, प्रत्यासत्तित्वमस्त्येव
5. क. ग. हेतुः। अतो जानामीत्यात्मज्ञानानु-

### प्रकाशः

एवं च घट इत्यादिज्ञाने पुरोवर्त्यंशे घटत्वादिरूप[1]सामान्यरूपप्रत्यासत्तेरपि हेतुत्वात् तत्राप्यव्याप्तिः ।

एतेन जन्यस्वविषयकसविकल्पकत्वेन यस्य ज्ञानस्य जनकत्वं तदजन्यत्वं विवक्षितम् । तेन च रूपेण ज्ञानरूपप्रत्यासत्तेरेव जनकत्वम् । अतादृशस्य प्रत्यासत्तित्वाभावात् । एवं च सविकल्पकत्वादिमात्रेणाति[2]प्रसक्तेन तज्जनकत्वस्याप्रसिद्धतया जन्यादिपदमप्रसिद्धिवारकतया सार्थकम् । यदि चैतदपि अतिप्रसक्तं स्यात् तदा विशेषणान्तरमपि प्रवेश्यमिति परास्तम् । उक्तातिव्याप्तिदोषादिति ।

---

### न्यायशिखामणिः

ननु जन्यस्वविषयकेति व्यर्थम्, विशेषणज्ञानस्य सविकल्पकत्वेन रूपेण [3]विशिष्टप्रत्यक्षं प्रत्यहेतुतया तत्त्वेन तदजन्यत्वस्याव्याप्तिदोषाभावात् । न च सविकल्पकत्वेन जनकत्वस्य प्रतियोगिनो न [4]क्वचित्प्रसिद्धिरिति स्वविषयकपदम् । दत्ते च [5]स्वविषयविषयकसविकल्पकत्वेन तज्जन्यत्वस्य स्मृतौ प्रसिद्धिः । जन्यपदं च विज्ञानमात्रस्य तत्त्वेन रूपेण भगवज्ज्ञानजन्यतया अव्याप्तिवारणायेति वाच्यम् । ईश्वरज्ञानस्य स्वविषयकसविकल्पकत्वेऽप्युपादानप्रत्यक्षतयैव जनकत्वेन तत्त्वेन जनकत्वासिद्धेः । सिद्धौ वा जन्यपदोपादानेऽपि [6]जन्यस्वविषयसविकल्पकत्वेन जनकत्वस्याप्रसिद्धिर्दुर्वारेत्यत आह—तेन चेति । [7]अतादृशस्येति । स्वविषयकेनापि निर्विकल्पकज्ञानेन सविकल्पकेन च भिन्नविषयेण तादृशेनापि परमेश्वरज्ञानेनोपनीत[8]प्रत्यक्षाजननादुक्तरूपेणैव ज्ञानप्रत्यासत्तेर्जनकत्वम् । न च भगवज्ज्ञानस्य सर्वकार्यहेतोरत्रापि स्वरूपयोग्यत्वात् न तत्रातिप्रसङ्गो दोष इति जन्यपदवैयर्थ्यमिति वाच्यम् । ज्ञानप्रत्यासत्त्यतिरिक्तसकलकारणसंपत्तौ [9]ईश्वरज्ञानादस्मदादेरुपनीतप्रत्यक्षापत्तेः । कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्वे कार्योत्पत्तेरावश्यकत्वादिति भावः ।

---

1. ख. °प्रामाण्यरूप-
2. क. °प्रसक्तेरजनक-
3. क. विशिष्टवैशिष्ट्यप्रत्यक्षं
4. घ. क्वचिदपि प्रसिद्धिः
5. ग. 'स्वविषयविषयक......ईश्वरज्ञानस्य' इति ग्रन्थस्त्रुटितः ।
6. ग. जन्यविषय-
7. ग. अतादृशस्यापि स्व-
8. घ. °प्रत्यक्षजननात्
9. ग. ईश्वरज्ञानादेरुपनीत-

**प्रकाशः**

अत्र ब्रूमः। यदंशे प्रत्यासत्तिभूतज्ञानाजन्यत्वं तत्र लौकिकत्वमित्येव जन्येत्यादिना विवक्षितम्। न च रजतभ्रमे घटाभाव इत्यादौ प्रतियोगित्वांशे चातिव्याप्तिरिति वाच्यम्। तस्य लौकिकत्वेनैवेष्टत्वात्। न च लौकिकप्रत्यासत्त्यजन्यत्वान्न तथा। न हि लौकिकप्रत्यासत्तिजन्यत्वं लौकिकत्वम्, येन तथा स्यात्। किं तु उक्तरूपमेव। न च तदेव लौकिकत्वं किं न स्यात्,

---

**न्यायशिखामणिः**

ननु जन्यस्वविषयकसविकल्पकत्वेन हेतुत्वं ज्ञानप्रत्यासत्तावपि न प्रसिद्धम्। विशिष्टवैशिष्ट्यप्रत्यक्षहेतुदण्डादिज्ञानेऽतिप्रसक्तत्वादिति नरहरिमिश्रोक्त-[1]दोषमनूद्य परिहरति—यदि चेति। विशिष्टवैशिष्ट्यज्ञानत्वं हि विशेषणान्तरावच्छिन्नविशेषणविषयकत्वम्। तथा च दण्डज्ञानाद्दण्ड[2]विशिष्टज्ञानं दण्डत्वज्ञानात्तद्विशिष्टताधीरिति विशिष्टज्ञानत्वावच्छिन्नहेतुविशेषणज्ञानादेव तन्निर्वाहे विशिष्टवैशिष्ट्यज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानत्वेन [3]हेतुत्वाकल्पनात् न तद्विशेषणविषयसविकल्पकापेक्षेति कुतस्तत्रातिप्रसङ्ग इति सूचयति—यदि चेति। विशेषणान्तरमिति। वर्तमानार्थग्राहकतानियतयोग्यगोचरप्रत्यासत्त्यसहकृतत्वमित्यर्थः। दण्डी पुरुष इत्यत्र च संयोगादिताद्दशप्रत्यासत्तिसहकृतत्वान्नातिप्रसङ्ग इति भावः। एतच्छब्दार्थमाह—उक्तेति। उपाध्यायमते प्रगल्भोक्तदूषणं स्वयमुद्धरति—अत्र ब्रूम इति।

ननु लौकिकप्रत्यासत्तिजन्यत्वं ज्ञानस्य लौकिकत्वे तन्त्रम्। तथा च ताद्दशसंयोगाद्यजन्यत्वात् भ्रान्तिज्ञानादेर्न लौकिकतया संग्राह्यत्वमित्याशङ्क्य निराकरोति—न चेति। न हीति। लौकिकत्वं हि प्रत्यासत्तेर्लौकिकप्रत्यक्षहेतुत्वमित्यात्माश्रयादिति भावः। ननु वर्तमानार्थग्राहकतानियतत्वं प्रत्यासत्तेर्लौकिकत्वमित्यतो नात्माश्रयः। तथा च लौकिकप्रत्यासत्तिजन्यत्वमेव लौकिकत्वमित्याशङ्क्य निरस्यति—न चेति। एवमिति। लौकिकप्रत्यासत्तिजन्यत्वं [4]न लौकिकत्वमिति सिद्धे सतीत्यर्थः। तत्रान्यकृततदुद्धारप्रकारमाह—केचित्त्विति। [5]जन्य-

---

1. ग. 'दोष' नास्ति।
2. ग. विशिष्टत्वज्ञानं दण्डज्ञानात्तद्विशिष्टधीः
3. घ. हेतुत्वकल्पनान्न तत्र विशेषण-
4. क. 'न' नास्ति।
5. अन्त्यविशिष्टेति।

प्रकाशः

तथा च तत्रालौकिकत्वमेवास्त्विति वाच्यम् । स्वतन्त्र[1]परिभाषाया अपर्यनुयोज्यत्वात् । एवमात्मानं जानामीत्यात्मांशे संयोगरूपसंनिकर्ष[2]जन्यत्वेऽप्यलौकिकत्वमेव । घट इत्यादिज्ञाने पुरोवर्त्यंशेऽपि तथैवेति तदव्याप्तिर्न दोष इति मन्तव्यम् ।

केचित्तु जन्यविशिष्टप्रत्यक्षमात्र एव विशेषणसंनिकर्षो हेतुरिति रजतांशे ज्ञानप्रत्यासत्तिजन्यत्वमेवेति नोक्तदोष इत्याहुः ।

अत एव जन्यस्वविषयसविकल्पकत्वेन यस्य ज्ञानस्य जनकत्वं तदजन्यत्वं विवक्षितमित्यादिकं निरवद्यं बोध्यम् ।

---

न्यायशिखामणिः

विशिष्टेति । न तु सत्यविशिष्टप्रत्यक्षहेतुत्वं गौरवादिति भावः । रजतांश इति । तत्र लौकिकसंनिकर्षाभावेन ज्ञानप्रत्यासत्तेरावश्यकत्वादिति भावः । तथाप्यव्याप्तिर्न निराकृतेत्यस्वरसं सूचयति—आहुरिति । जन्यस्वविषयसविकल्पकत्वेन तदजन्यत्वं जन्येत्यादिना विवक्षितम् । इदं च यथाश्रुतम् । [3]ज्ञानप्रत्यासत्त्यजन्यत्वं तु न तथा । तथा च यथाश्रुतेनोपपत्तौ न तादृशार्थो युक्त इत्युपाध्यायमते [4]सावद्यतां सूचयन् जयदेवमतमाह—अत एवेति । [5]अतिव्याप्त्यादेरत्र ब्रूम इत्यत्र निराकृतत्वादेवेत्यर्थः ।

वस्तुतो जयदेवमतनिरवद्यत्वाय रुचिदत्तमिश्रोक्तो दोषनिरासप्रकारो नानुसर्तव्यः । विशिष्टप्रत्यक्षमात्रे विशेषणसंनिकर्षस्य हेतुत्वव्यवस्थापनान्नाद्यो दोषः । जनकतावच्छेदके [6]विशेषणान्तरदानेन ज्ञानप्रत्यासत्तेस्तत्र तद्धटितावच्छेदकानवच्छिन्नतया आत्मज्ञानानुव्यवसायादिकं प्रत्यहेतुत्वात् न द्वितीयोऽपीति द्रष्टव्यम् ।

अत्रेदमालोचनीयम् । उपनयस्य लाघवेन प्रमाणमात्रसहकारितया अनुमित्यादेर्जन्यस्वविषयकसविकल्पकत्वेन तज्जन्यतया द्वितीयविशेषणेनैव तद्वारणे

---

1. क. 'परि' नास्ति
2. क. ०त्त्वेऽपि
3. ग. ज्ञानप्रत्यासत्तिजन्यत्वं तु
4. क. अवद्यतां
5. ग. अभ्यासत्यादेः
6. ग. विशेषणान्तरादानेन

पञ्चमवैयर्थ्यम्। किं च जन्यपदं व्यर्थम्। स्वविषयकसविकल्पकत्वेन जनकत्वस्य ज्ञानप्रत्यासत्तौ संभवेनाप्रसिद्धि[5]वारकत्वाभावात्।

न चैवमीश्वरज्ञानस्यापि प्रत्यासत्तित्वे ततोऽप्यस्माकमुपनीतप्रत्यक्षापत्तिरित्युक्तमिति वाच्यम्। तर्हि [1]परमात्मवृत्तिज्ञानप्रत्यासत्त्या तत्प्रसङ्गवारणाय [2]स्वात्मवृत्तीति विशेषणस्याप्यावश्यकत्वापत्तेः। यदि च तस्य व्यधिकरणत्वादेव न तत्प्रसङ्ग इति तदनुपादनम्, तदा परमेश्वरज्ञानमपि तथेति तुल्यम्। अत एव पक्षतायां [3]तत्पुरुषीयत्वविशेषणं नोपादेयमिति वक्ष्यते।

अपि च सविकल्पकेति व्यर्थम्। लाघवेन स्वविषयकज्ञानत्वेनैव प्रत्यासत्तित्वात्। न च निर्विकल्पकेऽतिप्रसङ्गः। तस्यापि तत्त्वे बाधकाभावात्। ज्ञानं प्रत्यासत्तिरिति सिद्धान्तप्रवादाच्च।

केचित्तु निर्विकल्पकस्यापि प्रत्यासत्तित्वे प्रमेयमिति ज्ञानादपि सुरभि चन्दनमिति ज्ञानापत्तिः। तथा चोपनीतज्ञाने यत्प्रकारेणोपनीतं भासते तत्प्रकारेण तदुपस्थितिरेव [4]तत्र प्रत्यासत्तिर्वाच्या। ततश्च निर्विकल्पकस्य निष्प्रकारत्वान्न प्रत्यासत्तित्वमित्यर्थवत् सविकल्पकपदमिति।

तच्चिन्त्यम्। तर्हि सर्वमपि विशेषणज्ञानं विशेषणतावच्छेदकप्रकारकत्वेनैव हेतुः स्यात्। अन्यथा प्रमेयमिति ज्ञानाद्घट इति विशिष्टप्रत्यक्षापत्तेः। तथा च तस्य विशेषणज्ञानत्वेनाहेतुत्वे यदेव नियामकं तदेव [5]तस्याप्रत्यासत्तित्वेऽप्यस्तु।

किं च प्रमेयमिति ज्ञानादापाद्यमानं सौरभत्वविशिष्टसौरभ[6]विशिष्टज्ञानम्। विशेषणतावच्छेदकप्रकारकविशेषणज्ञानं तद्धेतुरिति तद्विलम्बादेव तदभावः, न तु सविकल्पकरूपप्रत्यासत्तिविरहात्। न च विशेषणान्तरावच्छिन्नविशेषणविषयत्वं विशिष्टवैशिष्ट्यज्ञानत्वम्, तच्चोभयविशेषणज्ञानादेवोपपन्नमिति वाच्यम्। तथा सति विशिष्टज्ञानविशेषणज्ञानसामान्ययोः कार्यकारणभावानुपपत्तेः। तस्य यद्विशेषयोरिति न्यायमूलकत्वात्। तस्माज्जयदेवमतं निरवद्यमित्ययुक्तम्। तथोपाध्यायमतमपि, उक्ताव्याप्तेरेव।

---

1. क. परात्मवृत्तिज्ञानस्य प्रत्यासत्तित्वप्रसङ्गवारणाय
5. ग. °वारकाभावात् घ. °वारकत्वाभावाभावात्
2. घ. आत्मवृत्तीति
3. क. ग. तत्पुरुषीयविशेषणम्
4. क. तत्प्रत्या-
5. ग. तस्याः प्रत्यासत्ति-
6. ग. 'विशिष्ट' नास्ति।

## न्यायशिखामणिः

नन्वात्मज्ञानानुव्यवसायादेरलौकिकत्वान्न तदव्याप्तिर्दोष इत्युक्तमिति चेत् किमेतल्लक्षणविरहादलक्ष्यत्वम्[1], प्रयोजकान्तरविरहाद्वा, स्वतन्त्रसांप्रदायिकभाषाविरोधाद्वा । नाद्यः, अव्याप्तिविरहे सत्येतस्य लक्षणत्वम्, एतस्य लक्षणत्वे चैतद्विरहात् तस्यालक्ष्यत्वे सत्यव्याप्तिविरह इत्यन्योन्याश्रयात् । न द्वितीयः, लौकिकप्रत्यासत्तिजन्यत्वरूपप्रयोजकान्तरसत्त्वात् । नान्त्यः, आत्मज्ञानानुव्यवसायादिरलौकिक इति परिभाषाविरहात् । एतस्य लौकिकत्वेऽपि [2]प्रत्यक्षं द्विविधं लौकिकमलौकिकं चेति भाषाया विरोधाभावात् । किं चैतन्मतेऽपि जन्यसविकल्पकेति व्यर्थमेव । स्वविषयकज्ञानत्वस्यैव प्रत्यासत्तितावच्छेदकतया[3] तल्लाभानुपयोगित्वात् । तस्मादेतदप्ययुक्तमेवेति ।

अत्र ब्रूमः । योगेत्याद्यजन्यान्तमेकं लक्षणम् । अनागतेत्याद्यपरम् । तत्र जन्यप्रत्यक्षस्येत्युभयत्र लक्ष्यनिर्देशकं लौकिकप्रत्यक्षपरम् । तत्राद्यं प्राचीनलक्षणत्वात् द्वितीयलक्षणे लक्ष्यव्यवस्थापकमपि । तथा च जन्यत्वमेव [4]द्वितीयविशेषणम् । तच्चेश्वरज्ञानवारणाय । सविकल्पकपदेन तु ज्ञानमुपात्तम् । एवं च स्वविषयकज्ञानत्वेन यस्य जनकत्वं तदजन्यत्वं विवक्षितम् ।

न च लक्षणे प्रत्यक्षपदाप्रवेशात् अनुमित्यादावतिप्रसङ्गो दुर्वार इति वाच्यम् । ज्ञानस्योपनीतज्ञानमात्रे सविषयकज्ञानत्वेन तत्प्रत्यक्षे ज्ञानप्रत्यासत्तित्वेन हेतुतेत्यनुमित्यादेरप्युपनीतगोचरतया तत्त्वेन तज्जन्यत्वात् । यदंश इत्यादिविवक्षा च पूर्ववदिति न पूर्वोक्तदोषः ।

यद्वा सविकल्पकपदं ज्ञानप्रत्यासत्तिपरम् । तथा च यद्विषयांशे ज्ञानप्रत्यासत्त्यजन्यत्वं तदंशे [5]लौकिकप्रत्यक्षत्वमिति सूचनाय स्वविषयकपदम् । अथवा स्वविषयकपदं प्रत्यासत्तिपरम् । सविकल्पकपदं तु ज्ञानपरम् । तथा च प्रत्यासत्तिभूतज्ञानजन्यत्वं विवक्षितम् । न चात्रांशविवक्षापि । सर्वांशलौकिकप्रत्यक्षमेव तु संग्राह्यमिति नोक्तदोषः ।

---

1. क. °दलौकिकत्वं
2. क. घ. प्रत्यक्षविषयं लौकिकं
3. ग. घ. °दकत्वेन
4. ग. ईश्वरविशेषणम् ।
5. 'लौकिकप्रत्यक्षत्वमिति......ज्ञानप्रत्यासत्त्यजन्यत्वात्' इति ग्रन्थस्त्रुटितः

अन्ये तु सामान्यज्ञानप्रत्यासत्त्योरिन्द्रियसंबद्धविशेषणतान्तर्भावात् तज्जन्यं प्रत्यक्षं संग्राह्यमेवेति ।

---

प्रकाशः

अनागतेत्यनेन तादृशप्रत्यासत्ति[1]जातीयान्यत्वं विवक्षितम् । तेनानागतागोचरत्ववर्तमानत्वादिरूपसामान्यप्रत्यासत्तिजन्यप्रत्यक्षे नातिव्याप्तिः ।

---

न्यायशिखामणिः

[2]यद्यप्यन्त्ये पक्षद्वयेऽपि अनुमित्यादेर्ज्ञान[3]प्रत्यासत्त्यजन्यत्वादुक्तदोषानतिवृत्तिः, तथापि प्रत्यक्षपदस्य काकाक्षिन्यायेन लक्षणेऽपि विवक्षितत्वात् [4]सर्वं समञ्जसमिति संक्षेपः ।

ननु वर्तमानत्वरूपसामान्यप्रत्यासत्तिजन्ये विद्यमानं घटं [5]जानामि [इति प्रत्यक्षे] परमाणुमहं जानामीति ज्ञानप्रत्यासत्तिजन्ये चातिव्याप्तिरित्याशङ्क्य उपाध्यायमतमाह—अनागतेत्यनेनेति । तादृशेति । यद्यनागतसाक्षात्कारहेतुप्रत्यासत्तिवृत्तिधर्मवत्त्वं[6] तज्जातीयत्वं तदा संयोगादिरपि तथा स्यात् । तन्मात्रवृत्तिधर्मवत्त्वं च वर्तमानत्वादावप्यसिद्धम् । तद्वृत्तिसामान्यप्रत्यासत्तित्वाश्रयत्वं तु ज्ञानलक्षणायामसिद्धमिति तज्जन्यप्रत्यक्षेऽतिव्याप्तितादवस्थ्यम् । तस्मादेतदापाततः ।

वस्तुतस्तु — वर्तमानार्थग्राहकतानियतान्यप्रत्यासत्त्यन्यत्वं लक्षणम् । तन्नैयत्यं च प्रत्यासत्तिमात्रे [7]विवक्षितमिति वर्तमानत्वादिप्रत्यासत्तिव्यक्तौ तन्नैयत्यसत्त्वेऽपि नातिप्रसङ्गः । यद्यपि वर्तमानार्थग्राहकतानियतप्रत्यासत्तिजन्यत्वमेव विवक्षितुं युक्तमिति नञ्द्वयवैयर्थ्यम्, जन्यप्रत्यक्षपदवैयर्थ्यं च । तथापि यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यमिति ध्येयम् ।

ननु तयोः संग्राह्यत्वे लक्षणस्य तत्राव्याप्तिरित्याशङ्क्य जयदेवमतमाह—तथा चेति । योगजेति । मूले अनागतसाक्षात्कारहेतुप्रत्यासत्तिपदं योगजधर्मपर-

---

1. ख. ॰जातीयत्वम्
2. ग. यद्यप्यत्र पक्ष-
3. ग. ॰प्रत्यासत्तिजन्य-
4. ग. घ. 'सर्वं समञ्जसम्' इति नास्ति ।
5. क. जानामीति
6. क. ॰धर्मत्वं
7. घ॰ विवक्षितम्, तेन

(यद्वा विषयत्वेन) [विशेष्यत्वेन] स्वविशेष्यजन्यं ज्ञानं जन्यप्रत्यक्षम्। आत्मविशेष्यकानुमितिशाब्दस्मृतिषु विशेष्यत्वेन तस्य न हेतुत्वम्, विशेष्यं विनापि तासामुत्पत्तेः किं तु समवायित्वेन।

---

प्रकाशः

अन्ये त्विति। तथा च तन्मते योगजधर्माजन्यजन्य[1]प्रत्यक्षत्वं लौकिकप्रत्यक्षलक्षणं बोध्यमिति वदन्ति। तच्चिन्त्यम्। लक्ष्यतावच्छेदकलक्षणयोरभेदापत्तेः। तस्मात् सामान्यज्ञानप्रत्यासत्तिभिन्नानागतगोचरसाक्षात्कारहेतुप्रत्यासत्त्यजन्यजन्यसाक्षात्कारित्वं तल्लक्षणं बोध्यम्। [न च] तादृशी प्रत्यासत्तिर्योगजधर्म एवेति पुनरप्यभेद इति वाच्यम्। उपाधिभेदेन भेदात्। अत्रानभिमतिबीजं तु प्रत्यासत्तित्रयजन्ये लोकानां लौकिकत्व[2]व्यवहारात् (तदितिक्रमः) [तदतिक्रमः] इति।

विशेष्यत्वेनेति। ननु जन्यप्रत्यक्षमिति लक्ष्यनिर्देशात् जन्यप्रत्यक्षमात्रस्य लक्षणमिदं लौकिकप्रत्यक्षमात्रस्यैव लक्षणान्तरं वा। नाद्यः, योगिप्रत्यक्षाव्याप्तेः। न च योगिज्ञानमपि विषयजन्यमिति मतेनेदमिति वाच्यम्। अतीतमात्रविषयके ज्ञानसामान्यप्रत्यासत्तिजन्ये योगिप्रत्यक्षांशे च तथाप्यव्याप्तेः। विशेष्यस्य

---

न्यायशिखामणिः

मिति भावः। लक्ष्यतावच्छेदकेति। अव्याप्तिवारणाय तदुभयव्यावर्तकविशेषणाघटितस्यैव तस्यापि वक्तव्यत्वादिति भावः।

[3]किं तर्हि तन्मते लक्षणमित्याशङ्क्य स्वयं तदाह—तस्मादिति। वस्तुतस्तु इदमेवापाततः। जयदेवोक्तलक्षणापेक्षया अस्य गुरुत्वात्। [4]न चात्र लक्ष्यतावच्छेदकाभेदः, अन्योन्यात्यन्ताभावभेदेन भेदसंभवात्।

जयदेवोक्तं तद्बीजमाह—[5]अत्रेति। जन्यप्रत्यक्षस्य लक्षणमित्युपाध्यायाः, लौकिकप्रत्यक्षस्येति जयदेवमिश्राः। तदुभयं क्रमेण दूषयति—नन्वित्यादिना।

---

1. क. ॰प्रत्यक्षं
2. ख. ॰व्यवहाराभावात्
3. क. 'किं तर्हि......भेदसंभवात्' इति ग्रन्थस्त्रुटितः।
4. ग. नात्र
5. ग. तत्रेति

## प्रकाशः

तत्रासत्त्वेन अहेतुत्वात् । नान्त्यः, विशिष्टप्रत्यक्षे विशेषणाद्यंशे अव्याप्तेः । तदंशे विशेष्याजन्यत्वात् । न चात्र नांशविवक्षा, ज्ञानं चैकमेव, तत्र च तज्जन्यत्वमक्षतमेवेति नोक्तदोष इति वाच्यम् । तथात्वे परमाणुमहं जानामीत्यादौ परमाण्वाद्यंशेऽतिव्याप्तेः । निर्विकल्पकाव्याप्तेश्च । तत्र वैशिष्ट्याभाने विशेष्याभानात् । न च विशेष्यपदमुभयत्र विषयपरम्, तथा च विशेषणाद्यंशे नाव्याप्तिरिति वाच्यम् । इदं रजतमित्यादिभ्रमे रजतांशेऽव्याप्तेः । तस्यापि लौकिकत्वेनाभ्युपेतत्वादिति चेत्—

---

## न्यायशिखामणिः

[1]निर्विकल्पकाव्याप्तिरिति दोषे सत्येवाह—**नाद्य इति । अतीतेति ।** अतीतमात्रविशेष्यकत्वं ज्ञानप्रत्यासत्तिजन्यज्ञानस्यैव विशेषणम् । सामान्यस्य लौकिकसंनिकृष्टस्यैव प्रत्यासत्तितया तज्जन्यस्य वर्तमानविशेष्यकत्वनियमात् ।

ननु न तावत् ज्ञानप्रत्यासत्तिजन्ये बहिरिन्द्रियजतादृशप्रत्यक्षेऽव्याप्तिः । तस्य वर्तमानविशेष्यकत्वनियमात् । नापि मानसे वर्तमानविशेष्यक[2]जन्यप्रत्यक्षस्यैव लक्ष्यत्वेन विवक्षितत्वादित्यरुचेराह—**सामान्येति ।** अतीतानागतवर्तमानविशेष्यके सामान्यप्रत्यासत्तिजन्ये योगजधर्मजन्ये च प्रत्यक्षे अतीतानागतांशेऽव्याप्तिरित्यर्थः ।

अन्त्येऽप्यंशविवक्षा अस्ति न वा । तत्राद्यं निराकृत्य द्वितीयमाशङ्क्य [3]निरस्यति—**न चेति ।**

यदंशे लक्षणं तदंशे लौकिकत्वमित्यंशविवक्षानावश्यकत्वेऽपि यस्य लक्षणं तस्य सर्वविषयांशे लौकिकत्वं विवक्षितम्, लौकिकत्वमात्रं वा । तत्र नाद्य इत्याह—**परमाणुमिति ।** न द्वितीय इत्याह—**निर्विकल्पकेति । विषयपरमिति ।** एतच्चोपलक्षणम्, अंशविवक्षा चेत्यपि द्रष्टव्यम् । तेन परमाण्वंशे नातिव्याप्तिः । अत एवांशविवक्षामादाय दूषयति—**इदमिति ।**

---

1. क. 'निर्विकल्प.......नाद्य इति' इति ग्रन्थो न दृश्यते ।
2. 'जन्य' नास्ति ।
3. निराकरोति

## प्रकाशः

अत्र ब्रूमः। जन्यप्रत्यक्षस्यैव लक्षणमिदम्। तज्जन्यजातीयत्वस्य विवक्षितत्वान्नोक्तदोषः। तज्जातीयत्वमनुभवत्वव्याप्यजात्या बोध्यम्। एवं च जन्यत्वे सतीत्यपि विशेषणं प्रवेश्यम्। अतो नेश्वरज्ञानेऽतिव्याप्तिः। [यद्वा]विशेष्यपदं विषयपरमेव। विशेष्यत्वस्य विषयविशेषतया लाघवेन विशेषणनिर्विकल्पकविषयसाधारणतया अनुगतत्वेन च विषयत्वस्यैव तद्धेतुतावच्छेदकत्वात् तत एव फलसिद्धौ विशेषसामग्र्यन्तराकल्पनात्।

न च विषयत्वमपि ज्ञानसमानकालीनतया न ज्ञानपूर्ववर्तितावच्छेदकम्, कार्यपूर्वकालीनस्यैव [1]हि हेतुतावच्छेदकत्वादिति वाच्यम्। हेतोस्तथात्वनियमेऽपि हेतुतावच्छेदकस्य[2] तथात्वे मानाभावात्।

---

## न्यायशिखामणिः

ननु भ्रमस्य रजतांशे लौकिकसंनिकर्षाजन्यत्वेनालक्ष्यत्वान्नाव्याप्तिर्दोष इत्यत आह—तस्यापीति। अभ्युपेतत्वादिति। अत्र ब्रूम इत्यत्रेति शेषः। उपाध्यायमतोक्तं दूषणं स्वयमुद्धरति—अत्रेति। अनुमित्याद्यतिव्याप्तेराह[3]—तज्जातीयत्वं चेति। यद्यपि साक्षात्त्वेन साजात्यविवक्षायामप्युक्तदोषनिरासः, तथाप्यस्य प्रत्यक्षत्वपर्यवसाने जन्यपदावश्यंभावेन[4] जन्यप्रत्यक्षत्वमेव लक्षणमुक्तं स्यात्। तथा च [5]लक्ष्यतावच्छेदकाभेदप्रसङ्ग इति भावः।

विशेष्यपदमिति। यद्यपि यथाश्रुतेऽपि न दोषः, प्रत्यक्षमात्रे तज्जातीयत्वसत्त्वात्, तथापि विषयत्वविवक्षाविरहे [6]विशेष्यत्वस्य [7]न्यूनवृत्तित्वेनानवच्छेदकतया लक्षणासंभवादिति भावः। ननु विशेषसामग्र्यां विशेष्यत्वमवच्छेदकमिति नासंभव इत्यत आह—तत एवेति। उपनीतेति। अनागतस्याप्युपनयसंभवादिति भावः। विषयत्वविवक्षायामपि अवच्छेदक[8]गर्भलक्षणासंभव इति शङ्कते—न चेति।

---

1. क. वह्निहेतुता-
2. क. ०दकत्वस्य
3. क. ग. ०व्याप्तेरित्याह
4. घ. ०भावे च
5. घ. लक्ष्यतावच्छेदकभेद-
6. ग. घ. विशेष्यस्य
7. क. 'न्यूनवृत्तित्वेन' नास्ति।
8. क. 'गर्भ' नास्ति।

### प्रकाशः

न च ([1]पूर्वकालीने)[पूर्वकाले]हेतुताग्रहाभावात् प्रवृत्त्यनुपपत्तेस्तथात्वमिति वाच्यम् । उपनीतधर्मावच्छेदेनापि तद्ग्रहसंभवात् ।

[2]न च विषयत्वस्याकाशादावतिप्रसक्तत्वान्न तद्धेतुतावच्छेदकम् । प्रत्यक्ष-विशेषे स्वविषयत्वस्य तथात्वात् ।

अस्तु वा विशेष्यत्वेनेत्यस्य सामान्यादिप्रत्यासत्तित्रयभिन्नस्वजनकेन्द्रिय-प्रत्यासत्त्याश्रयत्वेनेत्यर्थः । तथा च नोक्तदोष इति । केचित्तु—लौकिकप्रत्यक्ष-लक्षणमेवेदम् । एतन्मते रजतभ्रमाद्यंशोऽसंग्राह्य एवेत्याहुः ।

---

### न्यायशिखामणिः

[3]ननूपनयोऽपि तथा न संभवति, पूर्वं [4]तद्वृत्तित्वेन विषयत्वस्याग्रहात् । न च यदवच्छेदेन [5]यद्ग्रहः तद्धर्मग्रह एव तद्भानसामग्री । अन्यथा शुक्तौ-रजतत्वस्य प्रागग्रहात् तज्ज्ञानानुपपत्तेः । तथा च स्वजनकेन्द्रियप्रत्यासत्त्याश्रय-त्वावच्छेदेन विषयत्वग्रहात् पुरोवर्तिनि च तद्धर्मग्रहे [6]तदुपनयाविरोध इति वाच्यम् । तथा सत्यावश्यकत्वात् पूर्वकालीनत्वाच्च स एव धर्मोऽवच्छेदकोऽस्तु ।

किं च [7]स्वविषयत्वेन [8]तज्जन्यप्रत्यक्षजातीयत्वं जन्यप्रत्यक्षलक्षणमित्य-युक्तम् । [9]स्वपदात् प्रकृतजन्यप्रत्यक्षपरामर्शे आत्माश्रयात् प्रत्यक्षमात्रपरामर्शे तद्विषयत्वस्याकाशादावपि सत्त्वात् । अपि च यत्र सामुद्रिकविदा [10]भावियौव-राज्यमाख्यातम्, तत्र प्रजापालनरूपराज्यहेतुतावच्छेदकं चतुरङ्गबलत्वम् । [11]तस्य च भाविनस्तत्रोपनीतस्य भानात् प्रवृत्त्यापत्तिः । यदि चेदानीं तद्बाधनिश्चयान्न प्रवृत्तिः, तदा प्रकृतेऽपि तुल्यमित्यस्वरसादाह—अस्तु वेति । आकाशादावति-प्रसङ्गवारणाय [12]भिन्नान्तं प्रत्यासत्तिविशेषणम् । तत्रैव चक्षुस्संयोगाश्रये तद्द्वार-

---

1. ख. पूर्वपूर्वकाले
2. क. 'न च' नास्ति ।
3. क. घ. 'ननु' नास्ति ।
4. ग. तद्व्यक्तित्वेन
5. ग. 'यद्ग्रहः......प्रत्यासत्त्याश्रयत्वावच्छेदेन' इति ग्रन्थो न दृश्यते ।
6. क. तदुपनय इति ।
7. ग. 'स्व' नास्ति
8. क. तज्जन्यजातीयत्वं
9. क. स्वपदार्थप्रकृतजन्यप्रत्यक्षविषय-त्वस्याकाशादावपि ।
10. क. भावियुवराज्यम्
11. घ. तत्र च
12. क. भिन्नत्वं

यद्वा इन्द्रियजन्यं ज्ञानं जन्यप्रत्यक्षम् । इन्द्रियत्वेन जनकत्वं विवक्षितम् । जन्यप्रत्यक्षमात्रे इन्द्रियत्वेन चक्षुरादीनां कारणता ।

---

**प्रकाशः**

यद्वा पूर्वास्वरसादेवाह—यद्वेति ।

---

**न्यायशिखामणिः**

णाय स्वजनकेति प्रत्यक्षजनकपरम् । चक्षुरादिवारणाय इन्द्रियेति । इन्द्रियविशिष्टप्रत्यासत्त्याश्रयत्वं नेन्द्रियस्येति नोक्तदोष इति भावः ।

नन्वस्य जन्यप्रत्यक्षलक्षणत्वे [1]तज्जातीयत्वं जन्यत्वं चाधिकं प्रवेश्यम् इत्यरुचेर्जयदेवमतमाह—केचित्त्विति । लौकिकेति । एतन्मतेऽपि विशेष्यपदं विषयपरम् । [2]जन्यपदं तु लौकिकपरम् । तथा च [3]विषयत्वेन तज्जन्यत्वं लौकिकप्रत्यक्षस्य लक्षणम् । [3]विषयत्वं च स्वजनकेन्द्रियप्रत्यासत्त्याश्रयत्वम् । स्वपदेन च प्रकृतलौकिकस्यैव परामर्शे गगनादेरयोग्यस्य तज्जनकसंनिकर्षानाश्रयत्वान्नातिप्रसङ्गः ।

नन्विदमवच्छेदकमिन्द्रियेऽतिप्रसक्तम् । संबन्धस्य [4]द्विनिष्ठत्वात् । न चेन्द्रियविशिष्टप्रत्यासत्त्याश्रत्वं न तत्रेति वाच्यम् । तथा सति घटतद्गतरूपादाविन्द्रियाभावेन तद्विशिष्टसंबन्धानुपपत्तेः । न चेन्द्रियं प्रतिपत्तिद्वारा घटादिविषयकम् । तथा च विषयविषयिभावसंबन्धेन तद्घटादिवृत्तीति वाच्यम् । तर्हि इन्द्रियविषयत्वे सति स्वजनकप्रत्यासत्त्याश्रयत्वं तदवच्छेदकमिति फलितार्थः । तथा चेन्द्रियस्यापि तज्जन्यालौकिकप्रत्यक्षद्वारा स्वविषयत्वेन दोषतादवस्थ्यात् । लौकिकप्रत्यक्षद्वारकतद्विषयत्वविवक्षायामात्माश्रयः, स्वजनकपदवैयर्थ्यं कार्यपूर्वकालीनत्वानुपपत्त्यनतिवृत्तिश्चेत्यस्वरसादाह—यद्वेति । पूर्वेति । [5]अस्मादेव पूर्वास्वरसादित्यर्थः ।

वस्तुतस्तु—विषयत्वमुक्तरूपमेव । तत्र चेन्द्रियस्य न विशेषणत्वम् । तच्च घटरूपादिसाधारणम् । न चैवमिन्द्रियेऽतिप्रसङ्गः । तस्यापि तत्त्वे विरोधा-

---

1. क. तज्जातीयजन्यत्वं
2. क. 'जन्यपदंतु लौकिकपरम्' इति ग्रन्थो न दृश्यते ।
3. ग. घ. विषयत्वं च पूर्वोक्तमेवेति नातिप्रसङ्गः ।
4. ग. विषयत्वात्
5. ग. तस्मादेव

**प्रकाशः**

न चेन्द्रियत्व(मनुपपन्नमेव)[मनुपदमेव]मनोगर्भं वक्ष्यमाणम् । मनस्सिद्धिश्च सुखप्रतीतिरिन्द्रियकरणिकेत्यनेन । तथा च मनस्सिद्धाविन्द्रियसिद्धिः[1], [2]इन्द्रियसिद्धौ मनस्सिद्धिरित्यन्योन्याश्रयः । तथा चेन्द्रियत्वेनेत्यस्य स्वजनकप्रत्यासत्तिप्रतियोगित्वेनेत्यर्थ इति वाच्यम् । तथा सतीन्द्रियत्वं [3]चेत्यनेनेन्द्रियत्वनिरुक्तेरसंगतत्वा-

---

**न्यायशिखामणिः**

भावात् । न हीदं प्रत्यक्षविषयत्वव्यवहाराय, येनेन्द्रियातिप्रसङ्गो दोषः स्यात् । किं तु प्रकृतलौकिकप्रत्यक्षलक्षणाय । न च तस्येन्द्रियवृत्तित्वेनानवच्छेदकत्वापत्तौ तद्घटित[4]लक्षणासंभव इति वाच्यम् । इन्द्रियस्य तेनापि रूपेण हेतुत्वस्येष्टत्वात् । न चैवं घटादिविषयासंनिधानेऽपि चाक्षुषादिप्रत्यक्षापत्तिः । विषयत्वरूपावच्छेदकावच्छिन्नेन्द्रियसत्त्वेऽपि विशेष्यादिसंनिकर्षाभावात्, [5]तदोक्तावच्छेदकाभावाच्च । तर्हीन्द्रियपदवैयर्थ्यमिति चेन्न । तस्य स्वरूपकथनार्थत्वात् । [6]तस्मान्न पूर्वास्वरसादयं ग्रन्थ इत्यवधेयम् ।

ननु पूर्वलक्षणे यद्यस्वरसादेतल्लक्षणाभिधानम्, तदेदमप्ययुक्तं दोषसाम्यादित्याशङ्क्य निराकरोति—**न चेति** । नन्वतिप्रसक्तावच्छेदकघटितत्वात् पूर्वत्र भवत्वसंभवः, इह तु तदभावाद्वैषम्यमित्याशङ्क्य अत्रापि विवक्षितलक्षणे तत्साम्यं वक्तुं [7]विवक्षाबीजमाह—**इन्द्रियत्वमिति** । नन्वस्तु वक्ष्यमाणेन्द्रियलक्षणद्वयस्य मनोगर्भता । ततः किमित्यत आह—[8]**मनस्सिद्धिश्चेति** । **स्वजनकेति** । [9]तथा चैतादृशप्रत्यासत्त्याश्रयत्वं विषयेऽतिप्रसक्तमित्यसंभवदोषोऽत्रापि तुल्य इति भावः ।

न तावद्विवक्षितार्थे दोषः, अग्रिमग्रन्थविरोधेन जयदेवकृतविवक्षायाः [10]एवं निरवकाशत्वादित्याह—**तथा सतीति** ।

---

1. ख. °विन्द्रियत्वसिद्धिः
2. ख. इन्द्रियत्वसिद्धौ
3. क. चेत्यनेनेन्द्रियसाधारणनिरुक्तेः
4. ग. °लक्षणापह्नवः
5. क. 'तदोक्तावच्छेदकाभावाच्च' इति ग्रन्थस्त्रुटितः ।
6. घ. 'तस्मान्न' इति नास्ति ।
7. क. विपक्षामाह
8. ग. मनसश्चेति ।
9. घ. तथा च तादृश-
10. घ. एव

अनुगतहेतुं विना अनुगतकार्यस्याकस्मिकत्वापत्तेः । स्मृत्यनुमित्यादौ च मनसो नेन्द्रियत्वेन हेतुत्वम्, किं तु मनस्त्वेन । अन्यथा स्मृत्यादेः साक्षात्कारत्वापत्तेः ।

इन्द्रियत्वं च स्मृत्यजनक(ज्ञानहेतु)[ज्ञानकारण]मनस्संयोगाश्रयत्वम् ।

---

प्रकाशः

पातादिति । सुखप्रतीतिरिन्द्रियकरणिकेत्यतोऽपि मनस्सिद्धिसंभवे अन्योन्याश्रयानवकाशाच्च ।

नन्विन्द्रियत्वस्य प्रत्यक्षनिरूप्यत्वेनान्योन्याश्रय इत्यत आह—इन्द्रियत्वं चेति । इन्द्रियलक्षणस्येन्द्रियजन्यत्वघटितप्रत्यक्षघटितत्वेऽन्योन्याश्रयशङ्कयेदं, प्रथमोक्तजातिरूपलक्षणघटितत्वे तदसंभवादिति ध्येयम् ।

स्मृत्यजनकत्वमत्र स्मृतिजननस्वरूपायोग्यत्वं विवक्षितम् । तेनाजनितस्मृतिज्ञानजनकयत्किंचिन्मनस्संयोग[1]व्यक्त्याश्रयत्वेन आत्मादौ नातिव्याप्तिः । न चैवं [2]मनस्यव्याप्तिः । आत्मादिमनस्संयोगत्वेनैव तत्स्वरूपयोग्यतया तस्य तदयोग्यज्ञानकारणचक्षुर्मनस्संयोगाश्रयत्वात् । स्मृत्यजनकवृत्तीत्यत्र [3]तात्पर्यमित्यन्ये । व्योमादा-

---

न्यायशिखामणिः

नापि यथाश्रुत इत्याह—सुखेति । सकरणिकेति । [4]न चान्योन्याश्रयाभावेऽपि शरीरादिना व्यापारवता सिद्धसाधनान्न तत्सिद्धिरिति वाच्यम् । करणशब्दस्यासाधारणकारणपरत्वादिति भावः । प्रत्यक्षेति । इन्द्रियत्वस्य साक्षात्प्रतीतिसाधनत्वघटितत्वादिति भावः । तदसंभवात्—अन्योन्याश्रयासंभवात् । तथा च प्राचीनेन्द्रियलक्षणस्य जातिघटितत्वपक्षे तेनैव प्रकृतनिर्वाहे न लक्षणान्तरापेक्षेति ध्वनितम् ।

प्राणादिव्यावर्तनार्थं मूले स्मृत्यजनकेत्युक्तम् । तत् स्वरूपयोग्यत्वाभिप्रायमित्याह—स्मृतीति ।

---

1. ख. ०व्यक्त्याश्रयत्वे तादात्म्यादौ
2. ख. मनस्यतिव्याप्तिः
3. क. तात्पर्यंवृत्त्येत्यन्ये
4. ग. घ. न चात्रान्योन्या-

प्रकाशः

वतिव्याप्तिवारणाय ज्ञानकारणेति। तादृशचक्षुर्घटसंयोगमादाय घटादावतिव्याप्तिवारणाय मनःपदम्। न चैवं [1]सामान्यादिप्रत्यासत्तिभूतमनस्संयोगवति घटेऽतिव्याप्तिरिति वाच्यम्। लौकिकत्वेनैव ज्ञानविशेषणात। न च स्वप्नज्ञानजनकमनस्संयोगवत्यां स्वप्नवहननाड्यामतिव्याप्तिः, ज्ञानपदस्य प्रमापरत्वात्।

यद्वा लाघवेन अन्त्यावयवित्वपरिहारेण शरीरतदवयवमनस्संयोगत्वेन साधारणेनैव रूपेण शरीरमनस्संयोगस्य [2]ज्ञानहेतुतया तस्यापि [3]स्मृतिजननस्वरूप-

न्यायशिखामणिः

स्मृत्यजनकेत्यत्र सप्तमीसमासाश्रयणात् संयोगस्य तद्वृत्तित्वलाभ इत्यभिप्रेत्य मतान्तरमाह—स्मृत्यजनकेति। [4]ननु संयोगिनः स्मृत्यजनकत्वे संयोगोऽपि तथा। अन्यथा संयोगद्वारा तस्यापि तथात्वापत्तेः। तथा च कर्मधारयसंभवे सप्तमीसमासो न न्याय्य इत्यस्वरसं सूचयति—अन्य इति। यद्यपि [5]संयोगत्वमेव सामान्यम्, तदेव च प्रत्यासत्तिः, न तु संयोगः। तथाप्यभ्युपेत्याह—लौकिकत्वेनेति।

ननु [6]स्वाप्नज्ञानं यदि स्मृतिः, [7]तदा तत्र विशेषणविरहादेव नातिव्याप्तिः। न च स्मृतित्वेऽपि [8]तत्र शरीरमनस्संयोग एव हेतुः, न तु नाडीसंयोगोऽपि तदवयवसंयोगत्वेन तस्यापि कारणत्वे गौरवादिति वाच्यम्। तर्हि मनोवहननाडी [6]स्वाप्नज्ञानोपयोगिनी तत्संयोगस्तत्र चेन्न हेतुः स्यात् सुतरां न ज्ञानान्तरेऽपीति स ज्ञानकारणमेव न स्यात। न च स्वाप्नज्ञानं न स्मृतिः, किंतु अयथार्थानुभव इति तत्संयोगस्य स्मृत्यजनकत्वं ज्ञानकारणत्वं चोपपन्नमिति वाच्यम्। तस्य भ्रमत्वेन लौकिकत्वविशेषणेनैव तद्वारणे प्रमात्वविवक्षा[10]वैयर्थ्यादित्यरुचेराह—यद्वेति। अजनितज्ञान इति। तथा च ज्ञानोन्मेयमनस्संयोगाभावादव्याप्तिरित्यर्थः।

1. ख. सामान्यप्रत्या-
2. क. ज्ञाने हेतुतया
3. क. स्मृतियोग्यत्वात्
4. क. 'ननु' नास्ति।
5. ग. संयोगसत्त्वमेव घ संयोगवत्त्वमेव
6. क. स्वप्नज्ञानं ग. व्याप्तिज्ञानम्
7. क. तत्राद्यविशेषण-
8. क. 'तत्र' नास्ति।
9. घ. स्वाप्नज्ञानमात्रोप-
10. ग. ०वैयर्थ्यं स्यादित्यरुचेः

**प्राणशरीरात्मानश्च स्मृतिजनकमनस्संयोगवन्तः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानहेतुमनस्संयोगाश्रयत्वं वा।**

---

### प्रकाशः

योग्यत्वात्। न च अजनितज्ञाने विनष्टचक्षुरिन्द्रियेऽव्याप्तिरिति वाच्यम्। तत्र मानाभावात्। तादृशमनस्संयोगाश्रयवृत्तिज्ञानजनकतावच्छेदकधर्मवत्त्वे [1]तात्पर्यमित्यन्ये।

**प्राणेति**। प्राणमनस्संयोग[2]हेतुत्वमतेनेदम्। अतो नानुमानखण्डोक्तेन विरोधः। **शब्देतरेति**। एतच्च श्रोत्रेऽव्याप्तिवारणाय। चक्षुरादावव्याप्तिवारणाय **उद्भूतेति**। अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वं सामान्यगुणेऽपीत्यसंभववारणाय—**विशेषेति**।

---

### न्यायशिखामणिः

अजनितज्ञानेऽपि चक्षुषि संचारवशात् मनस्संयोगो भविष्यतीत्यत आह—**विनष्टेति**। तत्कालोत्पन्नविनष्टेत्यर्थः। **मानाभावादिति**। [3]रूपोपलब्ध्युन्नेयं चक्षुस्तदभावादमानकमिति भावः।

ननु यच्चक्षुर्जन्मान्तरकृतपाप[4]विशेषादुत्पत्तिमारभ्य यावत्सत्त्वं काचादिदोषग्रस्तत्वेनाजनितज्ञानं, तदेव विनष्टचक्षुःपदेन विवक्षितम्। तादृशं च स्मृतिपुराणादौ प्रसिद्धम्। तथा च तत्राव्याप्तिर्दुर्वारैवेत्यरुचेराह—**तादृशेति**। **ज्ञानजनकतावच्छेदकेति**। तदवच्छेदकं चक्षुष्ट्वादि न त्विन्द्रियत्वं येनात्माश्रयः स्यादिति भावः।

नन्वेतन्मते ज्ञानकारणेति व्यर्थम्। ज्ञानजनकतावच्छेदकाभावादेव व्योमादिनिरासात्। किं च ज्ञानकारणत्वं न तद्रूपफलोपहितत्वम्। तथा सति तद्घटितेन्द्रियत्वस्य [5]कार्यपूर्वकालीनत्वानुपपत्तेः। किंतु तत्स्वरूपयोग्यत्वम्। तदवच्छेदकं च [6]मनस्संयोगस्य नेन्द्रियसंयोगत्वम्, अन्योन्याश्रयात्। अपि तु चक्षुर्मनस्संयोगत्वादि। न च चक्षुरादेः पृथक् कारणत्वात् न कारणतावच्छेदक-

---

1. क. तात्पर्यादित्यन्ये
2. क. °हेतुमतेन
3. क. रूप्योप-
4. ग. °विशेषोत्पत्ति-
5. ग. 'कार्य' नास्ति।
6. घ. चक्षुर्मनस्संयोगस्य

## प्रकाशः

न चेन्द्रियसामान्यगुणानामप्रत्यक्षत्वात् तत्प्रयोजकतया अनुद्भूतत्वमेव तत्रेति वाच्यम् । तेषामाश्रयायोग्यतयैवाप्रत्यक्षतया विशेषगुणमात्र एव तत्कल्पनात् । कालाद्यतिव्याप्तेराह—ज्ञानकारणेति । विषयेणेन्द्रियस्य चतुर्धा संनिकर्षः कारणमित्यभ्युपगमात् इन्द्रियावयवार्थसंनिकर्षस्यापि प्रत्यक्षहेतुतया इन्द्रियावयवेऽतिव्याप्तिवारणाय मनःपदम् । न च वायवीयशरीरेऽतिव्याप्तिः । तस्योद्भूतस्पर्शवत्त्वात्, अनुद्भूतत्वे मानाभावात् ।

ननु कालस्य हेतुत्वेन तत्प्रत्यासत्तिरपि हेतुः । तथा च [1]कालमनस्संयोगमादाय कालेऽतिव्याप्तिः । न च शरीरकालसंयोग एव तथास्तु, न तु कालमनस्संयोग इति वाच्यम् । विनिगमकाभावादिति चेत्—न । असाधारणत्वेन संयोगविशेषणात् । अत एव न वायवीयशरीरेऽतिव्याप्तिरित्याहुः ।

वस्तुतो मनोयोगत्वेन [2]हेतुत्वमभिमतम्, [3]न तु प्रत्यासत्तित्वेनेति बोध्यम् । न च निर्गतनयनरश्मिदर्शनान्नयनस्योद्भूत[4]रूपवत्तया तत्राव्याप्तिः । इन्द्रियत्वेन तस्याप्यतीन्द्रियतया तद्भिन्नस्यैव तेजसस्तत्रोपलम्भादित्याहुः ।

---

## न्यायशिखामणिः

प्रवेश इति वाच्यम् । संबन्धव्यतिरिक्तकारण एव तथा नियमस्वीकारात् । अन्यथा दण्डसंयोगादावप्यगतेः । तथा चाजनितज्ञानेऽपि [5]तादृशचक्षुषि [6]मनस्सङ्गसंभवान्नाव्याप्तिः । एवं च यथाश्रुतग्रन्थः साधुरित्यस्वरसं सूचयति—अन्य इति ।

विशेषगुणप्रत्यक्षत्वप्रयोजकत्वेनोद्भूतत्वजातिः कल्प्यत इति मते उद्भूतपदेनैव सामान्यगुणवारणे विशेषपदवैयर्थ्यमित्यत आह—अनुद्भूतत्वमिति । [7]एतच्चापाततः । एवमपि मतान्तरवैयर्थ्यानुद्धारात् । वस्तुतस्तु उद्भूतविशेषः [8]प्रत्यक्षविशेषः । तथा च लौकिकप्रत्यक्षगुणानाश्रयत्वे सतीति मूलार्थो बोध्यः ।

---

1. क. तामादाय
2. ख. प्रयोजकत्वमभि-
3. क. तस्य तु
4. क. ॰रूपतया
5. घ. तादृशि चक्षुषि
6. घ. मनस्संयोग-
7. क. 'एतच्चापाततः........मूलार्थो बोध्यः' इति ग्रन्थो नास्ति ।
8. घ. 'प्रत्यक्षविशेषः' नास्ति ।

## प्रकाशः

ननु शब्देतरेत्यव्याप्तिवारकम्। तद्भेतरभेदसाधने भागासिद्धिवारकतया व्यर्थमिति चेत्—अत्राहुः। तादृशविशेषणस्य विशिष्टाभावसंपादकतयैवाव्याप्तिवारकत्वम्। अन्यथा [1]विशेष्यस्याव्याप्तत्वे विशिष्टस्य सुतरामव्याप्तत्वात्। एवं चाखण्डाभावे वैयर्थ्याभाव इति। तच्चिन्त्यम्। विशेष्यस्य यत्राव्याप्तिवारकत्वं तत्रैवमप्यगतेः, यथा गन्धयोग्यत्वे पृथिवी(त्व)लक्षणे इति।

---

## न्यायशिखामणिः

**असाधारणत्वेनेति**। मनोयोगत्वघटितधर्मावच्छिन्न[2]ज्ञानहेतुता विवक्षिता। कालमनस्संयोगश्च कालसंयोगत्वेनैव हेतुरिति नोक्तदोष इति भावः। उपाध्यायमतमाह— **अत्रेति**। किमिदं लक्षणप्रविष्टाभावप्रतियोगिविशेषणम्, उत सत्यन्तवत् स्वतन्त्रविशेषणं वा। आद्ये—**तादृशेति**। प्रतियोगिविशेषणस्येत्यर्थः। **विशिष्टाभावेति**। अनेन विशेषणेन विशिष्टप्रतियोगिलाभे[3] तदभावोऽप्यन्य एव, विशिष्टाविशिष्टप्रतियोगिभेदेनाभावभेदाभ्युपगमादिति भावः। अन्त्ये त्वाह—**अन्यथेति**। **विशिष्टस्येति**। शब्देतरत्वे सति तादृशगुणानाश्रयत्वस्येत्यर्थः। **अखण्डाभाव इति**। तथा च विशिष्टाभाव एव हेतुविशेषणमिति न व्यर्थतेति [4]अहुः। [5]तत्तुच्छम्। शब्देतरोद्भूतविशेषगुणाभावसमानाधिकरणत्वविशेषितस्य ज्ञानकारणमनस्संयोगस्य हेतुतया तत्र चैकस्मिन्नेव विशिष्टाभावसामानाधिकरण्यस्य विशेष्याभावसामानाधिकरण्यस्य वा अवच्छेदकत्वप्रसक्तौ तत्र गौरवादिति चिन्तावकाशात्।

वस्तुतस्तु - विपरीतयोजनया ज्ञानकारणमनस्संयोगसमानाधिकरणत्वविशेषितस्य शब्देतरोद्भूतविशेषगुणाभावस्य हेतुत्वात् तत्र चावच्छेदकद्वयस्य ऐकाधिकरण्याभावेन गौरवानवकाश इति द्रष्टव्यम्।

एवमपि यथाश्रुतयोजनायां वैयर्थ्यं दुर्वारमिति दोषे सत्येव दोषान्तरमाह—**विशेष्यस्येति**।

---

1. क. विशेष्यव्याप्तत्वे
2. ग. 'ज्ञान' नास्ति।
3. क. ०प्रतियोगितालाभे
4. क. भाव;।
5. क. 'तत्तुच्छम्.......दोषान्तरमाह' इति ग्रन्थस्त्रुटितः।

### प्रकाशः

केचित्तु द्विविधमितरभेदसाधनम्, लक्ष्यं पक्षीकृत्य साधनेन, इतरं पक्षीकृत्य लक्षणव्यतिरेकेण च। तथा चेतरे[चेतरत् ]इन्द्रियत्वावच्छिन्ननिष्ठभेद-प्रतियोगि तल्लक्षणशून्यत्वादिति साध्यते यदि, तदा शब्देतरपदं श्रोत्रे व्यभिचार-वारकतया सार्थकमेवेति वदन्ति।

तदपि चिन्त्यम्। [1]एवमप्यतिव्याप्तिवारकज्ञानपदादेर्भागासिद्धिवारकतया व्यर्थतापत्तेः, व्यभिचारवारकत्वाभावात्। तस्मादेतत्कल्पे सर्वत्राखण्डाभावसंभवान्न वैयर्थ्यमिति वयं पश्यामः।

---

### न्यायशिखामणिः

यत्र [2]भावरूपं लक्षणे विशेष्यं विशेषणं वा अव्याप्तिवारकम्, तत्रोक्त-प्रकारेण विशिष्टाभावो दुस्संपादः। तथा चैतादृशाव्याप्तिवारक[3]विशेषणाव्यापनान्नेदं समाधानं साध्विति भावः।

यथाश्रुतयोजनायामपि न वैयर्थ्यमित्यभिप्रेत्य जयदेवमतमाह—केचित्त्विति। ननु [4]लक्ष्यधर्मिकेतरभेदप्रतीतिर्भेदानुमानफलम्। तथा चेतरपक्षकानुमानरचना न युक्तेत्याशङ्क्य लक्ष्ये तदितरभेदज्ञानमेव तथा, लाघवात्। तच्चोभयथापि संभवन्न विरोत्स्यत इत्याह—द्विविधमिति। भेदसाधनम्—भेदानुमितिः। साधनेन—लिङ्गेन। लक्षणरूपेणेति शेषः। इन्द्रियत्वावच्छिन्नेति। एतच्च श्रोत्रे व्यभिचार-सिद्धये, लक्ष्यतावच्छेदकावच्छिन्नभेदप्रतीतिलाभाय वा। अन्यथा इन्द्रियनिष्ठे-त्युक्तौ तदुभयासिद्धिप्रसङ्गादिति भावः।

यत्र लक्षणे सर्वाणि विशेषणानि अतिव्याप्तिवारकाणि [5]यत्र वाऽव्याप्तिवार-काणि तत्रोभयत्रोक्ता गतिः संभवति। यत्र तूभयविधान्यपि प्रविष्टानि तत्रान्यतर-स्यावश्यं भागासिद्धिवारकत्वात् [6]द्वय्यपि भेदसाधनविधा न संभवतीत्याह—तदपीति। तर्हि वैयर्थ्यशङ्कायाः कः प्रतीकार इत्याशङ्क्य मतद्वयसारांशमादाय स्वयं समाधत्ते—तस्मादिति। एतत्कल्प इति। इतरं पक्षीकृत्य लक्षणव्यतिरेकेण

---

1. क. एवमति-
2. क. भावगर्भलक्षणे
   ग. भावरूपलक्षणे
3. क. ०विशेषणव्यापनात्
4. क. लक्ष्यधर्मीतर-
5. क. 'यत्र वाव्याप्तिवारकाणि' इति नास्ति।
6. क. द्वयमपि भेदसाधनविधानम्

**प्रकाशः**

अन्ये तु—एकस्मिन् धर्मिणि [1]विशेषणद्वयोपस्थितौ एकेनैव व्याप्तिग्रह-संभवेऽपरं व्यर्थं भवति, यथा नीलधूमे। एवं च घटकपदार्थभेदेनैवोपाधिभेद इत्यव्याप्तिवारकविशेषणघटितविशिष्टोपाधौ तद्घटितवृत्तिधर्मग्रहं विना [2]व्याप्त्य-ग्रहान्न वैयर्थ्यम्। अखण्डाभाववत् तद्विशिष्टोपाधिधर्मस्य [3]विशिष्टेऽवृत्तेः। अत एव प्रमेयत्वादेः शास्त्रे हेतुत्वेनाभिधानम्।

---

**न्यायशिखामणिः**

भेदसाधनमिति जयदेवोक्तकल्प इत्यर्थः। उपाध्यायोक्ते सारांशं गृह्णाति—सर्वत्रेति। [4]एतच्चापाततः। यत्र विशिष्टाभावो लक्षणं [5]विशेषणं चातिव्याप्ति-वारकं, तत्र लक्षणाभावस्य विशिष्टोपाधिरूपतया अखण्डाभावत्वाभावात्। तस्माद्यत्र विशिष्टोपाधिर्लक्षणं तत्रेदं समाधानम्। यत्र विशिष्टाभावस्तत्र उपाध्यायोक्तमिति द्रष्टव्यम्।

नन्वेवमपि यत्र केवलान्वयिविशिष्टोपाधिर्लक्षणं यथा प्रमात्वस्य न्यूनवृत्ति-तया प्रमाविषयत्वं विशिष्टमेव प्रमेयलक्षणं तत्रोक्तप्रकारद्वयाभावात् तेन व्यवहारा-नुमितिर्न स्यादित्यतस्तत्साधारणं जयदेवोक्तं समाधानान्तरमाह—अन्ये त्विति। ननु तत्र विशिष्टाभावो व्याप्यो यत्र तत्प्रतियोग्येकदेशाभावो न व्याप्यः। [6]यथा पाण्डुरधूमाभावं प्रति [7]पालालवह्न्यभावः, [8]तथा तादृशविशिष्टोपाधिरेव व्याप्यः। अन्यथा शरीरजन्यत्वाभावधूमालोकान्यान्यत्वयोरपि व्याप्यत्वापत्तेरित्यत आह—अत एवेति। यन्निष्ठेति न्यायादेवेत्यर्थः। प्रमेयत्वादेरिति। तथा च एकदेशस्य व्याप्यत्वेऽपि विशिष्टोपाधिर्व्याप्य एव। धूमालोकान्यान्यत्वं च वह्निव्याप्तिव्याप्य-मेवेत्यनुमाने स्फुटम्। अन्यथा इदमभिधेयं प्रमेयत्वादित्यत्र प्रमात्वस्य न्यूनवृत्तितया विषयत्वस्य भागासिद्धिवारकत्वेन व्यर्थविशेषणत्वाद् [9]व्याप्त्यभावे केवलान्वयिनि

---

1. ख. विशेषद्वयोप-
2. ख. व्याप्तिग्रहात्
3. ख. विशिष्टेऽप्रवृत्तेः
4. क 'एतच्चापाततः......तत्साधारणं' इति ग्रन्थस्त्रुटितः।
5. ग. 'विशेषणं च......विशिष्टोपाधिर्लक्षणम्' इति ग्रन्थो नास्ति।
6. क. यदा
7. क. पलाल-
8. क. तदा
9. ग. व्याप्याभावे

**प्रकाशः**

न चैवमप्रयोजनानेकविशेषणघटितोपाधावपि व्यर्थविशेषणत्वं न स्यादिति वाच्यम् । इष्टत्वात् । अन्यथा अखण्डाभावेऽपि का गतिः । तत्रापि प्रतियोगिकोटावनेकविशेषणप्रक्षेपेण[1] तत्प्रसङ्गादित्याहुः ।

नव्यास्तु—इन्द्रियपदवाच्यत्वमितरभेदान्यूनानतिरिक्तदेशवृत्ति, [2]एतल्लक्षणान्यूनानतिरिक्तदेशवृत्तित्वादित्येव,त्रेतरभेदानुमानमभिप्रेतम् । तत्र च शब्देतरत्वं व्यभिचारवारकमेव । श्रवणेतरेन्द्रियत्वादौ [3]धर्मे व्यभिचारस्य ततो निवृत्तेः । इन्द्रियपदवाच्यत्वावच्छेदेनैव इतरभेदसिद्धिर्हि इन्द्रियलक्षणप्रयोजनम् । सा च धर्मिपक्षीकारेण [4]जायतां [5]धर्मपक्षीकारेण वेति न कश्चिद्विशेषः ।

यद्यपि साध्ये अन्यूनपदं विनापि तदवच्छेदेनेतरभेदसिद्धेस्तद्व्यर्थम् । (तत्र हित) [तद्रहित] साध्यस्य च श्रवणेतरेन्द्रियत्वादौ सत्त्वान्न तस्य व्यभिचारवारक-

---

**न्यायशिखामणिः**

दत्तजलाञ्जलावनुमानत्रैविध्यं शास्त्रे विरुध्येत । शरीरजन्यत्वाभावस्तु अप्रयोजकत्वादेव न व्याप्य इति भावः ।

उपाध्यायमतान्तरमाह—[6]नव्या इति । एतल्लक्षणेति । अत्रान्यूनपदं [7]चक्षुष्ट्वादौ, अनतिरिक्तपदं प्रमेयत्वादौ व्यभिचारवारणाय । एतन्मते च इन्द्रियतदवयवान्यतरत्व इन्द्रियकालान्यतरत्वादौ व्यभिचारवारक[8]मतिव्याप्तिवारकविशेषणमिति न तद्वैयर्थ्यमिति बोध्यम् ।

ननु व्यापकेऽपि यद्विशेषणमुद्देश्यसिद्ध्यर्थं तदेवोपादेयम् । अन्यथा तत्प्रयोजकानेकविशेषणप्रक्षेपापत्तेः । न चान्यूनत्वघटितं [9]साध्यमुद्देश्यमपि, येन तत्सार्थकं स्यात् । किं तु [10]इन्द्रियपदवाच्यमितरेभ्यो भिद्यत इति लक्ष्यपक्षकानुमाने तत्पदवाच्यत्वसामानाधिकरण्येन या तदितरभेदप्रतीतिः सैवान्यत्रापि ।

---

1. क. ०प्रक्षेपे
2. क. तल्लक्षणा-
3. क. धर्मव्यभिचारस्य
4. क. ज्ञायताम्
5. ख. 'धर्मपक्षीकारेण......श्रवणेतरेन्द्रियत्वादौ' इति ग्रन्थस्त्रुटितः ।
6. ग. न व्याप्य इति
7. ग. चक्षुरादौ
8. ग. 'अतिव्याप्तिवारकविशेषणम्' इति नास्ति ।
9. साध्यमुद्देश्यत्व येन ।
10. क. 'इन्द्रियपदवाच्य....सा च' इति ग्रन्थस्त्रुटितः

## ज्ञानाकरणकं ज्ञानमिति तु वयम् ।

---

**प्रकाशः**

त्वम् । तथापि यदि व्यापके न [1]व्यर्थविशेषणता तत्प्रकारक[2]प्रतीतिश्चोद्देश्या तदा कल्पोऽयमिति मन्तव्यम् ।

इतरत्वम् इन्द्रियपदवाच्यत्वसमनियतभेदप्रतियोगितावच्छेदकम्, एतल्लक्षणाभावसमनियतधर्मत्वात् इतीतरभेदानुमाने शब्देतरपदं विना इतरश्रवणान्यतरत्वादौ व्यभिचारः स्यादिति तद्वारकत्वमेव सर्वत्राऽव्याप्तिवारकविशेषणस्येत्यपि वदन्ति ।

जन्याजन्यसाधारणं लक्षणमाह—**ज्ञानेति** । अत्र निदिध्यासनादिद्वारा मननादिज्ञानकरणके योगिप्रत्यक्षेऽव्याप्तिः ।

---

**न्यायशिखामणिः**

अन्यथा लक्ष्यपक्षकानुमानवैफल्यात् । सा च इन्द्रियपदवाच्यत्वम् इतरभेदसमानाधिकरणम् एतल्लक्षणसमानाधिकरणत्वात् इत्येतावदेवेत्यस्वरसमुपाध्यायमते सूचयितुं [3]यदीत्युक्तम् ।

इममेवास्वरसं 'अपि' शब्देन सूचयन् जयदेवसमाध्यन्तरमाह—**इतरत्वमिति** । **एतल्लक्षणाभावेति** । समनियतत्वं हि व्याप्यत्वे सति व्यापकत्वम् । [4]तत्रैतदभावं प्रति व्यापकत्वम् प्रमेयत्वादौ, व्याप्यत्वं घटत्वादौ । न हि तदुभयमुक्तसाध्यवदित्युभयमुपात्तम् । एतन्मते चेन्द्रियतदवयवान्यतरत्वकालेन्द्रियान्यतरत्वादौ व्यभिचारवारकमतिव्याप्तिवारकविशेषणमिति [5]न तद्वैयर्थ्यमिति बोध्यम् ।

ननु सामान्यलक्षणानभिधाने कथं विशेषलक्षणाभिधानम् । [6]न चेन्द्रियजन्यज्ञानमित्यत्र तदभिहितम्, न हि तदपि लौकिकप्रत्यक्षलक्षणम्, अलौकिकप्रत्यक्षाव्याप्तेरिति वाच्यम् । ईश्वरप्रत्यक्षाव्यापनेन तस्य जन्यप्रत्यक्षलक्षणत्वात् । न चेह साक्षात्त्वं तथा । परमते गुणगतजात्यनङ्गीकारेण तस्योभयमत[7]साधारण्या-

---

1. क. व्यर्थविशेषता
2. क. ०प्रतीतिरुद्देश्या
3. क. यदित्युक्तम्
4. क. तत्रैव तदभावं
5. क. 'न तद्वैयर्थ्यमिति' इति नास्ति ।
6. क. 'न चेन्द्रियजन्य...जन्यप्रत्यक्षलक्षणत्वात्' इति ग्रन्थो
7. क. ०साधारण्यादित्यस्वरसान्मणौ साधारण

**प्रकाशः**

न च मननादेर्न तत्प्रत्यक्षहेतुत्वमिति वाच्यम् । 'श्रोतव्यो मन्तव्य' इत्यादिश्रुत्या मननादेरपि मोक्षहेतुत्वावगमे प्रत्यक्षव्यापारद्वारैव तथात्वात् । न च मननं निदिध्यासनादिद्वारैव तद्धेतुरस्त्विति वाच्यम् । निदिध्यासनस्यापि प्रत्यक्षमेव द्वारमिति मननस्याप्यवश्यं तद्द्वारकत्वात् ।

नन्वेकेन मननेन निदिध्यासनेन वा अनुपदं न प्रत्यक्षमित्यनेकं तत्तथा । आशुविनाशिनां क्रमिकाणां [1]मेलकाभावादवश्यमदृष्टद्वारता । तथा च [2]तददृष्टद्वारैव मननादेर्मोक्षहेतुत्वमस्तु, प्रत्यक्षं प्रत्यपि हेतुत्वे गौरवान्मानाभावाच्च इति चेत्—न । अनुत्पन्नमननादेर्न[3] प्रत्यक्षमित्यन्वयव्यतिरेकाभ्यां पूर्वपूर्वप्रतिपत्तेरुत्तरोत्तरप्रतिपत्तिहेतुत्वे गौरवस्य प्रामाणिकत्वादिति वदन्ति ।

---

**न्यायशिखामणिः**

भावादित्यतस्तत्साधारणं लक्षणमुक्तं मणौ । तदचारु । ज्ञानस्याकरणं ज्ञानाकरणं तद्यस्य तत्तथेति समासे ज्ञानाकरणजन्यत्वस्य लक्षणत्वपर्यवसाने भगवत्प्रत्यक्षाव्याप्तेः । अनुमित्यादेस्तादृशादृष्टजन्यत्वेन तत्रातिव्याप्तेश्चेत्याशङ्क्य, ज्ञानकरणत्वाभाव एवात्र लक्षणम् । तच्च जन्याजन्यप्रत्यक्षसाधारणमित्याह—[4]जन्याजन्येति । न चैतल्लक्षणस्य परमतसाधारण्ये अनुमित्यादेरपि प्रत्यक्षत्वाभ्युपगमात्तत्राव्याप्तिरिति[5] वाच्यम् । अनुमितिमात्रांशे ज्ञानस्याकरणत्वात् । अनुमित्यादेस्तदंश एव तैः प्रत्यक्षत्वाभ्युपगमात् ।

उपाध्यायोक्तं दोषमाह—अत्रेति । अव्याप्तिरिति । यद्यपि श्रवणादीनां मानसव्यापाररूपत्वान्नाव्याप्तिः । तथापि न्यायमते न तद्रूपता, द्रव्यकिरणावलीप्रकाशे तथैवाभिधानात् । तथा च श्रवणादे[6]र्ज्ञानत्वाभ्युपगमात् [7]तदाशङ्कावकाश इति भावः ।

मोक्षेति । रात्रिसत्रन्यायेनार्थवादावगतो मोक्षः साध्यत्वेन [8]अन्वीयत इति भावः । प्रत्यक्षं प्रत्यपीति । अदृष्टद्वारेत्यनुषङ्गः । अन्वयव्यतिरेकाभ्या-

---

1. क. मेलनाभावात्
2. क. तद्दृष्ट-
3. ख. 'न' नास्ति ।
4. ग. घ. अन्येति
5. ग. तत्रातिव्याप्तिरिति
6. ग. घ. र्ज्ञानरूपत्वाभ्युपगमात्
7. क. तथाशङ्का-
8. क. ग. अनुमीयते

**प्रकाशः**

तच्चिन्त्यम् । अदृष्टाद्वारकत्वस्य विशेषणस्यावश्यकत्वे तत एव तदव्याप्ति-निरासात् । तद्विशेषणाभावे जन्यप्रत्यक्ष एवाव्याप्तिः । ज्ञानेच्छाकृतीनामदृष्टद्वारा कार्यमात्रहेतुत्वाभ्युपगमात्, जगन्नाथदर्शनादेरदृष्टद्वाराभीष्टसाक्षात्कारकारणतया तदव्याप्तेश्च । न चोक्तयुक्त्या द्वाराभ्युपगमेऽपि संस्कार एव मननादेर्द्वारमस्त्विति वाच्यम् । तज्जन्यत्वे स्मृतित्वापत्तेः ।

एतेन ज्ञानत्वगर्भधर्मावच्छिन्नकारणताकत्वाभावस्य विवक्षितत्वान्नोक्त-दोषः । अत्र च ज्ञानत्वव्याप्यजातिविशेषगर्भतेत्यपास्तम् । आवश्यकोक्तविशेषणे-नैव तद्दोषनिरासे तद्विवक्षाया गौरवकरत्वात् । अदृष्टादिकारितकोटिसरणस्यापि

---

**न्यायशिखामणिः**

**मिति** । नन्वत्र तावसिद्धाविति चेत्—न । गान्धर्वश्रवणाभ्यासे तत्साक्षात्कारस्य भावनाभ्यासे सति [1]भावितकामिनीसाक्षात्कारस्य च दर्शनेन अन्वयव्यतिरेकाभ्यां तत्र कार्यकारणभावग्रहे तन्मूलानुमानेन आत्मश्रवणादितत्साक्षात्कारयोस्तथाभावा-वगम इत्येतद्ग्रन्थार्थोन्नयनात् । तर्हि 'श्रोतव्य' इत्यादिशास्त्रवैयर्थ्यम्, 'अज्ञाते शास्त्रमर्थवत्' इत्यभ्युपगमादिति चेत्—न । श्रोतव्य इत्यादेरात्मसाक्षात्कारे श्रवणाद्युपाधिनियमनार्थत्वादित्याशयः ।

[2]**ज्ञानेच्छेति** । हविर्गोचरेति शेषः । जयदेवमतं दूषयति—**एतेनेति** । **नोक्तदोष** इति । आत्मविषयकशाब्दत्वादिनैव श्रवणादेर्हेतुत्वमिति न योगि-प्रत्यक्षाव्याप्तिरित्यर्थः ।

[3]अत्रेदमालोचनीयम् । न तावददृष्टाद्वारकज्ञानकरणकत्वाभाव इति विवक्षा युक्ता । तत्र हि तद्विशेषणं न जन्यप्रत्यक्षाव्याप्तिवारणाय । हविःपुरोडा-शादिगोचरज्ञानस्य साधारणकारणत्वेन करणत्वाभावात् । करणपदेनासाधारण-कारणत्वस्याप्यत्र विवक्षितत्वात् । नापि योगिप्रत्यक्षे तद्वारणाय । दत्तेऽपि विशेषणे दोषानिरासात् । श्रवणादेरविधेयत्वेन अदृष्टानपेक्षत्वात् । तथा हि—श्रवणादौ न

---

1. क. भावितसाक्षात्कारस्य
2. ग. ज्ञानं चेति ।
3. ग. घ. 'अत्रेदमालोचनीयम्...स्मृतित्वप्रयोजकत्वादिति' इति ग्रन्थः नास्ति ।

### प्रकाशः

तद्धेतुत्वात् । [1]धर्मिज्ञानस्य कोटिस्मरणद्वारा संशयाद्यजनकत्वमिति मतेनेदम् । अतो न तत्राव्याप्तिः ।

नन्वीश्वरज्ञानकरणकत्वाज्जन्यप्रत्यक्षमात्र एवाऽव्याप्तिः । न च व्यापाराभावान्न तस्य (कारणत्वम्)[करणत्वम्] । तज्जन्यत्वे सति तज्जन्यजनकत्वस्य व्यापारत्वस्य प्रत्यक्षहेतौ सत्त्वादिति चेत्—हन्तैवमदृष्टस्यापि तद्द्वारत्वे उक्तविशेषणेनैव तद्वारणात्, तस्य कार्यमात्रहेतुतया परस्पराऽव्यभिचारेण तत्र तद्व्यापाराभावाच्च ।

असाधारणविवक्षायां नोक्तदोष इत्यन्ये ।

---

### न्यायशिखामणिः

विधिः, ज्ञानस्वरूपत्वेनाविधेयत्वात् । तथा च नादृष्टापेक्षा । किं च न तावत् श्रोतव्य इत्यत्रापूर्वविधिः । अन्वयव्यतिरेकमूलानुमानेन साध्यसाधनभावावगम इत्युक्तत्वात् । नापि नियमविधिः, तत्रोपायान्तराप्राप्तेः । कथं तर्ह्यविनाशिश्रवणादेस्तत्कारणतेति चेत्—न । पूर्वपूर्वप्रतिपत्तिसंस्कारसहितान्तिमश्रवणादेर्मननादिहेतुत्वकल्पनात् । न च संस्कारजन्यत्वे स्मृतित्वापत्तिः । तस्य श्रवणादिनिष्ठकारणतावच्छेदकत्वात् । अस्तु वा संस्कारस्यापि तत्र हेतुत्वं, तथापि न तत्त्वेनेति नोक्तदोषः, संस्कारत्वेन तज्जन्यत्वस्य स्मृतित्वप्रयोजकत्वादिति ।

नन्वदृष्टादिकारितकोट्युपस्थितिहेतुकः संशय एव नास्ति इत्यभ्युपगच्छतां वर्धमानचरणानां मते [2]धर्मिज्ञानस्य कोट्युपस्थितिद्वारा [3]तज्जन्यसंशयहेतुत्वात् तत्राऽव्याप्तिरित्यत आह—अदृष्टा(दि)[दी]ति । किं तज्जन्यजनकत्वघटितं व्यापारत्वं तज्जन्यतावच्छेदकावच्छिन्नजनकत्वघटितं वा । तत्राद्यं निराकृत्यान्त्यं निराकरोति—तस्येति । ननु करणपदेनासाधारणकारणविवक्षायां [4]विशिष्टप्रत्यक्षस्य [5]विशेषणज्ञानासाधारणकारणकत्वेन तत्राऽव्याप्तिः । व्यापारवत्त्वस्यापि विवक्षायां निरुक्तव्यापारत्वस्य प्रत्यक्षहेतावभावेन तत एव दोषनिरासे असाधारणत्वविवक्षावैयर्थ्य-

---

1. ख. तद्धर्मि-
2. क. धर्मिज्ञानकोट्यु-
3. ग. घ. 'तज्जन्य' नास्ति
4. क. विशिष्टप्रत्यक्षजनकस्य
5. क. विशेषणज्ञानस्यासाधारणकारणत्वेन

प्रकाशः

न च प्रतियोगिज्ञानजन्ये [1]तज्जन्यारोपजन्ये चाभावप्रत्यक्षेऽव्याप्तिरिति वाच्यम्। आरोपत्वेन प्रतियोगिज्ञानत्वेन [2]चारोपज्ञानस्यैव तद्धेतुत्वे तज्जनकप्रतियोगिज्ञानस्य तद्द्वारा प्रत्यक्षहेतुत्वे मानाभावात् [3]विशेषणविशेषणधीवत्।

अन्ये तु—प्रतियोगिज्ञानमभावज्ञानमात्रहेतुः। तथा च तस्य नारोपद्वारकत्वम्। यज्जनयित्वैव यस्य यज्जनकत्वं तस्यैव तद्व्यापारकत्वात्। प्रकृते चारोपमजनयित्वापि शाब्दाद्यभावज्ञानोत्पादकत्वमित्याहुः। तच्चिन्त्यम्। निषेधपदादिना प्रतियोगिज्ञानं विनाप्यभावज्ञानात् अभावप्रत्यक्षमात्र एव तद्धेतुत्वात्।

वस्तुतस्त्वभावप्रत्यक्षत्वावच्छिन्ने तस्य हेतुत्वान्न प्रतियोग्यारोप[4]पूर्वकत्वमन्योन्याभावप्रत्यक्षस्य, तं विनापि तेनोत्पादनादिति तत्त्वम्।

---

न्यायशिखामणिः

मित्यस्वरसं सूचयति—अन्य इति। मानाभावादिति। न चान्वयव्यतिरेकाभ्यां तस्य हेतुत्वग्रहः। अधिकरणज्ञानप्रतियोग्यारोपाभ्यामभावप्रत्यक्षजननसमये प्रतियोगिज्ञानस्य विनष्टत्वेन व्यतिरेकव्यभिचारात्। 'अधिकरणप्रतियोगिभ्यामभावो निरूप्यते' इति सिद्धान्तप्रवादस्य च प्रतियोगिज्ञानत्वेन तदारोपस्यैव हेतुत्वमादायोपपत्तेः। न चैवं लिङ्गपरामर्शस्यैव व्याप्तिज्ञानत्वेन लिङ्गपरामर्शत्वेन च हेतुत्वमस्तु, न तु व्याप्तिज्ञानस्य तद्द्वारा हेतुत्वम्, मानाभावात्, तथा च [5]अनुमितावतिव्याप्तिरिति वाच्यम्। कारणान्यथानुपपत्तेस्तत्र मानत्वात्।

जयदेवमतमाह— अन्ये त्विति।

ननु प्रतियोगिज्ञानस्याभावप्रत्यक्षहेतुत्वे दुर्वारं तदारोपस्य व्यापारत्वम्, तमजनयित्वा तेनाभावप्रत्यक्षाजननादित्याशङ्क्य, न हि संसर्गाभावप्रत्यक्ष एव तस्य [6]तथात्वम्, येन तथा स्यात् इत्याह—वस्तुत इति। तं विनापीति।

---

1. ख. तज्जन्यत्वारोप-
2. क. चारोपज्ञानस्यैव
3. ख. 'विशेषणविशेषणधीवत्' इति नास्ति।
4. क. ॰पूर्वकमन्योन्या-
5. क. तदनुमितौ
6. क. हेतुत्वम्

## न्यायशिखामणिः

ननु प्रतियोग्यारोपत्वेन तस्य न हेतुता। तं विना अन्योन्याभावप्रत्यक्षजननेन व्यभिचारात्। किं तु [1]ग्राह्याभावाभावारोपत्वेन। तच्च प्रतियोगितावच्छेदकस्यान्योन्याभावाभावतया तदारोपसाधारणम्। तथा चोक्तधर्मावच्छिन्नमारोपमजनयित्वा तदनुत्पादात् [2]भवति तेन रूपेण प्रतियोग्यारोपो व्यापार इति चेत्—

न। प्रतियोग्यारोपत्वेन संसर्गाभावप्रत्यक्षे प्रतियोगितावच्छेदकारोपत्वेनान्योन्याभावप्रत्यक्षे तयोर्हेतुत्वाभ्युपगमेन उक्तरूपस्य तदनवच्छेदकत्वात्। अन्यथा प्रतियोग्यारोपजन्यज्ञानविषयाभावत्वं [3]संसर्गाभावत्वम्, प्रतियोगितावच्छेदकारोपजन्यज्ञानविषयाभावत्वमन्योन्याभावत्वमिति लक्षणानुपपत्तेः।

वस्तुतस्तु—प्रतियोग्यारोप एवोभयरूपेणाभावप्रत्यक्षे[4] हेतुरिति पूर्वोक्त एव तात्पर्यम्। अन्यथा यदि प्रतियोगिज्ञानस्यापि हेतुत्वं प्रमाणसिद्धं तदा व्यतिरेकव्यभिचारपरिहाराय तयोरुक्तरूपेणापि हेतुत्वं कल्प्येतेति [5]व्यापारत्वं वज्रलेपायितं स्यादिति।

[6]ननु तर्हि ज्ञानत्वगर्भधर्मावच्छिन्नकरणत्वाभाव इति जयदेवोक्तमेव युक्तम्। यदुक्तमत्र नारहरिमिश्रैः भावितकामिनीसाक्षात्कारे लक्षणमिदमव्यापकं पूर्वपूर्वभावनाया उत्तरोत्तरभावनाद्वारा तत्र हेतुत्वादिति। नैतत्सारम्। कामिनीसाक्षात्कारस्यारोपरूपत्वेन तद्भावनायास्तत्र दोषत्वेनैव हेतुत्वादिति चेत्—

न। एवमपि योगिप्रत्यक्षाव्याप्तेः। तथा हि—श्रवणादेर्वेदजन्यात्मज्ञानत्वेनैव हेतुता, न तु तद्विषयशाब्दत्वादिना। [7]तस्य पुराणादिजन्यज्ञानसाधारण्यात्। न चेष्टापत्तिः। 'श्रोतव्यः श्रुतिवाक्येभ्यः' इत्यनेन विरोधात्। न च तत्र श्रुतिपदस्य प्रमाणपरत्वान्न विरोध इति वाच्यम्। श्रुतिपदस्य लक्षणापत्तेः। न च पुराणादेरवैयर्थ्यार्थं लक्षणास्वीकार इति सांप्रतम्। वेदजन्यवाक्यार्थ[8]ज्ञानप्रतिबन्धकतात्पर्यसंदेहादिनिवर्तकतया तस्यार्थवत्त्वोपपत्तेः। अत एव स्मृतिः—

---

1. ग. ग्राह्यामावारोपत्वेन
2. क. 'भवति' नास्ति।
3. क. अत्यन्ताभावत्वम्
4. क. 'अभावप्रत्यक्षे' इति नास्ति।
5. घ. 'व्यापारत्वं' इति नास्ति।
6. ग. घ. 'ननु तर्हि' इत्यतः पूर्वं 'अत्रेदमालोचनीयम्......स्मृतित्वप्रयोजकत्वादिति' इति ग्रन्थः (P. 597 and 598) लिखितोऽत्र दृश्यते।
7. क. अस्य
8. ग. ज्ञानकरणक-

न्यायशिखामणिः

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति। ततश्च जयदेवमतमप्ययुक्तमेवेति।

केचित्तु—[1]ज्ञानाकरणकवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं [2]ज्ञानकरणकावृत्तिजातिशून्यत्वं वा विवक्षितम्। योगिप्रत्यक्षादौ च तादृशभगवज्ज्ञानवृत्तिसाक्षात्त्वजातिमत्त्वमस्तीति नाव्याप्तिरित्याहुः।

तच्चिन्त्यम्। परमते गुणगतजात्यनङ्गीकारेणाद्यद्वितीययोरसंभवातिव्याप्तिदोषात्[3]।

एतेन [4]ज्ञानकरणकत्वाव्यभिचारिभिन्नमानभेदप्रयोजकजातिमत्त्वमिह विवक्षितम् इति नरहरिमिश्रमतमपास्तम्।

किं च ज्ञानाकरणकमित्यस्योक्तार्थपरत्वे विशिष्टवैशिष्ट्यप्रत्यक्षे [5]विशेषणविशेषणज्ञानस्य प्रत्यभिज्ञायां पूर्वानुभवस्य करणत्वनिराकरणप्रयासवैयर्थ्यम्। साक्षात्त्वस्य मानभेदप्रयोजकधर्मस्य ज्ञानाकरणकभगवज्ज्ञानवृत्तित्वेन ज्ञानकरणकत्वव्यभिचारितया तदादाय सर्वप्रत्यक्षेऽपि लक्षणसंभवादिति।

वयं तु ब्रूमः। यथाश्रुतमेव लक्षणम्। न च योगिप्रत्यक्षाव्याप्तिः, [6]श्रवणमननयोर्मनननिदिध्यासनोपक्षीणत्वेन[7] तत्त्वसाक्षात्काराहेतुत्वात्। न च तद्द्वारा हेतुत्वमिति नान्यथासिद्धिरिति वाच्यम्। तत्र मानाभावात्। न च श्रवणादेर्विहितत्वं तत्कल्पकम्। तज्ज्ञानरूपे तत्र विधिरेव नेत्युक्तत्वात्। [8]न चान्वयव्यतिरेकाभ्यां मूलानुमानं तत्र मानमित्युक्तमिति वाच्यम्। प्रयोजकविषयतयैव गान्धर्वश्रवणाभ्यासस्थलेऽपि अन्वयव्यतिरेकोपपत्तौ तन्मूलानुमानायोगात्। एतेन 'शृण्वन्तोऽपि बहवो यं न विद्युः' इति वाक्यं (वक्ष्योक्त्यामान) [तत्र मान] मित्यपास्तम्। प्रयोजकविषयतयापि तदुपपत्तेः। न चैवं श्रवणादेः पुरुषार्थाहेतुत्वात् तत्र प्रेक्षावत्प्रवृत्तिर्न स्यादिति वाच्यम्। परंपरया पुरुषार्थलाभेऽपि

1. क. 'ज्ञान' नास्ति
2. क. ज्ञानाकरणवृत्ति-
3. ग. °रसंभवादतिव्याप्तिदोषात्
4. क. ज्ञानकरणत्वा-
5. ग. 'विशेषण' नास्ति।
6. क. श्रवणात्ममननयोः
7. क. °पलक्षणत्वेन
8. क. 'न चान्वय......तन्मूलानुमानायोगात्' इति ग्रन्थस्त्रुटितः।

विशिष्टप्रत्यक्षे च विशेषणज्ञानं न करणं व्यापाराभावात् । विशिष्ट-वैशिष्ट्यप्रत्यक्षे च विशेषणज्ञानं हेतुर्न तु विशेषणविशेषणधीरपि विशेषणधी-द्वारा करणम्, मानाभावात् ।

प्रत्यभिज्ञायां तु तत्तास्मृतिः कारणं न तु संस्कारद्वारा अनुभवः करणम् । तस्याः संस्कारजन्यत्वे स्मृतित्वापत्तेः । स्मृतित्वे लाघवेन संस्कारजन्यत्वस्य तन्त्रत्वात् । तद्धेतुत्वेनैव तत्सिद्धेश्च ।

---

## प्रकाशः

प्रत्यभिज्ञायां त्विति । नन्वत्र पूर्वानुभव एव तत्तारूपविशेषणज्ञानत्वेन संस्कारद्वारा करणमस्तु लाघवात्, न तु तज्जनिता स्मृतिः, तत्पूर्वं तत्कल्पने गौरवान्मानाभावाच्च । न च तस्याः संस्कारजन्यत्वे स्मृतित्वापत्तिरिति वाच्यम् । इन्द्रियनिरपेक्षसंस्कारजन्यत्वस्य तत्र प्रयोजकत्वात् । न चैवं गौरवं दोषः, प्रत्यभिज्ञायां लाघवानुरोधेन पूर्वानुभवस्यैव विशेषणज्ञानत्वेन कारणत्वे सिद्धे तस्य प्रामाणिकत्वात् । [1]न चैतद्गौरवभयेन तत्र तत्तास्मृतिरेव तथा कारणत्वेन कल्प्यत इति वाच्यम् । तत्र कारणीभूतविशेषणज्ञानकल्पनादशायामेतद्गौरवा-नुपस्थितेः[2] । न च प्रथमं लाघवेन संस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वकल्पना-त्तदनुरोधेनैव गौरवस्य दोषत्वं प्रामाणिकत्वेन तिरस्कृत्य प्रत्यभिज्ञायाः स्मृतिः [ कारणं ] कल्प्येतेति वाच्यम् । स्मृतित्वप्रयोजकत्वकल्पनस्य[3] प्राथमिकत्वे मानाभावात्, अनुपजीव्यत्वेन प्रत्यभिज्ञाकारणविशेषणज्ञानकल्पने अननुरोध्यत्वाच्च ।

---

## न्यायशिखामणिः

तदुपपत्तेः । न चाभावप्रत्यक्षाव्याप्तिर्दोषः । परमते तस्यानुपलब्धतया प्रत्यक्षत्वे-नासंग्राह्यत्वात् । अस्मन्मते च प्रतियोग्यारोप एवोभयरूपेण हेतुरित्युक्तत्वात् । न च कामिनीसाक्षात्काराव्याप्तिः । अन्तिमभावनाया एव तत्र हेतुत्वात् ।

तस्मात् ज्ञानाकरणकमिति यथाश्रुतमेव साध्विति संक्षेपः ।

---

1. क. न चैवं तद्गौरव-
2. क. ॰मेव तद्गौरवानुपस्थितेः
3. क. ॰प्रयोजककल्पनस्य

प्रकाशः

न चैतत्कल्पनमपि तस्यानुपजीव्यमेव, तथा चैतदनुरोधेन स्मृतित्वप्रयोजके गौरवं [1]कथं दोषः स्यादिति वाच्यम्। प्रत्यभिज्ञादिकारणचक्रावधारणं विना तद्व्यावृत्तस्य [2]स्मृतित्वप्रयोजकस्य कल्पनाया असंभवात्। तत्र [3]प्रत्यभिज्ञाकारण-विशेषणज्ञानकल्पनस्योपजीव्यत्वात्।

एतेन स्मृतित्वे संस्कारजन्यत्वमेव तन्त्रम्, तद्धेतुत्वेनैव संस्कारसिद्धे-रित्यपास्तम्। उक्तक्रमेण प्रत्यभिज्ञाहेतुत्वेनापि तस्य सिद्धेरिति।

मैवम्। [4]विशिष्टज्ञानं प्रत्यव्यवहितस्यैव विशेषणज्ञानस्य हेतुत्वं न तु व्यवहितस्यापि संस्कारद्वारकस्य। अन्यथा केवलदण्डे ज्ञाते क्रमेण तद्दण्डवति पुरुषे दण्डे चेन्द्रियसंनिकृष्टे तदानीं दण्डज्ञानं विनाप्ययं दण्डीति बुद्ध्यापत्तेः। एवं भ्रमादावपि स्मरणरूपविशेषणज्ञानस्य हेतुत्वं क्वापि न सिध्येदित्यादि वदन्ति।

तच्चिन्त्यम्। अव्यवहितविशेषणज्ञानत्वेन तद्धेतुत्वे स्मरणरूपविशिष्टज्ञाने व्यभिचारात्। न च विशिष्टानुभवं प्रति तथा हेतुत्वम्, गौरवात्।

---

न्यायशिखामणिः

[5]मूलकारोक्तदोषमनूद्य निरस्यति—न चेति। इन्द्रियनिरपेक्षेति। इन्द्रियत्वावच्छिन्नकारणत्वानपेक्षेत्यर्थः। एवमिति। इन्द्रियनिरपेक्षत्वप्रवेश इत्यर्थः।

उपाध्यायमतमाह—मैवमिति। [6]भ्रमादाविति। आदिपदात् संशय-परिग्रहः। किमस्योक्तरूपेण हेतुत्वं विशिष्टज्ञानमात्रे विशिष्टानुभवे वा। आद्यं निराकृत्य द्वितीयमाशङ्क्य निरस्यति—न चेति।

---

1. क. कथमदोषः
2. ख. स्मृतिप्रयोजनकल्पनायाः
3. क. प्रत्यभिज्ञाने कारण-
4. ख. 'विशिष्टज्ञानं......एवं भ्रमादावपि' इति ग्रन्थस्त्रुटितः।
5. ग. घ. मूलोक्त-
6. ग. 'भ्रमादाविति......निरस्यति' इति ग्रन्थो नास्ति।

## प्रकाशः

ननु कथं तर्हि प्रत्यभिज्ञाने पूर्वानुभवो हेतुरिति चेत्—इत्थम्। विशेषणज्ञानस्य [1]न संस्कारो व्यापारः, तमजनयित्वापि तेन विशिष्टज्ञानोत्पादनात्। यत् जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र तद्व्यापारत्वात्। अन्यथा प्रत्यक्षादिजनककालादेः संनिकर्षादिव्यापारकत्वापत्तिः। यदि च कार्यत्वावच्छिन्ने तस्य हेतुत्वात् तस्य च परस्परसंनिकर्षादेर्व्यभिचारान्न तथा, तदा विशिष्टानुभवत्वावच्छिन्ने विशेषणज्ञानस्य हेतुत्वात् तत्र च संस्कारस्य व्यभिचारात् न व्यापारत्वमिति तुल्यम्।

नन्वेवमुक्तन्यायेन स्मरणेऽपि संस्कारद्वारा अनुभवरूपविशेषणज्ञानजन्यत्वं न स्यादिति चेत्—सत्यम्। तत्र हि संस्कारो न [2]विशेषणज्ञानस्य व्यापारः, तत्त्वेन विशिष्टानुभवं प्रत्येव हेतुत्वात्। किंतु स्मृतित्वावच्छिन्ने स्वसमानविषय-[3]स्वसमानाधिकरणपूर्वानुभवत्वेन हेतुत्वात् तत्र चाव्यभिचारात् संस्कार[4]व्यापारकत्वम्।

नन्वेवमिहापि प्रत्यभिज्ञानत्वावच्छेदेन पूर्वानुभवत्वेन हेतुत्वात् तत्र चाव्यभिचारात् संस्कारव्यापारकत्वमस्त्विति चेत्—न। विशिष्टानुभवानुरोधेन तत्तास्मृतिरूपविशेषणज्ञानस्य हेतुत्वात् [5]तत एव तदुपपत्तौ तथा कार्यकारणभावे मानाभावात् तत्तास्मृत्या अनुभवस्यान्यथासिद्धेश्च।

---

## न्यायशिखामणिः

स्वेति। अत्र स्वसमानाधिकरणत्वं नावच्छेदके प्रवेश्यम्, परकीयानुभवस्य संबन्धाभावादेवातिप्रसङ्गविरहादिति बोध्यम्।

किं विशिष्टज्ञानसामान्ये विशेषणज्ञानं कारणमिति तदनुरोधात्तत्र पूर्वानुभवापेक्षा, विशेषसामग्र्यनुरोधाद्वा। नाद्य इत्याह—न विशिष्टेति।

न द्वितीय इत्याह—एतेनेति। यद्यप्येकस्मिन् धर्मिणि तत्तेदन्तोल्लेख्यनुभवत्वं हि प्रत्यभिज्ञात्वम्। तच्च संस्कारेन्द्रियसंप्रयोगाभ्यामुपपन्नमिति नीलघट-

---

1. ख. 'न' नास्ति।
2. ख. विशेषणज्ञानजन्यस्य
3. क. 'स्व' नास्ति।
4. क. °व्यापारत्वम्
5. क. 'तत एव तदुपपत्तौ....न्यथासिद्धेश्च' इति नास्ति।

प्रकाशः

एतेन [1]यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे तद्विशेषस्य हेतुत्वम् इति न्यायात् प्रत्यभिज्ञानरूपविशिष्टज्ञानविशेषे तत्तारूपविशेषणज्ञानत्वेन पूर्वानुभवस्य हेतुत्वम्। तत्र चाव्यभिचारात् संस्कारव्यापारकत्वमित्यपास्तम्।

एवमप्यावश्यकतत्तास्मृतेरेव तथा [2]कारणत्वोपपत्तेः, यस्यैव सामान्येन हेतुत्वं तस्यैव विशेषरूपेण तथात्वाभ्युपगमात्। अत एव भ्रमादावप्यारोप्यादिस्मरणकल्पनम्। यदि च नैवम्, तदानुमित्यादिकमपि संस्कारद्वारा नष्टपरामर्शो जनयेत्। यदि चानुमित्यन्तरे व्यभिचारान्न तस्य संस्कारव्यापारकत्वं तदा प्रकृतेऽपि तुल्यम्।

तस्मादनुभवस्य नष्टत्वात् संस्कारस्य व्यापारत्वायोगाच्च अनन्यगत्या तत्तास्मरणकल्पनं गौरवं च फलमुखमिति वयं पश्यामः।

ननु प्रत्यभिज्ञानस्य संस्काराजन्यत्वे तत्तोल्लेखो न स्यात् संस्कारजन्यज्ञानस्यैव तद्धेतुत्वाङ्गीकारादिति चेत्—न। कारणत्वेन कारणकारणत्वेन वा यत् ज्ञानं

---

न्यायशिखामणिः

त्ववन्न कार्यतावच्छेदकम्, येन विशेषकारणापेक्षा स्यात्। तथाप्यभ्युपेत्याह—एवमिति। ननु सामान्यसामग्रीतो विशेषसामग्री भिन्नैव वाच्या, तथा दर्शनादित्याशङ्क्य, तत्रावच्छेदकभेद एवावश्यकः। अन्यथा विशेषणज्ञानस्यैव [3]अत आरोप्यस्मरणस्य विशेषहेतुत्वं [4]न स्यादित्याह—अत एवेति। ननु न वयं विशेषसामग्रीं ब्रूमः। किं तु नष्टोऽपि पूर्वानुभव एव संस्कारद्वारा [5]विशेषणज्ञानत्वेन हेतुः तत्तास्मृतिकल्पनायां [6]गौरवादित्याशङ्कां प्रतिबन्द्या परिहरति—यदि चेति। यद्यपि कथं तर्हीत्यत्रोक्तेयमाशङ्का तथापि परिहारान्तराभिधित्सया [7]तदुत्थानमिति ध्येयम्।

---

1. क. 'यत्सामान्य इति न्यायात्' इति नास्ति।
2. ख. कारणत्वापत्तेः
3. क. तदारोप्यस्मरणस्य
   ग. तद्धेतोरप्यस्मरणस्य
4. ग. 'न' नास्ति।
5. क. विशेषकारणत्वेन
   ग. विशेषणज्ञानमेव न हेतुः।
6. ग. घ. गौरवप्रसङ्गात्
7. क. तत्समर्थनमिति

प्रकाशः

स्वोत्पत्तौ कथंचित्संस्कारमपेक्षते तस्यैव [1]तद्धेतुत्वोपगमात्। अन्यथा तमिममहं जानामीति प्रत्यभिज्ञानानुव्यवसायात् तत्तोल्लेखो न स्यात्। तस्य त्वन्मतेऽपि संस्काराजन्यत्वात्। तस्या इति। संस्कारत्वेन [2]संस्कारजन्यत्व इत्यर्थः।

---

न्यायशिखामणिः

तथापि [3]गौरवमापादितमुररीकृतमित्याशङ्क्य, अनुमितौ परामर्शकल्पनवत् प्रामाणिकत्वान्न दोष इत्याह—तस्मादिति। वयमिति।

नन्वेतन्मतेऽप्यव्यवहितं विशेषणज्ञानं [4]विशिष्टानुभवकारणमित्यायातमिति कथं यज्ञपतिमताद्भेद इति चेत्—न। [5]अव्यवहितत्वं तन्मतेऽवच्छेदकप्रविष्टम्, रुचिदत्तमिश्रमते तु न तथेत्यत्यन्तवैलक्षण्यात्।

कारणत्वेनेति। न चाननुगमः। संस्कारस्य यत्र प्रयोजकत्वं तत्र तत्तोल्लेख इत्यत्र तात्पर्यात्।

अत्रेदं चिन्त्यम्— आरोपे विशेषणस्मरणजन्यविशिष्टप्रमायां च संस्कारस्य प्रयोजकत्वात् [6]तत्रापि तदुल्लेखापत्तिः।

न च विशेषणानुभवजन्यविशिष्टप्रमायामनुभूयमानारोपे च व्यभिचारान्न तदवच्छिन्नप्रयोजकत्वं संस्कारस्येति वाच्यम्। तर्हि अनुव्यवसायमात्रं प्रति व्यभिचारेण तत्र तस्याप्रयोजकतया [7]प्रत्यभिज्ञानानुव्यवसायेऽपि [8]तत्तानुल्लेखापत्तेः।

यदि चानुव्यवसायविशेषे तस्य नियतपूर्ववर्तित्वात् तत्र तदुल्लेखः तदा स्मर्यमाणारोपे विशिष्टप्रमाविशेषे च संस्कारस्य तथात्वात्तदुल्लेखः स्यादिति तुल्यम्।

अत्र ब्रूमः। [9]स्मृतौ संस्कारजन्यत्वप्रयुक्तस्तत्तोल्लेखः, [10]अन्यत्रोपनयवशात्तसः।

---

1. ख. तत्तोल्लेखित्वोपगमात्
2. क. संस्कारजन्य इत्यर्थः
3. घ. गौरवमनपाकृतमित्या-
4. ग. विशिष्टाभाव-
5. क. तदव्यव-
6. ग. अत्राप्युल्लेखापत्तिः।
7. ग. प्रत्यभिज्ञानव्यव-
   घ. प्रत्यभिज्ञानुव्यव-
8. क. तत्तोल्लेखानापत्तिः
9. ग. विस्मृतौ संस्कारशून्यत्वप्रयुक्तः
10. ग. अन्यत्र तूपनय-

प्राभाकरास्तु—साक्षाद्धीः प्रत्यक्षम् । साक्षात्त्वं च न जातिः, नियतव्यञ्जकाभावात् । नापि सविकल्पकानपेक्षज्ञानत्वम्, प्रत्यभिज्ञा-सादृश्यद्वित्वादिप्रत्यक्षाव्यापनात् । किं तु यज्ज्ञानं यद्विषयत्वे सविकल्पका-जन्यं तत्तत्र साक्षाद्धीः । मितिमातृप्रकाशे च सर्वमेव ज्ञानं प्रत्यक्षं ज्ञाना-जन्यत्वात् । जातावनुगतधीरपि प्रत्यक्षा जातिव्यक्तिनिर्विकल्पकजन्य-त्वात् । सादृश्यादिविशिष्टवैशिष्ट्यप्रत्यक्षे च न विशेषणज्ञानं हेतुः, तेन विनापि युगपदिन्द्रियसंनिकृष्टे विशिष्टप्रत्ययोदयात् ।

---

प्रकाशः

जातिव्यक्तीति । यद्यपि तन्मते निर्विकल्पकमसिद्धम्, तथापि बहुविशेष-णानवगाहिज्ञानं निर्विकल्पकमित्यभ्युपेत्य एवमुक्तम् । सादृश्यादीति । [1]सादृश्य-त्वादीत्यर्थः । प्रतियोग्यंशे तज्ज्ञान(जनकत्वेऽपि) [जन्यत्वेऽपि] प्रत्यभिज्ञा-

---

न्यायशिखामणिः

[2]तथा च प्रत्यभिज्ञायामव्यवहितस्मरणोपनीता तदुपनीता च तदनुव्यवसाये भासत इत्युपपत्तौ न संस्कारजन्यत्वकल्पनावकाशः । न चैवमारोपेऽपि तदुल्लेखापत्तिः । तत्पूर्वं तत्तोपनये प्रमाणाभावात् । प्रमुष्टतत्ताकस्मरणेनाप्यारोपोपपत्तेः । तदुपनये वा दोषेण तदुल्लेखप्रतिबन्धात् । अत एव न विशिष्टप्रमाविशेषे तदुल्लेखः । तत्र तत्तोपनयाभावात् । भावे वा अदृष्टविशेषाद्विशेषणमात्रविषयकत्वोपपत्तेः । अत एव घटघटत्वगोचरनिर्विकल्पकसत्त्वेऽपि तज्जन्यविशिष्टज्ञानस्य घटत्वप्रकारकतानियम इति दिक् ।

ननु सर्वमपि ज्ञानं प्रमात्राद्यंशे ज्ञानाजन्यत्वेन सुतरां सविकल्पकाजन्य-त्वात् तत्र प्रत्यक्षं चेत्—तर्हि ज्ञानाजन्यत्वमेवास्तु लक्षणम्, किं सविकल्पक-पदेनेत्याशङ्कां वारयितुं जातावित्युक्तम् । तदनभ्युपगमपराहतमिति शङ्कते—यद्यपीति । ([3]एकविशेषणेति) । [बहुविशेषणेति] । यद्यपि पूर्वव्यक्तिवृत्तित्वे सत्येतद्व्यक्तिवृत्तित्वमनुगतत्वमित्यनेकविशेषणज्ञानाधीनमनुगतत्वप्रत्यक्षम्, तथापि घटोऽयमिति जातिविशिष्टप्रत्यक्षमनुगतत्वबुद्धिपदनिर्देश्यमित्यभिप्रेत्य एतदुक्तम् ।

---

1. क. सादृश्यत्वादित्यर्थः
2. ग. तथा सति
3. क. एकविशेषणत्वाद्यद्यपि

दीर्घादिप्रत्यक्षे च न ह्रस्वादिज्ञानापेक्षा, किं तु तद्व्यवहारे।

प्रकाशः

यास्तत्तांश इव न प्रत्यक्षत्वम्, किं तु परोक्षत्वमेव। अत [1]एवांशविवक्षापक्षे प्रागुक्ताऽव्याप्तिः संगच्छत इति भावः। यद्वा प्रतियोगिसंस्कार एव [2]तज्जनक इति मतेनेदम्।

यत्तु [3]दीर्घप्रत्यक्षवत् व्यवहार एव प्रतियोगिज्ञानापेक्षा न सादृश्यप्रत्यक्ष इति। तन्न। तथा सति प्रागुक्ताव्याप्तेरलग्नकत्वापत्तेः[4]। दीर्घेति। तस्य परिमाणविशेषस्य द्रव्यग्रहणयोग्यतान्तर्भूतयोग्यताकत्वादित्यर्थः।

न्यायशिखामणिः

यद्यपि गोसदृशगवयाश्रयोऽयं देश इति प्रत्यक्षमपि सादृश्यगवयत्वरूपानेकविशेषणज्ञानजन्यमिति यथाश्रुतेऽपि नानुपपत्तिः, तथापि 'प्रत्यभिज्ञानसादृश्यद्वित्वादि' इति पूर्वग्रन्थे सादृश्यविशिष्टप्रत्यक्षाव्याप्त्यभिधानात् अत्रापि तत्परिहारग्रन्थे तदेव वाच्यम्। तथा च विशिष्टवैशिष्ट्येत्यसंगतिरित्यत आह—सादृश्यत्वादीति।

वस्तुतस्तु—सादृश्यप्रत्यक्षे [5]द्वित्वप्रत्यक्षे दण्डी पुरुष इति विशिष्टवैशिष्ट्यप्रत्यक्षे चेत्यावृत्त्या प्रत्यक्षपदं योज्यम्। अत एव सिद्धान्ते दण्डिज्ञानादौ सविकल्पकजन्यत्वसाधकानुमानं संगच्छते। अन्यथा तेन विनेत्यनेन दण्डिज्ञानादौ [6]तदप्रतिक्षेपे पूर्वपक्षसिद्धान्तयोर्भिन्नविषयत्वापत्तेरिति द्रष्टव्यम्।

असंनिकृष्टगोपिण्डांशे सविकल्पकापेक्षावश्यंभावात् तत्राव्याप्तिरित्यत आह—प्रतियोग्यंश इति। ननु [7]सादृश्यप्रत्यक्षं सर्वांशे प्रत्यक्षमित्येतस्याभिमतम्। अन्यथा इदमपि प्रत्यभिज्ञयैव सहोच्येतेत्यनुशयादाह—यद्वेति। एवं सति पूर्वग्रन्थविरोधं परिहरति—तज्जनक इति।

1. क. एवांशाविवक्षा-
2. क. तत्र जनकः
3. ख. दिवाप्रत्यक्षवत्
4. क. ॰रलग्नत्वापत्तेः
5. क. 'द्वित्वप्रत्यक्षे' इति नास्ति।
6. घ. तत्प्रतिक्षेपे
7. क. सादृश्यप्रत्यक्षे

अनुमित्यादेर्मेयांशे प्रत्यभिज्ञायाश्च तत्तांशे ज्ञानजन्यत्वान्न प्रत्यक्षत्वम्, किं तु परोक्षत्वमेव। मितिमात्रंशे इदन्तांशे च द्वयोरेव प्रत्यक्षत्वम्।

यत्तु तत्ताप्रकाशे न तत्तासविकल्पकत्वेन कारणता, किं तु तत्ताज्ञानत्वेन। तन्न। अनुमित्यादावपि लिङ्गादिज्ञानत्वेनानुमेयादितुल्यत्वादिति।

अत्रोच्यते। यदि तत्तायां प्रत्यभिज्ञा परोक्षानुभवरूपा तदा नोत्पद्येत, तद्धेतुलिङ्गादेरभावात्। तत्ताज्ञानसहितमिन्द्रियं जनकमिति चेत्—तर्हि इन्द्रियजन्यत्वात्तत्र साक्षाद्धीरेव स्यात्। न च ज्ञानानपेक्षेन्द्रियजन्यत्वं तत्र तन्त्रम्, गौरवात्। ज्ञानसहितेन्द्रियजन्यत्वेनेदन्तांशेऽप्यप्रत्यक्षत्वप्रसङ्गाच्च। न ह्येकस्मिन् ज्ञाने जनयितव्ये तदपेक्षा तदनपेक्षा च संभवति।

अंशे तदुभयमपीति चेत्—न। ज्ञाने अंशस्य विषयत्वेन तदजन्यत्वात्। एवं मितिमात्रंशे च सर्वं ज्ञानं न प्रत्यक्षम् इन्द्रियाजन्यत्वात्

---

प्रकाशः

किं तु [1]तत्तेति। तथा च सविकल्पकत्वेन सविकल्पकाजन्यत्वं लक्षणं विवक्षितम्। एवं च तत्तांशेऽपि प्रत्यक्षमेवेति भावः। तुल्यत्वादिति। तथा चानुमेयांशेऽपि परोक्षत्वं न स्यादिति भावः।

---

न्यायशिखामणिः

प्रतिबन्दी अनुत्तरमित्यत आह—अनुमेयांश इति। तथा च सविकल्पकाजन्यत्वमेव लक्षणं वाच्यमित्यनुमेयांश इव तत्तांशेऽपि परोक्षत्वमिति भावः।

ननु किमंशपदेन विषयो विवक्षितः, उतावयवः। आद्येऽपि तस्य विशेषणत्वमवच्छेदकत्वं वा। तत्राद्यं 'ज्ञाने अंशस्ये'त्यादिना निराकृत्य 'अपि चे'त्यनेनावयवपक्षो निरस्तः। अत इत्यनेन तु विषयविशेषणत्वपक्षे तस्य ज्ञानाजन्यत्वमुक्तमिष्टमिति शङ्कामतिव्याप्तिप्रसङ्गेन निराकृत्य अथेत्यनेनावच्छेदकत्वपक्ष उत्थापिते तद्विषयत्वस्यापि तद्विशेषणत्वमुक्तमिति मन्वानेन तत्पक्षोक्तदोष-

---

1. क. तत्तेति।

साक्षात्कारे तस्य कारणत्वात्। मनोजन्यत्वे अनुमेयांशेऽपि तत्त्वप्रसङ्गः। न च ज्ञानमात्रसामग्रीजन्यत्वं प्रत्यक्षत्वे तन्त्रम्, गौरवात्। ज्ञानमात्रं च न ज्ञानत्वं, तस्याजन्यत्वात्। नापि सर्वं ज्ञानं, प्रत्यक्षज्ञाने प्रत्येकं सर्वज्ञानसामग्र्यजन्यत्वात् सर्वज्ञानसामग्र्यप्रसिद्धेश्च।

अपि च ज्ञाने अवयवाभावेनांशो विषय एव। विषये च ज्ञानं न कारणम्। अतोऽनुमितिप्रत्यभिज्ञयोः स्वविषयेऽनुमेये तत्तायां च प्रत्यक्षत्वं स्यात्। विषयस्य सविकल्पकाजन्यत्वात्।

अथ प्रत्यभिज्ञायां तत्ताविषयत्वेन तज्ज्ञानं कारणम्। एवमनुमित्यादौ मेयविषयत्वेऽपि। मितिमात्रेदन्ताधर्मिविषयत्वे च न ज्ञानं कारणं,

---

प्रकाशः

ज्ञाने अंशस्येति। यद्यप्येकज्ञाने गुणदोषवदिदं संभवति। तथापीदमापाततः। वस्तुतः साक्षात्कारित्वस्य जातित्वव्यवस्थापनात् जातेश्च व्याप्यवृत्तित्वनियमान्नावच्छेदेन वृत्तिरित्यत्र, 'दण्डिज्ञानादा'वित्याद्यग्रिमदूषणे वा तात्पर्यम्। सर्वज्ञानेति। न च ज्ञानत्वावच्छिन्नकार्यत्वनिरूपितकारणजन्यत्वं तथेति वाच्यम्। अनुमेयांशेऽपि प्रत्यक्षतापत्तेः। ज्ञानजन्य एवेति। ज्ञानस्वरूपात्मकस्य तस्य तत्ताज्ञानादिजन्यत्वादिति भावः। ज्ञानाजन्य एवेति क्वचित्पाठः। तत्र

---

न्यायशिखामणिः

प्रसङ्ग इत्युक्तम्। तत्स्वयं तस्यावच्छेदकत्वोद्घाटनेन[1] दूषयति—यद्यपीति। यथा एकत्र भ्रान्तिज्ञाने धर्मधर्मिविषयत्वावच्छेदेन गुणदोषापेक्षा तथा तत्तेदन्ताविषयत्वावच्छेदेन ज्ञानापेक्षानपेक्षे न विरुद्धे इत्यर्थः।

वक्ष्यमाणदूषणेनैव तन्मतनिराकरणसंभवे गुणगतजात्यनङ्गीकारवादिनं प्रति तद्व्यवस्थापनतात्पर्यकल्पनं न युक्तमित्यनुशयादाह—दण्डीति। (एवमिति) [एवमिति][2]मात्रंशेऽपीत्यादि अप्रसिद्धेश्चेत्यत्यन्तव्यवहितावपि [3]तत्पूर्वापरग्रन्थौ योग्यत्वात्तात्पर्यतो व्याख्याय संप्रति तद्व्याख्यातुं प्रतीकमादत्ते—सर्वज्ञानेति।

---

1. क. ०त्वाघटनेन
2. ग. ०मात्रांशेऽपीत्यादि
3. क. घ. तत्पूर्वापरग्रन्थायोग्यत्वात्

किं तु ज्ञानसामग्रीति चेत्—न। तद्विषयत्वं हि ज्ञाने स्वकारणाधीनं तदीयस्वभावत्वं स्वरूपविशेषः। स च (ज्ञानाजन्य) [ज्ञानजन्य] एव। दण्डिज्ञानादौ चाव्याप्तिः। तस्यानुमित्यादिवद्विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वात्। न च परोक्षत्वमुपाधिः। प्रत्यभिज्ञायां प्रथमोत्पन्नजातिव्यक्तिज्ञाने जन्ये जातेरनुगतप्रत्यक्षे च साध्याव्यापकत्वात्।

पूर्वव्यक्तिवृत्तित्वे सत्येतद्व्यक्तिवृत्तित्वमनुगतत्वमिति तत्र पूर्वानुभूतव्यक्तेर्विशेषणत्वेन तत्र ज्ञानस्यानुगतत्वप्रत्यक्षे कारणत्वात्। अन्यथा प्रथममप्यनुगतधीप्रसङ्गः।

अत एव ज्ञानसाक्षादजन्यं ज्ञानं प्रत्यक्षम्। प्रत्यभिज्ञायां संस्कार एव साक्षाज्जनकः। जातावनुगतधीरपि संस्कारजन्या। एवं सादृश्यादिप्रत्यक्षेऽपि प्रतियोगिसंस्कार एव कारणमिति निरस्तम्। दण्डानुभवजन्यदण्डिप्रत्यक्षे धारावाहिकप्रत्यक्षे चाव्यापनात्। उत्तरविशिष्टज्ञाने पूर्व-

---

**प्रकाशः**

[1]तत्ताविषयत्वस्य विषयघटितधर्मस्य ज्ञानाजन्यत्वादित्यर्थः। तथा च तत्तांशेऽपि प्रत्यक्षत्वं स्यादिति भावः। मतान्तरावष्टम्भेनाह—दण्डीति। स्वमतेनैवाह—प्रत्यभिज्ञायामिति।

---

**न्यायशिखामणिः**

ननु ज्ञानजन्य इति पाठो न युक्तः, [2]ज्ञानस्वरूपस्य तस्य तज्जन्यत्वव्याघातात्। तत्तास्मृतिजन्यत्वविवक्षायां [3]नञ्पाठो न युक्त इत्यत आह—ज्ञानेति। ननु न तावद्विशेषणज्ञानजन्यत्वं साध्यम्। विशिष्टज्ञानस्य परैस्तद्व्याप्त्यनभ्युपगमात्। नापि सविकल्पकजन्यत्वम्। तस्य न्यायमते निर्विकल्पकजन्ये व्यभिचारात्। न चात्र साध्ये विशिष्टवैशिष्ट्यज्ञानत्वं[4] हेतुरिति विवक्षितम्। तेन विनापि युगपदनेकनिर्विकल्पके सति विशेष्ये विशेषणमिति न्यायेन विशिष्टवैशिष्ट्यज्ञानोदयाङ्गी-

---

1. ख. तत्तापि विषयत्वस्य
2. क. ज्ञानस्वरूपे तस्य जन्यत्व-
3. क. स पाठो
4. ग. ॰ज्ञानं

विशिष्टानुभवस्यैव विशेषणज्ञानत्वेन हेतुत्वात् संस्कारस्य स्मरणेतराजनकत्वाच्च । अन्यथा प्रत्यभिज्ञादेः संस्कारजन्यत्वेन स्मृतित्वं स्यात् इत्युक्तत्वात् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ प्रत्यक्षखण्डे प्रत्यक्षलक्षणवादः

—: * :—

### प्रकाशः

अत एवेत्यस्यार्थमाह—दण्डेति ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे प्रत्यक्षखण्डे प्रत्यक्षलक्षणवादः ॥

—: * :—

### न्यायशिखामणिः

कारेण [1]व्याप्त्यसिद्धेरित्याशङ्क्याह—परमतेति । विवक्षितलिङ्गकं यत् सविकल्पकजन्यत्वानुमानं तत् परमतावष्टम्भेनेत्यर्थः । तन्मते [2]तस्य परोक्षत्वादाह—स्वमत इति ।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते न्यायशिखामणौ प्रत्यक्षलक्षणवादः ॥

—: * :—

1. ग. व्याप्तिसिद्धेः
2. क. तत्त्वस्य

# अथ संनिकर्षवादः

प्रत्यक्षविशेषे संनिकर्षविशेषो हेतुरननुगत एव । संयोगेन द्रव्यग्रहः संयुक्तसमवायेन रूपकर्मणोर्ग्रहणम्, संयुक्तसमवेतसमवायेन रूपत्वादेः, समवायेन शब्दस्य, समवेतसमवायेन शब्दत्वादेः, विशेषणतया शब्दाभावस्य, इन्द्रियसंबद्धविशेषणतया समवायघटाभावादेर्योग्यसंनिकर्षादेव ग्रहो न संनिकर्षमात्रात् ।

---

### प्रकाशः

नन्विन्द्रियजन्यत्वं प्रत्यक्षलक्षणमसिद्धम् । असंनिकृष्टस्येन्द्रियस्याहेतुत्वात्, तत्संनिकर्षाणां चाननुगतत्वादित्यत आह—प्रत्यक्षेति । इन्द्रियेति । न चैवं षोढा परिगणनमसंगतमिति वाच्यम् । विशेषणतात्वेनैकीकृत्य विभजनात् । संबन्धिविशेषणता च संयुक्तविशेषणता संयुक्तसमवेतविशेषणतेत्येवं निर्वाच्या । न च विशेषणतावत् [1]समवायत्वेन चतुर्णामैक्यापत्तिः । स्वतन्त्रस्य नियोगानर्हत्वात् ।

---

### न्यायशिखामणिः

ननु [2]प्रत्यक्षलक्षणानन्तरं संनिकर्षनिरूपणस्य कः प्रसङ्गः । न च तत्र कारणजिज्ञासायां तन्निरूपणम् । अन्यान्यपि तत्कारणानि निरूप्यन्ताम् अविशेषादित्याशङ्क्य, लक्षणनिरूपकग्रन्थेनास्याक्षेपलक्षणां[3] सगतिमाह—नन्विति । इन्द्रियेति । एतच्चोपलक्षणम् । [4]विषयजन्यज्ञानत्वमपि लक्षणमसिद्धम्, इन्द्रियासंनिकृष्टस्य तस्याहेतुत्वात् । तथा ज्ञानाकरणकत्वमपि करणान्तराभावात् । न चेन्द्रियं करणम्, [5]व्यापारवत्त्वाभावात् । संनिकर्षाणां चाननुगतत्वादित्यपि द्रष्टव्यम् । न च षोढेत्येतत् सप्तविधस्योपलक्षणमिति शक्यं वक्तुम् । इन्द्रिय-

---

1. ख. समवेतत्वेन
2. ग. प्रमाणलक्षणा-
3. क. स्यापेक्षेव लक्षणा-
4. क. विषयजन्यत्वमपि
5. घ. व्यापारभावात्

अथ सूक्ष्मावयवावच्छेदेनावयविसंयोगेऽपि न तद्ग्रह इति महावयवावच्छेदेन संयोगो हेतुः। तथा चावयवेन्द्रियसंयोग एव हेतुः। न च ग्राह्यसंयोगावच्छेदकावयवसंयोगापेक्षया ग्राह्यसंयोगस्य लघुत्वात् स एव हेतुः। तस्यातिप्रसक्तत्वात्।

एतेन स्वावयवसंयोगापेक्षया स्वसंयोगस्य लघुत्वात् स एव हेतुरिति निरस्तम्। नाप्यवच्छेदकसंयोगेनान्यथासिद्धौ तत्राप्यवच्छेदकान्तरसंयोगेनान्यथासिद्धिरिति संयोगो हेतुरेव न स्यादिति वाच्यम्। अल्पतरतमभागावच्छेदेन संयोगस्य हेतुत्वेऽतिप्रसङ्गादिति।

मैवम्। द्रव्यग्रहेऽवयविमात्रग्रहे वा स्थूलावयवावच्छेदेन संयोगो न न हेतुः, आत्मत्रसरेणुसूक्ष्मभागग्रहे व्यभिचारात्। किं तु घटादिग्रहे स

---

प्रकाशः

तस्येति। सूक्ष्मावयवावच्छेदेन ग्राह्यसंयोगेऽपि प्रत्यक्षानुत्पादादिति भावः। यद्यपि सूक्ष्मावयवावच्छेदेनावयवसंयोगोऽप्यतिप्रसक्त एव। स्थूलावयवावच्छेदेन तत्संयोगस्य हेतुत्वे ग्राह्यसंयोगोऽपि तथैव हेतुरस्तु। तथाप्यापातत इदम् एतेनेति। पूर्वमवच्छेदकान्तर्भावः, अत्र तु नेति भेदः। नाप्यवच्छेदकेनेति। न च परमाणाववच्छेदकान्तराभावात् तत्संयोग एव हेतुः [1]स्यादिति वाच्यम्। तस्य तत्त्वेऽतिप्रसङ्गतादवस्थ्यात्। तथा च ग्राह्यसंयोग एव हेतुर्वाच्य इति भावः। अल्पेति। अल्पतरभागावच्छेदेन ग्राह्यसंयोगस्य हेतुत्वेऽतिप्रसङ्गस्योक्तत्वान्महावयवावच्छेदेन स तथा वाच्यः। तथा च महावयवसंयोग एव हेतुरस्त्वित्युक्तमेवेति भावः।

---

न्यायशिखामणिः

संबन्धिविशेषणतानिर्वचने ततोऽप्यधिकसंख्यापत्तेः। इन्द्रियपरम्परासंबन्धिदेशान्तरवर्तिघटाभावग्रहप्रसङ्गेन तन्निर्वचनस्यावश्यकत्वादित्याशयेनाह—संबन्धीति।

ननु ग्राह्यसंयोगस्याहेतुत्वमुपसंहारे प्रतीयते। तत् अवयवसंयोगहेतुत्वोपक्रमविरुद्धमित्यत आह—अल्पतरेति।

---

1. ख. अस्त्विति।

हेतुः। एवं च आत्मादिद्रव्यग्रहो ग्राह्यसंयोगजन्य इति घटादिग्रहोऽपि तद्वदेव स्वग्राह्यसंयोगजन्य इति। तस्मिन् सत्यपि घटादिग्रहो नास्तीति यदि तदा स्थूलावयवसंयोगोऽवच्छेदकोऽस्तु तत्संयोगोऽपि वा हेतुः। न तु क्लृप्तहेतुपरित्यागः।

---

**प्रकाशः**

द्रव्यग्रह इति। द्रव्यमात्रग्रह इत्यर्थः। एवं चेति। सामान्यत एव द्रव्यलौकिकप्रत्यक्षत्वावच्छेदेन तद्धेतुत्वकल्पनादिति भावः। तत्संयोगोऽपीति। वाशब्दोऽनास्थायाम्। वस्तुतः सूक्ष्मावच्छेदेनोभयसंयोगेऽपि न प्रत्यक्षमिति [1]स्थूलावयवस्याप्यवच्छेदकत्वध्रौव्यात् ग्राह्यसंयोगेन तदवयवसंयोगोऽन्यथासिद्ध एवेति बोध्यम्।

ननु दशावच्छेदेन चक्षुस्संयोगेऽपि कथं न पटग्रहः। न च यदवच्छेदेनावयवी वर्तते तदवच्छेदेनावयविसंयोगो भवेत् दशावच्छेदेन तु नावयवीति

---

**न्यायशिखामणिः**

नन्ववयवीत्यत्रेव द्रव्येत्यत्र मात्रपदानुपादानादस्य द्रव्यविशेषघटादिपरत्वे व्यभिचारोक्तिरात्मग्रहादावयुक्तेत्यत आह—द्रव्येति। ननु ग्राह्यसंयोगो न द्रव्यप्रत्यक्षमात्रे हेतुः, तदभावेऽप्यलौकिकप्रत्यक्षदर्शनादित्यत आह—लौकिकेति। [2]अन्यथासिद्ध एवेति। ननु संयोगो न स्थूलावयवावच्छिन्नो द्रव्यग्रहे हेतुः, आत्मादिग्रहे व्यभिचारात्। तथा च स्थूलावयवसंयोगोऽवयविप्रत्यक्षे, ग्राह्यसंयोगस्तु द्रव्यमात्रप्रत्यक्षे कारणमस्त्विति चेत्—न। आवश्यकग्राह्यसंयोगस्यैव तथा कारणत्वात्। यस्यैव सामान्येन हेतुत्वं तस्यैव विशेषरूपेण [3]हेतुत्वं, लाघवादिति भावः।

स्थूलावयवे विशेषपदं विवक्षितम्। [4]तद्व्यावर्त्यमतिप्रसङ्गमाह—नन्विति।

अत्रेदं चिन्त्यम्—ग्राह्यसंयोगविशेष एव हेतुः, न त्ववयवविशेषः तत्रावच्छेदकः। तेनैवोक्तातिप्रसङ्गनिरासात्। न हि सूक्ष्मावयवावच्छिन्नघटसंयोगो

---

1. क, स्थूलावयवत्वस्य
2. ग. अन्यथासिद्धो चेति।
3. क. हेतुत्वे
4. तद्व्याकृत्य-

ननु संयुक्तसमवायेन अवयविग्रहोऽस्तु, न तु संयोगादिस्तत्र हेतुः, तस्य रूपादिग्रहे व्यभिचारात्। न च लाघवात्संयोग एव तथा। तस्य [1]कल्पनीयकारणत्वादिति चेत्—

न। आत्मग्रहे इन्द्रियसंयोगस्य कारणत्वात् अन्यत्रापि द्रव्यसाक्षात्कारत्वेन तथा कल्पनात्। न च बहिरिन्द्रियद्रव्यग्रहे अवयवविग्रहे वा संयुक्तसमवायः कारणम्। लाघवेन संयोगस्यैव कारणत्वेन कल्पनात्।

---

प्रकाशः

वाच्यम्। द्रव्यस्याप्यव्याप्यवृत्तित्वापत्तेरिति चेत्—न। [2]यथा ग्राह्यसंयोगमात्रस्यातिप्रसक्ततया स्थूलावयवस्तदवच्छेदको घटादिग्रहे, तथाप्यतिप्रसक्ततया [3]घटादिप्रत्यक्षे स्थूलावयवविशेषस्यावच्छेदकत्वकल्पनात्। एतादृशस्थले द्रव्यस्याप्यव्याप्यवृत्तिरित्यन्ये।

आशयमविद्वान् शङ्कते— नन्विति। आशयमुद्घाटयति— [4]आत्मग्रह इति। लाघवेनेति। एतच्च संयुक्तसमवायनिरूपित[5]कार्यतावच्छेदकं गुणादिप्रत्यक्षे तत्तत्प्रत्यक्षत्वमेव, अननुगतस्यापि जन्यतावच्छेदकत्वाभ्युपगमेन बोध्यम्।

---

न्यायशिखामणिः

[6]दृशावच्छिन्नश्चक्षुःसंयोगस्तादृशः, [7]इतरसमवहितेऽपि तस्मिन् प्रत्यक्षानुदयात्। अयं चात्मादिसाधारण इति न विशेषकारणकल्पनागौरवमिति। तदिदमुक्तं योग्यसंनिकर्षादिति। न च योग्यस्य संनिकर्षस्तत्रोक्तो न तु योग्यः। तथा च संयोगविशेषस्य हेतुत्वे कथं तदुपोद्बलकमिति वाच्यम्। तथा सति संयुक्तसमवायस्यायोग्यवायुघटितत्वेन तद्गतस्पर्शस्याप्रत्यक्षत्वप्रसङ्गात्। न चैवं तस्मिन् सत्यपि घटादिग्रहो नास्तीति ग्रन्थविरोधः स्यादिति वाच्यम्। यदिशब्देन तद्विपरीतार्थस्य सूचितत्वात्। तस्मात् ग्राह्यसंयोगविशेष एव हेतुरिति तत्त्वम्।

---

1. ख. कल्पनीयकारणभावात्
2. क. 'यथा' नास्ति।
3. क. पटादिग्रहे
4. क. चात्माग्रह इति।
5. क. ०कार्यतावच्छेदकत्वं
6. ग. घ. दृशावच्छिन्नपटचक्षुः
7. क. इतीतर-

### प्रकाशः

वस्तुतः संयुक्तसमवायनिरूपितकार्यतावच्छेदकं न तत्तल्लौकिकप्रत्यक्षत्वमननुगतत्वात्, तदवच्छेदकशब्देतरद्रव्यसमवेतलौकिकप्रत्यक्षत्वे शरीरनिष्ठसमवेतांशस्य द्रव्यभिन्नत्वेन विशेषणे गौरवम्। एवं च यथा आत्मग्रहे क्लृप्तत्वात् संयोगो हेतुः तथा गुणादिग्रहे क्लृप्तत्वात् संयुक्तसमवायोऽपि। न चैवं संयुक्तसमवेतसमवायोऽपि हेतुः स्यादिति वाच्यम्। इष्टापत्तेरिति वदन्ति।

वयं तु ब्रूमः। विपरीतं लाघवं संभवत्यपि, आत्मग्रहे मनोयोगत्वेनव हेतुत्वकल्पनात्। इन्द्रियसंयोगत्वाद्यपेक्षया[1] मनस्त्वस्य जातित्वेन तस्य [2]लघुत्वात्।

---

### न्यायशिखामणिः

नातिप्रयतीनां मतमाह—एतादृशेति।

यथा [3]क्लृप्तत्वादियुक्त्या अवयवसंयोगस्य हेतुत्वं निरस्तम्, तथैव संयुक्तसमवायस्यापि इत्यतस्तद्धेतुत्वशङ्कानुपपत्तिरित्यत आह—आशयमिति। ननु यदि परमार्थतः साधारणमेकमवच्छेदकं स्यात्तदैव अननुगतमवच्छेदकमित्येतदभ्युपगममात्रं स्यात्। तदसंभवे वह्निजन्यतावच्छेदकधूमत्वालोकत्वादिवत् तादृशमपि तथेत्यत आह—वस्तुत इति। शब्देतरद्रव्यसमवेतलौकिकप्रत्यक्षत्वमेव संयुक्तसमवायकार्यतावच्छेदकं न तु तत्प्रत्यक्षत्वमित्यर्थः। [4]ननु अस्य द्रव्यप्रत्यक्षसाधारण्ये[5] तत्रापि संयुक्तसमवायो हेतुः स्यात्। तथा च द्रव्यभिन्नत्वेनापि समवेतांशो विशेषणीय इत्यत आह–तदवच्छेदकेति। गौरवमिति। अवच्छेदकगौरवमित्यर्थः। तथा चावच्छेदकलाघवात्[6] व्यक्तिगौरवं न दोष इति भावः। ननु यद्यवच्छेदकलाघवेन संयुक्तसमवायोऽपि हेतुः तर्हि संयुक्त[7]समवेतसमवायोऽपि तत्र तथा स्यात्। [8]तदवच्छेदकशब्दत्वेतरद्रव्य[9]समवेतलौकिकप्रत्यक्षत्वघटक(समवेत)[समवेतस्य]द्रव्यभिन्नत्वेन विशेषणे गौरवादित्याशङ्क्य

---

1. क °द्यपेक्षायां
2. क. लाघवात्
3. क. °क्षिप्तत्वादियुक्त्या
4. क. 'ननु' नास्ति।
5. क. °साधारण्येन
6. घ. °लाघवे
7. क. °समवेतसमवेत-
8. ग. घ. तदवच्छेदकशब्देतर-
9. ग. °समवेतसमवेत-

प्रकाशः

न च व्यभिचारान्न तथा। आत्मप्रत्यक्षत्वावच्छेदेनैव तद्धेतुत्वात्। तथा चाक्लृप्तत्वात्संयोगो न हेतुः। किं तु गुणादिग्रहे क्लृप्तत्वात् संयुक्तसमवाय एव। न च तत्रैव तद्धेतुत्वकल्पनम्। मानाभावात्, क्लृप्तेनैवोपपत्तेश्च।

न चेन्द्रियसंयोगत्वमेव सामान्यमिति गुरुत्वेऽपि तत्रैव तत्कल्पनम्। कारणतादिग्राहकेण सामान्ये विशेषे वा लघुनि तद्ग्रहात्। अत एव नाख्यातवाच्यो व्यापारः, किं तु यत्न एव।

नन्वतिप्रसङ्गात् स्थूलावयवावच्छिन्नसंयुक्तसमवाय एव हेतुर्वाच्यः। तस्य च त्रसरेणावभावात् तत्र संयोगोऽपि क्लृप्त इति चेत्—न। घटादिग्रहमात्र एव स्थूलावयवस्यावच्छेदकत्वात्। अन्यथा संयोगहेतुत्वे का गतिः।

तस्माद्यदि संयुक्तसमवायनिरूपितकार्यतावच्छेदकमवयविप्रत्यक्षव्यावृत्तं तदा संयोगमात्रम्, नो चेत् संयुक्तसमवायमात्रं हेतुरित्युभयहेतुत्वं युक्तमिति चिन्तनीयं सूरिभिरिति।

---

न्यायशिखामणिः

निरस्यति—न चैवमिति। इष्टापत्तेरिति। एतन्मते संयोगस्यैवेत्येवकारोऽ[1]प्यर्थः। तथा च लाघवसाम्यादुभयोरपि घटादिप्रत्यक्षहेतुत्वमिति मूलार्थो बोध्यः। तदेतज्जयदेवमतं यथाश्रुतं च स्वयं विपरीतलाघवेन दूषयति—वयं त्विति। मनोयोगत्वेनेति। आत्ममनोयोगत्वेनेत्यर्थः। क्लृप्तत्वादिति। निरुक्तावच्छेदकस्यावयविप्रत्यक्षसाधारणत्वादिति भावः।

[2]लघुनीति। अत्रानुगतत्वेनापि विशेषो विशेषणीयः। अन्यथा लघुघटत्वादौ विद्यमाने कार्यत्वपुरस्कारेण कृतिजन्यत्वग्रहानुपपत्तेः। किं तु यत्न एवेति। अन्यथा गुरुत्वेऽपि [3]सामान्यतयैव तस्यावच्छेदकत्वाभ्युपगमे व्यापारत्वस्याख्यातवाच्यतावच्छेदकत्वापत्तौ रथो गच्छतीत्यस्य व्यापारे लक्षणेति राद्धान्तो भज्येतेति भावः। ननु मा भूद्यथाश्रुतम्, तथापि जयदेवोक्ताभिप्रायो नानुपपन्न इति शङ्कते—नन्विति। संयोगोऽपीति। तथा चागत्या गुर्वपीन्द्रियसंयोगत्वमवच्छेदकमिति भावः।

---

1. क. घ. व्यर्थः।
2. ग. लघुरिति।
3. क. सामान्ये तथैव

ननु संयुक्तसमवायो न गन्धग्राहकः, किंतु आश्रयसंयोगः। एवं गन्धत्वग्रहोऽपि आश्रयाश्रयसंयोगादिति संयुक्तसमवेतसमवायोऽपि न हेतुः। न च गन्धे सति गन्धसमवायं विना गन्धाग्रहोऽस्ति। न चैवं संयुक्तघटे

---

**प्रकाशः**

स्वाश्रयसंयोगस्य हेतुत्वे [1]गन्धस्योपलक्षणत्वमभिप्रेत्य शङ्कते—न चैवमिति। ननु गन्धप्रत्यक्षहेतुगन्धेन्द्रियसंनिकर्षाश्रयत्वं साध्यमत आह—गन्धे-

---

**न्यायशिखामणिः**

संयुक्तसमवायकार्यतावच्छेदकं पूर्वोक्तमेव। न चातिप्रसङ्गः। [2]तस्यैव तद्विशेषस्थूलावयवकावयविप्रत्यक्षे स्थूलावयवावच्छिन्नत्वेन विशेषरूपेणापि कारणत्वाभ्युपगमादित्यत आह[3]—न घटादीति। संयुक्तेति। मात्रपदेन संयोगव्यवच्छेदः। लाघवेन संयुक्त[4]समवेतसमवायस्यापि तत्र हेतुत्वस्योक्तत्वात्। तथा चोभयहेतुत्वोक्तिः[5] समवायत्वेन तयोरेकीकरणाभिप्रायेणेति द्रष्टव्यम्।

अत्रेदं चिन्त्यम्—कार्याकस्मिकत्वपरिहाराय सर्वत्र कारणान्वेषणमिति प्रथमं कार्यतावच्छेदकमेवावधार्यम्। तत्र नात्मप्रत्यक्षत्वं तथा। किं तु द्रव्यप्रत्यक्षत्वम्, लाघवात्। तथा च नात्ममनोयोगत्वं कारणतावच्छेदकम्, व्यभिचारात्। यदि च कारणान्तरनिरूपितकार्यतावच्छेदकाक्रान्तकार्यवृत्तित्वरूपबाधकसत्त्वान्न द्रव्यप्रत्यक्षत्वमवच्छेदकम्। आत्मप्रत्यक्षत्वं [6]तु तदनाक्रान्तवृत्तीति तथा। तदा संयोगकार्यतावच्छेदकद्रव्यप्रत्यक्षत्वाश्रय[7]वृत्तितया शब्देतरेत्याद्यपि [8]संयुक्तसमवायकार्यतावच्छेदकमिति [9]तद्व्यावृत्तमन्यदेवावच्छेदकं स्यादिति तुल्यम्। अवच्छेदकान्तरस्य स्वसमनियतत्वाभावान्न तदाश्रयवृत्तित्वं बाधकमित्येतदपि तुल्यम्।

तस्मात् सर्वबाधकाभावादुभयं कार्यतावच्छेदकमिति तदनुरोधात् संयोगसंयुक्तसमवाययोर्हेतुत्वक्लृप्तौ विनिगमकाभावात् [10]तत्र तदुभयहेतुत्वं युक्तमिति मन्तव्यं मनीषिभिरिति।

---

1. ख. स्वस्योप-
2. क. अस्यैव
3. क. इत्याह
4. ग. 'समवेत' नास्ति
5. ग. घ. °हेतुत्वनिराकरणोक्तिः
6. क. 'तु' नास्ति
7. क. °वृत्तिशब्देतरे-
8. ग. न संयुक्त-
9. क. तद्व्यावृत्त्यर्थमन्यदेव
10. क. 'तत्र' नास्ति।

भाविगन्धग्रहः स्यात्, गन्धस्यापि स्वग्रहे हेतुत्वात्। न च गन्धस्य प्रत्यक्षत्वेनेन्द्रियसंनिकर्षाश्रयत्वमनुमेयम्। शब्दप्रत्यक्षहेतोः समवायस्य गन्धेऽपि सत्त्वात्, गन्धेन्द्रियसंनिकर्षसाधने साध्याप्रसिद्धेः।

मैवम्। गन्धसमवायिसंयोगस्य हेतुत्वे हि यदि गन्धसमवायस्य विशेषणता तदा स हेतुरेव। उपलक्षणत्वे च संयुक्तद्रव्यमात्रमुपलक्ष्यम्। तथा च घटसंयोगात्पटगन्धग्रहप्रसङ्गः।

---

प्रकाशः

न्द्रियेति। यद्यपि [1]स्वप्रत्यक्षजनकेन्द्रियसंनिकर्षाश्रयत्वे साध्ये न दोषः; तथापि स्वत्वं नानुगतमित्याशयेन तथोक्तम्। उपलक्षणत्वे चेति। ननु तस्य स्वाश्रयद्रव्यविशेष उपलक्ष्यो [2]न तु संयुक्तद्रव्यमात्रम्। तथा च नोक्तातिप्रसङ्गः। यथा लिङ्गज्ञानादिहेतुत्वे लिङ्गादेः स्वविषयकज्ञानविशेष उपलक्ष्यो न तु ज्ञानमात्रमिति चेत्—एवमपि लिङ्गवत् समवायस्याप्यवच्छेदकत्वे पर्यवसानात्, तस्य चानुपदमेव दूष्यत्वात्। तर्हीति। न च द्रव्यग्रहे संयोगः क्लृप्त इति विनिगमकमिति

---

न्यायशिखामणिः

किं प्रत्यक्षजनकसंनिकर्षाश्रयत्वमात्रं साध्यम्, उत गन्धपदघटितं स्वपदघटितं वा। तत्राद्यं निरस्तं [3]शब्देत्यादिना। द्वितीयं शङ्कते—नन्विति। तृतीयं तु [4]स्वयमाशङ्क्य निरस्यति—यद्यपीति। किं स्वाश्रयपदं स्वाधारपरं स्वसमवायिपरं वा। तत्राद्यमाधाराधेयभावस्य स्वरूपसंबन्धात्मकस्य नानात्वेन [5]तत्र प्रवेशायोगादित्यभिप्रायेण मैवमित्यनेन निराकृत्यान्त्यं गन्धसमवायीत्यत्र विशेषणत्वादिविकल्पग्रासान्निरस्तम्। तत्रोपलक्षणत्वपक्षे न दोष इति शङ्कते—नन्विति। विशिष्टसंयोगस्य तदेकदेशहेतुत्वक्लृप्तिमात्राद्धेतुत्वम्, तद्धेतुत्वक्लृप्त्या वा। नाद्य इत्याह—शब्देति। न द्वितीय इत्याह—तस्मादिति। विनिगमनेति। विशिष्टहेतुत्व[6]क्लृप्तत्वभावस्य, अन्वयादिना चेहैव तत्कल्पनस्योभयत्र साम्यादित्यर्थः।

---

1. ख. स्वप्रत्यक्षे
2. ख. 'न तु संयुक्त' इति नास्ति।
3. घ. शब्देऽपीत्यादिना।
4. ग. स्वयमेवाशङ्क्य
5. क. तत्प्रवेशा-
6. क. °क्लृप्त्याभावस्य चेहैतत्कल्पनस्य

अथ स्वसमवायिसंयोगो हेतुः। तत्र समवायोऽवच्छेदक इति चेत् —तर्हि संयोगिसमवायस्य हेतुत्वे संयोगोऽवच्छेदकः समवायो हेतुरिति तुल्यम्। तदेतत् परिवर्त्य क्षौमपरिधानमित्युच्यते।

ननु संयुक्तसमवायो न संयोगो न वा समवायः नोभौ वा, गन्धे इन्द्रिये चावृत्तेः। न चेन्द्रियेण गन्धस्य परम्परासंबन्धः। परम्परा हि संयोगसमवायावेव। तत्र विरोध एव नाधिकोऽपसिद्धान्तादिति चेत्—न। इन्द्रियतत्संयोगतदाश्रयसमवायानामेव परम्परासंबन्धत्वात्। अन्यथा नीलत्वजातेः परम्परासंबन्धेन वस्त्रचर्मकम्बलेषु अनुगतव्यवहारोच्छेदः।

ननु संयुक्तसमवेतसमवायात् न रूपत्वादिग्रहः तदभावादिति चेद् —न। तदनभ्युपगमेऽपि रूपादिसादृश्यस्य ततो ग्रहात्। न च द्रव्यसादृश्यादेव तद्व्यवहारः, बाधकं विना प्रतीत्यविशेषात् वैपरीत्यापत्तेः। आश्रयवैसादृश्येऽपि रूपरसादेः सादृश्यानुभवाच्च। रसत्वमधुरत्वगन्धत्व-

## प्रकाशः

वाच्यम्। शब्दग्रहे तस्यापि क्लृप्तत्वात्। तस्माद्विनिगमनाविरहात् परंपरासंबन्धत्वेन उभयमतेऽप्युभयहेतुत्वेन[1] निर्विशेष इत्याह—तदेतदिति। वस्तुतो गन्धादेरवश्यमिन्द्रियसंनिकर्षाश्रयत्वमुपेयम्। अन्यथा विशेष्येन्द्रियसंनिकर्षाभावात तत्प्रत्यक्षता न स्यात्। अत एवाग्रे शब्दस्य प्रत्यक्षत्वेन प्रत्यासत्तिसाध-

## न्यायशिखामणिः

न चान्योन्यावच्छिन्नयोरुभयोर्हेतुत्वे अपसिद्धान्त इति वाच्यम्। उद्भूतरूपादिवदविरोधादिति भावः।

नन्वेवमपि गुणादिप्रत्यक्षे विशिष्टसमवाय एव हेतुरिति न सिध्यति। किं च स्वसमवायिसंयोगस्य [2]स्वसमवायिसमवायिसंयोगस्य च हेतुत्वे षोढा परिगणनव्याघात इत्यस्वरसादाह—वस्तुत इति। गन्धादेरिति। आदिपदाद्गन्धत्वजातिपरिग्रहः—इन्द्रियसंनिकर्षेति। स्वप्रत्यक्षजनकसंनिकर्षेत्यर्थः। न चाननु-

1. ख. °हेतुतया  2. 'स्वसमवायिसमवायिसंयोगस्य' इति नास्ति।

सुरभित्वादिश्च जातिः अनुगतप्रत्ययात् । रूपे च यद्यपीदं नीलमित्यनुभवो न तु इदं रूपमिदं रूपमिति, तथापि पीतो वर्णः नीलो वर्ण इति वर्णाका-

---

प्रकाशः

नमिति भावः । तदनभ्युपगमेऽपीति । रूपत्वादेर्जातित्वानभ्युपगमेऽपि [1]रूपादिवृत्तिसादृश्यस्यातिरिक्तपदार्थत्वेन तन्मते समवेतत्वात्तद्ग्राहकत्वेनैव तत्सिद्धिरस्त्वित्यर्थः ।

नन्वत्राश्रयसादृश्ये लाघवम्, [2]आश्रितानामनेकत्वादित्यस्वरसादाह—आश्रयेति । ननु सादृश्यधीरुपमानादेव न प्रत्यक्षादित्यस्वरसादाह—रसत्वेति । तथा च तद्ग्राहकत्वेनैव तत्सिद्धिः स्यादिति भावः । रूपत्व इति । यद्यपि

---

न्यायशिखामणिः

गमः, स्वशब्दस्य [3]समभिव्याहृतपरत्वात् । अत एवेश्वरानुमाने तथैव साध्यं [4]वक्ष्यति । [5]ननु पूर्वं रूपत्वादौ समवायमभ्युपेत्य तस्याहेतुत्वशङ्का [6]निराकृता । [7]संयुक्तसमवेतसमवायादित्यत्र तु रूपत्वादेर्जातित्वाभावेन तस्यैवासिद्धेः कुतस्तद्धेतुत्वमित्याशङ्क्य, [8]तज्जातीयत्वाभावेऽपि सादृश्यग्राहकत्वेन तत्सिद्धिरित्युक्तमयुक्तम् । न्यायमते अतिरिक्तपदार्थानभ्युपगमात् तद्गतानेकधर्मवत्त्वस्य सादृश्यस्योपाधिरूपतया तत्र [9]समवायाभावादित्यत आह—रूपत्वादेरिति ।

[10]जयदेवोक्तदोषमाह—नन्वाश्रयेति । तदुक्तमेवाह—नन्विति । उपमानादेवेति । एतच्च परमतावष्टम्भेन । यद्यप्यनेन सदृशी मदीया गौरिति सादृश्यधीरुपमानादेव । [11]तथाप्येतदापाततः । अयं गवयो गोसदृश इति करणीभूतज्ञानस्याव्यवहितविशेष्यकस्य[12] प्रत्यक्षसाध्यत्वात् । परमार्थतस्तु—तस्य

---

1. क. रूपादिवृत्त्यसादृश्यं-
2. ख. आश्रितानामेकत्वात्
3. क. समभिव्याहृतत्वात्
4. घ. वक्ष्यते ।
5. क. 'ननु' नास्ति ।
6. ग. निराकृतास्तु ।
7. क. ननु संयुक्त-
8. क. ग तज्जातित्वाभावेऽपि
9. ग. समवायादित्यत
10. ग. घ. जयदेवोक्तमपरितोषमाह
11. क. ग. तथाप्यापाततः
12. घ. °विशेष्यस्य

रानुगतबुद्धिरस्ति रूपत्वे मानम् । न च चक्षुराद्येकैकेन्द्रियग्राह्यत्वं रूपत्वादिकम् । बाधकं विनानुगतबुद्धेर्जातिविषयत्वात् । इन्द्रियातीन्द्रियत्वेन चक्षुराद्यग्रहेऽपि रूपत्वादिप्रतीतेः । न हि अननुसंहितोपाधेरुपहितप्रत्ययः । अतीन्द्रियरूपरसगन्धाननुमानापत्तेश्च । योग्यताया रूपत्वादिजातिनिरूप्यत्वात् ।

---

**प्रकाशः**

रूपत्ववर्णत्वयोरभेदादिदमयुक्तम् । तथाप्यनुभवादिपदं [1]तदभिलापपरम् । तथा चानुगतवर्णशब्दानुगमो नानुगतधर्मं विनेत्यनुगतजातिसिद्धिरिति भावः । चक्षुरिति । चक्षुर्मात्रबहिरिन्द्रियग्राह्य[2]गुणत्वादिकमित्यर्थः । तेन मनोग्राह्यतया नासंभवो न वा रूपाभावादावतिव्याप्तिः । ग्राह्यत्वं च ग्रहणविशेष्यत्वम् । अतो नोपनीतभानमादायासंभव इत्याहुः । न च स्नेहवत्संयोगविशेषे[3]ऽतिव्याप्तिः ।

---

**न्यायशिखामणिः**

सादृश्यग्राहकत्वेऽपि रूपत्वादिग्राहकत्वं न साधितमिति संयुक्तसमवेतसमवायेन रूपत्वादेर्ग्रह इति प्रतिज्ञाव्याघात इत्यस्वरसोऽत्र बोध्यः ।

ननु चक्षुरादीत्यादिपदेन मनसोऽपि परिग्रहे [4]सर्वस्य मनोग्राह्यतया [5]लक्षणासंभवः । तद्भिन्नबहिरिन्द्रियचतुष्टयग्रहे रूपाद्यभावातिव्याप्तिः । भावत्वविशेषणे च प्रभातिव्याप्तिरित्यत आह—चक्षुर्मात्रेति ।

नन्वेवमपि जालसूर्यमरीचिस्थपार्थिवाप्यत्रसरेणुसंयोगे चक्षुर्मात्रग्राह्येऽतिव्याप्तिः । व्यवहितपुष्प[6]पुटिकास्थितपुष्पगन्धोपलब्धिसमये [7]तत्सहचरिताप्यावयवानामप्यस्त्युपलब्धिः । अन्यथा तदा तत्र [8]शैत्याननुभवप्रसङ्गात् । तथा च नासाग्रावच्छिन्न[9]त्वगिन्द्रियमात्रग्राह्यतदवयवनासाग्रसंयोगेऽतिव्याप्तिः । तथा हेमन्तादौ वायुः शीतो वातीत्यनुभवात् तत्रापि तत्सहचरितानामाप्यावयवानामप्युप-

---

1. क. तदपलाप-
2. ख. °गुणत्वादित्यर्थः ।
3. ख. °ऽव्याप्तिः
4. ग. घ. सर्वस्यापि
5. ग. लक्षणसंभवः
6. क. ग. °पेटिका-
7. क. तत्सहचरितानामप्यवयवानां
8. क. घ. °श्रैत्यानु-
9. ग. °त्वगिन्द्रियग्रहे तदवयव-

**यद्यपि तन्मते नीलपीताद्येकैकमेव नित्यं नातीन्द्रियं, तथापि चक्षुर्घ्राणादिरूपस्यालोकपृथिव्यादिरूपाभिन्नत्वेन प्रत्यक्षत्वप्रसङ्गः ।**

---

**प्रकाशः**

योग्यतागर्भत्वात् । **अतीन्द्रियेति** । त्वदुक्तरूपत्वस्य तत्र बाधात् अतिरिक्तस्यानभ्युपगमात् [1]अनुगतव्यापकतावच्छेदकाभावादिति भावः ।

ननु योग्यतागर्भं न बाधितमित्यत आह—**योग्यताया इति** । **तथापीति** । चक्षुरादिघटितेन्द्रियसंनिकर्षेण [2]तत्प्रत्यक्षप्रसङ्ग इत्यर्थः ।

---

**न्यायशिखामणिः**

लब्धिः । तथा च त्वगिन्द्रियमात्रग्राह्ये तदवयवदेहसंयोगेऽतिव्याप्तिरित्याशङ्क्य निराकरोति—**न चेति** । **योग्यतेति** । चक्षुरादिष्वेकैकमात्रग्राह्यत्वं [3]हि तदितरजन्यग्रहणविशेष्यत्वायोग्यत्वे सति तज्जन्यग्रहणविशेष्यत्वयोग्यत्वम् । तथा चोक्तसंयोगस्य तदितरग्रहण[4]विशेष्यत्वयोग्यत्वान्नातिव्याप्तिः ।

यद्यप्यनुद्भूतस्पर्शप्रभादिसंयोगस्य चाक्षुषज्ञानमात्रविषयत्वयोग्यत्वाद्दोषतादवस्थ्यम् । तथापि गुणपदस्य विशेषगुणपरत्वान्नोक्तदोषः । योग्यताविवक्षा चातीन्द्रियरूपादावव्याप्तिवारणाय । न च योग्यतासत्त्वे कदाचित् तत्प्रत्यक्षतापत्तिः । महत्त्वरूपसहकारिविरहादित्यत्र तात्पर्यम् ।

ननु क्लृप्तरूपत्वाद्युपाधिना अनुगतमतिनिर्वाहो बाधक इत्याशङ्क्य, किं चक्षुरादिजन्यज्ञानमात्रविषयत्वयोग्यत्वं तथा, चाक्षुषत्वजातियोगिज्ञानमात्रविषयत्वं वा । तत्राद्यं **इन्द्रियेत्यादिना** निराकृत्य द्वितीयं **अतीन्द्रियेत्यादिना** निरस्तम् । तदयुक्तम् । पृथिवीत्वादिलिङ्गसद्भावादित्याशङ्क्य, किं [5]रूपादौ साध्ये चाक्षुषत्वादिजातियोगिज्ञानमात्रविषयत्वं व्यापकतावच्छेदकम्, किं वा तादृशज्ञानविषयत्वयोग्यत्वम् । तत्र नाद्य इत्याह—**त्वदुक्तेति** । अन्त्यं शङ्कते—**नन्विति** । योग्यत्वं हि [6]अवच्छेदकनिरूप्यम् । तच्च न रूपत्वादिजातिः, अनभ्युपगमादित्याह—**अत आहेति** ।

---

1. क. °व्यापकतावच्छेदकत्वादिति
2. क. तत्प्रत्यक्षत्वं-
3. क. ग. 'हि' नास्ति ।
4. क. 'विशेष्यत्व' नास्ति ।
5. क. निरूप्यरूपादौ
6. क. अवच्छेदकत्वम्

न चैकमेव रूपमुद्भूतमनुद्भूतं चेति। विरोधात्। रूपत्वादिना परस्परव्यावृत्ततया ज्ञातस्य रूपादेरुपलब्ध्या तत्कारणत्वेन परस्परव्यावृत्तचक्षुराद्यनुमितिः, परस्परव्यावृत्तचक्षुराद्यनुमितौ च चक्षुर्ग्राह्यत्वादिना रूपादिपरस्परव्यावृत्तधीरित्यन्योन्याश्रयाच्च। नीलपीतादिप्रतीतौ भिन्नभिन्नकरणत्वसिद्धावपि तत्तत्करणग्राह्यत्वस्य सर्वरूपेष्वसिद्धिः।

ननु नीलपीताद्युपलब्धिकरणेषु गन्धरसस्पर्शाव्यञ्जकत्वे सति नीलादिव्यञ्जकत्वात् आलोकवदिति तैजसत्वं प्रसाध्य तैजसेन्द्रियग्राह्यत्वेन [1]नीलादौ रूपाकारानुगतधीरेवं गन्धादावपीति चेत्—

---

प्रकाशः

विरोधादिति। यद्यपि नोद्भूतत्वादिकं तन्मते जातिः, तथा चावच्छेदकभेदेन वृत्तौ न विरोधः, तथापि वक्ष्यमाणयुक्त्या तज्जातित्वमेवेति स्वमतावष्टम्भेन तथोक्तमिति ध्येयम्।

ननु नीलाद्युपलब्धिकरणत्वेन तत्सिद्धिः, तत्करणग्राह्यत्वं रूपत्वम्, अतो नान्योन्याश्रय इत्यत आह—नीलेति। गन्धरसेति। न च पार्थिवत्रसरेणौ व्यभिचारः। परकीयत्वेन नीलादिविशेषणात्। सत्यन्तं मनसि व्यभिचारवारणाय। विशिष्टाभावतया न व्यर्थविशेषणत्वम्।

---

न्यायशिखामणिः

मूले रूपत्वादीत्युपलक्षणम्। तस्य चाक्षुषत्वजातावपि विप्रतिपत्तेस्तद्घटितयोग्यत्वमसंभवीत्यपि द्रष्टव्यम्।

ननु [2]चक्षुरादिरूपे [3]प्रत्यक्षापादनं नानिष्टम्। तस्यैव [4]घटादिवृत्तित्वात्। चक्षुरादिवृत्तित्वेन तदापादनं च तदप्रत्यक्षत्वादेवाशक्यमित्याशङ्क्य, चक्षुस्समवायग्राह्यत्वं चक्षुस्संयुक्तघ्राणादिसमवायग्राह्यत्वं चापाद्यम्। तच्च नेष्टम्। घटादिघटित[5]संनिकर्षग्राह्यत्वाभ्युपगमादित्याह—चक्षुरादीति।

---

1. ख. नीलपीतादौ
2. ग. चाक्षुषादिरूपे
3. ग. प्रत्यक्षत्वापादनम्
4. क. घटादिरूपत्वात्
5. क. संनिकर्षेण ग्राह्य-

प्रकाशः

अन्ये तु—प्रत्येकगर्भनानाहेतावेव तात्पर्यम् । न चैवं गन्धाव्यञ्जकपरकीयनीलव्यञ्जकत्वहेतौ गुप्ताक्षरनीलव्यञ्जकजले व्यभिचार इति वाच्यम् । तस्य

न्यायशिखामणिः

[1]त्रसरेणाविति । ननु तस्य स्वकीयगन्धाद्यभिव्यक्तिस्वरूपयोग्यत्वेन सत्यन्ताभावादेव न व्यभिचारः । न च फलानुपहितत्वं विवक्षितम् । तथा सति गुप्ताक्षरनीलव्यञ्जके [2]गन्धानभिव्यञ्जके [3]जले व्यभिचारात् । न चाभावत्रयं विवक्षितम् । तादृशजले च [4]गन्धव्यञ्जकत्वाभावसत्त्वेऽपि अभावद्वयासत्त्वान्न व्यभिचार इति वाच्यम् । एवमपि यत्पार्थिवमनभिव्यक्तगन्धरसस्पर्शमभिव्यक्तनीलं [5]तथैव विनष्टं तत्र व्यभिचारात् । न चात्रापि [6]परकीयत्वविशेषणादेव न व्यभिचार इति सांप्रतम् । तथापि [7]यत्र गन्धानभिव्यञ्जकजलेन गुप्ताक्षरनीलाभिव्यक्तिः कदापि न स्वगतरसस्पर्शाद्यभिव्यक्तिः तत्र दोषतादवस्थ्यात् । तथा च [8]स्वरूपायोग्यत्वमेव [9]वाच्यमिति सत्यन्ताभावादेव त्र्यणुके न व्यभिचार इति चेत्—

न । परकीयत्वस्य स्पर्शादिविशेषणस्यावश्यकत्वात् । अन्यथा दृष्टान्ते सौरालोकांशे साधनवैकल्यात् । तथा च त्र्यसरेणोः परकीयगन्धानभिव्यञ्जकत्वात् [10]व्यभिचार इति तद्वारणाय परकीयत्वविशेषणम् । [11]एतदप्यभावत्रयाभिप्रायेण । विशिष्टाभावस्यैव [12]हेतौ प्रवेशो तस्य च स्पर्शव्यञ्जकेऽप्यालोके सत्त्वान्न [13]परकीयत्वविशेषणावश्यकतेति सत्यन्ताभावादेव दोषनिरासे नीलादौ तद्विशेषणं नोपादेयमेव ।

ननु विशिष्टाभावमस्तके सर्वमपि भारं निक्षिप्य [14]प्रतियोगिकोटावितोऽप्यधिकविशेषणं प्रक्षिप्य तद्घटितो हेतुर्वाच्यः दोषाभावात् इत्यस्वरसाज्जयदेवमत-

1. ग. त्रसरेणावितीति ।
2. ग. घ. 'गन्धानभिव्यञ्जके' इति न दृश्यते
3. घ. घटे
4. क. गन्धव्यञ्जकाभाव-
5. ग. तदेव
   घ तदैव
6 क. परकियत्व-
7. घ. येन जलेन
8. क. घ. स्वरूपयोग्यत्व-
9. क. ग. वाच्यत्वमिति
10. क. न व्यभिचार
11. क. एतदन्याभावत्रय-
12. क. घ. हेतुताप्रवेशो
13. क. तत्र परकीय-
14. क. 'प्रतियोगि.......प्रक्षिप्य' इति ग्रन्थो नास्ति ।

## प्रकाशः

नवशरावगन्धव्यञ्जकत्वात्। व्यञ्जकत्वस्य योग्यतागर्भस्योक्तत्वात्। न चैवमपि [1]गन्धाव्यञ्जकपीतव्यञ्जकत्वहेतौ निकषोपले व्यभिचारः। तस्य स्वर्णपीताव्यञ्जकत्वात्। तेन [2]तत्रापि पीतत्वावान्तरजातेर्व्यञ्जनादित्याहुः।

संनिकर्षे व्यभिचारवारणाय द्रव्यपदमपि देयम्, दीपचन्द्रालोकवदिति ध्येयम्। अन्यथा [3]स्पर्शाव्यञ्जकत्वमसिद्धं स्यात्।

---

## न्यायशिखामणिः

माह—अन्ये त्विति। नानाहेताविति। यद्यपि नीलपीतादिगर्भो नानैव, तथापि नीलगर्भः पीतगर्भश्च नानेति तात्पर्यम्। परकीयेति। एतच्च स्वरूपकथनाभिप्रायम्, न तु हेतौ तत्प्रवेशपरम्। स्वरूपयोग्यत्वाभावत्रयविवक्षायामप्येतन्मते अनुद्भूतस्पर्शालोकस्यैव दृष्टान्ततया स्पर्शादौ परकीयत्वविशेषणानावश्यकत्वात्। तदावश्यकत्वे हि त्रसरेणौ दोषवारणाय नीलादौ तद्विशेषणावश्यकता स्यादित्यवधेयम्। अवान्तरजातेरिति। एतच्चापाततः। जात्यभिव्यक्तावपि पीतरूपव्यक्त्यभिव्यक्तौ विरोधाभावात्। प्रत्युत व्यक्त्यनभिव्यक्तौ न जात्यभिव्यक्तिः। न च पूर्वमपि [4]तद्द्रुतमित्यनुभवादिदानीं तद्व्यक्तिरनभिव्यक्तेति[5] वाच्यम्। तथाप्यनेनाभिव्यक्तिसंभवात्। न [6]ह्यनभिव्यक्तपीतव्यञ्जकत्वं हेतुः। वस्तुतस्तु—[7]उपलस्य स्वकीयगन्धोपलब्धिस्वरूपयोग्यत्वान्न व्यभिचार इति ध्येयम्।

[8]द्रव्यपदमपीति। एतच्च साक्षात्कारणत्वं व्यञ्जकत्वमभिप्रेत्य। करणत्वविवक्षायां तु तेनैव तत्र न व्यभिचार इति ध्येयम्। दीपेति। दीपचन्द्रसंबन्ध्यालोकवदित्यर्थः। एतच्च स्पर्शघटितहेत्वभिप्रायेण। आलोकमात्रस्य गन्धरसाभावेन तद्घटितहेतोः सर्वसाधारणत्वात्। अत एव तत्र स्पर्शघटितहेतुवैकल्यमेवाह—अन्यथेति।

---

1. ख. 'गन्धाव्यञ्जक' इति नास्ति।
2. ख. तत्रापीत-
3. क. स्पर्शव्यञ्जक-
4. क. तादृश-
   ग. तन्त्रमित्यनु-
5. ग. °व्यक्तिरिति
6. ग. °व्यक्तेऽपि तद्व्यञ्जकत्वं
7. ग. उपलम्भस्तु
8. ग. 'द्रव्यपदमपीति........इति ध्येयम्' इति ग्रन्थस्त्रुटितः।

न । एवंप्रणालीज्ञानाभावेऽपि रूपरसादावनुगतप्रत्ययात् नीलाकारानुगतबुद्धेश्च नीलत्वं जातिः। न च चक्षुर्ग्राह्यत्वं तन्, पीतादौ गतत्वात् ।

ननु एकैका एव नीलारुणादिव्यक्तयः, नानामसीनीलिम्नि (समी) [मसी]भेदग्रहेऽपि तत्त्वेन प्रत्यभिज्ञानात् । न चानेकव्यक्तिवृत्तित्वे नित्यत्वे जातित्वापत्तिः । जातेः संस्थानमात्रव्यङ्ग्यत्वात्, अवयवावयविवृत्तित्वात्, गोत्वादिना परापरभावानुपपत्तेश्च । नीलेतरादिप्रतीतिश्च तदन्यरूपासंभेदादिति चेत्—न । पाकेन श्यामं नष्टं रक्तमुत्पन्नमिति [1]प्रत्ययात् ।

---

प्रकाशः

ननु भवतु नीलादिगर्भ एव हेतुः, तथापि नीलत्वजात्यनुभवानुरोधादपि सा प्रत्यासत्तिरित्याह—नीलेति । चक्षुर्ग्राह्यत्वं पूर्वं निरुक्तं बोध्यम् । अन्यथा उक्तिसंभवाभावादिति । जातित्वेति । जातिपदाभिधेयत्वापत्तिरित्यर्थः । अन्यथा अभेदापत्तेः । स्वमतेनाह—जातेरिति । तथा च त्वदुक्तं न जातिपदप्रवृत्तिनिमित्तमिति भावः । अवयवेति । लाङ्गूलत्वादिकं तन्मते जातिरिति व्यभिचारवारणार्थमवयविपदमित्याहुः । उभयमतसाधारणं दोषमाह—गोत्वेति । पाकेनेति । तथा च उत्पादादिप्रतीत्यनन्तरं जायमानायाः प्रत्यभिज्ञायाः तज्जातीयत्वं विषयः शब्दप्रत्यभिज्ञानवदिति भावः । तदिति । ध्वंसप्रतियोगित्वेनोल्लेखाद्रूपादेः, न तु

---

न्यायशिखामणिः

ननु नीलत्वजातिसाधनं मुधा, रूपत्वादिजातिसिद्ध्यैव विशिष्टसमवायप्रत्यासत्तिसिद्धेरित्याशङ्क्य 'तुष्यतु दुर्जन' इति न्यायेन पूर्वोक्तप्रणाडीं परोक्तरूपत्वादिकं चाभ्युपेत्य तत्सिद्ध्यर्थं नीलत्वं साधयतीत्याह—ननु भवत्विति । निरुक्तमिति । चक्षुरादिष्वित्यादिकमित्यर्थः । अभेदापत्तेरिति । आपाद्यापादकयोरिति शेषः ।

ननु परमते आत्मत्वं जातिर्न स्यात्, अवयवसंस्थानाभावात् । द्रव्यत्वमप्यवयववृत्तित्वान्न तथा स्यात् । स्वमतानुसारेणैव परमतस्य दूष्यत्वे मतमात्रोच्छे-

---

1. क. अनुभवात्

न चासौ भ्रमः, बाधकाभावात् । न चोत्पादविनाशप्रत्ययस्य समवायो विषयः, तदनुल्लेखात् । एवं च मधुरादिरसानां सौरभासौरभाणां च गन्धानामेकैकत्वं स्यात् नीलादितुल्यत्वात् । एवमस्तु इति चेत्—न । तेषामुत्पादविनाशानुभवात् । एकैकत्वे मधुरतरत्वाद्यनुपपत्तेश्च ।

ननु श्रोत्रेण समवायेन शब्दग्रहे सर्वशब्दोपलब्धिः स्यात् । न च कर्णशष्कुल्यवच्छेदेनोत्पन्नो गृह्यते । अवच्छेद्यस्य आकाशत्वेनाविशेषात् । तदन्यत्वे शब्दस्य तत्रासमवायात् । तस्मात् यः शब्दो यं प्रति योग्यः स तेन गृह्यते नान्यः । न च पुरुषविशेषं प्रति योग्यत्वं न स्वरूपम्, अननुगमात्; न च जातिः, तस्याः निष्प्रतियोगिकत्वात्; न हि गौः कंचित् प्रत्यगौरिति वाच्यम् । सप्रतियोगिकत्वं हि न सावधित्वं दीर्घत्वादिवत् । नापीतरधीनिरूप्यत्वमभाववत् । किं तु शब्दग्रहे सा जातिः कारणं तदवच्छे-

प्रकाशः

समवायस्येत्यर्थः । समवायस्य समवायिकारणाभावेनोत्पादासंभवादिति ध्येयम् । यद्यपि तन्मते समवायो न प्रत्यक्षः, तथापि [शङ्केयं]तदेकदेशिमतेनेति ध्येयम् ।

पूर्वोक्तयुक्तिमाह—तेषामिति । [1]एकत्व इति [ एकैकत्व इति ] । तदन्यासंभेदात् प्रतीत्युपपादनेऽपि वास्तवं मधुरत्वादि [2]नोपपद्यत इत्यर्थः । न च तदसिद्धमेवेति वाच्यम् । बाधकं विना उत्कर्षत्वेन प्रतीतेः प्रमात्वात् । एवं सति घटादीनामपि एकत्वनित्यत्वे [3]सत्कार्यवादापत्तिरित्यत्र तात्पर्यम् ।

न्यायशिखामणिः

दापत्तेश्चेत्यस्वरसमभिप्रेत्य दोषान्तरमाहेत्याह—[4]उभयेति । नन्वेवं चेत्यादिग्रन्थवैयर्थ्यम् । न च गन्धादीनामेकैकत्वापादनरूपदोषान्तराय । [5]तस्यानिष्टप्रसङ्गत्वाभावादित्याशङ्क्य, मधुरत्वसुरभित्वोष्णत्वादिषु [6]नीलत्वजातिसाधकप्रमाणातिदेशार्थमेतद्ग्रन्थ इत्याह—पूर्वेति ।

1. क. 'एकत्व' इति ग्रन्थो नास्ति ।
2. ख. नोत्पद्येत
3. क. साकारवादा-
4. ग. इह चेति ।
5. ग. तस्यानिष्टत्वप्रसङ्गाभावात्
6. क. 'नीलत्व' नास्ति ।

दिका वा। अत एव न कुर्वद्रूपत्वप्रवेशः, सहकारितास्वीकारात्। सर्वसाधारणत्वमिष्टमेव, सर्वैस्तथा व्यवह्रियमाणत्वात्। गोत्वेऽपि तदेव तत्। शब्दमात्रस्य योग्यत्वमननुगतमेव, गुणयोग्यत्ववदिति।

मैवम्। शब्दस्य प्रत्यक्षत्वेन प्रत्यासत्तिसाधनात्। न च समवायोऽतिप्रसक्तोऽन्योऽनभ्युपगत इति वाच्यम्। कर्णसंयोगावच्छिन्नसमवायस्य प्रत्यासत्तित्वात्। कर्णसंयोगो हि समवायवृत्त्या शब्दाधारतायां परि-

---

### प्रकाशः

समवायेन शब्दस्येत्यत्र शङ्कते—नन्विति। [1]यत्सप्रतियोगित्वं जातौ विरुध्यते तदत्र नास्तीत्याह—सप्रतियोगित्वं हीति। शब्दग्रहे—पुरुष[2]विशेषशब्दग्रहे। न च पुरुषद्वयगृहीतैकशब्दे जातिद्वयसंकारापत्तिः। स्वस्वकर्णावच्छिन्नस्यैव तेन ग्रह इत्युपगमात्।

प्रत्यासत्तीति। तथा च समवायस्यैव शब्दग्राहकत्वं न तूक्तजातेरिति भावः। न च प्रत्यासत्तित्वस्याननुगतस्य व्यापकतावच्छेदकस्याभावादनुमानासंभवः। प्रत्यक्षजनकेन्द्रियनिरूपितधर्मस्यैव तत्त्वेनात्र विवक्षितत्वात्। व्याप्तिश्च यत् प्रत्यक्षं

---

### न्यायशिखामणिः

नन्वित्यस्यानन्तरेणासंबन्धात् व्यवहिताक्षेपपरतामाह—समवायेनेति। ननु दीर्घत्वादिगतसप्रतियोगित्वविलक्षणं पुरुषविशेषशब्दग्रहकारणातावच्छेदकत्वादिरूपं तत्र सप्रतियोगित्वमित्युक्तम्। तथा सति कथमस्य जातित्वमित्यत आह—यदिति। इदं च सप्रतियोगित्वं [3]न प्रसिद्धजातिसाधारणमिति न बाधकमिति भावः।

ननु प्रत्यासत्तिसिद्धावप्युक्तजातिः किं न स्यादित्यत आह—तथा चेति। [4]असार्वत्रिकशब्दग्रहस्यावश्यकप्रत्यासत्त्यैवोपपत्तेर्न तदनुपपत्तिर्जातिकल्पिकेति भावः। जयदेवमतमाह—प्रत्यक्षेति। इन्द्रियनिरूपितधर्मान्तरमादाय

---

1. क. यत् सप्रतियोगित्वजातौ
2. ख. 'विशेष' नास्ति।
3. क. 'न' नास्ति।
4. ग. असार्वत्रिकस्य शाब्द-

चायकः। एवं च इह शब्दः नेह शब्दः इत्यनुभवात् शब्दस्याव्याप्यवृत्तित्वे सिद्धे यस्य शब्दस्य समवायवृत्त्या आधारता कर्णसंयोगेनावच्छिद्यते स गृह्यते, यस्य तु तदत्यन्ताभावेनावच्छिद्यते स न गृह्यते। तथा[यथा] संयोगस्य समवायेनाधारता हस्तसंयोगेनावच्छिद्यते न तदभावेनेति हस्तसंयोगावच्छेदेन गृह्यते नान्यत्र; अन्यथा हस्तसंयोगस्यानवच्छेदकत्वे

---

प्रकाशः

तत् स्वप्रत्यक्षजनकेन्द्रियनिरूपितधर्मवदित्येवं सामान्यमुखीत्याहुः। कर्णेति। न च कर्णसंयोगावच्छिन्नेत्यत्र संयोगस्य विशेषणतायां बाधः, उपलक्षणतायां स एवातिप्रसङ्ग इति वाच्यम्। कपिसंयोगे [1]शाखावच्छेदकत्ववत् स्वरूपसंबन्धविशेषेण [2]समवाये तस्य विशेषणत्वात्।

ननु [3]समवायवृत्त्यैव कथं न तस्य तत्र विशेषणत्वमित्यत आह---कर्णसंयोगो हीति। परिचायकः—उपलक्षणम्, न तु विशेषणम्। द्रव्य एव तस्य तथाभावादिति भावः। ननु सर्वशब्दाधारता सर्वत्र, तथा चातिप्रसङ्गः, तत्राह—एवं चेति। यथा संयोगस्येति। शरीरसंयोगस्येत्यर्थः।

---

न्यायशिखामणिः

सिद्धसाधनवारणाय प्रत्यक्षजनकेति। [4]पराभिमतजात्या अर्थान्तरवारणाय इन्द्रियनिरूपितेति।

नन्वेवमपीन्द्रियान्योन्याभावमादाय सिद्धसाधनम्। शब्दप्रत्यक्षजनकेत्यादिरूपे च साध्येऽप्रसिद्धिरित्यत आह—व्याप्तिश्चेति। विशेषणतायामिति। यद्यपि विशेषणत्वं हि विशेष्यसंबन्ध्यन्वयित्वे सति व्यावर्तकत्वम्। [5]कर्णसंयोगे च प्रत्यासत्तित्वान्वयसंभवान्न [6]तद्विशिष्टसमवाये प्रत्यासत्तिबाधः[7]। तथापि सा यदि

---

1. ख. शाखावच्छेदेन समवायस्यैव स्वरूप-
2. ख. ॰समवेतस्य
3. ख. समवायं प्रत्येव
4. क. तदभिमत-
5. ग. 'कर्ण' नास्ति।
6. क. ॰समवायप्रत्या-
7. क ॰बाध इत्यर्थः।

**सर्वमिदं समानमिति संयोगस्यापि सर्वत्रोपलब्धिः स्यात् । न चैवं समवायोऽप्यव्याप्यवृत्तिः । समवायेन वृत्त्या तस्याधारावृत्तित्वात् । अभावस्तु विशेषणतया व्याप्यवृत्तिरेव ।**

---

**प्रकाशः**

**सर्वत्रेति ।** चरणाद्यवच्छेदेनापि शरीरसंयोगस्योपलब्धिः स्यादित्यर्थः । ननु शब्दाधारतायाः प्रादेशिकत्वे शब्दसमवायोऽप्यव्याप्यवृत्तिः, [1]अन्यथा साप्यतिप्रसक्ता स्यादित्यत आह—**न चैवमिति । समवायेनेति ।** स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्याप्यवृत्तित्वम् । तच्चेहोभयथा असिद्धम् । समवायस्य तत्रावृत्तेस्तदभावस्य च व्याप्यवृत्तित्वादित्युभयपर्यवसितार्थः । विशेषणतया तत्र वर्तमानोऽपि व्याप्यैव वर्तत इति [2]न । समवायेन वा स्वरूपसंबन्धेन वा समवायस्याव्याप्यवृत्तित्वात्[3] ।

---

**न्यायशिखामणिः**

समवायेन संयोगस्य विवक्षिता तदा तत्र तदसंभवाद्विशेषणताबाधात् तद्बाध इति ध्येयम् । **उपलक्षणतायामिति ।** एतच्च वक्ष्यमाणस्वरूपसंबन्धमप्यभ्युपेत्य । अन्यथा अत्रापि बाध एव दोषः स्यादिति बोध्यम् ।

ननु प्रकृतं समवायं विहायाधारताभिधानमसंगतमित्यत आह–[4]**नन्विति । तत्रेति ।** समवाय इत्यर्थः । तथा चाधारतापदं समवायपरमिति भावः । ननु समवायसंबन्धेन तत्र संयोगः परिचायक इति न युक्तम्, तत्र तदसंभवादित्याशङ्क्य परिचायकशब्दो [5]विशेषणत्वाभावलक्षक इत्याह—**उपलक्षणमिति ।** संयोगमात्रे हस्तसंयोगस्यानवच्छेदकत्वादाह—**शरीरेति ।**

ननु [6]शरीरादन्यत्र कायपुस्तकसंयोगविरहादेवानुपलब्धिरित्यत आह—**चरणेति ।** नन्वभाव[7]व्याप्यवृत्तित्वाभिधानं प्रकृतासंगतम् । [8]आधारावृत्तित्वं च न

---

1. क. इत्यन्यथा
2. क. 'न' नास्ति ।
3. क. °वृत्तित्वम् ।
4. ग. नापीति ।
5. क. विशेषणतामाव- ग. विशेषणामाव-
6. घ. शरीरत्वादन्यत्र
7. क. °व्यावृत्तित्वा-
8. ग. आधारावृत्तिश्च

**न चैवं सर्वत्र सर्वशब्दोपलब्धिः स्यात् । शब्दसमवायस्य सत्त्वेऽप्यन्यत्र शब्दात्यन्ताभावसत्त्वात् ।**

---

## प्रकाशः

ननु विशेषणतया यदि समवायो व्याप्यवृत्तिस्तदा तत्र [1]तदभावोऽपि व्याप्यवृत्तिरिति व्याहतमिति चेत्—न । (समवायसंबन्धेनावच्छिन्न)[समवायावच्छिन्न] प्रतियोगिकसमवायाभावस्य व्याप्यवृत्तित्वोपगमात् । तस्य च स्वरूपसंबन्धावच्छिन्नसमवायसामानाधिकरण्याविरोधात् । अत एव समवायावच्छिन्नाकाशाभावस्य संयोगसंबन्धावच्छिन्नाकाशसामानाधिकरण्यम्[2] ।

ननु यदि विशेषणतया समवायस्तदभावश्च वर्तते तदा निरुक्तमव्याप्यवृत्तित्वमविकलमिति चेत्—न । येन संबन्धेन यद्वर्तते तत्संबन्धावच्छिन्नतदभावसामानाधिकरण्यस्याव्याप्यवृत्तित्वार्थत्वादित्याहुः ।

**न चैवमिति** । यदि शब्दसमवायो विशेषणतया व्याप्यवृत्तिः तदा सर्वशब्दसमवायः सर्वकर्णावच्छिन्नः, तथा च सर्वशब्दोपलब्धिः स्यादित्यर्थः ।

---

## न्यायशिखामणिः

व्याप्यवृत्तित्वोपपादकमित्याशङ्क्य, अव्याप्यवृत्तित्वाभाव एव साध्य इत्यभिप्रेत्याह—**स्वेति** । ननु समवायेनेति पदस्वारस्यात् अस्ति संबन्धान्तरमिति सूचितम् । तथा च तदादाय [3]व्याप्यवृत्तित्वं स्यादित्यत आह—**विशेषणतयेति** ।

**समवायावच्छिन्नेति** । समवायविषयकप्रतियोग्यारोपजन्यप्रतीतिविषयत्वमभावस्य समवायावच्छिन्नप्रतियोगिकत्वम्, न तु समवायस्यावच्छेदकत्वमभिमतम् । समवायाभावे समवायत्वस्यैवावच्छेदकत्वादिति बोध्यम् । **अविरोधादिति** । योऽभावो यत्संबन्धावच्छिन्नप्रतियोगिकस्तस्य तत्संबन्धावच्छिन्नप्रतियोगिसामानाधिकरण्यमेव विरुद्धम्, न प्रतियोगिसामानाधिकरण्यमात्रमिति भावः ।

ननु तत्संबन्धावच्छिन्नप्रतियोगिसत्त्वं नाभावविरोधि गौरवादित्यत आह—**अत एवेति** । यथा चैतत् तथा केवलान्वयिग्रन्थे वक्ष्यत इति भावः ।

---

1. क. तदभावो व्याप्य-
2. क. °काशस्य सामानाधिकरण्यम् ।
3. क. °अव्याप्य-

## प्रकाशः

शब्देति । वायौ रूपसमवायसत्त्वेऽपि रूपाभाववत् शब्दसमवायसत्त्वेऽपि यत्कर्णसंयोगावच्छेदेन शब्दाभावस्तत्र तत्समवायसत्त्वेऽपि न शब्दप्रत्यक्षम् । तथा च कर्णसंयोगावच्छिन्नस्य शब्दस्य समवायः प्रत्यासत्तिः । यद्वा समवायमात्रं प्रत्यासत्तिः । कर्णसंयोगावच्छिन्नशब्दत्वेनैव योग्यतया तदन्यस्यायोग्यतयैवानुपलम्भात् । न चैवं गौरवम्, तवापि [1]प्रत्यासत्त्यवच्छेदकतया तत्त्वेन तुल्यत्वात् ।

---

## न्यायशिखामणिः

समवायवृत्त्या [2]आधारावृत्तित्वस्याभावव्याप्यवृत्तित्वस्य वा एवंशब्दार्थत्वे उपलम्भापादनायोगादाह—यदीति । ननु कर्णसंयोगस्य न शब्दावच्छेदकत्वम् । तथा सति कर्णसंयोगः समवायवृत्त्या शब्दे परिचायक इति वचनव्यक्तिप्रसङ्गात् । किं च समवायमात्रं प्रत्यासत्तिः, लाघवात् । अतिप्रसङ्गश्च वक्ष्यमाणरीत्या निराकर्तव्य इत्यस्वरसात् जयदेवमतमाह—यद्वेति ।

एतन्मते कर्णसंयोगेत्यादिमणेरेषोऽर्थः । समवायोऽतिप्रसक्तः, अन्योऽनभ्युपगत इति [3]शङ्किते आद्यपक्षमङ्गीकरोति—समवायस्येति । उक्तातिप्रसङ्गं निराचष्टे—कर्णसंयोगावच्छिन्नेति । शब्देति शेषः । ननु संयोगस्य शब्दं प्रति कीदृशमवच्छेदकत्वं विवक्षितम् । यदि परिचायकत्वं, तत्र [तन्न] मानाभावादित्यत आह—कर्णसंयोगो हीति । [4]समवायवृत्त्या स्वाधिकरणगतशब्दे कपिसंयोगे शाखावत् स परिचायकः । न चात्र मानाभावः । इह शब्दो [5]नेह शब्द इत्यनुभवात् शब्दस्याव्याप्यवृत्तित्वेनावच्छेदकापेक्षत्वात् । एतच्चात्र हिशब्दसूचितम् [6]एवं चेत्यत्रोच्यत इति न पौनरुक्त्यमिति ध्येयम् ।

नन्वस्तु तस्यावच्छेदकत्वम् । तथाप्युक्तदोषोऽनपाकृत इत्यत आह—एवं चेति । तस्यावच्छेदकत्वे सिद्धे सतीत्यर्थः । अत्र शब्दाधारतापदं शब्दपरम् । शब्दस्याव्याप्यवृत्तित्वसाधनेन तस्यैवावच्छेदकापेक्षत्वात् । अन्यथा वैयधिकरण्यात् । तथा च यत्राधारे समवायवृत्त्या वर्तमानो यः शब्दः कर्णसंयोगे-

---

1. ख. प्रत्यासत्तिताबच्छेदके तथात्वेन
2. क. 'आधारावृत्तित्वस्य' इति नास्ति ।
3. ग. शङ्किते पक्षे मतमङ्गीकरोति
4. ग. समवायप्रत्यासत्त्या
5. क. 'नेह शब्दः' इति नास्ति ।
6. ग. एवं चोद्यमत्रोच्यते

### प्रकाशः

यत्तु—समवायमात्रस्य प्रत्यासत्तित्वम्। तत्सत्त्वेऽपि कर्णावच्छेदेन विषयाभावादेव न शब्दप्रत्यक्षम्, वायौ रूपाप्रत्यक्षवदिति। तच्चिन्त्यम्। [1]यत्रैवास्ति [2]तत्र तत्प्रत्यक्षताप्रसङ्गात्। विषयप्रत्यासत्त्योरवैकल्यात्।

---

### न्यायशिखामणिः

नावच्छिद्यते[3] स तत्रैव गृह्यते। अन्यत्र त्वनवच्छिन्नस्यायोग्यतया[4] [5]तदभावादेव न तदुपलब्धिप्रसङ्ग इत्यर्थः।

अत्रानुरूपं [6]दृष्टान्तमाह—यथेति। ननु समवायेन वर्तमानशब्दस्याव्याप्यवृत्तित्वे सोऽपि तथा स्यात् इत्याशङ्क्य, किं शब्दवदेव समवायसंबन्धेन तस्याव्याप्यवृत्तित्वम्, उत विशेषणतासंबन्धेन। नान्त्यः, तेन संबन्धेन तस्य [7]व्याप्यवृत्तित्वादित्यभिप्रेत्य [8]आद्यं निराकरोति—न चैवमिति। समवायेनेति। समवायवृत्त्या तस्याधिकरणमात्रावृत्तित्वात्[9] तत्संबन्धावच्छिन्नसमवायाभावस्य विशेषणतासंबन्धेन सर्वत्र वृत्तौ विरोधाभावेन अव्याप्यवृत्त्यभावाप्रतियोगित्वादाकाशवन्नाव्याप्यवृत्तित्वमिति भावः।

शब्दाव्याप्यवृत्तित्वेन समवायाव्याप्यवृत्तित्वमाशङ्क्य निराकृत्य तद्व्याप्यवृत्तित्वेन तद्वृत्त्या वर्तमानशब्दस्यापि व्याप्यवृत्तित्वात् दोषतादवस्थ्यमाशङ्क्य निराकरोति—न चैवमिति। (शब्दसमवायेऽपीति) [शब्दसमवायस्य सत्त्वेऽपीति]। शब्दसमवायसत्त्वेऽपि संयोगात्यन्ताभाववत् शब्दात्यन्ताभावसत्त्वे विरोधाभावेन शब्दस्य स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपं व्याप्यवृत्तित्वं [10]बाधितमिति भावः।

कर्णप्रदेशे शब्दानुत्पत्तिसमयेऽतिप्रसङ्गाभावेऽप्यन्यत्र तदुत्पत्तौ सामग्र्यवैकल्याद्दोषतादवस्थ्यमित्याह—तच्चिन्त्यमिति।

---

1. क. 'यत्रैवास्ति' इति न दृश्यते।
2. क. तत्रैव
3. क. ०च्छेद्यते
4. ग. ०स्य योग्यतया
5. घ. विषयाभावादेव
6. क. दृष्टान्तार्थमाह
7. क. अव्याप्य-
8. क. अन्त्यं
9. ग. ०मात्रवृत्तितया
   घ. मात्रावृत्तितया
10. क. ग. अबाधित-

अथ वीणादौ शब्द इत्यबाधितानुभवबलात् तदवच्छिन्नं नभः श्रोत्रं न तु कर्णावच्छिन्नमेव । कर्णे न शब्दः किं तु वीणायामित्यनुभवात् । अन्यथा कर्णे शब्द इति धीः स्यात् । न चानन्तवीणाद्यवच्छेदकत्वेनानन्तश्रोत्रस्वीकारे गौरवम्, शब्ददेशत्वेनैकत्वे चातिप्रसङ्गः, सर्वदेशानां शब्दावच्छेदकत्वादिति वाच्यम् । वीणादिदेशताग्रहस्य बाधकं विना प्रमाणत्वे गौरवस्य न्याय्यत्वात् । प्रत्युत सर्वतो दिक्षु अनन्तशब्दसन्तानोत्पादक्रमेण कर्णोत्पादे कल्पनागौरवं मानाभावात् । न च दूरसंनिधानयोः शब्दानां अबाधिततारमन्दत्वादिविधर्म्यप्रतीत्या भेदसिद्धेः संतानसिद्धिः । दूरत्वादिदोषात्तारत्वाग्रहे मन्दत्वारोपात् तदुपपत्तेः । व्यवहितकर्णे शब्दानुत्पादवत् व्यवहितशब्दानुपलब्धिः निमित्तवायुसंयोगाभावात् ।

---

**प्रकाशः**

निमित्तवायुसंयोगेति । व्यवहितकर्णे निमित्तवायुसंयोगाभावादित्यर्थः । तथा च यच्छब्दनिमित्तवायुः यत्कर्णगामी [1]स तद्ग्राह्य इति भावः ।

---

**न्यायशिखामणिः**

वयं तु—चाक्षुषप्रत्यक्षे विषयालोकसंयोगवत् शब्दप्रत्यक्षे कर्णसंयोगः सहकारी न तु विषये प्रत्यासत्तौ वा योग्यतावच्छेदकः । अन्यथा आलोकसंयोगादेरपीन्द्रिये [2]विषये वा अवच्छेदकत्वापत्तिः । यदि च पृथगन्वयव्यतिरेकानुविधानात् तस्य पृथक् कारणत्वम्, तदा कर्णसंयोगेऽपि तुल्यमिति ब्रूमः ।

ननु [3]गृह्यमाणशब्दस्य [4]यत्राधारतावच्छिन्नं नभः श्रोत्रं तस्य वीणाद्यवच्छिन्नमपीति तेनापि शब्दग्रहे तत्र कर्णसंयोगस्य व्यभिचारान्न प्रत्यासत्त्यवच्छेदकता न वा हेतुतेत्याशयेन आक्षिप्तम् अथेत्यादिना । तत्र [5]कर्णव्यवधाने शब्दग्रहमाशङ्क्य निमित्तवायुसंयोगाभावादित्युक्तमयुक्तम्, भेर्यादिप्रदेशे तत्संयोगसत्त्वादित्यत आह—व्यवहितेति । तथा च शब्दोत्पादकवायुकर्णसंयोगो हेतुरिति भावः । अतिप्रसङ्गनिरासाय तमेव वायुं विशिनष्टि—यच्छब्देति ।

---

1. क. 'स' नास्ति ।
2. क. विषयतावच्छेदकत्वापत्तिः
3. ग. श्रूयमाण-
4. ग. यदाधारता तदवच्छिन्नेन श्रोत्रतच्छ्रवणाद्यवच्छिन्नमिति
5. ग. कर्णव्यवहितमनःशब्द-

(ननु)[ न तु ]व्यवधानाभावस्य हेतुत्वात् तस्य संनिध्युपक्षीणत्वात् कर्णानुपघातोऽपि हेतुरिति न तदुपघाते शब्दग्रह इति ।

मैवम् । कर्णावच्छेदेनापि शब्दग्रहात् कर्णशष्कुल्यप्यवच्छेदिकेति कर्णावच्छिन्नमेव नभः श्रोत्रम् , आवश्यकत्वात् लाघवाच्च । शब्दमात्रग्रहे तदनुविधानात् , शरीरसंयुक्तस्य सतः साक्षात्प्रतीतिसाधनस्य इन्द्रियत्वात् , कर्णेन वीणाशब्दं शृणोमीति तत्कारणत्वेनाबाधितानुभवाच्च । न तु वीणादिकम् , अनन्तत्वात् , शब्दमात्रग्रहे तदननुविधानात् , वीणाद्यवच्छिन्नस्य नभसः शरीरासंयुक्तत्वेनानिन्द्रियत्वात् वीणया शब्दं शृणोमीत्यननुभवाच्च ।

कथं तर्हि वीणायां शब्द इति ज्ञानं, श्रूयमाणस्य शब्दस्य तदनधिकरणत्वादिति चेत्—न । न हि सर्वत्र शब्दे [1]मृदङ्गाद्यधिकरणग्रहनियमः ।

---

प्रकाशः

तस्येति । इन्द्रियसंनिधेश्च तत्र सत्त्वादित्यर्थः । साक्षादिति । इन्द्रियान्तरे तथा दर्शनादिति भावः ।

ननु नभोमात्रमेव श्रोत्रमस्तु, न तु कर्णावच्छिन्नमपि । न चातिप्रसङ्गः । निमित्तवायुसंयोगाभावात् उक्तयुक्त्या वा तन्निरासंभवादिति चेत्—न । बधिरस्येन्द्रियवैकल्येन शब्दाग्रह इति सर्वसिद्धम् । नभोमात्रस्य हि श्रोत्रत्वे [2]तन्न स्यात् ।

---

न्यायशिखामणिः

ननु [3]नन्वित्यत्र एकदेशिसमाधानमनूद्य निराकृतम् अयुक्तम् । तस्यापि संनिधिद्वारा तदपेक्षाया दुर्वारत्वादित्यत आह—इन्द्रियेति । वीणाद्यवच्छिन्नस्यापि तन्मते इन्द्रियत्वादिति भावः । अप्रयोजकत्वमाशङ्क्याह—इन्द्रियान्तर इति । तटस्थः शङ्कते—नन्विति । पूर्वपक्ष्युक्तमतिप्रसङ्गपरिहारमुक्त्वा सिद्धान्त्यभिमतं तमाह—उक्तेति । [4]अतिप्रसङ्ग इति । चक्रादिविरहे सति घटादिविरहोऽप्यदृष्टविरहादेव स्यादित्यर्थः ।

---

1. ख. वीणाद्यधि-
2. ख. 'तन्न स्यात् । .......कर्णशष्कुल्यवच्छिन्नत्वेनैव' इति ग्रन्थस्त्रुटितः
3. ग. यत्त्वित्यत्र ।
4. क. 'अतिप्रसङ्ग इति' नास्ति ।

अन्यथा क्वचिदपि देशे संदेहविपर्ययतदनुल्लेखानामनुपपत्तेः। यत्राप्यस्ति तत्र शरीरे सुखमितिवत् उत्पत्तये परंपरया वीणाद्यपेक्षणात् तदधिकरणत्वम्। तत्रापि वीणायाः शब्दानाश्रयत्वेन तथैवाधिकरणत्वात्।

नन्वेवं कर्णे अनेकगकारोत्पादे अनेकग्रहणप्रसङ्गः। न चैकग्रहे अन्यग्रहसामग्री प्रतिबन्धिका। कोलाहले तथा अदर्शनादिति चेत्—न। तारेण मन्दाभिभवात्। तुल्यत्वे वा अनेकग्रहस्येष्टत्वात्। भेदाग्रहस्तु

---

प्रकाशः

न चादृष्टविलम्बादेव तद्विलम्बः। तस्य दृष्टकारणविघटकत्वसंभवे तत्कल्पनानवकाशात्। अन्यथातिप्रसङ्गात्। तथा चादृष्टविशेषजन्यकर्णशष्कुल्यवच्छिन्नत्वेनैव तस्येन्द्रियत्वम्। तथा च विशेषणांशवैकल्यात् बाधिर्यमिति वदन्ति। [1]परंपरयेति। परंपरासंबन्धविषयत्वात् [2]प्रतीतिः प्रमापीति भावः। शब्दानाश्रयत्वेनेति। शब्दासमवायिकारणत्वेनेत्यर्थः। तथैवेति। यद्यपि वीणायामवच्छेदकत्वं साक्षात्संबन्ध एवेति वैषम्यम्। तथापि समवायाभावमात्रेण सादृश्यमिति भावः।

---

न्यायशिखामणिः

ननु कर्णशष्कुल्यवच्छिन्ननभस्सत्त्वे बधिरस्य तव मते कथमिन्द्रियवैकल्यमित्यत आह—तथा चेति। अदृष्टेति। ननु जातिबधिरस्य तादृशकर्णशष्कुलीवैकल्येऽपि मध्यमे वयसि [3]बधिरस्य तद्वैकल्याभावात् कथमिन्द्रियराहित्यमिति चेत्—न। तदा [4]अवयवोपचयावश्यकत्वे कर्णशष्कुल्यन्तरस्योपपत्तेः। सेयं शष्कुलीति प्रत्यभिज्ञायाश्च शरीरभेदप्रत्यभिज्ञानवदुपपत्तेरिति भावः।

ननु परंपरया वीणाद्यपेक्षायामपि शब्दे तदधिकरणत्वप्रतीतिः[5]कथमप्रमेत्याशङ्क्य, लोहितः स्फटिक इतिवत् प्रमाप्रमा चेत्याह—तथा चेति। वीणाया अवच्छेदकत्वेन शरीरवदाश्रयत्वादाह—शब्देति।

---

1. क. परंपरेति।
2. क. 'प्रतीतिः' नास्ति
3. ग. अबधिरस्य
4. क. वयसोपचया-
5. ग. कथं प्रमा

अत्यन्तसारूप्यात् । एवं च वीणादेरश्रोत्रत्वे मैत्रेणाहमनुवाकमध्यापितो यद्गीतं त्वया श्रुतं तन्मयापीत्यादिप्रतीतीनां तदुच्चारणादिप्रयोज्यजातीयत्वं विषयः । शब्दे हि कारणविशेषप्रयोज्या जातिरवश्यं वाच्या । अन्यथा शब्दविशेषेण पुत्राद्यनुमानं न स्यात्, जातिं विना विशेषान्तराभावात् । एवं च कर्णावच्छिन्नस्य नभसः श्रोत्रत्वे तेन वीणादिप्रभवशब्दग्रहो न तत्र सन्तानक्रमेणोत्पादं विना इत्यनन्यगतिकतया तत्कल्पनापि प्रामाणिकी ।

शब्देन चाव्यवहितपरमाणुदेशोत्पादक्रमेण न शब्दारम्भो येन मेघजादिशब्दानां भूलोकप्राप्तिर्युगान्तरेऽपि न स्यात् । किं तु मेघाद्यभिहत-सर्वतोगामिमहावायोः महति देशे संयोगनिमित्तमासाद्य आद्यशब्देन सर्वदिग्वर्ती शब्द एक एव जन्यते । निमित्तसंयोगानुरोधित्वात् विभुकार्याणां उत्तरोत्तरेणापि अधिकाधिकदेशतः सर्वत्र एकैक एव शब्दो वीची(तरङ्गत्वात्) [तरङ्गवत्] उत्पाद्यते । अत एव सर्वैरेकशब्दग्रहः ।

वायोश्च नयनवन्महावेगतया शीघ्रगामित्वेन अग्रिमशब्दारम्भादाद्यशब्दानन्तरमचिरेणैव शब्दोपलम्भः । वायोरेव च (मन्दतरतमादिक्रमेण) मन्दतरतमादिक्रमेण मन्दादिशब्दोत्पत्तिः ।

---

प्रकाशः

वीचीतरङ्गवदिति । ननु दशदिग्जन्यतावच्छेदकत्वेन दश जातयस्तत्र स्युः । तथा च जातिसंकर इति चेत्—न । नानादिग्जन्यता तत्रैकजात्यैवावच्छिद्यते लाघवात् । दण्डचक्रादिजन्यतावच्छेदकघटत्वादिवदित्याहुः ।

यद्गेति । एवं सति यः शब्दस्त्वया श्रुतः स मयापीति प्रतीतेः बाधकं विना भ्रमत्वं वा [1]कल्प्यं तज्जातीयविषयत्वं वा [2]कल्प्यमित्यस्वरस इत्येके ।

---

न्यायशिखामणिः

तज्जातीयेति । न चैवं तज्जातीयोऽयमिति स्यादिति वाच्यम् । लौहित्यप्रतीतिवत् प्रतीत्याकारभेदेऽपि संबन्धभेदविषयत्वेन प्रमात्वाप्रमात्वसंभवादिति

---

1. ख. कल्प्यताम्

2. ख. 'कल्प्यम्' इति नास्ति ।

यद्वा आद्यशब्देन कदम्बगोलकवत् दश दिशि दश शब्दा आरभ्यन्ते तैश्च दश शब्दसन्ताना इति ।

नन्वेकशब्देन कथमनेकशब्दारम्भः सामग्रीभेदादिति चेत्—न । सर्वतोऽनेकवाय्वादिसहकारात् प्रागभावभेदाद्वा ।

न च तदितरहेतुसाकल्ये तद्भेदान्न कार्यभेदः तथा अदर्शनादिति वाच्यम् । कार्यभेदो हि सामग्रीभेदात् । स च हेत्वन्तरभेदादिव प्रागभावभेदादपि । अन्यथा समवाय्यादिभेदेऽपि कार्यवैजात्यं न स्यात् । घटव्यक्तिषु तथा अदर्शनात् । पाकजे रूपादौ हेत्वन्तराभेदेऽपि प्रागभावपूर्वरूपादिध्वंसभेदेन भेदाच्च ।

---

प्रकाशः

वस्तुतो व्यवस्थितविकल्पोऽयम् । प्रागभावाभेदे वीचीतरङ्गन्यायः । प्रागभावभेदे [1]कदम्बगोलकन्यायः । एवं च यदि दश दिशि द्वौ त्रयो वा प्रागभावास्तदा द्वित्राः शब्दा जायन्त इति दशत्वैकत्वे वा न नियम इति ।

कदम्बगोलकन्याये बाधकमाशङ्कते—नन्विति । ननु वायुभेदो न शब्दभेदप्रयोजकः, प्रागभावाभेदे नानावायुनाप्येकस्यैव शब्दस्य दण्डद्वयजन्यैकघटवदुत्पादनात्[2] । तद्भेदे चैकेनापि वायुना नानाशब्दोत्पादात् । तथा चावश्यकत्वात् प्रागभावभेद एव [3]तथेत्यनुशयेनाह—प्रागभावभेदाद्वेति । अन्यथा [4]समवाय्यादीति । यद्यन्यकारणाभेदे सति [5]प्रागभावभेदेनान्यत्र [6]कार्यभेदादर्शनात्

---

न्यायशिखामणिः

भावः । न पूर्वास्वरसात् यद्वेत्यभिधानम्, न वांत्रारुचिः मूलकारस्य । किं तु विकल्पयोर्व्यवस्थितिरित्यालोककृन्मतम् । तदाह—वस्तुत इति । तदुक्तमपरितोषमाह—नन्विति ।

---

1. ख. 'कदम्बगोलकन्याय.......शब्दभेदप्रयोजकः' इति ग्रन्थस्त्रुटितः ।
2. क. ०दुपादानात्
3. ख. तथेत्याशयेनाह
4. ख. समवायादिति
5. क. प्रागभेदेन
6. ख. कार्यभेदमात्रदर्शनात्

अथ रूपाद्येकैकप्रागभावध्वंसयोः सर्वत्र तुल्यत्वे किं विनिगमकम्, गन्धादिप्रागभावानां रसादौ व्यभिचारेऽपि गन्धादौ रसादिप्रागभावानामव्यभिचारादिति चेत्—न। वायुस्पर्शे गन्धरसरूपप्रागभावप्रध्वंसानां, तेजोरूपे गन्धरसाभावयोः, जलरसे गन्धप्रागभावस्य व्यभिचारेण अहेतुत्वे स्वप्रागभावहेतुताया आवश्यकत्वात्। पाकजेषु रूपरसस्पर्शेषु गन्धादिप्रागभावानामन्यथासिद्धत्वाच्च। रूपादिषु तथादर्शनात्। गन्धेऽपि स्वप्रागभावस्यावश्यहेतुत्वात् अभावान्तराणामन्यथासिद्धत्वम्।

---

प्रकाशः

प्रकृतेऽपि न तद्भेदात्कार्यभेदः कल्प्यः। अन्यत्र दृष्टस्यैव कल्प्यत्वात्। तदा [1]घटपटयोर्विजातीय[2]समवाय्यादिव्यक्तिभेदेऽपि वैजात्यं न स्यात्। घटव्यक्तिषु [3]समवाय्यादिव्यक्तिभेदे तस्यादर्शनादित्यर्थः। पाकज इति। पूर्वरूपादिध्वंसस्योपादानं प्रसङ्गादिति बोध्यम्। स्वप्रागभावेति।

ननु स्वसमानाधिकरणप्रागभावत्वेन हेतुत्वात् यत्र यावान् प्रागभावस्तत्र तावतो हेतुत्वम्। अत एव नोक्तव्यभिचारः। तथा च सममेव सर्वप्रागभावानां हेतुत्वग्रहात् नैकेनापरस्यान्यथासिद्धिरिति चेत्—न। लाघवेन स्वप्रागभावत्वेनैव

---

न्यायशिखामणिः

प्रागभावभेदस्य कार्यभेदाप्रयोजकत्वस्यान्यथाशब्दार्थत्वे वैयधिकरण्यमित्यतोऽन्यथा व्याचष्टे—[4]यदीति।

लाघवेनेति। सामानाधिकरण्यांश[5]स्यात्राप्रवेशादिति भावः। ननु स्वप्रतियोगित्वस्थाने स्वसमानाधिकरणत्वं प्रविष्टं नाधिकम्। अतो न गौरवमित्यत आह—अन्यथेति। एतेन गन्धे स्वप्रागभावस्यावश्यकत्वादित्यसंगतम्। सर्वप्रागभावानां जनकत्वग्रहाविशेषादित्यस्वरसात् यद्वेत्युक्तमिति जयदेवव्याख्यानमपास्तम्। तेषां [6]जनकत्वे गौरवेण लघुना स्वप्रागभावेनान्यथासिद्धत्वादित्यभिप्रेत्य स्वय-

---

1. ख. घटकपालयो.
2. ख. समवायादि-
3. ख. समवायादि-
4. क, यदिवि।
5. ग. ०स्यात्र प्रवेशादिति
6. ग. जनकत्वगौरवेण

यद्वा रूपरसस्पर्शतुल्यत्वेऽपि अग्निसंयोगविशेषात् क्वचित् सौरभमसौरभं चोत्पद्यते। न चाग्निसंयोगो रूपादिमात्रे कारणं, व्यभिचारात्। एवं रसादावपि।

---

**प्रकाशः**

तस्य हेतुत्वादिति भावः। [1]अन्यथा स्वसमानाधिकरणयत्किंचित्प्रागभावमादायोत्पन्नस्य पुनरुत्पत्त्यापत्तिः।

न केवलमेकेनापरस्यान्यथासिद्धिमात्रम्, किं तु व्यभिचारोऽपीत्याह—**यद्वेति**। तुल्यत्वेऽपि पूर्वाविलक्षणत्वेऽपि पूर्वाभिन्नत्वेऽपीति यावत्। [2]असौरभनाशानन्तरं सौरभं क्वचित् सौरभनाशानन्तरं क्वचिदसौरभं वेत्यर्थः।

ननु तत्र पूर्वरूपनाशानन्तरं रूपान्तरं जातमेवेत्यत आह—**न चेति**। श्यामानन्तरं रक्तमित्येव [3](पाकादृष्टम्) [पाकाद्दृष्टम्], न तु विद्यमानसजातीयम्। तथा चाग्निसंयोगस्तादृशरूपे न कारणम्, किं त्वन्यादृश इत्यर्थः। एवं सति **व्यभिचारात्**—अन्वयव्यभिचारादित्यर्थः। न हि सत्यपि पाके [4]नष्टसजातीयं रूपं कदा(प्युत्पन्नमदृष्टम्) [प्युत्पन्नं दृष्टम्]। क्वचित् दृश्यत इति चेत्—न। तत्र भेदे मानाभावात् प्रत्यभिज्ञानाच्च। तथा च तत्र रूपादिप्रागभावानां व्यभिचारात् स्वप्रागभावमात्रस्यैव तद्धेतुत्वमिति भावः।

---

**न्यायशिखामणिः**

मन्यथा व्याचष्टे—**न केवलमिति**। ननु तुल्यत्वं सादृश्यम्, तच्च भेदनिबन्धनमित्यत आह—**पूर्वेति**। [5]युगपत्सौरभासौरभोत्पत्तिर्विरुद्धेत्यत आह—**असौरभेति**।

नन्वग्निसंयोगो न रूपान्तरे हेतुरिति व्याख्यायमाने व्यभिचारादित्ययुक्तम्, व्यतिरेकव्यभिचाराभावादित्यत आह—**एवं सतीति**। तत्र रूपान्तरमुत्पन्नमेव। कारणे सति कार्यावश्यंभावात्, अतो नान्वयव्यभिचार इत्यस्वरसा-

---

1. क. 'अन्यथा...पुनरुत्पत्त्यापत्तिः' इति ग्रन्थस्त्रुटितः।
2. क. सौरभ-
3. ख. 'पाकादृष्टं' इति नास्ति।
4. ख. दृष्टसजातीयं
5. क. ननु युगपत्

ननु कार्यमात्रे प्रागभावमात्रं न हेतुः, तयोर्व्यतिरेककालानवगमात्। सर्वमुक्तावितरहेत्वभावादेव कार्यानुत्पादादिति चेत्—न। हेत्वन्तरसत्त्वेऽप्युत्पन्नस्य पुनरनुत्पादेन प्रागभावस्य हेतुत्वात्। एका सामग्री (एकमेव कार्यं) [एकं कार्यं] जनयति स्वभावादिति चेत्—न। कार्यानुत्पादस्य सामग्रीविरहप्रयोज्यत्वनियमात्।

---

## प्रकाशः

यद्वा—नन्वग्निसंयोगनिरूपितकार्यतावच्छेदकं रूपत्वादिकमेव। तथा च तत्र तेन [1]रूपादिकमेवोत्पादनीयमित्यत आह—न चेति। व्यभिचारात्—अवयवरूपादिजन्यरूपादाविति शेषः। तथा च कश्चिदेवाग्निसंयोगः क्वचिदेव रूपादौ कारणम्। तदिदमुक्तम्—अग्निसंयोगविशेषादिति। तथा च तदभावान्न रूपान्तरमुत्पद्यत इति तत्प्रागभावानां व्यभिचार इति भावः।

ननु रूपादिस्थले भवतु प्रागभावो हेतुः, न तु सर्वत्र, येन शब्देऽपि ततो भेदः स्यादित्याह—नन्विति। हेत्वन्तरेति। तथा च युक्तितौल्यात् सर्वत्र कार्ये तद्धेतुत्वमित्यर्थः। एकमिति। एकमेवेत्यर्थः। कार्येति। न चाद्यसमवायाभावादेव तत्संबन्धरूपोत्पत्त्यभावः। प्रागभावाहेतुत्वे तस्याप्यापाद्यत्वादिति भावः।

ननु कारणाभावात्कार्याभाव इत्यत्र कारणस्यानादिसंसर्गाभावोऽत्यन्ताभावः प्रागभावो वा। न चेह प्रागभावस्य प्रागभावोऽत्यन्ताभावो वा, किं तु ध्वंस इति कथं हेतुताग्रह इति चेत्—न। हेत्वभावो हि तत्समवधानविरहः, स च विशिष्टा-

---

## न्यायशिखामणिः

दाह—यद्वेति। अग्निसंयोगत्वावच्छिन्नो न रूपत्वावच्छिन्ने हेतुरित्यस्मिन् पक्षे व्यभिचार इत्येतत् व्यतिरेकव्यभिचारपरतया व्याचष्टे—अवयवेति।

प्रागभावमात्रस्य [2]कारणत्वाक्षेपो न युक्तः, रूपादिप्रागभावानां [3]हेतुत्वस्यासाधितत्वात्। [4]न चैतत्तद्व्यतिरिक्तपरम्, प्रकृतासंगतेरित्यत आह—नन्विति।

---

1. ख. 'रूपादिकमेव......तथा च तदभावान्न' इति ग्रन्थस्त्रुटितः।
2. ग. हेतुत्वाक्षेपः
3. ग. हेतुत्वस्य साधुत्वात्
4. क. न चेत्तद्व्यति-

न च कार्यसहभावेन कारणत्वम्, गौरवात् । न च विनश्यदवस्थे समवायिनि कार्यानुत्पत्तेस्तथात्वमिति वाच्यम् । तावता समवायिकारणस्यैव तथात्वात्, कारणमात्रे मानाभावेन तस्याप्रयोजकत्वात् ।

ननु समवेतसमवायो न ग्राहकः शब्दत्वादिजातेरभावादिति चेत्—न । रूपत्वादिन्यायेन तत्साधनात् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे संनिकर्षवादः

---

प्रकाशः

भावः । तथा च दण्डसमवहितचक्राभाववत प्रागभावसमवहितहेत्वन्तराभाव इहापि सुलभ इत्याहुः ।

न चेति । यागादावपि व्यापारद्वारा तथात्वमिति भावः । तावतेति । एतदुपलक्षणम् । असमवायिकारणप्रतिबन्धकाभावयोस्तथात्वमवसेयम् ।

इति श्रीमद्रुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणि-
प्रकाशे प्रत्यक्षखण्डे संनिकर्षवादः

---

न्यायशिखामणिः

प्रकृतसंगतिमाह—येनेति । प्रागभावमात्रस्य कारणताग्रहमाक्षिपति—नन्विति ।

ननु समवायिकारण[1]स्यैवेत्युक्त्या (अन्यथा)[अन्यस्य]सर्वस्य कार्यसहभावानवश्यंभावे प्रतिबन्धकाभावादिरपि तथा स्यादित्यत आह—उपलक्षणमिति ।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरीन्द्र-
विरचिते न्यायशिखामणौ संनिकर्षवादः ।

—:※:—

---

1. क. ०स्यैवेत्युक्तयुक्त्या

# अथ समवायवादः

—: * :—

ननु समवायासिद्धः न सा प्रत्यासत्तिः। विप्रतिपत्तिश्च शुक्लः पट इति प्रतीतिः विशेषणविशेष्यसबन्धविषया न वेति।

अथ जातिगुणक्रियातद्वन्तौ मिथः संबद्धावनुभूयेते। न हि असंबद्ध-स्वरूपद्वये विशिष्टधीव्यपदेशाविति चेत्—न।

---

प्रकाशः

ननु समवायासिद्धेरित्ययुक्तम्, सिद्धयसिद्धिव्याघातादित्यत आह—**विप्रतिप(त्ते)[त्ति]श्चेति**। प्रतियोग्यनुयोगिभावसंबन्धविषयतया सिद्धसाधानमत उक्तम्—**विशेषणविशेष्येति**। न हि प्रतियोगित्वादेरुभयनिरूप्यत्वम्। विशेषणे प्रतियोगित्वस्य विशेष्ये अनुयोगित्वस्य भानात्। [1]संयोगादेस्तु तदुभयनिरूप्य-त्वमित्याहुः। वस्तुतो लाघवात् एकस्यैव [2]समवायस्य विषयत्वान्न सिद्धसाधनम्। अन्यथा सिद्धान्तेऽप्यगतेः। तत्र विशेष्यपदाभावात् स्वरूपसंबन्धस्योभयनिरूप्य-त्वेन तेनार्थान्तरस्य [3]एवमप्यवारणाच्च। संबन्धस्योभयनिरूप्यत्वनियमेन प्रतियोग्य-नुयोगिभावसंबन्धस्यापि तथात्वाच्च। तस्मात्ताद्रूप्यसिद्धये तदुपादानमिति मन्तव्यम्।

---

न्यायशिखामणिः

शुक्लः पट इत्यादिप्रतीतिर्न विशेषणविशेष्यसंबन्धविषया तत्साधकमाना-भावादित्येवानुमानं पूर्वपक्षिणो विवक्षितम्, अतो न व्याघात इत्याशयेनाह—**अत आहेति**। जयदेवमतमुक्त्वा स्वमतमाह—**वस्तुत इति**। साधकाभावोऽसिद्ध इति चेत्—किं प्रत्यक्षं [4]मानमनुमानं वा। तत्राद्यपक्षपरतया व्याचष्टे—**प्रत्यक्ष-मिति**। विपक्षे बाधकोपन्यासादनुमानमेवोक्तं स्यादित्यत आह—**उपोद्घलकमिति**।

---

1. क. संयोगत्वादेस्तदुभय-
2. क. अनवयवस्य
3. ख. एवमप्यनिकारणाच्च
4. क. 'मानम्' नास्ति।

संबद्धानुभवेन हि संबन्धो न विशेषणम् भासते, तस्य प्रथममज्ञानात्, संयोगिनाविमाविति‌वत् समवायिनावित्यननुभवाच्च । नापि विशेष्यः, अनयोः समवाय इत्यननुभवात् । नापि स्वरूपेण भासते । समवायं जानामीति विषयताननुभवात् ।

ननु नीलो घट इत्याद्यनुभवो विशेषणविशेष्यसंबन्धविषयः विशिष्ट-[1]प्रतीतित्वात् [2]दण्डिज्ञानवदिति चेत्—न । अघटं भूतलं ज्ञातमिष्टं कृतं चेत्यत्र व्यभिचारात् । संबन्धविषयत्वे बाधकं विनेति विशेषणमिति चेत्—न । बाधकाभावस्यैव समर्थत्वे शेषवैयर्थ्यात् साधकाभावेन सत्प्रतिपक्षाच्च । बाधकाभावस्य साधकत्ववत् साधकाभावस्य बाधकत्वात् । तस्मादुभया-भावे संशयः स्यात् ।

न च प्रतीतिरेव समवायसाधिका, तस्यास्तद्विषयत्वासिद्धेः । अन्यथा अन्योन्याश्रयात् ।

---

**प्रकाशः**

प्रत्यक्षं शङ्कते—अथेति । प्रत्यक्ष एवोपोद्बलकमाह—न हीति । यद्यपि स्वरूपेणेत्यस्य वैशिष्ट्य[3]विषया न तु विशेष्यत्वविशेषणत्वादिनेत्यर्थोऽभिमतः, तथापि तथा न विषयतेति स्वाभ्युपगमेन स्वेनैव रूपेण समवायत्वमात्रेणेत्यर्थं कल्पयित्वा दूषयति—समवायमिति । अनुमानं शङ्कते—नन्विति । स्वरूप-संबन्धेनार्थान्तरभिया अतिरिक्तसंबन्धविषयत्वं साध्यं मन्वानो दूषयति—अघट-मिति । संबन्धेति । अतिरिक्तसंबन्धेत्यर्थः । नचेति । विपक्षबाधकतर्को

---

**न्यायशिखामणिः**

ननु नन्वित्यत्रानुमानपक्षोत्थितिरयुक्ता, विप्रतिपत्तिधर्मिणि शुक्लः पट इत्यनु-भवे साध्यासिद्धेरित्याशङ्क्य, उभयत्रापि गुणक्रियादिविशिष्टप्रतीतिः पक्ष इति न विरोध इत्याशयेनाह—अनुमानमिति । ननूक्तसाध्यस्य तत्रापि सत्त्वान्न व्यभि-चार इत्यत आह—स्वरूपेति । अतिरिक्तेति । संबन्धिव्यतिरिक्तेत्यर्थः ।

---

1. ख. ॰प्रत्ययत्वात्
2. ख. दण्डीतिप्रत्ययवत्
3. क. विषया न तु विशेषणत्वादि-

अथाघटं भूतलं ज्ञातमित्याद्यपि विशिष्टधीः संबन्धविषया, किं तु भ्रान्ता, बाधकसत्त्वादिति चेत्—तर्हि भूतलेऽघटत्वस्य ज्ञातत्वादेश्चाभावः

---

प्रकाशः

हि तत्प्रतीतिमुपजीव्येति शङ्कार्थः, तेन न पौनरुक्त्यम् । वस्तुतस्तूक्तव्यभिचारवारणाय समवायविषयकप्रतीतित्वादिति लिङ्गमेवाशङ्कय निषेधति—न चेति । एवं च प्रतीतिरेवेत्यस्य समवायविषयकप्रतीतिरेवेत्यर्थः । अत एवाह—तस्या इति । उक्तयुक्त्या परेण तद्विषयत्वानङ्गीकारात् अन्यतरासिद्धेरित्यर्थः ।

नन्वेतदनुमानादेव तद्विषयत्वसिद्धौ नासिद्धिरत आह—अन्यथेति । तथा सति हेतुसिद्धौ साध्यसिद्धिः तत्सिद्धौ हेतुसिद्धिरित्यन्योन्याश्रय इत्यर्थः । प्रत्यक्षपरत्वे अन्योन्याश्रयानवकाशात् । अन्यथा क्वापि प्रत्यक्षमर्थसाधकं न स्यात् ।

अन्ये तु तद्विषयत्वासिद्धेरिति । परस्य तथात्वासिद्धेस्तं प्रति [1]प्रमाणीभवनाक्षमत्वादित्यर्थः । अन्यथेति । अन्यतरासिद्धतद्विषयकतायाः प्रसाध्याङ्गिकायास्तस्या एव तत्र मानत्व इत्यर्थः ।

---

न्यायशिखामणिः

[2]विपक्षेति । समवायविषयप्रत्यक्षप्रतीतिस्तदनभ्युपगता न स्यादित्येवंरूप इत्यर्थः । ननु प्रत्यक्षानुभवासत्त्वे[3] तर्कोऽपि न प्रसरति । तत्सत्त्वे च स एव[4]समवायसाधकः स्यात् । अनुमानवत्तस्यापि स्वतन्त्रप्रमाणत्वादित्यनुशयादाह—वस्तुत इति । नन्वस्यानुमानपरत्वे प्रतीतिरित्ययुक्तम् । भावप्रधानत्वे च विशिष्टलिङ्गासिद्धिरित्यत आह—एवं चेति । नन्विदमप्ययुक्तम्, समवायाप्रसिद्धया सामान्याकारं साध्यं [5]कुर्वत् समवायविषयत्वं लिङ्गं विवक्षितमित्यस्यासंभवदुक्तिकत्वादित्यस्वरसाज्जयदेवमतमाह—अन्ये त्विति । [6]न चैतन्मते पौनरुक्त्यं दुर्वारम् । दूषणान्तराभिधित्सया पुनस्तदुपन्याससंभवादिति भावः । नन्वथेत्यत्रानुमाने व्यभिचारो

---

1. ख. प्रामाणिकभावनाक्षमत्वात्
2. क. विवक्षितेति
3. ग. ०भवसत्त्वे
4. क. समुदायसाधकः
5. ग. कुर्वतः समवायलिङ्गमविव-
6. ग. नन्वेतन्मते

स्यात् । तथा च व्यवहारविलोपः । संबन्धश्च न संयोगः समवायो वान्यतरो वा बाधादसिद्धेर्वा । नापि संबन्धमात्रम्, ज्ञापकत्वादिना सिद्धसाधनात् ।

नाप्यविशिष्टव्यावृत्तविशिष्टज्ञाननियामकः । अभावज्ञानादाविव स्वरूपसंबन्धेनार्थान्तरत्वात् । न च संबन्धिभिन्नत्वं साध्ये विशेषणम् । अभाव-

---

प्रकाशः

अन्योन्येति । तस्याः समवायविषयत्व[1]साधनं समवायप्रसिद्ध्यधीनम् । तथा च [2]तत्साधने तस्याः समवायविषयत्वसिद्धिः, ततः समवायसिद्धौ साध्यप्रसिद्धिरित्यन्योन्याश्रय[3] इति वदन्ति ।

संबन्धविषयेति । अतिरिक्तसंबन्धविषयेत्यर्थः । अत एव भ्रान्तत्वमपीति भावः । संबन्धमात्रानङ्गीकर्तृमतेन शङ्केयमिति ध्येयमित्यन्ये । संबन्धमात्रमिति । उभयनिरूप्यमात्रमित्यर्थः । [4]घटस्य नीलज्ञापकत्वेऽपि पक्षे [5]तद्विषयत्वासिद्धेर्यद्यपि तन्न सिद्धसाधनम्, तथाप्यर्थान्तरे तात्पर्यम् ।

---

न्यायशिखामणिः

नेत्युक्तमयुक्तम् । तत्रातिरिक्तघटितसाध्याभावात् संबन्धविषयत्वस्य च [6]साध्यत्वे भ्रान्तत्वानुपपत्तेरित्यत आह—अतिरिक्तेति । ननु किं तत्साध्यं संयोगविषयत्वं वा समवायविषयत्वं वा [7]तदन्यतरविषयत्वं वा संबन्धमात्रविषयत्वं वा [8]अविशिष्टव्यावृत्तविशिष्टधीनियामकविषयत्वं वा संबन्धिभिन्नत्वविशेषितमेतदेव [9]वा । तत्राद्यद्वितीयतृतीयान् बाधाप्रसिद्धिभ्यां निराकृत्य चतुर्थपक्ष उत्थापितो न युक्तः, पञ्चमाभेदादित्यत आह—उभयेति । तथा चोभयनिरूप्यविषयत्वमिह साध्यमिति नाभेद इति भावः ।

---

1. ख. °समर्थनं
2. ख. तत्साधनेन
3. ख. °श्रयादित्यर्थ इति
4. ख. घटस्यानील-
5. ख. तद्विषयत्वसिद्धेः
6. ग. साध्यविषयत्वे
7. क. तदन्यतरत्वं
8. ग. 'अविशिष्टव्यावृत्त' नास्ति ।
9. क. 'वा' नास्ति ।

ज्ञानादिना व्यभिचारात् । बाधकाभावस्य च विशेषणत्वं हेतौ निरस्तमेव । विनापि भिन्नसंबन्धं अभावज्ञानादाविव विशिष्टधीसंभवेनाप्रयोजकत्वाच्च । विशेषणताविशेषरूपः प्रकारादिकृतो वा विशेषः संबन्धाविषयत्वेऽपि तुल्यः ।

स्यादेतत् । अवयवगुणक्रियाजातितद्वतां इह तन्तुषु घटः, इह पटे शौक्ल्यं, इह चलनं पटत्वं चेति इहप्रत्ययः आधाराधेयसंबन्धनिमित्तकः यथार्थेहप्रत्ययत्वात् इह कुण्डे बदरमिति प्रत्ययवदिति चेत्—न । इह भूतले घटाभावो ज्ञानं चेत्यादौ व्यभिचारात्, बाधकं विनेत्यस्य निरस्तत्वात्, तथैवाधाराधेयभावादेवोपपत्तेश्च । उत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयस्य आधारत्वात् ।

अन्ये तु—शब्दजातिरूपादिरिन्द्रियसंबद्धः प्रत्यक्षत्वात् घटवदित्यनुमानात् संयोगबाधे इन्द्रियसंबन्धघटकतया समवायसिद्धिः, इन्द्रियस्य

---

प्रकाशः

नन्वतिरिक्त[1]संबन्धाविषयत्वे समूहालम्बनाविशेषापत्तिरित्यत आह—विशेषणतेति । [2]अतिरिक्तसंबन्धविषयत्वेऽपि तमादायापि समूहालम्बनसंभवात् तत एव विशेषस्त्वयापि वाच्य इत्यर्थः । अतिरिक्तसंबन्ध([3]निमित्तक)विषयत्वं साध्यं संबन्धनिमित्तकत्वमात्रं वा साध्यम् । आद्ये दोषमाह—इहेति । अन्त्ये त्वाह—तथैवेति । तथा चार्थान्तरमिति भावः ।

---

न्यायशिखामणिः

ननु स्यादेतदित्यत्रानुमानान्तरमाशङ्क्य निरस्तमयुक्तम्, अभावादिप्रतीतौ संबन्धविषयत्वसत्त्वेन व्यभिचाराभावादित्याशङ्क्य विकल्पपरतया व्याचष्टे—अतिरिक्तेति ।

संबन्धाभावो न हेतुरसिद्धेः, अतिरिक्तसंबन्धाभावश्च अभावादौ व्यभिचारादयुक्त इत्याशयेन शङ्कते—यद्यपीति ।

---

1. ख. °संबन्धविषयत्वे
2. ख. अतिरिक्तसंबन्धमात्रमिति । उभयविषयत्वेऽपि
3. ख. 'निमित्तक' नास्ति

संबद्धग्राहकत्वात् । अत एव समवायो न प्रत्यक्षः इन्द्रियेणासंबन्धात् । न च संबन्धत्वेन तत्सिद्धिः । अनवस्थानात्, स्वभावादेव ज्ञानवत् स्वसंबद्धव्यवहारकारित्वाच्च । समवायो हि संबन्धं विनैव स्वभावादेव कस्यचित् । न च जात्यादेरपि स्वभावादेव स्वसंबद्धव्यवहारकारित्वे समवायविलोपः । जात्यादेः इन्द्रियासंबन्धे समवायवदप्रत्यक्षत्वापातादिति ।

तन्न । समवायस्वीकारेऽपि स्वरूपसंबन्धस्यावश्यकत्वात् । घटज्ञानयोः भूतलाभावयोरिव वा द्रव्येण गुणजात्यादिभिः स्वरूपमेव संबन्धोऽस्तु । तथा च शब्दस्येन्द्रियविशेषणतया, शब्दत्वस्य विशेषणविशेषणतया, रूपादिजात्यादेरिन्द्रियसंबद्धविशेषणतया, रूपत्वादेरिन्द्रियसंबद्धविशेषणविशेषणतया स्वभावसंबन्धरूपया ग्रहणसंभवे किं समवायेन । द्रव्ये स्वभावसंबन्धात् नेन्द्रियेण ग्रहणमिति कथं गुणादेस्तेन ग्रह इति चेत्—समवायेनापि न द्रव्यग्रहणमिति तुल्यम् ।

अपरे तु—एकत्र घटे आमपाकदशायां क्रमेण श्यामरक्तरूपोपलम्भोऽस्ति । स च न तदुभयनिबन्धनः, रूपस्य नित्यत्वेनैकदोपलम्भापत्तेः । नित्यत्वादेव च न तयोरुत्पादविनाशौ । तस्मात्तयोः संबन्धस्य तौ स्याताम्, स एव समवाय इति ।

---

प्रकाशः

अत एवेति । यद्यपीन्द्रियसंब(न्ब)[द्ध]विशेषणता अभाववदत्रास्त्येव । तथापि भावानां विशेषणता संबन्धान्तरगर्भेत्यभ्युपगमात् अतिरिक्तसंबन्धाभावान्न प्रत्यक्ष इति भावः । [1]अत एवातिरिक्तसंबन्धमेवाशङ्क्यानवस्थया परिहरति—[2]न चेति । अत्र भावानामित्यादिनियमस्याप्रयोजकत्वात् घटज्ञानादिस्थले व्यभिचाराच्च नियमाभावेऽभाववद्विशेषणतयैवोपपत्तेरनुमानेऽर्थान्तरमित्याह—समवायेति । व्यभिचारस्थलमेवाह—घटेति ।

गुरुमतमाह—अपरे त्विति । ननु समवाय एव तद्विषय इत्यत आह—समवायस्येति । एतच्चोपलक्षणम् । समवाय्यादिकं विना भावस्यानुत्पत्तेरित्यपि

---

1. क. 'अत एव' नास्ति ।
2. ख. 'न चेति·········व्यभिचारस्थलमेवाह' इति ग्रन्थस्त्रुटितः ।

तन्न । श्यामं नष्टम्, रक्तमुत्पन्नम्, इत्याद्यबाधितानुभवात् समवायस्योत्पादविनाशानुल्लेखाच्च । त्वन्मते तस्यातीन्द्रियत्वात् । अन्यथा अवयविज्ञानगन्धरसादेरपि नित्यत्वं समवायस्योत्पादविनाशाविति किं न रोचयेत् । न ह्युत्पादविनाशप्रतीतिरप्रामाणिकी बाधकं विनेति ।

उच्यते । गुणक्रियाजातिविशिष्टबुद्धयो विशेषणसंबन्धविषयाः विशिष्टबुद्धित्वात्, दण्डीति बुद्धिवत् ।

प्रकाशः

बोध्यम् । [1]त्वन्मत इति । न चोपनीतभानम् । उपनायकाभावात्, ध्वंसविशेष्यकप्रतीतेश्चेति भावः ।

ननु तस्य प्रत्यक्षत्वे का हानिरित्यत आह—अन्यथेति । यद्यपि रसनस्य द्रव्याग्राहकत्वात् द्रव्यसमवायस्य तदयोग्यतया तत्रोत्पादादिप्रतीतेर्न समवायविषयत्वेनान्यथासिद्धिः । तथाप्युपनीतभानाभ्युपगमादिदमिति बोद्धव्यम् ।

गुणक्रियेति । न चैवमभावविशिष्टबुद्धेरपि पक्षान्तर्भावे लाघवेन तत्रापि समवायसिद्धिप्रसङ्ग इति वाच्यम् । तत्र बाधकस्य वक्ष्यमाणत्वात् । विशिष्टबुद्धित्वं च न संबन्धबुद्धित्वं न वा सप्रकारकबुद्धित्वम् । उभयस्यापि संबन्धविषयबुद्धित्वपर्यवसानेन साध्याविशेषात् । किं तु विशेषण[2]धीजन्यबुद्धित्वम्, अतद्व्यावृत्तिधी[3]जनकबुद्धित्वं वा । न च तज्जन्यत्वादिकमेव किमवच्छेदेन ग्राह्यमिति वाच्यम् ।

न्यायशिखामणिः

ननु [4]संबन्धमात्राशङ्कायामनवस्थोक्तिरयुक्तेत्यत आह—अतिरिक्तेति । ननु [5]भावानामित्यादिनियमे सति कथमर्थान्तरमित्यत आह—भावानामिति । (ध्वस्तेति) [ध्वंसेति] । तर्ह्ययं मानसप्रत्यय एवास्तु, तत्रोपनीतविशेषणकत्वनियमाभावादिति चेत्—न । मानसत्वे चक्षुषा नीलं [6]नष्टं साक्षात्करोमीत्यनुभवविरोधादिति भावः ।

1. ख. तन्मत इति ।
2. ख. ॰बुद्धिजन्यधीत्वं
3. ख. ॰बुद्धिजनकधीत्वं
4. क. ॰मात्रशङ्कया अनव-
5. ग. भावनादित्यादि-
6. ग. दृष्टं

प्रकाशः

विशेषणत्वगोचरबुद्धित्वस्य तथात्वात् । न चैवमुपजीव्यत्वात्तस्यैव [1]हेतुत्वमिति वाच्यम् । तद्व्याप्यत्वस्याप्रतिसन्धान[2]दशायामेव तदवच्छेदेन गृहीतस्यापि हेतुत्वे विरोधाभावात् । न च तत्र विशेषणत्वगोचरत्वमसिद्धम् । भासमानवैशिष्ट्यप्रतियोगित्वलक्षणस्य तस्य [3]समूहालम्बनभेदमादाय तत्र विषयत्वाभ्युपगमात् ।

वस्तुतोऽतद्व्यावृत्तधीजनकबुद्धित्वमेव हेतुः । तत्रैव तर्कसंभवेन व्याप्तिग्रहात् । तथा हि [4]अतद्व्यावृत्तिः संसर्गविशेषावच्छिन्नविशेषणाभाववद्व्यावृत्तिः । सा च तदा विशिष्टज्ञानेन [5]ज्ञायेत यदि विशिष्टधीः तत्संसर्गविषया । यत्संसर्गविषया या धीस्तत्संसर्गावच्छिन्नविशेषणाभाववद्व्यावृत्तबुद्धिं सा जनयतीत्येवमनतिप्रसक्तस्य [6]नियामकस्य संभवादित्याहुः ।

---

न्यायशिखामणिः

ननु विशिष्टज्ञाने विशेषणधीजन्यत्वस्य [7]परेणानङ्गीकारात् तदन्यतरासिद्धिरित्यरुचेराह—[8]अतद्व्यावृत्तीति । एतच्च समूहालम्बनभेदाय तेनाप्यभ्युपगमनियम इति नासिद्धिरिति भावः । अवच्छेदकावच्छेद्ययोर्व्याप्यत्वमिष्टमेव । परं तु तद्व्याप्यत्वाप्रतिसन्धानदशायां प्रयोगोऽवच्छेद्यस्येत्याह—तद्व्याप्यत्वेति । समूहालम्बनेति । न च संसर्गविषयकत्वं तद्भेदकमिति वाच्यम् । तमादायापि समूहालम्बनसंभवादिति भावः ।

ननु न तावद्विशेषणधीजन्यत्वं हेतुः, अन्यतरासिद्धेः इत्युक्तम् । नापि विशेषणत्वगोचरत्वम् । तस्य मतद्वयेऽप्यसिद्धेः । न चैवं समूहालम्बनभेदासिद्धिः । तदादायापि समूहालम्बनसंभवेनान्यस्यैव [9]तद्भेदकस्यावश्यवाच्यत्वादित्यस्वरसाज्जयदेवमतमाह—वस्तुत इति । नन्विदमप्ययुक्तम्, अवच्छेदकाग्रहे दुर्ग्रहत्वात्, विशेषणत्वगोचरत्वस्य च विशिष्टबुद्धावनङ्गीकारेण अनवच्छेदकत्वादित्यरुचेराह—

---

1. ख. हेतुत्वमस्त्विवति
2. क्ष. ०दशायामेतदव-
3. ख. समूहालम्बनभेदाय
4. क. तद्व्यावृत्तिः
5. ख. जन्येत
6. ख. नियामकस्यासंभवात्
7. ग. परेणाङ्गीकारादन्य-
8. ग. अतद्व्यावृत्तेति ।
9. ग. तद्भेदकत्वस्य

**न च व्यभिचारः। अभावादिविशिष्टबुद्धेरपि स्वरूपसंबन्धविषयत्वात्। न चैवमत्रापि तेनैवार्थान्तरम्, यतो गुणक्रियाजातिविशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः संबन्धः सिध्यन् लाघवादेक एव सिध्यति। स एव समवायः, न तु स्वरूपसंबन्धः, तत्तत्स्वरूपाणामनन्तत्वात् संबन्धत्वेनाक्लृप्तत्वाच्च।**

---

**प्रकाशः**

अन्ये तु—संबन्धविषयकबुद्धित्वमेव तत्त्वम्। न च साध्याविशेषः। स्वरूपसंबन्धमादायापि तन्मते हेत्वसिद्ध्यभावात् लाघवाच्च समवायसिद्धेर्न सिद्धसाधनमित्याहुः।

**दण्डीति बुद्धिवदिति।** यद्यपि दण्डो नेह विशेषणम्, किं तु मतुबर्थः संबन्धः। स चात्र संयोगरूप इति तद्विशिष्टधीः पक्षसमो न दृष्टान्त इति। तथाप्येतच्छब्दाभिलप्यमाना दण्डप्रकारिका प्रत्यक्षप्रतीतिर्दृष्टान्तः। [1]तस्या अन्यथा प्रतिपादनासंभवेनोक्तवाक्येनैव प्रतिपादनात्। **लाघवेनेति।**

ननु नियतलाघवस्यैव प्रमाणसहकारित्वम्, अत्र तु न तथा। प्रत्येकबुद्धिमात्रस्य पक्षत्वेऽपि समवायसिद्धिसंभवात् तत्र च लाघवानवतारादिति चेत्—

---

**न्यायशिखामणिः**

**अन्ये त्विति।** साध्याविशेषे द्वयमापतति, साध्यवत्संदिग्धत्वे [2]हेतोरसिद्धिः, हेतुवत् साध्यस्य निश्चितत्वे सिद्धसाधनं वा। न चात्र तदुभयमपीत्याह—**स्वरूपेति।**

ननु स्वरूपसंबन्धस्य नानुमितिविषयत्वम्, बहुत्वेन गौरवात्। किं तु एकत्वेन [3]लाघवात् समवायस्येत्युक्तमयुक्तम्। विप्रतिपन्नसर्वविशिष्टबुद्धीः पक्षीकृत्य समवायसाधने [4]तत्संभवेऽपि गुणविशिष्टबुद्धिमात्रपक्षीकरणे तत्तत्स्वरूपस्याबहुत्वेनोक्तलाघवानवतारादिति शङ्कते—**नन्विति।**

---

1. क. तस्यान्यथा
2. ग. हेतावसिद्धिः
3. क. 'लाघवात्' इति नास्ति।
4. क. तद्भवेऽपि

अथवा विशेषणसंबन्धनिमित्तिका इति साध्यम्। हेतौ तु सत्यत्वं विशेषणम्। विशेषणसंबन्धश्च कारणत्वेनैक एव सिध्यति। लाघवात् अनु-

---

प्रकाशः

न। अनेकस्य संबन्धत्वे गौरवम्, एकस्य तथात्वे लाघवमिति तत्रापि तदवतारात्।

नन्वेवं स्वरूपसंबन्धेनार्थान्तरस्य निराकरणेऽपि सिद्धसाधनस्य दुरपह्नवत्वम्। सिद्धेरुत्पादे लघुगुरुविषयचिन्तावकाशात् सिद्धसाधनेन च तदुत्पादस्यैव शिथिलत्वादित्यत आह—संबन्धत्वेनेति। अनुमानप्रवृत्तेः पूर्वं गुणादिस्वरूपाणां संबन्धत्वेनाकल्पनान्न तैः सिद्धसाधनमपीति भावः। अत एवाभावादिस्थले स्वरूपसंबन्धस्य क्लृप्तत्वाद्विपरीतं लाघवमित्यपास्तम्। गुणगुण्यात्मकरूपस्यैवात्र संबन्धत्वकल्पने तदवतारासंभवात्। न च रूपे रसाभाव इत्यादौ गुणेऽपि क्लृप्तमेवेति वाच्यम्। गुणगुण्यात्मकस्वरूपे [1]तथाकल्पनात्। न हि प्रत्येकस्य [2]स्वरूपस्य संबन्धत्वम्, किं तु मिलितस्येति भावः।

---

न्यायशिखामणिः

अनेकत्वे गौरवमेकत्वे लाघवमित्येव विवक्षितम्, तच्च नियतमित्याह—नानेकस्येति। नन्वक्लृप्तत्वाच्चेत्यनेन [3]गौरवे हेत्वन्तरमुक्तमिति प्रतिभाति, तथा सति क्लृप्तत्वेन लाघवमप्युपपादितं स्यात्। तच्चायुक्तम्। समवायस्वरूपस्यैवाक्लृप्तत्वादित्याशङ्क्य शङ्कान्तरनिरासाय तदित्याह—नन्विति।

जयदेवमिश्रैस्तु [4]एतन्मूलं विपरीतलाघवशङ्कानिरासपरतया व्याख्यातम्। तदाह—अत एवेति। विपरीतमिति। तथा च स्वरूपसंबन्धेनार्थान्तरमिति भावः।

नन्वेवं सकर्तृकत्वानुमानेऽप्युक्तविपरीतलाघवेन जीवैरर्थान्तरं दुर्वारम्। यदि च लाघवसहकृतधर्मिग्राहकमानादेवानेकधर्मविशिष्टधर्मिसिद्धेर्न [5]पृथग्(धर्मि)

---

1. ख. तथाप्यकल्पनात्
2. क. स्वरूपसंबन्धत्वम्
3. क. गौरवहेत्वन्तरम्
4. क. तन्मूलं
5. क. स्वधर्मकल्पनेति।

गतकार्यस्य अनुगतकारणनियम्यत्वाच्च । न तु स्वरूपसंबन्धः, तेषामननुगतत्वादनन्तत्वाच्च । न चोभयमप्यप्रयोजकम् । विशिष्टसाक्षात्कारस्य संबन्धाविषयत्वे तदजन्यत्वे वा गवाश्वादावपि विशिष्टबुद्धिप्रसङ्गात् ।

---

प्रकाशः

ननु धर्मिकल्पनात इति न्यायात् क्लृप्तानामेव गुणादिस्वरूपाणां संबन्धत्वमात्रकल्पने लाघवम् । समवायकल्पने च [1]तस्य संबन्धत्वमपि कल्प्यमित्युभयकल्पने गौरवम् । किं च प्रतीतेर्विषयनियमः सामग्र्यधीनो लाघवात् । अन्यथा विशेषणविशेष्यमात्र[2]विषयकत्वे लाघवात् [3]अविषयकत्वानुमाने सति [4]संबन्धाविषयकत्वमेव तत्र स्यादिति पूर्वास्वरसादाह—अथ वेति । अत्र च पक्षहेतुदृष्टान्तेषु बुद्धिपदं लौकिकप्रत्यक्षपरम् । तेन नानुमित्यादिकमादाय बाधव्यभिचारादिकमिति बोध्यम् । सत्यत्वमिति । तथा च भ्रमे न व्यभिचार इति भावः । लाघवादिति । अत एव क्षित्यादावेककर्तृकत्वसिद्धिरिति भावः ।

ननु 'धर्मिकल्पनात' इति न्यायात् कारणत्वमपि क्लृप्तानामेव गुणादिस्वरूपाणामस्त्वित्यत आह—अनुगतकार्यस्येति । गुणादिस्वरूपत्वं नानुगतमिति भावः ।

---

न्यायशिखामणिः

[धर्म]कल्पनेति मतम्, तदा प्रकृतेऽपि तुल्यमित्यपरितोषात् जयदेवोक्तमाह—किं चेति । नन्वत्र गुणविशिष्टानुमितेरपि पक्षान्तर्भावे बाधः, बहिर्भावे व्यभिचारः । तथा दण्डविशिष्टबुद्धिमात्रस्य दृष्टान्तत्वे परोक्षबुद्धौ साध्यवैकल्यमित्यत आह—अत्रेति ।

लौकिकेति । एतच्च न्यायमते । परमते त्वलौकिकप्रत्यक्षाभावेन व्यावर्त्याभावात् । [5]न च लौकिकत्वं संयोगाद्य(ज)न्यत्वमजन्यत्वम् । तच्च समवायसिद्धेः प्राक् पक्षे दुर्ग्रहमिति वाच्यम् । अलौकिकसंबन्धाजन्यत्वस्य तदर्थत्वात् । भ्रम

---

1. क. 'तस्य' नास्ति ।
2. क. °विषयत्वे
3. क. सविषयत्वानु-
4. क. संबन्धाविषयत्व-
5. ग. 'न च लौकिकत्वं....भ्रम इति' इति ग्रन्थस्त्रुटितः ।

प्रकाशः

नन्वत्राभावादिविशिष्टबुद्धिव्यावृत्तमनुगतं न कार्यतावच्छेदकमस्ति, येन तदवच्छिन्ने समवायोऽनुगतो हेतुः सिध्येत्। तद्धि न विशिष्टप्रत्यक्षत्वम्, अतिप्रसङ्गात्। नापि समवायरूपसंबन्धविषयकविशिष्टप्रत्यक्षत्वम्। तस्यानुमानप्रवृत्तिपूर्वमसिद्धत्वेन तत्प्रतिसन्धानाधीनाया अनुगतकारणत्वेन समवायसिद्धेरसंभवात्। नापि गुणादिविशिष्टप्रत्यक्ष[त्व]मेव, अननुगतत्वात्। न चाननुगतस्यापि जन्यतावच्छेदकत्वात् [1]गुणादिविशिष्टप्रत्यक्षत्वादिकं [2]प्रत्येकमेव तथास्तु। तथा सति गुणत्वादिना अननुगतेन [3]तेषामेव क्लृप्तानां हेतुत्वसंभवे तदसिद्धिप्रसङ्गादिति चेत्—

अत्र वदन्ति। अस्ति हि [4]युतसिद्धसंबन्धिद्वयविषयाणां दण्ड्यादिबुद्धीनामिवायुतसिद्धसंबन्धिद्वयगोचराणामवयविगुणक्रियाजातिविशिष्टबुद्धीनामन्योन्यं साजात्यं अन्यविशिष्टबुद्धितो वैलक्षण्यं किमप्यनुभवसाक्षिकम्। तच्च प्रकारान्तरेण दुर्वचमपि स्फुटतरविवेकप्रकाशरहितसंबन्धिद्वयगोचरविशिष्टबुद्धित्वरूपतया सुवचमेव। एवं च दण्ड्यादिप्रत्यक्षं प्रति संयोग इव तदवच्छिन्नगुणादिविशिष्टप्रत्यक्ष-

---

न्यायशिखामणिः

इति। न च प्रयोजनाभावेनांशविवक्षानवश्यंभावाद्भ्रमेऽपि धर्म्यंशमादाय साध्यमस्त्येवेति वाच्यम्। प्रमुष्ट[5]तत्ताकायथार्थस्मरणोपजीविमानसभ्रमे व्यभिचारस्याभिप्रेतत्वात्। न च तस्यापि लौकिकत्वाभावादेव न व्यभिचार इति वाच्यम्। असंनिकृष्टमपि दोषाद्भासत इति मते भ्रममात्रस्य तथात्वादिति भावः।

ननु लाघवेनैवार्थान्तरवारणादनुगतेति[6] व्यर्थमित्याशङ्क्य तच्छङ्कान्तरनिरासायेत्याह—नन्विति। किं कार्यतावच्छेदकं जातिरुपाधिर्वा। नाद्यः, तत्र मानाभावादित्यभिप्रेत्य द्वितीयं निरस्यति—तद्धीति। जातिरित्युपाध्यायानां मतम्। तदाह—अत्रेति। तत्र प्रमाणमाह—अनुभवेति। मतान्तरमाह—तच्चेति। आद्येऽपि किं समवायविषयकत्वमयुतसिद्ध[7]संबन्धिद्वयविषयकत्वं वा।

---

1. क. गुणविशिष्ट-
2. ख. 'प्रत्येकं' इति नास्ति।
3. ख. दोषाणामेव
4. क. युतसिद्धि-
5. ग. ०तत्ताकयथार्थ
6. ग. ०दनुभवितेति
7. क. ०संबन्धद्वय-

प्रकाशः

लक्षणमनुगतकार्यं प्रति विषयतया अनुगतकारणत्वेन समवायः सिध्यति, गुणादीनामननुगतत्वान्न तैरन्यथासिद्धिरिति ।

तच्चिन्त्यम् । तद्धि वैलक्षण्यं विषयकृतं जातिकृतं वा[1] । नाद्यः, समवायसिद्धिं विना तस्य [2]निर्वक्तुमशक्यत्वात् । न चायुतसिद्धसंबन्धिद्वयरूपविषयकृतमेव तदस्तु । अयुतसिद्धत्वं हि न नित्यसंबन्धित्वम् । नित्यसंबन्धस्यैव हि समवायत्वेनापात[3]तस्तदनुमानात् प्राक् तदसिद्धेः । नापि स्फुटतर[4]विवेकप्रकाशरहितत्वम्, घटाभावभूतलादेरपि तथात्वेन व्यभिचारापत्तेः । क्वचित्संयोगिनोरपि तथात्वाच्च । [5]न द्वितीयः, स्मृतित्वानुमितित्वादिना संकरापत्तेः । न च [6]प्रत्यक्षत्वव्याप्यमेव तथेति वाच्यम् । तादृशजातौ मानाभावात् विनिगमकाभावाद्युतायुत[7]सिद्धसंबन्धिविषयकसमूहालम्बनवृत्तितया अव्याप्यवृत्तित्वापत्तेः । तत्रापि चाक्षुषत्वादिना संकरापत्तेश्चेति[8] ।

---

न्यायशिखामणिः

तत्राद्यं निराकृत्य द्वितीयमाशङ्क्य [9]निराकरोति — न चेति । अयुतसिद्धशब्दस्यार्थान्तरं शङ्कते—नापीति । यदि भावत्वं विशेषणं तदाह—क्वचिदिति । [10]संयोगिनोरिति । सुवर्णपार्थिवभागयोरिति शेषः । अन्त्येऽपि सा जातिः किं गुणादिविशिष्टज्ञानमात्रवृत्तिः, उत तत्प्रत्यक्षवृत्तिः । तत्राद्यं निराकृत्य द्वितीयमाशङ्क्य निषेधति—न चेति । नन्वियं जातिरभावप्रत्यक्षे कथं नापादिता । यदि चानुभवाभावान्न तत्रैषा जातिस्तदा समूहालम्बनेऽपि तदभावात्सा नेति तुल्यमित्यनुशयादाह—तत्रापीति । प्रत्यक्षत्वव्याप्यापि सा जातिश्चक्षुर्जन्यतावच्छेदकजातिं विना रसादिप्रत्यक्षे, तां विना तदवच्छेदकजातिरभावप्रत्यक्षे, तदुभयं च रूपादिप्रत्यक्षे वर्तत इति संकर इत्यर्थः ।

---

1. ख. 'वा' इत्यनन्तरं 'स्वरूपं वा' इत्यधिकपाठः ।
2. क. वक्तुम्
3. क. 'तदनुमानात् प्राक्' इति नास्ति ।
4. ख. 'विवेक' नास्ति ।
5. क. नान्त्यः
6. ख. प्रत्यक्षत्वमेव तत्रेति ।
7. क. 'सिद्ध' नास्ति ।
8. क. 'चेति' इति नास्ति ।
9. ग. निरस्यति
10. ग. संयोगयोरिति ।

## प्रकाशः

अस्तु वा तथा, तथापि न तादृशबुद्धित्वं कार्यतावच्छेदकम्, अतिप्रसङ्गादिति तादृशविशिष्टप्रत्यक्षत्वं तथा वाच्यम्। तच्च न तादृशानुमितित्वादिवत्, तस्यापि तादृशकार्यतावच्छेदकत्वे मानाभावात्। भावे वा अयुतसिद्धविशेषणत्वेन तादृशसंबन्धित्वेन वा अनुगतीकृतानां गुणादीनामेव हेतुत्वमस्तु, किं समवायेन। यदि चायुतसिद्धत्वं समवायबहिर्भावेन निर्वक्तुमशक्यम्, तदा तवापि तुल्यम्।

किं च तादृश्यपि कार्ये तस्य हेतुत्वं विषयत्वेन समवायत्वेन वा। आद्ये गुणादिरूपाणामेव तथा [1]हेतुत्वमस्तु। अन्त्येऽपि समवायत्वं नित्यसंबन्धत्वम्। तथा च लाघवेन संबन्धत्वेनैव हेतुत्वमस्तु। तच्च स्वरूपसंबन्धसाधारणमिति तेनानुगतीकृतानां गुणादीनामेव हेतुत्वमस्तु। अवच्छेदकलाघवेन व्यक्तिगौरवस्य [2]अदोषत्वात्।

---

## न्यायशिखामणिः

ननु मा भूज्जातिः अयुतसिद्धासंयुक्तभावद्वयविशिष्टबुद्धित्वं तदिति निर्वचनसंभवादुपाधिरेवेत्यत आह—अस्तु वेति। उपाधिरित्यर्थः। किं [3]तत्र ज्ञानत्वं घटकं प्रत्यक्षत्वं वा। तत्राद्यं निराकृत्य द्वितीयं दूषयति—तादृशेति। बाधकं विना कार्यमात्रवृत्तित्वं तत्र [4]मानमित्यत आह—भावे वेति। स्फुटतरविवेकप्रकाशराहित्यमयुतसिद्धत्वमिति तदनन्तर्भावेणापि निरुक्तिः संभवतीति अस्वरसं [5]सूचयति—यदीति। अत एव दोषान्तरमाह—किं चेति। तादृशेति। संयोगादिसाधारणेत्यर्थः।

ननु सामान्यकारणे सामान्यकार्यतावच्छेदकं विशेषकारणे विशेष इति सर्वतान्त्रिकव्यवस्थितिः। तथा च संबन्धत्वावच्छिन्नसामान्यकारणे तादृशविशिष्टप्रत्यक्षत्वं कथं तथा स्यात्। किं च कार्यतावच्छेदके अयुतसिद्धेत्यादिविशेषणं

---

1. ख. कारणत्वमस्तु।
2. क. लघुत्वात्
3. क. 'तत्र' नास्ति।
4. क. मानमत आह
5. क. सूचयतीति।

**प्रकाशः**

न च तादृशसंबन्धत्वमेव दुर्वचम्, तवापि तुल्यत्वात्। अग्रे निर्वक्तव्यत्वाच्च। अन्यथा अनुगतव्यापकत्वावच्छेदकत्वानुपपत्तेः। न चातिप्रसङ्गः, अयुतसिद्धसंबन्धिरूपविशेषसामग्रीविरहादेव कार्याभावोपपत्तेः।

वस्तुतस्तु लाघवात् सत्यलौकिकविषयविशिष्टप्रत्यक्षत्वमेव कार्यतावच्छेदकम्। [1]विशेषणसंबन्धत्वं [2]संबन्धत्वमेव वा हेतुतावच्छेदकम्। एतत्कार्यकारणभावादेव नात्राप्रयोजकत्वमित्यनुपदमेव स्फुटम्। न च यत्सामान्ये यत्सामान्यमिति न्यायात् [3]विशेषयोरपि तथात्वम्। तर्हि तद्विशिष्टप्रत्यक्षे तद्विशेषणसंबन्धत्वेन[4] हेतुतास्तु, न तु तेन रूपेण, अनन्तसामग्रीकल्पनापत्तेः कार्यस्यान्यथोपपत्तेश्च।

एतेन संयोगसंबन्धाविषयकभावमात्रविषयकलौकिकविशिष्टप्रत्यक्षत्वमनुगतकारणनिरूप्यमिति तत्सिद्धिरित्यपास्तम्।

अन्ये तु - गुणादिविशिष्टबुद्धयो विशेषणसंबन्धविषया इत्येव साध्यम्। विशिष्टबुद्धित्वादित्येव हेतुः। न च स्वरूपसंबन्धेनार्थान्तरम्। इदानीं स्वरूपसंबन्धस्याक्लृप्तत्वात्। [5]अभावज्ञानसाधारणसमवायसिद्धौ हि क्रमेण बाधकात्तदंशे

---

**न्यायशिखामणिः**

न युक्तम्, गौरवात्। प्रत्युत विशेषसामग्री [6]न कल्पनीयेत्यपरमप्यनुकूलम्। संयोगस्थलेऽप्युक्तविशेषणाघटितसत्त्वविशिष्टप्रत्यक्षत्वावच्छिन्नकार्योत्पत्तेरेवातिप्रसङ्गाभावादित्यस्वरसादाह—वस्तुत इति। इदं चावश्यं वाच्यमित्याह—एतदिति। विशेषयोरपीति। तथा च दण्ड्यादिप्रत्यक्षे संयोगः गुणादिप्रत्यक्षे समवायस्तत्त्वेन हेतुरित्याशयः।

एतेनेति। एतन्मते नित्यसंबन्धत्वं कारणतावच्छेदकं वाच्यम्। तथा च गौरवात् कार्यतावच्छेदकं कारणतावच्छेदकं च न युक्तमित्यर्थः। जयदेवमतमाह—अन्ये त्विति। इत्येवेति। न त्वतिरिक्तत्वं साध्ये संबन्धविशेषणम्। हेतौ

---

1. क. विशेषसंबन्धत्वं
2. ख. 'संबन्धत्वमेव वा' इति नास्ति।
3. क. विषययोरपि
4. क. °संबन्धेन
5. ख. ज्ञानाभावादिसाधारण-
6. क. 'न' नास्ति

नव्यास्तु—गुणक्रियाजातिविशिष्टबुद्धिः संबन्धिभिन्नविशेषणसंबन्ध-विषया निर्विषयकभावविशेषणकविशिष्टबुद्धित्वात्

---

### प्रकाशः

[1]समवायसंबन्धबाधोत्तरं तत्कल्पनात् । न चैवं तत्र व्यभिचारादेव नानुमितिः [2]वास्तवव्यभिचारस्यानुमित्यदूषकत्वात् तत्प्रतिसन्धानस्यापाततः समवायसंदेहे [3]सतीति पक्षसंभवादिति समवायसाधनमप्रत्यूहमेवेति वदन्ति ।

तदपि चिन्त्यम् । अक्लृप्ततया सिद्धसाधनस्यानवकाशत्वेऽप्यर्थान्तरस्य दुरपह्नवत्वात् । [4]समवायस्वरूपं संबन्धत्वं चाक्लृप्तमेवात्र कल्पनीयम् । एवं च पूर्वोक्तलाघवेन गुणादिस्वरूपाणामेव संबन्धत्वमात्रकल्पनात् । अन्यथा अभावादि-स्थले स्वरूपसंबन्धस्य क्लृप्तत्वेऽप्यर्थान्तरानवकाशः । गुणादिस्वरूपाणां [5]तथा-त्वस्य क्लृप्तत्वात् । एवं चोक्तन्यायेनाभावादिस्थले संयोगमात्रबाधे प्रागपि स्वरूप-संबन्धकल्पनासंभवात् समवायबाधोत्तरमेव तत्कल्पनमित्यप्ययुक्तमेव ।

---

### न्यायशिखामणिः

च सत्यत्वादि न विशेषणम्, व्यावर्तनीयस्थले सर्वत्र साध्यसत्त्वादिति [6]भावः । इदानीमिति । इह संयोगः संयुक्ताविमावितिवत् [7]समवायस्वरूपयोः संबन्धयोः [8]प्रत्यक्षाभावादुभयमपि कल्पनास्पदम् । तथा च [9]समवायासिद्धिदशायां स्वरूप-संबन्धो न क्लृप्त इति भावः ।

ननु गौरवेणार्थान्तरनिरास इत्याशङ्क्य विपरीतं तदित्याह—समवायेति ।

न केवलमर्थान्तरम्, किं तु तद्भिया स्वरूपसंबन्धाक्लृप्तत्वोक्तिर्वा, सापि न युक्तेत्याह—अन्यथेति । किञ्चाभावादिस्थले संमवायबाधोत्तरमेव [10]स्वरूप-संबन्धकल्पनमित्युक्तिरपि न युक्तेत्याह—एवं चेति । स्वयमुक्तापरितोषान्मता-

---

1. क. समबाधोत्तरं
2. क. वास्तवव्यभिचारस्यासत्त्वात्
3. क. पक्षवदसंभवादिति
4. ख. समवायस्वरूपं तस्य संबन्धत्वम्
5. क. तत्त्वस्याक्लृप्तत्वात्
6. ग. 'भावः' नास्ति ।
7. ग. समवायस्वरूपसंबन्धयोः
8. ग. प्रत्यक्षानुभवाभावात्
9. ग. समवायसिद्धि-
10. क. तत्कल्पनमिति युक्तिरपि

**प्रकाशः**

अत एवापरितोषाद्यत्रार्थान्तरशङ्का[1] नास्ति तादृशं मतान्तरमवतारयति—नव्यास्त्वति । यद्यप्युक्तलाघवादरे वृथा विशेषणोपादानप्रयासः, तदनादरे त्वप्रयोजकत्वमपि[2] । तथापि निरुपाधिकत्वमेव विपक्षबाधकमित्यग्रे स्फुटम् । अपि च समवायिकारणनाशस्य कार्यनाशहेतुत्वम् । तत्र च यदि स्वरूपसंबन्धेनान्यथासिद्धिः तदा आश्रयनाशाविशेषात् ध्वंसोऽपि नश्येत् । समवायिकारणव्यवस्था चैवं न स्यात् ।

अत एव यदि संबन्धिभिन्नत्वविशेषणात् समवायसिद्धिः, तदा एतदुत्तरं तेनैव हेतुना तद्भिन्नत्वविशेषणा[3]( दन्योन्य ) [ दन्यान्य ] संबन्धसिद्ध्यापत्तिरिति परास्तम् । तत्र विपक्षबाधकाभावादिति दिक् ।

---

**न्यायशिखामणिः**

न्तरावतार इत्याह–अत एवेति । नव्यमत [4]एवास्वरसान्तरमिति जयदेवमतम् । तदनूद्य दूषयति—यद्यपीति । ननु तर्काभावे तत्र पक्षेतरत्वमेवोपाधिः स्यादित्यतस्तर्कान्तरमाह—अपि चेति । [5]समवायीति । नन्वस्य भावकार्यनाशमात्रे न हेतुत्वम् । द्व्यणुकादिविनाशे शब्दबुद्धिकर्मद्वित्वसंयोगादिनाशे च व्यभिचारादिति चेत्—न । न हि सर्वत्रायं हेतुरिति ग्रन्थार्थः । किं तु [6]क्वचित् समवायिकारणनाशो हेतुः स च तदनभ्युपगतौ न स्यादित्यत्र तात्पर्यात् ।

किं च तदनभ्युपगमे भावकार्यं कारणत्रयजन्यमिति व्यवस्था न स्यात्, समवाय्यसमवायिकारणयोस्तद्गर्भत्वादित्याह—समवायीति । एतदुभयमप्यापाततः । परेण कारणत्रयव्यवस्थायाः क्वचिदपि समवायिनाशहेतुत्वस्य चानङ्गीकारेणानिष्टप्रसङ्गाभावात् । वस्तुतस्तु—नव्यमते लाघवादरेऽपि न संबन्धिभिन्नेति व्यर्थम् । यन्मते अनुमितेर्व्यापकतावच्छेदक[7]मात्रप्रकारकत्वम्, तन्मते [8]संबन्धिभिन्नप्रकारकतत्सिद्धये तदुपादानमिति तात्पर्योन्नयनात् । तदेतदभिसन्धायाह—दिगिति ।

---

1. ख. यत्र नार्थान्तरशङ्का
2. ख. त्वमिति ।
3. क. दन्यान्य-
4. ग. एवास्वरसाविष्कार इति
5. क. 'समवायीति' इति नास्ति ।
6. क. 'क्वचित्.........व्यवस्था न स्यात्' इति ग्रन्थस्त्रुटितः
7. ग. 'मात्र' नास्ति ।
8. ग. संबन्धिभिन्नत्व-

प्रकाशः

निर्विषयेति। ननु भूतले घटाभाव इत्यभावविशेष्यके घटे ज्ञानमिति ज्ञानविशेष्यके च ज्ञाने व्यभिचारः। न च [1]निर्विषयकभावमात्रविषयकबुद्धित्वादित्यर्थो विवक्षित इति वाच्यम्। इदानीमाकाशे वीणायां शब्द इत्यादौ व्यभिचारादिति चेत्—न। तन्मात्रविषयकलौकिकप्रत्यक्षत्वस्य विवक्षितत्वात्। पक्षसंकोचाच्च न भागासिद्धिः।

न चैवं निर्विषयेति व्यर्थम्। विद्यमानप्रतीतिमादाय आत्मा ज्ञात इति ज्ञाने यत्र दोषान्न समवायो भासते, किंतु विषयविषयिभावः तत्र व्यभिचारवारणार्थत्वादित्याहुः।

न चैवमपि समवायविशिष्टबुद्धावेव व्यभिचार इति वाच्यम्। समवायासिद्धिदशायां तत्प्रतिसन्धानाभावात्। न च व्यभिचारिलिङ्गजन्यत्वे अनुमितेर्भ्रमत्वापत्तिः। विषयाबाधेन यथार्थत्वात्।

---

न्यायशिखामणिः

ननु निर्विषयभावविशेषणाभ्यां घटो ज्ञातो घटाभाववद्भूतलमित्यादिज्ञाने [2]व्यभिचारवारणेऽपि तद्विशेष्यकबुद्धौ स दुर्वार इत्याशङ्कते—नन्विति। विशेषणत्वं विषयत्वम्। मात्रपददानाच्च न व्यभिचार इत्याह—[3]न तन्मात्रेति। अत्र सविषयाभावाविषयत्वे सति निर्विषयभावविषयत्वं तन्मात्रविषयत्वम्। [4]तत्र विशिष्ट न विवक्षितम्। किं तु सविषयाभावाविषयत्वम्, तन्मात्रस्यैव व्यभिचारवारकत्वादिति बोध्यम्। ननु रूपी घटो [5]ज्ञात इत्यत्र हेत्वसिद्धिरित्यत आह—पक्षेति। एवमिति। लौकिकत्वविशेषणोपादान इत्यर्थः। समवायविशिष्टेति। न च रूपसमवायवान् घट इति ज्ञाने [6]संबन्धिघटभिन्नसमवायमादाय साध्यसत्त्वान्न व्यभिचार इति वाच्यम्। प्रकृतज्ञानविशेषणविशेष्यभिन्नत्वस्य संबन्धिभिन्नशब्दार्थत्वात्। अन्यथा गुणादेरपि यत्किंचित्संबन्धिभिन्नत्वेनार्थान्तरतादव-

---

1. क. निर्विषयकविशिष्टबुद्धित्वात्
2. क. अव्यभिचारेऽपि
3. ग. न चेति।
4. क. 'तत्र विशिष्टं……सविषयमावाविषयत्वम्' इति ग्रन्थस्त्रुटितः।
5. क. ज्ञातव्यः
6. ग. संबन्धिभिन्नघट।

इतरनिरूपणानिरूप्यविशेषणकविशिष्टबुद्धित्वाद्वा। अतोऽभावादिविशिष्टबुद्धौ न व्यभिचारः। न चाप्रयोजकम्, निरुपाधिसंबन्धशालित्वात्। संबन्धश्चाविशिष्टव्यावृत्तविशिष्टधीनियामकः।

---

प्रकाशः

वस्तुतस्तु समवायत्वमादायालौकिकत्वात् समवायत्वस्याभावघटितत्वाच्च हेतोरेव तत्रागमनान्न व्यभिचारः। न चैवमसिद्धिः। तत्र वैशिष्ट्यविषया स्वरूपेणैव तद्भानात्। अत एव संबन्धिभिन्नः सन् क्वचिदपि यो विशेषणसंबन्धो भवति तद्विषयत्वं साध्यम्। तच्च समवायविशिष्टबुद्धावस्त्येव। गुणादिस्थले संबन्धिभिन्नस्यैव समवायस्य विशेषणसंबन्धरूपत्वादिति समाधानमनादरणीयम्।

इतरनिरूपणेति। इतरनिरूपणानिरूप्यमात्र[1]विशेषणविशेष्यकलौकिकप्रत्यक्षत्वादित्यर्थः। समवायस्येतरनिरूप्यत्वान्न तद्विशिष्टबुद्धौ व्यभिचारः। न वा पक्षीभूतबुद्धौ समवायविषयत्वेऽपि हेत्वसिद्धिरिति भावः। ननु संयोगादौ संबन्धत्वस्यैकस्याभावात् तत्पुरस्कारेण कथं व्याप्तिग्रह इत्यत आह —संबन्धश्चेति। न च संबन्धपर्यायत्वाद्विशिष्टपदस्यात्माश्रय इति वाच्यम्। व्यावृत्तधीकारणज्ञानासाधारणविषयत्वं संबन्धत्वमित्यस्य विवक्षितत्वादिति वदन्ति।

तच्चिन्त्यम्। प्रमेयत्वादिसंबन्धेऽव्याप्तेः। न हि तद्विषया धीर्व्यावृत्तधीहेतुः।

---

न्यायशिखामणिः

स्थ्यात्। उपाध्यायमतमाह—अत एवेति। हेत्वभावादेव व्यभिचारवारणादित्यर्थः।

समाधानमिति। एतच्चापाततः। यत्र वैशिष्ट्यविषया [2]समवायभानानन्तरं तद्विशिष्टप्रतीतिः, तत्र समवायत्वस्यानुपस्थितत्वेनाभानादलौकिकत्वाभावेन हेतुसत्त्वात्।

---

1. ख. ०विशेष्यविशेषणक-

2. क. 'समवाय' नास्ति।

यद्वा इन्द्रियप्रत्यासत्तित्वेन समवायसिद्धिः। तथा हि गुणक्रियाजातिसाक्षात्कारः इन्द्रियसंबन्धसाध्यः जन्यप्रत्यक्षत्वात् दण्डिज्ञानवदित्यतः साक्षात्संबन्धबाधकारणत्वेन इन्द्रियसंयुक्ते संबन्धः सिध्यन् पक्षधर्मताबललाघवेनानुगतः समवाय एक एव सिध्यति, अनुगतकार्यस्यानुगतकारण-

---

प्रकाशः

अन्ये तु [1]अविशिष्टपदमविशिष्टधीपरम्। अविशिष्टपदस्यासंबद्धवचनस्य यथाश्रुतेऽन्योन्याश्रयप्रासात्। अविशिष्टधियस्तु [2]विशेषणत्वागोचरबुद्धित्वेन सुवचत्वात्। तद्व्यावृत्तत्वं च तदजनकत्वम्। नियामकत्वं तु तज्जनकत्वम्। तथा चाविशिष्टबुद्ध्यजनकत्वे सति विशिष्टबुद्धिजनकत्वं संबन्धत्वमित्याहुः।

तदपि चिन्त्यम्। अतीन्द्रियसंयोगे स्वरूपसंबन्धे चाव्याप्तेः। [3]तद्विषयकबुद्धेरनुमित्यादिरूपतया विषयाजन्यत्वात्। कालादेरपि स्वरूपसंबन्धतया तत्राव्याप्तश्च। तस्य कार्यमात्रजनकतया अविशिष्टबुद्धेरपि जनकत्वात्। तस्माद्विशेषणधीजन्यज्ञानासाधारणविषयत्वं तत्त्वमिति बोध्यम्।

---

न्यायशिखामणिः

उपाध्यायमतं निराकृत्य जयदेवमतमाह—अन्ये त्विति। [4]ननु विशिष्टबुद्धिजनकत्वं तदवच्छेदकावच्छिन्नत्वम्। तच्च [5]संयोगादित्यतीन्द्रियसंबन्धे नाव्याप्तिरिति यदि [6]ब्रूयात् तदा आह—कालादेरपीति। स्वमतमाह—तस्मादिति।

अत्रेदं चिन्त्यम्—विशेषणज्ञानमपि भासमानवैशिष्ट्यप्रतियोगिज्ञानमित्यन्योन्याश्रयः। तथापि निरुक्तं संबन्धत्वं जन्यत्वघटितम्, तच्च संबन्धघटितनियमगर्भमित्यात्माश्रयः[7]। ततश्च दुर्वचं संबन्धत्वम्। तस्मात् [8]भावत्वादिवत् संबन्धत्वस्योपाधित्वेऽपि [9]निर्वचनापेक्षेति समाधानमत्र द्रष्टव्यम्।

---

1. क. अवशिष्टपदमवशिष्ट-
2. क. विशेषत्वा-
3. क. तद्विषयकत्वबुद्धेः
4. क. 'ननु'नास्ति।
5. क. संयोगत्वातीन्द्रिय-
6. क. ब्रूयाः
7. ग. अन्योन्याश्रयः
8. ग. अभावत्वादिवत्
9. ग. न निर्वचना-

जन्यत्वात् । न तु संयुक्तविशेषणतारूपस्वरूपसंबन्धः, तस्य च तत्तद्रूपादि-रूपत्वेनाननुगतत्वात् ।

एवं रूपत्वरसत्वसाक्षात्कारेऽपि कारणत्वेनेन्द्रियसंबन्धः समवाय एवानुगतः सिध्यति लाघवात् । न तु इन्द्रियसंबद्धविशेषणता, तस्या रूपत्वादिस्वरूपत्वेनाननुगतत्वात् ।

अत एव संयोगो विशेषणता च प्रत्यासत्तिरस्तु, न तु समवायादि-चतुष्टयमिति निरस्तम् । तस्यास्तत्तत्स्वरूपत्वेनाननुगतत्वात् । प्रत्यासत्ति-त्वेनाभ्युपगते च समवाये प्रत्यक्षता संबन्धिद्वयप्रत्यक्षत्वात् ।

---

**प्रकाशः**

उक्तलाघवसहकारेण वैशेषिकानुमानमपि सम्यगेवेति तदुपन्यस्यति—**यद्वेति** । उक्तरीत्या अत्रापि स्वरूपसंबन्धेनार्थान्तरमिति चिन्त्यम् । **संबन्धिद्वयेति** । एकेन्द्रियप्रत्यक्षसंबन्धि[1]द्वयविषयकत्वादित्यर्थः । तेन न वैयधिकरण्यम्, न च वा शरीरात्मसंयोगे व्यभिचारः ।

यद्यपि [2]सत्तागुणत्वादेस्तद्वाचकशब्दस्य च श्रोत्रग्राह्यत्वेऽपि [3]तद्वाच्य-वाचकसंबन्धस्याप्रत्यक्षत्वाद्व्यभिचारः । तथापि [4]तदतिरिक्ते नियमोऽयं बाध्यः ।

---

**न्यायशिखामणिः**

पदव्यत्यासस्य प्रयोजनमुक्त्वा एकेन्द्रियेत्यस्य [5]प्रयोजनमाह—**न चेति** ।

वाच्यवाचकसंबन्धातिरिक्तत्वं हेतुविशेषणमिति नोक्तदोष इत्याह—**तथापीति** । एकस्यैव [6]प्रत्यक्षाप्रत्यक्षविरोधान्न क्वचिदप्यस्य तथात्वमित्याह—**न चेति** । यद्यप्यप्रत्यक्षत्वेऽपि न वैशेषिकानुमाने दोषः; तथापि व्यवहितोक्तानु-मानेषु बाधासिद्धिशङ्कापरमेतदिति ध्येयम् । घटपरमाण्ववच्छेदकभेदेन प्रत्यक्ष-योग्यत्वायोग्यत्वे न विरुद्धे इत्याह—**अवच्छेदकेति** । ननु योग्यत्वं सार्वत्रिकमेव । परं तु एकस्य फलोपधानानुपधानमवच्छेदकभेदेन । अत एव दण्डस्य योग्यस्यैव

---

1. क. ॰द्वयकत्वादित्यर्थः
2. ख. 'सत्ता' इति नास्ति ।
3. ख. तद्वाचक-
4. क. तदतिरिक्तनियमो
5. ग. तदाह
6. क. प्रत्यक्षविरोधात्

नन्वेवमभावविशिष्टप्रत्यक्षेऽपि विशिष्टबुद्धित्वात् संयोगसमवाय-बाधेऽनुगतं वैशिष्ट्यं संबन्धो विषयः निमित्तं च भवेदिति चेत्—

न । तस्य हि समवायवदेकत्वे घटाभाववति पटवति पटाभावधी-प्रसङ्गः । घटाभाववैशिष्ट्यमेव हि पटाभाववैशिष्ट्यम् । पटाभाववैशिष्ट्यसत्त्वेऽपि पटाभावो नास्ति ततः तस्य भिन्नत्वादिति चेत्—न । पटाभावाभावस्या-भावत्वे सोऽपि वैशिष्ट्येन संबन्धेन तत्रास्ति, वैशिष्ट्यस्यैकत्वात् । पटा-भावाभावस्य भावत्वे च पट एव प्रतिबन्धको वाच्यः । एवं पटाभावः पटाभावधीहेतुः स्यात् । (पटाभावस्य) [पटाभावश्च] वैशिष्ट्येन संबन्धेन तत्रास्त्येव ।

---

प्रकाशः

न चैकस्य समवायस्य क्वचिद्योग्यत्वं क्वचिदयोग्यत्वमिति व्याहतमिति वाच्यम् । अवच्छेदकभेदेनाविरोधादित्येके । सर्वत्र योग्यत्वेऽपि तदिन्द्रियजसंबन्धिप्रत्यक्ष-रूपसहकारिविरहात् क्वचिदप्रत्यक्षत्वमित्यन्ये ।

प्रतिबन्द्या भाट्टः प्रत्यवतिष्ठते—नन्विति । प्रत्यक्षेऽपीति । पररीत्ये-दमुक्तम्, तन्मते अभावस्यानुपलब्धिगम्यत्वात् । पटाभावाभावस्येति । अभा-वात्मनः पटाभावाभावस्य वैशिष्ट्येन संबन्धेन स्वीकारात् सोऽपि पटाभावोऽपि तेन संबन्धेन तत्र त्वयापि स्वीकार्यः, वैशिष्ट्यस्यैकत्वाभ्युपगमादित्यर्थः ।

---

न्यायशिखामणिः

सतो गृहवनावच्छेदकभेदेन फलोपधानानुपधानमित्यस्वरसादाह—सर्वत्रेति । तदिन्द्रियेति । यदिन्द्रियेण ययोः संबन्धो गृह्यते तदिन्द्रियजन्यतत्संबन्धिद्वय-प्रत्यक्षं लौकिकतत्प्रत्यक्षे हेतुः । तेन शरीरात्मसंयोगे घटप्रत्यक्षमादाय परमाण्वादि-समवाये वा नातिप्रसङ्गः । न चैवं वायोः स्पर्शसमवायस्याप्रत्यक्षतापत्तौ तत्प्रत्यक्षस्य वैशिष्ट्याविषयत्वेन निर्विकल्पकत्वापत्तिः । स्पर्शत्वजातिमादाय सविकल्पकत्वोप-पत्तेः । न चैवं विशेषणज्ञानजन्यघटादिप्रत्यक्षे व्यभिचार इति वाच्यम् । तत्रापि तत्पूर्वं संबन्धिप्रत्यक्षकल्पनात्तदनुरोधेन समवायविशिष्टप्रत्यक्षे तद्धेतुकल्पनाद्वा । वस्तुतस्तु संबन्धिद्वययोग्यत्वं समवायप्रत्यक्षे तन्त्रम्, न तु तत्प्रत्यक्षमिति नोक्त-दोषावकाश इति दिक् ।

**वैशिष्ट्यस्य प्रत्यभावव्यक्ति नानात्वे चाभावविशिष्टबुद्धौ नैकः संबन्धः कारणं विषयो वेति तदभावप्रत्यक्षेऽननुगतमेव वैशिष्ट्यं विषयः कारणं च वाच्यम् । तथा चाननुगततत्तत्स्वरूपरूपा विशेषणतैवास्तु क्लृप्त्वात् किमनन्तवैशिष्ट्येन । समवायस्य वैशिष्ट्यस्य च प्रत्यक्षत्वे त्वयापीन्द्रियसंबद्धविशेषणतास्वीकारात् ।**

---

**प्रकाशः**

यद्यपि घटाभाववतीत्युक्तत्वात् तत्सत्त्वेनैव पटाभावमङ्गीकारयितुं शक्यते । तथाप्येवमपि तन्निर्वहतीत्यदोषः ।

ननु समवायः परनये नाङ्गीक्रियत इत्यस्वरसादाह—**वैशिष्ट्यस्य चेति** । ननु यथा समवायस्यैकत्वात्तव वायौ रूपसमवायसत्त्वेऽपि न रूपाधिकरणत्वम्, किं तु रूपात्यन्ताभावाधिकरणत्वमेव अधिकरणस्वभावात्, तथा ममापि पटाभाववैशिष्ट्यसत्त्वेऽपि न पटाभावाधिकरणत्वम् । किं तु पटाभावात्यन्ताभावाधिकरणत्वमेव अधिकरणस्वभावादिति चेत्—तर्हि वायौ रूपाप्रतीतिवत् कदापि तत्र पटाभावधीर्न स्यात् अन्यथा [1]स्वभावभङ्गापत्तेः । न च कालस्वरूपावच्छेदकभेदेन घटे श्यामरक्तरूपाधिकरणस्वभाववदेतत् स्यादिति वाच्यम् । मम श्यामताद-

---

**न्यायशिखामणिः**

ननु नन्वित्यस्याभावेऽनुगतवैशिष्ट्यचोद्यपरत्वे समवायसाधने दूषणानुपन्यासेन प्रकृतासंगतिरित्यत आह—**प्रतिबन्द्येति** । ननु पटाभावाभावस्याभावात्मकत्वमेवोक्तं न तु तद्वैशिष्ट्यसत्त्वमपि । तथा च तावन्मात्रेण कथं पटाभाववैशिष्ट्यापादनमित्यत आह—**अभावात्मक इति** ।

उपाध्यायसमाधिमाह—**तर्हीति** । **अन्यथेति** । तस्यैव पटाभावाधिकरणत्व इत्यर्थः । **स्वभावेति** । स्वभावो हि यावद्द्रव्यभावी । तथा च तस्यैव कदाचिद्विरुद्धाधिकरणत्वे पटाभावात्यन्ताभावाधिकरणस्वभावः स्यादिति भावः ।

ननु स्वभावस्य न यावद्द्रव्यभावित्वनियमः कालभेदेन घटादौ विरुद्धस्वभावदर्शनादित्याशङ्क्य दृष्टान्तासिद्ध्या दूषयति—**न चेति** ।

---

1. ख. स्वविषयभङ्गापत्तेः

प्रकाशः

शायामपि घटस्य रक्तरूपाधिकरणस्वभावत्वाभ्युपगमात् । तर्हि तदापि तत्प्रतीतिः स्यादिति चेत्—न । उपनीतभानस्येष्टत्वात् । लौकिकप्रत्यक्षे विषयस्यापि हेतुत्वेन तदा तदभावादेव तदभावोपपत्तेः । न चैवं त्वयापि वक्तुं शक्यम् । पटोपनयात् पूर्वं तत्र वर्तमानस्य पटाभावस्य पटसत्त्वकालेऽपि सत्त्वात् तत्प्रतीतेर्दुर्वारत्वात् । न हि तदा सोऽन्यत्र गतः, अमूर्तत्वात् । नापि नष्टः, नित्यत्वात् । तस्मात् संबन्धाभावान्न प्रतीयत इत्येव तत्त्वम्, अनन्यगतिकत्वात् । तच्च तव मते न संभवति वैशिष्ट्यस्यैकत्वात् । मम तु तदानीं तयोर्विशिष्टप्रत्ययजननयोग्यत्वाभावान्न स्वरूपसंबन्धत्वमिति संबन्धाभावान्न प्रतीयत इति ।

ननु स तदा नष्ट एव, पटापसारणानन्तरं चान्य एवोत्पन्नो गृह्यते । तथा चोत्पादविनाशशील एव पटाभावस्तत्र च तदभावान्नोक्तदोष इति चेत्—न । (समवाय)[समय]विशेषसंसर्गिणस्तदत्यन्ताभावादेव तत्प्रतीत्युपपत्तौ तुरीयतादृशसंसर्गाभावकल्पने मानाभावात् ।

किं च तन्नाशः पट एव पटजन्योऽन्यो वा । नाद्यः, पटस्य [1]तदसत्त्वकालेपि स्थितत्वात् । नाश्यसमानकालस्य नाशत्वायोगात् । नान्त्यः, एवं सति गुणं प्रति विरोधिगुणान्तरस्येव पटस्य तद्विरोधित्वमात्रं पर्यवसन्नम्, न तु तद्विरहरूपत्वमिति तद्विरहरूपतया पटस्तद्विरहरूपतया च स न प्रतीयेत । तस्मात् क्वचित्तदभिधानमेकदेशिमतेनेति वदन्ति ।

[2]अत्रेदं चिन्त्यम्—यथा त्वन्मते स्वरूपयोर्विशिष्टप्रत्यय[3]जननायोग्यतादशायां न संबन्धत्वम्, तथा वैशिष्ट्येप्यस्तु । तथा च पटसत्त्वकाले वैशिष्ट्य-

न्यायशिखामणिः

तर्हि पटवत्यापाद्यमाना तदभावविशिष्टप्रतीतिर्विषयाभावान्नेति साम्यमाशङ्क्य निराकरोति—न चैवमिति । ननु तथाप्यभावस्वरूपसत्त्वात् स्वरूपसंबन्धः स्यादित्याशङ्क्य तस्य पटसत्त्वदशायां न संबन्धात्मकतेत्याह—मम त्विपि ।

नरहरिसमाधानमाह—न समयविशेषेति ।

1. ख. तदभावसत्त्व-
2. क. तत्रेदं
3. ख. ०जननयोग्यता-

प्रकाशः

सत्त्वेऽपि न संबन्धत्वं तस्येति संबन्धाभावादेव न पटाभावधीः। अतिरिक्त-संबन्धे नैवं दृष्टमिति चेत्—किं वैशिष्ट्यमन्यत्र दृष्टम्। अभावविशिष्टप्रत्यया-न्यथानुपपत्त्या अन्यत्रादृष्टमेवात्रैव कल्प्यत इति चेत्—तर्हि कदाचिद्विशिष्टप्रती-त्यन्यथानुपपत्त्या तस्य संबन्धत्वमपि कादाचित्कमत्रैव कल्प्यताम्। ननु क्लृप्त-त्वात् स्वरूपयोरेव तथा संबन्धत्वं कल्प्यते न त्वतिरिक्तवैशिष्ट्यस्येति चेत्—तर्ह्यर्थान्तरान्न वैशिष्ट्यसिद्धिरित्येवोच्यताम्, किमतिप्रसङ्गाभिधानेन। तथैवास्त्विति चेत्—तर्हि समवायोऽपि न सिध्येत्। लाघवात् तत्सिद्धिः स्यादिति चेत्—तुल्यम्।

तस्माद्यथैकस्य [1]संबन्धत्वकल्पने लाघवं तथा कादाचित्कसंबन्धत्वकल्पनेऽपि इति न स्वरूपयोस्तथात्वं कल्प्यते किं तु वैशिष्ट्यस्यैव। तथा च यदि धर्मि-

---

न्यायशिखामणिः

बाधकादपि न तादृशाभाव इत्याह—किं चेति। नन्वेवं शक्तिवाद-विरोध इत्यत आह—तस्मादिति।

वैशिष्ट्यमिति। संयोगसमवायातिरिक्तमनुगतमिति शेषः। प्रतिबन्दीति। अत्रेदं चिन्त्यम्—किं (प्रत्यासत्त्यामेव)[प्रतिबन्द्यामेव]तात्पर्यम्, उत तन्मुखेना-प्रयोजकत्वे अर्थान्तरे वा। नाद्यः, तस्या अनुत्तरत्वात्। न द्वितीयः। अनुगतहे-त्वनङ्गीकारे अनुगतकार्याकस्मिकत्वप्रसङ्गस्य विपक्षबाधकत्वात्। नान्त्यः, एकत्वेन लाघवात् समवायस्यैवेन्द्रियसंबन्धजन्यत्वानुमितिविषयत्वात्। स्वरूपसंबन्धस्य तत्त-त्स्वरूपत्वेनानेकतया गुरुत्वात् धर्मिकल्पनालाघवेन चानुमितिविषयत्वे ईश्वरानु-मानेऽपि जीवैरर्थान्तरापत्तेः।

ननु यथाभावे वैशिष्ट्यानुमाने आवश्यकस्वरूपसंबन्धेनार्थान्तरं तथा तेनै-वात्राप्यर्थान्तरमित्यभिमतम्। ईश्वरानुमाने तु जीवकर्तृकत्वस्य क्षित्यादावनाव-श्यकत्वान्न तैरर्थान्तरम्। प्रकृते च स्वरूपसंबन्धस्यैव विशिष्टप्रत्यक्षे विषयतया कारणता दुर्वारेति वैषम्यमिति चेत्—तथापि तस्येन्द्रियप्रत्यासत्तित्वस्यानावश्यक-

---

1. क. संबन्धकल्पने

### प्रकाशः

कल्पनागौरवदोषः, तदा न समवायसिद्धिरपि । अन्यथा (वैशिष्ट्यसिद्धिरपीति) [वैशिष्ट्यमपीति] दुरुत्तरा प्रतिबन्दी ।

तस्माद्यदि विपक्षे बाधकान्तरावष्टम्भेन नव्यमतेन समवायसाधनं शक्यते तदैव परं तदुद्धारो नान्यथेति ।

यत्तु वैशिष्ट्याभ्युपगमेऽपि अवश्यं तत्र विशेषणतेति सैव सर्वत्रास्त्विति । तन्न । समवायेऽपि तुल्यत्वात् । फलमुखत्वादग्रे तत्र कल्पनागौरवं यदि, तदा प्रकृतेऽपि तुल्यम् ।

---

### न्यायशिखामणिः

त्वात् । अनुगतस्य च (समवाय)[समवायस्य]विषयत्ववदिन्द्रियप्रत्यासत्तित्वे बाधकाभावात् । एवं च विशेषणतयात्रार्थान्तराभावेन समवाय(सिद्धाभावेऽपि) [सिद्धावभावेऽपि] तदभावादनुगतं वैशिष्ट्यं इन्द्रियप्रत्यासत्तिजन्यत्वानुमानात् सिध्येदित्याशङ्का परमवशिष्यते । सा च प्रतिबन्दिमात्रत्वान्न प्रकृतानुमानदोष इति दिक् ।

**विपक्षे बाधकान्तरेति** । समवायिकारणव्यवस्थाभङ्गादित्यर्थः । परेण तद्व्यवस्थानभ्युपगमात् तद्भङ्गो नानिष्टप्रसङ्ग इति सूचयति—**यदीति** । **वैशिष्ट्येति** । अनुगतवैशिष्ट्याभ्युपगमेऽपि पटवति तदभावप्रसङ्गवारणायाननुगतकादाचित्कस्वरूपसंबन्धो विषयः कारणं चाभ्युपेयः । न चाननुगतस्य हेतुत्वे अनुगतप्रत्यक्षविशिष्टप्रत्यक्षरूपकार्याकस्मिकत्वापत्तिः । संबन्धस्यैवानुगतस्य कारणतावच्छेदकतया तत्तत्स्वरूपसंबन्धत्वस्यापुरस्करणीयत्वात् । तथा च स्वरूपसंबन्धेनार्थान्तरमिति वैषम्यमिति भावः । **तुल्यत्वादिति** । अयमाशयः—रूपी घट इति ज्ञानं प्रमा, वायू रूपीति ज्ञानमप्रमेति सर्वसिद्धम् । तच्च स्वरूपसंबन्धस्य विषयत्वे निर्वहति । अन्यथा वायावपि रूपसमवायसत्त्वेन तज्ज्ञानस्य प्रमात्वापत्तेः । यत्र यस्य यः संबन्धः तत्र तत्संबन्धपुरस्कारेण तज्ज्ञानं प्रमेति हि तल्लक्षणम् । न तु यत्र यदस्तीत्यादि । तथा सति घटे घटत्वमित्यादिज्ञानासंग्रहापत्तेः । प्रत्युत वायौ रूपाभावप्रतीतिरेवाप्रमा स्यात् । प्रतियोगिसंसर्गवति तदत्यन्ताभावायोगात् तद्धर्मतालक्षणस्वरूपसंबन्धाभ्युपगमे च वायौ तदभावेन तद्विषयकरूपज्ञानमप्रमा

प्रकाशः

अन्ये तु—यत एवाभावे समवायस्यानभ्युपगमः तत एव [1]वैशिष्ट्यस्यापि। अन्यथा ध्वंसनाशे घटोन्मज्जनापत्तेः। न च समवायिनाशस्य समवेतनाशहेतुत्वात् तत्र समवायाभ्युपगमे तदापत्तिर्दूषणं न तु वैशिष्ट्याभ्युपगम इति वाच्यम्। लाघवेन नित्यसंबन्धिकारणनाशत्वेनैव तद्धेतुत्वकल्पनात् न तु तद्विशेषसमवायिनाशत्वेन। किं च समवायत्वं न जातिरिति वैशिष्ट्यान्यनित्यसंबन्धत्वेन तन्निर्वाच्यम्। तथा च सुतरां तथा कारणत्वे गौरवमिति [2]नाभावे वैशिष्ट्यसिद्धिरिति वदन्ति।

तन्न। प्रामाणिकत्वेनास्य फलमुखस्य गौरवस्यादोषत्वात्। अन्यथा ध्वंसकारणमपि न सिध्येत्। लाघवेन कारणनाशस्यैव कार्यनाशकतया ध्वंसनाशे घटोन्मज्जनप्रसङ्गात्। एवं चान्यत्रापि निमित्तकारणं न सिध्येत् तन्नाशे तन्नाशा-

---

न्यायशिखामणिः

तत्संसर्गावच्छिन्नप्रतियोगिकविद्यमानतदभावज्ञानं प्रमेत्युभयमुपपन्नम्। तथा च तवापि स्वरूपसंबन्धस्यावश्यकत्वात् तेनार्थान्तरमिति दोषतौल्यमिति।

यदत्र समाधानं तदपि तुल्यमित्याह—फलेति। एतेन वशिष्ट्याभ्युपगमेऽपि विशेषणताया एव कारणत्वस्वीकारात् बाधादेव वैशिष्ट्यं न संबन्धजन्यत्वानुमाने विषय इति निरस्तम्। समवायेऽपि तुल्यत्वात्। उक्तरीत्या तत्रापि विशेषणताया एव कारणत्वात्।

जयदेवमतमाह—अन्ये त्विति। तत एवेत्येतद्विवृणोति—अन्यथेति। अभावेऽपि नित्यसंबन्धाभ्युपगमेऽपि ध्वंससंबन्धिकपालादिनाशे तस्यापि नाशः स्यात्। नित्यसंबन्धिकारणनाशस्य कार्यनाशहेतुत्वादित्याशयः। इममाशयमजानानस्य शङ्कां तदुद्घाटनेन निराकरोति—न चेति। सामान्यविशेषयोः सामान्यं लघीय इति हृदयम्। तदेवाविष्करोति—न तु तद्विशेषेति। स्वरूपतोऽपि लाघवमित्याह—किं चेति। तथेति। वैशिष्ट्यान्यनित्यसंबन्धिकारणनाशत्वेनेत्यर्थः। नरहरिमिश्रोक्तेन दूषयति—नेति। प्रामाणिकत्वमेव प्रतिबन्दिमुखेन

---

1. ख. 'वैशिष्ट्यस्यापि.......नित्यसंबन्धि-' इति ग्रन्थस्त्रुटितः।

2. ख. नात्र

ननु समवायस्यैकत्वे कथं रूपिनीरूपव्यवस्था। घटेन सह रूपसंबन्धरूपत्वं समवायस्य न वायुनेति चेत्—न। रूपसंबन्धरूपत्वं हि

---

**प्रकाशः**

पत्तेः। यदि निमित्तकारणनाशेऽपि कार्यस्य घटादेरनाशनिर्णयात् कारणे समवायित्वविशेषणं प्रामाणिकं तदा नित्यसंबन्धिकारणनाशेऽपि घटोन्मज्जनापत्तौ ध्वंसनाशानिर्णयात् वैशिष्ट्यान्यत्वविशेषणमपि प्रामाणिकमिति तुल्यम्।

भवेदेवं, यदि वैशिष्ट्यं प्रामाणिकं भवेदिति चेत्—न। तर्हि तत्र प्रमाणाभाव इत्यवोच्यताम्। किमनया कुसृष्ट्या। न च सोऽपि, विशिष्टबुद्धित्वस्यैव मानत्वात् उक्तगौरवस्य तदानीमनुपस्थितया एतदपरिपन्थित्वात्।

किं च द्रव्यत्वावच्छिन्नगुणत्वावच्छिन्नोभयनिरूपितसंबन्धत्वं गौरिति बुद्धिविषयसंबन्धत्वमित्यादिना यदि समवायत्वनिर्वचनं समवायिनाशत्वेन च तद्धेतुत्वं, तदा कथमुक्तदोषावकाशः। न च गौरवान्नित्यत्वं ध्वंसाप्रतियोगित्वम्,

---

**न्यायशिखामणिः**

द्रढयति—अन्यथेति। वैशिष्ट्यप्रामाणिकत्वे गौरवमपि तथा स्यात्, तदेवासिद्धमिति चोदयति—भवेदिति। ननु यद्यस्ति स्वरूपतो गौरवं तदा तदनुपस्थितिदशायां सिद्धमपि वैशिष्ट्यमग्रे तद्दर्शनात् कार्यान्वितशक्तिवत् त्यज्येतेत्यस्तु, तदेव नेत्याह—किं चेति। अत्र गुणाभावसंबन्धे संयोगे द्रव्यगुणनिरूपितजन्यजनकभावे[1] चातिव्याप्तिवारणाय द्रव्यत्वावच्छिन्नेत्यादि। न च रूपी घट इत्यत्र समवायस्य घटत्वावच्छिन्ननिरूप्यत्वात् कथमेतदिति वाच्यम्। द्रव्यं गुणवदिति [2]प्रमामादाय तत्संभवात्।

नन्विह द्रव्यगुणौ न स्त इत्यत्राभाववैशिष्ट्यस्य तदवच्छिन्नतदुभयनिरूप्यत्वात् तत्रातिव्याप्तिः। न च तदुभयमात्रनिरूप्यत्वं विवक्षितम्। द्रव्यगुणाभाववैशिष्ट्यं [3]चाभावेनापि निरूप्यत इति नातिप्रसङ्ग इति वाच्यम्। सम-

---

1. ग. ॰भावेऽतिव्याप्ति-
2. ग. प्रतीतिमादाय
3. ग. च भावेनापि

समवायस्य स्वरूपमेव यदि, तदा रससंबन्धरूपत्वं न स्यात् तयोर्विरोधात्, अन्यच्च दुर्वचमिति चेत्—

उच्यते। वायौ रूपसमवायसत्त्वेऽपि रूपात्यन्ताभावोऽस्ति न घटे। कथमेवम्, अधिकरणस्वभावात् अबाधितरूपिनीरूपप्रतीतेश्च।

नन्वेवं ज्ञातो घट इति प्रतीतेः ज्ञाततापि स्यात् वर्तमाने बाधकाभावात्। अतीतानागतयोश्च तद्धीः भ्रान्तेति चेत्—न। अतीतानागतयोः ज्ञातताया अभावे व्यवहाराभावापत्तेः, तस्य ज्ञाततासाध्यत्वात्।

---

**प्रकाशः**

ध्वंसत्वं च जन्याभावत्वमिति तन्निर्वचने तुल्यत्वात्। एवमप्यत्यन्ताभावादौ [1]तदपवादकाभावाच्च। अत एव समवायबाधकमत्र नेति वक्ष्यते।

रूपसंबन्धत्वमित्यत्र विशेषणत्वपक्षे दोषमाह—रूपेति। उपलक्षणत्वे तु स एवातिप्रसङ्ग इत्याह—अन्यच्चेति इत्याहुः।

[2]केचित्तु तस्य रूपमात्रसंबन्धरूपत्वं वा रूपारूपसंबन्धरूपत्वं वा। आद्ये रूपेति। अन्त्ये—अन्यच्चेति। तथा सत्यतिप्रसङ्ग एवेति भाव इत्याहुः। अतीतेति। तथा च लिङ्गभ्रमादेव तत्र ज्ञानानुमानमिति भावः।

---

**न्यायशिखामणिः**

वायस्य व.र्मत्वावच्छिन्नेनापि निरूप्यत्वेनासंभवप्रसङ्गादित्यस्वरसादाह—गौरिति। अपि च नियतमेव गौरवं प्रमाणपरिपन्थीति[3] निरुक्तं च गौरवं न तथा। अत्यन्ताभावविशिष्टबुद्धिं पक्षीकृत्य वैशिष्ट्यसाधने तदभावादित्याह—एवमपीति। ननु रूपसंबन्धत्वस्य परिचायकत्वेन रूपसंबन्धत्वाविरोध इत्याशङ्क्य विशेषणत्वादिविकल्पपरतया जयदेवेन व्याख्यानम्, तदाह—रूपेति।

समवायस्य रूपसंबन्धत्वमित्यत्र समवायत्वमेव व्यावर्तकत्वेनोक्तम्, न तु रूपसंबन्धत्वम्। तस्य विधेयतया निर्देशात्। तथा च विकल्पानवकाश इत्य

---

1. ख. तदपवादकत्वाभावात्
2. ख. 'केचित्तु ..... भाव इत्याहुः' इति ग्रन्थो नास्ति।
3. ग. 'इति' नास्ति।

न च ज्ञातताज्ञानमेव व्यवहारहेतुः। गौरवात्। अतीतादौ ज्ञान-तद्विषयावेव ज्ञातताधीगोचराविति चेत्—तर्हि वर्तमाने तावेव तद्विषयौ। न ह्यतीतवर्तमानयोः ज्ञातताप्रतीत्योः विषयवैलक्षण्यमीक्षामहे।

---

प्रकाशः

गौरवादिति। विशेषणसंबन्धोऽपि हि स्वरूपसन्नेव विशिष्टधीहेतुः अन्यत्र तथा दर्शनादिति भावः। यद्यपि तत्र तद्धीर्भ्रान्ता इति नेदमुत्तरम्। तथापि तस्या भ्रमत्वे अतीतादौ [1]ज्ञातत्वाभावः स्यात्। तथा च व्यवहार-विरोधः। बाधानन्तरं न [2]ज्ञात इति व्यवहारापत्तेश्चेति भावः।

---

न्यायशिखामणिः

स्वरसात् मतान्तरमाह—केचित्त्विति। नन्वतिरिक्तज्ञातताविरहेऽपि यथा स्वरूपसंबन्धमादाय तत्प्रतीतिः तथा तद्व्यतिरिक्तसमवायाभावेऽपि रूपादिप्रत्यक्ष-मस्तु। अन्यथा वर्तमानस्थले ज्ञाततापत्तेरिति प्रतिबन्दीं नन्वेवमित्यत्राशङ्क्य अतीतादौ च तज्ज्ञानं भ्रम इत्युक्तमयुक्तम्। लिङ्गाभावेन तत्र ज्ञानानुमानं न स्यात् तद्भ्रमेण वा अनुमित्युपपादने साध्यप्रमा स्यादित्यत आह—तथा चेति। लिङ्गेति। तथा च कूटलिङ्ग[3]जन्यानुमितिवद्विषयाबाधात् प्रमेति भावः।

ननु ज्ञातताज्ञानस्य तद्विशिष्टज्ञानरूपव्यवहारे विशेषणज्ञानतया हेतुत्वात् गौरवं प्रामाणिकमित्यत आह—विशेषणेति। ननु सोऽपि सत्त्वविशिष्टप्रत्यक्ष एव हेतुः। प्रकृते च तज्ज्ञानं भ्रमः। [4]स च तदभावेऽपि स्यादित्याशङ्कते—यद्यपीति। एतदाशङ्कोत्तरत्वेनातीतानागतयोरिति मूलं योजयति—तथापीति। तथा च विषयाभावे [5]संवादिव्यवहारो न स्यादित्याह—तथा चेति। प्रत्युत विसंवादिव्यवहारो [6]न स्यात्। न चेष्टापत्तिरित्याह—बाधेति। तथा सति घटो न ज्ञात इति बाधकप्रत्ययः स्यात्। तत्राप्यनुमितौ तदनन्तरं तथा व्यव-हारोऽपि स्यादित्यर्थः। अत्रेष्टापत्तिमाशङ्क्याह—अत एवेति।

---

1. क. ज्ञातत्वाभावात् तथा च
2. क. ज्ञायत इति
3. ग. ०जानुमिति-
4. ग. न च
5. ग. विसंवादि-
6. ग. 'न' नास्ति।

ननु रूपघटयोर्न समवायः, किं तु अभेदः। दण्डी पुरुष इत्यत्र दण्डिपुरुषयोरिव नीलो घट इत्यत्रापि नीलघटयोरबाधिताभेदानुभवात्। नीलो घटः दण्डी पुरुष इति बुद्ध्योः विशेषणसंबन्धमात्रगोचरत्वे नीलो घट इतिवत् दण्डः पुरुषः, दण्डी पुरुष इतिवत् नीली घट इत्यपि स्यात्। तस्मादेकत्राभेदो विषयः अपरत्र विशेषणसंबन्धः, विषयेणैव धियां विशेषात्।

अथवा विशेषणताविशेष्यतावच्छेदकयोर्नीलत्वघटत्वयोः एकवृत्तित्वं ज्ञायते, दण्डित्वपुरुषत्वयोरिव पुरुषे। एवं नीलघटपदयोः शाब्दमपि सामानाधिकरण्यं युज्यते। नीलत्वघटत्वाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यां

---

प्रकाशः

अत एव स्वरूपसंबन्धविषयत्वेन प्रमात्वमेवोपपादयति—अतीतादाविति।

दण्डिपुरुषयोरिवेति भेदमुपचर्य द्वन्द्वसमासः। वस्तुतः पदार्थतावच्छेदकभेदादित्यग्रे वक्ष्यामः। तादात्म्यधियं प्रमाणमुक्त्वा नीलत्वघटत्वयोः सामानाधिकरण्यधियं प्रमाणमाह—अथवेति। आर्थमुक्त्वा शाब्दमपि सामानाधिकरण्यं मानमाह—एवमिति।

---

न्यायशिखामणिः

चार्थे द्वन्द्वानुशासनादाह—भेदमिति। तथा च भेदविवक्षायां द्वन्द्वानुशासनमिति तदसत्त्वेऽपि न विरोध इति भावः। ननु तत्र तद्विवक्षापि अभेदविवक्षादृष्टान्तत्वेन तदुपादानादित्यरुचेराह—वस्तुत इति। पदार्थतेति। अन्यथा प्रमाणप्रमेयेत्यादावप्यगतिरित्यादि वक्ष्यत इत्यर्थः।

ननु वाक्ये न लक्षणेति वक्ष्यते। तथा च पदेऽपि तदनभ्युपगमे सैवोच्छिद्येतेत्याह—नन्वेवमिति।

ननु [1]कोकिलः पिक इतिवत् [2]वाच्यत्वपरतया सहप्रयोगः स्यादेवेत्यनु-

---

1. क. कोकिलकलः पिकः 2. ग. साध्यत्वपरतयापि

तयोरेकप्रवृत्तेः । न च मतुपो लोपात् अभेदोपचाराद्वा नीलपदं नीलवत्परमिति वाच्यम् । न हि प्रयोगं साधकं ब्रूमः, किंतु नीलघटयोरभेदप्रतीतिम् पदेऽपि नापचारादिकल्पना, गौरवात् मुख्ये बाधकाभावाच्चेति ।

उच्यते । शुक्लपटशब्दयोः एकार्थत्वे घटः कुम्भ इतिवत् शुक्लः पट इति सहप्रयोगो न स्यात् । अन्धस्य पटग्रहवत् रूपग्रहः, रूपाग्रहवत् पटाग्रहोऽपि वा स्यात् । महारजतरक्ते पटग्रहवत् शुक्लग्रहः, शुक्लाग्रहवत् पटाग्रहोऽपि भवेत् । पटमानयेत्युक्ते यं कंचित् शुक्लमानयेत् । अपटः पट इतिवत् अशुक्लः पट इति विरुध्येत, पटशुक्लयोरभेदात् । अग्निसंयोगादेकत्र श्यामरक्तयोः विनाशोत्पादे घटस्य तौ स्याताम्, घटसत्त्वे वा तयोरपि न स्याताम् ।

अथ शुक्लत्वादीनां द्रव्यभेदात् तद्बोधार्थं सह प्रयोगः । अन्धादिना शुक्लादिग्रहे शुक्लत्वादीनामग्रह उपपद्यते । शुक्लत्वादिजातेश्च

---

**प्रकाशः**

नन्वेवं गतमुपचारेणेत्य आह—मुख्य इति । स्यातामिति । न चेष्टापत्तिः, प्रत्यभिज्ञानादिति भावः ।

---

**न्यायशिखामणिः**

श्यात् अन्धस्येत्युक्त्वा रूपत्वग्रह एवान्धत्वमिति न रूपाग्रहात् पटाग्रहप्रसङ्ग इत्यस्वरसात् [1]महारजनेत्यभिधाय शुक्लग्रहेऽपि न जातिग्रहः [2]महारजनेनैव प्रतिबन्धादित्यरुच्या [3]पटमित्युक्त्वा तात्पर्याद्व्यवस्थितेति न पटव्यतिरिक्तशुक्लानयनप्रसङ्गः । सर्वस्य च पटस्य शुक्लाभेदानभ्युपगमात् अशुक्लः पट इति न विरुध्यत इत्यपरितोषात् अग्निसंयोगादित्युक्तमयुक्तम् । तथा घटस्यापि विनाशोत्पत्त्यभ्युपगमात् नानिष्टप्रसङ्ग इत्याशङ्क्य निराकरोति—न चेति ।

---

1. ग. महाराजतेऽप्यभिधाय
2. ग. महाराजतेनैव
3. ग. पट इत्युक्त्वा तात्पर्याद्व्यवस्थेति

द्रव्येणाभेदो न समवायः, किंतु स्वरूपसंबन्ध इति चेत्—न। शुक्लत्व-मधुरत्वसुरभित्वोष्णत्वादीनां द्रव्यवृत्तित्वे द्रव्यग्राहकत्वगादिभिः ग्रहणप्रसङ्गात्। रूपत्वादीनां द्रव्यवृत्तित्वे प्रतिनियतेन्द्रियग्राह्यतैव न स्यात्, योग्यवृत्तित्वेन जातेर्ग्रहणयोग्यत्वात्। तत्तज्जातित्वेन योग्यत्वेऽननुगमात्। तस्माद्रूपत्वादीनां प्रतिनियतेन्द्रियग्राह्यतापि गुणगुणिभेदे मानम्। अभेदे च कथं पटस्य शुक्लं रूपमिति भेदबुद्धिः। पटो नीलिमेति बुद्धिप्रसङ्गश्च।

नन्वेकान्ताभेदे सर्वमिदं दूषणम्। वयं तु भेदाभेदवादिनः। तथा च भेदमादायापौनरुक्त्यादि। भेदाभेदे च उक्तमेव प्रमाणं प्रत्यक्षम्। अथ वा उभयसिद्धभेदे सामानाधिकरण्यधीरभेदे प्रमाणम्। यद्वा अत्यन्तमभेदे भेदे च न सामानाधिकरण्यमिति तत एव भेदाभेदसिद्धिः।

---

**प्रकाशः**

अथेति। तथा च प्रवृत्तिनिमित्तभेदादयं सहप्रयोग इति भावः। नन्वेवं शुक्लत्वादिग्रहार्थमेव समवायः सिद्ध इत्यत आह—शुक्लत्वादीति। योग्येति। एतच्चोपलक्षणम्। तथा सति घटो रूपमित्याद्यपि प्रतीतिः स्यादित्यपि बोध्यम्।

उक्तमिति। [1]पटस्य शुक्लं रूपं शुक्लः पट इति द्वयमित्यर्थः। त्वया मया चेति शेषः। [2]एकेनोभयस्यानुक्तत्वात्। यद्वा एतदस्वरसादाह—अथ वेति। ननु

---

**न्यायशिखामणिः**

ननु प्रवृत्तिनिमित्तस्य [3]स्वाश्रयभेदमात्रात् सहप्रयोगोपपादने घटः कुम्भ-इत्यपि स्यादित्यत आह—तथा चेति। प्रवृत्तीति। घटे च प्रवृत्तिनिमित्तयोर्भेदाभावात् नातिप्रसङ्ग इति भावः। ननु शुक्लत्वाद्यभेदनिराकरणं प्रकृतासंगतमित्यत आह—नन्विति। समवाय इति। तथाच समवायस्यैवाशङ्कितत्वान्मूले तन्निराकरणं दृष्टान्तार्थमिति भावः।

ननु पूर्वरक्ष्युक्तमभेदप्रमाणं न भेदाभेदसाधकम्। तत्साधकं च प्रमाण-द्वयं न [4]तदुक्तमित्यनुपपत्तिरित्यत आह—पटस्येति। ननु भेदस्य परमतेऽपि

---

1. ख. घटस्य
2. ख. तेनोभय-
3. क. 'स्वाश्रय' इति नास्ति।
4. ग. तदुक्तमित्युक्तमि-

न च भेदाभेदयोः परस्परविरहरूपतया विरुद्धयोः कथमेकत्र समावेश इति वाच्यम् । संयोगतदभावयोरिवाविरोधात् । पाकानन्तरं रक्तोऽयं न श्याम इत्यबाधितानुभवबलात्तत्रैव तदन्योन्याभावसिद्धेः त्वयापि भेदाभेदस्वीकारात् । अन्योन्याभावत्वमव्याप्यवृत्ति नित्याभाववद्वृत्त्यभावत्वसाक्षाद्व्याप्यधर्मत्वात् अत्यन्ताभावत्ववत् । नित्येति वा न विशेषणम् अव्याप्यवृत्तिप्रतियोगिकप्रागभावप्रध्वंसयोरव्याप्यवृत्तित्वात् इत्यतोऽपि भेदाभेदसिद्धिः ।

---

**प्रकाशः**

प्रत्यक्षं परं प्रति नोपन्यासमर्हतीति अर्थापत्तिं प्रमाणयति—यद्वेति । नन्विदमसाधारणतया संशायकम् । अन्यथा शब्दत्वादिकमपि शब्दादेर्नित्यानित्यतां साधयेत् अविशेषादित्यनुशयेनाह—अन्योन्याभावत्वमिति । अव्याप्येति । स्वकालावच्छिन्नस्वात्यन्ताभावसमानाधिकरणवृत्तीत्यर्थः । तथा च नोक्तस्थलमादाय सिद्धसाधनम् । [1]नित्याभावेति । [2]नित्याभाववृत्त्यभावविभाजकोपाधित्वादित्यर्थः । चतुर्धा अभावविभजनात् । अन्यथा यथाश्रुते तद्व्याप्यनित्याभावत्वादिधर्मव्याप्यत्वेन अभावत्वसाक्षाद्व्याप्यत्वाभावात् पक्षेऽसिद्धिः दृष्टान्ते साधनवैकल्यं च

---

**न्यायशिखामणिः**

[3]सिद्धत्वान्नोभयप्रमाणगवेषणमित्यस्वरसात् पक्षान्तरावतार इत्याह—यद्वेति । नोपन्यासमर्हतीति । एतच्चोपलक्षणम् । एकान्ताभेदस्य निराकृतत्वात् भेदविशिष्टाभेदस्य च सिषाधयिषितस्य केनापि प्रत्यक्षेणाविषयीक्रियमाणत्वान्न तत्सिद्धिरित्यस्वरसो बोध्यः । अर्थापत्तिमिति पररीत्या उक्तम् । वस्तुतस्तु अनुमानमेवात्र विवक्षितम् । अत एव समानाधिकरणशब्दप्रतिपाद्यत्वहेतोरसाधारणानैकान्तिकतामाह—नन्विति । असाधारणतयेति । एतच्च प्रत्येकसाध्यत्वाभिप्रायेण । भेदविशिष्टाभेदस्य साध्यत्वे त्वप्रसिद्धिरेव बोध्या । तेनेति [तथा चेति] ।

---

1. क. अनित्याभावेति ।

2. क. नित्यभाववद्वृत्त्य-

3. ग. सिद्धान्तत्वान्नेयं प्रमाणगवेषणे-

उच्यते। तस्यैव तत्राभावोऽवच्छेदभेदेन वर्तते ज्ञायते च यथा संयोगाद्यभावः। श्यामावच्छिन्नस्य तस्यैवान्योन्याभावस्तत्रैव रक्तावच्छिन्ने। तदन्योन्याभावाभावश्च श्यामावच्छेदेन। तदिहापि नीलस्यान्योन्याभावो घटत्वावच्छेदेनेति नीलात् घटस्य भेदोऽस्तु। अभेदस्तु नीलान्योन्याभावाभावरूपो न घटे घटत्वावच्छेदेनैव, विरोधात्। एकावच्छेदेन भावाभावयोः एकत्रावृत्तेरज्ञानाच्च। नाप्यवच्छेदकान्तरेण। घटत्वावच्छिन्ने घटे तदभावात् तदज्ञानेऽपि नीलो घट इत्यनुभवाच्च। न चान्योन्याभावरूपो भेदोऽस्तु,

---

प्रकाशः

स्यादिति भावः। नित्यत्वं च ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वमिति ध्वंसत्वे न व्यभिचारः। नित्येति वेति। नित्याभाववृत्ति वेत्यर्थः।

तदभावादिति। घटत्वमभिव्याप्यैव भेदस्य [1]तत्र वृत्तेर्नाभेद इति भावः। किं त्वन्य एवेति। स च न भेदविरोधीत्यवच्छेदकभेदं विनापि तत्सामानाधिकरण्यं स्यादिति [2]भावः। तस्मादिति। तथा चानुमानं बाधितमिति भावः।

---

न्यायशिखामणिः

पाकरक्तस्थले कालभेदेनोभयभेद[3]स्वीकारादित्युक्तत्वात् सिद्धसाधनम्। तच्च स्वकालावच्छिन्नेति विशेषणान्निरस्तमित्यर्थः।

ननु नित्यत्वं यदि ध्वंसाप्रतियोगित्वं तदा तद्घटितहेतोर्ध्वंसत्वे व्यभिचारः। यदि प्रागभावाप्रतियोगित्वं तदा प्रागभावत्व इत्युभयं विवक्षितमित्याह— नित्यत्वमिति।

ननु नीलत्वावच्छेदेन घटे नीलाभेदोऽस्त्वित्याशङ्क्य, भिन्नभिन्नप्रदेशावस्थितयोरेव शाखामूलयोर्विरुद्धावच्छेदकत्वं दृष्टम्। नीलघटत्वयोश्चैकदेशत्वान्न तथात्वमित्याशयेनाह—घटत्वमिति। नन्वन्यत्वेऽप्यभेदस्यावच्छेदकं विना कथं विरुद्धेन भेदेन सहावस्थितिरित्याशङ्क्य विरोध एवासिद्ध इत्याह— स चेति।

---

1. क. तत्तद्वृत्तेः
2. क. अर्थः
3. क. 'भेद' नास्ति।

अभेदस्तु न भेदाभावः किं त्वन्य एवेति वाच्यम्। अभेदव्यवहारे तस्याहेतुत्वात्। तस्मात् नीलो घट इत्यत्र नीलसंबन्ध एव भासते। तथा सति नीली घट इति धीः स्यादित्युक्तमिति चेत्—नीली घट इत्यत्र बुद्धौ यदि संबन्धविषयत्वमापाद्यते, तदिष्यत एव। अथ नीलो घट इति प्रयोगे संबन्धवाचकपदवत्त्वं तदपीष्यत एव। मतुपो लोपात् अभेदोपचाराद्वा नीलपदमेव नीलवत्परमिति।

ननु शब्दरूपादिषु विशेषणता इन्द्रियसंबद्धविशेषणता वा ग्राहिकास्तु किं समवायादिना। अथ विशेषणतायां समवायः इन्द्रियसंबद्धविशेषणतायां च संयुक्तसमवायादिरुपजीव्यः, तैर्विना तयोरभावादिति चेत्—विशेषणतास्वरूपे तेषामुपजीव्यत्वम्, न तु तस्याः प्रत्यासत्तित्वेऽपि। तैर्विनापि समवायाभावयोर्विशेषणतासत्त्वात्।

---

प्रकाशः

अथेति। तद्वाचक[1]विशेषविशिष्टापादनं चाप्रयोगविनष्टमिति भावः। अभेदोपचाराद्वेति। यद्यप्येवमपि वाचकत्वाभावादिष्टापत्तिर्न युक्ता तथापि वाचकपदं प्रतिपादकपरम्। तावतैव प्रकृतसिद्धेरिति भावः। अस्तु समवाय-

---

न्यायशिखामणिः

ननूक्तानुमानादव्याप्यवृत्तित्वे सिद्धे तदनुरोधेन किंचिदवच्छेदकं कल्प्यत इत्यत आह— तथा चेति।

ननु नीलो घट [2]इत्यनुभवस्य संबन्धविषयकत्वेऽपि साध्याभवानवगाहित्वान्न [3]तेन बाध इति [4]चेत्—न। भेदाभेदौ सर्वत्र सहानवस्थितौ परस्परविरुद्धत्वात् गोत्वादिवदित्यनुमानेन निरुपाधिरसभङ्गादिनर्कसहकृतेनास्य बाधः। पृथगवच्छेदकावच्छिन्नवृत्तित्वोपाधिदूषितस्यासाधकत्वं चेत्यत्र[5] तात्पर्यात्। न चैतन्मते तयोर्विरोध एवासिद्ध इति वाच्यत्। तैरपि गवाश्वादिस्थले तदभ्युपगमात्।

---

1. ख. 'विशेष' नास्ति।
2. क. इत्यस्य
3. ग. 'तेन' नास्ति
4. क. चेतनभेदाभेदौ
5. °स्यासाधकता वेत्यत्र

संयुक्तसमवायादिरपि तत्रास्तीति चेत्—आस्ताम्, न तु प्रत्यासत्तिः, किं तु विशेषणतैव, क्लृप्तत्वात्। संयुक्तसमवायादिकं विना विशेषणता रूपादौ न ज्ञायत चेत्—मा ज्ञायि। न हि सा प्रत्यासत्तिर्ज्ञाता, अपि तु स्वरूपसती।

मैवम्। शब्दादीनां साक्षात्कारविषयत्वेन इन्द्रियसंबन्धानुमितौ शब्दादौ समवायादिकं ज्ञात्वैव विशेषणताग्रह इत्यवश्यं प्रथमोपस्थितत्वात् समवायादिरेव विषयो न विशेषणता, चरमोपस्थितत्वात्।

---

प्रकाशः

स्तथापि न स नः प्रत्यासत्तिरित्याह—नन्विति। नन्वेतदेव कथमित्यत आह—तैर्विनापीति। विशेषणतासत्त्वादिति। विशेषणताप्रत्यासत्तिसत्त्वादित्यर्थः।

शब्दादीनामिति। यद्यपि समवायादेः प्रथमोपस्थितावपि विशेषणतायाः क्लृप्तत्वलाघवप्रतिसन्धाने सैव तत्र विषयः स्यात्। तदप्रतिसन्धाने च स विषयीभूतोऽप्यग्रे त्याज्यः। तथापि विशेषणतायाः प्रतिव्यक्ति भिन्नत्वेन समवायादिविशेषणतायाः प्रत्यासत्त्वकल्पनेऽप्येतद्विशेषणतायास्तत्त्वाकल्पनात्[1] अक्लृप्तत्वाविशेषाच्च प्रथमोपस्थितः समवायादिरेव तत्र विषय इति वदन्ति।

अत्रेदं चिन्त्यम्—तत्तद्विशेषणतात्वेनाभावादौ प्रत्यासत्तित्वकल्पने गौरवात् विशेषणतात्वेनैतत्कल्पने एतद्विशेषणताया अपि सामान्यतः प्रागेव तत्कल्प-

---

न्यायशिखामणिः

ननु तद्वाचकमतुप्प्रत्यय[2] एवापाद्यत इत्यत आह—तद्वाचकेति। ननु विशेषणतायाः प्रत्यासत्तित्वं समवायादि नोपजीवतीत्येतत् तेन विनापि क्वचित्तस्याः प्रत्यासत्तित्वे घटते न त्वन्यत्र तत्स्वरूपसत्तामात्रेणेत्यत आह—[3]विशेषणतेति।

उपाध्यायमतं दूषयति—अत्रेति। लाघवमेव प्रतिबन्द्या द्रढयति—अन्यथेति।

---

1. ख. तथात्वकल्पनात्
2. ग. मतुप्प्रयोगः
3. ग. विशेषणमात्रेति।

प्रकाशः

नात्। अन्यथा आत्मग्रहे संयोगस्य हेतुत्वकल्पनादवयविग्रहेऽपि स एव हेतुरित्यपि प्रागुक्तं अयुक्तं स्यात्। तत्रापि संयोगव्यक्तिभेदात्।

यदि चेन्द्रियसंयोगत्वेनैव तथात्वकल्पनात्तत्र तथा, तदा प्रकृतेऽपि तुल्यम्।

ननु भवेदेवं यदि विशेषणतात्वमनुगतं भवेदिति चेत्—न। विशेषणतात्वं हि स्वरूपसंबन्धत्वम्। तच्च संबन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वमनुगतमेव। अन्यथा तस्यानेकत्वे संनिकर्षस्य षोढा परिगणनमप्ययुक्तं स्यात्। तदिदमुक्तम्—'आस्तां, न तु प्रत्यासत्तिः, किं तु विशेषणतैव, क्लृप्तत्वात्' इति। तस्मात् समवायाभ्युपगमे गुणादीनां यदि विशेषणतैव नाभ्युपगम्यते तदा समवायादेः प्रत्यासत्तित्वम्, युक्तं च तथा, अतिरिक्तसंबन्धाभाव[1]एव तदभ्युपगमात्।

न चैवं वायू रूपवानिति धीर्यथार्था स्यात्, यत्र यत्संबन्धस्तत्र तज्ज्ञानस्य तथात्वात्। तथा च विशेषणतावच्छिन्नसमवायस्य संबन्धत्वमिति वाच्यम्।

---

न्यायशिखामणिः

संबन्धान्तरमिति। ननु गुणगुण्यादिस्थले समवायस्यापि स्वीकारेण संबन्धान्तरशून्यत्वाभावात्तत्राव्याप्तिः। किं च अतीन्द्रियस्वरूपसंबन्धस्य ज्ञानाजनकत्वादव्याप्तिरिति चेत्—न। संयोगसमवायान्यत्वे सति संबन्धत्वं स्वरूपसंबन्धत्वमित्यत्र तात्पर्यात्। न चैवमपि कार्यतावच्छेदकासिद्धिः अभावप्रत्यक्षत्वादेरननुगतत्वादिति वाच्यम्। सत्त्वविशिष्टलौकिकप्रत्यक्षत्वावच्छिन्ने संबन्धत्वेन तस्य हेतुत्वम्। तत्र चाभावस्थले संबन्धत्वेन विशेषणतायाः क्लृप्तत्वात् सैव हेतुरिति भावः।

तदभावानवच्छिन्नेति। अत्रेदं चिन्त्यम्—य एव [2]रूपाभावावच्छिन्नो वायुविषयकरूपज्ञाने [3]विषयस्तस्यैव समवायस्य रूपी घट इति प्रत्यक्षे विषयत्वात्

---

1. क. एवाभ्युपगमात्
2. क. रूपावच्छिन्नो
3. क. विषयत्वस्यैव

प्रकाशः

तदभावानवच्छिन्नसमवायस्य तत्संबन्धरूपतया (वायौ रूपसंबन्धरूपतया) वायौ रूपसंबन्धाभावात् । अन्यथा समवाय एव न सिध्येत् । संबन्धानुमितावावश्यकविशेषणतयैव सिद्धसाधनात् । न च भावानामित्यादिनियमात् समवायकल्पनोत्तरमेवात्र तत्कल्पनमिति नोक्तदोष इति वाच्यम् । समवायवत् प्रागपि तत्कल्पनात् । उक्तनियमस्याप्रयोजकत्वाच्च । एवं च ज्ञात्वैवेत्यप्ययुक्तमिति ।

---

न्यायशिखामणिः

तस्याप्यप्रमात्वापत्तिः । किं च वायौ रूपसमवायसत्त्वेन कथं तत्र तदभावः । प्रतियोगिसंसर्गवति तदत्यन्ताभावायोगात् । न च तत्र स्वरूपसंबन्धावच्छिन्नप्रतियोगिकाभावस्य [1]तत्सत्त्वेऽपि न विरोध इति वाच्यम् । तस्य प्रतियोग्यारोपविषयकत्वेन रूपाभावस्य तदवच्छिन्नप्रतियोगिकत्वाभावात् । तत्संसर्गविषयप्रतियोग्यारोपजन्यधीविषयत्वं हि तत्संसर्गावच्छिन्नप्रतियोगिकत्वम् । तस्माद्विशेषणताया एव सर्वत्र रूपादिप्रतीतौ विषयत्वम् । तर्हि सैव सर्वत्रेन्द्रियप्रत्यासत्तिरस्त्विति चेत्—न । धर्मिग्राहकमानेन इन्द्रियप्रत्यासत्तिजन्यत्वानुमानेन जनकतयैव [2]समवायस्य सिद्धेः । अत एवानुमानतः सिद्धे परमेश्वरे क्षितिजनकत्वे तज्जनकज्ञानादिमत्त्वे वा न कश्चिद्विप्रतिपद्यते ।

एतेन [3]तत्तद्विशेषणतात्वेनाभावादिस्थले प्रत्यासत्तित्वकल्पने गौरवात् विशेषणतात्वेनैव तत्कल्पने गुणादिविशेषणताया अपि सामान्यतः प्रागेव तत्कल्पनात् सैवेन्द्रियप्रत्यासत्तिः न समवाय इत्यपास्तम् ।

इन्द्रियसंबन्धत्वं यदि कारणतावच्छेदकं तदा समवायोऽपि तेन रूपेण हेतुरिति कथं तन्निरासः । विशेषणतात्वस्य तथात्वे कार्यतावच्छेदकासिद्धेः । निरुक्तस्यातिप्रसङ्गात् अन्यस्य चाननुगमात् । अन्यथा संयोगस्थलेऽपि सैव हेतुः स्यात् । यदि च तत्र तन्निरूपितकार्यतावच्छेदकाभावान्न सा हेतुः तदा प्रकृतेऽपि तुल्यम् ।

---

1. क. 'तत्सत्त्वेऽपि...... ॰धीविषयत्वं हि' इति ग्रन्थस्त्रुटितः ।
2. क. 'समवायस्य' इति नास्ति । 3. क तत्तद्विशेषणत्वे ।

ननु अभावग्रहे नेन्द्रियसंबद्धविशेषणता प्रत्यासत्तिः, चक्षुषा संयुक्ते परमाण्वादौ योग्यस्य जलत्वादेरभावग्रहप्रसङ्गात् । किं तु स्वग्राह्यसंबद्धविशेषणता । महति वायौ उद्भूतरूपाभावस्य, कुसुमे सौरभाभावस्य, गुडे तिक्तत्वाभावस्य वा न चक्षुरादिना ग्रहः, अपि तु योग्यानुपलब्ध्या सोऽनुमीयते । इन्द्रियविशेषणतापि न प्रत्यासत्तिः । चक्षुरादिना स्वविशेषणजल-

---

**प्रकाशः**

नन्वेवं वाय्वादेः स्वग्राह्यत्वाभावात् कथं तत्र चक्षुरादिना रूपाद्यभावधीः, अत आह—महतीति । अपि त्विति । रूपाभावो वायुवृत्तिः योग्यप्रतियोगिकत्वे

---

**न्यायशिखामणिः**

यत्तु—गुणादिस्थलेऽपि विशेषणताभ्युपगमे तथैव सिद्धसाधनान्न समवायसिद्धिरित्येवाभिमतम् । न तु तमङ्गीकृत्य [1]तस्याप्रत्यासत्तित्वम्, येन धर्मिग्राहकमानविरोधः स्यादिति ।

तन्न । लाघवेनेन्द्रियप्रत्यासत्तिजन्यत्वानुमितेरनुगतसमवायविषयकत्वात् । न हि विशेषणता इन्द्रियप्रत्यासत्तित्वेन क्लृप्ता, येन गुणादिस्थले तत्सत्त्वेन [2]अननुगतयापि तया सिद्धसाधनं स्यादिति संक्षेपः ।

ननु 'सोऽनुमीयत' इत्यनेन रूपाभावसाध्यकमनुमानमाभाति । [3]तथा सति तद्विशेष्यकप्रतीत्यसिद्धिः । न चेष्टापत्तिः । या प्रतीतिरिन्द्रियजन्यत्वेन पराभिमता तस्या एवानुमानेन संपादनीयत्वात् । तादृशी च न वायुविशेष्यकरूपाभावप्रतीतिः । उपनीतविशेष्यकज्ञाने तस्यासामर्थ्यात् । न च रूपाभावे वायुवृत्तित्वं साध्यत इति वाच्यम् । तत्र ह्यनुपलभ्यमानप्रतियोगिकत्वं न हेतुः, अधिकरणान्तरे तदुपलम्भात् । न च वायुवृत्तित्वेनानुपलभ्यमानेति विवक्षितम् । तथापि वायुत्वाभावे व्यभिचारादित्याशङ्क्याह—रूपाभाव इति । अनुपलभ्यमानेति । प्रत्यक्षज्ञानाविषयेत्यर्थः ।

---

1. ग. तस्याः प्रत्यासत्तित्वं
2. ग. अनुगतयापि
3. ग. तथा च तद्वि-

त्वाद्यभावग्रहप्रसङ्गात् । यदि शब्दाभावः प्रत्यक्षः तदा प्रत्यासत्त्यन्तरं कल्प्यम् । तदभावे प्रत्यक्ष एव न भवतीति चेत्—

मैवम् । लाघवादिन्द्रियसंबद्धविशेषणतैव प्रत्यासत्तिः । न चैवं परमाणौ जलत्वाद्यभावग्रहप्रसङ्गः । यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तस्याभाव इन्द्रियसंनिकर्षेण गृह्यते ।

---

प्रकाशः

सति वायुवृत्तित्वेनानुपलभ्यमानप्रतियोगिकत्वात् इत्यनुमानं द्रष्टव्यम् । अन्यथा अनुमानेन वायौ रूपाभाव इति बुद्धेरसिद्धेरित्याहुः । तदभावे—प्रत्यासत्त्यभावे ।

लाघवादिति । न चानुपलब्धौ तव योग्यता विशेषणम् । मम चात्र स्वग्राह्यत्वमिति तुल्यमिति[1] वाच्यम् । भूतलादौ परमाण्वभावग्रहप्रसङ्गेन तादृशयोग्यानुपलब्धेरावश्यकत्वात् स्वग्राह्येत्यादिना तदतिप्रसङ्गस्यावारणात् । वस्तुतो वाय्वादौ [2]लिङ्गाप्रतिसन्धानेऽपि रूपाद्यभावग्रहान्नैवम् । अन्यथा घटाद्यभावस्यापि प्रत्यक्षत्वे कः समाश्वास इति । यत्र हीति । अधिकरणे प्रतियोगिसत्त्वविरोध्यनुप-

---

न्यायशिखामणिः

नन्वेवमपि संख्यासामान्याभावे व्यभिचारः । [3]न चायोग्याप्रतियोगिकत्वं विवक्षितमिति युक्तम् । रूपसामान्याभावप्रतियोगिनोऽपि कस्यचिदयोग्यत्वादिति चेत्—न । अयोग्याप्रतियोगित्वमेव विवक्षितम् । उद्भूतरूपाभावस्य च पक्षत्वान्नासिद्धिः । युक्तं चैतत् । वायावुद्भूतरूपप्रसञ्जनस्यैव उपलब्धिप्रसञ्जकत्वेन तदभावस्यैवेन्द्रियाग्राह्यत्वेन[4] पराभिमतत्वात् ।

ननु योग्यत्वविशेषणावश्यकत्वेऽपि तत् प्रतियोगिविशेषणमेव । तच्च तत्तदिन्द्रिययोग्यत्वम् । अनुपलब्धिविशेषणं तु योग्यत्वम् यत्र हि यत्सत्त्वमित्यादि । तच्च गुर्वित्यस्वरसादाह—वस्तुत इति । नन्वनुपलब्धिविरोधिसत्ताकप्रतियोगिकत्वं यस्याभावस्य स इन्द्रियेण गृह्यत इत्युक्तमयुक्तम् । तथा सत्यभावयोग्यतातन्त्रत्वापत्तौ अनुपलम्भस्याभावग्रहहेतुत्वमन्वयव्यतिरेकादिप्रमाणकमग्रे वक्ष्यमाणं

---

1. ख. 'तुल्यमिति' इति नास्ति ।
2. ख. लिङ्गप्रति-
3. ग. न च योग्या-
4. ग. व्यग्राह्यत्वेन

प्रकाशः

लब्धिसहकृतेनेन्द्रियसंनिकर्षेणाभावो गृह्यत इत्यर्थः। अत एवान्धकारस्थघटानुपलम्भेऽपि न तदभावग्रहः। तत्र घटसत्त्वस्यानुपलब्धिसहचारित्वेन तदविरोधित्वात्।

न चैवमभावभ्रमानुपपत्तिः। तत्रापि प्रतियोगिसत्त्वस्य तत्सहचारित्वादिति वाच्यम्। इन्द्रियसंबन्धिविशेषणतासहकारिण्या उक्तानुपलब्धेः प्रमाजनिकाया एव निर्वचनात्। अभावभ्रमस्य च रजतत्वभ्रमवत् भ्रमसामग्र्यैवोपपत्तेः।

यद्वा प्रतियोगिसत्त्वविरोधित्वमनुपलम्भस्य तत्प्रसञ्जितप्रतियोगिकत्वम्। तेन यत्रैव प्रतियोगिसत्त्वेन तदुपलम्भापादनसंभवस्तत्रैव तदभावो गृह्यते। अत एव 'प्रतियोगिसत्त्वं च तर्कित'मिति वक्ष्यति। एतच्चाभावभ्रमस्थलेऽपीति नोक्तदोषः।

---

न्यायशिखामणिः

विरुध्येतेत्यत आह—अधिकरण इति। तथा च योग्यानुपलब्धिरभावग्रहहेतुः। योग्यत्वं चाधिकरणे प्रतियोगिसत्त्वासहचरितत्वमिति भावः। न चैतद्व्यर्थमित्याह—अत एवेति।

[1]जयदेवसमाधिमाह—इन्द्रियेति। ननु किमनुपलब्धेः स्वाधिकरणे सर्वत्र तदसहचरितत्वं विवक्षितम्, उताभावग्रहाधिकरणे, तत्प्रमाधिकरणे वा, यत्राधिकरणे तदसहचरितत्वं [2]तत्र तस्याः तद्ग्राहकत्वमिति वा। नाद्यः, अन्धकारस्थले घटानुपलम्भस्य तत्सहचरितत्वात्। न द्वितीयः, अभावग्रहाधिकरणे तत्सत्त्वेऽपि प्रतियोगिसत्त्वात्। न तृतीयः, पार्थिवपरमाणौ जलत्वानुपलब्धेरपि तथात्वेन तदभावग्रहप्रसङ्गात्। अत एव नान्त्योऽपि। किं च नैषा तत्प्रमाहेतुः, स्वयं भ्रमस्थलसाधारणयोग्यत्वनिर्वचनासामर्थ्ये तत्संकोचस्यान्याय्यत्वात्। किं च मूलस्य विशेषकारणपरत्वे इन्द्रियसंबन्धिविशेषणतया प्रमीयत इति वचनव्यक्तिप्रसङ्गः। सामान्यकारणपरत्वे तु लौकिकालौकिकसंनिकर्षसाधारणम् इन्द्रियसंनिकर्षेण इति वचनं भ्रमसाधारणं गृह्यत इति च भवत्याञ्जसम्। किं च योग्यानु-

---

1. ग. जयदेवमतमाह    2. क. 'तत्र' नास्ति।

प्रकाशः

ननु प्रतियोगिसमानदेशोऽन्योन्याभावः कथं प्रत्यक्षः, तत्राधिकरणे प्रतियोग्यनुपलब्धेरभावात् । न च संसर्गाभावप्रत्यक्षमात्रहेतुनिरुक्तिरत्र । अत एवेत्याद्यग्रिमग्रन्थविरोधात् । न च तत्र तदात्मकतया प्रतियोग्यनुपलब्धिर्ग्राहिका, सा चास्त्येवेति वाच्यम् । तथापि तस्याः प्रतियोगिसत्त्वविरोधित्वाभावादिति चेत्—तदात्मतया प्रतियोगिसत्त्वस्य तद्विरोधित्वात् । एवं च संसर्गितया [1]प्रतियोगिनि संसर्गितया प्रतियोग्यनुपलब्धिः संसर्गाभावे हेतुः । [2]तदात्मतया प्रतियोगिसत्त्वविरोधिनी तदात्मतया प्रतियोग्यनुपलब्धिरन्योन्याभावग्रहहेतुः । न चैवमननुगमः । अन्योन्याभावप्रत्यक्षे संसर्गाभावप्रत्यक्षे च तयोः प्रत्येकमेव हेतुत्वात् ।

यत्तु अधिकरणे प्रतियोग्युपलम्भाभावः अभावमात्रप्रत्यक्षकारणम् । उक्तद्वयं चोक्तप्रत्यक्षे विशेषसामग्री, सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वौचित्यादिति ।

तन्न । तथा सति सामान्यसामग्रीविरहादेवान्योन्याभावप्रत्यक्षानुपपत्तेः ।

ननु तादृशप्रतियोग्युपलम्भाभावः प्रत्यक्षरूपप्रतियोग्युपलम्भाभाव एव वाच्यः, न तु तदुपलम्भसामान्याभावः । तथा सति दोषवशात् प्रत्यक्षेण पीतत्वेन

---

न्यायशिखामणिः

पलब्धिरभावप्रत्यक्षमात्रे हेतुः लाघवात् । भ्रमस्थलाऽव्याप्तिश्च वक्ष्यमाणरीत्या परिहर्तव्येत्यपरितोषादाह—यद्वेति । [3]संभव इति ।

न च मानसः पिशाचतादात्म्यसंशयः तादृशः प्रसिद्ध इति वाच्यम् । तादृशप्रत्यक्षनिश्चयाभावस्य विवक्षितत्वात् । तादृशप्रतियोगिप्रत्यक्षज्ञानाभाव एतेने त्यत्र निराकरिष्यत इति भावः । [4]न चेति । पिशाचतादात्म्यानुमितेराभासजन्यायाः संभवेन तदभावस्थले तदुपलम्भसामान्याभावोऽस्त्येवेत्यर्थः ।

उपाध्यायसमाधिमाशङ्क्य निराकरोति—न चेति । जयदेवमतमाह—यत्त्विति ।

---

1. ख. 'प्रतियोगिनि.........संसर्गाभावे हेतुः' इति ग्रन्थो नास्ति ।
2. क. संसर्गितया
3. क. स्तम्भ इति
4. ग. च चेति ।

प्रकाशः

गृह्यमाणे शङ्खे अनुमानेन श्वैत्यसंसर्गे श्वेततादात्म्ये चोपलभ्यमाने श्वैत्यसंसर्गाभावः श्वेततादात्म्याभावश्च प्रत्यक्षतो न प्रतीयेत। एवं च स्तम्भे पिशाचतादात्म्याभावः कथं प्रत्यक्षः स्यात्। क्वापि पिशाचात्मतया प्रत्यक्षरूपोपलम्भस्याप्रसिद्धया स्तम्भे तदभावासंभवात्। न च सा भ्रमसामग्री, प्रमायां तूपलम्भस्य सामान्याभाव एव हेतुः, स चात्र संभवत्येवेति वाच्यम्। गुञ्जापुञ्जे वह्नित्वभ्रमादुष्णस्पर्शानुमितौ सत्यां तदुपलम्भसामान्याभावाभावेऽपि त्वचा प्रमारूपोष्णस्पर्शाभावग्रहोत्पादात्। न च प्रतियोगिन्यधिकरणसंसर्गप्रत्यक्षविषयत्वाभाव एव हेतुः। संसर्गश्च क्वचित्तादात्म्यं क्वचिदन्य इति वाच्यम्। एवं हि वायौ रूपाभावः प्रत्यक्षो न स्यात्। प्रतियोगिन्यधिकरण[1]संसर्गप्रत्यक्षस्यासिद्धेः। न चाधिकरणे प्रतियोगिसंसर्गप्रत्यक्षविषयत्वाभावस्तथा। तथा सति पिशाचसंसर्गाभावो न प्रत्यक्षः स्यात् प्रतियोगिसंसर्गप्रत्यक्षाप्रसिद्धेः।

यत्तु—प्रत्यक्षे अधिकरणप्रतियोगिसंसर्गविषयत्वाभावस्य हेतुत्वमिति। तन्न। मण्डूकवसाक्तनेत्रस्य वंशे उरगत्वप्रत्यक्षेऽपि त्वचा तदभावप्रत्यक्षोदयात्। न चाभावग्राहकत्वाभिमतेन्द्रियजन्यप्रत्यक्षे तद्विषयत्वाभावस्तथेति वाच्यम्। तादृशारोपे सत्येवाभावप्रत्यक्षपरत्वात्। आरोप्य निषिध्यत इत्यभ्युपगमात्। न च यथार्थत्वमपि प्रत्यक्षविशेषणम्। घटवति घटाभावभ्रमे तस्यापि [2]विषयाबाधेन यथार्थत्वात्। तादृशप्रतियोगिभ्रमेऽपि तदभावप्रत्यक्षानुदयाच्चेति चेत्—

---

न्यायशिखामणिः

तदिन्द्रियजन्यानाहार्येति। अत्रेदं चिन्त्यम्—

घटः पटसंयोगीति प्रत्यक्षे सत्यपि तत्र पटान्योन्याभावप्रत्यक्षं जायते। तच्चैवं सति न स्यात्। तस्याप्यधिकरणसंसर्गविषयत्वात्। न चाभावप्रत्यक्षहेत्वारोपविषयत्वं [3]संसर्गविशेषणम्। स चात्र संसर्गस्तादात्म्यमेवेति नोक्तदोष

---

1. ख. °संसर्गस्यासिद्धेः
2. ख. विषयत्वाधेन
3. ग. संसर्गविशेषणत्वम्।

## प्रकाशः

नैवम् । तदिन्द्रियजन्यानाहार्यप्रत्यक्षे प्रतियोग्यधिकरणसंसर्गविषयत्वाभावस्य हेतुत्वात्, तदारोपस्य चाहार्यत्वात् । न च व्यधिकरणप्रत्यक्षमादाय दोषः, तत्पुरुषीयत्वस्यापि विशेषणत्वात् ।

यद्वा तदिन्द्रियेत्यत्र तत्पदं तद्व्यक्तिपरं न तु तज्जातीयपरम्, अतो नोक्तदोषः । नचान्यकालीनतादृशप्रत्यक्षमादाय दोषतादवस्थ्यादेतत्कालीनत्वमपि विशेषणम्, तथा चाप्रसिद्धिरिति वाच्यम् । इदानीं तदभावस्यैव सत्त्वेन दोषस्यैवाभावात् । एतत्कालीनतत्संसर्गविषयत्वाभावस्यैव हेतुत्वात् । न चैवं प्रतियोग्यप्रसिद्धिः । प्रतियोग्यारोप एव तत्प्रसिद्धेः ।

---

## न्यायशिखामणिः

इति वाच्यम् । संयोगस्यापि संसर्गाभावप्रत्यक्षहेत्वारोपविषयत्वात् । न च यत्राभावप्रत्यक्षे यत्संसर्गविषयतया प्रतियोग्यारोपस्य हेतुत्वं तत्संसर्गविषयत्वाभावस्तत्र हेतुरिति युक्तम् । तथा सति यत्तदादिघटितत्वेनाननुगमेऽपि अभावप्रत्यक्षानुगतहेत्वभावात् ।

न च तादृशप्रत्यक्षे प्रतियोग्यधिकरणतादात्म्यविषयत्वाभावोऽन्योन्याभावप्रत्यक्षे हेतुः, संसर्गाभावप्रत्यक्षे तदुभयसंसर्गविषयत्वाभावस्तथेति प्रत्येकमेव हेतुत्वं विवक्षितमिति वाच्यम् । तथा सति स्तम्भपिशाचतादात्म्याप्रसिद्ध्या तद्विषयत्वरूपप्रतियोग्यप्रसिद्धितादवस्थ्यात् ।

न च प्रतियोग्यारोप एव तत्प्रसिद्धिरित्युक्तमिति वाच्यम् । तदुभयनिरूपिततादात्म्यविषयत्वे [1]असत्ख्यात्यापत्त्या तस्यापि [2]प्रतियोगिन्यधिकरणतादात्म्यविषयत्वात् । न चैवं [3]प्रमात्वापत्तिः, व्यधिकरणप्रकारकत्वात् ।

ननु प्रतियोगिन्यधिकरणतादात्म्यविषयतदिन्द्रियजन्यानाहार्यप्रत्यक्षविषयत्वाभावोऽन्यान्याभावप्रत्यक्षहेतुः, अधिकरणसंसर्गविषयतादृशप्रत्यक्षविषयत्वाभावः संसर्गाभावप्रत्यक्षे तथेति विवक्षितम् । स्तम्भे च तादृशप्रत्यक्षविषयत्वं प्रसिद्धमिति तदभावः पिशाचे नानुपपन्नः, वायुसंसर्गविषय[4]तादृशप्रत्यक्षविषयत्वं च रूपाभावे

---

1. क. सत्यत्वापत्त्या
2. ग. प्रतियोग्यधिकरण-
3. क. प्रमात्वापत्तिरप्यधिकरण-
4. क. ०विषयतया तादृश-

## प्रकाशः

एतेनाभावग्राहकः प्रतियोग्यनुपलम्भः संशयविपर्ययसाधारणप्रत्यक्षरूपतदुपलम्भाभाव एव वाच्यः। अधिकरणे प्रतियोगिसंशयविपर्ययसत्त्वेऽपि अभावानिश्च-

## न्यायशिखामणिः

प्रसिद्धमिति नोक्तदोषः। न च तत्प्रसिद्धौ कारणसद्भावसिद्धिः, तत्सिद्धौ च तत्प्रसिद्धिरित्यन्योन्याश्रयान्नैवमिति वाच्यम्। वायौ रूपाभावप्रतीतेश्च क्षुषत्वे सिद्ध एव तदन्यथानुपपत्त्या तत्कारणानुसरणात्[1]। न चैवमप्यभावप्रत्यक्षे अनुगतहेतुत्वसिद्धिः। अन्योन्याभावसंसर्गाभावप्रत्यक्षयोर्विलक्षणकार्यत्वेनेष्टत्वात् प्रतियोग्यारोपस्य तादृशस्य सत्त्वाद्वा। न चास्मिन् पक्षे योग्यानुपलब्धिरभावप्रत्यक्षे हेतुरिति सिद्धान्तभङ्गापत्तिः। योग्यायाः उपलब्धेरभावो योग्यानुपलब्धिः। योग्यत्वं च तस्यास्तदिन्द्रियजन्येत्यादीत्यूहितुं शक्यत्वादिति चेत्—न। भूतलादौ परमाण्वाद्यभावस्य प्रत्यक्षत्वापत्तेरिति।

अत्र ब्रूमः। अधिकरणे प्रतियोगिसत्त्वेन प्रसञ्जितेन प्रतियोगिनो [2]य उपलम्भ आपादयितु शक्यते तदभावोऽभावप्रत्यक्षे हेतुः। शङ्खे च श्वैत्यानुमितेः गुञ्जापुञ्जे च औष्ण्यानुमितेः सत्त्वादेव नापाद्यता। तत्प्रत्यक्षत्वं विद्यमानं तथेति न श्वैत्यौष्ण्याभावप्रत्यक्षानुपपत्तिः। वंशे च [3]चाक्षुषोरगभ्रमस्य सत्त्वात् त्वाचोपलम्भ एव सामान्यतोऽप्यापाद्यत इति त्वचा तदभावग्रहः सर्वत्राभावप्रत्यक्षे आहार्यप्रतियोग्यारोपस्य विद्यमानत्वात् सोऽपि न तथेति नाभावप्रत्यक्षमात्रानुपपत्तिः। देवदत्तीयप्रतियोगिसत्त्वप्रसञ्जनेन यज्ञदत्ते तदुपलम्भ आपादयितुं शक्यत इति तत्पुरुषीयत्वमपि न देयम्। तथा च स्तम्भो यदि पिशाचत्वजातिमान् स्यात् तदा तत्प्रकारकोपलम्भविषयः स्यात् वायौ महति यद्युद्भूतरूपं स्यात् तदोपलभ्येतेति सामान्यतोऽप्यापादनं प्रत्यक्ष एव विश्राम्यतीति तदुपलम्भाभावः तत्राभावग्राहक इति दिक्।

अत्र न तदुपलम्भसामान्याभावो हेतुः येन शङ्खे श्वैत्यानुमितिसमानकालीनतदभावप्रत्यक्षानुपपत्तिः। किं तु तदुभयसंसर्गविषयानाहार्यप्रत्यक्षज्ञानाभावः पिशाचतादात्म्यसंशयश्च तादृशः प्रसिद्ध इति स्तम्भे तदभावः तदन्यान्या-

1. क. ०नुवर्तनात्
2. क. 'यः' नास्ति
3. क. चाक्षुषौदनभ्रमस्य

न च परमाण्वादौ जलत्वादिसत्त्वमनुपलब्धिविरोधि। योग्यसंयुक्तसमवायाभावेन पृथिवीत्ववदनुपलब्धिसंभवात्। महति वाय्वादौ उद्भूतरूपाद्यभावश्चक्षुरादिग्राह्य एव। तत्रोद्भूतरूपादिसत्त्वेऽनुपलब्ध्यनुपपत्तेः। अत एव स्तम्भे पिशाचतादात्म्याभावः प्रत्यक्षः स्तम्भतादात्म्ये च तस्य स्तम्भस्येवानुपलम्भासंभवात्।

---

प्रकाशः

यात्। पिशाचादेः संशयो विपर्ययश्च मानसः प्रसिद्ध एवेति न तदन्योन्याभावग्रहे प्रतियोग्यप्रसिद्ध्या [1]तदुपलम्भासंभव इत्यपास्तम्।

तत्पुरुषीयत्वादिविशेषणावश्यकतया तदप्रसिद्धेः। अन्यथा अन्यमानसे श्वैत्यप्रत्यक्षे सति शङ्खे तदभावश्चक्षुषा न प्रतीयेतेति दिक्।

महतीति। न चैवमुद्भूतरूपे परमाणौ महत्त्वाभावप्रत्यक्षतापत्तिः, [2]इष्टत्वात्। उक्तानुपलम्भविषयत्वेनैवाभावस्य योग्यत्वात्। अत एव घटादौ

---

न्यायशिखामणिः

भावग्राहक इति कस्यचिन्मतमनूद्य दूषयति—एतेनेति। यद्यपि तदुभयनिरूपिततादात्म्यमप्रसिद्धमिति तद्विषयत्वाप्रसिद्धिः, तथापि प्रतियोग्यारोपे तदभ्युपेत्य विशेषणाभावेन [3]विशिष्टाभावप्रसिद्धिमाह—तदिति।

ननु तत्पुरुषीयत्वविशेषणानावश्यकत्वपक्षे नोक्तदोष इति चेत्—तथापि तदिन्द्रियजन्यत्वविशेषणावश्यकत्वेन मानससंशयस्य बहिरिन्द्रियाजन्यतया प्रतियोग्यप्रसिद्धितादवस्थ्यात्। तदेतदभिसन्धायाह—दिगिति।

प्रागभाव इति। एतच्चोपलक्षणम्। अन्योन्याभावात्यन्ताभावयोः स्वप्रत्यक्षजनकत्वेऽपि [4]श्रोत्राजन्यत्वान्न व्यापारतेति द्रष्टव्यम्। श्रोत्राजन्यत्वाच्छब्द एव सर्वत्र तदभावप्रत्यक्षे तथास्त्वित्याशङ्क्य निराकरोति—न चेति। प्रति-

---

1. क. तदुपलम्भाभावः
2. ख. 'इष्टत्वात्.......निर्व्यापारत्वेनाकरणत्वात्' इति ग्रन्थस्त्रुटितः।
3. ग. 'विशिष्टाभाव......बहिरिन्द्रियाजन्यतया' इति नास्ति।
4. ग. श्रोत्रजन्यत्वात्

एवं शब्दस्याप्यभावः प्रत्यक्षः तदा तत्र शब्दसत्त्वस्य अनुपलब्धिविरोधित्वादिति तत्रेन्द्रियविशेषणतैव प्रत्यासत्तिः। चक्षुषि जलत्वादिसत्त्वं च नानुपलब्धिविरोधीति चक्षुषा न तद्ग्रहः।

नन्वभावे न विशेषणता प्रत्यासत्तिः। किं तु समवाय एव समवायसाधकविशिष्टप्रतीतेरविशेषात्। न च समवेतत्वे तस्य भावत्वापत्तिः। भावस्य तत्त्वेऽभावत्वापत्तिरिति वैपरीत्यसंभवात्। रूपादौ प्रत्यासत्तित्वेन समवायकल्पनमभावेऽपि तुल्यम्। विशेषणतापि तुल्या। प्रागभावप्रध्वंसौ

---

प्रकाशः

मनस्त्वाभावो वाय्वादावुद्भूतरूपवदन्योन्याभावोऽपि प्रत्यक्ष एवेति वदन्ति।

**एवमिति**। ननु श्रोत्रस्य निर्व्यापारत्वेनाकरणत्वात् कथमेवम्। न च शब्दध्वंस एव व्यापारः, प्रागभावप्रत्यक्षे तथाप्यगतेः। न च शब्द एव व्यापारः, प्रतियोगितदभावयोरेकत्राजनकत्वादिति चेत्—न। श्रोत्रमनःसंयोगस्य श्रोत्रकर्णशष्कुलीसंयोगस्य वा तथात्वादित्याहुः।

**विशेषणतेति**। यद्यभावे [1]विशेषणतयान्यथासिद्धिः, तदा रूपादावपि तथैवास्त्वित्यर्थः। **तत्रैवेति**। अन्यथा विशेषणतापक्षे का गतिरिति भावः।

---

न्यायशिखामणिः

**योगीति**। न च [2]भिन्नभिन्नाधिकरणावस्थितघटतदभावयोरेकत्र समूहालम्बने जनकत्वदर्शनान्न विरोध इति वाच्यम्। तथापि शब्दस्य तथा तत्रावर्तमानत्वेन तदभावप्रत्यक्षस्य तदंशेऽलौकिकतया तज्जन्यत्वायोगादिति भावः।

ननु श्रोत्रमनस्संयोगस्यासाधारणकारणत्वाभावान्न व्यापारत्वमित्यनुशयादाह—**कर्णेति**।

या रूपादौ विशेषणता सा अभावेऽपि तुल्येत्यर्थभ्रान्तिं वारयति—**यदीति**। प्रतिबन्दिरनुत्तरमित्यत आह—**तथा चेति**। क्वचिदभावे जाति-

---

1. क. विशेषणतान्यथासिद्धिः
2. ग. 'भिन्न' नास्ति।

प्रतियोग्याश्रये समवेतौ । प्रतियोग्याश्रयनाशजन्यध्वंसो देशे समये वा समवैति, तत्रैव निरूपणात् । न च समवायिनाशे ध्वंसनाशः, घटोन्मज्जनप्रसङ्गात् भावत्वस्योपाधित्वाच्च । अन्यथा तवापि तस्य जन्यत्वेन नाशापत्तिः ।

अथैवमन्योन्यात्यन्ताभावयोर्नित्यत्वेऽनेकसमवेतत्वे च जातित्वप्रसङ्गः । न च तत्र भावत्वं तन्त्रम् । गौरवात् । न चाभावानां विशिष्टप्रतीतौ विशेषः, येनात्र समवायपरित्याग इति चेत्—न । घटत्वाभावादेर्जातित्वे सत्त्वद्रव्यत्वपृथिवीत्वादिना परापरभावानुपपत्तेः । तेषां व्याप्यत्वे घटे तदभावप्रसङ्गः । व्यापकत्वे सामान्यादौ घटत्वाभावो न स्यादिति ।

---

प्रकाशः

अन्यथेति । तथा च जन्यत्वेन तस्य तत्साधने यथा भावत्वमुपाधिः, तथा समवायिनाशवत्त्वेऽपीति भावः । न च प्रागभावे साध्याव्याप्तिः, जन्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादिति भावः ।

अत्रेति । अन्योन्याभावेऽत्यन्ताभावे चेत्यर्थः । [1]घटत्वाभावादेरिति । यद्यप्येवमपि [2]द्रव्यगुणा(न्यत्वादीनां)[न्यान्यत्वादीनां] जातित्वप्रसङ्गो दुर्वार एव । तथापि जातिसंकरेण घटत्वाभावादेर्जातित्वाभावेऽतिप्रसङ्गान्नात्वमात्रं जातित्वप्रयोजकम् , किं तु भावत्वसहितम् । गौरवं च प्रामाणिकमिति भावः । अत एव जातित्वानुपपत्तौ [3]जातित्वापादनमनुकूलं भवति बाधकस्य तर्कानुगुणत्वादित्यपास्तम् । समवेतत्व इति । ननु समवायिकारणनाशस्य कारणता समवायकल्पनोत्तरकालीना । अतः समवायकल्पनं प्राथमिकमुपजीव्यं च गुणादिन्यायेनाभाव-

---

न्यायशिखामणिः

संकराव्याप्तिमाशङ्कते—यद्यपीति । न [4]ह्यनेनोपायेन सर्वाभावानां जातित्वनिरासः । किं तूक्तजातित्वप्रयोजकस्यातिप्रसङ्गे तात्पर्यमित्याह—तथापीति ।

---

1. क. घटाभावादेरिति
2. क. द्रव्यगुणान्योन्यत्वादीनां
3. क. जातित्वमापादितमनुकूलं
4. ख. ह्यनेन साधकेन सर्वाभावान्न जातित्व-

उच्यते । समवेतत्वे ध्वंसस्य समवायिकारणनाशात् नाशः स्यात् । न च नाश्यत्वे भावत्वं तन्त्रम्, गौरवात् प्रागभावेऽभावाच्च ।

---

प्रकाशः

मपि विषयीकृत्योत्पन्नमिति उपजीव्यविरोधेन [1]न तत्र [2]समवायाभावकल्पनम् । प्रस्तुत समवायिनाशेन समवेतनाशे भावत्वं तन्त्रमङ्गीक्रियताम्, गौरवस्य प्रामाणिकत्वादिति चेत्—

अत्र वदन्ति । अभावसमवायकल्पनं नोक्तकारणतायामुपजीव्यम् । अभावमविषयीकृत्य गुणादिमात्रविषयीकारेण सिद्धेऽपि समवाये समवायिकारणनाशस्य हेतुताग्रहसंभवात् । दैवात्तदानीमभावे बाधानवतारेण तस्याभावविषयत्वात् । तस्मात् प्रथमतो बाधानवतारात् [3]अभावसाधारणसमवायानुमितावप्यनन्तरमुक्तबाधकावतारेऽपि तस्य परित्याग इति ।

---

न्यायशिखामणिः

ननु ध्वंसनाशप्रसङ्गबाधकेनाभावे समवायानुमानमेव नावतरतीत्यत आह—[4]प्रत्युतेति ।

उपाध्यायमतमाह—अत्रेति । ननु समवायानुमितावभावस्यापि विषयत्वे तत्रापि समवायसिद्धौ कुतस्तत्परित्याग इत्यत आह—तस्मादिति । जयदेवमतमाह—अत्राहुरिति । अयमाशयः—ध्वंसविशिष्टबुद्धिमात्रं पक्षीकृत्य विशेषणसंबन्धजन्यत्वानुमाने बाधकात् समवायो न विषयः, किं तु स्वरूपसंबन्ध इति तस्मिन् कल्प्यमाने अभावत्वावच्छेदेनैव स कल्प्यते लाघवात्, [5]न तद्विशेषध्वंसत्वावच्छेदेन, गौरवात् । तथा [6]चात्यन्ताभावसंबन्धानुमितौ क्लृप्तत्वेन लाघवात् स्वरूपसंबन्धो विषयः । न ह्येवं गुणविशिष्टबुद्धिमात्रपक्षीकारेण संबन्धा-

---

1. ख. 'न' नास्ति ।
2. ख. समवायकल्पनम्
3. ख. 'अभावसाधारण......न तु समवेतनाशे' इति ग्रन्थस्त्रुटितः ।
4. ग. प्रत्यक्षेति ।
5. ग. न तु तद्वि-
6. ग. चात्यन्ताभावादौ संबन्धा-

### प्रकाशः

नन्वेवं गुणादिमविषयीकृत्याभावमात्रविषयीकारेणापि समवायसिद्धि- संभवात् स्वरूपसंबन्धिकारणनाश एव कार्यनाशहेतुः, न तु समवेतनाशे समवायिनाशस्तथेति संबन्धवैपरीत्यमेवास्त्विति चेत्—

अत्राहुः। अभावस्वरूपाणामभावत्वेनानुगतानां स्वरूपसंबन्धत्वकल्पना, न त्वननुगतानामवयविगुणकर्मणाम्। अत एवाभावत्वेन तत्कल्पनादन्योन्याभावात्यन्ताभावयोरपि स्वरूपसंबन्धस्य क्लृप्तत्वेन लघुत्वात् स एव कल्प्यते न समवायः। ध्वंसे समवायबाधकाले हि कल्प्यमानः स्वरूपसंबन्धः ध्वंसत्वं विशेषमादायाभावत्वसामान्ये पर्यवस्यति। अन्यथा उक्तबाधकस्यात्यन्ताभावादावसंभवेन तत्र समवायस्य [1]वज्रलेपायितत्वेति।

तच्चिन्त्यम्। भावत्वेन गुणकर्मादीनामप्यनुगमसंभवात्। अन्यथा समवायोऽपि किमवच्छेदेन कल्प्यः। यदि गुणत्वाद्यवच्छेदेन प्रत्येकमेव, तदा स्वरूप[2]संबन्धत्वमपि [3]तथैव कल्प्यताम्। किं च सामान्यतया यद्यभावत्वे पर्यवसानं तदा प्रमेयत्व एवास्तु।

---

### न्यायशिखामणिः

नुमाने केनचित् बाधकेन स्वरूपसंबन्धविषयत्वकल्पना, येन लघुभावत्वावच्छेदेन तत्कल्पनायां कर्मादावपि तदनुमितौ क्लृप्तत्वेन स एव विषयः स्यात्। प्रत्युतानुगतगुणकर्माद्यात्मकस्वरूपसंबन्धस्यानेकत्वेन गौरवान्नानुमितिविषयत्वम्। अभावस्थले तु तथात्वेऽपि तस्य क्लृप्तत्वात्तदनुमितिविषयत्वमिति।

यथाश्रुतमादाय दूषयति—तच्चिन्त्यमिति। ननु विवक्षितार्थे को दोष इत्याशङ्क्य न ह्यत्र क्लृप्तत्वं [4]निदानम्। एकदैव सर्वाभावविशिष्टबुद्धिपक्षीकारेण संबन्धानुमितौ तदभावादित्यभिप्रेत्य यदि सर्वाभावविशिष्टबुद्धिपक्षीकारेणापि[5] ध्वंसांशे बाधकात् स्वरूपसंबन्धविषयत्वकल्पने लाघवादभावत्वावच्छेदेन तत्कल्पनमिति मतम्, तदा ततोऽपि लाघवात् प्रमेयत्वावच्छेदेनैव तत्कल्पनमस्त्विति गर्व

---

1. ख. वज्रलेपापत्तेरिति।
2. क. °संबन्धमपि
3. ख. 'तथैव कल्प्यताम्......स्वरूपसंबन्धत्वकल्पनम्' इति ग्रन्थो न दृश्यते।
4. ग. नियतम्
5. ग. °पक्षीकारेऽपि

प्रकाशः

यदि च भावांशे समवायसिद्धौ बाधकाभावात् तेनैवान्यथासिद्धौ गुरुणाप्यभावत्वेन स्वरूपसंबन्ध(त्व)कल्पनम्, (तथा)[तदा]अभावान्तरे तद्बाधकाभावात् गुरुणापि ध्वंसत्वेन तत्कल्पनमस्त्विति तुल्यम्। तथा चात्यन्ताभावादौ समवायो दुर्वार एवेति।

अपि चैवं सामान्यतया वस्तुत्वावच्छेदेनैव समवायकल्पनात् समवायिनाशनाश्यत्वे भावत्वमपि तन्त्रमस्तु, गौरवस्य प्रामाणिकत्वादिति।

---

न्यायशिखामणिः

समवायेनेत्याह—किं चेति। प्रमेयत्व एवेति। न चेदं कालादावतिप्रसक्तम्। तत्र सर्वाधारताप्रयोजकसंबन्धातिरिक्तासाधारणस्वरूपसंबन्धस्यावच्छेद्यस्याभावादिति वाच्यम्। स्वगतजन्यगुणप्रागभावप्रध्वंसकालान्यत्वप्रकारकप्रमाविशेष्य(क)त्वात्यन्ताभावतद्वदन्योन्याभावादिना तत्रासाधारणसंबन्धसत्त्वात्।

नन्वेवमपि ध्वंसे [1]न तत्सिद्धिरित्यभावे समवाय एव प्रत्यासत्तिरिति पूर्वपक्षभङ्गः, समवायिनाशनाश्यत्वे समवेतकार्यत्वं तन्त्रमिति सिद्धान्तो न भञ्जितश्च। किं च प्रमेयत्वस्य स्वरूपसंबन्धावच्छेदकत्वमिष्टमेव, न तु ध्वंसत्वं तथा, गौरवात्। अत एव गुणादिस्थले स्वरूपसंबन्ध आवश्यक इत्युक्तम्। यथा च तत्र तदभ्युपगमेऽपि समवायसिद्धिः तथोक्तमधस्तादित्यरुचेराह—अपि चेति। एवमिति। सामान्यतया लघुत्वात् [2]प्रमेयत्वस्यावच्छेदकत्व इत्यर्थः। वस्तुत्वावच्छेदेनेति।

अत्रेदं चिन्त्यम्—भवतु सर्वत्र स्वरूपसंबन्धस्या[3]वच्छेदकत्वाद्वस्तुत्वं तदवच्छेदकम्। अन्यथा आधारतया आधेयतया वा वस्तु किमपि न निरूप्येत। सर्वस्याधाराधेयान्यतरत्वनियमात्। संयोगसमवायौ च नाधारत्वादिप्रयोजकावित्युक्तम्। तस्मात्सर्वत्र[4] स्वरूपसंबन्धानङ्गीकारे बाधकसत्त्वात् अङ्गीकारे च बाधकाभावाच्च सर्वत्र तत्कल्पनं युक्तम्। नैवं समवायानङ्गीकारे किंचिद्बाधक-

---

1. क. 'न' नास्ति।
2. ग. प्रमेयत्वस्य स्वरूपसंबन्धावच्छेदकत्वे
3. ग. °स्यावश्यकत्वात्
4. क. 'सर्वत्र' नास्ति।

असमवेतत्वे तद्ध्वंसस्य जन्यत्वेऽपि न नाशः आश्रयनाशादेरभावात्। [1]घटोन्मज्जनापत्तेः न नश्यतीति चेत्—न। न हि प्रयोजनक्षतिभयेन सामग्री न कार्यमर्जयति। तस्मादुन्मज्जनाभावनिर्वाहक ध्वंसस्यासमवेतत्वं कल्प्यताम्। (स्व)[स्वस्व]समवायिनाशात् ध्वंसपरंपराकल्पने च घटकपालादेः आपरमाणु नाशे घटादितद्ध्वंसविरोधी चरमो ध्वंसः

## प्रकाशः

आश्रयेति। समवायीत्यर्थः। ननु यथा घटध्वंसकाले न घटप्रागभावोन्मज्जनम्, तस्य घटप्रागभावोभयविरोधित्वात् तथा घटध्वंसोऽपि ध्वंसघटोभय-

## न्यायशिखामणिः

मस्ति। समवायिकारणादि[2]व्यवहारानुपपत्तिरत्र बाधिकेति चेत्—न। अस्य बाधकस्य क्वाचित्कत्वेनाभावादौ समवायावश्यकत्वासिद्धेः।

किं च संयोगविभागादिध्वंसस्य द्रव्यगुणान्यान्यत्वादेश्च समवेतत्वापत्तौ जातित्व[3]प्रयोजकत्वेन जातित्वापत्तेः। न हि भावत्वघटितं तत् प्रयोजकम्, गौरवात्। प्रसिद्धजातिसंकरादिस्थले जातित्वापत्तेश्च यदि च जातिसंकरादिबाधकाभावोऽपि तत्र प्रविष्ट इति नोक्तदोषः तदा भावत्वविशेषणवैयर्थ्यम्। जातिसंकराभावेनैव घटत्वात्यन्ताभावादावतिप्रसङ्गवारणात्।

अपि चैवमुपाधीनामपि समवेतत्वापत्तौ जातित्वापत्तिः। तस्मात्सर्वत्र समवायानङ्गीकारे बाधकाभावात् अङ्गीकारे बाधकसत्त्वाच्च वस्तुत्वावच्छेदेन तत्करणमित्युक्तमयुक्तमित्यलमतिविस्तरेण।

ननु घटप्रतियोगिकश्चरमध्वंसो न प्रत्यक्षः स्यात् इत्युक्तमयुक्तम्, पूर्वमेव घटस्य नष्टत्वेन तस्य ध्वंसमात्रप्रतियोगित्वात्। अन्यथा प्रागभावध्वंसानाधारकालत्वस्यापादकस्याभावेन तदुन्मज्जनप्रसङ्गानवकाशादित्याशङ्क्य [4]ध्वंसस्य घटप्रतियोगिकत्वं तत्प्रतियोगिकत्वं वा। तत्राद्यं पूर्वं निरस्तमित्यभिप्रेत्य द्वितीयमुत्था-

1. ख. घटोन्मज्जनप्रसङ्गात्
2. ग. व्यवस्थानुपपत्तिः
3. क. ०प्रयोजकत्वेन
4. ग. ध्वंसध्वंसस्य

परमाणुवृत्तिः स्यात् तथा च न प्रत्यक्षः। घटध्वंसस्य कपालसमवेतत्वे च न भूतले निरूपणं स्यात्। उभयवृत्तित्वे च व्यासज्यवृत्तित्वेन कपालं विना न निरूप्येत।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे समवायवादः

—: ※ :—

---

प्रकाशः

विरोधीति न घटोन्मज्जनापत्तिरित्यत आह—स्वस्वेति। न चेष्टापत्तिः। घटोऽन्त्यध्वस्त इत्यनुभवात् आद्यादिध्वंसस्य तदा नष्टत्वेन तदविषयत्वादिति भावः।

इति श्रीमद्रुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणि-
प्रकाशे प्रत्यक्षखण्डे समवायवादः

---

न्यायशिखामणिः

पयति—नन्विति। आद्येति। न चायमन्त्यध्वंसविषय एव। न चोपनीते परमाणौ संभवतीति वाच्यम्। तथा नियमेन तदुपनये मानाभावात्। उपनीत-विशेष्यकज्ञाने बहिरिन्द्रियस्यासामर्थ्याच्चेति भावः।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरीन्द्रविरचिते
न्यायशिखामणौ समवायवादः

# अथानुपलब्धिवादः

—:*:—

नन्वभावग्रहो नेन्द्रियात् । किं तु योग्यानुपलब्धेः, तदुपलम्भे तदभावाग्रहात् । न चैवं भावबुद्धिरपि अभावानुपलब्धेरेव नेन्द्रियादिति वाच्यम् । भावग्रहे इन्द्रियानुविधानात् । अन्यथा निमीलिताक्षस्यापि घटाभावानुपलब्ध्या घटग्रहप्रसङ्गः ।

---

प्रकाशः

भाट्टः प्रत्यवतिष्ठते—नन्विति । तथा च विशेषणता [1]न प्रत्यासत्तिरिति भावः । ननु कारणत्वे सिद्धे तस्याः करणत्वं कल्प्यम् । अतः तदेव व्यतिरेकेण दर्शयति—तदिति । अनुविधानमेवाह—अन्यथेति ।

---

न्यायशिखामणिः

ननु [2]गौरवेणातिरिक्ताभावानभ्युपगमात् अभ्युपगन्त्रा च नैयायिकैकदेशिना अनुपलब्धिप्रमाणत्वानङ्गीकारात् आशङ्कानुपपत्तिरित्यत आह—भाट्ट इति । संगतिमाह—तथा चेति । यद्यपि समवायवादे स एव प्रत्यासत्तिरित्युक्तमिति न तेन संगतिः । तथापि संनिकर्षवादे षट् प्रत्यासत्तय इत्युक्तम् । तत्र संयोगादिपञ्चकं भवतु प्रत्यासत्तिः । विशेषणता तु न तथेत्याक्षेपात् संगतिः । समवायवादे अभावे समवायो न प्रत्यासत्तिः, किं तु विशेषणतेत्युक्तम् । तदाक्षिप्यत इत्यनन्तरसंगतिः ।

नन्वनुपलब्धेः प्रमाकरणत्वं प्रतिज्ञाय कारणत्वग्राहकव्यतिरेकप्रदर्शनं न युक्तमित्याशङ्क्य, करणत्वसिद्धय एव कारणत्वप्रदर्शनमित्याह—नन्विति । नन्विन्द्रियानुविधानादित्यत्र तदन्वयव्यतिरेकानुविधानं विवक्षितमित्यग्रे तदेवोपपादनीयम् । [3]किमिति व्यतिरेकः प्रदर्श्यत इत्यशङ्क्य, अन्वयस्याकाशादिसाधारणस्य

---

1. ख. 'न' नास्ति ।
2. ग. गुणातिरिक्ताभावा-
3. ग. 'किमिति व्यतिरेकः......तथात्वादेवोपपादनीयः' इति ग्रन्थस्त्रुटितः

अत एव भावग्रहे अभावानुपलब्धिः पृष्ठलग्नापि न हेतुः इन्द्रियेणान्यथासिद्धत्वात् ।

प्रकाशः

अत एवेति । इन्द्रियहेतुत्वादेवेत्यर्थः । पृष्ठलग्नेति । [1]नियतान्वयानुविधानवतीत्यर्थः । ननु ग्राह्याभावग्रहस्य सामान्यत एव प्रतिबन्धकत्वात् [2]अभावानुपलब्धिर्न हेतुरित्यसंगतम् । न चाभावानुपलब्धिरपि योग्यताविशेषिता वाच्या । सा च प्रतियोगिग्राहकसाकल्यगर्भा । तथा च प्राथमिकभावग्रहे[3] अभावग्राहकप्रतियोगिस्मरणाभावान्न सा भावग्राहिकेति वाच्यम् । एतावतापि व्यभिचाराद्हेतुत्वं प्राप्तं न त्वन्यथासिद्धिरिति प्रकृतग्रन्थविरोधात् ।

न्यायशिखामणिः

कारणताग्रहे अननुविधेयत्वात् व्यतिरेकस्य तथात्वादेवोपपादनीय इत्यभिप्रेत्याह—अनुविधानमिति । व्यतिरेकानुविधानमित्यर्थः ।

घटग्रहप्रसङ्गस्यातश्शब्दार्थत्वे वैयधिकरण्यमित्यत आह—इन्द्रियेति । ननु पृष्ठलग्नेत्यत्रान्यथासिद्धत्वोक्तौ इन्द्रियेणेत्यत्र पुनस्तदभिधानं स्यादित्यत आह—नियतेति । नन्वभावग्रहे अनुपलम्भस्य हेतुत्वं निराक्रियते योग्यताविशेषितस्य वा । आद्य आह—ग्राह्येति । द्वितीयेऽपि प्रतियोगि[4]तद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवहितत्वरूपा सा विवक्षिता, प्रतियोगिसत्त्वप्रसञ्जनगर्भा वा । तत्राद्यमनूद्य निराकरोति—न चेति । यद्यपि प्रतियोगितद्व्याप्येत्यत्र तव्द्याप्यपदं तदुपलम्भासाधारणकारणपरम् । यथाश्रुते घटोपलम्भप्रागभावस्यापि योग्यताप्रवेशापत्तेः । तथा च प्रतियोगिस्मृतिरभावप्रत्यक्षासाधारणकारणमिति तदन्ययावत्समवधानमस्त्येवेति निरुक्तयोग्यानुपलब्धेर्न व्यभिचारः । तथाप्यभ्युपेत्याह—एतावतेति । प्रकृतग्रन्थेति । न चैतत् व्यभिचारस्याप्युपलक्षणमिति न विरोध इति वाच्यम् । नियतस्यैव सर्वत्रान्यथासिद्धत्वादिति भावः । अन्त्यं निरस्यति—

1. ख. अन्वयानु-
2. ख. अनुपलब्धिः
3. ख. भावग्रहे
4. क. तद्व्याप्यावत

## प्रकाशः

अत एव प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकाभावरूपानुपलब्धिर्हेतुर्वाच्या[1]। तेन तादृशापादनस्थल [2]एवाभावधीः। भावग्रहे च प्राथमिके अभावस्य तदानीमनुपलब्धत्वेन[3] तथा प्रसञ्जनाभावान्न सा हेतुरित्यपास्तम्।

[4]एवमपि व्यभिचारप्रदर्शनात् इन्द्रियेणान्यथासिद्धयप्रदर्शनात् प्रतिबन्धकाभावत्वेनाभावानुपलब्धिमात्रस्य[5] हेतुत्वे बाधकाभावाच्च।

अथ येन रूपेण भावानुपलम्भः कारणं तेन रूपेणाभावानुपलम्भोऽन्यथासिद्ध इत्यर्थः। तथा हि घटतादात्म्यग्रहे तदत्यन्ताभावतदाश्रयान्योन्याभावयोर्द्वयोरपि न ग्रह इति वस्तुगतिः। एवं तदुभयग्रहे न घटतादात्म्यग्रह इत्यपि। तथा चाभावग्रहे ग्राह्याभावानुपलम्भो ग्राहको न घटतादात्म्यग्रहे, तदुभयस्वरूपस्य ग्राह्यविरहस्वरूपत्वाभावात्। तद्वद्यदि तेनैव रूपेण [6]तदुभयाग्रहो घटतादात्म्यग्रहेऽपि कारणम्, तदा घटान्योन्याभावग्रहे सत्यपि तादात्म्यग्रहापत्तिः, अन्योन्याभावस्य तदभावत्वाभावात्। न हि यथा तादात्म्यमन्योन्याभावाभावः तथा अन्योन्याभावोऽपि तदभावरूपः, घटाप्रतियोगिकत्वापातात् संसर्गाभावत्वापत्तेश्च। यथा च [7]नैवमिष्टापत्तिस्तथा व्यतिरेकिणि वक्ष्यते। एवं च सानुपलब्धिर्भावग्रहे ग्राह्यविरोध्यनुपलम्भतया हेतुः न त्वभाववत् ग्राह्याभावानुपलम्भत्वेन, ताद्रूप्येणान्यथासिद्धत्वादिति।

---

## न्यायशिखामणिः

अत एवेति। व्यभिचारप्रदर्शने सति इन्द्रियेणेत्यादिग्रन्थविरोधादेवेत्यर्थः। तथा प्रसञ्जनाभावादिति। एतच्च तादृशप्रसञ्जनोपहितप्रतियोगिकत्वं योग्यतेत्यभिप्रायेण। वस्तुतस्त्विदमापाततः। तादृशप्रसञ्जनविषयत्वयोग्यत्वस्य तत्र विवक्षित-

---

1. ख. वाच्यः
2. क. एव भावधीः
3. क. ॰लम्भत्वेन
4. ख. 'एवमपि...सिद्धयप्रदर्शनात्' इति नास्ति।
5. ख. ॰त्वेनानुपलम्भमात्रस्य
6. ख. तदुभयग्रहो
7. क. नेष्टापत्तिः

**प्रकाशः**

मैवम्। एवमपीन्द्रियेत्यादिविरोधात्। तस्मात् तस्या एव मानत्वप्रसञ्जनस्य वज्रलेपत्वादिति चेत्—

अत्र वदन्ति। भावानुपलब्धिवदभावानुपलब्धिरपि हेतुरविशेषात्। न चाकरविरोधः। करणतायामन्यथासिद्ध्यभिधानात्। प्रमाणत्व एवाक्षेपेण तस्यैव समाधानौचित्यात्। न च वैपरीत्यमेवास्त्विति वाच्यम्। अभावानुपलम्भो न भावमात्रग्रहे कारणं व्यभिचारात्, [1]घटाभावग्रहेऽपि घटादिनिर्विकल्पकसंभवात्, समानप्रकारकत्वेन ज्ञानयोर्विरोधात्।

किंच सविकल्पकमपि स्यादेव। घटाभावस्य क्वचिदधिकरणे ग्रहेऽपि निरधिकरणस्य घटस्य प्रतीतेः। तथा च तदधिकरणनिष्ठभावग्रहे तन्निष्ठाभावानुपलम्भो हेतुर्वाच्यः। न तु सामान्यतः। तथा च सामान्यत इन्द्रियस्य प्रामाण्यकल्पनात् हेतुरप्यनुपलब्धिर्न प्रमाणम्, अन्यथासिद्धत्वात्। अभावधीस्तु

---

**न्यायशिखामणिः**

त्वात्। तादृशी च योग्यानुपलब्धि[2]रभावानुपस्थितावप्यस्त्येवेति बोध्यम्। उभयत्र दोषमाह—प्रतिबन्धकेति। एवमपीति। हेतोरप्यनुपलम्भस्य आकारान्तरेणान्यथासिद्धत्वेऽपीत्यर्थः। नन्वन्यथासिद्धसामान्यवचनं तद्विशेषपरतया व्यवस्थाप्यत इत्यतो न विरोधः। न च तावता तस्याहेतुत्वमुक्तमिति हेत्वङ्गीकारविरोधः, कुम्भकारपितृवदुभयसंभवादित्यरुचेराह—तस्मादिति। तस्या एवेति। ग्राह्यविरोध्यनुपलब्धेरेवेत्यर्थः।

जयदेवमतमाह—अत्रेति। ननु परमते निर्विकल्पकाभावात् सविकल्पकेति विशेषणाद्वा न व्यभिचार इत्यरुचेराह—किं चेति।

वयं त्विति। अत्रेदं चिन्त्यम्—अन्वयव्यतिरेकाभ्यां ग्राह्याभावानुपलब्धिरभावप्रत्यक्षे हेतुः। तत्र लाघवाद्विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति हेतुता न विशिष्य। गौरवात्। तथा च क्लृप्तत्वात् सा भावग्रहेऽपि हेतुः। न चात्र त

---

1. ख. 'घटाभावग्रहेऽपि' इति नास्ति।
2. ग. °रभावानुपलब्धावपि

न हीन्द्रियार्थसंनिकर्षे सति तां विना भावधीविलम्बः। अभाव-ग्रहेऽपीन्द्रियं हेतुः तदनुविधानादिति चेत्—न। अभावेन चक्षुरादेः प्राप्त्यभावेन आश्रयग्रहे तदुपक्षयात्।

---

प्रकाशः

निरधिकरणा नास्त्येव नापि निर्विकल्पिकेति अभावप्रत्यक्षत्वावच्छिन्नं प्रत्येव भावानुपलब्धिः कारणं करणं च, केनाप्यनन्यथासिद्धेरिति।

वयं तु ब्रूमः। 'पृष्ठलम्भा न हेतु'रित्यभिधानात् कारणतायामेवान्यथा-सिद्धिः पराभिमता। न च ग्राह्याभावग्रहस्य प्रतिबन्धकत्वात् अवश्यं तदभावो हेतुरिति वाच्यम्। उभयस्यासिद्धेः। न चैवं घटाभावग्रहेऽपि घटोपलम्भापत्तिः इदं हि घटाभाववति घटोपलम्भापादनं, घटवति वा। नाद्यः, [1]तत्र घटेन्द्रियसंनिकर्षाभावादेव तदुपलम्भासंभवात्। तदिदमाह—न हीन्द्रियार्थ-संनिकर्षे सति तां विना भावधीविलम्ब इति। न च तद्भ्रमापत्तिः, दोषा-भावादेव तदसंभवात्। नान्त्यः, घटवति तदभावग्रहस्य भ्रमत्वनियमेन तज्जनक-दोषस्यैव तत्प्रतिबन्धकत्वात्। न च विनिगमनाविरहः, दोषप्रतिबन्धकत्वस्याव-

---

न्यायशिखामणिः

ग्राह्याभावानुपलब्धिरेव क्लृप्ता न तु ग्राह्यविरोध्यनुपलब्धिरिति वाच्यम्। सापि प्रतियोगिप्रसञ्जनगर्भयोग्यताविशेषितैव तत्र हेतुर्वाच्या। अन्यथा जलपरमाणौ पृथिवीत्वाभावग्रहप्रसङ्गात्। तथा च [2]ग्राह्यविरोध्यनुपलब्धिरपि तथेति तेन रूपेण तत्र क्लृप्तैव। न च विशिष्टप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे निरधिकरणघटादि-प्रत्यक्षे व्यभिचार इत्युक्तमिति वाच्यम्। सर्वस्य लौकिकप्रत्यक्षस्य देशकालादि-घटितेदन्तादिप्रकारकत्वेन [3]आवश्यकाधिकरणविषयकत्वात्। अन्यथा प्रत्यक्षानन्तरं घटोऽत्र वर्तते न वेति संशयापत्तेः।

---

1. ख. 'तत्र घटेन्द्रिय......तदुपलम्भासंभवात्' इति ग्रन्थो न दृश्यते।
2. ग. ग्राह्यानुपलब्धिरपि
3. ग. अवश्यमधिकरण-

### प्रकाशः

श्यकत्वात् । भावानुपलम्भेऽपि तुल्यमिति चेत्—न । अभावेन परेण [1]प्राप्त्यनुगमेन तत्रेन्द्रियेणान्यथासिद्ध्यभावात् । तदिदमाह—अभावेन चक्षुरादेः प्राप्त्यभावादिति । तथा च घटप्रमायां [2]यत्र घटाभावधीस्तत्रेन्द्रियव्यतिरेकात् किं तु भावानुपलब्धिव्यतिरेकादिति तस्या एव हेतुत्वं प्रमाणत्वं च, अनन्यथासिद्धत्वात् । तदिदमुक्तं—तदुपलम्भे तदभावाग्रहादिति ।

यद्यपि घटवति तदभावग्रहस्य भ्रमत्वनियमेन तज्जनकदोषाभावात् विषयाभावाद्वा तदग्रहेऽन्यथासिद्धिः संभवति, तथापि क्रियायाः करणजन्यत्वनियमात् करणान्तरानुपपत्तौ तस्या एव करणत्वं कल्प्यते । नन्वेवमपसिद्धान्त इति चेत्-न । उक्तयुक्त्यवष्टम्भेन परस्यैवमेव सिद्धान्तात् । गङ्गेशस्य तत्र साक्षित्वात् । एवं च [3]यथाश्रुतग्रन्थे सुस्थे करणतायामन्यथासिद्धिरिति कुसृष्ट्या व्याख्यानं किमर्थमिति न विद्म इति ।

---

### न्यायशिखामणिः

[4]एतेन एकरूपेणानुपलब्धेर्भावग्रहेऽपि हेतुत्वे घटान्योन्याभावग्रहे तादात्म्यग्रहप्रसङ्ग इति निरस्तम् घटान्योन्याभावापादनेन तदुपलब्ध्यापादनसंभवेन [5]तस्यास्तादृशप्रतियोगिकतया प्रतिबन्धकत्वात ।

अस्तु वा तदधिकरणनिष्ठविरोध्यनुपलम्भस्तदधिकरणनिष्ठभावग्रहे हेतुः । न च प्रमाणाभावः । अन्वयव्यतिरेकयोः सत्त्वात । अन्यथा घटवति तदभावग्रहे घटधीप्रसङ्गात् । न च तस्य भ्रमत्वं नियमेन तज्जनकदोषस्यैव प्रतिबन्धकत्वादिति वाच्यम् । भ्रमपूर्वकाले दोषस्य प्रतिबन्धकत्वेऽपि [6]तत्स्थितिकाले तस्यैव प्रतिबन्धकत्वात् । अन्यथा यत्राभावभ्रमस्थितिकाले सादृश्यज्ञानादिदोषापगमस्तत्र प्रतियोगिप्रमाप्रसङ्गात् । न चैतावता भावप्रमायामेव तदभावो हेतुरायातीति सांप्रतम् । लाघवेन भावप्रत्यक्षत्वस्यैव कार्यतावच्छेदकत्वात् ।

---

1. ख. प्रत्यासत्त्यनभ्युपगमेन
2. ख. यत्र भावधीः
3. ख. यथाश्रुत एव ग्रन्थे ।
4. क. तेन
5. क. तस्याताहश-
6. ग. तदुपस्थितिकाले

अथाधिकरणधीरिन्द्रियव्यापारो न च तया तदन्यथासिद्धम्। अन्यथा संनिकर्षोपक्षीणतया इन्द्रियं न हेतुः स्यादिति चेत्—न। हेतुत्वे सिद्धे तद्व्यापारत्वम्। तदेव नास्ति, प्राप्त्यभावात्।

एतेन अधिकरणग्रहेन्द्रिययोः पृथगन्वयव्यतिरेकग्रहात् दण्डचक्रयोरिव हेतुत्वं द्वयोरिति निरस्तम्। प्राप्त्यभावेनाभावाग्राहकत्वात्। न चेन्द्रियं प्राप्तविशेषणमप्राप्तमपि गृह्णाति। संयुक्तसमवायाद्युच्छेदप्रसङ्गात् प्राप्तचैत्रगताप्राप्तदण्डस्यापि ग्रहप्रसङ्गात् इन्द्रियस्य प्राप्तग्राहकत्वाच्च। न च विशेषणता प्राप्तिः, अन्यत्र तदकल्पनात्। न च समवाये तत्कल्पनम्। तस्यानभ्युपगमात् तत एवातीन्द्रियत्वाद्वा।

---

प्रकाशः

प्राप्तविशेषणमिति। प्राप्ताश्रयमित्यर्थः। नन्वयोग्यत्वादेव नेन्द्रियग्रह इत्यत आह—इन्द्रियस्येति। अत्राप्ययोग्यत्वादेव न ग्रह इति भावः। इन्द्रियेति। करणव्यापारविषयतयैव कर्मत्वादिति भावः।

---

न्यायशिखामणिः

तस्मादव्यभिचारादनन्यथासिद्धेश्च भावानुपलब्धिवदभावानुपलब्धिरपि हेतुः। इन्द्रियेणेत्यादिमूलं च करणत्वाभिप्रायमेवेति दिक्।

आद्येऽप्यापादनं प्रमितेरप्रमाया वा। तत्राद्यं निराकृत्य द्वितीयं दूषयति—[1]न चेति। एवं सति जयदेवव्याख्यानं न युक्तमित्याह—एवं चेति। किमिन्द्रियं प्राप्तमभावं गृह्णाति अप्राप्तं वा। आद्येऽपि संयोगादिस्तत्प्राप्तिर्विशेषणता वा। तत्रान्त्यं न विशेषणतेत्यत्र निराकरिष्यते। आद्यं तु अभावेन चक्षुरादेः इत्यत्र निराकृत्य न चेत्यत्राप्राप्तिपक्ष उत्थापितः। तत्राधिकरणविशेष्यकाभावप्रत्यक्षसंग्रहाय विशेषणपदमाश्रयपरमित्याह—[2]प्राप्तेति। प्राप्तस्यैव तस्य योग्यत्वादिति भावः। ननु वायोरयोग्यत्वात् त्वगिन्द्रियानुविधानं [3]तद्(ग्रहण)ग्रहोपक्षीणम्। इह त्वनुमानसिद्धसंबन्धवतो भावस्य योग्यत्वाद्वैषम्यमित्याशङ्कायां किं चेत्युक्तम्। तर्हि

---

1. क. 'न चेति' इति न दृश्यते।

2. ग. अप्राप्तेति। 3. ग. तद्ग्रहोपक्षीणम

अथाभावस्य इन्द्रियग्राह्यत्वेन संयोगादिबाधे इहैव सा कल्प्यते, रूपादौ तद्बाधे संयुक्तसमवायादिरिवेति चेत्—

तत्रानुपक्षीणेन्द्रियानुविधानात् तथैव। इह स्वाश्रयग्रह एव तदुपक्षीण लाघवात्, न तु प्राप्त्यन्तरकल्पना, गौरवात्। अन्यथा त्वगनुविधानाद्रूपं विनापि वायुधीः प्रत्यक्षेति न सा स्पर्शलिङ्गग्रहे उपक्षीयेत। किं च विशेषणतायां इन्द्रियग्राह्यत्वं तेन सेत्यन्योन्याश्रयत्वम्। अपि च विशेषणता ग्राह्यस्वरूपमेव। न च त्वगादौ स्वरूपसंबन्धो हेतुः, किं तु यथायथं संयोगसमवायौ। न च तयोरन्योन्यव्यभिचारात् इन्द्रियं सबद्धं गृह्णातीत्येव व्याप्तिरिति वाच्यम्। दृष्टान्ते हि संबन्धिगतः संबन्धो हेतुः गृहीतः। चक्षुषि अन्यत्रापि तथा, न तु ग्राह्यस्वरूपम्। संबन्धस्य संबन्धिभिन्नत्वनियमात्। न हि स एव तद्वांस्तेनैव भवति।

---

प्रकाशः

किं चेति। रूपादाविन्द्रियग्राह्यत्वमुभयसिद्धम्, अत्र न तथेति भावः। दृष्टान्ते हीत्युत्कर्षसम इत्यत आह—संबन्धस्येति। व्याप्तिपुरस्कारान्न स इत्यर्थः[1]। ननु यदि न स्वरूपसंबन्धस्तदा तत्संबन्धं विना तदधिकरणत्वाभावात् अधिकर-

---

न्यायशिखामणिः

रूपादौ कथं नान्योन्याश्रय इत्यत आह—रूपादाविति। नन्वभावज्ञानमिन्द्रियजन्यं साक्षात्कारित्वात्। न चासिद्धिः। घटं साक्षात्करोमीतिवत् घटाभावं साक्षात्करोमीत्यनुभवात्। [2]तथा च नान्योन्याश्रय इत्यपरितोषात् अपि चेत्युक्तमिति द्रष्टव्यम्। उत्कर्षसम इति। यथा घटादौ शरीरकर्तृकत्वदर्शनमात्रेण क्षित्यादौ तदापादनमुत्कर्षसमः तथात्रापीत्यर्थः। अस्तु नियमस्तथापि कथं निरास इत्यत आह—व्याप्तीति। [3]शरीरकर्तृकत्वादौ न कार्यत्वस्य व्याप्तिरिति तत्र स इति भावः।

---

1. ख. ॰रान्न सेति भावः।
2. ग. तस्मान्नान्योन्या-
3. ग. 'शरीरकर्तृकत्वादौ न कार्यत्वस्य व्याप्तिरिति' इति ग्रन्थो नास्ति।

स्वरूपसंबन्धस्य हेतुत्वे च रूपादिग्रहोऽपि तत एवास्तु किं समवायादिना। अतः संयोगविशेषणते एव प्रत्यासत्ती इति षोढा कीर्तनमपि विफलम्।

एतेनालोकापेक्षणे चक्षुरपेक्षा तस्य तदेकसहकारित्वादिति निरस्तम्। प्राप्तिं विना चक्षुषोऽहेतुत्वात् आलोकस्य च प्रतियोगिग्राहकत्वेन योग्यताघटकतया अभावग्राहकत्वात्।

---

प्रकाशः

णग्रहे चक्षुरुपक्षय [1]इत्यपि विरुद्धमिति चेत्—न। यद्विशेषणकमभावज्ञानं तज्ज्ञानमेवाधिकरणज्ञानम्। [2]तद्विशेषणत्वं च संबन्धं विनैव क्वचित् तव स्वरूपसंबन्धवत् इत्याशयात्। यद्वा एतदसस्वरसादाह—स्वरूपेति। तदभ्युपगमेऽपि न तस्य हेतुत्वमित्यर्थः। एतेनेति। अभावग्रहस्येति शेषः। प्राप्तिं विनेति। तथा चावच्छेदकतया परंपराप्रयोजकतया कथंचिच्चक्षुरुपयोगे तदुपलम्भकसाकल्यरूपा योग्यता सिध्यत्येवेति भावः।

---

न्यायशिखामणिः

ननु संबन्धं [3]विनाप्यधिकरणत्वे मेरुगुहान्तर्वर्तिपदार्थानामेतद्भूतलमप्यधिकरणं स्यात्। संबन्धं विना अधिकरणत्वानिरुक्तिश्चेत्यस्वरसादाह—यद्वेति। ननु प्रतियोगितद्व्याप्येतरयावत्तदुप[4]लम्भकसहकारिसध्रीचीनत्वमेव योग्यता। [5]अत एवालोकस्य योग्यताघटकतया अभावग्राहकत्वादित्युक्तम्। तथा च प्रतियोगिग्राहकतया चक्षुरपि योग्यताप्रविष्ट[6]मित्यभावग्रहहेतुः। अन्यथा योग्यतयैवानुपलब्धिर्न सिध्येदित्याशङ्क्य, सहकारित्वप्रवेशे गौरवात् तत्समवधानस्य दण्डत्वादिवत् प्रयोजकतया ([7]तत्रोपयोग्युत्पत्तेर्न) [तत्रोपयोगोपपत्तेर्न दोष] इत्याह—तथा चेति। एवं चाभावग्राहकत्वादित्येतन्न प्रयोजकपरतया व्याख्येयम्।

---

1. ख. इत्यविरुद्ध-
2. ख. तद्विशेषणत्वसंभवविनैव तव
3. क. विना व्यधिकरणत्वे
4. क. ल्लम्भसहकारि-
5. क 'अत एवालोकस्य योग्यता' इति ग्रन्थो न दृश्यते।
6. ग. इत्यभावग्राहकतया योग्यतैवानुप-
7. ग. 'तत्रोपयोग्युत्पत्तेर्न......प्रयोजकपरतया' इति नास्ति।

न चैवं प्रतियोग्युपलम्भकत्वेन चक्षुरपि हेतुः। एवं हि तत्तद्व्याप्येतरतदुपलम्भकसाकल्ये अनुपलब्धिग्राहिका भवतीति वाच्यम्। प्राप्तिं विना तस्याहेतुत्वेनाश्रयग्रहोपक्षयात्।

नन्वेवमन्धस्य त्वगिन्द्रियोपनीते नीले स्मृतपीतस्यानुपलब्ध्या अभावग्रहप्रसङ्गः। प्रतियोगिग्राहकेन्द्रियग्राह्यत्वे त्वभावस्य नायं दोषः, अन्धस्य चक्षुरभावादिति चेत्—न। अभावग्राहकत्वेनाभिमतमिन्द्रियमाश्रयग्रहोपक्षाणम्। तथा च प्रतियोगिग्राहकेन्द्रियेण आश्रयग्रहे अनुपलब्ध्या अभावग्रहात्। अन्यथा चक्षुस्संयुक्ते परमाणौ जलत्वाभावग्रहप्रसङ्गः।

अथैवं वायौ रूपाभावो [1]जले तिक्ताभावः पाषाणे सौरभाभावश्च न गृह्येत। वाय्वादीनां प्रतियोगि[2]ग्राहकैश्चक्षुरादिभिरग्रहात्। न च तवापि तेऽभावाः कथं प्रत्यक्षाः, वाय्वादीनां तदिन्द्रियायोग्यत्वादिति वाच्यम्। लिङ्गेन त्वगादिना वा उपनीते वाय्वादौ योग्यरूपाद्यभावविशेष्यकं प्रत्यक्षं चक्षुरादिनैव न वाय्वादिविशेष्यकम्, प्रत्यक्षे योग्यविशेष्यस्य हेतुत्वादिति चेत्—न। वाय्वादौ रूपाद्यभावप्रतीतीनामनुपलब्धिलिङ्गकत्वात्।

---

प्रकाशः

अन्यथेति। अधिकरणज्ञानमात्रस्य तत्रापि संभवादिति भावः। लिङ्गेनेति स्वमते। त्वगादिनेति परमते। आद्यादिपदग्राह्यं चक्षुः अग्रिमादिपदग्राह्यं पाषाणादीति बोध्यम्।

---

न्यायशिखामणिः

ननु लाघवादधिकरणज्ञानं हेतुः, तत्र तदिन्द्रियजन्येति व्यर्थमित्याशङ्क्य अन्यथेत्युक्तम्। तत्र च परमाणाविन्द्रियसंयोगमात्रेणाभावप्रत्ययापादनमयुक्तमित्याशङ्क्य तज्ज्ञानसंभवस्थलाभिप्रायं तदित्याह—अधिकरणेति। न्यायमते त्वगादिनेत्यसंगतेराह—लिङ्गेनेति।

---

1. ख. गुडे 2. ख. ॰ग्राहकैरिन्द्रियैश्चक्षु॰

तत्र नीरूपो वायुरिति वायुविशेष्याभावप्रतीतिवत् ।

अथ भूतले अभावधीरिन्द्रियजन्या साक्षात्कारित्वात्, तत एव विशेषणताकल्पनमपि । न च साक्षात्कारित्वमसिद्धम् । परोक्षत्वे अज्ञातकरणकत्वानुपपत्तेः । तथा हि—मन्दिरोदरे चैत्रो [1]निपुणमनुसृतोऽपि न चोपलब्ध इत्याप्तवाक्यावगतानुपलब्ध्या श्रोतानुमिनोति नासीत्तत्र चैत्र इति । एवमभावधीः परोक्षा चेत् तदा नाज्ञातकरणिका, परोक्षत्वजातेः ज्ञातकरणप्रयोज्यत्वात् । ज्ञातकरणत्वं च ज्ञानकरणत्वम्, लिङ्गादेरजनकत्वात् । तस्मात् साक्षात्कारित्वम् अज्ञातकरणत्वात् । न चेन्द्रियजन्यत्वमुपाधिः, तत एव तत्साधनादिति चेत्—

---

प्रकाशः

तत एवेति । तथा च न पूर्वोक्तान्योन्याश्रयः । परोक्षत्व इति । न च [2]ज्ञातपदमफलम्, विरोधस्फुरणमात्रार्थत्वात् । एवमिति । यद्यपि भावधियोऽपि परोक्षाया ज्ञातकरणत्वेनेष्टसिद्धेस्तदुपादानमफलम्; तथाप्येवमपीष्टसिद्ध्यविरोधान्न दोषः । नाज्ञातकरणिका—स्यादिति शेषः । अज्ञातेति । अज्ञात[3]करणकानुभवत्वादित्यर्थः । न चेति । इन्द्रियत्वेन इन्द्रियजन्यत्वमित्यर्थः । तेन मनोजन्यतया [4]न साधनव्यापकत्वमिति भावः । तत एवेति । तथा च साधनव्यापकत्वमिति भावः ।

---

न्यायशिखामणिः

नन्विन्द्रियजन्यत्वानुमाने [5]तत्संबन्धजन्यत्वमुपाधिरित्याशङ्क्य, तदपि साक्षात्कारित्वादेव साध्यत इति न युक्तम् । इन्द्रियजन्यत्वादेरपि लिङ्गत्वसंभवादेवकारवैयर्थ्यमित्यत आह—तथा चेति । परोक्षत्वे [6]ज्ञातकरणत्वं स्यात् न त्वज्ञातकरणत्वमित्युक्तम्, तत्राद्यापादनवैयर्थ्यमित्याशङ्क्य निराकरोति—न

---

1. ख. निपुणतरतयानुसृतोऽपि
2. क. ज्ञातपदं फलम्
3. क. °कारणका-
4. ख. 'न' नास्ति ।
5. क. तत्संबन्धत्वम् ।
6. ग. ज्ञातकरणं

**प्रकाशः**

ननु तत एवेत्यत्र तत्पदं यद्यज्ञातकरणत्वपरम्, तदा साक्षात्कारित्व-साधनवैयर्थ्यम्। तेन साधनीयस्येन्द्रियजन्यत्वस्य प्रकृतस्य तत्पूर्वमेव सिद्धेः तत्रापि [1]साक्षात्कारित्वस्यैवोपाधित्वाच्च। यदि साक्षात्कारित्वपरं, तदा अन्योन्याश्रयः। तत्र साक्षात्कारित्वसिद्धौ उपाधित्वज्ञानविरहः, तेनेन्द्रियजन्यत्वे साधिते तस्य [2]साधनव्यापकत्वात् तस्मिंश्च सत्यज्ञातकरणत्वेन साक्षात्कारित्व-सिद्धिरिति।

मैवम्। अज्ञातकरणत्वे यदेन्द्रियजन्यत्वव्याप्यत्वसंदेहः साक्षात्कारित्व-व्याप्यत्वस्य तर्केण निश्चयस्तदा तेन साक्षात्त्व[3]मनुमेयं तस्मादिन्द्रियजन्यत्वमित्याशयात्। न च तदेन्द्रियजन्यत्वस्योपाधित्वसंदेहात् कथं तत्र साक्षात्कारित्वानुमान स्यादिति वाच्यम्। हेतोः साध्यव्याप्यत्वनिर्णये तदव्यापकत्वेन तस्य साध्या-व्यापकत्वनिर्णयादित्याहुः।

---

**न्यायशिखामणिः**

**चेति।** **अनुभवत्वादिति।** तथा च स्मृतौ न व्यभिचार इति भावः। तथापि साध्याव्यापकत्वं क्षुण्णमित्यत आह—**तथा चेति।**

**तेनेति।** साक्षात्कारित्वेनेत्यर्थः। उपाध्यायसमाधिमाह—**मैवमिति।** ननूपाधिनिराकरणाय[4] तेनेन्द्रियजन्यत्वानुमानं [5]न स्यादित्यत आह—**साक्षात्कारित्वेनेति।** तथा च [6]तद्व्याप्यहेत्वव्यापकत्वेन उपाधेः साध्याव्यापकत्वमित्याशयः। इममाशयमजानानस्य शङ्कां तदुद्घाटनेन निरस्यति—**न चेति।** ननु तर्केणैवोपाधिनिरासेऽज्ञातकरणत्वेनेन्द्रियजन्यत्वानुमानस्यानपेक्षितत्वात् तत एवेति मूलानार्जवापत्तिरित्यस्वरसं सूचयति—**आहुरिति।** वस्तुतस्तु [7]तत्पदमज्ञात-करणत्वपरमेव। [8]यदा साक्षात्कारित्वस्य नेन्द्रियजन्यत्वव्यापकत्वनिश्चयस्तदैवमनु-मानमिति न तदुपाध्यवकाशः। न च तत्साधनवैयर्थ्यम्। इन्द्रियजन्यत्वे

---

1. क. साक्षात्त्वस्य
2. ख. साधनाव्यापकत्वात्
3. ख. °मनुमाय
4. ग. °निरासाय
5. ग. 'न' नास्ति।
6. ग. तद्व्याप्यहेतुव्याप्यत्वेन
7. ग. तद्वदज्ञात-
8. क. यथा

मैवम्। परोक्षत्वं हि न जातिः, अनुभवत्वेन संकरप्रसङ्गात्। किं तु साक्षात्कारिभिन्नज्ञानत्वम्। एवं चाभावज्ञानं परोक्षमेव स्मृतिवत्। यथा च ज्ञातकरणत्वेऽपि शाब्दादिः नानुमितिः, एवमज्ञातकरणत्वेऽपि इन्द्रिय-जन्यं साक्षात्कार्यनुपलब्धिजन्यम्, तद्विजातीयमनुपलब्धम्। यदि चाज्ञातकरणत्वेन साक्षात्कारित्वं तदा ज्ञातकरणत्वेन शाब्दादेरनुमिति-त्वापत्तिः। ज्ञातकरणत्वेऽपि लिङ्गादिकरणभेदात् अनुमित्यादिफलभेद इति चेत्—अज्ञातानुपलब्धीन्द्रियकरणभेदात् फलभेद इहापि। एवं च साक्षात्कारित्वे इन्द्रियजन्यत्वं परोक्षत्वे च तदजन्यत्वं प्रयोजकम्, न तु ज्ञाताज्ञातकरणजन्यत्वम्, गौरवात् स्मृतावभावाच्च।

प्रकाशः

गौरवादिति। कथमत्र गौरवम्। प्रत्युतेन्द्रिय[1]जन्यत्वस्याभावघटित-त्वादिति चेत्—न। स्मृतिभिन्ने[परोक्षे]तत्प्रयोजकं परोक्षमात्रे वा। आद्ये गौरवा दिति। स्मृतौ तत्प्रयोजकमन्यत्कल्प्यम्, इदं तूभयसाधारणमिति लाघवमित्यर्थः। अन्त्ये स्मृतावभावादित्यन्ये। [यद्वा] एतदस्वरसादाह—स्मृताविती त्यपरे।

न्यायशिखामणिः

[2]विवदमानस्य साक्षात्कारित्वेऽपि विवादेन तस्याप्युद्देश्यत्वात्। न च [तत एवेत्यत्र] साक्षात्कारित्वेन तदनुमानमुक्तम्, तदेवं सति [3]व्यर्थमिति वाच्यम्। इन्द्रियजन्यत्वस्य यदा न साध्यव्यापकत्वनिश्चयः तदा तदुपाधित्वनिरासाय [4]अज्ञातकरणत्वेन तदनुमानं न क्रियते, किं तु तेन साक्षात्कारित्वं प्रसाध्य तेनैव तदित्याशयात्।

इन्द्रियजन्यत्वापेक्षया [5]ज्ञानाकरणकत्वे भवतु गौरवम्, [6]ज्ञानकरणकत्वे तु तत्कथमित्याशङ्कते—कथमिति।

1. क. व्याजन्यत्वस्य
2. क. विद्यमानस्य
3. ग. व्यर्थं स्यादिति
4. क. ज्ञात-
5. क. ज्ञानाकरणत्वे
6. क. ज्ञानकरणत्वे

नन्वनुपलब्धिर्न मानम्, भावभूतमानसहकृतस्यैव मनसो बाह्यानुभवजनकत्वादिति चेत्—न। भावत्वस्य गुरुत्वेनाप्रयोजकत्वात्। अन्यथा इन्द्रियसहकृतस्यैव मनसो बाह्यानुभवजनकत्वमित्यनुमानादि न मानं स्यात्। न चेदमभावज्ञानं भावमानसहकृतमनस्साध्यं बाह्याभावज्ञानत्वाल्लिङ्गादिजन्याभावज्ञानवदिति वाच्यम्। अयमभावो नेन्द्रियग्राह्यः अभावत्वादयोग्याभाववत्, इयमभावबुद्धिर्नेन्द्रियजन्या अभावबुद्धित्वात् लिङ्गादिजन्याभावबुद्धिवत् इति सत्प्रतिपक्षात्।

---

प्रकाशः

बाह्येति। ज्ञानपदमनुभवपरम्, अतो न स्मृतिमादाय दोषः। बाह्यपदं च ज्ञानाभावादि[1]ज्ञानवारणाय। बाह्येत्यस्याभावविशेषणतया नाभावपदवैयर्थ्यम्। न चाभावलिङ्गकानुमितौ व्यभिचारः। तत्र तज्ज्ञानस्यैव मानत्वेन साध्यवत्त्वात्। जन्यपदमपि विशेषणम्। अतो नेश्वरज्ञाने व्यभिचारः।

---

न्यायशिखामणिः

[2]साम्यमभ्युपेत्योक्तम्, वस्तुतो विपरीतमेव तदित्याह—प्रत्युतेति। तथाप्युक्तं विपरीतगौरवमनपाकृतमित्यत आह—यद्वेति। स्मृताविति। [3]अस्मिन् पक्षे गौरवादित्येतत् परोक्षत्वप्रयोजकनिराकरणपरमेव। न चोक्तदोषः। अत एवास्वरसाद्दोषान्तराभिधानात्। न च संस्कारद्वारा अनुभवस्य [4]करणत्वात् कथं तत्र तदभाव [5]इति वाच्यम्। तत्र मनःकरणत्वपक्षे तदभिधानात्। वस्तुतस्तु—[6]ज्ञानाकरणकत्वस्य प्रयोजकत्वाभावे गौरवं हेतुः। ज्ञानकरणकत्वस्य परोक्षत्वप्रयोजकत्वाभावे स्मृतिव्यावृत्तिरित्यपि योज्यम्। न तु प्रत्येकं हेतुद्वयम्। ज्ञानकरणत्वस्य लघुत्वेनाद्यहेत्वनुपपत्तेः[7]। अपरोक्षत्व[8]प्रयोजकस्मृतिव्यावृत्तेरदोषत्वादिति बोध्यम्।

---

1. ख. ॰ज्ञानाभावाय
2. ग. सामान्यम्
3. क. 'अस्मिन्पक्षे......दोषान्तराभिधानात्' इति ग्रन्थस्त्रुटितः।
4. ग. कारणत्वात्
5. ग. इति दोषान्तरमप्युक्तमिति वाच्यम्।
6. ग. 'ज्ञानाकरणकत्वस्य......हेतुद्वयम्' इति ग्रन्थस्त्रुटितः।
7. क. हेतुत्वमनुपपत्तेः
8. क. ॰प्रयोजकस्य स्मृति॰

अथ प्रतियोगिग्राहकं मानं तदभावमपि गृह्णाति यथा अनुमानादि, प्रतियोगिग्राहकं चेन्द्रियम्, अतोऽभावग्राहकमिति चेत्—न। भावग्राहकयोरेव लिङ्गशब्दयोस्तदभावाग्राहकत्वात्। प्रतियोगिग्राहकजातीयं मानं तथेति चेत्—न। उपमाने व्यभिचारात्। न च चक्षुष्ट्वादिकमभावग्राहकवृत्ति जातित्वात्, उपमानत्वं च न जातिरिति वाच्यम्। प्राप्तिं विना चक्षुरादेरभावग्राहकत्वसाधनात्।

प्रकाशः

व्यक्त्यभिप्रायेणाह—भावेति। उपमान इति। यद्यप्यभावपदशक्तिग्राहकोपमानसत्त्वान्नैवम्, तथापि सिद्धसाधनभिया मानान्तराप्रवृत्तिपूर्वकग्रहणमत्र विवक्षितमित्ययं व्यभिचारो बोध्य इत्याहुः। न चेति। ननु चक्षुरादेर्लिङ्गतया [1]अभावग्राहकतया अर्थान्तरम्। न च तज्ज्ञानं ग्राहकं न तु तदिति वाच्यम्। दृष्टान्तासिद्धिप्रसङ्गात्। तन्मते तत्रापि शब्दज्ञानस्यैव तथात्वात्। मैवम्। (उभय-

न्यायशिखामणिः

या प्रतियोगिग्राहिका [2]व्यक्तिः सा तदभावं गृह्णातीति विवक्षितम्, तज्जातीयमिति वा। तत्राद्यं निराकरोतीत्याह—व्यक्तीति। यद्यपि तस्या एव धूमव्यक्तेर्मशकाभावग्राहकत्वान्न व्यभिचारः। तदभावेति विवक्षायां वह्न्यभावव्याप्यत्वभ्रमे तस्याः तदभावग्राहकत्वात्। तथापि प्रमागर्भसाध्याभिप्रायं तदिति बोध्यम्। यद्यपीति। अभावत्वावच्छिन्नोऽभावपदवाच्य इति ग्रहे गृह्यमाणस्य केवलाभावस्याप्यभावकोटिप्रविष्टतया विषयत्वात् ग्राहकस्यावश्यं तदभावग्राहकत्वमित्यर्थः। जयदेवसमाधिमाह—तथापीति। सिद्धसाधनेति। इन्द्रियस्यापि मानान्तरोपनीताभावग्राहकत्वात् यथाश्रुते सिद्धसाधनमिति तन्निवृत्त्यर्थं मानान्तरानपेक्षाभावग्राहकत्वं वाच्यम्। उपमानस्य चातथात्वान्न व्यभिचार इति भावः।

नन्वेवमपि भावग्राहकलिङ्गादिव्यक्तौ व्यभिचारः, तस्याः प्रतियोगिग्राहकजातीयत्वात् भेदगर्भजातीयत्वस्य गौरवेण [3]विपक्षानर्हत्वात् पक्षे तद-

1. क. 'अभाव' इति नास्ति।
2. ग. वृत्तिः
3. क. विपक्षा-

अथ भाववृत्त्यभावभ्रमः स च करणदोषात्। न च प्रतियोगिस्मृत्याश्रयग्रहानुपलब्धयः स्वरूपतो दुष्टाः, किं तु इन्द्रियं पित्तादिना दुष्टमिति तदेव च भ्रमहेतुरित्यभावप्रमायामपि तदेव मानमिति चेत्—

---

प्रकाशः

ग्राहकपदेन) [ उभयत्रापि ग्राहकपदेन ] (लिङ्गाभावेन) [लिङ्गभावेन] ग्राहकत्वस्य विवक्षितत्वादित्याहुः।

हेतौ ग्राहकपदं ग्रहणकरणपरम्। एवं च विषयतया स्वग्राहकवृत्तिघटत्वादौ न व्यभिचारः। भावपदं चिन्त्यम्। जातिपद[1]व्यावर्त्यमाह—उपमानत्वं चेति। तस्य सादृश्यत्वरूपोपाधित्वादित्यर्थः। [2]यद्यपि श्रोत्रत्वस्य जातिरूपत्वाभावात् [3]तत्र नायं प्रकारः, तथापि तत्र प्रकारान्तरमनुसन्धेयमिति भावः।

---

न्यायशिखामणिः

भावाच्च। यदि च प्रतियोगिग्राहकत्वमेव लिङ्गम्। साध्यं त्वधिकरण[4]विशेषणाभावग्रहजनकजातीयत्वं विवक्षितमिति न व्यभिचारः। [5]तदा अभावपदसंकेतग्राहकस्याप्यधिकरणौदासीन्येनैवाभावग्राहकतया तत्रोक्तसाध्याभावेन व्यभिचारोपपत्तौ मानान्तरेत्यादिविवक्षावैयर्थ्यमित्यस्वरसं सूचयति—आहुरिति। उभयत्रापीति। [6]अभावग्राहकवृत्तिधूमत्वे विवक्षितसाध्याभावाद्व्यभिचार इति हेतावपि ग्राहकपदं लिङ्गज्ञानत्वाव[7]च्छिन्नजनकताकज्ञानविषयपरमिति भावः। हेताविति। एतच्चापाततः। घटस्याप्यधिकरणतया तथैवाभावग्राहकतया घटत्वादौ साध्यसत्त्वेन यथाश्रुते दोषाभावात्। भावपदमिति। तद्धि अभावमात्रग्राहकवृत्त्यनुपलब्धित्वे व्यभिचारवारणाय। तत्र च [8]साध्यसत्त्वात्, जातित्वाभावेन हेत्वभावाच्च वैयर्थ्यमिति भावः।

---

1. क. °व्यावर्तिमाह
2. क. यदि श्रोत्रत्वस्य
3. ख. 'तत्र' इति नास्ति।
4. क. °विशेष्यकाभावग्रहणातीयत्वं
5. ग. अन्यथा
6. क. भावग्रहावृत्तिधूमत्वे
7. ग. °च्छिन्नाहार्यजनकताक-
8. क. साध्यत्वात्

न। इन्द्रियस्यापि दुष्टत्वं, दोषसाहित्यमात्रम् न त्वन्यत्। तच्चानुपलब्धावपि तुल्यम्। न च ज्ञातकरणाजन्यभ्रमत्वेन इन्द्रियजन्यत्वम्। एवं हि अभावप्रमाकरणत्वमपीन्द्रियस्य तत एवास्तु किमनया कुसृष्ट्या। एवमस्तु इति चेत्—न। प्राप्त्यभावेनोक्तोत्तरत्वात्। किं चासंनिकृष्टेऽपि दोषादुपनीतेऽभावे भ्रम इन्द्रियेण संभवति, चक्षुषा पाषाणः सुरभिरिति भ्रमवत्। अभावप्रमा न संभवति प्राप्त्यभावादित्युक्तम्।

ननु अधिकरणाभावयोर्विशिष्टबुद्धिरस्ति। सा नेन्द्रियजन्या अभावबुद्धित्वात्, नानुपलब्धिजन्या भावबुद्धित्वात्, नोभयजन्या जातिसंकर-

---

न्यायशिखामणिः

ननु कस्यचिदुपमानस्य [1]तदभावग्राहकत्वात् तद्वृत्त्युपमानत्वे साध्यसत्त्वेन जातिपदाभावेऽपि [2]न व्यभिचार इत्याशङ्क्य, सिद्धसाधनवारणाय साध्ये पूर्वोक्तविवक्षावश्यकत्वात् व्यभिचार इत्याशयेनाह—जातीति। ननु सादृश्यं जातिरूपम्, सामान्यान्येव भूयांसीत्यभ्युपगमादित्याशङ्क्य, [3]तद्धि ज्ञायमानकरणमिति तद्वृत्ति[4]सादृश्यत्वमेवोपमानत्वं वाच्यम्। तत्तु सामान्यवृत्तितयोपाधिरित्याह—तस्येति। प्रकारान्तरमिति। [5]श्रोत्रत्वमभावग्राहकवृत्ति इन्द्रियवृत्तित्वात् प्रमेयत्ववत् इत्यादिरूपमित्यर्थः।

[6]नन्वभावभ्रमो दुष्टकरणजन्यः भ्रमत्वात्। अनुपलब्धौ च पित्तादिदोषाभावान्न तयार्थान्तरमिति तस्येन्द्रियजन्यत्वसिद्धिरित्यर्थेत्यादिनाशङ्क्य, न हि दोषाश्रयत्वं [7]दुष्टत्वम्, सादृश्यरागादेरिन्द्रियावृत्तित्वात्। किं तु तत्साहित्यमित्यर्थान्तरमित्युक्त्वा [8]न चेत्यादिना अभावप्रमाभ्रमाविन्द्रियजन्यौ ज्ञातकरणाजन्यज्ञानत्वादित्यनुमानं प्राप्त्यभावेन बाधितमित्युक्तमयुक्तम्। रजतभ्रमवद्दोषादेव तद्भ्रमसंभवात् तन्मात्रपक्षीकारेण चोक्तन्यायेन तत्रेन्द्रियजन्यत्वसिद्धौ तद्दृष्टान्तेन

---

1. ग. तदग्राहकत्वात्
2. ग. 'न' नास्ति।
3. क. सिद्धिर्ज्ञायमान-
4. ग. °सादृश्यमेवोप-
5. क. श्रोत्रत्वममावृत्ति-
6. क. न त्वभाव-
7. क. सादृश्यम्
8. ग. न चेत्यत्र ज्ञानकरणाजन्यत्वेनाभावभ्रमस्येन्द्रियजन्यत्वात् एवमित्यनेन च तेनैव तत्प्रमाभ्रमयोः तज्जन्यत्वमाशङ्क्य प्राप्त्यभावेन

प्रसङ्गात् । अत उभयग्राहकमिन्द्रियमभ्युपेयमिति चेत्—अभाववद्भूतलमित्यनुपलब्ध्युपनीताभावविशिष्टबुद्धिरिन्द्रियेणैव चक्षुषा चन्दनं सुरभीतिवत् । भूतले घटो नास्तीति च चक्षुरुपनीतभूतलेऽभावबुद्धिरनुपलब्ध्यैव, घ्राणेन चन्दने सौरभमितिवत् ।

यत्तु व्यापाराभावान्नानुपलब्धिः प्रमाणम्, व्यापारवत एव करणत्वादिति । तन्न । क्रियया अयोगव्यवच्छेदेन संबन्धि करणं न तु व्यापारवदित्यपि विशेषणं गौरवादिति ।

अत्रोच्यते । प्रतियोगिग्राहकेन्द्रियेणाश्रयग्रहो न हेतुः, प्राङ्नास्तिताग्रहे तु (अन्वयेन) [त्वन्नयेन] व्यभिचारात् । वाय्वादौ च रूपाद्यभावधीरिन्द्रियजन्यैव, नानुपलब्धिलिङ्गजन्या, अनुपलब्धेरज्ञानात् । आप्तवाक्यस्येव तज्ज्ञापकस्याभावात् ।

---

प्रकाशः

अभावप्रमेति । यद्यप्युन्नयात् तत्प्रमापि संभवति, तथापि तद्विशेष्यकप्रमा न संभवति विशेष्येन्द्रियसंनिकर्षस्य हेतुत्वादित्यर्थः ।

त्वन्नयेनेति । मम तु तत्रानुमानस्वीकारेण कार्यवैजात्यात् तव तु तत्राप्यनुपलब्धिस्वीकारात् व्यभिचार इति भावः । व्यभिचारस्थलान्तरमाह—वाय्वादाविति । आप्तेति । यथा मन्दिरोदर इत्यादिवाक्यं तज्ज्ञापकं तथात्र नास्तीत्यर्थः । नन्वपसिद्धान्तादि न वस्तुदोषः । किं तु पूर्वापराभ्युपगमव्याघातेन

---

न्यायशिखामणिः

प्रमायामपि तत्साध्यत इत्याशङ्क्य किं चेत्यादिना अभ्युपेत्याभावभ्रमे तज्जन्यत्वं, प्रमायां न संभवतीत्युक्तम् । तत्र शङ्कते—यद्यपीति ।

ननु [1]न्यायनये कथं न व्यभिचारः तत्रेन्द्रियाभावादित्यत आह—मम त्विति । न्यायमते व्यभिचारसाम्यमित्यस्वरसादुदाहरणान्तरमिति कस्यचिद्व्याख्यानं

---

1. ग न्यायमते

अथाज्ञातैव रूपाद्युपलम्भस्यानुपलब्धी रूपाद्यनुपलब्धिं गृह्णाति भूतले घटाभावमिवेति चेत्—त्वन्मते उपलम्भस्यातीन्द्रियत्वेन योग्यानुपलब्ध्या उपलम्भाभावस्य ग्रहीतुमशक्यत्वात्। अनुपलब्धिमात्रस्याभावाग्राहकत्वात्। अस्तु तर्हि ज्ञानं योग्यमिति चेत्—न। अपसिद्धान्तात्। योग्यत्वेऽपि भूतलीयघटाभावेऽपि ज्ञातैव योग्यानुपलब्धिर्लिङ्गमस्तु, योग्यघटोपलम्भस्यानुपलब्ध्या ग्रहसंभवात् कृतमनुपलब्ध्या मानान्तरेण।

घटाभावधीरज्ञातकरणिका लिङ्गाद्यनुसन्धानं विना जायमानत्वादिति चेत्—न। वाय्वादौ रूपाद्यभावप्रतीतिरपि तथा। अथ रूपादिमत्तया ज्ञातत्वाभावः तदनुमितरूपवत्तानुपलब्धिर्वा लिङ्गमिति चेत्—न। वाय्वादौ ज्ञातत्वाभावस्यापि रूपाद्यभावतुल्यतया ग्रहीतुमशक्यत्वात्। वाय्वादौ तस्य

---

प्रकाशः

वादिदोषः। तथा च योग्योपलम्भवादिनामनुपलब्धिर्मानान्तरं स्यादेव बाधकाभावात्, अतो दोषान्तरमाह—योग्यत्वेऽपीति।

मानान्तरेणेति। घटाभावादिग्राहकेणेति शेषः। अन्यथोपलम्भानुपलम्भस्यै[स्ये]वानुपलम्भग्राहकस्यैव मानान्तरत्वस्वीकारेण विरोधापत्तेः। अपसिद्धान्तं परिहर्तुमाह—अथेति। ज्ञातता तन्मते योग्यैवेति तदभावो योग्यानुपलब्धिग्राह्य एवेति भावः। प्रतियोगिग्राहकेन्द्रियजन्याधिकरणग्रहाभावात् ज्ञातता-

---

न्यायशिखामणिः

तत्साम्यनिराकरणादयुक्तमित्याशयेनाह—व्यभिचारेति। [1]यद्वा—ननु रूपाभावप्रतीतेर्लैङ्गिकत्वनिराकरणमयुक्तम् तत्रानुपलब्धेरलिङ्गभावेनैव[2] प्रमाणत्वादित्याशङ्क्य तर्हि व्यभिचार इति तात्पर्यमाह—व्यभिचारेति।

ननु घटाभावग्रहे [3]लैङ्गिकत्वप्रसङ्गानुद्धारात् (तथे) [अथे]त्याशङ्कानुपपत्तिरित्याशङ्क्य अपसिद्धान्तनिराकरण एव तात्पर्यमित्याह—अपसिद्धान्तमिति। ननु

---

1. क. 'यद्वा' इति नास्ति।
2. क. ॰रलिङ्गभावेनैव
3. क. लौकिकत्वं-

प्रत्यक्षत्वे रूपाद्यभावोऽपि तथास्तु। नापि कायवाग्व्यवहाराभावेनानुपलब्धिरनुमीयते। उपेक्षाज्ञानमूकस्वप्नयोर्दर्शनेन व्यभिचारात्। न च व्यवहाराभावमात्रं लिङ्गम्। कस्यचित् व्यवहाराभावस्य व्यभिचारात्, सर्वव्यवहाराभावस्य ग्रहीतुमशक्यत्वात्।

किं च घटवत्तया ज्ञातत्वाभावेन तदनुमितानुपलब्ध्या वा लिङ्गेन भूतलादौ अभावानुमितिरस्तु, किं मानान्तरेणानुपलब्ध्या। अपि च प्रतियोगिग्राहकेन्द्रियजन्यमधिकरणज्ञानं अनुपलब्धिसहकारि तदा स्यात् यदि तेन विना सा नाभावं बोधयेत्। न चैतदृष्टम्। वाय्वादौ रूपाद्य-

---

**प्रकाशः**

विरहोऽपि तव नानुपलब्धिग्राह्य [1]इत्याह—वाय्वादाविति। प्रत्यक्षत्वे—स्वरूपसदनुपलब्धिग्राह्यत्वे। तथा चोक्तव्यभिचारः सुदृढ एवेति भावः।

ननु व्यवहारसामान्याभावो लिङ्गम्। उपेक्षास्थले च यत्किंचिद्व्यवहारसत्त्वान्न व्यभिचार इत्याशङ्क्य निराकरोति—न चेति। यद्वा—इतोऽपि तस्य न लिङ्गत्वमित्याह—न चेति। नन्वेवमपि ज्ञाततावरहग्राहकतयैवानुपलब्धिर्मानान्तरं स्यादित्यनुशयादाह—अपि चेति। नन्वन्धस्येत्यादिप्रागुक्तयुक्तेरेव

---

**न्यायशिखामणिः**

ज्ञाततावरहस्यानुमेयत्वेऽनवस्था। अनुपलब्धत्वे रूपाद्यनुपलब्ध्या किमपराद्धमित्यत आह—ज्ञाततेति। ननु व्यवहाराभावलिङ्गेनाप्तवाक्येन वा ज्ञाततावरहस्य ग्रहसंभवान्नाग्राह्यता। नापि तत्तुल्यता, रूपाप्रतियोगिकत्वादित्यत आह—प्रतियोगीति। इन्द्रियग्राह्यत्वानभ्युपगमादाह—स्वरूपेति। इष्टापत्तिमाशङ्क्याह—तथा चेति। नन्वेवं व्यवहारसामान्याभावस्य लिङ्गत्वे कस्यचित् सर्वस्यैव वेति विकल्पानवकाश इत्यस्वरसादाह—यद्वेति। इति बहवः। तत्तुच्छम्। वायुर्न रूपोपलब्धिविषयः तद्व्यवहाराभावात् इत्याशङ्किते कायिकादिवत् किंचिद्व्यवहाराभावो न लिङ्गम्। उपेक्षाज्ञानादिस्थले व्यभिचारेण सामान्यव्याप्त्यसिद्धेः। किं तु

---

1. ख. इत्यत आह

भावे तथा दृष्टमिति चेत्—न। असिद्धेः। न च व्याप्तिबलात्सहकारित्वम्। एवं हि वाय्वादौ रूपाद्यभावप्रत्ययोऽनुपलब्धेर्भवंस्तादृशाश्रयमाक्षिपेत्। अनाक्षेपे वा अनुपलब्धेर्न भवेत्। ततो न भवति, किं तु लिङ्गादिति चेत्—लिङ्गमपि सैव, तच्च दूषितमेव।

किं च नानुपलब्धिर्लिङ्गम्। ततो हि नोरूपो वायुरित्यनुमितिः स्यात् न तु वायौ रूपाभाव इति।

अपि च घटवत्युपलम्भप्राक्कालेऽनुपलब्ध्या घटस्मृतिमतः कुतो नाभावधीः। (घटाभावादिति)[घटाभावाभावादिति] चेत्—तर्हि अभावरूपार्थजन्याभावबुद्धिरर्थजन्यत्वेन साक्षात्कारिणी इन्द्रियजन्या च स्यात्। तदा घट एव प्रतिबन्धक इति चेत्—तथापि तदभावोऽभावबुद्धौ जनक एव स्यात्।

---

प्रकाशः

तस्य तत्सहकारित्वम्। न च प्रतियोगिग्राहकेन्द्रियविलम्बादेव [1]तद्विलम्बोऽन्यस्येति युक्तम्। प्राप्त्यभावेन तस्य हेतुत्वासिद्धेः विनिगमनाविरहाच्चेत्यरुचेराह—किं चेति। नन्विदमप्ययुक्तम्, रूपाभावो वायुवृत्तिरिति प्रागुक्तानुमानसंभवादित्यत आह—अपि चेति।

नन्विदमप्ययुक्तम्। घटवति घटाभावधीर्भ्रम इति तत्र दोषाभावादेवाग्रहो न तु विषयाभावात्। किं च न विषयजन्यतामात्रेण प्रत्यक्षत्वम्। आत्मानु-

---

न्यायशिखामणिः

सर्वव्यवहाराभावः। सोऽपि यत्किंचित्पुरुषीयः [2]सर्वपुरुषीयो वेति विकल्पसंभवात्। प्रत्युत यद्वेति व्याख्यानमेवासंगतम्। तथा सति ग्रन्थस्य विशेषाभावपरत्वे [3]व्यवहाराभावमात्रमिति वचनव्यक्तिविरोधात्। ननु व्यभिचारानुपस्थितौ व्यक्ता-

---

1. क. तद्विलम्बोऽस्येति
2. ग. यावत्पुरुषीयो
3. ग. 'व्यवहाराभावमात्रमिति......इत्युक्तास्वरसादाह किं चेति' इति ग्रन्थभागस्त्रुटितः।

प्रकाशः

मित्यादौ व्यभिचारात्। किं तु विषयतया तज्जन्यत्वेनास्य प्रतिबन्धकाभावत्वेन हेतुत्वमस्तु। न चैवं घटस्य प्रतिबन्धकत्वे [1]अभावभ्रमानापत्तिः। दोषस्योत्तेजकस्य भावात्। अपि च विषयजन्यत्वाविशेषेऽपि यथा [2]करणभेदादनुमित्यादिफलभेदः तथा तज्जन्यत्वाविशेषेऽप्यनुपलब्धीन्द्रियकरणभेदात् फलभेदोऽस्त्विति चेत्—

न। अनुपलब्धेः करणत्वे मानाभावात् तदुपलम्भे [3]तदभावाग्रहस्य पूर्वोक्तन्यायेनान्यथासिद्धेः। न च संनिकर्षाभावेनेन्द्रियस्यातत्त्वात् करणान्तरानुपपत्त्यैव तस्याः करणत्वमिति वाच्यम्। एवं ह्यधिकरणज्ञानादेरेव किं न तत् कल्प्यते विनिगमकाभावात्। प्रत्युताभावानुपलब्धिन्यायेन पूर्वं तस्या हेतुत्वमप्यसिद्धमिति तत्रैव कारणत्वं करणत्वं च कल्प्यम्। एवं चोभयसिद्धकारणभावे तत्रैव करणत्वकल्पनमात्रमुचितम्। अभावापेक्षया लघुत्वाच्च। निर्व्यापारत्वान्न तथात्वम् इत्यनुपलब्धेरपि तुल्यम्।

---

न्यायशिखामणिः

नुमानात् रूपानुपलब्धिर्वायुवृत्तिः वायुत्वरूपानुपलब्धी इति प्रतीतिविशेष्यत्वाद्वायुत्ववदित्यनुमानाद्वा वायौ तत्तद्ग्रह इत्यनुशयात् किं चेत्युक्तम्। तत्राप्यपरितोषमाह—नन्विति। ज्ञातताविरहेति। योग्यताधिकरण इति शेषः। ननु दोषत्वेनापि प्रतियोग्यनुपलब्धिरेव पर्यवस्यतीत्युक्तम्। तथा चानुपलब्धिसत्त्वे दोषविलम्बात् तद्विलम्ब इत्युक्तास्वरसादाह— किं चेति। घटाभावस्यापि भावग्रहे प्रतिबन्धकत्वं स्यादिति तस्यापि तदभावत्वेनैव कारणत्वं स्यात्। अपि च घटाभावस्य न प्रतिबन्धकाभावत्वेन कारणत्वम्। विषयत्वापेक्षया तस्य गुरुत्वादित्यरुचेराह—अपि चेति। नन्वेवमप्यधिकरणज्ञानमेव करणमित्यवधारणा न सिद्ध्येत्यत आह—प्रत्युतेति।

नन्वन्वयव्यतिरेकाभ्यां प्रतियोग्यनुपलब्धिस्तावद्धेतुः सा च जलपरमाणौ पृथिवीत्वाभावग्रहप्रसङ्गवारणाय योग्यताविशेषिता वाच्येत्यपरितोषादाह—अभावेति। तथापीन्द्रियं करणमिति न सिद्धमित्याशङ्कां निराकुर्वन्नुपसंहरति—तस्मादिति। वयमिति।

---

1. ख. अभावप्रमानापत्तिः
2. क. 'करणभेदात्' इति नास्ति।
3. ख. तदभावग्रहस्य

स्यादेतत् । गृहमुपलभ्य निर्गतश्चैत्रो यत्र केनचित् पृष्टः तत्र मैत्र आसीदिति, स च क्षणं ध्यात्वा अनुपलब्ध्या तत्र मैत्राभावमवगम्याह नासीत्तत्र मैत्र इति । सेयं प्राङ्नास्तिताधीः न स्मृतिः पुरा गेहेऽनुभूयमाने

---

**प्रकाशः**

तस्मात् भावग्रहे [1]क्लृप्तकारणभावेन्द्रियादेवाभावग्रहोपपत्तौ नानुपलब्धिर्मानान्तरं कल्प्यते गौरवात् । न च प्राप्त्यभावान्न तथा । उक्तलाघवादिना तत्प्रमाणत्वे क्लृप्ते तदुपपादकत्वेनात्रैव [2]विशेषणताकल्पनात् । वाय्वादौ रूपाद्यभावप्रतीतेरलैङ्गिकत्वेनेन्द्रियजन्यत्वेन तत्रापि तत्कल्पनाच्च । अत एव प्राङ्-

---

**न्यायशिखामणिः**

नन्वनुपलम्भस्य कारणत्वं [3]मतद्वयेऽपि क्लृप्तमिति करणत्वमात्रं कल्प्यम्, इन्द्रियस्य तूभयं कल्प्यमिति गौरवम् । किं च तव मते विशेषणतातत्कारणत्वयोः कल्पनमित्यपि गौरवम् । न चैतत् गौरवमपि फलमुखमिति न दोष इति वाच्यम् । [4]इन्द्रियकरणासिद्धेः फलस्यासिद्धेरिति चेत्—

अत्र ब्रूमः । न तावद्विशेषणता कल्प्या । परमतेऽपि तत्स्वीकारात् । अन्यथा संबन्धं विना [5]भूतलादेरभावाधिकरणत्वासिद्धेः । स च संबन्धः संयोगादिबाधात् विशेषणतैव । नापि [6]तत्कारणताकल्पनं दोषः । अभावविशिष्टप्रतीतिर्विशेषणसंबन्धजन्येति धर्मिग्राहकमानात् करणत्वेनैव तत्सिद्धेः । न च तत्र विशिष्टप्रत्यक्षत्वं लिङ्गम् । तच्चाभावग्रहे परेण नाङ्गीकृतमित्यन्यतरासिद्धिरिति वाच्यम् । ज्ञानाकरणकत्वस्य प्रत्यक्षपदेन विवक्षितत्वात् । न चाप्रयोजकत्वम् । विशेषणसंबन्धाजन्यत्वे सति समूहालम्बनाविशेषप्रसङ्गात् । [7]न चाधिकरणज्ञानस्य करणत्वसंभवाद्धेत्वसिद्धिरिति वाच्यम् । न तावदन्वयव्यतिरेकाभ्यां (कारणत्व) [करणत्व]ग्रहः, तयोः कारणतामात्रग्राहकत्वात् । नापि कारणान्तरानुपपत्त्या,

---

1. ख. क्लृप्तकारणभावादिन्द्रियादभाव-
2. ख. तत्कल्पनात्
3. ग. तद्द्वयेऽपि
4. ग. इन्द्रियकरणतासिद्धेः फलमुखस्यासिद्धेः
5. ग. भूतलादेरधिकरणत्वानुपपत्तेः
6. ग. तत्कारणता-
7. क. 'न चाधिकरणज्ञानस्य....तादृशस्य सत्वात्' इति ग्रन्थस्त्रुटितः ।

मैत्रास्मरणेन तदभावाननुभवात् । एवं च तत्रैव इन्द्रियव्यापारं विनैवानुपलब्ध्या अभावानुभवात् अन्यत्रापि सैव हेतुः क्लृप्तत्वात् । तदाहुः—

'स्वरूपमात्रं दृष्टं हि वेश्माद्यर्थं स्मरन्नथ ।
तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥' इति ।

मैवम् । प्राङ्नास्तितायां हि न तावदज्ञातानुपलब्धिः भूतले घटाभावस्येवाभावग्राहिका, तदानीं गेहस्य विप्रकृष्टत्वेन योग्यानुपलब्धेरभावात् । नापि ज्ञाता, अनवस्थाप्रसङ्गात् । अनुपलब्धेरप्यभावरूपतया अनुपलब्ध्यन्तरेण ग्राह्यत्वात् । उपलम्भस्यानुपलब्धिरज्ञातव स्वरूपसती मैत्रानुपलब्धिं गृह्णाति चेत्—त्वन्मये उपलम्भस्यातीन्द्रियत्वेन तदभावस्य योग्यानुपलब्ध्यग्राह्यत्वात् ।

---

प्रकाशः

नास्तितास्थलेऽपि अनुमानेनैवान्यथासिद्धिरिति वयं पश्यामः । अज्ञातेत्यस्यैव विवरणं—स्वरूपसतीति ।

अथेति । स्मरणाभावे च योग्यता न विशेषणम् । तेन नोक्तदोष इत्याशयः । भवति चेति । यद्यपि नायमभावविपर्ययः, किं तु मैत्रविपर्ययः । तथाप्यभावेति संशयमात्रान्वितम् । तथा चाभावसंशयः मैत्रविपर्ययश्च न स्यात् ।

---

न्यायशिखामणिः

इन्द्रियस्य तादृशस्य सत्त्वात् । यदुक्तमिन्द्रियस्योभयकल्पने गौरवमिति । तदयुक्तम् । अन्वयव्यतिरेकाभ्यामेव तत्कारणत्वसिद्धेः । न चान्यथासिद्धिः । अप्राप्तौ ह्यधिकरणग्रहे तदुपक्षयः । प्राप्तिसत्त्वे स त्वशक्यशङ्कः । एवं चाभावप्रतीतौ [1]ज्ञानाकरणकत्वेनेन्द्रियकरणत्वानुमानमिन्द्रियमेव विषयीकरोति नानुपलब्धिं न वा अधिकरणज्ञानम् । तस्मात् इन्द्रियमेवाभावप्रतीतौ करणमिति संक्षेपः ।

यद्यपि [2]नासीदिति विपर्ययोऽभावविषयक एव । तथापि [3]तत्रासीदिति पाठाभिप्रायेणेदम् । नन्वेवं विपर्ययस्य श्रुताभावान्वितत्वपरित्यागः अश्रुतमैत्रपद-

---

1. ग. ज्ञानकरणकत्वेनेन्द्रियमेव
2. क. नासिद्धिः
3. क. तत्रासिद्धिरिति

अथ गेहस्य योग्यमैत्रवत्तया स्मरणार्हस्य स्मरणाभावस्तत्र अज्ञात एव गेहे मैत्राभावग्राहक इति चेत्—न। स्वरूपसतः स्मरणाभावस्य ग्राहकत्वे तस्मिन् सत्यभावसंशयविपर्ययाभावप्रसङ्गात्। भवति च कदाचित् तत्रासीदिति विपर्ययस्तत्रासीन्न वेति संशयश्च।

अथ दोषात्संशयविपर्ययौ। न चासाधारणं प्रमाकरणं दूषयन्त एव दोषाः संशयादिहेतवो भवन्ति। न चात्र स्वरससिद्धस्य योग्यास्मरणस्य किंचिद्दूषितमिति वाच्यम्। दोषसाहित्यमेव हि करणानां दुष्टता। न हि दूरत्वादिना चक्षुषः किंचिदपक्रियते। किं तु मण्यादेर्दाह इव स्वरूपसतामेव प्रतिबन्धकत्वमिति चेत्—न। अज्ञाताद्योग्यास्मरणात् तत्राभावधीरित्यसिद्धेः। किं तु मनसा ज्ञाताद्योग्यास्मरणाल्लिङ्गात् प्रमाणत्वेन क्लृप्तात्तत्राभावप्रतीत्युपपत्तौ नानुपलब्धिः प्रमाणान्तरं कल्प्यते।

योग्यस्मरणाभावो न मनोग्राह्यः प्रत्यासत्त्यभावात् ज्ञानस्यायोग्यत्वाद्वेति चेत्—न। वाय्वादौ रूपाद्यभावप्रतीतेरलैङ्गिकत्वेनेन्द्रियानुविधानेन तज्जन्यत्वे सिद्धे इन्द्रियसंबद्धविशेषणतायाः प्रत्यासत्तित्वकल्पनात् तज्ज्ञानं प्रत्यक्षम्। जानामीत्यनुभवस्य लिङ्गाद्यजन्यत्वात्। न च

## प्रकाशः

सर्वत्र तदभावनिर्णयादेव। [1]पूर्वफक्काभावपदं मैत्रपरमेव। तस्य [2]स्वाभावाभावत्वात्। तथा च मैत्रसंशयविपर्ययाभावप्रसङ्गादित्येव तदर्थ इत्यप्याहुः।

वस्तुतः तस्य ग्राहकत्वे—प्रमापकत्वे, अभावसंशयादिर्न स्यादिति तदर्थः। [3]भवति च तत्र कदाचित्तत्रासीन्मैत्राभाव इति विपर्यय इत्येव तदर्थः।

## न्यायशिखामणिः

कल्पनं चेति गौरवमित्यनुशयादाह—अभावपदमिति। ननु तत्र नासीदित्येव सार्वत्रिकः पाठः। तथा चाभावपदस्य न गौणाभावपरत्वम्। किं चैवं स्मरणाभावस्य मैत्राभावप्रमापरत्वे [4]मैत्रविपर्ययानुपपत्तिरित्युक्तं स्यात्। तच्चायुक्तम्। अन्यत्र

1. क. पूर्वफक्किकार्थः अभाव-
2. क. स्वभावा-
3. ख. 'भवति च तत्र' इति नास्ति।
4. क. मैत्रीविपर्यय-

ज्ञातता लिङ्गम्, निराकृतत्वात्। तत्रापि कथमभावे संशयविपर्ययाविति चेत्—न। लिङ्गसंशयविपर्ययाभ्यां लैङ्गिकसंशयविपर्ययदर्शनात्।

यदा तु सुनिपुणेनैकज्ञानविषयतायोग्यस्य मैत्रस्यानुभवे सति स्मरणार्हस्यास्मरणमवधार्यते तदानुमितिः प्रमा। अत एवास्मरणमात्रस्य व्यभिचारमुपलभ्य तदुपेक्ष्य विशिष्टास्मरणं ज्ञातुकामस्य प्रणिधानमुपयुज्यते। अन्यथा ध्यानमनुपपन्नं, स्वरूपसत एवास्मरणस्याभावग्राहकत्वात्। तस्माद्योग्यास्मरणं लिङ्गत्वेनैवोपयुज्यते।

प्रयोगस्तु—तद्गेहं तदा मैत्राभाववत् तत्तुल्यपरिमाणादियोगितया स्मरणेऽपि तद्वत्तया अस्मर्यमाणत्वात् यदेवं तदेवं यथा घटाभाववद्भूतलमिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे अनुपलब्धिवादः

---

प्रकाशः

ज्ञानामीति। एतच्चोपलक्षणम्। ज्ञानातीन्द्रियत्वे ज्ञानमेव न सिध्येत्। तद्धेतुत एवावश्यकत्वात् व्यवहारसिद्धेः इत्यपि बोध्यम्।

लिङ्गेति। यद्यपि लिङ्गं न संशायकम्, तस्य निश्चायकत्वात्। तथापि [1]तत्संशये [2]विशेषादर्शनान्मानस एव संशयो बोध्यः। एकेति। पूर्वं गेहादेरनु-

---

न्यायशिखामणिः

विपर्यये विरोधाभावात्। न हि रूपप्रमापकं चक्षुरिति रसे न विपर्यय इत्यरुचेराह—वस्तुत इति। ननु ज्ञातताानिराकरणेऽपि [3]प्रवृत्त्यादिलिङ्गात्तदनुमीयत [4]इत्यत आह—एतच्चेति[5]। ज्ञानातीन्द्रियत्व इति। तत्प्रत्यक्षत्वे तु अन्वयादिना ज्ञानस्य व्यवहारहेतुत्वनिर्णय इति भावः।

---

1. क. तत्तत्संशये
2. ख. विशेषदर्शनात्
3. क. प्रवृत्त्यापि लिङ्गात्
4. क. इत्याह
5. एतावत्पर्यन्तमेव ग. कोशः लभ्यते

प्रकाशः

भवकाले तेन सह एकज्ञानविषयतायोग्यस्येत्यर्थः। तत्तुल्यपरिमाणेति। यत्रान्धकारादिना तद्वतोऽपि तद्वत्तया अननुभवात् तद्वत्त्वेनास्मर्यमाणत्वं तत्र व्यभिचारवारणाय तत्तुल्यपरिमाणेत्यादिविशेषणम्। अन्धकारसत्त्वे तत्तुल्यपरिमाणादेरनुभवो न स्यादिति भावः। यत्कालीनो मैत्राभावस्तद्गेहे साध्यते तत्कालीनतया तत्तुल्यपरिमाणयोगितया स्मर्यमाणत्वेऽपीत्यर्थः। तेनोत्तरकालीनतत्तुल्यपरिमाणवत्तानुभवजन्यस्मरणं, तत्पूर्वकाले च तद्वत्त्येवान्धकारादि[1]दोषादननुभवादस्मरणं च यत्र भवति तत्र न व्यभिचारः।

ननु यस्यान्धकारादिमत्येकदेशे तदा तस्य सत्त्वेऽप्यनुभवो न जातः, अन्धकारादिविरहवति चैकदेशान्तरे तदा तत्तुल्य[2]परिमाणादेरनुभवो [3]जातस्तत्र व्यभिचारः। यत्र चोभयांशानुभवेऽपि तुल्यपरिमाणवत्तांश एव संस्कारस्योत्पाद उद्बोधो वा न तु मैत्रवत्तांशेऽपि तत्रापि व्यभिचार इति चेत्—

अत्राहुः। तत्तुल्यपरिमाणादिपदेन तथाभूतोऽर्थो विवक्षितः यथाभूते तत्र गृह्यमाणे तत्सत्त्वे सोऽपि गृह्यत एव। ततश्च तस्मिन् स्मर्यमाणे सोऽप्यवश्यं स्मर्यते। एवं चोक्तस्थले हेत्वसत्त्वान्न व्यभिचारः। इदं च काचित्काभिप्रायेणोक्तम्। सर्वत्र प्राङ्नास्तितास्थले तादृशवस्त्वन्तरग्रहणासंभवात्। सर्वसाधारणं चानुमानं सुनिपुणेनेत्यादिना सूचितम्। तत्प्रयोगस्तु—[4]तद्गेहं तदा मैत्राभाववत् तदा मैत्रतद्व्याप्येतरसकलतदुपलम्भकसमवहितत्वे सति स्वगोचरानु-

---

न्यायशिखामणिः

ननु यदंशे हेतुस्तदंशे साध्यमिति विवक्षितम्। अतो न दोष इत्यत आह—यत्र चेति। उपाध्यायमतमाह—अत्रेति। यस्मिन् स्मर्यमाणे योऽवश्यं स्मर्यते स तुल्यपरिमाणपदेन विवक्षित इत्यर्थः। तत्र गृह्यमाण इत्यादिस्तु स्मरणनियमोपपादकः न तु सोऽपि तत्र प्रविष्टः। तावतैव व्यभिचारनिरासात्। तदेतदुपाध्यायसमाधानमसार्वत्रिकत्वेन दूषयति—इदं चेति। एकज्ञानविषयतायोग्यस्येत्यनेन सूचितमुक्त्वा स्मरणार्हस्यास्मरणमित्यनेन सूचितमाह—

---

1. क. °दोषानुभवादस्मरणं
2. क. °परिमाणेरनुभवो
3. ख. न जातः
4. क. मद्गेहं

**प्रकाशः**

भवजन्यस्मरणविषयतावश्यम्भावनियमवन्मैत्राविषयकतत्कालीनानुभवजन्यस्मरणविषयत्वात् । न च तदवश्यंभावनियमवत्त्वं [1]मैत्रादौ कथं निश्चेयमिति वाच्यम् । आदरातिशयप्रयोजकविषयमाहात्म्यादिना **विश्वनाथप्रतिमायां** देवतानिश्चयवत्संभवात् । तथाहु :—

'कश्चिद्विषयविशेष एव तादृशो यो यद्वृत्तितया
अनुभूयते स तस्मिन् स्मर्यमाणेऽवश्यं स्मर्यत एव' इति ।

अन्ये तु—मया मैत्रवत्तया नस्मर्यमाणत्वादिति हेतुर्द्रष्टव्यः । तेन तत्तुल्यपरिमाणवत्तया अस्मर्यमाणो हेतुरयं तत्र नास्तीति तत्र हेत्वभावा[2]दस्मरणं पृथक्प्रमाणं न प्रसज्यते । मयेति च विशेषणात् यस्य मैत्रे न तादृशादरप्रत्ययः तत्र संस्कारानुत्पादविलोपादिसंभवादस्मरणसंभवेन न व्यभिचारो भवति, यस्य यत्रानुभवे

---

**न्यायशिखामणिः**

**स्वगोचरेति** । यत्र मैत्रवति तत्कालीनतदनुभवजन्यस्मरणं तत्र व्यभिचारवारणाय—**मैत्राविषयकेति** । यत्र यत्र तादृशलोष्टवति संस्कारानुद्बोधान्न तद्विषयकस्मरणं तन्नम्, तद्वारणाय **स्वगोचरेत्यादि** । यत्रान्धकारादि[दौ]मत्रसत्त्वेऽपि तस्याननुभवोऽस्मरणं च तत्र दोषवारणाय **सत्यन्तम्** । यत्र तत्कालीनो मैत्राभावः साध्यते तत्काले मैत्रसत्त्वेऽपि अन्धकारादिना तदग्रहणम्, उत्तरकालं च तादृशोपलम्भकसमवधानं केवलाग्रहस्य चानुभवात् स्मरणं तत्र व्यभिचारवारणाय तदेत्युपलम्भकविशेषणम् । सर्वपुरुषाणां तत्र स्मरणकल्पनाद्वा रमेशस्य तत्कल्पनम् । किं चैतावता अनुमानान्तरसमर्थनेऽप्येतदनुमानं न युक्तम् । उपाध्यायसमाधानं च काचित्कमिति दूषितम् । अपि च तत्तुल्यपरिमाणत्वेनास्मर्यमाणे यज्ञपतिनिरुक्तहेत्वभावेन अनुमान[ना]प्रवृत्तेरस्मरणं पृथक् प्रमाणं प्रसज्येतेत्यस्वरसाज्जयदेवमतमाह—**अन्ये त्विति** । **मयेति** । अत्र यत् तादृशपदार्थवत्तया मया न स्मर्यते तत तदभाववदिति सामान्यव्याप्तिरभिमता । संस्कारानुद्बोधात् यत्र तद्वत्त्वास्मरणं तत्र

---

1. ख. ०नियमत्वं 2. ख. ०दस्मर्यमाणपृथक्प्रमाणं

**प्रकाशः**

सति स्मरणनियमस्तद्वृत्तया स्मर्यमाणत्वस्याव्यभिचारात् । स तु कोऽपि कस्यापि तादृशो भवतीति मयेत्युक्तं विशेषणम् । तत्सूचनायैव तत्तुल्यपरिमाणेत्यादिविशेषणमिति वदन्ति ।

एतावता अनुपलब्धिर्न मानान्तरम्, किं तु इन्द्रियसहकारिणीति स्थितम् ।

नन्वेवं तस्याः सहकारित्वमपि कथम् । घटप्रमायामभावानुपलम्भस्य विषयाभावेनेन्द्रियसंनिकर्षाभावेन वोपपत्तेः । दोषाभावेन तद्भ्रमस्याप्यसंभवात् । घटभ्रमे तज्जनकदोषस्यैव प्रतिबन्धकतया तदनुपलम्भोपपत्तेः । अत एव भावग्रहेऽभावानुपलब्धिरप्यन्यथासिद्धैवेत्युक्तम् ।

---

**न्यायशिखामणिः**

तादृशपदार्थविरहरूपसाध्यसत्त्वान्न व्यभिचारः । तत्तुल्यपरिमाणवत्त्वेनास्मर्यमाणे च चैत्रवत्त्वेनास्मर्यमाणस्य लिङ्गस्य सत्त्वान्न पृथक्प्रमाणत्वप्रसङ्ग इति भावः ।

ननु यत्रान्धकारादिना तादृशपदार्थसत्त्वेऽप्यननुभवादस्मरणं तत्र व्यभि-(चारात्)[चारः] । न च तत्र गेहस्यापि चक्षुषाननुभवेन तत्कालीनत्वावच्छिन्नमैत्राभावस्तत्रास्त्येवेति वाच्यम् । तथापि यत्र तादृशपदार्थवति दोषादभावभ्रमस्तत्र गेहानुभवकालेऽपि तत्कल्पने विशिष्टसाध्याभावात् । न चाधिकरणेऽनुभूयमाने यस्याभावभ्रमो नास्ति स एव तादृशपदेन विवक्षित इति वाच्यम् । अतीतानागततद्भ्रमाभावस्य निश्चेतुमशक्यत्वात् । न च तदभाववत्त्वेनास्मर्यमाणत्वमपि हेतुविशेषणमिति न व्यभिचार इति वाच्यम् । यत्र भ्रमविषयतदभावस्य गेहस्य च संस्कारप्रमोषादस्मरणं तत्र दोषतादवस्थ्यात् । न च यत्प्रतियोगिकाभावस्यानुभूतस्य स्मरण(नियमस्त्वपदार्थो)[नियमः स तत्पदार्थो]विवक्षित इत्यपि युक्तम् । कल्पनागौरवप्रसङ्गात् । ननु स्वार्थानुमाने व्यभिचारनिरासाय (नावयतितव्यम्) [नैव यतितव्यम्] तदप्रतिसन्धानदशायामनुमितिसंभवात्, तावताप्यस्मरणपृथक्प्रमाणत्वनिराकरणोपपत्तेरिति चेत्—तर्हि मैत्रास्मरणस्य च लिङ्गत्वापत्तेः । तस्माज्जयदेवमतमप्ययुक्तमित्यस्वरसं सूचयति—वदन्तीति ।

अनुपलब्धेरकारणत्वे घटोपलम्भेऽपि तदभावग्रहप्रसङ्ग इति चेत्—किं घटप्रमासत्त्वे तदापादनम्, तद्भ्रमसत्त्वे वा । आद्य आह—घटेति । विषयेति ।

**प्रकाशः**

ननु ग्राह्याभावग्रहस्यानुमित्यादौ सामान्यत एव प्रतिबन्धकत्वकल्पनात् तदभावस्यापि तथैव हेतुत्वकल्पनात् अत्रापि हेतुत्वमिति चेत्—न। अपीतत्वानुमितावपि पीतः शङ्खः इति प्रत्यक्षोत्पादेनातथात्वात्। तथा च ग्राह्याभावप्रत्यक्षाभावत्वेन प्रत्यक्षहेतुत्वमक्लृप्तमेव कल्प्यम्। तत्र चोक्तदोष इति।

एतेनासंसर्गाग्रहस्य विशिष्टज्ञानमात्र[1]हेतुत्वकल्पनात् [2]तत्पर्यवसन्नानुमितेरभावस्यापि हेतुत्वमित्यपास्तम्।

आनुमानिकपीतत्वासंसर्गग्रहेऽपि पीतप्रत्यक्षोदयेन सामान्यतस्तदकल्पनादिति चेत्—

**न्यायशिखामणिः**

एतच्च कादाचित्काभिप्रायेण। नित्यभावे त्वाह—इन्द्रियेति। अन्त्ये त्वाह—घटभ्रम इति। ननु भावग्रहे क्लृप्तत्वात् सर्वत्रापि हेतुरित्यत आह—अत एवेति।

चिन्त्यमिति। अत्र ब्रूमः। अन्वयव्यतिरेकाभ्यामनुपलब्धिर्विशिष्टप्रत्यक्षमात्रे हेतुः। घटप्रमायां दोषाभावादभावभ्रमविलम्ब इति युक्तम्। अनुगतप्रतियोग्युपलब्धेरेव दोषत्वमित्युक्तत्वात्। नापि तद्भ्रमे तज्जनकदोषेणाभावप्रमाप्रतिबन्धः, यत्र सादृश्यज्ञानं तत आरोप्यस्मरणं ततस्तद्भ्रमस्तत्र भ्रमस्थितिकाले सादृश्यरूपदोषाभावेन घटाभावप्रमायां दुर्वारत्वात्।

यदुक्तं प्रमेयत्वादिस्थले व्यभिचारान्न भावग्रहे हेतुरिति। तदयुक्तम्। भूतलनिष्ठाभावो घटप्रतियोगिक इति ग्रहे तद्ग्रहप्रसङ्गेन तदभावोऽपि हेतुरिति भूतलनिष्ठत्वाभावे प्रमेयत्वप्रतियोगिकत्वाभावस्य तत्र सत्त्वेन व्यभिचाराभावात्। पूर्वोक्तयुक्तेश्चास्माभिस्तत्रैव 'अत्रेदं चिन्त्यम्' इत्यत्र निराकृतत्वात्।

न चैवमपि ग्राह्याभावानुपलब्धेर्व्यभिचारो न निरस्त इति वाच्यम्। न हि सा तत्त्वेन हेतुः, किं तु योग्यानुपलब्धित्वेन। तथैव ह्यभावग्रहे क्लृप्ता।

1. ख. हेतुत्वमात्रकल्पनात् 2. ख. तत्पर्यवसन्नतयानु-

प्रकाशः

अस्तु तावदेवम् । तथाप्यभावप्रत्यक्षे प्रतियोगिसत्त्वविरोध्यनुपलब्धित्वेनावश्यं हेतुत्वम् । अन्यथा चक्षुस्संयुक्तपृथिवीपरमाणौ जलत्वाद्यभावग्रहप्रसङ्गात् । भावग्रहे त्वभावानुपलब्धेः प्रमेयत्वादिस्थले [1]तदभावाप्रसिद्ध्या व्यभिचारात् पूर्वोक्तयुक्तेश्च कथं हेतुत्वमिति चिन्त्यम् ।

इति श्रीमद्रुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे अनुपलब्धिवादः

—: * :—

---

न्यायशिखामणिः

तथा च भूतलनिष्ठाभावो यदि प्रमेयत्वप्रतियोगिकः स्यात् तत्त्वेनोपलभ्येतेत्यापादनसंभवात् तत्र तत्प्रतियोगिकत्वानुपलब्धिरपि योग्यैव । तस्माद्विशिष्टप्रत्यक्षमात्रे योग्यानुपलब्धिर्हेतुरित्यलमतिविस्तरेण ।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजरामकृष्णाध्वरि-

विरचिते न्यामशिखामणौ प्रत्यक्षखण्डे

अनुपलब्धिवादः

—: * :—

---

1. ख. तथाभावा-

# अथाभाववादः

—: * :—

अथाभावो भावात्मैव। ततस्तत्र संयोगादिरेव ग्राहक इति न तत्र विशेषणता प्रत्यासत्तिः।

तत्र प्राञ्चः। अस्ति तावदिह भूतले घटो नास्तीत्यबाधिता बुद्धिः। सा चेयं न भूतलालम्बना। घटवत्यपि प्रसङ्गात्। नापि केवलतदालम्बना, अतिरिक्तकैवल्यानभ्युपगमात्।

---

### प्रकाशः

न विशेषणतेति। समवायश्चातीन्द्रिय इति भावः। अतिरिक्तेति। त्वयेति शेषः। अभ्युपगमे वा पर्यवसितं विवादेनेति भावः।

---

### न्यायशिखामणिः

ननु समवायग्राहकत्वेन विशेषणता प्रत्यासत्तिः स्यादित्यत आह—समवाय इति। गुरुमत इति शेषः। तथा च विशेषणताक्षेपात् संनिकर्षवादसंगतिः।

केचित्तु अतिरिक्ताभावस्याभावे अनुपलब्धिसहकृतेन्द्रियस्य तत्प्रत्यक्षकरणत्वमनुपलब्धिवादसाधितमाक्षिप्तमित्यनन्तरसंगतिरिति। तत्तुच्छम्। अभावत्वप्रकारकप्रत्यक्षे हि तत्सहकृतमिन्द्रियं करणमित्युक्तम्। तच्चातिरिक्ताक्षेपेण न निराकर्तुं शक्यम्। भूतलत्वप्रकारकप्रत्यक्षे केवलमिन्द्रियम्, तत्रैवाभावत्वप्रकारके तत्सहकृतं तत्करणमित्यस्य परमतेऽपि सुवचत्वात्। अत एव 'न तत्र विशेषणता प्रत्यासत्ति'रित्येवोक्तम्। अन्यथा भावो भावात्मैव ततस्तत्प्रत्यक्षे नानुपलब्धिसहकृतमिन्द्रियं करणमिति वचनव्यक्तिप्रसङ्गात्।

ननु कैवल्यं भूतलातिरिक्तं तदेव वा। तत्राद्यं निराकृतमतिरिक्तेत्यत्र। तदयुक्तम्। न्यायमते तदभ्युपगमादित्यत आह—त्वयेति। द्वितीयेऽपि भूतलमेव कैवल्यम्, तयोरभेदः। तत्राद्ये पौनरुक्त्यमधिकमित्युक्तम्। तत्राधिक-

भूतलमेव कैवल्यमिति चेत्—तर्हि पौनरुक्त्यमधिकम्। अभेदे आधाराधेयभावानुपपत्तिश्च।

अथाधिकाभाववादिनापि अभावः साश्रयो वाच्यः। देशादिनियमेन व्यवहारात्। तथा चास्ति भूतले विशेषो योऽभावाश्रयः। स न भूतलमात्रम्। घटवत्यपि प्रसङ्गात्। नाभावयुक्तम्, अन्योन्याश्रयात्। न च घटवत्, विरोधादिति चेत्—न। [1]विशेषस्यैवाभावाश्रयत्वात्। स चाननुगत एव। एकाश्रयता त्वननुगतस्यापि घटाश्रयतेव भवति।

किं च कुत्राभाव इति, यत्र प्रतीयेत इत्येवोत्तरम्। क्व प्रतीयेत इत्यत्र, यत्रास्तीत्येव। अन्यथा गोत्वादिकमपि न स्वीक्रियेत। तदाश्रयविशेषादेव व्यवहारसंभवात्। तथापि कीदृशि भूतले अभाव इति चेत्—अभावपूर्वसमये कीदृशं भूतलमिति प्रश्ने घटवदित्युत्तरम्। अभावसमये अभाववदिति। मध्यसमयस्तु नास्त्येव। इह भूतले घटो नास्तीत्याधाराधेयभावप्रतीतेश्च। अभावाधारत्वं भूतलस्य न प्रतीयते, किंतु तन्मात्रबुद्धिविषयत्वमिति चेत्—अहो! व्याख्याकौशलम्। अनुभवोऽपि व्याख्याय कथ्यते। तन्मात्रपदार्थानिर्वचनं च। न हि भूतलबुद्धिस्तन्मात्रबुद्धिः। घटवद्भूतलबुद्धेरपि भूतलबुद्धित्वात्। सा बुद्धिर्न भूतलस्य,

---

प्रकाशः

अधिकमिति। घटवति प्रसङ्गस्तदवस्थ एवेति भावः। [2]दोषान्तरमाह—अभेद इति। भूतलकैवल्ययोरिति शेषः।

---

न्यायशिखामणिः

शब्दस्य सापेक्षत्वादाह—घटवतीति। नन्वभेद इत्यत्रान्त्यं निराकृतमयुक्तम्। तत्र पूर्वं दोषानुसन्धानेन दोषान्तरसूचकचकारानुपपत्तेरित्याशङ्क्य कैवल्याभेदपक्षे विकल्प्य दोषद्वयाभिधानाभिप्रायत्वान्न विरोध इत्याह—दोषान्तरमिति। ननु स एव विशेषो नास्ति। यद्यस्ति तन्निरूपयेत्यत आह—मूले किं चेति।

---

1. ख. भूतलविशेषस्यैव
2. ख. 'दोषान्तरमाह......केवलभूतलावलम्बनत्वे' इति ग्रन्थो नास्ति।

किंतु घटभूतलयोः, अग्नीषोमयोरिव देवतात्वमिति चेत्—न । ततो भूतलाव्यवहारप्रसङ्गात् । भूतलस्याविषयत्वात् । आशुभाविभूतलविषयकज्ञानान्तरादिति चेत्—तर्हि सैव भूतलबुद्धिस्तन्मात्रबुद्धिरिति तद्देशे घटाभावस्य व्यवहारप्रसङ्गः ।

एतेन भूतलेन्द्रियसंनिकर्षजघटवद्भूतलेन्द्रियसंनिकर्षजज्ञानयोर्विशेषोऽङ्गीकरणीयः । सामग्रीभेदस्य कार्यभेदनियतत्वात् । तथा च स एव तन्मात्रपदार्थ इति निरस्तम् ।

---

प्रकाशः

केवलभूतलावलम्बनत्वे दोषान्तरमाह—इहेति । घटवदिति । न च भूतलमात्रबुद्धिः सेति वाच्यम् । मात्रार्थस्याभावत्वादिति भावः । तत इति । यद्यपि व्यवहारो न भूतलस्य, किं तु घटभूतलयोरित्यपि सुवचं परेण । तथापि घटांशे व्यवहाराभावेऽपि भूतलव्यवहारसंभवात्तन्न स्यादिति भावः ।

ततोऽपीति । घटवद्भूतलेन्द्रियसंनिकर्षजज्ञानादित्यर्थः । तथा च तदपि भूतलज्ञानमित्यभावः स्यादिति भावः । उक्तेति । घटाविषयेत्यत्र नञर्थस्याभावत्वादित्यर्थः । यद्यपि तत्रापि प्रतियोग्यविषया अधिकरणबुद्धिरेव नञर्थ इति

---

न्यायशिखामणिः

ननु प्रतीयत इत्यस्य प्रमापरत्वं वाच्यम् । अन्यथा अतिप्रसङ्गात् । तथा चाभावप्रमात्वं तत्सत्त्वाधीनम् । तच्च तत्प्रमाधीनमित्यन्योन्याश्रयात् । प्रतिबन्दिश्चानुत्तरमिति अन्यथेत्यपि न युक्तम् । एवं च त्वदुक्तोत्तरस्याभावसत्त्वात् प्रश्नस्तदवस्थ इति योग्यत्वात् व्यवहितेनाप्यन्वय इत्याह—केवलेति । न चाभेद इत्यनेन पौनरुक्त्यम् । तस्य भूतलकैवल्यस्याभेद आधाराधेयभावानुपपत्तिपरत्वात् । अस्य च केवलभूतलालम्बनत्वे तत्प्रतीतेराधाराधेयभावविषयत्वानुपपत्तिपरत्वात् ।

ननु तच्छब्देन भूतलज्ञानोक्ताविष्टापत्तिः । घटत्वज्ञानोक्तौ भूतलेन्द्रियसंनिकर्षजज्ञानत्वाभावत्वात् किमपि दूषणं नोक्तमित्यत आह—घटवदिति । तदपीति । घटवद्भूतलज्ञानमपि भूतलेन्द्रियसंनिकर्षजन्यम् । मात्रपदप्रवेशे च तदर्थस्याभावत्वादिति भावः । घटवद्बुद्ध्यतिप्रसङ्गस्योक्तपदेन परामर्शे असंगतिरित्याह

ततोऽपि भूतलव्यवहारात् । प्रतियोगितद्व्याप्येतरजनिता भूतलबुद्धिरभाव इति चेत्—न । घटवति तज्जनिताया अपीतरजनितत्वात् । तन्मात्रजनिता सेति चेत्—न । मात्रार्थस्याभावत्वात् तस्य चापरिज्ञानात् । घटाविषया सती भूतलविषयेति चेत्—न । उक्तोत्तरत्वात् ।

किंच प्रतियोगिनिरूपणाधीननिरूपणोऽभावः । बुद्धिस्तु न तथा । प्रतियोगिप्रकाशं विनापि बुद्धिनिरूपणात् । व्यवहारार्थं दृश्यप्रतियोगिज्ञानापेक्षा अभावो ज्ञात एवेति चेत्—न । व्यवहारस्य व्यवहर्तव्योपलम्भनिबन्धनत्वेन तथा अदृष्टचरत्वात् ।

---

प्रकाशः

नाभावाभ्युपगमदोषः । तथापि तत्र तत्रापि पर्यनुयोगे तथाभ्युपगमोऽनवस्था वेति भावः ।

व्यवहारस्येति । यद्यप्युत्कर्षरूपाया जातेर्व्यक्तिवित्तिवेद्यायाः तारशब्दाभिलापात्मनि व्यवहारे अधिकस्यावधेर्ज्ञानं हेतुर्दृष्ट एव । तथापि तारत्वरूपप्रवृत्तिनिमित्तस्याप्यवधिगर्भस्य [1]व्यवहर्तव्यतया अवधेरपि व्यवहर्तव्यत्वादित्यर्थः ।

---

न्यायशिखामणिः

—घटेति । जयदेवोक्तमस्वरसमनुवदति—यद्यपीति । प्रतियोगीति । घटविषयकत्वरूपेत्यर्थः । अधिकरणेति । भूतलविषयकबुद्धिरूपेत्यर्थः । अनवस्थेति ।

न च स्वप्रकाशमते भूतलज्ञानस्यैव ज्ञानादिरूपत्वेन ज्ञानान्तरापेक्षाविरहान्नानवस्थेति वाच्यम् । तज्ज्ञानस्यैव भूतलबुद्ध्यादिरूपत्वे भूतलविषयकत्वविषयत्वादिगोचरत्वं वाच्यम् । तच्च मुरारिमते यावद्व्यवसायानुव्यवसायवेद्यं तस्यैव गुरुमते स्वप्रकाशज्ञानवेद्यत्वादयुक्तम् । न हि स्वगततावद्धर्मप्रकाशकत्वघटितं स्वप्रकाशकत्वम् । तथा सति स्वतःप्रमाणत्वप्रत्यक्षत्वादेरपि भानापत्तौ वादिविवादाभावप्रसङ्गात् । तथा च भूतलविषयकत्वादि[विषयक]ज्ञानान्तरमेवेत्यनवस्थैवेति बोध्यम् ।

---

1. ख. 'व्यवहर्तव्यतया अवधेरपि' इति नास्ति ।

यदि च प्रतियोगिस्मरणसापेक्षा तन्मात्रधीरभावपदार्थः तदा अन्धकारादौ या तन्मात्रधीः सा अभावो न स्यात् । तथा च तत्र विचरन् कण्टकैर्विध्येत । कण्टकस्मरणं विना कण्टकाभावाभावात् । निर्जने बन्धविच्छेदेऽपि जलनिस्सरण न स्यात् । तदानीं तन्मात्रबुद्धेः सर्वथा अभावात् ।

---

प्रकाशः

यदीति । मात्रपदमुपलम्भान्तरव्यवच्छेदार्थम् । तदेति । यद्यपि स्मरणाभावप्रयोजकत्वं नान्धकारस्येति तदभिधानमयुक्तम् । तथापि संस्कारोद्बोधकसदृशदर्शनाद्यभावप्रयोजकतया परंपरया तत्प्रयोजकत्वमभिप्रेत्य एतदुक्तं मन्तव्यम् ।

ननु तत्र [1]कण्टकाभावो मास्तु । [2]कण्टकाभावाभावोऽस्तीत्यपि न । तन्मते तस्यापि बुद्धिरूपत्वात् । भावे वा (वादः)[वेधः]कुतः । तस्य कण्टकसाध्यत्वात् तस्य[3]कण्टकाभावादन्यत्वादित्यरुचेराह—निर्जन इति ।

---

न्यायशिखामणिः

वस्तुतस्तु प्रतियोगिविषयकभिन्नाधिकरणविषयकबुद्धिरत्यन्ताभावः, अधिकरणगतासाधारणधर्मोऽन्योन्याभाव इति विवक्षिते नोक्तदोष इत्यस्वरसात् किं चेत्युक्तमिति द्रष्टव्यम् ।

अभावो हि प्रतियोगिनिरूप्यः । गुरुमते चाधिकरणबुद्धिरभावपदार्थः तन्मात्रबुद्धिर्वा । तत्राद्यं बुद्धिस्तु इत्यादिना निराकृत्य अभावव्यवहार एव प्रतियोगिज्ञानापेक्षा न तज्ज्ञान इति चोद्यं व्यवहारस्येत्यनेन निराकृतम् । तत्र शङ्कते —यद्यपीति । तारत्वेति । सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकरूपेत्यर्थः । यद्यपि प्रवृत्तिरूपव्यवहारे भेदाग्रहो हेतुः, अभिलापे च पदावलिज्ञानम्, न तु व्यवहर्तव्यज्ञानम् । अन्यथा शुकबालादिवाक्यप्रयोगानुपपत्तेः । तथाप्यापातत एवेदम् । वस्तुतस्त्वनन्यथासिद्धान्वयव्यतिरेकाभ्यामभावज्ञाने प्रतियोगिज्ञानं कारणमित्यत्र तात्पर्यम् । अन्त्यं निराकृतं यदि चेत्यत्र । तत्र भूतलबुद्धेरपि रूपादिविषयत्वान्न तदुपलम्भो मात्रपदव्यवच्छेद्यः, किंतु प्रतियोगिविषयोपलम्भ

---

1. ख. कारणाभावो
2. ख. कारणाभावाभावो
3. ख. कारणाभावाभावादन्य-

किं च तन्मात्रधीनाशे घटोन्मज्जनप्रसङ्गः, घटाभावाभावस्य घटत्वात्। यदि चाभावो नातिरिक्तस्तदा यत्र घटसंसृष्टत्वबुद्धिरासीत् कुतस्तत्र तन्मात्रधीः। मुद्गरपातजन्यातिरिक्तविषयानङ्गीकारात्।

अतिरिक्ताभावे किं मानमिति चेत्—नास्तीति बुद्धिरेव। नन्वभावव्यवहारानुपपत्तिरन्योन्याश्रयादिति।

---

### प्रकाशः

ननु तत्रापि क्रिमिकीटादिबुद्धिसंभव इत्यस्वरसादाह—किं चेति। नन्वियं तव परिभाषा, मम तु घटाभावाभावो बुद्ध्यन्तरमिति नोक्तदोष इति यदि ब्रूयात् तदा दोषान्तरमाह—यदि चेति।

---

### न्यायशिखामणिः

इत्याह—मात्रपदमिति। जयदेवोक्तमपरितोषमाह—नन्विति। कण्टकाभाव इति। एतच्चापाततः। परस्परविरुद्धमभावद्वयमेकत्र नास्तीत्यस्यासंभवदुक्तिकत्वेनान्यतरसत्त्वस्यावश्यकत्वात्। भावे वेत्याद्यप्यसंगतम्। अभावाभावो न प्रतियोग्यात्मक इति पराभिप्रायस्येदानीमेव ज्ञातत्वे वक्ष्यमाणघटोन्मज्जनानवकाशप्रसङ्गात्। वस्तुतस्तु प्रतियोगिज्ञानसापेक्षत्वं नाभावस्वरूपघटकम्, तन्मात्रबुद्धेरेव परमतेऽभावपदार्थत्वात्। परं तु तत्राभावत्वप्रतीतौ तज्ज्ञानापेक्षा। तथा च प्रतियोगिस्मरणाभावेऽप्यस्त्येव कण्टकाभाव इति न भेद.। न च वेधहेतोः (कण्टकाभावस्यापि) [कण्टकाभावाभावस्यापि]सत्त्वाद्दोषतादवस्थ्यम्। कण्टकाविषयकभूतलबुद्धिरूपतदभावाविषया हि भूतलबुद्धिः कण्टकाभावाभावः। स चात्र संभवति, कण्टकाभावबुद्धेः स्वप्रकाशत्वेन तदविषयाधिकरणबुद्धियोगादित्यस्वरसोऽत्र बोध्यः। स्वयं तमाह—ननु तत्रापीति।

यदि चेति मणेरेषोऽर्थः। अतिरिक्ताभावानभ्युपगमे यत्र घटसंसृष्टप्रमा जाता तत्रैव घटवति तदुत्तरकाले दोषात् (घटज्ञाने)[घटाज्ञाने]या बुद्धिरिति तत्राप्यभावः कुतो न स्यादित्यर्थः। किं चैवं मुद्गरपातस्थले तज्जन्यत्वेन घटाभावप्रतीतिरनुभवसिद्धा न स्यात् विषयस्य तज्जन्याभावस्य त्वयानभ्युपगमादित्याह—मुद्गरेति।

अत्र प्राभाकराः। घटवद्भूतलबुद्धिभिन्ना भूतलबुद्धिरभावव्यवहारकारणम्। न च दोषात् घटवति घटवत्त्वाज्ञाने भूतलज्ञानमभावः स्यादिति वाच्यम्। घटवतो भूतलस्य ज्ञानाद्भिन्नस्य भूतलज्ञानस्याभावत्वात् तद्भ्रमाच्चाभावभ्रमः।

वस्तुतोऽत्यन्ताभावे प्रतियोगिमदधिकरणज्ञानस्याप्रसिद्धेः प्रतियोगिमज्ज्ञानभिन्नमधिकरणज्ञानं व्यधिकरणाभावव्यवहारे कारणम्। समानाधि-

---

## प्रकाशः

अन्योन्येति। अभावज्ञाने सति ततस्तद्व्यवहारसिद्धिः तत्सिद्धौ तदनुपपत्त्या अभावज्ञानमित्यर्थः। नन्वाकाशादेरवृत्तित्वात्तदभावस्य केवलान्वयिनोऽभ्युपगमे प्रतियोगिमदधिकरणज्ञानस्याप्यसिद्धिरित्यस्वरसादाह—वस्तुत इति। अत्यन्ताभावे—अवृत्तिप्रतियोगिके।

नन्वेवं घटवति घटवत्त्वाज्ञाने भूतलज्ञानमभावः स्यादित्युक्तदोषापत्तिः। न चाभावोऽन्यो नास्त्येवेत्यभावव्यवहारापादनमिष्टमेवेति वाच्यम्। व्यवहारस्य संवादापत्तेः। न च बाधितत्वेन विसंवादित्वमिति वाच्यम्। तादृशबुद्धेरेव तद्विष-

---

## न्यायशिखामणिः

तस्माद्भूतले घटो नस्तीति बुद्धिर्न भूतलालम्बना। नापि केवलभूतलालम्बना न वा तत्र तन्मात्रबुद्धिविषया वा। ततश्चैषा अतिरिक्ताभावमेवालम्बत इत्याशयः। इममविद्वान् शङ्कते—अतिरिक्तेति। किं मानमिति। न तावत्प्रत्यक्षम्, भूतलतद्व्यतिरिक्तोऽयमभाव इति प्रत्यक्षाभावात्। नाप्यतिरिक्ताभावत्वप्रकारकव्यवहारानुपपत्तिः, अन्योन्याश्रयादिति भावः। भूतलतद्बुद्ध्यविषयत्वे निरस्ते सैव बुद्धिर्वस्तुतोऽतिरिक्ताभावमवलम्बत इति स्वाशयमुद्घाटयति—नास्तीति। मूलोक्तमेवास्वरसमाह—नन्विति। असिद्धिरिति। तथा च प्रतियो(गिव्यधिकरण)[गिमदधिकरण] ज्ञानाप्रसिद्धेरिति भावः।

न च मूल एवैतद्दोषाभिधानादिह तदुक्तिवैयर्थ्यम्। विषयाप्रसिद्ध्या तज्ज्ञानाप्रसिद्ध्युपपादनादिति बोध्यम्। नन्वेवमिति। प्रतियोगिप्रकारकज्ञानभिन्नाधिकरणज्ञानस्याभावत्व इत्यर्थः। ननु व्यधिकरणपदस्य निरधिकरणपरत्वे

करणनिषेधप्रतीतिश्च प्रतियोग्यधिकरणयोः स्वरूपभेदमालम्बते । तेन घटवत्त्वेन ज्ञायमानेऽपि भूतले भूतलं घटो नेति प्रतीतिः ।

तथा च यस्याभावज्ञानकारणत्वं परेषां तदेवाभावव्यवहृतिकारणमस्तु । न ह्यधिकरणबुद्धिं विना तद्बुद्धिः । न च भूतलबुद्धिस्तथा । घटवत्यपि प्रसङ्गात् । न चाभावाधिकरणभूतलविषयत्वाद्बुद्धेर्विशेषः । प्रतियोगिमत्त्वेऽपि प्राङ्नासीदिदमत्रेति प्रतीतेः ।

---

प्रकाशः

यतया [1]तत्सत्त्वे बाधितत्वासंभवादित्यत आह—व्यधिकरणेति । निरधिकरणेत्यर्थः । [2]साधिकरणघटाद्यभावव्यवहारे च घटवतो भूतलस्येत्यादिकमेव तन्त्रमिति नोक्तदोष इति भावः । अत्र प्रतियोगित्वाविषयके तज्ज्ञाने तदभावापत्तिर्न दोषः तदभावस्य केवलान्वयित्वेनेष्टापत्तेः अभावमात्रव्यवहाराननुगमस्यादोषत्वात् । अत एवाह—समानाधिकरणेति । प्रतियोगिसमानाधिकरणेत्यर्थः ।

---

न्यायशिखामणिः

समानाधिकरणपदस्य साधिकरणपरत्वमुक्तं स्यादिति घटात्यन्ताभावसंग्रहप्रसङ्ग इत्यत आह—प्रतियोगीति ।

अत्रेदं चिन्त्यम् । एवं सत्यभावव्यवहारे प्रयोजकत्रयमिति गौरवम् । किं च प्रतियोगिमत्ताविषयकेत्यादि निरधिकरणाभावव्यवहारे तन्त्रमिति न युक्तम् । लाघवात् अनतिप्रसङ्गात् अधिकरणस्यैव तत्र प्रयोजकत्वौचित्यात् ।

वयं तु अत्यन्ताभावपदमन्योन्याभावस्याप्युपलक्षणम् । समानाधिकरणपदं निरधिकरणोपलक्षकम् । तथा चावृत्तिप्रतियोगिकान्योन्याभावात्यन्ताभावयोः प्रतियोगिमदधिकरणज्ञानाप्रसिद्धेः घटवति यत्र तदन्योन्याभावव्यवहारः तत्र तादृशज्ञानभिन्नज्ञानाभावाच्च प्रतियोगिमतोऽधिकरणस्य ज्ञानाद्भिन्नमधिकरणज्ञानं प्रतियोगिव्यधिकरणाभावव्यवहारे कारणम् । वैयधिकरण्यं च तदधिकरणानधिकरणत्वमिति न निरधिकरणप्रतियोगिकाभावसाधिकरणान्योन्याभावसंग्रहः ।

---

1. ख. तत्समत्वे 2. ख. साधिकरणे

किं च ज्ञानविषयभूतलस्याभावो यदि विशेषणम्, तदा अभावज्ञानमेव तज्ज्ञानकारणम्। उपलक्षणं चेत्, न कश्चिद्विशेषः। प्रतियोगिमत्त्यानुपलब्धिरपि कारणमिति चेत्—न। प्रतियोगिमत्तयोपलम्भेऽपि प्राङ्नासीदिदमत्रेति प्रतीतेः।

---

### प्रकाशः

न चेति। भूतलमात्रबुद्धिर्न व्यवहारकारणमित्यर्थः।

नन्वभावप्रत्यक्षे तदधिकरणभूतलबुद्धेः कारणत्वम्। [1]प्रतियोगिसत्त्वे च [2]प्राङ्नास्ति [ताधी]र्न प्रत्यक्षा तदसंनिकर्षादित्यरुचेराह—किं चेति। उपलक्षणं चेदिति। यदि तादृशज्ञानस्याभावो न विषयस्तदा घटवति तन्मात्रबुद्धेरभावाधिकरणबुद्धेश्च विषयकृतो न कश्चिद्विशेषः [3]प्रतिपादित इत्यर्थः। प्रागिति। यद्यपि पूर्वोक्तन्यायेनैवेदमयुक्तम्, तथापि भूतलविशेष्यकमुपनीताभावविशेषणकं च प्रत्यक्षमित्यभिप्रेत्यैतदुक्तमित्याहुः।

---

### न्यायशिखामणिः

प्रतियोगिसमानाधिकरणाभावप्रतीतिश्चाधिकरणमेवावलम्बते, अतिप्रसङ्गाभावादिति ब्रूमः।

यद्यभावव्यवहारमात्रेऽनुगतकारणापेक्षा तदा तदपि दुर्लभमिति तथा चेत्यनेनोक्त्वा न चेत्यत्र भूतलमात्रज्ञानस्य अभावज्ञानकारणत्वं निरस्तम्। ततः किमित्यत आह—भूतलेति।

ननु यत्कालीनाभावो बोध्यते तत्काले तदभावाधिकरणत्वं विवक्षितमित्यरुच्या किं चेत्युक्तमिति जयदेवमतं व्याचक्षते। तदयुक्तम्। कालादिविषयकाभावप्रत्यक्षस्थले निरुक्तविशेषणाव्यापनादित्यभिप्रेत्य स्वयं प्रकारान्तरेण तामाह—नन्विति। ननु लौकिकत्वविशेषिते तत्र प्रतियोग्यनुपलब्धिर्हेतुरिति नोक्तदोष इत्यस्वरसं सूचयति—आहुरिति। वस्तुतस्तु—अत्र न तात्पर्यम्। न्यायमतेऽ-

---

1. ख. प्रतियोगिसिद्धेश्च
2. ख. 'प्राङ्नास्ति......रभावाधिकरणबुद्धेश्च' इति ग्रन्थस्त्रुटितः।
3. क. प्रतिपाद्यते

बुद्ध्योश्च [1]विशेषः स्वरूपविशेषावेव, नान्योन्याभावोऽनवस्थानादात्माश्रयाद्वा। भूतलज्ञानापेक्षया घटवद्भूतलज्ञानत्वमेव वा वैधर्म्यभेदः। न चातिरिक्ताभावपक्षेऽप्यन्योन्याभावेऽत्यन्ताभावे च नित्ये मानमस्ति। प्रतियोगिनि बुद्धिस्थेऽधिकरणस्वरूपस्यैवानतिप्रसञ्जकत्वात्। न हि तत्राधिकरणस्य प्रतियोगितादात्म्यं प्रतियोगिमत्त्वं वा संभवति।

---

### प्रकाशः

बुद्ध्योश्चेति। घटवद्भूतलबुद्धितद्भिन्नभूतलबुद्ध्योश्चेत्यर्थः। नान्योन्याभाव इति। यदि तत्प्रतियोगिकान्योन्याभावाधिकरणत्वं ततो भिन्नत्वं तदा अन्योन्याभावे स्वप्रतियोगिनो भिन्नत्वं कुतो [2]भवेत्। अन्यान्याभावान्तराच्चेत् तदा तत्र तत्राप्येवमेवेत्यनवस्थेत्यर्थः।

---

### न्यायशिखामणिः

त्यनुपलब्धिसहकृतमधिकरणज्ञानमभावप्रत्यक्षमात्रे कारणम्। न चैतत् गुरुमतेऽ-[प्यभाव] व्यवहारकारणमिति युक्तम्। घटवत्यपि तत्सत्त्वेन संवादिव्यवहारप्रसङ्गात्। किं तु पूर्वोक्त एव तात्पर्यम्।

अत एव तदेवोपपादयति—बुद्ध्योश्चेति। नन्वेवमप्येकत्र आत्माश्रयानवस्थयोर्विरोध इत्याशङ्क्य अन्योन्याभावव्यक्त्यभेदविवक्षायामात्माश्रय इत्यभिप्रेत्य तद्भेदविवक्षायामनवस्थेत्युपपादयति—यदीति। न चेत्यादिमग्रेरेषोऽर्थः—नन्वभावस्याधिकरणतज्ज्ञानात्मकत्वे नित्यावन्योन्याभावात्यन्ताभावाविति प्रागभावप्रध्वंसौ च कादचित्काविति व्यवस्था न सिध्येदित्याशङ्क्य (तदेवेयं) [तवैवेयं] परिभाषा तन्नित्यत्वस्याप्रामाणिकत्वादित्याह—न चेति। ननु समानाधिकरणाभावप्रतीतिः प्रतियोग्यधिकरणयोः [स्वरूप] भेदमालम्बत इति न युक्तम्। एकस्य विरुद्धोभयस्वरूपत्वासंभवात्। न चोक्तस्थले प्रतियोगिनि ज्ञायमाने तत्प्रतियोगिकाभावत्वेनाधिकरणं ज्ञायत इति विवक्षितमिति वाच्यम्। तर्हि व्यधिकरणाभावस्थले व्यधिकरणमेवाभावः स्यादविशेषादित्यत आह—प्रतियोगिनीति।

---

1. क. भेदः　　2. ख. न भवेत्

अत एवाभावेऽभावान्तरं त्वया न स्वीक्रियते । अधिकरणस्य तद्वैरूप्याभावात् ।

नन्वेवंनैव विशेषो बुद्धेः । न चार्थभेदोऽस्ति । मैवम् । न हि तावदर्थो ज्ञानकारणमवश्यम् । किं तु सामग्रीविशेषात् बुद्धिविशेषो जायते धारावाहिकबुद्धिवत् ।

---

### प्रकाशः

अत एवेति । अनतिप्रसङ्गादेवेत्यर्थः । (न चात्रेति) [न चार्थेति] भूतलमात्रविषययोः घटवद्भूतलबुद्धि[1]घटवद्भिन्नभूतलबुद्ध्योरित्यर्थः । न हीति । अर्थं विना अनुमित्यादेरुत्पत्तेरिति भावः । धारेति । [2]एतच्च बुद्धेः प्रतियोगिमद्भिन्नत्वानवगाहित्वपक्षे बोध्यम् । तद्भिन्नत्वप्रकारत्वाभ्युपमपक्षे[3] चार्थभेद एव ।

---

### न्यायशिखामणिः

अनति(प्रसक्त) [प्रसञ्जक]त्वादिति । अनतिप्रसक्तस्याभावोपलम्भविषयत्वादित्यध्याहारः । ननु तत्राप्यधिकरणं कथमतिप्रसक्तमित्यत आह—न हीति । (तं) [तत्र] निरधिकरणाभावस्थले प्रतियोगिमत्त्वं समानाधिकरणनिषेधस्थले प्रतियोगितादात्म्यं न संभवतीत्यर्थः । व्यधिकरणाभावस्थले तु अधिकरणस्य कदाचित् प्रतियोगिमत्त्वेनातिप्रसङ्गात् नाभावात्मकतेति भावः ।

नन्वेवमाधाराधेयभावानुपपत्तिरित्याशङ्क्य, घटात्यन्ताभावे तदत्यन्ताभाव इतिवन्न विरोधः । अन्यथा तवापि तत्राभावान्तरापत्तिरित्याशयेनाह—अत एवेति । अनतिप्रसङ्गादिति । न चातिप्रसङ्ग इत्यादिना स्वयमेवातःशब्दार्थो विवृत इति तद्विरोधान्नैतद्युक्तमिति वाच्यम् । प्रतियोगिसत्त्वतदसत्त्वरूपद्वैरूप्याभावस्यानतिप्रसङ्गोपपादकत्वात् ।

ननु नन्वित्यत्राधिकरणताबुद्ध्योर्भेदासिद्धेः तद्गर्भाधिकरणबुद्धिर्नाभाव इत्युक्तमयुक्तम् । निरधिकरणाभावस्थले प्रतियोग्यप्रकारकत्वरूपविशेष्यस्य तत्र सत्त्वादित्याशङ्क्य साधिकरणघटाद्यभावाभिप्रायेण व्याचष्टे—भूतलेति । विषयस्य ज्ञानत्वावच्छिन्नकारणत्वाभावे हेतुमाह—अर्थमिति ।

---

1. क. ॰तद्भिन्न- 2. क. एतद्बुद्धेः 3. क. ॰गमे च

यद्वा घटवद्भूतलभिन्नं भूतलमभावः यत्र परेषामभावः भेदश्च स्वरूपमेव, तादात्म्येनाप्रतीतौ प्रतीतिरिति तत्रापि स्वरूपभेदलक्षणम् ।

---

### प्रकाशः

अत एवाग्रिमग्रन्थेऽपि [1]तथैव, युक्तं च तथा । न हि विषयाभेदे सामग्री-भेदप्रयुक्तो ज्ञानव्यक्तिभेदो [2]धारावाहिकवद्व्यवहारभेदप्रयोजक इति ।

ननु घटाद्यभावव्यवहारे [3]प्रतियोगिमत्त्वमधिकरणविशेषणम्, न तु [4]ज्ञान-विशेषणमित्युक्तम् । एवं च बुद्ध्यन्तर्भावो गुरुरित्यस्वरसादाह—यद्वेति । न चाधाराधेयभावानुपपत्तिः । घटाभावे घटाभाव इतिवदुपपत्तेः ।

नन्वाकाशादौ प्रतियोगिमदधिकरणाप्रसिद्धिरिति चेत्—तदनभ्युपगन्तृ-मतेनास्योक्तत्वादित्येके ।

आकाशादेरभावाभ्युपगमे वा प्रतियोगिप्रतियोगिकभिन्नाधिकरणनिष्ठसंबन्ध उक्तस्यार्थो [5]द्रष्टव्यः । अस्ति चाकाशादिप्रतियोगिकभिन्न.[6] सर्वनिष्ठः संबन्धो न तु घटप्रतियोगिकभिन्नो घटवति घटसंबन्धस्य प्रतियोगिप्रतियोगिकत्वादित्यन्ये ।

---

### न्यायशिखामणिः

ननु यद्वेत्यत्र सर्वोऽप्यभावोऽधिकरणात्मक उक्त इवाभाति । तदयुक्तम् । अन्योन्याभावे निरधिकरणाभावे च प्रतियोगिमद्भिन्नेत्यस्य वैयर्थ्यादित्याशङ्क्य साधिकरणाभावव्यवहारप्रयोजकान्तरमत्रोच्यत इत्यभिप्रेत्य पूर्वोक्तप्रयोजक एव जयदेवोक्तमस्वरसमाह—नन्विति । उक्ताशयमविद्वान् शङ्कते—नन्विति । तन्मतमाह—तदिति । सर्वत्राकाशसंबन्धसत्त्वान्न तदत्यन्ताभाव इति भावः ।

तदीयं मतान्तरमाह—आकाशादेरिति । आकाशसंयोगसत्त्वेऽपि भूत-लादौ संबन्धान्तरावच्छिन्नतदभावो न विरुद्ध इति भावः । सर्वनिष्ठ इति ।

---

1. क. तथैवायुक्तम्
2. क. धारावाहिकव्यवहारे भेद-
3. क. प्रतियोगिमत्त्वविशेषणम्
4. क. ज्ञानविशेषणमुक्तम्
5. ख. मन्तव्यः
6. ख. 'कभिन्नो घटवति....पूर्व एव' इति ग्रन्थस्त्रुटितः ।

इदानीमिदं भूतलं घटवद्भूतलं न भवतीति प्रतीतेः ।

---

प्रकाशः

वस्तुतो घटाद्यभावस्थल एवोक्तलाघवात् तन्मात्राभिप्रायेण कल्पान्तरमिदम्, निरधिकरणाभावव्यवहारे च पूर्व एव कल्प इति । भेदश्चेति । न त्वन्योन्याभावः, उक्तयुक्तेरिति भावः । स्वरूपस्य भेदत्वे संवादमाह—तादात्म्येति ।

यदपेक्षया स्वरूपस्य भेदत्वमभिमतं तद्तात्मत्वेनाप्रतीयमानत्वे सति प्रतीयमानत्वमित्यर्थः । अत्र स्वापेक्षया [1]स्वरूपस्य भेदत्वं स्यादित्यत उक्तं सत्यन्तम् । अप्रतीयमानतादशायां स्वस्यापि स्वात्मत्वेनाप्रतीयमानत्वसंभवात् उक्तदोषतादवस्थ्यम् अत उक्तं प्रतीयमानत्वमिति । तदा च स्वस्य स्वात्मतयैव न प्रतीयमानत्वमिति न दोषतादवस्थ्यम् । अप्रतीयमानत्वमप्रमीयमाणत्वम्, तेन रजततया प्रतीयमान शुक्तौ [2]नाव्याप्तिः । ईश्वरज्ञानमादायाप्रतीयमानत्वासंभवात् प्रतीयमानत्वपदं

---

न्यायशिखामणिः

आरोप्यसंबन्धजातीय इति शेषः तेन भूतले संबन्धान्तरस्यैवारोप्यतया तत्र विद्यमानतत्संयोगस्य विजातीयत्वात् प्रतियोगिमत्त्वेऽपि न दोष इति ध्येयम् ।

ननु घटवद्भूतले स्वगतरूपादिसंबन्धस्य तथात्वादतिप्रसङ्गतादवस्थ्यम् । न च यत्राधिकरणे सर्वोऽपि संबन्धस्तादृशः तत्राभावव्यवहार इति विवक्षितमिति नोक्तदोष इति वाच्यम् । एतस्य प्रतियोगिमद्भिन्नाधिकरणापेक्षया गुरुत्वात् पूर्वोक्तनिरधिकरणाभावव्यवहारप्रयोजकस्यादुष्टतया तेनैव तदुपपत्तेश्चेत्यस्वरसादुक्ताशयमाविष्करोति—वस्तुत इति । उक्तयुक्तेरिति । अनवस्थादेरित्यर्थः ।

नन्वत एवेत्यनेन पौनरुक्त्यमित्याशङ्क्य, स्वरूपस्यात्यन्ताभावत्वे संवादपरं तत् । इदं तु स्वरूपस्यान्योन्याभावत्व इत्याह—स्वरूपस्येति ।

ननु सर्वस्यापि स्वात्मत्वेन प्रतीयमानापेक्षया अन्यापेक्षया भेदत्वादसंगतिरित्याशङ्क्य तत्पदं प्रतियोगिपरमित्याह—यदिति । तत्रापीत्यत्रापिरेवकारार्थकः । तथा च तत्रैवेदं स्वरूपभेदलक्षणमिति यज्जयदेवव्याख्यानं तदाह—तत्रापीति ।

---

1. क. रूपस्य
2. ख. नातिव्याप्तिः

एतावांस्तु विशेषो यत्तत्र समानाधिकरणनिषेधप्रतीतिरियमन्योन्याभावभेदमवगाहते मम तु [1]स्वरूपम् ।

ननु यदेव भूतलं घटवद्भूतलाभिन्नमासीत् तदेव कथं तद्भिन्नमिति चेत्—न । तत्राप्यबाधितसमानाधिकरणनिषेधप्रतीतिबलेनान्योन्याभावसिद्धौ तथात्वस्य दुर्वारत्वात् । समयभेदेनैव भेदाभेदौ न विरुध्येते इति तु समम् । यदि च घटवद्भूतलाभिन्नं तदिदानीं स्यात् तदा घटवद्भूतलव्यवहारस्तत्र स्यात् । घटतदभावावच्छेदकभेदेनान्योन्याभावतदभावौ भूतले

## प्रकाशः

चिन्त्यम् । तत्रापि इत्युक्त्या च स्वमते प्रतीयमानत्वाभावेन भेदलक्षणम्, भेदेन चाप्रतीयमानत्वनिर्वचनम्, भिन्नाधिकरणस्यैवाभावत्वादित्यन्योन्याश्रयात् नेदं लक्षणम् । अतिरिक्ताभाववादिमते तु तत्संभव इति सूचितमित्याहुः ।

[2]समयभेदेन तत्रैव तद्भेद इत्यभिप्रेत्याह—इदानीमिति । घटवत्त्वादात्म्येनाप्रतीयमानत्वादित्यर्थः । ममापीत्युपलक्षणम् । [3]समयभेदोऽपि द्रष्टव्यः ।

## न्यायशिखामणिः

अन्योन्याश्रयादिति । यदि चैतद्दोषभिया प्रतीयमानान्योन्याभावो विवक्षितः तदा भेदलक्षणे तत्प्रवेशादात्माश्रय इति बोध्यम् ननु यदधिकरणं कदाचिदपि न प्रतियोगिमत् तत्र सर्वदा घटवद्भेदसंभवात् इदानीमिति विशेषणवैयर्थ्यम् । व्यवहितभेदलक्षणानुपपादकत्वाच्चासंगतिरित्याशङ्क्य, एतद् व्यवहितान्वय्येव । इदानीमित्येतच्च यदधिकरणं कदाचित् प्रतियोगिमत् तत्परमित्याह—समयेति । घटवद्भेदप्रतीतेस्तद्वत्तादात्म्येनाप्रतीयमानत्वगर्भं भेदलक्षणमत्रास्तीत्यव्यवहितेन वान्वय इत्याह—घटवदिति । ननु घटवद्भूतलबुद्धेरपि भूतलबुद्धित्वान्न तस्यास्तदभावावच्छेदकत्वमित्याशङ्क्य, अत्रापि समयभेदस्यावच्छेदकत्वे तात्पर्यम् । घटतदत्यन्ताभावयोरेकत्रावस्थानाय तस्यैवानुसरणीयत्वादित्याशयेनाह— समयभेदोऽपीति ।

1. ख. स्वरूपभेदं
2. ख. समवायभेदेन
3. ख. समवायभेदोऽपि

वर्तेते इति चेत्—ममापि भूतल(बुद्धि)[बुद्धे]र्घटवद्भूतलबुद्ध्यवच्छेदेन [1]स्वरूपभेदतदभावौ वर्तेते इति गृहाण।

ननु भूतले घटोऽस्ति न वेति संशयो घटो नास्तीति विपर्ययो वा कथं भवेत्। प्रतियोगिनि बुद्धिस्थेऽधिकरणस्य तज्ज्ञानस्य चाभावस्योपलम्भादिति चेत्—न। भूतले तज्ज्ञाने वा घटवद्भिन्नत्वस्य घटवद्भूतलज्ञानभिन्नत्वस्य च दोषवशेनानिश्चयात्। भूतलतज्ज्ञानस्वरूपाणामननुगमात् कथमनुगतव्यवहार इति चेत्—न। अभावेऽपि तुल्यत्वात्। न ह्यभावत्वं सामान्यम्। अभावत्वगतान्योन्याभावाव्यापकत्वात्।

---

### प्रकाशः

भूतल इति। ननु भेदोऽपि स्वरूपमेवेति कथं तदनिश्चयः। मैवम्। घटाभावे घटोऽस्ति न वेति यथा तव संशयः, तथा ममापि इति प्रतिबन्दौ तात्पर्यम्। अभावेऽपीति। अतिरिक्ताभावे[2]ऽपीत्यर्थः। अभावत्वेति। स्ववृत्तित्ववत् स्ववृत्तिवृत्तित्वस्यापि केवलान्वयिभिन्नेऽसंभवादिति भावः। यद्वा सामान्यपदं जातिपरम्। तत्र च [3]स्ववृत्तिवृत्तित्वासंभवादिति [4]बोध्यम्।

---

### न्यायशिखामणिः

ननु प्रमेयत्वादिवत्तदभावत्वस्यापि स्ववृत्तिवृत्तित्वं न (रोच्यत) [विरोत्स्यत] इत्यत आह—स्ववृत्तित्ववदिति। न च केवलान्वयिभिन्नेऽपि भावत्वे स्ववृत्त्यभिधेयत्वादिवृत्तित्वदर्शनात् प्रकृतेऽपि तन्न विरुद्धमिति वाच्यत्। तन्मते तस्यापि केवलान्वयित्वादिति भावः।

ननु सर्वं सामान्यं प्रमेयमिति ज्ञानविशेष्यत्वं घटाद्यवृत्तित्वादकेवलान्वयिसामान्यकोटिप्रविष्टत्वात् स्ववृत्ति चोपलब्धम्। तथा चाभावत्वस्यापि तथात्वेन विरोध इत्यनुशयादाह—यद्वेति। नन्वभावे भावान्तरानभ्युपगमेन तत्र सहावस्थानाभावस्य तत्स्वरूपत्वेऽपि लक्षणस्य नातिव्याप्तिरित्यत आह—तथा चेति।

---

1. ख. स्वरूप एव भेदाभेदौ
2. ख. ०क्ताभावो
3. ख. स्ववृत्तित्वं न संभवति।
4. ख. 'बोध्यम्' इति नास्ति।

न च भावविरोधित्वम् । विरोधस्याभावनिरूप्यत्वात् भावाभावयोः सहावस्थानाभावस्य स्वरूपानतिरेकाच्च । नापि भावप्रतियोगित्वम् । प्रतियोगित्वस्याभावविरहरूपत्वात् अभावाभावस्य भावस्य भावाप्रतियोगिकत्वाच्च[1] । नापि सप्रतियोगिकत्वम् । समवायसादृश्यादीनामपि तथात्वात् । नापि परकीयस्वभावत्वम्, ज्ञानादिगतत्वात्, स्वभावशब्दस्य स्वरूपार्थेऽननुगमाच्च । नापि सत्ताशून्यत्वम्, सत्तायामेव गतत्वात्, शून्यत्वस्याभावरूपत्वाच्च । सत्तात्यन्ताभाववत्त्वमभावत्वम्, अत्यन्ताभावश्चाभावत्वानवगतावप्यवगत इति चेत्—न । अभावेऽभावानभ्युपगमात् तथात्वेऽपि तत्रैव तदभ्युपगमात् ।

---

प्रकाशः

अत एवोपाधौ [1]स्ववृत्तिवृत्तित्वेऽपि न दोष इत्याशयेन शङ्कते—न चेति । अन्यथा अत्राप्युक्तदोषापत्तेरिति भावः । भावाभावयोरिति । तथा चाननुगम एवेति भावः । अभावाभावस्येति । यदि च तत्राभावव्यवहारो भावेनेति तदव्याप्तिर्न दोषः अतिरिक्तस्य तस्यानभ्युपगमात् तदाननुगतादेवाभावव्यवहार इति भावः ।

[2]सप्रतियोगित्वं तन्निरूपणाधीननिरूपणत्वम्, परकीयत्वं परवित्तिवेद्यत्वमिति भेदः ।

---

न्यायशिखामणि

ननु स्वभावशब्दस्य स्वरूपवचन(स्थानव्या) [स्याव्या]वर्तकतया लक्षणे प्रवेशाभावात् परकीयत्वमेव लक्षणम् । तत्र च परशब्दः प्रतियोगिपर इत्यभेदमाशङ्क्याह—सप्रतियोगित्वमिति । परवित्तीति । परशब्दश्चात्र न प्रतियोगिमात्रपरः, तथा सति ज्ञानातिव्याप्त्यनवकाशादिति भावः ।

ननु सत्तातिव्याप्तिदोषानुद्धारे कथं कल्पान्तरोत्थानमित्याशङ्क्य आत्माश्रयनिरासमात्रे तात्पर्यमित्याह—सत्तेति । नन्वभावत्वेन ज्ञाताया एवोक्ताभावव्यक्तेर्व्यवहारजनकत्वात् कथं तदुद्धार इत्यत आह—द्रव्यत्वेति ।

---

1. ख. स्ववृत्तित्वेऽपि

2. ख. सप्रतियोगिकत्वं तदनिरूपणा-

सत्ताबोधविधुरत्वमभावत्वम् । सामान्यादौ सत्तावगमेऽपि बाधात् सा त्यज्यते, अभावस्य तद्विरुद्धतयैव प्रतीतेरिति चेत्—न । विरोधित्वस्य स्वरूपानतिरेकात् ।

सहानवस्थाननियमो विरोध इति चेत्—न । अनवस्थानस्याव-स्थानाभावत्वेनात्माश्रयात् । भावभिन्नत्वमिति चेत्—न । भेदस्य स्वरूपा-

---

**प्रकाशः**

सत्त शून्यत्वस्यैवार्थं विविच्य आत्माश्रयमुद्धरति[1]—सत्तात्यन्तेति । द्रव्य-त्वाज्ञाने [2]द्रव्यव्यक्तिवदभावत्वेनाज्ञातया सत्तात्यन्ताभावव्यक्त्यैवानुगतयानुगम इत्यर्थः । सत्तायामेव गतत्वादिति दोषे सत्येव दोषान्तरमाह—अभाव इति । तवैवेति । आत्माश्रयादिति भावः । एतच्चापाततः । वस्तुतस्तु ज्ञानं प्रतियोगि-निरपेक्ष न वा निर्विकल्पकमिति सत्तात्यन्ताभावत्वेनैव ज्ञातस्यानुगमकत्वमित्या-त्माश्रय इत्याहुः । विधुरत्वम्—विरोधित्वम् । अत एवाह—विरोधित्वस्येति । विशेषादर्शनदशायामभावेऽपि सत्ताबोधसंभवः, तद्दर्शने सत्तादावपि नेत्यपि बोध्यम् ।

अनवस्थानस्येति । सत्ताबोध(स्यात्मपिष्ठत्वेन)[स्यात्ममात्रनिष्ठत्वेन] तत्स-हानवस्थायित्वे तत्तन्निष्ठाभावेऽव्याप्तम् । व्योमादौ चातिव्याप्तमित्यपि बोध्यम् । उक्तेति । स्वरूपत्वेऽननुगमः, अन्योन्याभावत्वे आत्माश्रय इत्यर्थः । प्रागिति ।

---

**न्यायशिखामणिः**

आपातत इति । घटात्यन्ताभाववत् स्ववृत्तित्वेऽपि विरोधाभावादिति भावः । अत्यन्ताभावत्वेनेति । तच्चाभावत्वनिरूप्यमिति भावः । ननु सत्ता-बोधविरहः कदाचिद्घटादावपीत्यत आह—विरोधित्वमिति । यदि सर्वदा तद्बोधराहित्यं तद्विरोधित्वं तदा असंभवमुक्त्वा तद्बोधविरहमात्रं तदित्यत्राति-व्याप्तिमाह—तद्दर्शन इति ।

तद्बोधविषयत्वेन सहानवस्थानं भूतलादावभावस्य तत्सहवृत्तित्वादसंभवदि-त्यभिप्रेत्य तद्बोधेन सहानवस्थानमिति पक्षेऽपि यदि तदनधिकरणाधिकरणत्वं

---

1. ख. °मुद्घाटयति 2. क. 'द्रव्य' नास्ति ।

न्योन्याभावरूपत्वे उक्तदोषात्। वैधर्म्यस्य चिन्त्यमानत्वात्। प्रागभावत्वादेरभावनिरूप्यत्वात्। एवं चेदभावेऽपि नानुगमस्तदा किमधिकेन। स्वरूपविशेषादेव घटव्यवहारोऽप्यस्त्विति चेत्—न। भूतलविलक्षणघटानुभवात्। एक एवाभावोऽनुगत इति चेत्—न। तस्य नित्यत्वेन प्रतियोगिकालेऽप्यभावव्यवहारप्रसङ्गात्। प्रागभावादिव्युत्पादनविरोधाच्च।

यद्वा अभाववादिनाप्यभावज्ञानकारणमनुगतो भूतलबुद्धिविशेषः स्वीकार्यः। तद्वरं स एवास्तु प्रमेयं प्रमाणं च। स्वप्रकाशत्वाद्बुद्धीनाम्।

---

**प्रकाशः**

अननुगतत्वाच्चेत्यपि बोध्यम्। एक इति। तथा चातिरिक्ताभावपक्षे नाननुगम इति भावः। अनित्यत्वे तन्नाशे जगदभावशून्यं स्यादिति नित्य एव वाच्यः। तत्राह—तस्येति। अभावेति। ध्वंसव्यवहार इत्यर्थः।

नन्वधिकरणबुद्धेरभावत्वे तदनुव्यवसायं विनाभावव्यवहारो न स्यादिति दोषनिरासाय पूर्वोक्तमपि पुनराह—यद्वेति।

---

**न्यायशिखामणिः**

तत्सहानवस्थानत्वं तदा दोषमाह—सत्त्वेति। (आत्ममात्रेति) [आत्मनिष्ठेति]। आत्ममात्रनिष्ठेत्यर्थः। अभावान्तरस्य घटादावपि सत्त्वेन तत्र लक्षणसंभवादिति बोध्यम्। तदधिकरणानधिकरणत्वं तदित्यत्र दोषमाह—व्योमादाविति। प्रागभावत्वादिकं न लक्षणमित्युक्तं प्रागित्यत्र। तत्र दोषान्तरमाह—अननुगतत्वादिति।

ननु प्रतियोगिकाले घटात्यन्ताभावव्यवहार इष्ट इत्यत आह—ध्वंसेति। ननु यद्वेति पुनरुक्तम्। न च प्रतियोगिमज्ज्ञानभिन्नाधिकरणज्ञानमभाव इत्युक्तम्, इदानीमधिकरणज्ञानमभाव इत्युच्यत इति नाभेद इति वाच्यम्। उक्तदोषात् तन्मात्रबुद्धेरित्यग्रिमग्रन्थविरोधाच्च। तथा च पुनरभिधानं किमर्थमित्याशङ्क्य दोषपरिजिहीर्षयेत्याह—नन्विति।

एतच्चापाततः। यद्यत्रापि प्रतियोगिमदित्यादि विवक्षितम्, तदा तेन रूपेण ज्ञातमेवाभावव्यवहारहेतुरिति वाच्यम्। अन्यथा स्वरूपेण ज्ञातस्यैव तथात्वे संशयादिस्थलेऽप्यभावव्यवहारप्रसङ्गात्। अत एव संशयादिस्थले घटवद्भूतल-

ननु तन्मात्रबुद्धेरभावत्वे तस्याः स्वप्रकाशत्वेन प्रतियोगिज्ञानापेक्षा न स्यादिति चेत्—न। न ग्रहणाय तदपेक्षा, किं तु व्यवहाराय। ज्ञानस्य सत्यामिच्छायां व्यवहारार्थमधिकापेक्षेति चेत्—न। दृष्टा हि व्यवहारार्थमधिकापेक्षा यथा परिमाणस्य दीर्घत्वव्यवहारे। तथा हि अधिकसंख्यावच्छिन्नहस्तवितस्त्याद्यवच्छेदः परिमाणस्य दीर्घत्वम्। तद्विपरीतं तु ह्रस्वत्वम्। तादृशपरिमाणं चावयविग्रहसमकालमेवानुभूतम्। दीर्घत्वव्यपदेशस्तु अल्पसंख्याद्यवच्छिन्नहस्ताद्यवच्छेद्यपरिमाणज्ञानमपेक्षते।

---

## प्रकाशः

ग्रहणायेति। एतच्च स्वरूपेण ज्ञातस्य बुद्धिविशेषस्य व्यवहारजनकत्वपक्षे। यदि च प्रतियोगिमदधिकरणभिन्नत्वेन ज्ञातं ज्ञानं [1]व्यवहारजनकं तदा ग्रहणायैव तदपेक्षेत्याहुः। तथा हीति। यद्यपि निरुक्तदीर्घत्वस्य व्यवहर्तव्यतया तज्ज्ञान एवावधिज्ञानापेक्षा न दीर्घव्यवहारमात्रे, तथापि तदवच्छेदोऽपि परिमाणस्वरूपमेव। तस्य च ग्रहाद्व्यवहारे तदपेक्षेत्याशयः। तादृशेति। महत्त्वस्यैव दीर्घत्वमित्यभिमानः।

---

## न्यायशिखामणिः

ज्ञानभिन्नत्वस्य दोषवशेनानिश्चयादित्युक्तम्। तथा चोक्तरूपस्य स्वप्रकाशबुद्ध्यवेद्यत्वात् ज्ञानान्तरापेक्षादोषो दुर्वार एव।

वस्तुतस्तु अधिकरणबुद्धिविशेष एवाभावः। या बुद्धिरतिरिक्ताभाववादिमते भावप्रत्यक्षप्रमाहेतुः (स)[सा] च घटवति नेति नातिप्रसङ्गः। तथा च पूर्वानुक्तमेव कल्पान्तरमत्रैवोच्यत इति ध्येयम्।

ननु स्वरूपेण ज्ञानं न व्यवहारहेतुरित्युक्तमित्यस्वरसादाह—यदि चेति। ननु महत्त्वरूपपरिमाणविषयतयापि द्रव्यप्रत्यक्षसंभवे तत्समकालं दीर्घत्वमनुभूतमिति न युक्तमित्यत आह—महत्त्वस्येति। ननु महदपि ह्रस्वं दीर्घमप्यणु क्वचिदनुभूयत इति अन्योन्यव्यभिचारात् परिमाणचातुर्विध्यमेव। अतो महत्त्वमेव दीर्घत्वमित्यसंगतमित्यनुशयं सूचयति—अभिमान इति।

---

1. क. व्यवहारकं

तन्मात्रबुद्धेरभावत्वे दृश्यप्रतियोगिज्ञानापेक्षतया दृश्यतासंपत्त्यर्थं केशकीटादिसूक्ष्मजिज्ञासाप्यर्थवती न च तन्मात्रबुद्धेरभावत्वे तद्विनाशे अभावाभावे भावोन्मज्जनप्रसङ्ग इति वाच्यम्। यथा घटाभावो बुद्धिस्तथा बुद्ध्यभावस्यापि बुद्ध्यन्तरत्वात्। निर्जने बन्धविच्छेदे च जलनिस्सरणं नानुपपन्नम्। मनुष्याभावेऽपि पक्षिकीटादिबुद्धिविशेषसंभवात्। मोक्षे पुरुषान्तरस्य नियमे प्रमाणं नास्तीति चेत्—न। कार्यात् कारणकल्पनात्। न चैवं बुद्धिनाशे पुनः समारिता।

---

**प्रकाशः**

ननु यदि तन्मात्रबुद्धिरभावबुद्धिः (तदो)[नदौ]दनादौ केशादिजिज्ञासानुपपन्ना। तां विनाप्यधिकरणबुद्धिमात्रस्य केशाद्यभावस्य निर्णयादित्यत आह — तन्मात्रेति। दृश्यता योग्यता। सा च प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसंपाद्यः। तथा च केशादेः सूक्ष्मस्य प्रतियोगिनो जिज्ञासापि ग्राहिकेति दृश्यतासंपत्त्यर्थं सार्थवती। तेन दृश्यतायां सत्यां तन्मात्रबुद्धिरभावव्यवहारिकेत्यर्थः। ज्ञानापेक्षा अभावव्यवहारार्थमिति शेषः। मुक्तस्य ज्ञानाभावात् परकीयज्ञानात्मको दुःखाभावो वाच्यः, तत्राह—मोक्ष इति। कार्यादिति। दुःखाभावव्यवहारलक्षणादित्यर्थः।

बुद्धिधारेति। ननु परस्य परात्मविषया बुद्धिधारा न प्रत्यक्षा किं त्वनुमित्यादिरूपा। न चानुमित्यादयो धारावाहिन्यः। तथा च तदन्यपुरुषीया [1]बुद्धि-

---

**न्यायशिखामणिः**

प्रत्यक्षयोग्यता सा दृश्यता। सा न जिज्ञासां (विनेत्यत्र ततस्तां निवृत्ति?) [विनेत्यतस्तां निर्वक्ति]—सा चेति। नन्वभावबुद्धिकार्यात्तद्विषयकारणकल्पनमित्यर्थपरत्वेऽतिरिक्ताभावाभ्युपगमप्रसङ्ग इत्यत आह—दुःखेति।

जयदेवोक्तमस्वरसमनुवदति—नन्विति। न चेति। अनुमित्यनन्तरमेव नानुमितिः, तयैव सिद्ध्या प्रतिबन्धात्। किं तु सिद्धीष्टसाधनत्वभङ्गतसाधनव्याप्यत्वस्मरणं ततः (सिसा) [सिषाधयिषा ततः] लिङ्गपरामर्शः ततोऽनुमितिरित्य-

---

1. क. बुद्धेरेवं

बुद्धिधारासत्त्वात् । न च सर्वमुक्तिः, प्रमाणाभावात् । प्रतियोगिमदधिकरणभिन्नाधिकरणस्वरूपस्याभावत्वे सर्वं समञ्जसमेवेति पूर्वपक्षः ।

---

**प्रकाशः**

रेवं तदन्यान्यपुरुषीयेत्यनन्तात्मनामाकल्पं तादृशबुद्धिधाराकल्पनमप्रामाणिकं गुरु चेति चेत्—न । उक्तोत्तरत्वात् । तद्धेतोरेवेति न्यायेनाधिकरणग्रहस्यैवाभावव्यवहारकत्वसिद्धौ[1] प्रामाणिकत्वात् । अत एव गौरवं न दोषः । स्मृतिधारासंभवाच्च । न च संस्कारोद्बोधकज्ञानान्तरेण तस्यापि सान्तरत्वम् । अदृष्टादेरपि [2]तदुद्बोधकत्वात् ।

यद्वा एतदस्वरसादाह—प्रतियोगिमदिति ।

---

**न्यायशिखामणिः**

भ्युपगमादिति भावः । तदन्येति । अस्य पुरुषस्यानुमितिनाशसमये तदन्यपुरुषस्य दुःखाभावरूपानुमितिकल्पनम् । एवं तद्धागसिद्धये (तदन्या……कल्पन) [तदन्यान्यपुरुषीयबुद्धिधाराकल्पन]मित्यर्थः । उक्तेति । उक्तप्रायेत्यर्थः ।

ननु यत्कल्पनं विना मुक्तस्य दुःखाभावो न निर्वहति तदेव युक्तम् । एकपुरुषीयस्मृतिधारयैव (तन्निर्वाहो) [तन्निर्वाहे] न तत्पुरुषाणामनुमितिकल्पनं प्रामाणिकमित्यनुशयादाह–स्मृतीति । जयदेवोक्तमाशङ्क्य निराकरोति–नचेति ।

ननु संस्कारस्य स्मृतिनाश्यत्वात् प्रथमस्मृत्या तन्नाशे धारानुपपत्तिः । तदभ्युपगमे विषयान्तरसंचारसुषुप्त्यनुपपत्तिश्चेति चेत्—न । प्रमाणसिद्धस्मृतिधारानुरोधेनानेकसंस्कारस्य तदा तदविनाशस्य वा कल्पनात् । परसुषुप्तिसमये तदन्यपुरुषीयस्मृतिधाराकल्पनाच्च न सुषुप्त्याद्यनुपपत्तिः । पूर्वकल्पे प्रत्यनुमिति पुरुषभेदः, इह च प्रतिस्मृति न तथेति न पूर्वाभेद इति भावः ।

ननु शब्दखण्डे महाप्रलयः साधितः श्रुतिसिद्धश्च । तथा च सर्वकार्यविनाशात्तदा कथं दुःखाभावः । न च परमेश्वरीया नित्या बुद्धिस्तदधिकरणविषया तदाप्यस्त्येवेति वाच्यम् । (तद्धान)[तज्ज्ञान]स्यैवासत्संसारसमये दुःखवदधि-

---

1. ख. व्यवहारहेतुत्वात् सिद्धौ  2. क. तद्बोधकत्वात्

सिद्धान्तस्तु—सप्रतियोगिकोऽभावोऽनुभूयते। घटो न पटो नेत्यनुभवात्। न तु तन्मात्रम्। अतोऽभाववित्तिवेद्यत्वं प्रतियोगिनः प्रतियोगिज्ञानाधीनज्ञानत्वं चाभावस्यानुभवसाक्षिकं गोसादृश्यवत्। न च केवलमधिकरणं तज्ज्ञानं वा अभावः। प्रतियोगिज्ञानं विनापि तद्वित्तेः, तद्वित्तौ प्रतियोगिनोऽविषयत्वाच्च। सप्रतियोगिकत्वाभावे च कस्य प्रतियोगी घटः।

अथ केवलमधिकरणं तज्ज्ञानं वा अभावः स चाप्रतियोगिक एव। अभावव्यवहारस्तु प्रतियोगिज्ञानमपेक्षत इति तस्य प्रतियोगी घटः, घट-

---

प्रकाशः

प्रतियोगिज्ञानेति। यद्यप्येतन्नानुभव[1]साक्षिकम्, तथाप्यनुभवसाक्षिके तद्वित्तिवेद्यत्वे पूर्वप्रतीतस्य विशेषणतया [2]विशेषणत्वानुभवेनैव तदाक्षिप्तमिति परंपरया तत्राप्यनुभवः साक्षीति भावः।

नन्विदन्त्वेन तदनुभवस्य प्रतियोगिनिरपेक्षत्वात् अभावत्वेन तदनुभव एव तत्सापेक्षत्वम्। तच्च ममापि तुल्यम्। [3]घटवद्भिन्नत्वरूपस्याभावत्वस्य घटधीसा-

---

न्यायशिखामणिः

करणज्ञानत्वेन तद्भिन्नत्वासिद्धेः। अपि च वक्ष्यमाणरीत्या गत्यन्तरसंभवान्नेयं कल्पना युक्तेत्यस्वरसादाह—यद्वेति।

नन्वेवमपि मुद्गरपातस्थले तज्जन्याभावानुपपत्तिदोषो न निराकृत इति चेत्—न। अभावश्चतुर्विध इति (तदेयं)[तवेयं]परिभाषा। मम त्वन्योन्याभावोऽत्यन्ताभावश्चेत्यभावद्वयमेव। तथा च कुतस्तत्र मुद्गरपातजन्यत्वावकाशः। अस्तु वा तज्जन्यत्वम्। तावताप्यतिरिक्तप्रागभावप्रध्वंससिद्धावपि न नित्येऽन्योन्याभावेऽत्यन्ताभावे चातिरिक्ते मानमस्ति। तदेतदभिसन्धाय मूले संक्षेप इति द्रष्टव्यम्।

पूर्वप्रतीतस्येति। एतच्च विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वमिति स्वमतदार्ढ्येनोक्तम्। न तावदभावप्रत्यक्षमात्रे तदपेक्षा, व्यभिचारादित्याह—

---

1. क. 'साक्षिकम्, तथाप्यनुभव' इति ग्रन्थस्त्रुटितः।
2. ख. विशेषणानुभवत्वेनैव
3. क. घटादिवद्भिन्नत्व-

तदभावव्यवहारयोर्विरोधादिति चेत्—न। इह घटो नेति नञर्थस्य प्रतियोगी घटोऽनुभूयते। न त्वभावज्ञानानन्तरभाविनोऽभावव्यवहारस्य। तस्याभावानुभवसमयेऽप्रतीतेः। व्यवह्रियतेऽसौ न त्वनुभूयत इति चेत्—न। तादृशानुभवं विना तथा व्यवहाराभावात्। व्यवहारे प्रतियोगिज्ञानापेक्षेत्यपि न युक्तम्। व्यवहर्तव्यज्ञानस्य सत्यामिच्छायां व्यवहारेऽधिकापेक्षाया अदृष्टचरत्वात्। लाघवादिह तथा कल्प्यते न त्वभाव इति चेत्—न। व्यवहारमात्रे तथा करणत्वानवधारणात्, व्यवहारविशेषस्याननुगतत्वात्।

---

प्रकाशः

पेक्षत्वादिति चेत्—न। लाघवेन अभावप्रत्यक्षत्वावच्छिन्ने प्रतियोगिज्ञानस्य हेतुत्वात् तद्भिन्नत्वरूपस्याधिकरणरूपतया (सति) [सप्रति]योगिकत्वानुपपत्तेश्च। व्यवह्रियत इति। [1]नञर्थप्रतियोगित्वेन घटो व्यवह्रियते, न तु तत्त्वेनानुभूयत इत्यर्थः। तादृगिति। [तादृशेति]। समानप्रकारकत्वेन तयोः कार्यकारणभावात् अन्यथातिप्रसङ्गादिति भावः। नत्विति। न त्वतिरिक्ताभावः कल्प्यत इत्यर्थः। तथेति। व्यवहर्तव्यज्ञानस्याधिकापेक्षितया[2] कारणत्वानवधारणादित्यर्थः। अभावदीर्घादिव्यवहारेऽपि तथा[3]हेतुत्वं न कल्प्यते, अननुगमादित्याह—[4]व्यव-

---

न्यायशिखामणिः

इदन्त्वेनेति। एतच्चोपलक्षणम्। प्रमेयत्वादिनेत्यपि द्रष्टव्यम्। नाप्यभावत्वप्रकारक इत्याह—अभावत्वेनेति। लाघवेनेति। अभावत्वप्रकारकप्रत्यक्षत्वापेक्षया तत्प्रत्यक्षत्वस्य सामान्यत्वादिति भावः।

ननु लघ्वपि नेदमवच्छेदकम्। इदं प्रमेयवदिति प्रमेयत्वप्रकारप्रत्यक्षे व्यभिचारात्। अन्यथा ततोऽपि लाघवादभावज्ञानत्वस्यैवावच्छेदकत्वापत्तेरित्यस्वरसादाह—तद्भिन्नत्वेति। ननु घटेऽनुभवनिषेधानुपपत्तिरित्यत आह—

---

1. क. ःञर्थप्रतियोगिकत्वेन
2. ख. ०पेक्षिततया
3. क. हेतुत्वमननुगमादित्याह
4. ख. 'व्यवहारविशेषस्येति...ज्ञानापेक्षेत्यर्थः' इति ग्रन्थो न दृश्यते।

ह्रस्वत्वदीर्घत्वे च परिमाणान्तरे एव । तत्राप्यधिकसंख्यावच्छिन्न-हस्ताद्यवच्छेद्यत्वं परिमाणस्य ह्रस्वत्वं दीर्घत्वं च अल्पाधिकावधिज्ञानाधीन-ज्ञानम् । अतो द्रव्यसमकालं परिमाणानुभवेऽपि नानुभूतमिति न तदा तद्व्यवहारः । गोसादृश्यं यद्यपि गवयगतानि सामान्यानि तज्ज्ञानसम-कालमेवानुभूतानि ; तथापि गोवृत्तित्वे सति गवयवृत्तित्वं गोसादृश्यत्वं गोज्ञानाधीनज्ञानमिति न तदा सादृश्यव्यवहारः ।

---

प्रकाशः

ह्रागविशेषस्येति । क्लृप्तव्यवहर्तव्यज्ञानादेव तदुपपत्तौ अधिकापेक्षणे गौरवमिति भावः ।

दृष्टा हीत्यादि दूषयति—ह्रस्वेति । न त्वणुमहत्त्वात्मके इति शेषः । तथा च तज्ज्ञान एवावधिज्ञानापेक्षेत्यर्थः । परदृशापि समाधत्ते—तत्रापीति । गुणगतजात्यनभ्युपगमादिति भावः । तथा चोपाधेरपि प्रवृत्तिनिमित्ततया व्यवहर्त-व्यत्वात् व्यवहर्तव्यज्ञानार्थैवाधिकापेक्षेति[1] भावः । न च तदवच्छेद्यत्वं स्वरूपमेव, तद्धर्मत्वेनानुभवात् । स्वरूपत्वेऽपि तस्य तेनैव रूपेण ज्ञानं तद्व्यवहारकम् , अन्य-थातिप्रसङ्गादिति भावः ।

---

न्यायशिखामणिः

नञर्थेति । नन्वतिरिक्ताभावरूपधर्मिकल्पनातोऽपेक्षितत्वाल्लक्षणधर्मकल्पनस्य लघु-त्वात् भावस्थल एव तत्कल्पनं युक्तम् , न त्वभाव इत्युक्तमयुक्तम् । तेनाप्यभाव-स्वीकारादित्यत आह—अतिरिक्तेति । यद्यप्यभावव्यवहारत्वमनुगतम् , तथापि धर्मत्वव्यवहारे परैरधिकापेक्ष[त्वा]स्वीकारान्न युक्तमित्याह—अभावेति । ननु ससंबन्धिकव्यवहारत्वमनुगतम् । यदि च संयोगादिव्यवहारेऽतिप्रसङ्गः, संबन्ध-भिन्नत्वं विशेषणमस्तु इत्यत आह—क्लृप्तेति ।

नन्ववयविग्रहसमकालं दीर्घत्वमनुभूतमित्येवोक्तम् । न त्वणुत्वमहत्त्वात्मके ह्रस्वत्वदीर्घत्वे इति । तथा चानुक्तोपालम्भ इत्याशङ्क्य तदुपपादकत्वेन तत्राभि-हितमित्याशयेनाह—दृष्टा हीति । ननु तत्रापीत्यस्याव्यवहितान्वये न्यायमतेऽपि

---

1. ख॰ ॰धिकरणापेक्षेति

प्रकाशः

अन्ये तु परिमाणस्य सावधित्वे मानाभावात् अस्मन्मतेऽपि तदवच्छेद्यतावच्छेदकजातिमत्त्वं प्रवृत्तिनिमित्तमेव सावधिताद्दश[तार]शब्दवदिति तदनुसारेणैव ग्रन्थं व्याचक्षते। परिमाणे अणुत्वमहत्त्वात्मके।

ननु घटाद्यभावो नेति सप्रतियोगिकत्वानुभवेऽपि यथा तदभावस्य निष्प्रतियोगिकत्वम्, तथा घटाभावस्यापि निष्प्रतियोगिकाधिकरणस्वरूपत्वमस्तु। न

---

न्यायशिखामणिः

तदुपाधिज्ञानस्यावधिज्ञानसापेक्षत्वमङ्गीकृतं स्यात्। तच्च गुणगतजात्यभ्युपगमात् पूर्वं धर्मिज्ञाने तदपेक्षोक्तिविरोधाच्चायुक्तमित्याशङ्क्य, व्यवहर्तव्यज्ञानार्थमवधिज्ञानापेक्षेत्यध्याहृतेनान्वयमभिप्रेत्याह—परेति। तदुपाधित्वेनाप्रवृत्तिनिमित्तत्वादव्यवहर्तव्यतेत्याशङ्क्य जात्यभावे सोऽप्यगत्या तथेत्याह—तथा चेति। तद्धर्मत्वेनेति। न ह्यभाववदतिरिक्तधर्मस्वीकारे अपसिद्धान्त इति भावः। अभ्युपेत्याह—स्वरूपत्व इति। एवमुपाध्यायमतानुसारेण ग्रन्थं व्याख्याय तन्मतं जयदेवोक्तेन दूषयति—अन्ये त्विति। परिमाणस्येति। तथा च तज्ज्ञानेऽवधिज्ञानापेक्षेत्युपाध्यायमतमयुक्तमिति भावः। अयमस्माद्दीर्घ इति सावधिकव्यवहारो मानमित्याशङ्क्य, अयमस्मात्तार इति एकप्रवृत्तिनिमित्तद्वारैव तदुपपत्तिरित्याशयेनाह—अस्मन्मत इति। ननु जातेरपि सावधित्वे मानाभाव इत्याशङ्क्य स्वरूपेणेष्टापत्तिरित्यभिप्रेत्य तदवच्छेदकत्वरूपेण सा तथेत्याह—तदवच्छेद्यतेति। [न च ह्रस्वत्वदीर्घत्वयोः]तदसिद्धमिति वाच्यम्। ह्रस्वत्वदीर्घत्वयोर्मध्यमपरिमाणवृत्तित्वेन संकरनिरासाय तदवच्छेद्यतावच्छेदकत्वस्यावश्यकत्वात्। अत एवानुरूपं दृष्टान्तमाह—तारशब्दवदिति। तत्रापि सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्वं प्रवृत्तिनिमित्तमिति तदेव (साधिक)[सावधिक]मिति भावः। तर्हि ग्रन्थविरोध इत्यत आह—तदिति।

एतन्मते दीर्घत्वेत्यादिमणेरेषोऽर्थः। अतिदीर्घातिह्रस्वपरिमाणगतदीर्घत्वह्रस्वत्व(जाति)[जाती]मध्यमपरिमाणगतजातिभिन्ने, अन्यथा संकरप्रसङ्गात्। तथा च तदवच्छेद्यतावच्छेदकत्वात् सावधिके। ततश्च प्रवृत्तिनिमित्तज्ञानार्थ(मिव)[मेव] अवधिज्ञानापेक्षेति भावः। अत्रैव परसंमतिमाह—तत्रापीति।

स्यादेतत्। अस्ति तावत् कस्यचित् ज्ञानात्* क्वचित् अभावपदप्रयोगः सर्वसिद्धः। तत्र प्रयोगालम्बनं भूतलाद्येव घटवदतिरिक्ताप्रकाशात्। ततश्च यदपेक्षं यस्याभावपदप्रयोगविषयत्वं तत्तस्याभाव इत्युपेयते। तद्बुद्धिजनिताभावपदप्रयोगविषयत्वमेव घटभूतलयोः प्रतियोग्यनुयोगिरूपः

---

**प्रकाशः**

चाभावाभावोऽप्यतिरिक्तोऽस्ति, अपसिद्धान्तात्। यदि च स्वरूपस्य निष्प्रतियोगिकत्वे तदभावत्वेन ज्ञाने तज्ज्ञानापेक्षा, तदात्रापि तुल्यमिति चेत्—

अत्र वदन्ति। अभावासिद्धिदशायां तादृशप्रतिबन्द्यनवतारेणाप्रतिबन्दितया[1] उक्तयुक्त्या अभावसिद्धौ तदुत्तरकालमनवस्थया अभावप्रतियोगिकाभावान्तराप्रमितौ तस्य भावत्वपर्यवसाने, अवतीर्णापि सा नाभावग्राहकप्रमाणं बाधते, उपजीव्यविरोधात्।

---

**न्यायशिखामणिः**

जयदेवमतमाह—अत्रेति। अत्रेदं चिन्त्यम्। भूतलस्याकारद्वयं भूतलत्वमभावत्वं चेति। तच्च प्रतियोगिमद्भिन्नाधिकरणत्वम्। तथा च तस्य प्रतियोगिनिरूप्यत्वात् तत्प्रकारकप्रत्यक्षे तदपेक्षा न विरोत्स्यते। त्वयापि तत्रैव तत्स्वीकारात्। न चतदधिकरणस्वरूपमित्युच्यत इति वाच्यम्। तथात्वेऽपि तत्प्रकारकज्ञानाविरोधात्। न च स्वरूपतो निष्प्रतियोगिकस्याकारान्तरेण सप्रतियोगिकत्वमदृष्टचरमिति वाच्यम्। गवयगतसामान्यस्य स्वरूपतस्तादृशस्यापि गोसादृश्यत्वेन रूपेण सप्रतियोगित्वस्य तवैव घटस्य घटाभावाभावत्वेन तथात्वस्य च दृष्टत्वात्। न चाभावासिद्धिदशायां तथात्वमसिद्धमिति वाच्यम्। तस्य पुरुषदोषत्वात्, वस्तुतस्तथात्वस्य त्वन्मतसिद्धत्वात्। न चाभावप्रत्यक्षे तदपेक्षास्वीकारे अपसिद्धान्तः, व्यवहार एव तैस्तत्स्वीकारादिति वाच्यम्। तज्ज्ञानेऽपि तत्सापेक्षत्वस्य तैरङ्गीकृतत्वात्। अत एव प्रतियोगिनि बुद्धिस्थे अधिकरणस्य तज्ज्ञानस्य वा अभावस्योपलम्भादिति प्रागुक्तम्। तस्मान्निष्प्रतियोगिकमप्यधिकरणं प्रकारान्तरेण सप्रतियोगिकमिति संक्षेपः।

---

1. ख. °णाप्रतीततया

संबन्धः। अत एव भूतलस्य सप्रतियोगिकत्वं, तद्बुद्धिजनिताभावपद-प्रयोगविषयत्वेन तद्बुद्धिं विना अभावपदप्रयोगाविषयत्वात्। अनेनैवो-पाधिना घटाभावादिपदव्युत्पत्तिग्रह इति चेत्—(न।) [तन्न] अभाव-पदप्रयोगालम्बनं न भूतलम्। न हि भूतलं घटाभाव इति प्रतीतिप्रयोगौ, अपि तु भूतले घटाभाव इति। भूतले घट इतिवत् भूतले घटो नास्तीति भूतलाधिकरणातिरिक्तनञर्थप्रकाशात्।

अपि च घटबुद्धिजनिताभावपदप्रयोगविषयत्वं भूतलस्य घटाभाव-त्वम्। तथा च घटाभावत्वे तस्यावगते घटाभावपदप्रयोगविषयत्वम्। घटाभावपदप्रयागविषयत्वे च ज्ञाते तस्य घटाभावत्वमिति अन्योन्याश्रयः। पदप्रवृत्तिनिमित्तेऽवगते पदप्रयोगनियमात्। घटाभावत्वं च घटाभावपदे

---

### प्रकाशः

घटवदिति व्यतिरेकदृष्टान्तः।

अनेनैवेति। यद्यपि घटाभावेति वाक्यं न पदम्। तथाप्यनेनैवोपाधिना घटाभावशब्दप्रवृत्तेरेतदुपाधिप्रकारकं ज्ञानं तेन जन्यत इत्यत्र तात्पर्यम्।

---

### न्यायशिखामणिः

ननु घटस्यातिरिक्तस्याप्रकाशनं न तद्दृष्टान्त इत्यत आह—व्यतिरेकेति। ननु लाघवात् तत्र [क्लृप्त] भावस्यैवाभावत्वसिद्धौ तदनुरोधेन व्यवहारेऽधिकापेक्षा-कल्पनं फलमुखत्वान्न दोषः। उक्तबाधकात्तदेवासिद्धमिति चेत्—किं भूतले घटप्रतियोगिकाभावत्वस्यानुपपत्तेः उत तयोः प्रतियोग्यनुयोगिभावस्य, सप्रतियोगि-कत्वस्य वा। त्रितयस्याति) [त्रितयमप्यति]रिक्ताभावानभ्युपगमेऽप्युपपद्यते। उक्तोपाधिना. प्रतियोगिमद्भिन्नाधिकरणत्वेन वा प्रवृत्तिनिमित्तेन तत्र घटाभावपद-व्युत्पत्तिः गृह्यत इति न तदभावपदप्रयोगविषयत्वानुपपत्तिरिति च स्यादेतदित्यत्रा-शङ्कितम्। तत्र शङ्कते यद्यपीति। तथापीति। तथा च वाक्ये शक्त्यभावात् व्युत्पत्तिपदं सामर्थ्य·······[परमिति भावः]।

तन्नेत्यादिमणेरेषोऽर्थः। न तावद्भूतलस्य घटप्रतियोगिकाभावत्वम्। तद्धि तद्बुद्धिजनिताभावव्यवहारविषयत्वम् अन्यद्वा। नाद्यद्वितीयौ·······तथापि भूतलं नाभावः, तत्त्वे मानाभावादित्याह—तन्नेति। ननु न्यायमत इवान्यदेवा-

प्रवृत्तिनिमित्तम् । यदि च भूतलं सप्रतियोगिकं तदा प्रतियोगिनं विना केवलं न भासेत सादृश्यादिवत् । घटाभावपदप्रयोगदशायां तत् सप्रतियोगिकं नान्यदेति चेत्—तर्हि घटप्रतियोगिकत्वे तस्य घटबुद्धिजनिताभावपदप्रयोगविषयत्वम्, सति च तस्मिन् घटप्रतियोगिकत्वमित्यन्योन्याश्रयः, केवलस्याप्रतियोगिकत्वात् । एवं च गोबुद्धिजनितसदृशपदप्रयोगविषयत्वं गवयस्य गोसादृश्यमस्तु, कृतमतिरिक्तसादृश्येनेति सप्रतियोगिकपदार्थापलापः ।

अपि च न केवलं भूतलमभावः, भूतलाभावयोः आधाराधेयभावानुभवात् अभेदे तदनुपपत्तेः । दुःखवदात्मभिन्नस्य चात्मनो दुःखाभावत्वे मोक्षस्यापुरुषार्थत्वप्रसङ्गः, आत्मनोऽसाध्यत्वात् ।

---

प्रकाशः

ननु घटाभावे घटो नास्तीतिवत् आधाराधेयभावादिकमुपपद्यत इत्यनुशयादाह—दुःखवदिति ।

---

न्यायशिखामणिः

भावत्वम् । तत्र च भूतलस्य तत्त्वे प्रतीतिप्रयोगौ मानमिति चेत्—किं भूतलं घटाभाव इति वा भूतले घटाभाव इति वा । तत्राद्यं निराकृत्यान्त्यं निराचष्टे—भूतल इति । एवं तादृशव्यवहारविषयत्वमभावत्वमित्यभिप्रेत्य मानाभावात् तन्नाधिकरणस्येत्युक्तम् । [इदानीं] तन्नाभावत्वमित्याह—अपि चेति । ननु पूर्वेषां (तत्प्रतियोग) [तत्प्रयोग]विषयत्वरूपमभावत्वमवगम्य उत्तरेषां (तत्प्रतियोग) [तत्प्रयोग] इति नान्योन्याश्रय इत्यपरितोषात् यदि चेत्युक्तमिति केचित् । तन्न । तथा सत्यन्धपरंपरा स्यात् । पूर्वप्रयोगविषयत्वाप्रतिसन्धानेऽपि प्रतियोगिमद्भिन्नाधिकरणत्वज्ञाने सति तत्प्र(ति)योगाच्च । निष्प्रतियोगिकत्वात्तदपि भूतलं न घटाभाव इत्याह—यदि चेति । सप्रतियोगिकमिति । सर्वदेति शेषः । अत एव कदाचिदेव तथेति शङ्कते— घटेति । सप्रतियोगिकत्वमिति शेषः । ननु प्रतियोगिमद्भिन्नाधिकरणत्वमेवाभावत्वम् । तदेवाभा(वसताद)[वशब्द] प्रवृत्तिनिमित्तमिति नान्योन्याश्रयः । अभावत्वप्रकारकव्यवहारे प्रतियोगिबुद्ध्यपेक्षणाच्च

अथ घटवद्भूतलज्ञानभिन्नं भूतलज्ञानमभावः। तस्य च भूतलाधारता स्वरूपसंबन्धेनानुभूयत इति चेत्—न। [1]तस्य निष्प्रतियोगिकत्वेनाभावत्वानुपपत्तेः इत्युक्तत्वात्।

अपि च तज्ज्ञानं किं स्वरूपसदेवाभावव्यवहारकारणम्, भूतलाधिकरणकनिषेधरूपतयानुभूयमानं वा। नाद्यः, स्वरूपसतो भूतलाधेयतया प्रतीत्यनुपपत्तेः। न द्वितीयः, घटवद्भूतलज्ञानस्य तदानीमनुपस्थितेः तद्भिन्नज्ञानस्य प्रत्येतुमशक्यत्वात्।

किं च यदि घटवद्भूतलज्ञानात् भिन्नभूतलज्ञानमभावः तदा घटवति दोषात् घटवत्त्वाज्ञाने भूतलज्ञानमभावो भवेत्। तथा च तदेव तदैव घटवत् घटाभाववच्च स्यात्, न स्यातां च घटाभावज्ञानतद्व्यवहारौ विसंवादिनौ [2]विषयाबाधात्।

अथ वस्तुतो घटवतो भूतलस्य ज्ञानाद्भिन्नं भूतलज्ञानमभावः न च घटवति भूतलज्ञानम्। तथा व्यवहारस्तु विसंवादी। तथाविधभ्रमादर्शनादिति चेत्—तर्हि घटवतो भूतलस्य ज्ञानात् भिन्नत्वेन ज्ञानं भूतलज्ञानमभावव्यवहृतिहेतुः। न च तत्संभवति। स्वप्रकाशेनानुव्यवसायेन वाधिकरणज्ञाने तदप्रकाशात् भेदप्रतियोगिनोऽनुपस्थितेः। न च ज्ञाना-

---

प्रकाशः

भूतलाधारतेत्युपलक्षणम्। साध्यतया मोक्षरूपत्वमप्युपपद्यत इत्यपि बोध्यम्।

---

न्यायशिखामणिः

न ते भानविरोध इत्यपरितोषादाह—अपि चेति। अभावे नाभावान्तरमित्यत्र (पूर्वपक्षमित्युक्त)[पूर्वपक्ष्युक्त]मेवापरितोषमाह—नन्विति। नन्वधिकरणवत्तज्ज्ञानस्याप्याकारान्तरेण सप्रतियोगिकत्वं न विरुद्धमित्यपरितोषादाह—मूले अपि चेति। ननु प्रतियोगिमदधिकरणज्ञानभिन्नत्वप्रकारकज्ञानस्याभावव्यवहारकत्वप्रौव्ये तदनुरोधेन भेदप्रतियोग्युपस्थितिस्तदा कल्प्यत इत्यनुशयादाह—मूले किं चेति।

---

1. ख. ज्ञानस्याप्रति 2. ख. विषयबाधाभयात्

न्तरेण तथानुभवः। योग्यानुपलब्ध्या तत्र घटाभावनिश्चयं विना तथा निश्चेतुमशक्यत्वात्।

अपि चाधिकरणतज्ज्ञानानामननुगतत्वेनानुगताभावव्यवहारानुपपत्तिः। न चातिरिक्ताभावपक्षेऽपि तथाभावत्वस्यानुगतस्याभावादिति वाच्यम्। अनुगताभावत्वं विनापि घटादिर्न पट इति समानाधिकरणनिषेधादनुगतव्यवहारः पटान्योन्याभावेनैकेन, एवं घटादौ न गोत्वमित्यनुगतव्यवहार एकेनात्यन्ताभावेन, कपालेषु भूतलेषु इदानीं घटो विनष्ट इत्यनुगतव्यवहारो ध्वंसेनैकेन, घटानुत्पाददशायामेतेषु घटो नास्तीत्यनुगतव्यवहार एकेन प्रागभावेन, एवं चत्वारोऽनुगतनिषेधव्यवहाराश्चतसृभिरेव व्यक्तिभिः क्रियन्ते। तव तु अभावचतुष्टयं तत्तदधिकरणतत्तद्बुद्धीनामननुगतत्वान्न संभवति, अनुगताभावचतुष्टयव्यवहारस्य प्रत्येकाभावे-

---

प्रकाशः

न च ज्ञानान्तरेणेति। भेदप्रतियोग्युपस्थितौ सत्यामिति शेषः।

तस्य च यथेति। तस्याभावचतुष्टयस्य यथा येन प्रकारेण यया युक्त्येति यावत्। अभावत्वाख्येन केनचिद्धर्मेण एकपदार्थत्वं स्वीक्रियते तथा—तं [1]प्रकार,

---

न्यायशिखामणिः

अत एव तदुपस्थितिं सिद्धवत्कृत्याह—भेदेति। नन्वतिरिक्ताभाववादिनाप्यभावप्रत्यक्षप्रमायामनुगताननतिप्रसक्ताधिकरणबुद्धिविशेषो हेतुर्वाच्यः। तथा च तद्धेतोरेवेति न्यायेन स एवाभावव्यवहारहेतुरिति पक्षे नोक्तदोषावकाश इत्यरुचेराह—मूले अपि चेति।

नन्वेकपदार्थत्वं (भावत्वान्वयातियुक्तेत्यनन्वयः) [अभावत्वेन यया युक्त्येत्यनन्वयः]। न च स्वीक्रियत इत्यध्याहृतेनान्वय इति वाच्यम्। अनुगताभावत्वासिद्धौ तेनैकपदार्थत्वं स्वीक्रियत इत्यनुपपत्तेरित्यत आह—अभावत्वाख्येनेति। केनचिदिति। अखण्डेनेत्यर्थः। नन्वेवं सति अखण्डाभावत्वयुक्तेः 'तत्र' इत्यग्रि-

---

1. ख. प्रकारान्तरं युक्तमिति

नोपपादयितुमशक्यत्वादित्यतिरिक्ताभावव्यक्तिचतुष्टयसिद्धिः। तस्य च यथा अभावत्वेनैकेनैकपदार्थत्वं तथानुपदमेव वक्ष्यामः।

---

प्रकाशः

तां युक्तिमिति यावत्। अनुपदमेव 'यदि चाभावप्रतीतिप्रयोगानुगमार्थम्' इत्यादिना परमुखेनैव विभावयिष्याम इत्यर्थः। सा च युक्तिः प्रतीतिप्रयोगानुगमरूपेति बोध्यम्। तथा चात्र तद्धर्मनिर्वचनस्याप्रतिज्ञातत्वादग्रे तदनिर्वचनेऽप्यदोषः।

यत्तु येन धर्मेणैकपदार्थत्वमिति स्फुट एवार्थो ग्राह्यः। न चाग्रे तदनिर्वचनाद्विरोधः। 'समयविशेषयोगस्य निष्प्रतियोगित्वेने'ति ब्रुवता अर्थात् सप्रतियोगिकत्वमभावत्वमित्युक्तत्वात्। न च [1]समवायाद्यतिव्याप्तिः। सप्रतियोगिकत्वेन

---

न्यायशिखामणिः

मग्रन्थेऽनभिधानादनुपदमित्ययुक्तम्। न च यदि चेत्यत्र परमुखेन तदभिधानमिति वाच्यम्। तत्राप्यखण्डाभावत्वस्यासाधितत्वादित्यत आह—यदि चाभावेति। तत्र च जातेरुपाधेर्वाभावत्वस्य सत्त्वादिति जात्युपाधित्वप्रतिषेधानन्तरं तत्र धर्मान्तरं स्वीक्रियत इति वचनव्यक्तिबलात् पूर्वत्र सखण्डोपाधिरेव प्रतिषिद्धः। इह त्वभावत्वा(स्यसखण्ड)[ख्यमखण्ड]धर्मान्तरं स्वीक्रियत इति गम्यत इति भावः।

नन्वभावत्वनिर्वचनप्रतिज्ञा मूले प्रतिभाति। तां विहाय अखण्डाभावत्वयुक्तिप्रतिज्ञापरत्वं किमर्थमित्यत आह—तथा चेति। धर्मनिर्वचनप्रतिज्ञापरत्वेऽपि न दोष इति जयदेवेन व्याख्यातम्। तदाह—यत्तु इति। तदिति। अभावत्वेत्यर्थः। (प्रतियोग्यधिकरणविशेषणकेति।) [प्रतियोग्यविशेषणकेति]। घटपटयोः संयोग इति प्रतियोगिविशेषणकप्रत्ययविषयत्वात् संयोगेऽतिव्याप्तिरिति तद्वारणाय नञ्द्वयादरः।

केचित्तु लक्षणे प्रत्ययपदं लौकिकप्रत्यक्षपरम्। तेनाभाव इति शाब्दज्ञानं तदुप(जीव) [जीव्य]मानसं ज्ञानं चादाय नाव्याप्तिरिति। तत्तुच्छम्। अभावत्वं न

---

1. ख. समयाद्यति-

स्यादेतत् । यस्मिन् समयविशेषे यत्र भूतलेऽभावः परैः स्वीक्रियते, तत्समयविशेषयोग एव भूतलस्य घटाभावः । एवं चेह भूतले घटो नास्तीत्याधाराधेयभावप्रतीतिरप्युपपद्यते । समयविशेषयोगस्य भूतलवृत्तित्वात् । न च समयविशेषयोगस्याभावत्वेऽननुगमो दोषः । अतिरिक्ताभावपक्षेऽपि तुल्यत्वात् । अभावत्वस्य जातेरुपाधेर्वा असत्त्वात् । यदि चाभावप्रतीतिप्रयोगानुगमार्थं तत्र धर्मान्तरं स्वीक्रियते, तदा समयविशेषयोगवृत्त्येव तदस्तु, लाघवादिति ।

---

प्रकाशः

प्रतियोग्यविशेषणकप्रत्ययाविषयत्वस्योक्तत्वात् । समवायसंयोगयोस्तादृशप्रतीतिविषयत्वात् नीलो घट इति प्रत्ययात् [1]संयोगे निर्विकल्पकसंभवाच्च । न च ज्ञानादावतिप्रसङ्गः । विषयातिरिक्तप्रतियोगिज्ञानजन्यज्ञान[2]विषयत्वस्यापि विशेषणादिति ।

तच्चिन्त्यम् । अभावगर्भत्वेनात्माश्रयात् । अन्यथा भावविरोधित्वादेरेव तथात्वमस्तु, किमनेन गुरुणा लक्षणेन । किं च अभावप्रतियोगी घट इत्यादिप्रत्ययात् तादृशप्रतीतिविषयत्वादव्याप्तिः । अन्यथा सादृश्याद्यतिव्याप्त्यापत्तेः । यदि

---

न्यायशिखामणिः

जातिः, किं तूपाधिः । तथा च प्रतियोग्यविशेषणकेत्यादिरूपस्याभावत्वस्य (प्रतियोगि····र्थकतया) [प्रतियोगिविशेषणकप्रतीतिविषयत्वार्थकतया] शाब्दज्ञानस्यावश्यं तद्विशेषणकत्वात् । किं चैवं किं चेति ग्रन्थविरोधः । अभावप्रतियोगी घट इति प्रत्यक्षस्याभावांशे लौकिकत्वाभावात् नील इति । एतच्चोपलक्षणम् । संयुक्ता(दिति)[विति] प्रत्ययात्तत्रापि न दोष इति द्रष्टव्यम् । इतोऽपि संयोगे नातिव्याप्तिरित्याह—संयोग इति ।

अत्र निर्विकल्पकपदमनेन विशेषणेनानवगाहिज्ञानपरम् । तच्च संयोग इति शाब्दज्ञानपरम् । अन्यथा यथाश्रुतेऽपसिद्धान्तात् । समवायेऽपि तत्संयोग इत्यनुष······ । अनेकविशेषणानवगाहिपरत्वे समवायत्वस्योपाधिरूपानेक-

---

1. ख. संयोगनिर्वि- 2. ख. 'विषय' नास्ति ।

तन्न। समयविशेषयोगस्य निष्प्रतियोगिकत्वेनाभावव्यवहारासामर्थ्यात्। किं च भूतलवत् समयविशेषोऽपि अभावाधारतयानुभूयते इदानीं भूतले घटो नास्तीति प्रतीतेः। न च तत्समयविशेषे तत्समयविशेषयोगः। अभेदे संबन्धानुपपत्तौ आधाराधेयभावाभावात्।

अपि च समये किमभावाश्रयतैव विशेषः, तत्तत्समयस्वरूपं वा। आद्येऽभावस्वीकारः। द्वितीयेऽननुगमः। मम तु एकाभावव्यक्तेरेव तथा, नानासमयवृत्तित्वात्।

किं च समयविशेषयोगादिदानीं भूतलमिति प्रतीतिप्रयोगौ स्याताम्, विशेषणस्य स्वप्रकारकविशिष्टप्रत्ययजनकत्वात् न तु भूतले घटाभाव इति।

---

प्रकाशः

च घटत्वं [1]सादृश्यप्रति(योगिनि)[योगीति] प्रत्ययात्तस्य न तथात्वम्, तदा तुल्यम्, विशिष्टज्ञानसामग्रीनियमेन संयोगनिर्विकल्पकानभ्युपगमाच्च। अन्यथाभावेऽपि निर्विकल्पकसंभवादव्याप्त्यापत्तेः। लाघवादिति। समयविशेषयो(ग्य)[ग]स्यावश्यकत्वादिति भावः।

समयविशेषयोगादिति। तस्यातीन्द्रियतया तद्योगोऽतीन्द्रिय एवेत्युपनीतभानं वाच्यमिति विशेषणत्वेन तस्य भानं स्यात्। न तु विशेष्यत्वेन। चाक्षुषादिबुद्धावेन्द्रियकस्यैव विशेष्यत्वादिति भावः।

---

न्यायशिखामणिः

विशेषणघटितत्वेन समवाय इति शाब्दज्ञानस्यातथात्वात् संयोग इति न विरोधः। न चैवमपि संयुक्ताविति प्रत्ययात् संयोगे नातिव्याप्तिः। तथाप्युक्तिखण्डने तात्पर्यम्।

नन्वस्याप्याकारान्तरेण सप्रतियोगिकत्वं न विरोत्स्यत इत्यरुचेराह मूले—किं चेति। नन्विदानीं समय इति प्रतीत्या समयेऽपि समयो वर्तत एव। किं च भूतलसमयसंयोगस्यैवाभावत्वाभ्युपगमात् तस्य च कालेऽपि सत्त्वाभोक्त-

---

1. ख. 'सादृश्यप्रतियोगिनि……लाघवादिति' इति ग्रन्थस्त्रुटितः।

यदि च तत्तत्समयविशेषयोगाद्भूतले घटाभावव्यवहारस्तदा यादृश-संस्थानविशेषविशिष्टे कपाले घटो वर्तते तादृशकपालादिकमेव तत्तत्समय-विशेषयोगात् घटादिव्यवहारजनकमस्तु किं घटादिना। प्रतीतिश्च तुल्या। एतेन—

'दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो
दृष्टा खर्परसंहतिः परमितोऽभावो न दृष्टोऽपरः।
तेनाभाव इति श्रुतिः क्व निहिता किं चात्र तत्कारणं
स्वाधीना कलशस्य केवलमियं दृष्टा कपालावली॥'

इति निरस्तम्। मुद्गरपाताद्विनष्टो घट इति प्रतीत्यतिरिक्तविनाशानु-भवात्। न च केवलभूतलं तद्बुद्धिर्वा तज्जन्या, तेन विनापि तयोः सत्त्वात्। त्वन्मते च तयोरभावमात्रत्वेन विनाशत्वायोगात्। योगे वा अभावमात्रस्य विनाशित्वापत्तिः।

---

प्रकाशः

मम षडिन्द्रियवेद्यः काल इति यदि परो ब्रूयात् तदा दोषान्तरमाह—यदि चेति। [1]इत इति। इतः [2]कर्परसंहतेरपरो नाभावो [3]दृष्ट इत्यर्थः। स्वाधीना—घटान-वष्टब्धा।

---

न्यायशिखामणिः

दोष इत्यरुचेराह—अपि चेति। ननु प्रतियोगिमद्भिन्नाधिकरणसमयसंयोगोऽभाव इति नाननुगम इत्यपरितोषादाह—मूले किं चेति। नन्वभावस्यानुपस्थितत्वात् प्रतीतेः कथं तद्विशेषणकत्वमेव युक्तमित्यत आह—तस्येति। चाक्षुषादीति। बाह्येन्द्रियजन्येत्यर्थः। तेन मानसज्ञाने परमाण्वादेर्विशेष्यत्वेऽपि न विरोधः। ऐन्द्रियकस्येति। तत्तदिन्द्रिययोग्यस्येत्यर्थः। तेन चाक्षुषादिबुद्धौ सौरभादेर्न विशेष्यत्वापत्तिरिति ध्येयम्। इतो भाव इत्यत्र भाव इति भ्रमं वारयति—इत इति। ननु गुरुमते ध्वंसव्यवहारालम्बनं किमित्याशङ्कायां केवलकपालावलिरि-

---

1. क. उत इति। 2. क. कर्परसंहतेः
3. ख. 'दृष्ट इत्यर्थः……तदारोपासंभवात्' इति ग्रन्थस्त्रुटितः।

अथ त्वन्मते यद्विनाशकं तदेव तत्सहितं भूतलं ज्ञानं वा विनाश इति चेत्—न। मुद्गरपातजन्यो हि विनाशोऽनुभूयते। न च तस्यैव तज्जनकत्वम्। सप्रतियोगिकश्च विनाशोऽनुभूयते। न च मुद्गरपातस्तथा।

नन्वभावेन समं भूतलस्य संबन्धाभावात् कथं भूतले घटाभावप्रत्ययः। स्वरूपसंबन्धादिति चेत्—तर्हि घटवद्भूतलस्यापि चत्वरीयाभावेन स्वरूपसंबन्धोऽस्ति। भूतलमभावश्चेत्यधिकस्य स्वरूपसंबन्धस्याभावात्।

प्रतियोग्यारोप एव स्वरूपसंबन्धः। अत एवारोप्य निषिध्यत इत्युच्यत इति चेत्—न। तत्राभावसंबन्धे सत्यारोपः स एव चाभावसंबन्ध इत्यन्योन्या(श्रय)[श्रयात्]इति चेत्—

न। संबन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वस्य स्वरूपसंबन्धत्वात्। न च घटवद्भूतलचत्वरीयाभावयोः परस्परं विशिष्टप्रत्ययः।

---

प्रकाशः

प्रतियोग्यारोप इति। तथा च घटवति तदारोपासंभवान्न तत्राभावसंबन्ध इति भावः। तत्रेति। तत्राभावसंबन्धे सिद्धे तस्यारोपत्वम्, तस्मिंश्च सिद्धेऽभावसंबन्धसिद्धिरित्यन्योन्याश्रयादित्यर्थः।

संबन्धान्तरमन्तरेणेति। विशिष्टप्रत्ययजननयोग्यतालिङ्गित[1]स्वरूपद्वयस्य संबन्धत्वादित्यर्थः। (ननु)[नतु]योग्यत्वस्यैव संबन्धत्वम्। विशिष्टधीविषयस्य संबन्ध-

---

न्यायशिखामणिः

त्युक्तम्। तत्र स्वाधीनेत्यनेन केवलशब्दोऽभिहितः। कपालस्य स्वकारणाधीनत्वात् स्वाधीनत्वमयुक्तमित्यत आह—घटेति। घटवद्भिन्नेत्यर्थः।

ननु प्रतियोग्यारोपस्यात्मनिष्ठत्वात् तद्विषयत्वस्य च प्रतियोगिवृत्तित्वात् कथमभावसंबन्धत्वमित्याशङ्क्य आरोपविषयप्रतियोगिकत्वं संबन्ध इत्यभिप्रेत्याह—तथा चेति। नन्वारोपसंबन्धयोरभेदात् कथमन्योन्याश्रय इत्याशङ्क्य आरोपत्वपरतया व्याचष्टे—तत्रेति।

---

1. ख. °स्वरूपस्य

ज्ञानविषययोः समवायसमवायिनोरिव संबन्धान्तराभ्युपगमने चानवस्था-भिया तत्संबन्धसंबन्धिनोरपि तादृशसंबन्धस्वीकारादिति [1]सिद्धोऽतिरिक्तोऽभाव इति तद्ग्राहिका विशेषणतेति सिद्धमेतत् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे अभाववादः

—: * :—

प्रकाशः

त्वात् । तस्य च विशिष्टधीघटितस्यातथात्वात् । अत एव संबन्धस्य संबन्धि-भिन्नत्वनियमेन स्वरूपसंबन्धं परे दूषयन्ति । अग्रिमग्रन्थस्यापि स्वरस एवमेवेति बोध्यम् ।

नन्वेवमभावभ्रमानुपपत्तिः । योग्यतायाः फलकल्प्यत्वेन तत्र विशिष्टप्रत्यय-योग्यतावश्यकत्वात् । न च प्रत्ययपदं प्रमापरम् । [2]संबन्धसत्त्वेन तस्या अपि

न्यायशिखामणिः

यथाश्रुते दोषमाह—नन्विति । [नन्विति] । अत एवेति । स्वरूप-संबन्धात्मकत्वस्येत्यर्थः । अन्यथा भट्टदूषणानवकाश इति भावः । ननु न्यायै-कदेशिमतमादायापि तद्दूषणसंभवे गङ्गेशस्य तथा तात्पर्यकल्पनं न युक्तमित्यनुश-यादाह—अग्रिमेति । संबन्धाभ्युपगमादित्यग्रिमग्रन्थात् स्वरूपस्यैव संबन्धत्वप्रतीतेरित्यर्थः ।

किं स्वरूपद्वयस्य योग्यताविशिष्टस्याभावप्रतीतिविषयत्वं तदुपलक्षितस्य वा । आद्येऽपि तद्योग्यत्वं यथाश्रुतं प्रमाघटितं वा । तत्राद्ये दोषमुक्त्वा द्वितीयमाशङ्क्य दूषयति—न चेति । उपलक्षणपक्षे दोषमाह—किं चेति । न च विषयभेदाभावेऽपि दण्डिन्येव दण्डापसारणानन्तरं दण्ड-

1. ख. सिद्धोऽधिको
2. ख. संबन्धत्वेन

प्रकाशः

प्रमात्वात् । अन्यथा तस्या अप्रमात्वे तत्र संबन्धान्तराभावः तस्मिंश्च सति तस्या अप्रमात्वमित्यन्योन्याश्रयः ।

किं च योग्यतायाः प्रत्ययाविषयत्वे धर्मिद्वयमात्रविषयतायां कथं काचित्प्रमा काचिन्नेति विभागः । अतीन्द्रियाभावस्वरूपसंबन्धाव्याप्तिश्च । तत्र स्वरूपद्वयस्य विशिष्टप्रत्ययाजनकत्वादिति चेत्—

अत्र वदन्ति । विशिष्टप्रत्ययजननयोग्यतावच्छेद[1]कावच्छिन्नस्वरूपस्य संबन्धत्वात् । योग्यतावच्छेदकं चात्यन्ताभावे प्रतियोगिदेशान्यदेशत्वम्, प्रागभावादौ प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वम्[2], अन्योन्याभावे प्रतियोगितावच्छेदकदेशान्यदेशत्वम् । न चान्यत्वमन्योन्याभाववत्त्वम्, तत्र च

---

न्यायशिखामणिः

प्रत्ययस्य पूर्वगृहीततत्संयोगतत्तद्दण्डपुरुषविषयकस्य भ्रमत्वम्, पूर्वप्रत्ययस्य च प्रमात्वं दृष्टम् । तद्वदत्रापि स्यादिति वाच्यम् । विद्यमानाविद्यमानसंयोगविषयत्वेन प्रमात्वाप्रमात्वोपपत्तेः । न ह्यत्र तथा, स्वरूपद्वयस्य विद्यमानत्वात् ।

नन्वतिरिक्ताभाववादिमतेऽपि संबन्धानिरूपणात् आधाराधेयानुपपत्तिस्तुल्येति शङ्कायां तत्संबन्धनिर्वचनम्, अस्यैव प्रमाघटितस्याभावप्रतीत्यविषयत्वेऽपि न विरोधः । तद्विषयस्तु प्रतियोगिदेशान्यदेशत्वाद्यवच्छिन्नमभावस्वरूपमिति न प्रमाभ्रमविभागानुपपत्तिरित्याशङ्क्याह —अतीन्द्रियेति ।

जयदेवसमाधिमाह—अत्रेति । नन्ववच्छेदकत्वं न तावत् समानाधिकरणत्वम्, प्रमेयत्वादावतिव्यापकत्वात् । नाप्यनतिरिक्तवृत्तित्वम् । प्रतियोगिदेशान्यदेश(त्व)[त्वा]व्यापनात् । घटात्यन्ताभावत्वादावतिप्रसङ्गाच्च । न चेष्टापत्तिः । तदवच्छिन्नस्वरूपस्य प्रतियोगिदेशेऽपि संबन्धत्वप्रसङ्गात् । न चान्यूनवृत्तित्वम् । तथाप्यैन्द्रियकातीन्द्रियाभावान्यतरत्वेऽपि तत्प्रसङ्गात् । नाप्यन्यूनानतिरिक्तवृत्तित्वम् । ऐन्द्रियकत्वावच्छिन्नप्रतियोगिकाभावत्वेऽतिव्याप्तेः प्रतियोगिदेशान्यदेश-

---

1. ख. ॰कत्वावच्छि-  2. ख. ॰कालीनत्वम्

प्रकाशः

मत्वर्थयोग इति वाच्यम्। तत्रापि तद्देशान्यदेशत्वस्य सत्त्वात्। न चैवमनवस्था, वस्तुनस्तथात्वात्। प्रत्ययानवस्था तु नास्त्येव। उक्तावच्छेदकस्य प्रत्ययाविषयत्वात्।

अत एवातीन्द्रियाव्याप्तिरपास्ता। एकत्रोक्तावच्छेदकावच्छिन्नस्य संबन्धत्वेन विद्यमानसंबन्धविषयत्वम्, अन्यत्र नेति प्रमाभ्रमविवेकोऽपीति।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणि-
प्रकाशे प्रत्यक्षखण्डे अभाववादः

—: * :—

---

न्यायशिखामणिः

त्वादेरयोग्यपरमाण्वाद्यभाववृत्तितया तत्राव्याप्तेश्चेति चेत्—न। योग्यतापदेन प्रतियोगिदेशान्यदेशत्वादय उपलक्ष्यन्ते। न चावच्छेदकग्रहणवैयर्थ्यम्। तेन समानाधिकरणवाचिना शक्यसंबन्धसूचनात्तदवच्छिन्नस्वरूपस्य संबन्धत्वमित्यर्थः।

प्रागभावादाविति। प्रतियोग्यनधिकरणे तयोः संबन्धवारणाय सत्यन्तम्। कपालादौ प्रतियोगिकाले तद्वारणाय विशेष्यम्। योग्यतापदेन तदुपलक्षणस्य प्रयोजनमाह—अत एवेति।

ननूक्तावच्छेदकस्यानवस्थाभिया प्रत्ययाविषयत्वे स्वरूपद्वयमात्रविषयताया-मुक्तविभागानुपपत्तितादवस्थ्यमित्यत आह—उक्तेति। एतच्च प्रत्ययविशेषणं, स्वरूपे तूपलक्षणमित्यभिप्रेत्य। तथा च वस्तुतस्तदवच्छिन्नाभावस्वरूपस्य प्रतियोगिमत्यविद्यमानत्वेन यत्र यत्संबन्धो नास्तीत्यप्रमालक्षणसत्त्वात् तज्ज्ञानस्याप्रमात्वम्। संबन्धात्मनस्तत्राभावादिति।

अत्रेदं चिन्त्यम्—प्रतियोगिदेशान्यदेशत्वं नावच्छेदकम्, तस्याधिकरणवृत्तित्वेनाभावे तदसिद्धेः। न च तादृशाधिकरणवृत्तित्वं तथा। वृत्तित्वमित्यत्र संबन्धप्रवेशे आत्माश्रयात्। अत एवान्योन्याभावादौ प्रतियोगितावच्छेदकेत्याद्यपि न युक्तम्।

नन्वधिकरणवृत्तिप्रतियोगिकत्वाभावोऽत्यन्ताभावेऽवच्छेदकः। अन्योन्याभावे त्वधिकरणवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वाभावः। प्रागभावध्वंसयोश्चाधि-

न्यायशिखामणिः

करणे कालवृत्तिप्रतियोगिकाभावस्तथेति विवक्षितमिति नोक्तदोष इति चेत्—न। अभावमात्रस्य यत्किंचिद्देशकालवृत्तिप्रतियोगिकत्वात्। न च स्वाधिकरणेति विवक्षितम्। तत्र च स्वाधिकरणवृत्तिभूतलत्ववायुत्वाभावादौ तद्घटितप्रतियोगिप्रसिद्धिरिति वाच्यम्। तथापि स्वाधिकरणत्वस्य स्वसंबन्धिनिरूप्यत्वेनात्माश्रयात्। किं च प्रागभावादौ प्रतियोगिदेशत्वमपि प्रवेश्यम्। तच्च प्रतियोग्यधिकरणवृत्तित्वरूपमित्यात्माश्रयः।

ननु यत्राभावसंबन्धोऽभिमतः तद्वृत्तिप्रतियोगिकत्वाभावोऽत्यन्ताभावेऽवच्छेदक इति नोक्तदोष इति चेत्—न। कपाले घटध्वंसकाले घटात्यन्ताभावधीरपि प्रमा स्यात्। उक्तावच्छेदकसत्त्वात्। अपि च तद्वृत्तिप्रतियोगिकत्वाभाव एव संसर्गाभावे सर्वत्रावच्छेदकोऽस्तु लाघवात्। न चैवमन्यत्र प्रागभावादिबुद्धेः प्रमात्वापत्तिः। प्रतियोगिसमवायदेशादन्यत्र प्रागभावादिस्वरूपस्यैवाभावात्। तस्माज्जयदेवमतमयुक्तम्।

**नरहरिमिश्रास्तु**—तथाभूतयोग्यत्वमेव संबन्धः। स च तदुभयातिरिक्तः। स प्रमायां विद्यमानो भ्रमे न तथा। न च तस्य प्रतीतिगर्भत्वेऽभावप्रतीतेरचाक्षुषत्वापत्तिरिति वाच्यम्। प्रतीत्यंशस्य स्वरूपत एव नियामकत्वात्। न च भ्रमस्थले विशिष्टसत्त्वे संबन्धत्वापत्तिः। प्रमागर्भत्वायोग्यतायाः। न च संबन्धसत्त्वे प्रमाप्यापादनीया। विसंवादिव्यवहारजनकत्वेन तत्प्रतीतिविरोधादित्याहुः।

तच्चिन्त्यम्। संबन्धसत्त्वे संवादिव्यवहारस्याप्यापादनेन विसंवादितज्जनकत्वस्यैवासिद्धेरिति।

वयं तु ब्रूमः—तत्राभावस्वरूपमेव संबन्धः, यत्र नातिप्रसङ्गः। तथा च घटात्यन्ताभावस्य स्वरूपतः संबन्धत्वे घटवत्यपि तत्प्रसङ्गे तद्वृत्तिप्रतियोगिकत्वाभावावच्छिन्नतयैव तस्य तेन सह तथात्वम्। अत एवावृत्तिप्रतियोगिकेऽव्याप्यवृत्तिप्रतियोगिके चात्यन्ताभावे तत्तत्स्वरूपमेव तथा, अतिप्रसङ्गाभावात्। न चैवं संयोगवति तदभावप्रतीतेः प्रमात्वापत्तिः। इष्टत्वात्। मूलावच्छिन्नस्तदभाववानित्यवच्छेदकत्वप्रकारिका च धीर्मूलस्य तदवच्छेदकत्वाभावादप्रमा। न च कपाले घटध्वंसादिकाले घटात्यन्ताभावप्रतीतेः प्रमात्वापत्तिः। ध्वंसप्रागभावयोरपि तत्प्रतियोगित्वात्, तत्र तदत्यन्ताभावस्वरूपाभावाच्च।

न्यायशिखामणिः

अन्योन्याभावप्रागभावप्रध्वंसेषु तत्तत्स्वरूपमेव संबन्धः । अतिप्रसङ्गाभावात् । एवं च प्रतियोगिनि तदन्योन्याभावप्रतीतिः प्रतियोगिसमवायिकारणादन्यत्र प्रागभावादिप्रतीतिश्च तत्तदभावस्वरूपादेवाप्रमा । न चैवमननुगमः, स्वरूपसंबन्धत्वस्यानुगमकत्वात् । न च तस्यानिर्वचनम् । संयोगसमवायान्यत्वे सति संबन्धत्वं चाविशिष्टज्ञानाविषयत्वे सति विशिष्टज्ञानविषयत्वम् । एतदेवाभिप्रेत्य मूले संबन्धान्तरमन्तरेणेत्याद्युक्तम् ।

यदि चाविशिष्टज्ञानेत्यत्र संबन्धप्रवेशादात्माश्रयः, तदा संबन्धत्वमप्यभावत्वादिवदखण्डोपाधिः । न च तत्तत्स्वरूपाणां स्वरूपसंबन्धत्वेनानुगतीकरणेऽतिरिक्तसमवायासिद्धिप्रसङ्गः । तथापि तत्सिद्धिरप्रत्यूहेत्यस्माभिरुक्तत्वात् । ततश्च यथाश्रुतमेव युक्तमिति संक्षेपः ।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीमद्रामकृष्णाध्वरीन्द्र-

विरचिते न्यायशिखामणौ प्रत्यक्षखण्डे

अभाववादः

—: * :—

# अथ विषयालोकसंनिकर्षवादः

—:*:—

षोढा संनिकर्षः प्रत्यक्षविशेषे कारणम् । विषयेणालोकसंयोगविशेषश्च तत्र कारणम्, न तु चक्षुषा । प्रकाशस्थेन चक्षुषा अन्धकारस्थस्याग्रहणात् वैपरीत्ये च ग्रहणात् ।

नन्वेवं परभागावच्छेदेनालोकसंयुक्तोऽपि घटो गृह्येत । न चावयविग्रहसामग्र्याः स्वावयवग्रहसामग्रीनियमात् परभागावच्छिन्नो न गृह्यत इति वाच्यम् । त्र्यणुके व्यभिचारात्, प्रत्यक्षावयवे च सामग्रीभेदकल्पने मानाभावात् ।

अथाभिमुखावयवावच्छेदेन घटालोकसंयोगः कारणम्, तर्हि अभिमुखावयवावच्छेदेन चक्षुरालोकसंयोगोऽपि हेतुरस्तु । यदि चालोकसंयोगावच्छिन्ने चक्षुस्संयोगस्तथा समानदेशताविरोधश्च निबिडयोरेव, अन्यथा पटमहारजतयोः पटोदकयोश्चाग्रहप्रसङ्गः । तर्हि घटसंयोगावच्छिन्ने चक्षुरालोकसंयोगः कारणमस्तु ।

---

प्रकाशः

प्रसङ्गात्कारणान्तरमप्याह—विषयेणेति । न चेति । अर्वाग्भागावच्छेदेनाप्यालोकसंयोगाभावात् परभागावच्छेदेन चक्षुःसंयोगाभावात् नावयवग्रहसामग्रीति [1]तदभावात्तदग्रह इत्यर्थः ।

---

न्यायशिखामणिः

संगतिमाह—प्रसङ्गादिति । ननु न चेत्यत्रावयवसामग्रीनियमात् सापि हेतुः, सा च तत्र नास्तीत्यभिप्रेतम् । तदयुक्तम् । परभागालोकसंयोगसत्त्वे तत्सामग्र्या अपि तत्र सत्त्वादित्यत आह—अर्वागिति । चक्षुःसंयोगेऽपीति शेषः । चक्षुरिति । आलोकसंयोगेऽपीति शेषः ।

---

1. क. तदभावादग्रहः

अथ चालिनीन्यायेन आलोकसंयोगसंनिहिते चक्षुर्घटसंयोगः कारणम् तदा घटचक्षुस्संयोगसंनिहिते चक्षुरालोकसंयोगो हेतुरस्त्विति चेत्—

नैवम् । अन्वयव्यतिरेकाभ्यां विषयालोकसंयोगस्य कारणत्वे निश्चिते तेनैवोपपत्तौ न चक्षुरालोकसंयोगः कारणं कल्प्यते ।

अन्ये तु द्वयोरप्यालोकसंयोगयोः कारणत्वे विषयालोकसंयोगः कारणमेवेति । नन्वभिमुखावयवावच्छेदेन विषयालोकसंयोगयोः कारणत्वे (विषयालोकसंयोगः कारणमेवेति ।

---

प्रकाशः

अन्वयव्यतिरेकाभ्यामिति । अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षगम्यतया प्रथमोपस्थितविषयालोकसंयोगस्य कारणत्वे निश्चिते [1]तेनातीन्द्रियचरमोपस्थितचक्षुरालोकसंयोगान्यथासिद्धिः[2] । किंच करणस्य [3]कर्मप्राप्तस्य जनकत्वादालोकोऽपि विषयसंयुक्तः करणम्, अन्यथा विषयसंयोगावच्छिन्नालोकसंयुक्तमेव चक्षुरपि हेतुरिति चक्षुरिन्द्रियसंयोगोऽपि हेतुर्न स्यादिति भावः ।

---

न्यायशिखामणिः

नन्वभिमुखावयवावच्छेदेन संयोगद्वयस्यान्वयादितौल्येन कथं विषयालोकसंयोगस्यैव तद्धेतुत्वमित्याशङ्क्य जयदेवोक्तं विनिगमकमाह—अन्वयेति । नन्वेवं प्रत्यक्षावगम्यालोकस्य हेतुत्वे निश्चिते तेनातीन्द्रियानुमानगम्यं चक्षुरप्यन्यथासिद्धं स्यात् । यदि च प्रथमोपस्थितत्वेऽपि चक्षुर्विना क्वचिदप्यालोकस्य हेतुत्वक्लृप्तेर्न तस्य तेनान्यथासिद्धिः, तदा चक्षुरालोकसंयोगेऽपि तुल्यमित्यपरितोषादुपाध्यायोक्तं तदाह—किंचेति ।

अत्रेदं चिन्त्यम् । न तावत्कारणान्तरानुपपत्त्या आलोकस्य कारणत्वम् । चक्षुषस्तादृशस्य सत्त्वात् । नाप्यन्वयव्यतिरेकाभ्याम्, तयोः कारणतामात्रग्राहकत्वात् । अस्तु वा तस्य कारणत्वम् । तथापि न कर्मप्राप्तिनियमः । अनुमितिकरणे व्यभिचारात् । न च प्रत्यक्षकरणे तथा नियमः । उपनीतप्रत्यक्षकरणे

---

1. क. नातीन्द्रिय-
2. क. ॰सिद्धः
3. ख. कर्मजप्राप्तस्य

नन्वभिमुखावयवावच्छेदेन विषयालोकसंयोगस्य कारणत्वे) आवश्यकसंयोग एव[1] हेतुरस्तु इति चेत्—न। अवयवसंयोगमात्रस्यातिप्रसक्तेः स्वावयवसंयोगो वक्तव्यः। तथा च स्वसंयोग एव लाघवात्। अवयवसंयोगेन चान्यथासिद्धौ [2]कारणतैव न स्यात् संयोगस्येत्युक्तम्। आलोकस्योद्भूतरूपमपि व्यञ्जकम् अन्वयव्यतिरेकित्वात्। न तु तेजःकारणतावच्छेदकं तत् ऊष्मादीनां चाक्षुषत्वाभावात्। न च स्वातन्त्र्येणान्वयव्यतिरेकित्वात् द्वयोरपि हेतुत्वम्। अन्यथा दण्डादेरपि चक्रावच्छेदकत्वं स्यादिति वाच्यम्। उद्भूतरूपतेजोमात्रयोः समवधाने कार्यानुदयादिति चेत्—

---

प्रकाशः

अन्ये त्विति। न हि चक्षुरालोकसंयोगो न हेतुरित्यस्माकमाकरग्रन्थेऽस्ति। किंतु विषयालोकसंयोगः कारणमित्येव तत्रास्ति। तच्चोभयकारणत्वेऽप्यक्षतमेवेति भावः। वस्तुत उक्तान्यथासिद्ध्यादिनास्य न हेतुत्वम्। अत एवास्वरसादन्ये त्वित्युक्तम्।

---

न्यायशिखामणिः

मनसि व्यभिचारात्। नापि लौकिकत्वं प्रत्यक्षविशेषणम्, तत्रेन्द्रियत्वस्योपाधित्वात्। चक्षुरालोकसंयोगमादायापि करणत्वोपपत्तावप्रयोजकत्वाच्च। तस्मादन्वयादितौल्ये विनिगमकाभावात् संयोगद्वयमपि हेतुरिति मतमेव युक्तमुत्पश्यामः।

नन्वेवं सांप्रदायिकग्रन्थविरोध इत्यत आह—न हीति। न चैवमाकरग्रन्थे तथाभिधानप्रसङ्ग इति वाच्यम्। तथाप्यप्रतिषिद्धमनुमतमिति न्यायात्। न च विषयालोकसंयोगः कारणमिति वचनमितरकारणत्वनिषेधपरमित्यप्रतिषिद्धत्वं तस्यासिद्धमिति वाच्यम्। तद्वचनस्य तत्कारणत्वतदितरनिषेधपरत्वकल्पनायां गौरवप्रसङ्गात्। कालाद्यदृष्टादेः तत्प्रागभावस्य च हेतुत्वेन तथा तात्पर्यायोगाच्चेति भावः। इत्युक्तमिति मूले संनिकर्षवाद इति शेषः। कार्यानुदयादि-

---

1. ख. कारणमस्तु
2. ख. संगस्यचो कारणतैव न स्यात्

मैवम् । उद्भूतरूपस्य तेजस्त्वम्, तेजसश्चोद्भूतरूपत्वं वावच्छेदकमिति विनिगमकाभावादुभयोरपि हेतुत्वात्, दण्डचक्रयोरिवैकैकं विहाया-परस्यान्वयव्यतिरेकाभावात् ।

एवं चक्षुषो रूपमपि व्यञ्जकं व्यञ्जकतेजोरूपत्वात् आलोकरूपवत् । रूपस्य व्यञ्जकत्वे उद्भूतरूपत्वं तेजोगतोद्भूतरूपत्वं वा नोपाधिः, व्यभिचारेण गौरवेण चाप्रयोजकत्वात् ।

---

प्रकाशः

उद्भूतरूपेति । तथा च तेजःकारणतावच्छेदकमेव तदिति भावः । उद्भूतरूपस्य तेजस्त्वमिति । नन्वेवं ([1]दण्डत्वमपि) [दृढत्वमपि] घटहेतुः स्यात् । यदि च तत्र साक्षात्संबन्धत्वं विनिगमकम् तदा अत्रापि तुल्यमिति चेत्—न । उद्भूतरूपोत्कर्षेण प्रत्यक्षोत्कर्षात् तस्य हेतुत्वात् । दृढत्वे तु नैवमिति भावः ।

नन्वेवं दण्डचक्रवत्परस्परावच्छेदकत्वं न स्यादित्यत आह—दण्ड-चक्रयोरिवेति । तथा च दण्डादौ प्रत्येकमेवान्वयादिग्रहात् दण्डत्वादिनैव हेतुत्वम् । अत्र चोद्भूतरूपतेजोमात्रसमवधानेऽपि कार्यानुदयात् परस्परावच्छिन्न-स्यैव परस्परस्य तथात्वात् तथैव हेतुत्वमिति भावः । 'सगुणानामिन्द्रियभावः' इति सिद्धान्तं साधयति—एवमिति । ऊष्मघ्राणरूपयोर्व्यभिचारवारणाय हेतौ

---

न्यायशिखामणिः

स्यनन्तरं उद्भूतरूपवत्तेजस्समवधाने तदुदयादिति पूरणीयम् । तथा च फलित-माह—तथा चेति । न च विनिगमनाविरहः । अन्वयादिना तेजःकारणत्व-सिद्धावतिप्रसङ्गनिरासाय तत्रैवावच्छेदककल्पनमुचितम् । अन्यथा चक्रदण्डे सति कार्यानुदयपरिहाराय दृढत्वमपि कारणं परिकल्प्येतेत्याशयः । अत एवाशय-मुद्घाटयति—नन्वेवमिति । तदुत्कर्षादित्यग्रिमग्रन्थे वक्ष्यमाणयुक्तावेव तात्पर्य-मिति तामादाय समाधत्ते—नोद्भूतेति ।

ननूभयहेतुत्वस्य सिद्धत्वाद्दण्डेत्यादिवैयर्थ्यमित्याशङ्क्य, एवमपि तयोः परस्परावच्छेदकत्वसिद्धये तदित्याह—नन्विति । ननु दण्डचक्रयोः पृथगन्वयादि-

---

1. ख. दृढत्वमपि

### प्रकाशः

व्यञ्जकतेजःपदम् । **रूपस्येति** । रूपत्वपक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपत्वं तेजोगतोद्भूतरूपत्वं वा नोपाधिरित्यर्थः । उद्भूतत्वमात्रे वक्तव्ये रूपग्रहणमुद्भूतत्वस्य तद्व्याप्यस्य नानात्वेन रूपत्वव्याप्योद्भूतत्वविशेषद्योतनाय कृतमित्याहुः । वस्तुतस्तु समव्याप्त्यभिप्रायेण तेजोगतपदाद्युपादानमत्र । एवं च समव्याप्तिमेव व्यभिचारेण दूषयति—**व्यभिचारेणेति**। तेजोद्व्यणुकगतोद्भूतरूपत्वे [1]व्यञ्जकत्वाभावादित्यर्थः ।

---

### न्यायशिखामणिः

सत्त्वात् न तदभावस्य दृष्टान्तत्वमित्याशङ्क्य व्यतिरेकदृष्टान्तपरतया व्याचष्टे—**तथा चेति** । ननु चक्षूरूपमात्रस्य व्यञ्जकत्वसाधनं न युक्तम् । **सगुणानामित्या**दिना ग्राह्यगुणजातीयरसादिविशिष्टानां रसनादीन्द्रियाणां साक्षात्कारहेतुत्वाभ्युपगमादित्यत आह—**सगुणानामिति** । तथा च चक्षूरूपमित्युपलक्षणम् । रसनेन्द्रियरसो व्यञ्जकः व्यञ्जकरसत्वात् लालारसवत्, घ्राणगन्धो व्यञ्जकः पृथिवीगन्धत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतगन्धवदित्याद्यपि द्रष्टव्यम् । अलोकादौ साध्याव्याप्तेराह—**रूपत्वेति** एतच्च प्रथमोपाध्यभिप्रायेण । अन्यथा घटादिरूपे द्वितीयोपाध्यभावेन साध्याव्याप्तिप्रसङ्गात् । तत्र च तेजोगतरूपत्वं साध्यावच्छेदकं बोध्यम् ।

**रूपत्वव्याप्येति** । तथा चोद्भूतत्वजातिविशेषस्य व्यापकत्वेऽनुगततदवच्छेदकलाभ इति भावः । नन्वेवमपि नानुगतावच्छेदकसिद्धिः । रूपत्वव्याप्यजातेरपि नानात्वात् । अन्यथा शुक्लत्वादिना संकरापत्तेः । यदि च रूपत्वव्याप्यसाक्षात्कारप्रयोजकजातित्वेनानुगमः, तदा तत्प्रयोजकजातित्वेनानुगतीकृतमुद्भूतत्वमेवोपाधिरस्तु । तथा च रूपपदं तेजोगतेति च व्यर्थमिति **जयदेवमतेऽपरितोषादुपाध्यायमतमाह—वस्तुत इति**। यन्मते (विषयमव्याप्त) [विषमव्याप्तो] न दूषकस्तन्मते प्रथमो नोपाधिः । किं तु द्वितीयोपाधौ साध्यावच्छेदकः । न चैवमपि घटादिरूपे साध्याव्याप्तिः । उद्भूतरूप(व)त्त्वपदेन तेजोरूपत्वस्य विवक्षितत्वात् । तत्र च तेज इत्यादिपदं तु समव्याप्तिसिद्धये । अथा [अन्यथा] पार्थिवद्व्यणुकरूपे तेजोगतोद्भूतस्पर्शे च तेजोरूपत्वावच्छिन्नसाध्याभावेन व्यभिचारादिति भावः ।

---

1. ख. व्यञ्जकाभावात्

### प्रकाशः

ननु व्यञ्जकेति तेजोविशेषणम्, अतो न व्यभिचारः। विषमव्याप्त एव वास्तु। तस्यापि दूषकत्वात्। अतो दोषान्तरमाह—**गौरवेणेति**। उक्तोपाध्योः साध्यव्यापकता तदा स्यात् यदि तादृशरूपत्वं व्यञ्जकतावच्छेदकं स्यात्। न चैवमुद्भूतत्वस्य, गुरुत्वात्। (तथा) [तथा च] व्यञ्जकतेजोरूपत्वेनैव व्यञ्जकत्वात् तद्रूपहेतौ साध्यव्याप्यतया उपाधेः [1]साध्याव्यापकत्वादिति भाव। न चैवं व्यञ्जकतेजोगुणत्वेनैव तथात्वमस्त्विति वाच्यम्। आलोकस्थले रूपत्व-पुरस्कारेणैवान्वयादिग्रहात् रूपत्वस्य च जातित्वेन गौरवाभावात्।

अन्ये तु समव्याप्तोपाधिपक्षे साध्यव्याप्यतावच्छेदकमेव साध्यव्यापकतावच्छेदकम्। न चोक्तोपाधिद्वयं[2] तथा, प्रथमे **व्यभिचारात्** अन्वयव्यभिचारात् विषयाद्युद्भूतरूपत्वे सत्यपि तमसि तदग्रहात्। द्वितीये **गौरवात्** उद्भूतत्वस्य व्यर्थत्वात्। तथा च तदुभयं न साध्यव्यापकमित्याहुः।

---

### न्यायशिखामणिः

**एवं चेति**। समव्याप्तोपाधावेव शङ्किते सतीत्यर्थः। न चोद्भूतरूपवत्तेजस्त्वेन तेजसो व्यञ्जकत्वात् द्व्यणुकमपि तथेति वाच्यम्। महत्त्वस्यापि तत्र प्रवेशादिति भावः।

**विषमव्याप्त इति**। तथा च प्रथमोऽप्युपाधिरेवेति भावः। ननु गुरुभूतस्याप्यार्द्रेन्धनप्रभववह्नेर्धूमव्यापकत्वदर्शनात् गौरवमप्रयोजकमित्याशङ्क्य तात्पर्यमाह—**उक्तेति**। तत्र विशिष्टस्य धूमजनकत्वाद्व्यापकत्वम्। प्रकृते तदसंभवादवच्छेदकतया तद्वाच्यम्। तच्च गौरवादनुपपन्नम्। एतदपि द्वितीयोपाध्यभिप्रायेण। प्रथमस्तु अतिप्रसङ्गादेव नावच्छेदक इति भावः।

नन्वेवं प्रमेयत्वद्रव्यत्वादिवदव्यभिचारादेव व्यापकत्वमस्त्वित्यत आह—**तथा चेति**। उपाधिद्वयमपि चोदकस्य विवक्षितमेव। दूषणं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति जयदेवमिश्रैर्व्याख्यातम्। तदाह—**अन्ये त्विति**। **तथेति**। व्यापकतावच्छेदकमित्यर्थः। **न साध्यव्यापकमिति**। न साध्यसमव्यापकमित्यर्थः। यद्यप्येतावता समव्याप्तोपाधिनिरासेऽप्युद्भूतत्वस्य विषमव्याप्तो-

---

1. ख साध्यव्यापक 2. क. °पाधित्व-

प्रकाशः

[1]अत्र ब्रूमः । तेजोव्यञ्जकतावच्छेदके तावदुद्भूतत्वं [2]प्रवेश्यमेव । अन्यथोष्मणोऽपि तमसि प्रत्यक्षापत्तिः । तथा च रूपव्यञ्जकतावच्छेदक एव तत्प्रवेश्यताम् । एवं चोष्मादेर्व्यञ्जकत्वं चक्षूरूपस्य नेत्येवास्तु । व्यञ्जकतेजोगतोद्भूतविरहादेवोक्तस्थले अतिप्रसङ्गवारणात् । ननु विनिगमकाभावान्नैवमिति चेत् — न । तर्हि तत एवोभयत्रोद्भूतरूपत्वप्रवेशे चक्षूरूपस्य न व्यञ्जकत्वम् । अन्यथा तेजोभागस्य गुरुत्वेन तत्राप्रवेशे गोलकशरीरादिरूपस्यापि व्यञ्जकत्वापत्तिः । न चेष्टापत्तिः, अपसिद्धान्तात् । किं चैवं व्यञ्जकांशस्यापि त्यागे रूपमात्रस्यैव तथात्वापत्तिः । अतिप्रसङ्गस्य तादृशतेजोव्यञ्जकतयैवापास्तत्वात् । तस्मादेतच्चिन्त्यम् ।

---

न्यायशिखामणिः

पाधेर्न निरासः । तथापि पूर्वोक्तरीत्या हेतोः साध्यव्याप्यत्वे निश्चिते तदुपाधेः साध्याव्यापकत्वमित्यत्र तात्पर्यम् ।

ननु तेजोद्व्यणुकरूपे साध्याभावेन प्रथमदूषणस्य द्वितीयेऽपि संभवात् प्रथम इति संकोचो न युक्त इत्यस्वरसं सूचयति—आहुरिति । अन्यथेति । तेजस्त्वस्येवावच्छेदकत्व इत्यर्थः । ऊष्मणोऽपीति । न च व्यञ्जकरूपाभावान्नातिप्रसङ्ग इति वाच्यम् । तव तेजोरूपव्यञ्जकतायामुद्भूतत्वाप्रवेशेन चक्षूरूपोष्मरूपयोरपि व्यञ्जकत्वात् तयोश्च तत्र सत्त्वादिति भावः । विनिगमकाभावादिति । न च रूपद्वारेणोद्भूतत्वस्य तेजोविशेषणत्वात्तत्रैव तद्युक्तमिति विनिगमकमिति वाच्यम् । न ह्युद्भूतरूपवत्तेजस्त्वं तत्रावच्छेदकम्, येन तथा स्यात् । किंतु लाघवादुद्भूततेजस्त्वम् । परंपरासंबन्धेन च तत्रोद्भूतत्वस्य वृत्तेरिति भावः । अन्यथेति । गौरवादुद्भूतत्वत्याग इत्यर्थः । रूपमात्रस्येति । न चात्राप्यनुमतिः । अपसिद्धान्तात् । तस्माद्विनिगमकाभावादुभयत्रोद्भूतत्वमात्रघटितमवश्यं जनकतावच्छेदकम् । ततश्चक्षूरूपं व्यञ्जकमिति न युक्तमित्युपसंहरति —तस्मादिति ।

अत्र ब्रूमः । सन्ति हि रूपस्येव रसादीनामपि व्यञ्जका लालाघृतव्यजनपवनादयः । अत एवैतद्दृष्टान्तेन रसव्यञ्जकत्वादिना रसनादीन्द्रियाणामनु-

---

1. ख. 'अत्र ब्रूमः' नास्ति । 2. ख. प्रथममावश्यकमेव ।

किं तु व्यञ्जकरूपमेव तथा, लाघवात् । विषयस्थमपि रूपमुद्भूतं सहकारि । तदुद्भवे च मानम्—इन्द्रियालोकादिप्रत्यासन्नं महदवयविवायु-

प्रकाशः

किं त्विति । व्यञ्जकतेजोरूपत्वमेवेत्यर्थः । इन्द्रियेति । तत्रावयविपदं चिन्त्यम् । [1]कारणभूतेति । प्रयोजकीभूतेत्यर्थः । तेन तस्यावच्छेदकत्वेऽपि न

न्यायशिखामणिः

मानम् । तथा च तद्गतरसादयोऽपि व्यञ्जकाः । तदुत्कर्षेण विषयगतरसाद्युपलब्ध्युत्कर्षदर्शनात् । तत्र च कार्यतावच्छेदकं न रूपविषयकसाक्षात्कारत्वादि, अननुगमात् । किं त्वनुगतं बहिरिन्द्रियव्यवस्थापकगुणसाक्षात्कारत्वम् । तदपेक्षयास्य सामान्यत्वेन लघुत्वात् । तथा च तत्कारणतावच्छेदकं न व्यञ्जकतेजोगतोद्भूतरूपत्वादि. अननुगमात्, विशेषतया गुरुत्वाच्च । किं तु व्यञ्जकगतग्राह्यजातीयगुणत्वं, सामान्यतया लघुत्वात् । न च येन रूपेणान्वयादिग्रहस्तदेवावच्छेदकम् । प्रकृते च रूपत्वादिपुरस्कारेण तद्ग्रहात् तद्गर्भत्वमेव कार्यकारणतावच्छेदकम्, न तु गुणत्वघटितम् । तत्र तस्यापुरस्कारादिति वाच्यम् । आत्मसाक्षात्कारे मनआत्मसंयोगत्वपुरस्कारेणान्वयादिग्रहे इन्द्रियसंयोगत्वस्य घटादौ कर्त्रन्वयादिग्रहे घटत्वादिपुरस्कारेऽपि कार्यत्वस्यावच्छेदकत्वदर्शनेन तत्पुरस्कारस्य तत्राप्रयोजकत्वात् । तर्ह्याश्रयगतव्यञ्जकतायामपि लाघवात् ग्राह्यजातीयगुणवत्त्वस्यैवावच्छेदकत्वापत्तिरिति न युक्तम् । ऊष्मादिना तमसि रूपग्रहप्रसङ्गवारणाय तत्रोद्भूतत्वस्यावच्छेदकत्वात् । न च व्यञ्जकतापि तद्गतरूपादीनां तेन रूपेणैवेति युक्तम् । गौरवात् । व्यञ्जकतेजोविरहादेवातिप्रसङ्गनिरासाच्च । न च द्रव्यव्यञ्जकतावच्छेदके गौरवान्नोद्भूतत्वप्रवेशः । तद्गुणगते तु तत्रातिप्रसङ्गनिरासाय तत्प्रवेश इति वैपरीत्यमस्त्विति वाच्यम् । तथा सत्यूष्मणोऽपि तथात्वप्रसङ्गः । यदि च तस्यापि व्यञ्जकत्वेऽपसिद्धान्तात् तत्रोद्भूतत्वप्रवेशः [तन्न] तत्र तेजस्त्वादेरेवावच्छेदकत्वात् । न चैतावता द्रव्यत्वेनालोकादेः स....तद्विरहेऽपि तादृशशरीरादिना रूपाद्युपलब्धिप्रसङ्ग इति वाच्यम् । अगत्या ग्राह्यजातीयोद्भूतगुण........। तस्मात् साधूक्तं चक्षूरूपमपि व्यञ्जकमिति दिक् ।

1. ख. कारणीभूतेति

पनीतसुरभिशीतोष्मचक्षुरादिकं साक्षात्कार(कारण)[कारणभूत]किंचित्समवधानशून्यम् अप्रत्यक्षत्वात् अन्धकारस्थघटवदिति ।

तच्च कारणं लाघवादनुगतं सामान्यं रूपादिवृत्ति न द्रव्यगतम् । ऊष्मादौ स्पर्शग्रहे रूपस्य, प्रभादौ रूपग्रहे स्पर्शस्य ग्रहप्रसङ्गात् , उद्भवत्वैकार्थसमवायाविशेषात् । अन्यथा स्पर्शरूपयोरग्रहप्रसङ्गात् । नाप्युभयवृत्ति,

---

**प्रकाशः**

दोषः । यद्वा तद्विशिष्टरूपस्य कारणत्वात् तत्समवधानव्यतिरेकसिद्धावपि [1]तत्सिद्धिरविकलैवेति ।

अन्यथेति । यदि तदेकार्थसमवायो न ग्रहप्रयोजक इत्यर्थः । एकग्रह इत्युपलक्षणम् । रूपत्वादिना परापरभावानुपपत्तेश्चेत्यपि द्रष्टव्यम् । रूपत्वादिनेति ।

---

**न्यायशिखामणिः**

शरीरादिरूपे व्यभिचारादाह—व्यञ्जकतेज इति । वस्तुतस्तद्रूपमपि चक्षूरूपवद्व्यञ्जकमिति तेजःपदं नोपादेयम् । रूपपदं च ग्राह्यजातीयगुणपरं बोध्यम् । नन्वस्त्विन्द्रियादिसंयोगाभावनिबन्धनार्थान्तरवारणायेन्द्रियादि पक्षविशेषणम् । तत्राप्यवयवीति व्यर्थम् । निरवयवस्य परमाणोर्महत्पदेनैव वारणादित्याशङ्क्येष्टापत्तिरित्याह—अवयवीति । न चैवमवयविपदमेवास्त्विति वैपरीत्यमर्हम् । तद्व्यणुकसाधारणत्वात् । वस्तुतस्तु तदप्युपादेयमेव । अन्यथा आकाशादावतिप्रसङ्गात् । न च महत्पदस्य परममहत्त्वातिरिक्तपरत्वात् नातिप्रसङ्गः । तद्वारकावयविपदे सति तत्परत्वायोगात् इत्यवधेयम् ।

ननु पुष्पादिसहचरितं सुरभिद्रव्यं, जलसहचरितं च शीतद्रव्यं वायुवशाच्च प्रचलितावयवं सूक्ष्मत्वादेव विविच्य न गृह्यते, न त्वनुद्भूतरूपवत्त्वात् । अन्यथा तदारब्धपुष्पादेरपि तथात्वप्रसङ्गादित्यस्वरसान्मूले बाह्येन्द्रियमेव पक्ष इत्युक्तमिति द्रष्टव्यम् ।

ननूद्भवत्वस्यावच्छेदकतया साक्षात्कारकारणत्वाभावात् तदितरकारणस्य च तत्र सत्त्वाद्बाधः । कारणपदस्यावच्छेदकपरत्वे दृष्टान्ते साध्यवैकल्यमि-

---

2. ख. 'तत्सिद्धिरविकलैवेति.........यद्यपि रूपनिष्ठस्य' इति ग्रन्थस्त्रुटितः ।

रूपादिवृत्तित्वेनैवोपपत्तेः। रूपस्पर्शयोस्तु तन्नाना, एकग्रहेऽप्यपरस्याग्रहात्। न च रूपत्वादिना परापरभावानुपपत्तिः, तारत्वादिवन्नानात्वात्। रूपादिप्रत्यक्षे एकैकोद्भवस्यैव प्रयोजकत्वात्।

ननु महत्त्व एवोद्भवत्वमस्तु। तदेव प्रत्यक्षत्वे तन्त्रम्, लाघवात्। न (च) रूपेऽपि, गौरवादिति चेत्—न। आश्रयमहत्त्वोद्भवाभावेऽपि

---

**प्रकाशः**

यद्यपि रूपनिष्ठस्य भिन्नत्वेनोक्तत्वात् रूपत्वव्याप्यत्वेऽप्यदोषः। तथाप्यतद्गुणसंज्ञानबहुव्रीहिणा शुक्लत्वादिनेत्यर्थो बोध्यः।

[1]न रूपेऽपीति। न चैवं व्योमादिचाक्षुषत्वापत्तिः। [2]फलकल्प्यस्योद्भवत्वस्य तन्महत्त्वेऽभावादिति भावः। न च विनिगमनाविरहः। रूपोद्भवत्वेऽपि परमाण्वाद्यप्रत्यक्षतया महत्त्वतथात्वस्यावश्यकत्वादिति भावः। प्रत्यक्षेति। न च विशेषपदवैयर्थ्यमिति वाच्यम्। महत्त्वातिरिक्तसामान्यगुणे उद्भवत्वरूपसाध्याभावस्योभयसिद्धतया व्यभिचारेण तदन्तर्भावेणैव व्याप्तेः। अत एव ज्ञानादिव्यभिचारवारणाय मूर्तादिपदमिति। ज्ञानशब्दादौ क्वाचित्कैतदभ्युपगमस्य

---

**न्यायशिखामणिः**

त्याशङ्क्य, कारणतदवच्छेदकसाधारणपरतया जयदेवेन व्याख्यातम्। तदाह—प्रयोजकेति। स्वयं यथाश्रुतेऽपि न दोष इत्याह—यद्वेति। नन्वविशेषाभावस्यान्यथाशब्दार्थत्वे वैयधिकरण्यमित्यत आह—यदीति। ननु रूपस्पर्शवृत्त्युद्भूतत्वं फलबलकल्प्यमित्यूष्मरूपे प्रभादिस्पर्शे च तदभावादेव नेति कल्प्यत इत्यनुशयादाह—उपलक्षणमिति।

ननु न रूपेऽपीत्येतद्गन्धादेरप्युपलक्षणं यथाश्रुतं वा। तत्राद्यमाश्रयेत्यादिना निराकृत्य, अन्त्यं प्रत्यक्षेत्यादिना निरस्तम्। तत्र विशेषपदं व्यर्थम्, सामान्यगुणेऽपि महत्त्वे परेण तदभ्युपगमादित्याशङ्क्य निरस्यति—न चेति। अत एवेति। ज्ञानादेः शब्दस्य च स्वरूपत एव योग्यत्वेनोद्भवाभावस्योभयसिद्धत्वादे-

---

1. ख. न रूपमपीति। 2. क. फलकल्प्ये स्याद्भवत्वस्य

गन्धस्पर्शयोः प्रत्यक्षत्वेनोद्भवत्वमिति प्रत्यक्षमूर्तविशेषगुणत्वेन रूपेऽप्युद्भवत्वात् न महत्त्वे, सामान्यगुणत्वात्।

अथानुद्भवत्वमेव जातिः, अप्रत्यक्षत्वप्रयोजकत्वेन साक्षादेव तत्कल्पनात् तदभावात् प्रत्यक्षत्वमिति चेत्—न। अप्रत्यक्षतायाः प्रत्यक्षकारणविरहप्रयोज्यत्वेन प्रत्यक्षकारणस्य लाघवेन जातेः कल्पनात्। न तु प्रतिबन्धकत्वेनानुद्भवत्वं कल्पयित्वा तदभावः कारणं गौरवादिति संप्रदायविदः।

---

प्रकाशः

[1]मतान्तरीयत्वात्। एवं च रूपोद्भवस्य प्रामाणिकत्वे तत एव प्रत्यक्षोपपत्तौ महत्त्वोद्भवे मानाभावः। प्रत्युत सामान्यगुणत्वेन हेतुना तत्र तदभाव एव साध्यत इत्याह—न महत्त्व इति।

[2]अत एवोक्तहेतुना उक्तगन्धस्पर्शदृष्टान्तेन रूपे तत्सिद्धावपि तन्महत्त्वेऽपि तदस्तु, व्यापकव्यभिचारस्यादोषत्वादित्यपास्तम्। अप्रत्यक्षत्वेति। तथा चाप्रत्यक्षत्वप्रयोजकवदित्येवानुमानम्, कल्पनायाः साक्षादुपपादकविषयत्वादिति भावः। अप्रत्यक्षताया इति। भवतूक्तलाघवादनुमानम्, तथापि कार्ये प्रत्यभावकारणत्वापेक्षया भावकारणत्वस्यैव [3]लाघवादिति भावः। न त्विति। तथा चोक्तलाघवात् अप्रत्यक्षत्वप्रयोजकतया प्रत्यक्षाप्रतिबन्धकतया चोद्भूतत्वजात्यभाव एव सिध्यतीति भावः।

---

न्यायशिखामणिः

वेत्यर्थः। मूर्तादीत्यादिपदेन प्रत्यक्षपरिग्रहः। तच्च गुरुत्वादिवारणायेति द्रष्टव्यम्।

नन्विन्द्रियलक्षणे सत्यन्तमात्मातिव्याप्तिवारणाय। शब्देतरेति तु श्रोत्रेऽव्याप्तिवारणायेत्युक्तम्। तदेतज्ज्ञानशब्दादावपि उद्भवानभ्युपगमे कथं स्यादित्यत आह—ज्ञानेति। मतान्तरीयत्वादिति। अनुद्भूतत्वं जातिः तदभाव उद्भूतत्वम्। तच्चामूर्तविशेषगुणे सामान्यगुणेऽपीति मतमादाय तथाभिधानादित्यर्थः।

---

1. क. मतान्तर्यत्वात्
2. क. तत एव
3. ख. लघुत्वात्

वयं तु ब्रूमः। शुक्लत्वादिना कारणरूपाग्निसंयोगप्रयोज्याभ्यां जातिभ्यां परापरभावानुपपत्त्या रूपवृत्त्युद्भवत्वमनेकं वाच्यम्। तथा चोद्भूतत्वेन कारणत्वेऽननुगमः। तस्मादनुद्भवत्वं शुक्लत्वादिव्याप्यं नानाजातिः. तदभावकूटस्तु प्रत्यक्षत्वे प्रयोजकः। अन्यथानुगतप्रत्यक्षानुपपत्तेः। एवं स्पर्शादावपि।

अथ वोद्भूतत्वमनुद्भूतत्वं वा न जातिः। किं तु रूपत्वव्याप्यजातिमत्त्वमेवोद्भूतत्वं तदभावोऽनुद्भवत्वम्। प्रत्यक्षे रूपे शुक्लतरतमत्वादिजातिमत्त्वात्। ऊष्मचक्षुरादिरूपे तु शुक्लत्वमात्रमेव, तद्व्याप्यजातौ मानाभावादुत्कर्षाभावात्।

---

प्रकाशः

कारणेति। कारणे रूपाग्निसंयोगौ तत्प्रयोज्याभ्यामित्यर्थः। तथा चेति। गौरवं प्रामाणिकमिति भावः। ननु तत्तत्प्रत्यक्षत्वे तत्तदुद्भूतत्वस्य प्रयोजकत्वं स्यादित्यत आह—अन्यथेति। एवं चानेकसामग्रीकल्पने तवापि गौरवमित्ययं नियमो बोध्यः। न जातिरिति। अतिरिक्तेति शेषः। तथा च लाघवात् क्लृप्तताद्दशजातिमत्त्वेनैव कारणत्वमिति भावः। शुक्लत्वमात्रमिति। मात्रपद-

---

न्यायशिखामणिः

नन्वस्तु रूपाद्युद्भवः, ततः किमित्यत आह—एवं चेति। ननु महत्त्व एव तदस्तु इत्युक्ताक्षेपपरिहारेऽपि महत्त्वेऽपि तदस्तु इत्याक्षेपे कः प्रतीकार इत्याशङ्क्य सोऽपि निरवकाश इत्याह—अत एवेति। साधकप्रमाणाभावो बाधकसत्त्वं चातःशब्दार्थः। ननु प्रत्यक्षकारणशून्यमित्यनुमानात्कथमप्रयोजकत्वप्रकारिकानुमितिरित्यत आह—तथा चेति। ननु पूर्वोक्तानुमानावश्यकता नोक्ता, येन तत् सिध्यतीत्यत आह—भवत्विति। तथा चोद्भूतत्वसिद्धिरुद्देश्या। सा च परोक्तानुमानादपीति नातीवाग्रहस्तत्रेति भावः। ननु कारणरूपत्वं यद्यग्निसंयोगविशेषणम्, तदा जातिद्वयानुपपत्तौ द्विवचनानुपपत्तिरित्यत आह—कारण इति। किमुद्भूतत्वं प्रत्यक्षत्वे तन्त्रम् उत (तत्प्रत्यत्वे) [तत्तत्प्रत्यक्षत्वे] तत्तदुद्भूतत्वम्। तत्राद्ये अननुगमः। ततश्चानुद्भूतजात्यभाव एव तथेत्युक्तम्। गौरवस्य तथाप्यनपाकृतत्वादित्यत आह—तथा चेति। प्रामाणिकमिति। तथा च तत्र

## प्रकाशः

मुत्कर्षव्यवच्छेदार्थकम् । तेन भास्वरत्वसत्त्वेऽप्यदोषः । अत एव तदभावमाह —उत्कर्षाभावादिति । तथा च रूपत्वव्याप्योत्कर्षवत्त्वेन हेतुत्वम्, अतो नातिप्रसङ्ग इति भावः । न चास्यापि [1]शुक्लत्वादिव्याप्यस्य नानात्वेनाननुगमः । उत्कर्षशब्दप्रवृत्तिनिमित्तत्वेनानुगमादिति भावः ।

---

## न्यायशिखामणिः

दोष इति भावः । द्वितीयमाशङ्कते—नन्विति । ननु रूपत्वव्याप्यव्याप्यजातिरुद्भवपदवाच्येत्यनुपदमेवाभिधानान्न जातिरित्यसंगतिरित्यत आह—अतिरिक्तेति । लाघवमेवाह—क्लृप्तेति । उत्कर्षेति । एतच्चापकर्षस्याप्युपलक्षणम् । तथा च भास्वरत्वातिरिक्तव्याप्यजातिव्यच्छेदार्थं मात्रपदमित्यर्थः । अत एव भास्वरत्वमेवाह—भास्वरत्वेति । एवं चेति । उत्कर्षाभावादित्येतदपि अपकर्षाभावोपलक्षणम् । तर्हि चक्षुरादिरूपेऽपि भास्वरत्वस्य रूपत्वव्याप्यव्याप्यस्याभ्युपगमे प्रत्यक्षत्वं दुर्वारमित्यत आह—तथा चेति । रूपत्वव्याप्येपि ।

अत्रेदं चिन्त्यम् । इदमपकृष्टरूपेऽतिव्याप्तम् । न च तदपि किंचिदपेक्षयोत्कृष्टमेवेति वाच्यम् । तथापि सर्वापकृष्टरूपे तदभावात् । किं च चक्षुरादिरूपेऽप्युत्कर्षोऽस्त्येव । यत्तेजो यदपेक्षया अधिकग्राहकं तत् तदपेक्षयोत्कृष्टरूपवदिति नियमात् । अन्यथा श्येनगृध्रहंसादिनयनानां दूरवर्तिपदार्थग्राहकत्वानुपपत्तेः ।

न च (भारस्वत्वा)[भास्वरत्वा]तिरिक्तरूपत्वव्याप्यव्याप्यजातिमत्त्वेन हेतुत्वमित्यत्र तात्पर्यम् । श्येनादिचक्षुषि चाधिकप्रकाशकत्वप्रयोजकजातेरपि भास्वरत्वजातिविशेषरूपतया तदतिरिक्तत्वाभावान्नातिप्रसङ्गः । एवं च नाननुगमशङ्कापीति वाच्यम् । तथापि रूपत्वव्याप्यशुक्लत्वादिसमनियतोपाधिव्याप्यशुक्लत्वादिजातिमत्त्वेन चक्षुरादिरूपस्याप्युद्भूतत्वप्रसङ्गः ।

किं च चक्षूरूपोष्मवृत्तिरूपयोः स्वावयवरूपजन्यत्वेन तत्राप्यस्ति तत्प्रयोज्या जातिः । सा च भास्वरत्वातिरिक्ता रूपत्वजातिव्याप्यव्याप्या चेति तयोः प्रत्यक्षत्वापत्तेः ।

---

1. ख. गुणादिव्याप्यस्य

न च रूपत्वमेव मानम्। लाघवेन तस्य प्रयोजकत्वे प्रत्यक्षत्वप्रसङ्गात्। एवं स्पर्शादावपीति। इतोऽपि महत्त्वे नोद्भवत्वं प्रयोजकम्। वाय्वादौ महत्त्वोत्कर्षेऽप्यप्रत्यक्षत्वात्।

ननु भर्जनकपालगतो वह्निः वारिस्थघटव्यञ्जक(सूर)[सूर्य]तेजश्च गृह्येत, वारिकपालयोः प्रत्यक्षत्वेनोद्भूतरूपवत्त्वात्। तयोः संयोगविशेष एव प्रतिबन्धक इति चेत्—न। जलकपालादीनामालोकव्यङ्ग्यतया तद्ग्रहे प्रतिबन्धकत्वाभावात्। प्रतिबन्धकत्वे वा भर्जनकपालवारिसंयोगिवह्निसौरालोकयोरग्रहप्रसङ्गः। संयोगे च न विशेषो जातिकृतः अन्यतरकर्मजत्वादिना संकरप्रसङ्गात्। तारत्वबन्नानात्वे गौरवात्।

---

प्रकाशः

ननु तारतम्यं पाकजमात्रवृत्त्येवेति जलरूपादौ तदसंभवः। अत एव तत्र [1]शुक्लत्वमात्रमिति किरणावलीति चेत्—तस्य मतान्तरत्वात्। तत्र च पूर्वकल्पस्यैव बोध्यत्वात्। इतोऽपीति। एतच्च यदि महत्त्वोद्भव एव द्रव्यगुणादिप्रत्यक्षत्वे तन्त्रं तदा बोध्यम्। यदि च रूपमात्रवृत्त्युद्भवस्यैवानेनान्यथासिद्धिस्तदोक्तदोषाभावात्—वाय्वादाविति। [2]अन्यथा तदीयस्पर्शोऽपि न प्रत्यक्षः स्यादिति भावः। ननु संयोगविशेषत्वेन प्रतिबन्धकत्वं, विशेषः फलबलकल्प्य इत्यत आह—संयोगे चेति।

---

न्यायशिखामणिः

अपि च घ्राणेन्द्रियरूपे रूपतेजस्संयोगप्रयोज्यतादृशजातिसंभवात् घ्राणेऽपि तत्प्रसङ्गः। न चावयवगुणजन्यतावच्छेदकमवयविवृत्तितज्जातीयगुणवत्त्वं तेजस्संयोगकार्यतावच्छेदकं चेन्द्रियव्यवस्थापकपार्थिवगुणत्वम्। तथा चोभयं न जातिरिति नातिप्रसङ्ग इति वाच्यम्। एवं सति 'कारणरूपाग्नि' इत्यादिग्रन्थविरोधात्। न चावयवरूपात् क्वचिदवयविनि विजातीरूपं क्वचिच्चाग्निसंयोगात्सजातीयगन्धाद्युत्पत्तावपि रूपं विजातीयमुत्पद्यते। तत्र गन्धादिव्यावृत्तो जातिविशेष एव कार्यतावच्छेदको वाच्य इति तत्परोऽयं ग्रन्थ इति वाच्यम्। उद्भूतत्वस्योक्तजातिद्वयव्यापकतया संकराभावप्रसङ्गात्।

---

1. ख. शुक्लमात्र- 2. ख. 'अन्यथा' नास्ति।

**नापि तत्संयोगभेदः, अननुगमादिति ।**

**मैवम् । जलस्थं तु तेजो गृह्यत एव । उभयोः स्वच्छतया विविच्य ग्रहो न भवति । भर्जनकपाले चानुद्भूतरूपमुद्भूतस्पर्शमन्यदेव तेजस्तादृशैरवयवैर्वह्निसहचरितैरारभ्यते । अतितप्ततैलादौ कदाचिदुद्भूतरूपावयवप्रवेशाद्वह्न्यारम्भोऽपि । न चैवं दुग्धसहचरितदधिपरमाणुभिरेव दध्यारम्भः । दुग्धध्वंसजन्यद्रव्यत्वेन खण्डदुग्धवद् दध्नो दुग्धोपादानोपादेयत्वात् ।**

**नन्वेवमुद्भूतरूपवह्न्यादौ उद्भूतस्पर्शो नास्ति । तत्सहचरित-[1]तेजोऽन्तरनियमेन तत्रोष्मबुद्धेरुपपत्तेः । उद्भूतरूपोद्भूतस्पर्शसामग्र्यो-**

---

प्रकाशः

**अननुगमादिति** । यद्यपि प्रतिबन्धकाननुगमो न दोषः, तथापि गत्यन्तरसत्त्वे तथात्वे मानाभाव इत्यत्र तात्पर्यम् । तदेवाह—**मैवमिति** । **न चैवमिति** । तथा चापसिद्धान्त इति भावः । **दुग्धेति** । आश्रयनाशाजन्यरूपादिध्वंसे व्यभिचारवारणाय द्रव्यपदम् ।

---

न्यायशिखामणिः

ननु तादृशजातिद्वयस्य चक्षुर्घ्राणरूपयोरपि संभवात् संकर इति चेत्—एवं तर्हि तादृशजातिद्वयस्य रूपत्वव्याप्यजातिव्याप्यत्वेन भास्वरत्वातिरिक्तत्वेन च चक्षुर्घ्राणयोः प्रत्यक्षत्वं दुर्वारम् । तस्मादिन्द्रियादिरूपव्यावृत्ता प्रत्यक्षत्वप्रयोजिका जातिरवश्याभ्युपेया । सा च शुक्लत्वादिव्याप्या नानेति न संकरः । उत्कर्षपदप्रवृत्तिनिमित्तत्ववदुद्भूतपदप्रवृत्तिनिमित्तत्वस्यानुगमकस्य सत्त्वाच्च नाननुगमः । ततश्चोद्भूतत्वमतिरिक्तमिति सांप्रदायिकानां मतमेव युक्तमिति वयं पश्यामः ।

**पूर्वेति** । अनुद्भवाभाव उद्भव इति कल्पस्येत्यर्थः । **अन्यथेति** । स्वगतोद्भवाभाव इत्यर्थः । किमनुद्भूतरूपवत्त्वादप्रत्यक्षत्वम् प्रतिबन्धकसत्त्वाद्वा । तत्राद्यं **वारीत्यत्र** निराकृतम् । द्वितीयेऽपि तत्संयोगस्य प्रतिबन्धकत्वं तद्विशेषस्य वा । तत्राद्यं **जलेत्यत्र** निराकृतम् । द्वितीयमाशङ्कते—**नन्विति** ।

---

1. ख. ॰तेजोन्तरसंबन्धनियमेन तत्रोष्मत्व॰

रूष्मणि प्रभादौ विरोधावधारणादिति चेत्—न। यं वह्निमद्राक्षं तं स्पृशामीत्यबाधितप्रत्यभिज्ञानवशात् दर्शनस्पर्शनाभ्यां वह्नौ रूपस्पर्शयोरुपलम्भात्। न च तेजस्त्वं बाधकम्। उद्भवानुद्भवयोर्निमित्तभेदसंसर्गप्रयोज्यत्वात्, तेजस्त्वस्य रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेनोद्भूतरूपस्पर्शवद्वृत्तित्वात्। न चोद्भूतरूपस्पर्शयोर्विरोधः, जलपृथिव्योरुभयसत्त्वात्। तेजसि विरोधस्य निमित्तभेदोपाधिकत्वादिति। उद्भूतरूपसहचरितयोर्महत्त्वानेकद्रव्यवत्त्वयोः युगनद्धत्वाहितया अन्वयव्यतिरेकतुल्यत्वेऽपि द्रव्य-

---

### प्रकाशः

निमित्तभेदः—अदृष्टभेदः। एतन्मते चोद्भूतेनाप्यनुद्भूतारम्भेऽविरोधात् भर्जनकपालादाववयवान्तरकल्पना नावश्यिकीति बोध्यम्।

रूपवद्वृत्तीति। एतच्च वायुत्वादौ व्यभिचारवारणाय। प्रभात्वादौ व्यभिचारवारणाय साक्षात्पदम्। तद्व्याप्यजात्यव्याप्यत्वं [1]साक्षाद्व्याप्यत्वं प्रभावाय्वन्यतरत्वेऽपीति तद्वारणाय जातिपदम्। उभय[2]भोजकादृष्टसत्त्वे चोभयोद्भव इति भावः।

---

### न्यायशिखामणिः

तर्हि तत्र तादृशावयवैरारभ्यत इति कथमुक्तमित्यत आह एतन्मत इति।

ननु तेजस्त्वस्य द्रव्यत्वव्याप्यतत्प्रकारकप्रमाविशेष्यत्वव्याप्यत्वात् साक्षाद्व्याप्यत्वमसिद्धमित्यत आह—(व्याप्येति)। [तद्व्याप्येति]। मूले तेजसीत्येतदूष्मप्रभादिपरम्। अन्यथा तेजोमात्रपरत्वे वह्निगतरूपस्पर्शयोरप्यनुद्भवत्वप्रसङ्गात्। न चेष्टापत्तिः। उभयानुभवरूपभोगानुरोधेन तत्र तज्जनकादृष्टसत्त्वादित्याह—उभयेति। ननु भवतु सामान्यगुणप्रत्यक्षत्वे स्वाश्रयप्रत्यक्षत्वं मूर्तविशेषगुणप्रत्यक्षत्वे महत्त्वसमानाधिकरणत्वे सत्युद्भूतत्वं, विभुविशेषगुणप्रत्यक्षत्वे तु तत्तत्स्वरूपत्वं तन्त्रम्। तथापि द्रव्यप्रत्यक्षत्वे न किंचिदस्ति प्रयोजकम्। न तावत् उद्भूतत्वम्। तस्य गुणवृत्तित्वात्। नापि तादृशगुणवत्त्वम्। द्व्यणुकादावतिप्रसङ्गात्। न च महत्त्वसहकृतं तथा। तत्र बहुद्रव्यसमवेतत्वस्यापि सत्त्वेन तस्य सहकारि-

---

1. ख. 'साक्षाद्व्याप्यत्वम्' इति नास्ति। 2. ख. °बोधकादृष्ट

चाक्षुषत्वे नानेकद्रव्यवत्त्वमुभयं वा तन्त्रम्, किं तु महत्त्वमेव लाघवात्। अनेकद्रव्योत्कर्षं विनापि तूलकादौ प्रचयजन्योत्कृष्टपरिमाणात् प्रत्यक्षोत्कर्ष-दर्शनाच्च। दूरस्थकेशराशौ द्रव्यानुत्पादेन महत्त्वाभावेऽप्येककेशस्य सजातीयसंयोगेनानेकद्रव्यवत्त्वात् द्रव्यप्रत्यक्षतेत्यनेकद्रव्यवत्त्वं तत्र तन्त्रमिति चेत्—न। अनेकद्रव्यसंबन्धित्वस्य समवायेन प्रयोजकत्वात्, न तु संयोगेन, अतिप्रसङ्गात्। तथा च दूरग्रहणे सजातीयसंयोगस्यानेकद्रव्यवत्त्वे सहकारिता वाच्या। सा महत्त्व एवास्तु।

ननु यद्युद्भूतरूपवत्त्वं महत्त्वं च द्रव्यप्रत्यक्षतायां स्वरूपयोग्यता तदा दण्डत्ववत्त्वयोः कारणता न स्यादिति चेत्—न। तदुत्कर्षात् प्रत्यक्षोत्कर्षेण तयोः कारणत्वात्। न ह्यकारणोत्कर्षमकार्यमनुविधत्ते।

---

**प्रकाशः**

लाघवादित्युपलक्षणम्। आत्मग्रहे क्लृप्तत्वादित्यपि बोध्यम्। अनेकेति। एतच्च यद्युत्कर्षो जातिरूपस्तदा बोध्यम्। यदि चोत्कृष्टपरिमाणविषयत्वमेव प्रत्यक्षस्योत्कर्षस्तदा पूर्ववैव युक्तिर्बोध्या। अतिप्रसङ्गादिति। बहुसंयुक्तस्य [1]सूक्ष्मद्रव्यस्य दूरे प्रत्यक्षापत्तेरित्यर्थः।

नन्विति। अवच्छेदकत्वमन्यथासिद्धिगर्भम्, जनकत्वं चानन्यथासिद्धिगर्भमिति तयोर्विरोधान्न समावेश इत्यर्थः। अवच्छेदकत्वं नान्यथासिद्धिगर्भम्,

---

**न्यायशिखामणिः**

त्वानिश्चयात् आत्माव्याप्तेश्चेत्याशङ्कायां मणौ उद्भूतेत्याद्युक्तमिति द्रष्टव्यम्। क्लृप्तत्वादिति। यद्यपि महत्त्वं न द्रव्यप्रत्यक्षत्वे तन्त्रम्। आकाशादिसाधारणत्वात्। किंचवमपि प्रकृतद्रव्यचाक्षुषत्वे तन्न क्लृप्तम्। तथाप्यात्मप्रत्यक्षे तद्गतमहत्त्वस्य कारणत्वक्लृप्तावन्यत्रापि द्रव्यप्रत्यक्षे तज्जातीयस्यैव महत्त्वस्य तथात्वं युक्तमिति भावः। जातिरूप इति। तथा च कार्यगतजातिरूपोत्कर्षप्रयोजकः कारणेऽपि तादृशः स एव वाच्यः। स च तत्रोपाधिरूपे न संभवतीति भावः। पूर्वेति। लाघवे घटप्रागभावस्यापि तथात्वं निर्वाच्यमित्यर्थः।

---

1. क. सूक्ष्मद्रव्यस्य

दण्डत्वादौ नैवम्, प्रकारभेदेनोभयरूपत्वाच्च चाक्षुषद्रव्यज्ञाने विषयत्वेन तयोः कारणत्वम्, द्रव्येऽनुगतत्वेन कारणतावच्छेदकत्वमिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे विषयालोकसंनिकर्षवादः

—:*:—

प्रकाशः

किं त्वन्यथैव निर्वाच्यम्। अन्यथेन्द्रियसंयोगहेतुत्वेऽवच्छेदकत्वादिन्द्रियं हेतुर्न स्यादित्याशयेन परिहरति—नेति। ननूत्कृष्टरूपादिविषयत्वमेव प्रत्यक्षोत्कर्ष इत्यनुशयादाह—प्रकारेति। द्रव्येति। बहिर्द्रव्ये प्रत्यक्ष[1]जनकतावच्छेदकमुद्भूतरूपवत्त्वमित्यर्थः।

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
प्रत्यक्षखण्डे विषयालोकसंनिकर्षवादः

—:*:—

न्यायशिखामणिः

जयदेवोक्तमस्वरसमाह—नन्त्रिति। एतच्चापाततः। रूपादिप्रत्यक्षेऽप्युत्कर्षस्य जातिरूपत्वे विरोधाभावात्। अन्यथा रूपाद्युत्कर्षोऽप्युपाधिः स्यात्। यदि च माधुर्यादिवदनुभवसिद्धत्वाज्जातित्वं, तदा तत्प्रत्यक्षेऽपि तुल्यम्।

परमार्थतस्तु—प्रकारभेदेनेत्येवायुक्तम्। रूपस्य विषयत्वेन कारणत्वे विषयस्थमपि रूपमुद्भूतं सहकारीत्यसाधारणत्वमयुक्तमिति ध्येयम्। अन्यथा विषयत्वावच्छिन्नयत्किंचित्सत्त्वेन वायोरपि प्रत्यक्षत्वापत्तेः। किं चालोकरूपस्य तत्राविषयत्वेन तत्कारणता न स्यात्। न च तदुत्कर्षेण चाक्षुषप्रत्यक्षत्वोत्कर्षात् तस्य तथात्वम्। तर्हि सैव युक्तिरत्राप्यस्तु। तन्मात्रकार्येत्यस्वरसादेव पूर्वग्रन्थ इति सूरिभिराकलनीयम्।

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
न्यायशिखामणौ प्रत्यक्षखण्डे विषयालोकसंनिकर्षवादः

—:*:—

1. क. ॰जन्यतावच्छेदकम्

# अथ वायुप्रत्यक्षवादः

—: * :—

ननु नोद्भूतरूपवत्त्वं तत्र तन्त्रम्, वायोः प्रत्यक्षत्वात्। तथा हि—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् महत्त्वे सत्युद्भूतस्पर्शवत्त्वाद्वा घटवत्। ऊष्मादौ प्रत्यक्षत्वान्न व्यभिचारः।

---

प्रकाशः

एवं सति मीमांसकः शङ्कते—नन्विति। अन्यथा चाक्षुषप्रत्यक्षप्रयोजकतयास्योक्तत्वात् शङ्कानुदयादिति बोध्यम्। तत्र—बहिर्द्रव्यप्रत्यक्षत्वे। वायुरिति। प्रत्यक्षस्पर्शाश्रयो वायुरित्यर्थः। यथाश्रुते भागे बाधासिद्ध्योः प्रसङ्गादिति।

ननु पक्षतावच्छेदकस्यैक्ये तत्र दूषणम्। समानप्रकारकविरोधिज्ञानस्यैव प्रतिबन्धकत्वेन वायुपरमाण्वाद्यवच्छेदेन साध्यहेत्वभावनिश्चयेऽपि वायुत्वावच्छेदेन तदुभयाग्रहादिति चेत्—न। एवमपि तत्र [1]तज्ज्ञानस्य भ्रमत्वेन तत्त्वनिर्णयाभावेन वादकथायां[निर्णयाय]तद्वारकविशेषणोपादानस्य सर्वसिद्धत्वादित्याहुः। प्रत्यक्ष इति। स्वविशेष्यकप्रत्यक्षजनक इत्यर्थः। तेन सामान्यलक्षणादिजन्यप्रत्यक्षविषयतया न सिद्धसाधनम्।

---

न्यायशिखामणिः

अनन्तरेणाक्षेपलक्षणा संगतिः। सा च द्रव्यपदस्य बहिर्द्रव्यपरत्वे युज्यत इत्याह—एवं सतीति। द्रव्यचाक्षुषत्वपरत्वं वारयति—बहिरिति। प्रत्यक्षेति। प्रत्यक्षजनकेत्यर्थः। पक्षतावच्छेदकस्य हेत्वभेदवारणाय वायुरित्युक्तम्। तत्त्वेति। तत्त्वनिर्णयफलकत्वाद्वा कथाया इति भावः। जयदेवमतमाह—स्वेति। जनकत्वविवक्षायाः प्रयोजनमाह—तेनेति। वायाविति। यद्यपि वायुत्वापेक्षया तस्यापि विशेष्यत्वात् दोषतादवस्थ्यम्। तथापि स्वेतराविशेष्यकत्वे तात्पर्यम्।

---

1. क. तज्ज्ञानभ्रमत्वेन

## प्रकाशः

न च स्वविशेष्यकेति व्यर्थम् । वायौ स्पर्श इति प्रत्यक्षे वायोरपि संयुक्तसमवायघटकतया [1]हेतुत्वेन सिद्धसाधनापत्तेः। विषयतया प्रत्यक्षजनक इत्यन्ये ।

यत्तु त्वक्संयोगप्रत्यासत्तिजन्यज्ञानविषय इत्यर्थ इति । [2]तन्न । वायौ स्पर्श इति प्रत्यक्षस्यापि तथात्वेन तद्विषयतया सिद्धसाधनतापत्तेः । न च तन्मात्रप्रत्या-

---

## न्यायशिखामणिः

नन्विदं व्यर्थम् । वायोः प्रत्यक्षाजनकत्वेनोक्तदोषाभावात् । प्रत्यासत्तिघटकत्वस्य चावच्छेदकतयोपपत्तेः । नापीन्द्रियेऽतिव्याप्तिवारणाय । तथापि तस्य तादृशनिर्विकल्पकजनकत्वेन दोषतादवस्थ्यात् । न च स्वेतराविशेष्यकविशिष्टप्रत्यक्षजनकत्वं विवक्षितम् । तस्य कालादृष्टादिसाधारणत्वात् । स्वगोचरेत्यपि विशेषणमिति चेत्—तत एव सर्वदोषनिरासे शेषवैयर्थ्यात् । न च तदपि, स्वपदान्तर्भावगौरवात् । वक्ष्यमाणरीत्या तदनन्तर्भावेऽप्युक्तदोषनिरासाच्चेत्यस्वरसादुपाध्यायमतमाह—विषयतयेति ।

ननु विषयत्वस्य प्रत्यक्षज्ञानसमानकालीनस्य कथं तत्कारणतावच्छेदकत्वम् । न च विषयतापदेन (ज्ञानक)[ज्ञानजनक]संनिकर्षाश्रयत्वं विवक्षितम् । तस्येन्द्रियेऽपि गतत्वात् । ननु ज्ञानासत्त्वकालेऽपि विषयत्वमस्ति । विषयासत्त्वेऽपि ज्ञानसत्तया अतीतादिविषयाणामिव । अत एवोपाधौ सत्त्वेऽपि विषयत्ववच्छास्त्राविरुद्धे तत्र तदुपायविषयत्वं सत्त्वं विक्रयादिपर्यवसितं तिष्ठतीति सिद्धवत् लीलावतीप्रकाशे वर्धमानचरणैरुक्तमिति चेत्—न । एवमपि स्पार्शनप्रत्यक्षत्वस्यासिद्धेः तस्यैवानुपदं साध्यत्वेन विभावनात् । न च विषयतया त्वगिन्द्रियजन्यप्रत्यक्षजनक इति विवक्षितम् । एतदपेक्षया त्वगिन्द्रियसंयोगजन्यप्रत्यक्षविषयत्वस्य लघुत्वात्तदेव विवक्ष्यताम् । यथा चात्र न सिद्धसाधनम्, तथानुपदं वक्ष्यामः । तस्मादेतन्मतमप्ययुक्तमिति सूचयति—अन्य इति । यत्त्विति । एतन्मते स्पार्शनप्रत्यक्षत्वं साध्यम् । तच्च त्वक्संयोगेत्यादि । एवं चाग्रिमग्र⋯⋯ति भावः ।

---

1. ख. जनकत्वेन
2. ख. 'तन्न⋯⋯इत्यपि निरस्तम्' इति ग्रन्थस्त्रुटितः

न चाप्रयोजकम् । स्पार्शनप्रत्यक्षत्वे महत्त्वे सत्युद्भूतस्पर्शवत्त्वं प्रयोजकम्, नोद्भूतरूपवत्त्वमपि, गौरवात् । न च पक्षधर्मावच्छिन्नसाध्य-

---

**प्रकाशः**

सत्तिजन्यत्वं विवक्षितमिति वाच्यम् । तत्पक्षे स्पर्शादिविषयतानियमेन बाधाद्या-पत्तेः । एतेन विषयजन्यज्ञानविषय इत्यर्थ इत्यपि निरस्तम् ।

प्रत्यक्षेति । प्रत्यक्षजनकस्पर्शाश्रयत्वादित्यर्थः । द्वितीयहेतुरस्मन्मते, परैरुद्भूतत्वानङ्गीकारात् । न चोद्भूतपदं प्रत्यक्षपरम्, पूर्वाभेदाद्यर्थविशेषणत्वाद्वा । न चैवमपि सत्यन्तवैयर्थ्यम्, तस्य त्रुटिविश्रमाभ्युपगमादिति वाच्यम् । मतान्त-रेणैवास्योक्तत्वात् । न च वायुत्र्यणुके व्यभिचारः । उद्भवस्य फलबलकल्प्यत्वेन निमित्तभेदनिबन्धनत्वेन च तत्रोद्भूतस्पर्शाभावादित्याहुः । तच्चिन्त्यम् । एवं हि द्व्यणुकादावपि तदभावात् सत्यन्तपदवैयर्थ्यापत्तेः । तस्मात्तन्मते तस्यापि पक्षत्वा-

---

**न्यायशिखामणिः**

तस्ये·········तः वायौ स्पर्श इति प्रत्यक्षे वाय्वंशेऽलौकिकत्वेन त्वक्संयोगा-जन्यत्वात्, स्पर्शांशे च संयुक्तसमवायजन्यत्वात । प्रत्यक्षज्ञानविषयत्वस्यातीन्द्रिय-स्पर्शासाधारण्यादाह—प्रत्यक्षेति । परैरिति । (गुणगत·········दिति) [गुणगत-जात्यनङ्गीकारादिति] भावः ।

ननूद्भूतपदं प्रत्यक्षपरम् । तथा च हेतुद्वयमपि मतद्वयसाधारणम् । न चैवं सत्यन्तवैयर्थ्यम् । इष्टत्वात् । त्रुटि(विक्रमा) [विश्रमा]भ्युपगन्तृमीमांसकमते परमा-ण्वादेरभावेन यथाश्रुतेऽपि तद्वैयर्थ्यादिति (गूढाभिसन्धि·····शङ्कान्तरमजानानो) [गूढाभिसन्धिमजानानस्य शङ्कान्तरं] निरस्यति—न चेति । ननु संयुक्तसमवाय-जन्यप्रत्यक्षज्ञानविषयत्वं प्रत्यक्षत्वमाद्ये प्रविष्टम् । द्वितीये तज्जनकत्वमिति न पूर्वा-भेद इत्यत आह—व्यर्थेति ।

अभिसन्धिमुद्घाटयति—न चैवमपीति । यथाश्रुतेऽपीत्यर्थः । मतान्त-रेणेति । न्यायमतेनेत्यर्थः । तथा च द्वितीयहेतुस्वरूपस्यैव न्यायमतानुसारित्वे कुतः परमतमादाय तद्विशेषणवैयर्थ्यमिति भावः । उद्भूतपदस्य प्रत्यक्षपरत्वाभावे बाधकमाशङ्क्य निराकरोति—न चेति । तत्र जयदेवसमाधिमाह—उद्भूत-

व्यापकः साधनावच्छिन्नसाध्यव्यापकश्चोद्भूतरूपवत्त्वमुपाधिः। स्पार्शन-प्रत्यक्षत्वे तस्याप्रयोजकत्वात्, त्वगिन्द्रियव्यापारानन्तरं वायुर्वातीति प्रतीतेश्च। न च स्पर्शलिङ्गाग्रहे तदुपक्षयः। घटेऽपि तथात्वापत्तेः।

---

प्रकाशः

भ्युपगमान्न व्यभिचार इति बोध्यम्। ऊष्मादेरित्यत्रादिपदग्राह्यं वायूपनीतशीत-द्रव्यादि। **पक्षधर्मो** बहिर्द्रव्यत्वम्। **साधनेति**। साधनैकदेश इत्यर्थः। स्पर्शवत्त्व-मात्रेणैवाव्यभिचारात्। [1]न चोपाधावुद्भूतत्वं व्यर्थम्। साधनव्याप्तिशङ्कापरि-हारार्थत्वात्। वस्तुतस्तु उद्भूतरूपवत्त्वेनैव प्रत्यक्षप्रयोजकतया कार्यकारणभावात् विशिष्टस्यैव साध्यव्यापकत्वम्, अन्यथा प्रयोजकत्वं स्यादिति।

अन्ये तूद्भूतपदं प्रत्यक्षपरम्। तथा च समव्याप्तोपाध्यभिप्रायेण तदित्याहुः। **तस्येति**। प्रभायां तत्सत्त्वेऽपि तदभावात् प्रयोजकस्यैवोपाधित्वा-

---

न्यायशिखामणिः

**स्येति**। [उद्भवस्येति]। कथं तर्हि वायावुद्भूतस्पर्श इत्यत आह—**निमित्तेति**। शीतद्रव्यादीत्यत्रादिपदग्राह्यं तदुपनीतसुरभिद्रव्यम्। ननु स्पार्शनप्रत्यक्षत्वं साध्यम्। तच्च नात्मनीति न बहिर्द्रव्यत्वादिसाध्यतावच्छेदकापेक्षेत्याशङ्क्य प्रत्यक्षत्वं साध्यं मन्वानस्येयमुपाधिशङ्केत्याह—**बहिरिति**। तथापि संदिग्धोपाधित्वं दुर्वारमित्यनुशयादाह—**वस्तुत इति**।

नन्वेवं महत्त्वसामानाधिकरण्यमपि तत्र प्रवेश्यम्। तादृशस्यैवोद्भूतरूपस्य तत्र कारणत्वग्रहात्। न च यथा आर्द्रेन्धनप्रभववह्नित्वेन धूमकारणत्वग्रहेऽपि लाघवात्तद्वह्नित्वेनैव वह्नेस्तद्व्यावर्तकता तथा प्रकृतेऽपि स्यादिति वाच्यम्। तर्हि उद्भूतत्वमपि त्यज्यताम्। किं चाग्रिम(दूषण........व्याप्तिपक्ष) [दूषणमप्ययुक्तम् समव्याप्तिपक्ष] एवोपाधेः प्रयोजकत्वाभ्युपगमादित्यरुचेरुपाध्यायमतमाह—**अन्ये त्विति**। ननु स्पार्शनप्रत्यक्षत्वं साध्यमिति आशयोद्घाटनेन तस्योपाधित्वं निरस्तम्। तदयुक्तम्। साध्यव्यापकत्वेनाव्याप्तिप्रयोजकत्वे विरोधाभावादित्यत आह—

---

1. क. न चोपाधावुद्भूतं साधनं-

**लैङ्गिकत्वे च स्पर्शो वायुवृत्तिरिति धीः स्यात्, न त्वनुष्णाशीत-स्पर्शो वायुरिति, स्पर्शाग्रहेऽपि शीतो वायुरिति प्रतीतेश्च। न च शीतद्रव्योपनायकत्वेनानुमिते वायौ तथा धीः। बाधकाभावात् विशेषदर्शने सत्यारोपाभावाच्च।**

---

**प्रकाशः**

दिति। **त्वगिति**। तथा चान्वयव्यतिरेकाभ्यां प्रत्यक्षत्वसिद्धौ पक्ष एव [1]साध्या-व्यापकत्वादिति भावः।

**लैङ्गिकत्वे चेति**। तद्वायोः प्रागज्ञातत्वेनाप्रत्यक्षतया[नापक्षतया]च तद्विशेष्यकानुमित्यसंभवादित्यर्थः। **स्पर्शेति**। लिङ्गत्वाभिमततदीयस्पर्शाग्रहेऽपि। **विशेषेति**। शीतद्रव्योपनायकतया शीतद्रव्यभिन्नत्वेनावधृते तदभिन्नत्वेनारोपासंभवादित्यर्थः।

---

**न्यायशिखामणिः**

**प्रभायामिति**। यस्मिन् सति यदवश्यं भवति तत् तत्प्रयोजकम्, यथा आर्द्रेन्धनप्रभववह्निर्धूमप्रयोजक इति स तत्रोपाधिः। उद्भूतरूपवत्त्वं च न तथा। प्रभायां तत्सत्त्वेऽपि स्पार्शनप्रत्यक्षत्वासत्त्वादित्यर्थः। नन्वानन्तर्यमात्रमकिंचित्करम् इत्याशङ्क्य व्यतिरेकस्याप्युपलक्षणमित्याह—**तथा चेति**। **अन्वयेति**। अनन्यथासिद्धेति शेषः।

अत एव तदसिद्धिमाशङ्क्य निषेधति मूले—**न चेति**। तथा चान्वयादिना वायुविषयज्ञानस्य त्वक्संयोगजन्यत्वसिद्धौ किं प्रत्यक्षोपजीवनेन। न चेत्तर्हि तत्प्रत्यक्षप्रयोजकोद्भूतरूपरहितवायोः प्रत्यक्षायोग्यतया(.... ....र्शग्रहो) [तस्य स्पर्शग्रहो]पक्षीणत्वापत्तौ प्रत्यक्षप्रमाणानुपपत्तिः। परमार्थतस्तु—उत्थितं प्रत्यनुमानमुपन्यस्य विनीतं प्रति प्रत्यक्षमुक्तमिति द्रष्टव्यम्।

ननु स्मृतवायोः प्रत्यक्षत्वं स्यादित्यत आह—**तद्वायोरिति**। ननु यत्र वायौ स्मरणं तत्र प्रथमत एव तद्विशेष्यकानुमितिः। अन्यत्र स्पर्शविशेष्यकानुमित्यनन्तरं तद्विशेष्यकानुमितिरित्यतो न विरोध इत्यत उक्तम्—**स्पर्शेति**। तद-

---

1. ख. साध्यव्यापक-

अथाचाक्षुषत्वं स्पार्शनत्वे बाधकम्। चक्षुषानुपलभ्यमानस्य त्वचानुपलम्भादिति चेत्—तर्हि चक्षुरेव द्रव्यग्राहकम्। त्वचा स्पर्शमात्रं प्रतीयेत, वायाविव प्रत्यभिज्ञापि तद्वदेव।

अथानुभवस्य दुरपह्नवत्वात् त्वचा आश्रयरहित एव स्पर्श उपलभ्यते, तदा वायावपि तुल्यम्। अथ दोषाभावे सति द्रव्यग्रहे तद्गतसंख्यादिग्रहनियमात् वायौ सर्वथा तदग्रहात् न स प्रत्यक्ष इति चेत्—न। न च तावदयं व्यक्तौ नियमः। पृष्ठलग्नवस्त्रादेः संख्यापरिमाणाग्रहे त्वचा ग्रहणात्। तज्जातीये तु फूत्कारादौ संख्यापरिमाणादीनां वाय्वभिघातस्य च शरीरे प्रत्यक्षत्वात्।

. स्यादेतत्। बहिरिन्द्रियजद्रव्यसाक्षात्कारे महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकम्। सति संभवे त्यागायोगात्। न तु जन्येन्द्रियग्राह्यविशेषगुण-

---

**प्रकाशः**

बाधकाभावादित्यसिद्धमित्याह—अथेति। द्रव्यस्येति शेषः। गूढाभिसन्धिराह—तर्हीति। अभिसन्धिमुद्घाटयति—तदेति।

---

**न्यायशिखामणिः**

युक्तम्। स्पर्शमात्रग्रहेऽपि शीतत्वग्रहे विरोधाभावादित्यत आह—लिङ्गत्वेति। अनुष्णाशीतस्पर्शविशेषो हि लिङ्गम्। तद्ग्रहे च शीतारोपो न स्यादिति भावः।

ननु तत्रान्यदेव लिङ्गमिति न विरोधः। तथा च उपनीते तत्र शैत्यभ्रम इति नैतावता वायोः प्रत्यक्षत्वमित्याशङ्क्य, प्रत्यक्षत्वप्रयोजकत्वादनुपनीत एव योग्ये वायौ तद्भ्रमः। किं (चात्रो) [च नात्रो] पनयः संभवति, अनुमावकाशाभावात्। शीतद्रव्यस्य च तथात्वे विशेषदर्शनापत्तावारोपो न (स्यादित्युक्तम्) [स्यादित्ययुक्तम्], शैत्यसंसर्गारोपे बाधकाभावादित्यत आह—[शीतद्रव्येति]।........ स्यारोपो नोपपादित इत्याशङ्क्य बाधकमात्रे तात्पर्यमित्याह—बाधकाभावादिति। तर्हि स्पर्शस्यापि स्पार्शनत्वं न स्यादित्यत आह—द्रव्यस्येति। ननु घटस्पार्शनत्वस्या(नुभ.........त्वात्)[नुभवसिद्धत्वात्] (तर्हीत्य....त्यत)[तर्हीत्ययुक्तमित्यत] आह—गूढेति।

वत्त्वम्, कार्यमहत्त्वसमानाधिकरणविशेषगुणवत्त्वं वा। रसनगतपित्तद्रव्यस्योद्भूततिक्तरसस्य वायूपनीतसुरभिद्रव्यस्य च प्रत्यक्षतापत्तेः।

मैवम्। नोद्भूतरूपवत्त्वं तथा, नयनगतपित्तद्रव्यस्य च प्रत्यक्षतापत्तेः। अस्तु वा उद्भूतस्पर्शवत्त्वं तत्र तन्त्रम्। न चैवं प्रभायामप्रत्यक्षत्वम्। प्रभा हि तेजसो रूपं न द्रव्यम्। तदाश्रयतेजःप्रतीतिः प्रत्यक्षरूपलिङ्गाधीनैव, यथा तवोष्मादिप्रतीतिः। तत्र संयोगकर्मादि कथं प्रत्यक्षमिति चेत्—चान्द्रसौरदीपप्रभादौ तु न कथंचित्। इन्द्रनीलादिप्रभाया रूपस्य पूर्वदेशानुपलम्भेन उत्तरदेशोपलम्भेन लिङ्गेन तदाश्रयतेजःसंयोग-

प्रकाशः

न त्विति। आकाशात्मनोरतिप्रसङ्गवारणाय जन्यपदम्। जन्यशरीरादिग्राह्यत्वमादाय दोषतादवस्थ्यमत उक्तम्—इन्द्रियेति। शब्दादेरुपनीतस्य चक्षुषापि ग्रहाद्दोषतादवस्थ्यादाह—विशेषेति। ग्राह्यविशेषा ग्रहविशेषविषयो लौकिकप्रत्यक्षविषय इति यावत्। तादृशत्र्यणुकस्य द्व्यणुके सत्त्वादाह—गुणेति। कार्येति। कार्यमहत्त्वयोरनुपादानेऽन्यतरोपादाने वा आत्मादावतिप्रसङ्ग इत्युभयोरुपादानं कार्यम्। महत्त्ववत्त्वं [1]तत्समानाधिकरणगुणवत्त्वं वा चक्षुराद्यतिप्रसक्तमत उक्तं विशेषेति। विशेषगुणो गुणविशेष उद्भूत इति यावत् प्रत्यक्ष इति वा। अत एवाह—उद्भूतेति। सुरभिद्रव्यस्य उद्भूतगन्धस्येत्यपि बोध्यम्।

नयनेति। न चेष्टापत्तिः, त्वन्मते संख्यादिग्रहापत्तेरिति भावः। तथा चेन्द्रियजद्रव्यप्रत्यक्ष इव तत्रापि नैकं प्रयोजकमावश्यकमिति तात्पर्यम्। अभ्यु-

न्यायशिखामणिः

नन्वात्मातिप्रसङ्गवारणाय बहिरिन्द्रियविशेषणमस्त्वित्यत उक्तम् आकाशेति। शब्दस्यापि विशेषगुणत्वादाह—ग्राह्येति। चक्षुरादावपि विशेष(गुणत्वा) [गुणवत्त्वा]दाह—विशेषेति। नन्वनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति···· सामान्यगुणमादाय दोषतादवस्थ्यमत आह—प्रत्यक्ष इति। तर्हि बहिरिन्द्रिये-

1. ख. 'तत्समानाधिकरणगुणवत्त्वं वा······उद्भूतगन्धस्येत्यपि बोध्यम्' इति ग्रन्थस्त्रुटितः।

विभागाद्यनुमानमिति। तन्मये यथा त्वचा स्पर्शमात्रग्रहानन्तरं फूत्कारे संयोगादीनाम्।

एतेन धूमबाष्पयोरस्पार्शनत्वेनोद्भूतस्पर्शाभावेऽपि[1] चाक्षुषत्वम्, अन्यथा तद्गतसंयोगविभागकर्मणां प्रत्यक्षता न स्यात् लिङ्गाभावादिति निरस्तम्।

न च बहिरिन्द्रिययोग्यानेकविशेषगुणवत्त्वं तन्त्रम्। तत्र त्रसरेणु-प्रभयोरप्रत्यक्षतापत्तेः, गौरवाच्च।

नन्वेवं विनिगमकाभावादुभयोरपि तथात्वमस्तु। तथापि वायुर-प्रत्यक्ष इति चेत्—एवं बहिरिन्द्रियजद्रव्यसाक्षात्कारे चाक्षुषत्वे स्पार्शन-प्रत्यक्षत्वे च प्रत्येकमुद्भूतरूपवत्त्वे सत्युद्भूतस्पर्शवत्त्वं प्रयोजकं पर्यवस्य-तीति गौरवम्। मम तु चाक्षुषत्वे उद्भूतरूपवत्त्वं, स्पार्शनत्वे उद्भूतस्पर्श-

---

प्रकाशः

पेत्याह—अस्तु वेति। पूर्वेति। न च देशस्य प्रभामण्डलत्वेनातीन्द्रियतया तद्धर्मलिङ्गमपि तथेति वाच्यम्। योग्यस्यैव भूप्रदेशादेः परंपराधिकरणस्य देशत्वे-नाभिमतत्वात्। एतेनेति। तयोः [2]प्रभावदप्रत्यक्षत्वेन तद्गतकर्मादेरनुमेयत्वेने-त्यर्थः। धूमस्य गोलकावच्छिन्नत्वग्ग्राह्यत्वपक्षे नेदं घटत इति [3]बाष्पग्रहणम्।

न चेति। परमते फूत्कारादेः संख्यादेरपि प्रत्यक्षत्वात् विशेषपदम्। ननु, तव त्रीणि प्रयोजकानि, मम त्वेकमेवेति विपरीतलाघवमित्यत आह—यस्येति।

---

न्यायशिखामणिः

त्याद्याकस्मिकं स्यादित्यत आह—तथा चेति। ननु पूर्वत्रानुद्भूतस्पर्शद्रव्या-प्रत्यक्षत्वं तद्गतकर्माद्यनुमेयत्वं चोक्तम्। तत्रान्यतरपरामर्शे दूषणद्वयं निरस्तं स्यादित्यत आह—तयोरिति।

ननु महावायौ स्पर्शमात्रस्य प्रत्यक्षतयानेकपदेनैव तद्वारणे विशेषपद-वैयर्थ्यमित्यत आह—परमत इति। (विरोधादिति) [विपरीतेति]। एतच्चोप-

---

1. ख. °त्वेनानुद्भूतस्पर्शवत्त्वेऽपि
2. क. प्रागभावात्
3. क. वाग्रहणम्

वत्त्वम् । यस्य विशेषे प्रयोजकत्वं तस्यानुगतेन रूपेण सामान्यप्रयोजकत्वमिति द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापकोद्भूतविशेषणगुणवत्त्वं सामान्यप्रयोजकमिति लाघवम् । विशेषस्य सामान्यस्य च भिन्नप्रयोज्यत्वनियमाश्चैकं प्रयोजकम् ।

अथ वायुर्यदि बहिरिन्द्रियजन्यसाक्षात्कारविषयद्रव्यं स्पार्शनसाक्षात्कारविषयद्रव्यं वा स्यात् उद्भूतरूपः स्यात् । न चैवम्, तस्मात्तथा। तादृशसाक्षात्कारविषयद्रव्यस्य रूपजनकत्वनियमादिति चेत्—न । रूपवत्समवेतत्वेन हि द्रव्यस्य रूपजनकत्वम्, न तु तादृशसाक्षात्कारविषयद्रव्यत्वेन, तस्य रूपजननोत्तरकालीनत्वात् । घटो यदि चक्षुरितरेन्द्रियग्राह्यद्रव्यं स्यात् अरूपमस्पर्शमचाक्षुषादि स्यात् । त्वगिन्द्रियं यदि द्रव्यग्राहकबहिरिन्द्रियं स्यात् रूपवत् स्यात् स्पर्शग्राहकं वा न स्यात् रूपग्राहि वा स्यात् चक्षुर्वत् । न चैवम्, तस्मान्न तथेति घटोऽपि न त्वगिन्द्रियग्राह्यः स्यात्, तद्गतसंख्यादिज्ञानं फूत्कारादाविवेति स्यात्, स्पृशामीत्यनुव्यवसायश्च घटवद्वायावपि ।

---

प्रकाशः

द्रव्यग्राहकेति । एतच्चाकाशवारणाय । आत्मवारणाय बहिःपदम् । ज्ञानाद्युद्भवमतेनेदं बोध्यम् । [1]चक्षुरादिवारणार्थमुद्भूतेति । विशेषपदं स्वरूपनिर्वचनपरम् । एतन्मते प्रभापि प्रत्यक्षैवेति बोध्यम् ।

वायुरिति । द्रव्यपदं स्पर्शादौ व्यभिचारवारणाय । अप्रयोजकमित्याह—नेति । द्रव्यस्येत्यत्र द्रव्यपदं कार्यद्रव्यपरम् । तदेव घटदृष्टान्तेन स्पष्टयति ।

---

न्यायशिखामणिः

लक्षणम् । प्रभायाः प्रत्यक्षत्वं सर्वानुभवसिद्धम् । तदेवं सति न स्यात् । अत एव तत्साधारणं चाक्षुषत्वप्रयोजकमुक्तम् । अत एवानुपदं प्रत्यक्षत्वप्रयोजकमपि तत्साधारणं वक्ष्यतीति बोध्यम् ।

तर्के किमपि दूषणं नोक्तमित्यत आह—अप्रयोजकमिति । ननु निरस्तस्य कथं पुनरुत्थानम् । न चोद्भूतरूपविशिष्टस्य उद्भूतस्पर्शस्य प्रयोजकत्वमनिरस्त-

---

1. क. चाक्षुषादि-

अथ स्पार्शनत्वे उद्भूतस्पर्शवदुद्भूतं रूपमपि तन्त्रम् । उद्भूतरूपवत्त्वे चाक्षुषत्ववत् स्पार्शनत्वदर्शनादिति चेत्—न । उद्भूतरूपवत्त्वे सत्यपि प्रभायां न स्पार्शनत्वमिति उद्भूतस्पर्शस्यावश्यकत्वेनोद्भूतरूपस्यान्यथासिद्धत्वात् । न ह्युद्भूतस्पर्शे सत्युद्भुतरूपाभावात् स्पार्शनत्वाभावः ।

नन्वेवं स्पर्शगत उद्भवः कारणमस्तु । न तु रूपमकारणमिति चेत्—तथापि स्पर्शस्तदुद्भवश्च कारणम्, न तु रूपमपि । तस्मिन् द्वये सति तदभावेन तदभावादर्शनात् । वस्तुतो रूपस्पर्शगते उद्भवत्वजाती कारणतावच्छेदिके न तु कारणे इति ।

उच्यते । द्रव्यस्य स्पार्शनत्वे उद्भूतस्पर्शमात्रं न तन्त्रम् । निदाघोष्मणि वायूपनीतशीतोष्णद्रव्ये च प्रत्यक्षत्वेन तद्गतसंख्यापरिमाणसंयोगविभागकर्मणां प्रत्यक्षत्वप्रसङ्गात् ।

---

प्रकाशः

घट इत्यत्र द्रव्यमित्यनुषञ्जनीयम् । अन्यथा घटस्य विशेष्यतया अरूपमित्यादिनपुंसकलिङ्गमनन्वितं स्यादित्याहुः ।

भावमविद्वान् शङ्कते—नन्विति । एवमावश्यकत्वे भावमुद्घाटयति—तथापीति ।

---

न्यायशिखामणिः

मेव मन्वानस्येयमाशङ्केति वाच्यम् । स्पार्शनत्वेन प्रत्येकमित्यत्राव्यवहितग्रन्थे च विशेषप्रयोजकत्वस्यापि कण्ठतो निरस्तत्वादित्यत आह—भावमिति । स्पर्शावश्यकत्वोक्त्या रूपस्य (प्र....मिति)[प्रयोजकत्वमिति] मन्वान इत्यर्थः । वस्तुतस्त्वेतावता स्पर्शोद्भव आवश्यक इति तेनान्यथासिद्धो रूपोद्भवो न हेयः न तु रूपमकारणम् । अन्यथा स्पर्शोऽपि न हेतुः स्यादित्याशयेन शङ्केति ध्येयम् । उच्यत इति । द्रव्यस्य स्पार्शनत्व इत्येतत् बहिरिन्द्रियजद्रव्यप्रत्यक्षस्याप्युपलक्षणम् । एवमग्रेऽपि । बहिरित्यादि स्पार्शनस्योपलक्षणम् । तेन नोपक्रमोपसंहारविरोधः । तथा चोद्भूतस्पर्शवत्त्वं सामान्यविशेषयोर्न प्रयोजकमिति भावः ।

योग्यव्यक्तिवृत्तित्वेन तेषां योग्यतया द्रव्यग्राहकसामग्रीग्राह्यत्वाव-धारणात् । न चोष्मादिजातीये दोषाभावेऽपि घटादाविव करपरामर्शे कदाचित् केनापि संख्या गृह्यते । तथोद्भूतरूपवत्त्वमात्रस्य तथात्वे चान्द्राद्युद्योतस्य नयनगतपित्तद्रव्यस्य च प्रत्यक्षत्वे तद्गतसंख्याग्रहोऽपि स्यात् । न च घटादाविव निपुणं निभालयन्तोऽपि तद्गतसंख्याद्वित्वादि हस्तवितस्त्यादिपरिमाणं कर्म वा वीक्षामहे इत्येकैकव्यभिचाराद्विनिगमकाभावात् उभयमपि बहिरिन्द्रियद्रव्यप्रत्यक्षत्वे प्रयोजकमिति वायुरप्रत्यक्षः । न चैवमपसिद्धान्तः । पीतः शङ्ख इत्यादौ नयनपित्तपीतिमैव गृह्यते न तु पित्तद्रव्यम्, (विभक्ता)[विषक्ता]वयवत्वात् प्रभायामिव तेजस इति टीकाकृतामभिधानादिति नवीनाः ।

संप्रदायविदस्तु—चलति पक्षिकाण्डादौ पूर्वदेशविभागोत्तरदेशसंयोगयोः प्रत्यक्षता न स्यात्, पूर्वोत्तरदेशस्य प्रभामण्डलस्यानुद्भूतस्पर्श-

---

प्रकाशः

दोषाभावेऽपीति । पृष्ठलग्नवस्त्रादौ दोष एव प्रतिबन्धकः । अत एवाभिमुख्ये पुनस्तत्रैव संख्यादिग्रह इति भावः । विषक्तेति । क्षीरे नीरवन्नायनरश्मौ निमग्नत्वात् । प्रभायामिवेति । प्रभा हि तेजसो रूपमित्यभ्युपगमादिति भावः । नवीना इत्यस्वरसोद्भावनम् । तद्बीजं तु—एवं सौरतेजसः प्रत्यक्षत्वे तद्गतसंख्यादिप्रत्यक्षतापत्तिरित्याद्यपि स्यात् । यदि च तत्प्रत्यक्षत्वेऽपि तदप्रत्यक्षतैव, औत्सर्गिकत्वेऽपि तन्नियमस्येहासंभवेन त्यागात् । तदा लाघवेन उद्भूतरूपवत्त्वमात्रमेव तथास्तु । चन्द्राद्युद्योतादेः प्रत्यक्षत्वेऽपि तत्संख्यादीनां तद्वदेवाप्रत्यक्षत्वोपपत्तेः । विष्वग्विसा(री)[रि]सरूपसजातीयसंवलनरूपदोषात्तदनुपलम्भ इत्यपि तुल्यमिति ।

---

न्यायशिखामणिः

ननु संख्यादीनां न दोषाभावसहकृतद्रव्यग्राहकग्राह्यत्वनियमः पृष्ठलग्नवस्त्रादौ व्यभिचारादित्यत आह—पृष्ठेति । दोष इति । न च पृष्ठलग्नत्वं न दोषः । द्रव्यान्तरे तत्सत्त्वेऽपि संख्यादिग्रहादिति वाच्यम् । फलबलेन वस्त्रादावेव तस्य तथात्वकल्पनादिति भावः ।

त्वेनाप्रत्यक्षत्वात् । तथा च परेषां चलतीति प्रतीतिरपि तल्लिङ्गिका न स्यात् । अस्माकमपि चन्द्रतारादौ संयोगविभागलिङ्गकगत्यनुमानं न स्यात् । न च पूर्वोत्तरदेशे उपलम्भानुपलम्भाभ्यां संयोगविभागावनुमाय ताभ्यामेव गत्यनुमानम् । पूर्वोत्तरदेशयोरप्रत्यक्षत्वेन लिङ्गासिद्धेः । तस्मा-दुद्भूतरूपवत्त्वं तत्र प्रयोजकमिति वायुरप्रत्यक्षः ।

---

## प्रकाशः

अस्वरसान्तरं स्वयमाह—संप्रदायविदस्त्विति । चलतीति । चन्द्राद्यु-द्योतादाविति शेषः । [1]स्वनवीनं मत्याह—अस्माकमपीति । लिङ्गासिद्धेरिति । प्रभामण्डलरूपस्य देशस्य परोक्षत्वात् तद्घटितलिङ्गं न प्रत्यक्षं नानुमेयम् । अती-न्द्रियनिरूपितव्याप्तेरतीन्द्रियतया तद्घटितलिङ्गद्वारानुमेयत्वेऽनवस्थेत्यर्थः ।

तत्रेति । बहिरिन्द्रियजन्यद्रव्यसाक्षात्कार इत्यर्थः । न चास्यैव चाक्षुषत्व-प्रयोजकत्वे सामान्यविशेषयोर्भिन्नप्रयोज्यत्वनियमो भज्येतेति वाच्यम् । चाक्षुषत्वे [2]रूपग्राहकसामग्रीसमावेशस्य प्रयोजकत्वेन तद्भेदात् । अत एव तमसि सुवर्णे न

---

## न्यायशिखामणिः

परमते सौरप्रभायाः प्रत्यक्षत्वादाह—चन्द्रेति । नन्वस्माकमित्यनेन गङ्गेशादिनवीनपरामर्शे तन्मते प्रत्यक्षत्वप्रयोजकसत्त्वाच्चन्द्रतारादावित्यसंगतिरित्यत आह—स्वनवीनमिति । नन्वाकाशाद्यतीन्द्रियपक्षकानुमाने इदं लिङ्गमप्यनुमी-यतामित्यत आह—प्रभेति । अनवस्थेति । आकाशादौ तु शब्दादिप्रत्यक्षे विश्रमान्नानवस्थेति भावः ।

स्पार्शन........वारयति—बहिरिति । किं सामान्यविशेषयोर्भिन्नसामग्री-प्रयोज्यत्वनियमः भिन्नकारणप्रयोज्यत्वनियमो वा । आद्य आह—चाक्षुषत्व इति । न चोद्भूतस्पर्शवत्त्वमेव सामग्री, येन तद्भेदो न स्यादित्याह—अत एवेति । अन्त्ये त्वाह—द्रव्यत्वेनेति । ननु द्रव्यप्रत्यक्षत्वादि नावच्छेदकम्, तदवच्छिन्नानुगत-

---

1. ख. स्वाधीनं
2. ख. रूपवद्ग्राहकं-

### प्रकाशः

प्रत्यक्षम् । [ उद्भूतरूपवद् ] द्रव्यत्वेनैव गुणं प्रति संयोगादिकं च विशेषं प्रति प्रयोजकत्वात् भिन्नप्रयोजकत्वनियमोऽपि नेत्याहुः ।

ननु द्रव्यप्रत्यक्षतायामिव गुणप्रत्यक्षतायामिव च बहिर्द्रव्यप्रत्यक्षतायामपि नैकं प्रयोजकमावश्यकम् । बहिर्द्रव्यप्रत्यक्षत्वस्य तद्वदेव कार्यतावच्छेदकत्वे मानाभावात् । भावे वा चाक्षुषत्वे उद्भूतरूपवत्त्वं स्पार्शनत्वे उद्भूतस्पर्शवत्त्वम् । [1]यस्य विशेषप्रयोजकत्वं तस्यानुगतेन रूपेण सामान्यप्रयोजकत्वमिति द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापकोद्भूतविशेषगुणत्वं सामान्यप्रयोजकमस्तु ।

नन्वेवं गौरवमिति चेत्—न । तवापि स्पार्शनत्वे उद्भूतरूपवत्त्वसहितमुद्भूतस्पर्शवत्त्वं तथेति तुल्यत्वात् । मम तु स्पार्शनत्वे उद्भूतस्पर्शवत्त्वमात्रस्यैव सामान्येन रूपेण विशेषरूपेण च हेतुत्वमिति लाघवम् ।

अस्तु वोद्भूतगुणवत्त्वमुद्भूतमेव[2] वा सामान्यप्रयोजकम्, लाघवात् । न चैवमतिप्रसङ्गः । विशेषसामग्रीसहिताया एव सामान्यसामग्र्या जनकत्वात् ।

---

### न्यायशिखामणिः

कारणासंभवस्य बाधकत्वात् । बहिरिन्द्रियजद्रव्यप्रत्यक्षत्वं तु तदभावात्तदित्यत आह—भावे वेति । चाक्षुषत्व इति । तथा च परोक्तं पक्षान्तरमनेनानूदितम् । अस्मिंश्च पक्षे चन्द्रादिप्रभायाः प्रत्यक्षत्वात् पक्षिकाण्डादावित्याद्ययुक्तमिति द्रष्टव्यम् ।

ननूद्भूतानेकगुणत्वं स्पार्शनत्वप्रयोजकं न तु पूर्वोक्तम्, येन गौरवं स्यात् । किं च रूपस्यैकरूपेणोभयप्रयोज(कम्)·[कत्वम्] । तव तु स्पर्शस्याभावप्रयोजकत्वेऽवच्छेदकद्वयापेक्षेति गौरवम् । ........[सामान्य] प्रयोजकतावच्छेदकं तव गुर्वित्यस्वरसादाह—अस्तु वेति । उद्भूतेति । उद्भूतगुणत्वमुद्भूतत्वं वा सामान्यप्रयोजकतावच्छेदक(मित्य........नगत) [मित्यवश्यं वाच्यम् । तथा च रसनगत]पित्तद्रव्यस्य वायूपनीतसुरभिद्रव्यादेश्च तथात्वात् प्रत्यक्षत्वप्रसङ्ग इत्यर्थः ।

---

1. क. अस्य
2. क. °मेवासामान्य-

## प्रकाशः

चाक्षुषत्वस्पार्शनत्वरूपविशेष[1]द्वयसामग्री च तत्र नास्त्येवेति। न चैवमुद्भूतमपि त्याज्यम्। तथा सत्याकाशादेरपि स्वरूपयोग्यतया कदाचित्फलावश्यंभावापत्तेः।

न चैवमपि दोषः। उद्भूतत्वस्य मूर्तविशेषगुणमात्रवृत्तित्वाभ्युपगमात्। अन्यथा उद्भूतरूपत्वमप्यतिप्रसक्तं स्यात्। तमसि तद्वतोऽपि सुवर्णस्याप्रत्यक्षत्वात्। यदि चोद्भूतरूपग्रहसामग्रीरूपविशेषसामग्र्यभावात् तथा तत्र, तदा तुल्यम्। न च तत्राग्रेऽपि तत्समवधानमन्यत्र नेति वैषम्यम्। अग्रे तन्नाशस्यापि संभवात्।

नव्यास्तु—प्रत्यक्षत्वाविशेषेऽपि वह्न्यादौ संख्यादिप्रत्यक्षं प्रभादौ नेति सर्वसिद्धम्। अत्र नियामकमावश्यकम्। तच्चान्विष्यमाणमुद्भूतस्पर्शवत्त्वे सति प्रत्यक्षत्वम्। तथा च यदि वायुरूष्मादिश्च प्रत्यक्षः स्यात् तदा तत्र संख्यादिकमपि प्रत्यक्षं स्यात्। न च प्रणिधाने सत्यपि तत्प्रत्यक्षमिति वाय्वादिरप्रत्यक्ष इति वदन्ति।

---

## न्यायशिखामणिः

तत्रेति। रसनगतपित्तद्रव्यसुरभिद्रव्ययोश्च उद्भूतद्रव्यरसगन्धवत्त्वेऽपि उद्भूतस्पर्शलक्षणविशेषसामग्रीविरहान्नोक्तदोषः। वायावुपनीतशीतोष्णद्रव्यनिदाघोष्मणां च तन्मते वायुवत् प्रत्यक्षत्वमिष्टमेव। नचैवमपि नयनपित्तद्रव्येऽतिप्रसङ्गः। तस्य मतद्वयेऽपि समाधेयत्वादिति भावः। फलेति। एतच्चापाततः। विशेषसामग्रीविरहादेव फलाभावोपपत्तेः। वस्तुतो गुणवत्त्वस्य प्रयोजकत्वेऽपि वायुः प्रत्यक्ष इत्यत्र तात्पर्यम्। मूर्तेति। एतच्चोद्भूतत्वं जातिरिति मतेन। ननु गुणगतजात्यनभ्युपगमादुद्भूतपदं प्रत्यक्षपरमेव वाच्यम्। तथा चाकाशादावतिप्रसङ्गतादवस्थ्यमित्याशङ्क्य, परमुखेन समाधातुं प्रतिबन्दीमाह—[यदिचेति। तत्रेति]। आकाशादावित्यर्थः।' तन्नाशस्यापीति। यत्सुवर्णं यावत्सत्त्वं तमःप्रदेश एव स्थितम्, तस्यालोकसमवधानात्प्रागेव यत्र नाशः तत्र विशेषसामग्रीविरहस्तुल्य इत्यर्थः।

---

1. ख. 'द्वय' नास्ति।

प्रकाशः

अत्र ब्रूमः। यथोक्तरूपे सत्यपि सौरतेजसि संख्यादिकमप्रत्यक्षम्, तथा वाय्वादावप्यस्तु। यदि च संख्यादि प्रत्यक्षमेवेत्युपेयम्, तदा वाय्वादिना किमपराद्धम्। किं चैवमुद्भूतस्पर्शवत्त्वे सत्युद्भूतरूपवत्त्वमेव संख्यादिप्रत्यक्षताप्रयोजकमस्तु। तथापि वायुः प्रत्यक्षः। न चैवं गौरवम्, मम तु लाघवं प्रत्यक्षत्वस्य जातित्वादिति वाच्यम्। प्रत्यक्षत्वमात्रस्यातिप्रसक्ततया लौकिकप्रत्यक्षत्वस्यावश्यवाच्यत्वेन वैपरीत्यात्, परस्य गुणगतजात्यनभ्युपगमाच्च। तस्मादेतच्चिन्त्यम्।

---

न्यायशिखामणिः

उपाध्यायसमाधिमनुवदति—नव्या इति। वाय्वादिरिति। तथा च गुर्वप्युद्भूतरूपवत्त्वमेव तत्र प्रयोजकमिति भावः। यदि चेति। (यदिद)[यदीद]माश्रयसजातीयगतसंख्याद्युपलम्भप्रयोजकमिति जालकद्वारा नोदरप्रविष्टदण्डायमानसौरतेजसि? तद्ग्रहणान्न व्यभिचारः, (तथा)[तदा]फूत्कारादावपि तद्ग्रहणदर्शनाद्वायुमात्रस्य प्रत्यक्षत्वे न विरोध इत्यर्थः। तस्मादिति।

अत्र ब्रूमः। बहिर्द्रव्यप्रत्यक्षत्वं हि स्वगोचरबहिरिन्द्रियजप्रत्यक्षजनकत्वम्। तदवच्छेदक च न गुणवत्त्वमुद्भूतरूपवत्त्वं वा। आकाशादावतिप्रसङ्गात्। न चेष्टापत्तिः। तस्य मतद्वयेऽपि स्वरूपायोग्यत्वात्। न च द्रव्यग्रहे बहिरिन्द्रियव्यवस्थापकोद्भूतगुणवत्त्वम्। तथाप्युभूतरूपव……स्य गुरुत्वापेक्षया……न चोद्भूतस्पर्शवत्त्वम्। तस्य प्रभाद्यव्यापनात्। चाक्षुषत्वप्रयोजकवत्तया प्रभादेस्तैरपि प्रत्यक्षत्वाभ्युपगमात्। न च प्रभादौ संख्यादिग्रहापत्तिरूपबाधकात् उद्भूतरू……नोभय[रूपवत्त्वं नोभय] प्रयोजकमिति वाच्यम्। तदनुरोधेन संख्यादिग्राहकस्याश्रयप्रत्यक्षत्वस्यैव विष्वग्विसारि(तसर)[तमस] इव सजातीयासंततिं(सत्त्वेन)[मत्त्वेन]विशेषणीयत्वात्। न चैतद्बाधकत्वापत्तिभयेन तत्प्रत्यक्षप्रयोजकमेव तद्व्यावृत्तं वाच्यमिति वैपरीत्यमर्हम्। आश्रयप्रत्यक्षत्वघटितस्य संख्यादिग्राहकस्य तत्प्रयोजकोपजीव्यत्वेन बाधकत्वायोगात्। अत एवोद्भूतस्पर्शवत्त्वे सत्युद्भूतरूपवत्त्वं संख्यादिप्रत्यक्षताप्रयोजकमित्युक्तम्। तच्च तदुपजीव्यमित्यपास्तम्। सौरतेजोगतत्वात्।

किं च रूपवत्त्वादिव्याप्य(त्व)स्याप्युद्भूतत्वस्य नानात्वेनाननुगमः। प्रत्यक्षत्वप्रयोजकजातित्वेन (चाननुगमे) [चानुगमे] लाघवात् प्रत्यक्षत्वमेव प्रवेश्यम्।

ननु शीतो वायुरित्यारोपो न स्पार्शनः, विशेष्यस्यायोग्यत्वात् । न च प्रभायां तथा । सामान्ये बाधकाभावात् । नाप्यनुमानोपनीते वायौ त्वगिन्द्रियोपनीतः शीतारोपः शीतद्रव्याभेदारोपो वा । मनसा तल्लिङ्गस्पर्शादिचतुष्कस्याग्रहणात् शीतस्पर्शस्यातल्लिङ्गत्वात् । न च शीतद्रव्योपनायकत्वेनानुमिते वायौ मनसा शीतारोपः । शीतानाश्रयत्वेनानुमिते वायौ तदनारोपात् । नापि पीतः शङ्ख इतिवत् बहिरिन्द्रियजन्योऽयं भ्रमः, येनानुमानिक[1]विशेषग्रहेऽपि दोषमाहात्म्यात् भवेत् । शीतद्रव्योपनयनजनकप्रणालीमविदुषोऽपि शीतो वायुरिति प्रत्ययाच्च । नापि लिङ्गाभासजन्यानुमितिरूपो भ्रमः । तदप्रतीतेः, शीतस्पर्शस्य वायुलिङ्गत्वेन भ्रमा-

---

प्रकाशः

(न हि) [नापि] पीत इति । मानसे च भ्रमे सकलमेव विशेषदर्शनं प्रतिबन्धकम्, तथैवानुभवादिति भावः । [2]भ्रमाविषयत्वादिति । अनुमाने विशेषदर्शनमात्रस्य प्रतिबन्धकत्वम्, तथैवानुभवादिति भावः । न चेति । विशेषदर्शने सत्यपि यथोत्प्रेक्षादौ संसर्गारोपस्तथा प्रकृतेऽपीत्यर्थः ।

---

न्यायशिखामणिः

अपि च तवापि तादृशसजातीयसंवलनाभावविशिष्टं प्रत्यक्षमेव तद्ग्रहप्रयोजकं वाच्यम् । तैरुद्भूतत्वजात्यनभ्युपगमात् । न चातिप्रसङ्गः । विषयजन्यप्रत्यक्षस्य विवक्षितत्वात् ।

नन्वेवमप्युद्भूतरूपवत्त्वं नावच्छेदकम् । परमाण्वादावतिप्रसक्तत्वादिति चेत—न । (तथापि) [तवापि] तुल्यत्वात् । महत्त्वसामानाधिकरण्यविशेषणमुद्भूतपदं वा प्रत्यक्षाङ्गमिति समाधानस्य ममापि तुल्यत्वात् ।

तस्मात् सुष्टूक्तम्—'उद्भूतरूपवत्त्वं तत्र प्रयोजकमिति वायुरप्रत्यक्षः' इति ।

नन्वौत्प्रेक्षिकसंसर्गज्ञानवन्मानसोऽयं वायवीयत्वभ्रमः । स च विशेषदर्शनेऽपि स्यादित्याशङ्क्य किं तद्वदाहार्यो न वा । तत्राद्यमनुपदं निराकरिष्यतीत्यभिप्रेत्येदं मूलमन्त्यनिराकरणपरतया व्याचष्टे—मानस इति ।

---

1. ख. ०विशेषदर्शनेऽपि 2. ख. भ्रमविषयत्वात्

विषयत्वात्। न च शीतस्पर्शानुमिते द्रव्ये स्मृतवाय्वभेदारोपः, वायुविशेष्यकशीतप्रत्ययात्।

अत एव शीतस्पर्शोऽयं वायोरिति भ्रमशरीरमपास्तम्। न च स्वप्नविभ्रमवत् स्वोत्प्रेक्षितपदार्थसंसर्गारोपवच्च मानसोऽयम्। त्वगिन्द्रियव्यापारानुविधानादिति।

उच्यते। यथा वायुवैधर्म्येण जलवृत्तितया गृहीतस्य शीतस्पर्शस्य वायावारोपो दिङ्मोहवद्दोषमाहात्म्यात् तथा शीतस्पर्शे वायुलिङ्गत्वारोपात् वायवीयत्वानुमानम्। न चैवं शीतो वायुरिति प्रतीतिः न स्यादिति वाच्यम्। शीतोयं वायवीय इति ज्ञानानन्तरं शीतोयं वायुरिति च मनसारोपात्, अनुष्णो वायुरितिवत्।

---

प्रकाशः

तथेति। अत्रापीदं चिन्त्यम्। अनुमाने विशेषदर्शनमात्रस्य [1]प्रतिबन्धकतया शीतस्पर्शे वायवीयत्वानुमानासंभवात्। न चानुमानपदं ज्ञानपरम्, तथा त्वचैतत् [च त्वचैतत्] इति वाच्यम्। वायुलिङ्गत्वारोपात् इत्यनेन विरोधात्। एवं च मानसारोप इत्यप्ययुक्तम्। मानसेऽपि विशेषदर्शनमात्रस्य प्रतिबन्धकत्वात्। न हि पीतः शङ्ख इति भ्रमकाले मानसोऽपि तथा प्रत्ययः। किं तु शुक्लप्रत्यय एवेति सुहृदयैरालोकनीयम्। तदिदं प्रागुक्तं 'न हि पीतः शङ्ख इतिवद्बहिरिन्द्रियजन्योऽयम्' इत्यादि। तस्माद्यदि वायोस्त्वगिन्द्रियवेद्यत्वमवगम्यते तदा परं तेन पीतः शङ्ख इतिवत् विशेषदर्शनेऽपि शीतो वायुरिति प्रत्यय उत्पद्यत इति युक्तमुत्पश्यामः। अनुष्ण इति। अनुष्णस्पर्शस्य वायुलिङ्गत्वात् तदनुमिते वायौ मनसा तत्प्रत्यय उभयसिद्ध इति भावः।

---

न्यायशिखामणिः

ननु शीतस्पर्शवत्त्वं वायुवृत्तित्वव्याप्यं स्पर्शवृत्तिधर्मत्वादित्यनुमानाभासानन्तरं शीतस्पर्शे वायुवृत्तित्वं साध्यत इति वायुलिङ्गत्वेनेत्यसंगतिरित्याशङ्क्य[2]

---

1. ख. 'प्रतिबन्धकतया......मानसेऽपि विशेषदर्शनमात्रस्य' इति ग्रन्थस्त्रुटितः
2. एतावत्पर्यन्तमेव न्यायशिखामणिग्रन्थ उपलभ्यते।

अथ त्वग्व्यापारानन्तरं कथं वायुर्वातीति प्रतीतिः, तल्लिङ्गसंयोगविभागयोरप्रत्यक्षत्वात्। न च शरीरे वाय्वभिघात एव तल्लिङ्गम्। अभिघातस्य संयोगत्वेनाप्रत्यक्षत्वादिति चेत्—न। अभिघातजन्यसुखदुःखविशेषेणाभिघातमुन्नीय तस्य स्पर्शवद्वेगवज्जन्यत्वमनुमाय वेगेन कर्मानुमानात्। एवं प्रणालीमविदुषस्तत्प्रत्ययासिद्धेः।

अथ वायुः शीतो वातीति कथं विशिष्टवैशिष्ट्यप्रतीतिरेका, शीतविशिष्टप्रतीतेः मानसत्वेन [1]कर्मप्रतीतेरानुमानिकत्वेन जातिसंकरप्रसङ्गादिति चेत्—न। शीतविशिष्टत्वेन स्मृते वायौ कर्मानुमानाद्विशिष्टवैशिष्ट्यम्, न तूभयं विशेषणमेकदा भासते। न चैवं कल्पनागौरवं दोषाय, प्रत्यक्षत्वे [2]बलवद्बाधकसत्त्वात्।

एवं बहिरिन्द्रियजद्रव्यप्रत्यक्षत्वे उद्भूतरूपवत्त्वस्य प्रयोजकत्वे व्यवस्थिते प्रत्यक्षत्वसाध्यकानुमाने पक्षधर्मावच्छिन्नस्य साध्यस्य साधनावच्छिन्नस्य वा व्यापकमुद्भूतरूपवत्त्वमुपाधिः। न च विशिष्टस्य व्यभिचारव्यतिरेकयोः साधनेऽर्थान्तरम्। विशेष्यव्यभिचारव्यतिरेकसिद्धिपर्यवसानात् इत्युपाधौ वक्ष्यामः।

अथ वायुवदात्मापि न प्रत्यक्षः, द्रव्यप्रत्यक्षत्वे उद्भूतरूपवत्त्वस्य [3]तन्त्रत्वात्। न च लिङ्गज्ञानं विनैव अहं जानामीति प्रत्ययात् न लैङ्गिकत्वम्। ज्ञानमविदुषो जानामीति विशिष्टप्रत्ययाभावेन ज्ञानस्य लिङ्गत्वात्। न च घटमहं जानामीति वर्तमानप्रत्ययो न स्यात्, घटज्ञानस्यानुमितिपूर्वतृतीयक्षणे विनाशादिति वाच्यम्। स्थूलसमयोपाधिमादाय वर्तमानप्रत्ययात्। यथा कुलाले चेष्टादर्शनेन करोतीत्यनुमितिरिति।

---

प्रकाशः

प्रतिबन्द्यभिप्रायेणाह—अथेति। [4]द्रव्येति। लाघवादिति भावः। यदि च द्रव्यप्रत्यक्षत्वावच्छिन्ने नैकं प्रयोजकमावश्यकम्, तदा बहिरिन्द्रियजद्रव्यप्रत्य-

---

1. ख. कर्मविशेषप्रतीतेः
2. ख. बलवद्विरोधात्
3. ख. प्रयोजकत्वात्
4. ख. द्रव्येति

उच्यते। योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीत्यभेदप्रत्यभिज्ञानादात्मा प्रत्यक्षः। न चैतत् स्पर्शनेन्द्रियजन्यज्ञानाश्रयोऽहं तद्दर्शनज्ञानाश्रयाभिन्नः मदीयाहंप्रत्ययविषयत्वात् तद्दर्शनज्ञानाश्रयवदित्यात्माभेदप्रत्यय इति वाच्यम्। मदंशस्याप्रत्यक्षत्वेनानुमानलिङ्गासिद्धेः। न च ज्ञानेनात्मानुमानं ततस्तत्र ज्ञाने आत्मीयत्वानुमानं ततो मदीयाहंप्रत्ययविषयत्वज्ञानमात्मनीति वाच्यम्। एवं प्रणालीमविदुषोऽपि योऽहं सोऽहमिति प्रत्ययात्। न च वायौ प्रत्यभिज्ञानमस्ति। सदागतिमत्त्वेन गतस्य पुनरज्ञानात्। स एव पुनः पुरोवात इति प्रतीतेः तज्जातीयानुमितिरूपत्वात्।

तस्माद्वायुः बहिरिन्द्रियाप्रत्यक्षः नीरूपद्रव्यत्वात् आकाशवत्। न च साधनावच्छिन्नसाध्यव्यापकमुद्भूतस्पर्शानाश्रयत्वमुपाधिः। उद्भूतस्पर्शस्य तत्राहेतुत्वेनोपाधेः साध्याव्यापकत्वात्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे वायुप्रत्यक्षवादः

---

**प्रकाशः**

क्षेऽपि तथेति तात्पर्यम्। चेष्टेति। तदाकृतेर्नष्टत्वादिति भावः। विषयत्वात्—विशेष्यत्वादित्यर्थः। आत्मीयत्वम्—मदीयत्वम्। एतच्छरीरावच्छिन्नात्मवृत्तित्वमिति यावत्। एवमिति। उक्तप्रणाडीमविदुषोऽपि शीतो वायुरिति प्रत्ययादिति परेणापि सुवचम्। यदि च बहिर्द्रव्यप्रत्यक्षे लाघवेनोद्भूतरूपवत्त्वस्य तन्त्रत्वे प्रणाडीकल्पनं प्रामाणिकम्, तदा द्रव्यप्रत्यक्षत्वावच्छिन्नेऽपि तस्य तथात्वात् तथेति तुल्यमिति चिन्त्यम्।

तस्मादिति। [1]वायुर्न स्वविशेष्यकप्रत्यक्षजनक इत्यर्थः। तेन सामान्यलक्षणादिजन्यप्रत्यक्षविषयतया न बाधः। उद्भूतेति। प्रत्यक्षेत्यर्थः। तेन वायु-

---

1. ख. वायुनिर्विशेष्यक

प्रकाशः

परमाणौ न [1]साध्याव्याप्तिः । न चैवं साधनावच्छिन्नेति व्यर्थम् । न्यायमतेनोष्मादौ [2]साध्याव्याप्तिपरिहारमात्रार्थत्वात् । यद्वा उद्भूतपदं यथाश्रुतमेव । साधनपदं पक्षधर्ममहत्त्वपरम् । तत्र—बहिरिन्द्रियजद्रव्यप्रत्यक्षत्वे ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणि-
प्रकाशे प्रत्यक्षखण्डे वायुप्रत्यक्षवादः

—: * :—

1. ख. साध्यव्याप्तिः 2. ख. साध्यव्याप्तिः

# सुवर्णतैजसत्ववादः

—: * :—

किं चोद्भूतस्पर्शवत्त्वस्य बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारप्रयोजकत्वे सुवर्णरूपं तेजोद्रव्यं प्रत्यक्षं न स्यात् प्रभावत् तस्यानुद्भूतस्पर्शवत्त्वात्। रूपं तु तस्योद्भूतमेव। किं तूपष्टम्भकपीतरूपाभिभूतम्। अभिभवश्च बलवत्सजातीयसंबन्धः। एवमन्धकारे पीताग्रहणेऽप्यभिभवः। न चैवमन्धकारे सुवर्णोपलम्भापत्तिः, अभिभूतस्यापि तेजसो ग्रहात्। न च तेजसि तेजोऽन्तरं व्यञ्जकमिति वाच्यम्। रूपे गृह्यमाण एव चक्षुषा द्रव्यग्रहात्। सुवर्णरूपमभिभवादेव नोपलभ्यते, उपष्टम्भकरूपं चालोकाभावात्।

अथ यथा अरुणकपिलादिरूपाभिभूतमपि वह्निरूपं परम् आत्मानं च प्रकाशयति, तथा कनकमपि प्रकाशेत प्रकाशयेच्चेति चेत्—न। तत्र हि अभिभूतरूपवह्निसंबद्धानभिभूतरूपा वह्निमध्यादिव्यापिनी प्रभैव व्यञ्जिका।

---

प्रकाशः

किं चेति। न चोद्भूतस्पर्शवत्त्वं स्पार्शनत्वे तन्त्रमिति परोक्तेरनुक्तो-[1]पालम्भोऽयमिति वाच्यम्। अस्तु वेत्यादिना बहिरिन्द्रियजद्रव्यप्रत्यक्षतन्त्रत्वेनापि तस्य तेनोक्तत्वात्।

ननु बलवत्सजातीयग्रहणकृतमग्रहणमभिभवं इत्यन्धकारे समजातीयाग्रहणदशायां तदुपलभ्येतेत्यत आह—अभिभवश्चेति। लाघवादिति भावः। ननु स्पर्शवद्रूपमप्यनुद्भूतमेवास्तु, रूपवत्स्पर्शोऽपि वाभिभूतोऽस्तु। न चैवं सुवर्ण(स्याचाक्षुषत्वापत्तिः,) [स्य चाक्षुषत्वानुपपत्तिः]स्पार्शनत्वानुपपत्तेस्तुल्यत्वात्। न च तदस्पार्शनमेव, त्वचा उपष्टम्भकमात्रस्यैव ग्रहणादिति वाच्यम्। चाक्षुषत्वेऽपि तुल्यत्वात्। तस्मादेतद्विनिगमकं चिन्त्यम्।

---

1. ख. ॰पालम्भ इति

यद्वा वह्नौ रूपभास्वरत्वे नाभिभूते किं तु शुक्लत्वमात्रम्, सुवर्णे तु रूपमभिभूतम्। तेन तद्गतशुक्लत्वभास्वरत्वे अनभिभूते अपि व्यक्त्यग्रहान्न गृह्येते इति फलबलात्कल्प्यते। न च पीतिमगुरुत्वाश्रयातिरिक्तं तदसिद्धम्। अस्ति हि सुवर्णस्यात्यन्तानलसंयोगेऽपि पीतं रूपं न तद्विजातीयम्। तदनुपपन्नमसति द्रवद्रव्यसंबन्धे, पार्थिवे अत्यन्ताग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वनियमात्। जलसंबन्धे तदपगमे च पटादौ दाहादाहदर्शनात्। तदिदं ध्मायमानं कनकं यद्यत्यन्ताग्निसंयोगिपार्थिवत्वे सति विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तं न स्यात्, पूर्वरूपविजातीयरूपवत् स्यात् वह्निसबद्धघटवत्। अन्यथा पार्थिवं न स्यात् जलं वा स्यात् अग्निसंयोगि वा न स्यात्।

तदयं प्रयोगः—अत्यन्ताग्निसंयोगि पीतं विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तम्, अत्यन्ताग्निसंयोगित्वे सति पूर्वरूपविजातीयरूपानधिकरण-

---

प्रकाशः

ननु भवतु प्रभारूपतेजोन्तरकल्पनायां गौरवं [1]मानाभावश्च। न चैवमग्नेर्व्यञ्जकत्वे तेन संयुक्तस्य पटस्य दाहापत्तिः। सावित्ररश्मिसंबन्धवत् अदाहोपपत्तेः। तादृशसंबन्धाभावाद्वेत्यनुशयादाह—यद्वेति। भास्वरत्वग्रहणं प्रसङ्गादिति बोध्यम्। तदसिद्धमिति। तथा च तस्य प्रभावदनुद्भूतस्पर्शवत्त्वमसिद्धमिति भावः। सुवर्णस्योपष्टम्भकपार्थिवभागस्य। तदिदमिति। घटादौ व्यभिचारा दाह—संयोगीत्यन्तम्। अग्निपदमप्रतिबन्धाग्निपरम्। तेन प्रतिबद्धाग्निसंबन्धपटादौ न व्यभिचारः। जले व्यभिचारादाह—[2]पार्थिवत्व इति। जलपरमाणुसंयुक्तत्वेनार्थान्तरवारणाय द्रवद्रव्येति। तत्र च न द्रवत्वमित्यग्रे स्फुटमित्याहुः।

ननु यत्राग्निसंयोगः समानजातीयमेव रूपमारभते तत्र व्यभिचारः, तत्संदेहेऽपि व्यभिचारसंदेहादिति पीतरूपान्तर्भावेण विशिष्यैव हेत्वन्तरमाह—यद्वेति। पीतेऽप्यग्निसंयोगात् श्याममेव रूपमुत्पद्यत इति नियमाभ्युपगमादे-

---

1. क. मानाभावाच्च। 2. क. पार्थिव इति।

पार्थिवत्वात् जलमध्यस्थिताग्निसंयुक्तपीतपटवत् । यद्वा पीतं सुवर्णं पीतरूपातिरिक्तरूपोत्पत्तिप्रतिबन्धकद्रवद्रव्यसंयुक्तम्, नक्तंदिवमग्निसंयोगेऽपि पीतरूपातिरिक्तरूपानाश्रयत्वात् तावत्पर्यन्तमग्निसंयुक्तजलमध्यस्थपीतपटवत् । न चाप्रयोजकत्वम्, विरोधिद्रवद्रव्यसंबन्धं विना पार्थिवेऽत्यन्ताग्निसंयोगस्य विजातीयरूपजनकत्वात् । तच्च द्रवद्रव्यं न जलम्, स्वाभाविकद्रवत्वानाश्रयत्वात् । न चानुद्भूतं तत्, शीतलशिलातलेऽग्निसंयोगाद्दाहदर्शनेनानुद्भूतद्रवत्वस्य दाहाविरोधित्वात् नैमित्तिकद्रवत्वाच्च । नापि तत एव पार्थिवत्वं, द्रुतपार्थिवस्य विजातीयरूपप्रतिबन्धकत्वे घृतादावपि तथात्वापत्तेः, तत्रापि रूपपरावृत्तिप्रसङ्गाच्च । उपष्टम्भकस्यापि पार्थिवत्वेन विजातीयरूपाप्रतिबन्धकत्वात् ।

यद्यपि तेजोन्तरं न नैमित्तिकद्रवत्वाधिकरणं, नापि विजातीयरूपप्रतिबन्धकं, किं तु तज्जनकम्; तथापि प्रत्यक्षद्रव्यत्वेन तस्य रूपवत्त्वे पृथिवीजलान्यत्वेन तेजस्त्वात् धर्मिग्राहकमानसिद्धं तथात्वम् । पीतभाग-

---

प्रकाशः

तदुक्तम् । आत्यन्तिकत्वं सावधितयाननुगतमतस्तदर्थंतथा नक्तंदिवेत्युक्तम् । अत्रापि पार्थिवत्वमनुषञ्जनीयम् ।

ननु करकावत् प्रतिबद्धस्वाभाविकद्रवत्वं स्यादित्यत आह—नैमित्तिकेति । तथा सत्यग्निसंयोगाद्यनुविधानानुपपत्तिरिति भावः । (अत)[तत] एव—नैमित्तिकद्रवत्वादेवेत्यर्थः । तत्रापीति । अनुमितद्रवद्रव्येऽपीत्यर्थः । तस्य त्वया पार्थिवत्वाभ्युपगमादिति भावः । ननु तत्रोपष्टम्भक एव प्रतिबन्धक इत्यत आह—उपष्टम्भकस्यापीति ।

प्रत्यक्षेति । बहिरिन्द्रियजन्यप्रत्यक्षेत्यर्थः । क्वचित् प्रत्यक्षद्रवत्वेति पाठः । अत एवाग्रेऽपि तथैवास्ति । तत्र प्रत्यक्षपदं द्रवत्वे प्रमाणदर्शनमात्रार्थम् ।

ननु पृथिव्यन्यत्वे तेजोन्यत्वस्यापि संभवः । न च पार्थिवरूप[1]प्रतिबन्धकत्वमेवापार्थिवत्वे मानम् । तेजोन्यत्वेऽपि तत्संभवात् । पृथिव्यन्तरे प्रतिबन्धकत्वा-

---

1. क. °प्रतिबन्धकत्वापार्थिवत्वे

द्रवत्वमपि अग्निसंयोगे न नश्यति, द्रुततेजःप्रतिबन्धादेव जलमध्यस्थाग्नि-संयुक्तघृतवदिति ।

अथ यदि द्रुततेजसो विजातीयरूपप्रतिबन्धकत्वं तदा जलस्थपटवत् द्रुतसुवर्णमध्यस्थितपटादेरपि रूपपरावृत्तिर्न स्यादिति चेत्— न ।

लोके सुवर्णत्वेनानुभूयमाने पीतद्रव्ये अविनिर्भागवर्तिन्युपष्टम्भके द्रुतं तेजो विजातीयं रूपं प्रतिबध्नाति नान्यत्र, तथैवान्वयव्यतिरेकात् । तर्हि उपष्टम्भकत्वमनुभवसिद्धं सुवर्णस्येत्यस्यावश्यकत्वात्, तस्यैव स्वरूप-परावृत्तौ प्रतिबन्धकत्वमस्तु, कृतं दृष्टविजातीयतेजःकल्पनयेति चेत्—न । उपष्टम्भकमात्रे हि विजातीयरूपप्रतिबन्धकस्वभावत्वं दुततेजसो धर्मिग्राहक-मानसिद्धत्वात् तस्य तेनैव रूपेण सिद्धेः । यदि द्रुतं तेजो रूपपरावृत्ति-प्रतिबन्धकं स्यात् पटादिरूपपरावृत्तिमपि प्रतिबध्नीयादिति तर्कस्य तद्विपर्य-यस्य च सिद्ध्यसिद्धिव्याहतत्वात् ।

---

प्रकाशः

दर्शनवत् तेजोऽन्तरेऽपि तद्दर्शनस्य सत्त्वात् । [1]तत्रैव विशेषे यदि तथात्वकल्पनं तदा [2]पार्थिवविशेषे तथैव तत्कल्पनमस्त्विति चेत्—न । उपष्टम्भकरूपं प्रति तेजो-द्रवत्वेन प्रतिबन्धकत्वे लाघवात् उपष्टम्भकानुमितद्रवद्रव्ययोस्तत्तद्रूपं प्रति तत्त-त्पार्थिवद्रवद्रव्यत्वेन प्रतिबन्धकत्वे गौरवात् ।

तथात्वमिति । नैमित्तिक[3]द्रवत्वाधिकरणत्वं विजातीयरूपप्रतिबन्धकत्वं चेत्यर्थः । यद्यपि नैमित्तिकत्वं तस्य न सिद्धम्, तथापि यद्वस्तुतो नैमित्तिकं तदधिकरणत्वं बोध्यम् । तच्चाग्निसंयोगादिनोत्तरकाल[4]गम्यमित्यर्थः । पीतेति । तथा चोपष्टम्भकद्रवत्वपक्षे द्रवत्वनाशप्रतिबन्धकत्वेनापि तत्सिद्धिरिति भावः । जलस्थितेति । तथा च जले सकलपार्थिवरूपपरावृत्तिप्रतिबन्धकत्वस्यैव दृष्टत्वा-दत्रान्यथा न कल्प्यं दृष्टविरोधादित्यर्थः । अनन्यगत्या दृष्टविरुद्धमपि कल्प्यमित्याह—लोक इति । ननु यदि दृष्टविरुद्धमपि कल्पनार्हम्, तदा धर्ममात्रकल्पनालाघवादेतदेव कल्प्यमित्याह—तर्हीति । उपष्टम्भकेति ।

---

1. ख. अत्रैव
2. ख. पार्थिवविशेषतथैव
3. क. द्रवत्वादिकरणत्वं
4. क. ॰गम्य इत्यर्थः

अनुभूयमानसुवर्णस्य च उपष्टम्भकरूपपरावृत्तिप्रतिबन्धकस्वभावत्वं न धर्मिग्राहकमानादन्यतो वा सिद्धं येन पार्थिवे असति विरोधिद्रवद्रव्यसंबन्धे अग्निसंयोगस्य रूपपरावर्तकत्वमन्वयव्यतिरेकसिद्धं परिभूयेतेत्याचार्याः ।

नवीनास्तु—अत्यन्ताग्निसंयोगेनानुच्छिद्यमानप्रत्यक्षद्रवत्वाधिकरणं तैजसं जलपृथिवीभ्यामन्यत्वे सति रूपवत्त्वाद्वह्निवत् । न चासिद्धिः, प्रत्यक्षद्रव्यत्वाधिकरणत्वेन तस्य रूपवत्त्वात् । न च तज्जलम्, सांसिद्धिकद्रवत्वानाश्रयत्वात् नैमित्तिकद्रवत्वाधारत्वात् स्नेहशून्यत्वाद्वा लाक्षावत् । स्नेहे सति स्नेहद्रवत्वाधीनसंग्रहप्रसङ्गात् । न च पार्थिवम्, अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानं यद्द्रवत्वं तदधिकरणत्वात् जलपरमाणुवत् । असति विरोधिद्रवद्रव्यसंबन्धे इति विशेषणम्, तेन क्वथ्यमानजलस्थघृतेन न व्यभिचारः । न चाप्रयोजकत्वम्, अत्यन्तानलसंयोगेन लाक्षादिघृतादिपृथिवीद्रवत्वोच्छेदे पृथिवीद्रवत्वत्वमेव प्रयोजकम्, असति बाधके अनुगतस्य प्रयोजकत्वे संभवति त्यागायोगात् । न च घृतद्रवत्वत्वादिकम्, अननुगमात् । नापि नैमित्तिकद्रवत्वत्वम्, द्रवत्वत्वमेव वा, सुवर्णे द्रवत्वोच्छेदप्रसङ्गात् ।

अथ अपार्थिवमपि सांसिद्धिकद्रवत्वं तैले जन्यजलान्तरे चात्यन्ताग्निसंयोगादुच्छिद्यते । अतोऽनुगतमेव तृणारणिमणिन्यायेन द्रवत्वोच्छेदप्रयोजकमिति चेत्—न । पृथिवीद्रवत्वोच्छेदे पृथिवीद्रवत्वत्वं, जलद्रवत्वोच्छेदे जन्यजलद्रवत्वत्वं, द्रवत्वमात्रोच्छेदे च जन्यरसवद्द्रवत्वं प्रयोजकं लाघवात् ।

---

प्रकाशः

तथा च दृष्टविरोधान्नैतत्स्वभावत्वमापाद्यं धर्मिग्राहकमानसिद्धत्वात् । तथा च गौरवमपि प्रामाणिकमिति भावः । अनुभूयमानेति । प्रत्युत गुणिनः स्वगुणप्रतिबन्धकत्वं विरुद्धम् । द्रवद्रव्यसंबन्धस्य विजातीयरूपप्रतिबन्धकत्वं क्लृप्तमेवेति भावः ।

प्रत्यक्षद्रवत्वाधिकरणमिति । प्रत्यक्षपदं जलपरमाणौ भागे बाधवारणाय । उपष्टम्भकद्रवत्वानभ्युपगमपक्ष एवेदम् । अतो न तत्र बाधः । असती-

एतेन विवादविषयः पृथिवी नैमित्तिकद्रवत्वाश्रयत्वात् घृतवदिति सत्प्रतिपक्षत्वमपास्तम्। अनुकूलतर्काभावेन, अग्निसंयोगाद्द्रवत्वोच्छेद-प्रसङ्गलक्षणप्रतिकूलतर्केण च हीनबलत्वात्।

अथ नैमित्तिकद्रवत्वे पृथिवीत्वं समवायिकारणतावच्छेदकमसति बाधके त्यागायोगादिति चेत्—न। घटादावपि नैमित्तिकद्रवत्वप्रसङ्गात्। न च घृतलाक्षादिषु पृथिवीत्वावान्तरं किञ्चिदेकमनुगतं नैमित्तिकद्रवत्व-समवायिकारणतावच्छेदकमस्ति। पृथिवीनियतनैमित्तिकद्रवत्वं कथमपृथि-व्यामिति चेत्—न तावत्तिर्यग्गमनोर्ध्वज्वलनवत् [1]तत् जातिनियतम्, घटादावभावात्। नापि पृथिवीत्वावान्तरजातिविशेषनियतम्, घृतं विहाय लाक्षादिष्वपि भावात्।

अथोपष्टम्भके पीतिमगुरुत्वाश्रये पार्थिवे अत्यन्ताग्निसंयोगेनानु-च्छिद्यमानद्रवत्वाधारत्वमनैकान्तिकम्। न हि तेजोद्रवत्वदशायां तद्द्रव-मेवास्ते, पीतं द्रुतमिति प्रतीतेरिति चेत्—न। तत्र द्रवत्वाभावात्।

पार्थिवद्रवत्वस्यात्यन्ताग्निसंयोगेनोच्छित्त्यापत्त्या बाधकेन द्रुत-प्रतीतेर्भ्रमत्वात्। जलमध्यस्थितमसीक्षोदादेरिव तदवयवानां द्रवद्रव्य-

---

प्रकाशः

त्यादिविशेषणं पक्षे देयम्। अतो न क्वथ्यमानजलस्थघृते बाधः। न चासिद्धि-रित्यत्र विशेषणविशेष्ययोरिति शेषः। विशेष्यासिद्धिं निराकृत्य विशेषणासिद्धिं निराकरोति—न चेति।

घटादाविति। पृथिवीत्वप्रयुक्तधर्मस्यास्य गन्धवत् सर्वत्रापत्तेरित्यर्थः। घृतं विहायेति। घृतलाक्षादिसाधारणावान्तरजातिर्नास्त्येवेत्युक्तमिति भावः। यद्यपि पृथिवीनियतत्वं पृथिवीव्याप्यत्वमित्युक्ते नोक्तदोषः, तथापि विपक्षे बाधक-तर्काभावान्न [2]व्याप्तिरित्यत्र तात्पर्यम्।

नापि पार्थिवमित्यत्र व्यभिचारं शङ्कते—अथेति। न चासतीत्यादिविशे-षणस्य दत्तत्वान्न व्यभिचार इति वाच्यम्। पार्थिवत्ववादिमते तस्याविरोधित्वादि-त्याशयादित्येके। जलद्रवत्वेनैव विरोधित्वात्तदभावोऽस्त्येवेत्यन्ये।

---

1. ख. जातिनियतं तत् 2. क. अव्याप्तिः

संबन्धेन प्रशिथिलसंयोगाश्रयत्वात्, न तु तेषां द्रवत्वम्। न चैवं घृतादावपि तथा, द्रवत्वे तत्र बाधकाभावात्।

अन्ये तु—उपष्टम्भके द्रवत्वमुत्पद्यत एव, अनुभवस्य दुरपह्नवत्वात्। अत्यन्ताग्निसंयोगेन तदुच्छेदस्तु न भवति, द्रवद्रव्यस्य तेजसः प्रतिबन्धकत्वात्। न चैवं द्रुततेजसि मानाभावः। तथा हि पीतं द्रवत्वाधिकरणं द्रवत्वोच्छेदप्रतिबन्धकद्रवद्रव्यसंयुक्तम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारपार्थिवत्वात् क्वथ्यमानजलमध्यस्थितघृतवत्। न चाप्रयोजकत्वम्, अत्यन्ताग्निसंयोगेन विरोधिद्रवद्रव्यसंबन्धासंबन्धे पार्थिवद्रवत्वोच्छेदानुच्छेददर्शनात्।

अथ वा रूपवत्त्वे जलान्यत्वे च सति तैजसत्वपार्थिवत्वसंदेहे विवादाध्यासितं द्रवत्वाधिकरणं तैजसम्, असति द्रवद्रव्यसंयोगे अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधारत्वात् यन्नैवं तन्नैवं यथा जलं घृतं वेति व्यतिरेकी। न चासाधारण्यम्, अगृह्यमाणविशेषदशायां तस्य दोषत्वात्।

---

प्रकाशः

पार्थिवद्रवत्वस्येति। न च तेजोद्रवत्वमेव तत्र प्रतिबन्धकम्, जलद्रवत्वेनैव [1]विरोधितया तदभावे सत्येवोच्छेदापत्तेरिति भावः।

नन्वपार्थिवद्रवत्वेनैव सामान्यतो विरोधित्वं न तु तद्विशेषजलद्रवत्वेन। तथा च [2]द्रुतप्रतीतेर्भ्रमत्वे मानाभाव इत्यनुशयेनाह—अन्ये त्विति। पीतमिति। एतच्च तेजोभागे असिद्धिवारणाय। [3]अद्रुतपीतवारणाय द्रवत्वाधिकरणमिति। स्वावयवावयवसंयोगेनार्थान्तरवारणाय प्रतिबन्धकान्तम्। [4]अद्रुततेजसः सिद्ध्यार्थान्तरवारणाय—द्रवद्रव्येति। अन्ये त्वित्रैव प्रकारान्तरमाह—अथवेति। विवादाध्यासितमित्युपष्टम्भकभागे बाधवारणाय। असतीति। विरोधित्वं द्रवद्रव्ये विशेषणम्। तेनोपष्टम्भकीभूतद्रवद्रव्यसंबन्धितया नासिद्धिः, पार्थिवद्रवत्वस्य विरो-

---

1. ख. विरोधिविषयकतया
2. ख. तत्प्रतीतेः
3. ख. अद्रुतपीते त द्वारणाय
4. क. अद्भुततेजसः

तथा हि—यथा साध्याभाववद्व्यावृत्तत्वेन पक्षे तस्य साध्यसाधकत्वं तथा साध्यवद्व्यावृत्तत्वेन साध्याभावसाधकतापि स्यादिति सत्प्रतिपक्षोत्थापकतया तस्य दोषत्वम् । न च साध्याभावसाधकस्य पृथिवीत्वसिद्धिपर्यवसायिनस्तुल्यबलत्वम्, अनुकूलतर्काभावेन हीनबलत्वात् । यदीदं पार्थिवं स्यात् असति विरोधिद्रवद्रव्यसंबन्धे अत्यन्ताग्निसंयोगेनोच्छिद्यमानद्रवत्वाधिकरणं स्यात् तैलवदिति प्रतिकूलतर्केण हीनबलत्वात् ।

यदीदं जलान्यरूपवत्त्वे सति तैजसं न स्यात् पार्थिवं स्यात्, यदि च पार्थिवं स्यात् अत्यन्ताग्निसंयोगेनोच्छिद्यमानद्रवत्वाधिकरणं स्यादित्यनुकूलतर्कसद्भावेन प्रतिकूलतर्काभावेन च तैजसत्वसाधकस्याधिकबलत्वात् ।

यदि चासाधारणस्य साध्यतदभाववद्व्यावृत्तत्वेन तदुभयसंशयजनकतया दोषत्वं तथापि विशेषादर्शनसहितस्य संशायकत्वम्, प्रकृते चानुकूलतर्कविशेषदर्शनसहकृतस्य व्यतिरेकिभावेन [1]साधकत्वम् । तस्माद्यदा साध्यतदभावकोटौ न विशेषदर्शनं तदा असाधारण्यस्य दोषत्वम् । न चैवं शब्दोऽनित्यः [2]शब्दत्वादित्यादिकमपि हेतुः स्यात्, विशेषदर्शनदशायामिष्टत्वात् ।

---

प्रकाशः

घित्वाभावात् । अत एव स्वावयवसंबन्धितयापि [3]नासिद्धिः, तद्भिन्नस्यैव विरोधित्वात् । विशिष्टाभावाच्च न वैयर्थ्यम् । जलपरमाणौ व्यभिचारवारणाय [4]द्रवत्वविशेषणमनित्यत्वं बोध्यम् । नचासाधारण्यमिति । संशयः सत्प्रतिपक्षो वा असाधारणदूषकतायां द्वारम् । स चेह विशेषदर्शनादसंभवीत्यसाधारण्यं न दोषायेत्यर्थः । (यदिद) [यदीद] मिति ।

ननु घटादौ व्यभिचारः । (नन्वद्रुतं) [नन्वद्रुतत्वं] पार्थिव(त्व)विशेषणम्, तथापि दृष्टान्तासिद्धेः । न हि तैले द्रवत्वम् अपि तु तदुपष्टम्भकजले । तस्य

---

1. क. साध्यसाधकत्वम्
2. क. कृतत्वादित्यादिकमपि
3. क. न सिद्धिः
4. ख. द्रवत्वविशेषणं, तथापि दृष्टान्तासिद्धिः अनित्यत्वं

अन्ये तु—तेजस्त्वं नाद्रव[नाद्रुत]रूपवन्मात्रवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववत् । यद्वा तेजस्त्वं द्रुतवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववत् ।

न च रसवद्वृत्तित्वमुपाधिः, रसवत्त्वं द्रवत्वसमानाधिकरणात्यन्ताभावप्रतियोगि अद्रुतवृत्तिद्रव्यत्वव्याप्यधर्मत्वात् [1]पटत्ववदिति द्रुततेजस्सिद्धौ

---

**प्रकाशः**

पार्थिवतया सांसिद्धिकद्रवत्वाभावात् । [2]निमित्ताद्यन्वयाननुविधायितया नैमित्तिके तदभावादिति चेत्—न । तैलस्य व्यतिरेकदृष्टान्तत्वात । यद्वा द्रुतत्वं न विशेषणम् । उच्छिद्यमानद्रवत्वाधिकरणत्वेनानुच्छिद्यमानद्रवत्वानधिकरणत्वं विवक्षितमिति [3]नोक्तदोषः । यदि घृतवदिति पाठः तदा सुगम एव ।

ननु द्रुततेजस्त्वमेव साध्यम् । तथा च सपक्षाभावान्नासाधारण्यमपि । किं तदपनयनार्थं तदनुकूलतर्कानुसरणप्रयासेनेत्यनुशयादाह—अन्ये त्विति । अत्रेदमनभिमतिबीजम् । उक्ततर्कानुसारेण विशिष्टसाध्यकरण एव प्रयासगौरवम् । तदननुसरणे च [4]तेजोमात्रावृत्तित्वोपाध्युत्थापितसत्प्रतिपक्षतादवस्थ्यमिति । नाद्रुतेति [5]रूपवद्वृत्तीत्यर्थः । अन्यथा मनस्त्वादौ व्यभिचाराभावे हेतौ [6]रूपवद्वृत्तिपदवैयर्थ्यापत्तेः । रूपवदंशस्य साध्ये गुरुतया च यद्वेत्यादिकल्पान्तरमित्याहुः ।

वस्तुतो रूपवद्वृत्तिपदं पक्षविशेषणम् । रूपवन्मात्रवृत्तीति तदर्थः । तेन [7]नीरूपवृत्तितया नार्थान्तरम् । तत्पदं हेतौ कल्पितम् । अत एव लीलावत्यां तथैव पाठ इत्याहुः । घटत्वादौ व्यभिचारवारणाय साक्षात्पदम् । घटसौरालोकान्यान्यत्वे व्यभिचारादाह—जातीति । उभयत्रोपाधिमाशङ्क्य निराकरोति—न चेति । न च प्रथमानुमाने मनस्त्वादौ साध्याव्याप्तिः । रूपवद्वृत्तित्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् । यद्यपि विरुद्धरसारब्धे नीरसे द्रवत्ववति साध्याव्याप्तिः,

---

1. ख. घटत्ववदिति ।
2. ख. निमित्ताद्यनुविधायि-
3. क. तन्नोक्त-
4. ख. तेजोमात्रवृत्तित्व
5. ख. रूपवद्द्रुतवृत्तीत्यर्थः
6. क. रूपवत्पद-
7. ख. निरूपितवृत्तितया

साध्याव्यापकत्वादिति सामान्यतोदृष्टेन तेजसि द्रवत्वं प्रसाध्य, विवादाध्यासितं द्रुतं तैजसं अत्यन्ताग्निसंयोगेनानुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वात् न यदेवं न तदेवं यथा जलमिति वदन्ति ।

---

प्रकाशः

चित्ररसे मानाभावात् । तथापि तदपि प्रमाणसाध्यमिति [1]साध्याव्यापकत्वाय [2]सामान्यत एव द्रुतनीरसं साधयति—रसवत्त्वमिति । अत एव तन्नीरस(प्रत्य)-[वृत्त्य]भावप्रतियोगित्वेनार्थान्तरान्न द्रुततेजस्सिद्धिरित्यपास्तम् । द्रुतनीरससाधनमात्रस्यैवोद्देश्यत्वात् । न चैवं द्रुततेजस्सिद्धावित्यनेन विरोधः । तेजःपदस्य नीरसपरत्वात् । तावन्मात्रस्यैव प्रकृतोपयोगात् एतदनुमानासाध्यत्वाच्च ।

अद्रुतवृत्तीति । एतच्च द्रुतत्वे व्यभिचारवारणार्थम् । द्रव्यत्वपदं रूपवत्त्वपरम् । अतो न स्पर्शवत्त्वादौ व्यभिचारः । न चैवमपि रूपवत्त्वे व्यभिचारः । [3]व्याप्यपदस्यान्यूनदेशपरत्वात् व्याप्यत्वस्य [4]न्यूनदेशभेदगर्भत्वाद्वा ।

नन्वेवमपि [5]द्रुतघटान्यान्यत्वे व्यभिचारः । न चाभावघटितत्वमपि विशेषणम् । द्रुतघटाविति समूहालम्बनविशेष्यत्वे तथापि व्यभिचारात् ।

अथ धर्मपदं समवेतपरम् । न चैवमसिद्धिः, रसवत्त्वपदेनापि रसत्वावच्छिन्नस्यैवोक्तत्वादिति चेत्—न । [6]रसत्वावच्छिन्नस्य नानात्वेन परस्परसमानाधिकरणात्यन्ताभावप्रतियोगित्वेनार्थान्तरत्वात् द्रुतनीरसासिद्धिप्रसङ्गात् ।

अथेतरनिरूप्याघटितत्वं विशेषणमित्युभयत्र व्यभिचारवारणमिति चेत्—रसवत्त्वस्य तादृशसमवायघटितत्वेनासिद्ध्यापत्तेः । अथ द्रव्यत्वव्याप्यपदं गुरुत्वव्याप्यपरम्, [7]अतो नोक्तदोष इति चेत्—न । अद्रुतपदवैयर्थ्यापत्तेः । न च समस्तस्यैव तत्र तात्पर्यम् । द्रुतत्वे साध्याभावनिश्चये हेतुसंदेहे च

---

1. ख. साध्यव्यापकत्वात्
2. ख. 'सामान्यत एव.......मात्रस्यैवोद्देश्यत्वात्' इति ग्रन्थो नास्ति ।
3. क. व्याप्यपदस्य न्यून-
4. क. 'न्यूनदेश' नास्ति ।
5. ख. दूरघटा-
6. क. रसवत्त्वावच्छिन्नस्य
7. क. तेनोक्त-

अथ (प्रथमानुमाने) [आद्यानुमाने] तेजोमात्रावृत्तित्वमुपाधिः। न च पक्षेतरत्वम्। प्रदीपत्वादेरपि व्यावर्त्यत्वादिति चेत्—न। बलवद्विपक्षबाधकेन विवादविषये द्रुततैजसत्वसिद्धावुपाधेः साध्याव्यापकत्वात्। एवं च विवादाध्यासिते पार्थिवत्वतैजसत्वसाधकानि यद्यपि बहून्यनुमानानि सन्ति, तथापि विपक्षबाधकतर्कात् तैजसत्वसाधकस्य बलवत्त्वमिति ध्येयम्।

अथ द्रुतद्रुततरादेः क्रमशः प्रतीतेः प्रबलानलसंयोगेन सुवर्णनाशात् तद्द्रवत्वं नश्यतीत्यसिद्धो हेतुः। न च द्रवत्वप्रागभावासमानाधिकरणद्रवध्वंसरूप उच्छेदो न सुवर्णे, द्रवत्वनाशेऽप्यग्रिमद्रवत्वेनोत्पादात् घृते च तथेति वाच्यम्। सुवर्णे द्रवत्वनाशे सति विनष्टाश्रये द्रवत्वान्तरस्यानुत्पादेन द्रवत्वप्रागभावासमानाधिकरणद्रवत्वध्वंसस्य सत्त्वादिति चेत्—न।

सुवर्णद्रवत्वं हि आश्रयनाशाद्विनश्यति न त्वग्निसंयोगात्।

---

प्रकाशः

संदिग्धानैकान्तिकत्वापत्तेः। तर्हि तद्वारणार्थं तत्पदमिति चेत्—संदिग्धव्यर्थविशेषणतापत्तेः।

मैवम्। रसत्वं (द्रुत)[द्रवत्व]समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं [1]अद्रुतवृत्तिवृत्तिरूपव्याप्यमात्रवृत्तिजातित्वादित्यत्र तात्पर्यात्। समवायभिन्नेतरनिरूप्याघटितत्वं यथाश्रुत एव विशेषणम्। अतो नोक्तदोषतेत्यप्याहुः।

[2]सामान्यतोदृष्टेन तेजस्त्वपक्षकेणोक्तोपाधिनिरासे तस्य निष्कलङ्कत्वादिति भावः। अत्यन्तेति। असति विरोधिद्रवद्द्रव्यसंबन्ध इत्यपि [3]विशेषणं, अतो न जलमध्यस्थघृते व्यभिचारः। अनित्यत्वं च द्रवत्वविशेषणं बोध्यम्। आद्येति। व्यतिरेक्यपेक्षया आद्यतेजस्त्वपक्षकानुमानद्वय इत्यर्थः। मेयत्वादौ साध्याव्याप्तिवारणाय मात्रपदम्। बलवद्विपक्षेति। यद्यपि [4]द्रुततेजस्त्वसिद्धौ साध्याव्यापकत्वग्रहः, तद्ग्रहे च तत्सिद्धिरित्यन्योन्याश्रयः; तथापि तर्केण हेतोः साध्याव्याप्यत्वे निश्चिते तदव्यापकत्वेनोपाधेः [5]साध्याव्यापकत्वादिति भावः।

---

1. क. द्रुतवृत्तिरूप-
2. क. सामान्यदृष्टेन
3. ख. विशेषणं बोध्यम्।
4. ख. द्रुततेजस्सिद्धौ
5. ख. साध्यव्यापकत्वा-

यदि चाग्निसंयोगाद्धि नश्येत् तदा घृतवन्न द्रवत्वान्तरमुत्पद्येत, द्रवत्वोच्छेदकाग्निसंयोगस्य द्रवत्वान्तरप्रतिबन्धकत्वात्। तथा च अग्नि(संयोगित्वे) [संयोगे] सति तद्धेतुकनाशाप्रतियोगिद्रवत्वाधिकरणत्वादिति हेत्वर्थः। अथवा घृते द्रवत्वोच्छेदसमये समानाधिकरणद्रवत्वसामग्रीसमवधानं नास्ति, सुवर्णे त्वस्ति।

---

प्रकाशः

असिद्धः—स्वरूपासिद्धः। घृते [1]च तथेति। तादृशोच्छेदाभावश्च हेतौ विवक्षित इति भावः। एवमपि यद्द्रवत्वनाशे सति यत्सुवर्णं नष्टं तत्रासिद्धिरेवेत्याह—सुवर्णद्रवत्वं हीति। तथा चाग्निसंयोगजन्यपूर्वपूर्वसुवर्णनाशात् तत्तद्द्रवत्वं नश्यतीति [2]उत्तरोत्तरोत्पन्नसुवर्णे चोत्तरोत्तरोत्कृष्टद्रवत्वोत्पाद इति नानासुवर्णविषया द्रुतद्रुततरत्वादिप्रतीतिर्न त्वेकसुवर्णविषयेत्यर्थः। द्रवत्वोच्छेदकेति। अत एव घृते भस्मीभाव इति भावः। अग्निसंयोग इति। अत्राश्रयनाशाद्यत्र घृते द्रवत्वनाशस्तत्र व्यभिचारवारणाय सत्यन्तम्। सति चाग्निसंयोगे [3]तद्धेतुकनाशप्रतियोगित्वं तत्र संभवति [4]द्वयोरेव धृतसामर्थ्यादिति भावः। नैमित्तिक(द्रव)त्वं द्रवत्वे विशेषणम्, अतो न जलपरमाणौ व्यभिचारः। असति द्रवद्रव्यसंबन्ध इत्यपि विशेषणम्, अतो न जलमध्यस्थघृते व्यभिचारः। अतो न द्रुतोपष्टम्भकेऽपि व्यभिचारः। जलावयविनि तु द्रवत्वमग्निसंयोगनाश्यमेवेति जलं व्यतिरेकदृष्टान्तीकृतमिति बोध्यम्।

ननु द्रवत्वनाशात् क्वचिद्द्रवत्वोत्पत्तिः क्वचिन्नेति वैलक्षण्यमाश्रयकृतमेवास्तु न तूच्छेदकृतम्। तथा च सुवर्णद्रवत्वमग्निसंयोगनाश्यमेव। द्रुततरादिप्रतीतिश्च एकसुवर्णविषयैव। [5]द्रवत्वोच्छेदकाग्निसंयोगस्य द्रवत्वान्तरोत्पत्तिप्रतिबन्धकत्वं घृतादावेव। तत्र तत्प्रतीतिः नैकघृतविषयैव। एवं च स्वरूपासिद्धो

---

1. ख. च न तथेति।
2. क. उत्तरोत्पन्न-
3. क. तद्धेतुनाश-
4. ख. द्वयोर्मांवघृतसामर्थ्यत्वादित्यर्थः।
5. ख. 'द्रवत्वोच्छेदक......सुवर्णे त्विति' इति ग्रन्थो नास्ति।

एवं च समानाधिकरणद्रवत्वसामग्रीसमवहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिद्रवत्वावान्तरसामान्यवद्द्रवत्वं हेत्वर्थः।

यद्वा घृतपरमाणौ अग्निसंयोगदशायां [1]द्रवत्वनाशे सति द्रवत्वान्तरं नोत्पद्यते तदारब्धभस्मनि द्रवत्वाभावात्। एवं सुवर्णपरमाणुद्रवत्व-

---

**प्रकाशः**

हेतुरित्याशयवानाह—अथ वेति। सुवर्णे त्विति। यद्यपि जलसंयोगादिना तदुच्छेदे तत्समवधानं नास्ति। तथाप्यग्निसंयोगजन्यद्रवत्वोच्छेदसमये तत्तत्समवधानमस्तीत्यर्थः। घृते तु नैवम्, भस्मप्राक्काले द्रवत्वसामग्र्यभावात्, [2]पूर्वं व्यधिकरणद्रवत्वसामग्रीसत्त्वेऽपि समानाधिकरणद्रवत्वसामग्र्यभावादिति भावः।

एवं चेति। न च नञ्द्वयं व्यर्थम्, उक्तरीत्या घृते समानाधिकरणद्रवत्वसामग्रीविरहेण व्यभिचाराभावादिति वाच्यम्। [3]अग्निसंयोगप्रयोज्यनैमित्तिकद्रवत्वमात्रनिष्ठजातिविशेषमादाय घृते व्यभिचारसंभवात्। न च द्रवत्वावान्तरपदं व्यर्थम्, तादृशध्वंसप्रतियोग्यवृत्तिजातिमद्द्रवत्वस्यैव हेतुत्वादिति वाच्यम्। द्रवत्वपद[4]तत्पदयोरन्यतरान्तर्भावेण हेतुद्वये तात्पर्यात्। यदि द्रवत्वावान्तरसामान्यवत्त्वादिति पाठस्तदा द्रवत्वावान्तरं सामान्यं यस्य तत् द्रवत्वावान्तरसामान्यं तद्वत्त्वमित्यर्थः। अतो नासिद्धिः।

अन्ये तु—घृतेऽपि द्रुतद्रुततरादिप्रतीतिरेकघृतविषयैव। तथा च तत्रापि समानाधिकरणद्रवत्वसामग्रीसत्त्वेन घृतादि[5]द्रवत्वमात्रनिष्ठजातिविशेषमादायैव तत्र व्यभिचारान्नव्यर्थगर्भत्वम्। न चैवं तादृशसमवधानं नास्तीत्यनेन विरोधः। समवधाननियमोऽस्तीत्यस्य तदर्थत्वात्। भस्मप्राक्काले व्यभिचारादित्याहुः।

तच्चिन्त्यम्। घृतादौ द्रवत्वोच्छेदकाग्निसंयोगस्य द्रवत्वान्तरप्रतिबन्धकत्वात्। अत एव तत्समवधानं नास्तीत्येव यथाश्रुतो ग्रन्थः। किं चैवं मध्यद्रवत्वमात्र-

---

1. ख. द्रवत्वनाशात्
2. क. तत्पूर्वं
3. ख. 'अग्निसंयोग......हेतुत्वादिति वाच्यम्' इति ग्रन्थस्त्रुटितः।
4. ख. ०तर्कपदयोः
5. ख. ०द्रवमात्र-

मग्निसंयोगाच्च यदि विनश्येत् तदा तदारब्धसुवर्णमद्रवं स्यात्। तथा सुवर्णारम्भकाः परमाणवो न पार्थिवाः अत्यन्ताग्निसंयोगेनानुच्छिद्यमानद्रवत्वाधिकरणत्वात् जलपरमाणुवत्। तैजसा वा तत एव [1]यन्नैवं तन्नैवं यथा घृतपरमाणुरिति व्यतिरेकी [वा]।

एवमपार्थिवारब्धं तैजसारब्धं वा सुवर्णमपार्थिवं तैजसं वा अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धत्वादित्यन्वयव्यतिरेकी चेति।

---

प्रकाशः

घृत्तितादृशजातिसंदेहेन घृते हेतुसंदेहेन संदिग्धानैकान्तिकतापत्तेः। तथा च तत्र समानाधिकरणद्रवत्वान्तरानभ्युपगमपक्ष एवायं हेतुरिति। न चैवं विवक्षितहेतोर्जलस्थितघृतादावभावात् असतीत्यादिप्रतिक्षेपो विरुध्येतेति वाच्यम्। अग्निसंयोगे सतीत्यादिविवक्षायामेव तदुपादानात् उपष्टम्भकद्रवत्वपक्षे तत्र व्यभिचारवारणाय तत्रापि तदुपादानाद्वेत्याहुः।

चरमद्रवत्वं नाग्निसंयोगनाश्यम्, किं तु जलसंयोगनाश्यम्। सत्याश्रये द्रवत्वनाशकाग्निसंयोगस्य द्रवत्वोत्पादकत्वनियमादिति तमादाय नासिद्धिः। न चैवं विनश्यदवस्थाश्रयेऽग्निसंयोगाद्द्रवत्वोच्छेदेऽसिद्धिरेवेति[2] वाच्यम्। अविनश्यदवस्थाश्रयकत्वस्य ध्वंसविशेषणत्वात् अखण्डाभावे च वैयर्थ्याभावादिति।

परमाणुपक्षतायामुक्तहेतावसिद्ध्यभावात् स [3]एव हेतुरित्याशयवानाह—यद्वेति। परमाणुत्वेन हेतुर्विशेष्यः। तेन नोपष्टम्भके व्यभिचारः। अत्र द्रवत्वानभ्युपगमाद्वा। तत एवेति। न च जलपरमाणौ व्यभिचारः। जलान्यत्वेन हेतुविशेषणात्। न चात्रासाधारण्यम्, विशेषदर्शने तस्यादोषत्वादिति भावः। व्यतिरेकी वेति। [4]अत्र व्यवस्थितो विकल्पः। प्रथमे जलदृष्टान्तेनान्वयी द्वितीये व्यतिरेकीत्यर्थः। हेतौ च [5]द्रव्यत्वमपि विशेषणम्, अतो न तेजस्त्वसाध्ये व्यभिचारः। पृथिवी उद्भूतेति। प्रत्यक्षगुणेति शेषः। अन्यथा घ्राणे व्यभि-

---

1. ख. न यदेवं न तदेवं
2. ख. च्छेदसि द्धरेवेति
3. क. 'एव' नास्ति।
4. ख. 'अत्र व्यवस्थितो विकल्पः' इति नास्ति।
5. ख. द्रवत्वमपि

एकदेशी तु द्रवत्वाधिकरणं न तेजः पीतवत् । न चासिद्धिः, पीतं द्रुतमिति [1]प्रतीतेः । पीतत्वे पार्थिवत्वापत्त्या बाधकेन पीतप्रतीतिभ्रम इति चेत्—न । शुक्लत्वेऽप्यपार्थिवत्ववत् पीतत्वेऽप्यपार्थिवत्वे बाधकाभावात् । यथा नैमित्तिकद्रवत्वं पृथिवीत्वे न तन्त्रमतिप्रसङ्गात् । तथा पीतत्वेऽपि गन्धनियतत्वमपि नैमित्तिकद्रवत्ववदेव । पृथिवीजलान्यत्वे सति रूपित्वेन तेज इति चेत्—न । अप्रयोजकत्वात् । अन्यथा जलतेजोन्यत्वे सति स्पर्शवत्त्वेन वायोरपि पृथिवीत्वापत्तेः । अथ रूपरसगन्धानामभावात् न तथात्वं, तेषामनुद्भवे च पृथिवी उद्भूतरूपरसगन्धाद्यन्यतमवतीत्यादि-बहुविधव्याप्तिविरोध इति चेत्—न । तेजोऽद्रवमेव प्रत्यक्षं, तेजः प्रत्यक्षरूपस्पर्शाद्यन्यतरवदेव, स्वपरप्रकाशकमेवेत्यादिव्याप्तिविरोधस्य तेजस्यपि सत्त्वात् । द्रवत्वाधिकरणं च न पृथिवीति त्वयैव साधितम्, अतो नैमित्तिकद्रवत्वाधिकरणं पीतं सुवर्णं द्रव्यान्तरमेवेत्याह ।

इति सुवर्णतैजसत्ववादः

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे प्रत्यक्षकारणवादः

—: * :—

---

प्रकाशः

चारात् । एकदेशित्वे बीजं धर्मिकल्पनात इत्यादिकमेव । न चैवमिच्छादिकमपि नात्मादिकं साधयेदिति वाच्यम् । इच्छादेः क्लृप्तद्रव्यवृत्तित्वस्य प्रमाणबाधितत्वात् । प्रकृतद्रवत्वस्य क्लृप्ततेजोवृत्तित्वेन तदभावादित्येके । 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्यागमस्तद्बीजमित्यन्ये ।

इति सुवर्णतेजस्त्ववादः

—: * :—

---

1. ख. प्रत्ययात्

# अथ मनोऽणुत्ववादः

—: * :—

ननु इन्द्रियजन्यत्वं सुखादिप्रत्यक्षाव्यापकं प्रत्यक्षलक्षणमिति चेत् —न । ज्ञातकरणाजन्यः सुखाद्यनुभवः इन्द्रियजन्यः जन्यप्रत्यक्षत्वात् रूपप्रत्यक्षवत् जन्यसाक्षात्कारस्येन्द्रियजन्यत्वादिति तत्रापि तल्लक्षण-सत्त्वात् । स्पर्शाद्यविषयत्वेन त्वगादिना नार्थान्तरम् । गन्धरूपरसस्पर्शेष्वेकैकमात्रसाक्षात्काराजनकत्वेन पृथिव्यादिभेदसिद्धौ निःस्पर्शं लाघवान्निरवयवं च मनः ।

तच्च विभु ज्ञानासमवायिकारणसंयोगाधारत्वात् नित्येन्द्रियत्वात् नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वात् विशेषगुणशून्यद्रव्यत्वात् आत्मादिवत् । न च महत्त्वमुपाधिः, साधनव्यापकत्वादिति ।

---

**प्रकाशः**

उपोद्घातेनाह—नन्विति । ज्ञातेति । एतच्च शब्दादिकरणके सुखाद्यनुभवे बाधासिद्ध्योर्वारणाय । जन्यत्वमपि पक्षविशेषणम्, अतो नेश्वर[1]प्रत्यक्षे बाधः । नञ्व्यत्यासेनाज्ञातकरणजन्य इत्यर्थ इत्यन्ये । रूपादिप्रत्यक्षांशे सिद्धसाधनादाह—सुखादीति । सुखादिस्मरणे बाधासिद्धी इत्यनुभवपदम् । इन्द्रियजन्यः । विषयप्रत्यासन्नत्वक्संयोगिकरणजन्य इत्यर्थः । अन्यथा इन्द्रियत्वस्य मनोगर्भतया मनोसिद्धिदशायां साध्याप्रसिद्धेरिति । न चैवमिन्द्रियजन्यत्वं लक्षणं तत्रासिद्धमिति वाच्यम् । मनस्सिद्ध्यनन्तरं तद्ग्रहसंभवात् । स्पर्शादीति । स्वव्यवस्थापकगुणपुरस्कारेणैव तत्र प्रवृत्तेरिति भावः । त्वचः सर्वज्ञानजनकत्वासंभव इति बोध्यम् ।

ननु मनोघ्राणादिभिन्नत्वेऽपि पृथिव्यादिष्वेकमेवास्त्वित्यत आह—[2]गन्धेति । भट्टभास्करेण निःस्पर्शस्यापि मनसः सावयवत्वोपगमेन युक्त्यन्तरमाह—लाघवादिति । अवयवकल्पने गौरवमित्यर्थः । एवं सिद्धे मनसि प्रसङ्गात्

---

1. ख. प्रत्यक्षज्ञाने भागबाधः
2. ख. ग्रन्थेति ।

ननु सुखादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वावान्तर-जातियोगि नित्यवृत्त्यनित्यविशेषगुणत्वात् शब्दवत् पाकजरूपवच्चेति चेत्—न।

अनात्मवृत्तित्वस्य शब्दभिन्नविशेषगुणग्राहकेन्द्रियाजन्यत्वस्य शब्दस्य द्रव्यत्वेन मूर्तवृत्तिगुणत्वस्य चोपाधित्वात् अप्रयोजकत्वाच्च। कारणे मूर्तत्वस्य गुरुत्वात्। अस्तु वा शरीरात्मसंयोगजन्यत्वे नार्थान्तरम्।

---

प्रकाशः

भट्टमतमाह—तच्चेति। [1]नित्यत्व इति। अन्त्यावयविनि व्यभिचारादाह—सत्यन्तम्। अनारम्भक(द्रवत्व)[द्रव्यत्व]मसिद्धमिति प्रथमद्रव्यपदम्। जलपरमाणु-रूपादौ व्यभिचारादाह—चरमद्रव्यपदम्। विशेषेति। विशेषपदमप्रसि-द्धिवारणाय। [2]शून्यत्वम् अत्यन्ताभाववत्त्वम्। अतो न घटादावाद्यक्षणे व्यभिचारः। आत्मादिवदिति। प्रथमे आत्मा, द्वितीये श्रोत्रम्, तृतीयचतुर्थयोः काल एव दृष्टान्त इत्यर्थः। स्वमतावष्टम्भेनाह—साधनेति। अन्यथा पक्ष एव साधनाव्यापकत्वात्।

नन्विति। विभुमनस्संयोगेन सिद्धसाधनादाह—मूर्तेति। चन्दन-संयोगेन सिद्धसाधनवारणाय असमवायीति। अत एव शरीरप्राणसंयोगेन नार्था-न्तरम्। तदन्यत्वमपि वा मूर्तविशेषणम्। मूर्तसंयोगासमवायिकारणकमिति कृते शब्दजशब्दे व्यभिचार इति जातिगर्भत्वम्। गुणपदं स्पष्टार्थम्। गुणत्वावान्तरपदं तादृशशब्दवृत्तिसत्तायोगित्वेनार्थान्तरवारणाय। शब्दसुखान्यान्यत्वादिकमादाया-र्थान्तरवारणाय जातिपदम्। जलावयविस्नेहे व्यभिचारादाह—नित्यवृत्तीति। परमाणुस्नेहे व्यभिचारादाह—अनित्येति। आत्मवृत्तिद्वित्वे व्यभिचारादाह—विशेषेति। भट्टमते शब्दस्य द्रव्यत्वादुभयसिद्धदृष्टान्तमाह—पाकजवच्चेति। अनात्मेति। साधनावच्छिन्नसाध्यव्यापकत्वमुपाधीनाम्। अन्यथान्त्यस्य प्रथमस्य च प्रचयजन्यपरिमाणवृत्तिजातियोगिन्यात्मपरिमाणे द्वितीयस्य चक्षुरादिसंयोगे घ्राण-

---

1. ख. नित्यत्वमिति।
2. क. शून्यवत्त्वम्

अथ असमवाय्यधीनो विभुकार्याणां प्रादेशिकत्वनियम इति विभु-मनोयोगादात्ममात्रे सुखादेरुत्पत्तौ नियतदेशता न स्यात्, अतः अणु मन इति।

मैवम्। किमसमवायिकारणं स्वावच्छिन्ने विभुकार्यं जनयतीति नियमः, स्वावच्छिन्ने जनयत्येवेति वा, स्वावच्छिन्न एव जनयतीति वा। आद्ये सुखादेरधिकदेशत्वे आपादकाभावः। द्वितीयेऽणुमनस्संयोगेऽपि स्वावच्छिन्नेऽधिकदेशे च जनयेत् नियामकाभावात्। अन्त्ये तत्रापि सुखादेरणुमात्रदेशतापत्तिः। मनोवैभवेऽप्यविरोधश्च।

अथ निमित्तचन्दनाद्यनुरोधेन सुखादौ न्यूनाधिकदेशता निमित्तवायु-संयोगादिव शब्दे न तु असमवाय्यनुरोधात्। तथा च सुखादिकं तदव-च्छिन्न एवोत्पद्यत इति चेत्—हन्त! तर्हि वैभवेऽपि तथास्तु। न च विभुकार्यासमवायी स्वावच्छिन्ने कार्यं जनयत्येव भेर्याकाशसंयोग इव

---

प्रकाशः

वृत्तिगन्धादौ च साध्याव्यापकत्वादिति बोध्यम्। शब्दे साध्याव्याप्तेराह—शब्दभिन्नेति। सत्ताग्राहकतया दोषतादवस्थ्यादाह – गुणेति।

ननु विशेषपदं व्यर्थम्। न च [1]महान् शब्द इति महत्त्वस्यापि श्रोत्र-ग्राह्यतया दोषतादवस्थ्यात् विशेषपदमिति वाच्यम्। अनुपनीतग्राहकस्यावश्यं वाच्यत्वात्। अन्यथोपनीतगन्धादेरपि श्रोत्रग्राह्यत्वसंभवाद्दोषतादवस्थ्यापत्तेरिति चेत्—न। विशेषपदस्यैवानुपनीतादिपरतया तदर्थलाभादित्येके। अखण्डाभावे वैयर्थ्याभावादित्यन्ये।

नन्वनुकूलतर्केण हेतोः साध्यव्याप्यत्वे तदव्यापकत्वेनोपाधेः साध्याव्यापक-तया नैषामुपाधित्वम्, अत आह—अप्रयोजकत्वाच्चेति। अस्तु वेति। तस्यै-वासमवायिकारणत्वमस्तु, कार्यैकार्थप्रत्यासत्तेरविशेषादित्यर्थः। वैभवानुमाने प्रति-कूलतर्कमाशङ्कते—अथेति। कार्यपदं विशेषगुणपरम्। अतो न कर्मजन्या-काशसंयोगे व्यभिचारः।

---

1. क. महच्छब्दः

शब्दमिति चन्दनाद्यवच्छिन्नेऽपि सुखादिकमुत्पद्येतेति वाच्यम्। तद्देशीयचन्दनसुखे हि तद्देशीयचन्दनसंबन्धसापेक्षोऽसमवायी हेतुरिति कथं तन्निरपेक्षस्तत्कुर्यात्। चन्दनं च स्वावच्छिन्नं सुखजनकं कथं स्वानवच्छिन्नेऽपि तदुत्पादयेत्, कथं वा तद्देशीयचन्दनसुखं तद्देशचन्दनसंबन्धजन्यं तेन विनैवोत्पद्येत।

अथ मनोवैभवे सुखाद्युत्पत्तौ नियत उपाधिर्वाच्यः। तेन नानानिमित्तसमवधानेऽपि तदवच्छेदेनैकदा सुखदुःखादिष्वेकमेवोत्पद्यते न नाना। एकावच्छेदेन एकदा एक एव विभुविशेषगुण उत्पद्यत इति नियमात्। निमित्तस्य त्ववच्छेदकत्वे नानासुखादिकमुत्पद्येत शब्दवदिति चेत्—न।

श्रोत्रे कर्णशष्कुल्यवच्छेदेन नानानिमित्तादनेकशब्दोत्पादात्। अन्यथा कोलाहलग्रहो न स्यात्। नानावच्छेदेनैकदा चन्दनदहनादिसंबन्धे सुखदुःखयोश्चैकदा अनुभवसिद्धत्वेनेष्टापादनात्। न च तद्यौगपद्यप्रत्ययो भ्रमः, बाधकाभावात्। न चान्यत्र क्रमादत्रापि क्रमानुमानम्, अन्यत्र क्रमस्य निमित्तक्रमाधीनत्वात्।

एवं च [1]विवादविषयसुखदुःखानि युगपदुत्पन्नासमवायिकारणकानि युगपदुत्पद्यमानत्वात् युगपदुत्पन्नघटादिवत्। अबाधितानुभवाच्च नासिद्धिः।

---

**प्रकाशः**

अत्यन्तायोगव्यवच्छेदादिभेदेन नियमं विकल्पयति—किमिति। तद्देशीयेति। तथा चोक्तनियमोऽप्रयोजक इति भावः। उपाधिः—अवच्छेदकः। तथा च गौरवमिति भावः। नानेति। तथा च न नियतोपाधिकल्पनं गौरवं स्यादिति भावः।

युगपदुत्पन्नेति। युगपद्विद्यमानेत्यर्थः। तथा च सुखाद्युत्पत्तियौगपद्यादपि मनसो वैभवमिति भावः। अबाधितेति। पादे मे सुखं शिरसि मे

---

1. ख. विवादाध्यासितानि सुख-

एतेन चरणदुःखं यदि शरीरावच्छिन्नासमवायिहेतुकं स्यात् शरीरव्यापकं स्यादिति निरस्तम्। निमित्तसमवधानस्य तन्त्रत्वेऽस्याप्रयोजकत्वात्। अन्यथा अणुत्वपक्षे शरीरव्यापकं सुखादि न स्यात्। आभिमानिकाभ्यासिकमानोरथिकसुखेषु ज्ञानेच्छाप्रयत्नद्वेषेषु च देशानियमः। शरीरावयवेषु यत्क्रियायामिच्छा तदवच्छेदेन प्रयत्न इति तत्रैव चेष्टा आवश्यकत्वात् अनियतदेशज्ञानेच्छादौ लघुत्वाच्च। अन्यथा अणुत्वपक्षे प्रयत्नस्याणुदेशत्वं शरीरमात्रदेशत्वं वा स्यात।

अन्ये तु सुखादौ तन्निमित्तावच्छेदेन आत्ममनस्संयोगोऽसमवायी तन्मात्रसुखाद्युपलम्भात्, न त्वात्ममनस्संयोगमात्रम् अतिप्रसङ्गादित्याहुः।

यावति यत्सुखादिप्रागभावस्तावत्येव तत्सुखादिकमुत्पद्यत इत्यपरे।

यत्तु तदितरहेतुसाकल्ये तद्व्यापकत्वेन प्रागभावस्य आवश्यकत्वमिति। तन्न। प्रागभावस्याहेतुत्वापत्तेः। तदितरहेतुसाकल्ये तदभावेन कार्याभावाभावात्।

एतेन व्यापकमनवच्छिन्नं नेन्द्रियमतिप्रसङ्गादित्याकाशे कर्णशष्कुलीवत् नियत उपाधिर्वाच्यः। स च न शरीरम्, तदवयवमात्रं वा नियत-

---

प्रकाशः

वेदना इत्यनुभवादित्यर्थः। एतेनेत्येतदेव विवृणोति—निमित्तेति। एतच्च वैषयिकाभिप्रायेण। आभिमानिकादौ तु शरीरव्यापकत्वमिष्टमेवेत्याह—आभिमानिकेति। [1]नियतदेशे चेष्टोत्पादकनियतदेशप्रयत्नोत्पत्तौ तु नियामकापेक्षेति तत्रेच्छाविशेष एव तथेत्याह—शरीरेति। आवश्यकत्वादिति। तादृशयत्नोत्पत्ताविच्छाविशेषस्य नियतान्वयित्वादित्यर्थः। अतिप्रसङ्गादात्ममनोयोगमात्रं तु न तद्धेतुरित्याह—अनियतेति।

क्वचित्तु आवश्यकत्वादित्यनन्तरं [2]अन्यथाणुपक्षे यत्नस्य अणुदेशत्वं शरीरमात्रदेशत्वं वा स्यात्। अन्ये तु सुखादौ निमित्तावच्छेदेन आत्ममनस्संयो-

---

1. क. नियतदेशचेष्टो-
2. क. अन्यथा तु पक्षे यत् तस्याणु-

स्तदवयवी वा, चेष्टाश्रयमात्रं वा। नानावयवावच्छेदेन अव्याप्यवृत्तिसुखाद्युपलब्धेः। एवं च सूक्ष्ममिन्द्रियमुपाधित्वेन कल्पनीयम्। तथा च तदेव मनः, किमुपधेयेन विभुना। तत्र च सर्व एव हेतवो धर्मिग्राहकमानबाधिता इति निरस्तम्।

इन्द्रियत्वेन तस्य शरीरमात्रस्योपाधित्वेऽपि निमित्तवशात् सुखादेर्नियतदेशतोपपत्तेः। न चैकदा अनेकविषयेन्द्रियसंबन्धे युगपज्ज्ञानानुत्पत्त्या इन्द्रियसहकारितया अनुमितं मनोऽणु, तदेव सुखग्राहकमिन्द्रियं लाघवादिति तद्वैभवहेतवो बाधिता इति वाच्यम्। बुभुत्सावशात् करणधर्मत्वाद्वा, अणुत्वपक्षे श्रोत्रे अनेकशब्दसमवायेऽपि बुभुत्सितमात्रशब्दग्रहवत् व्यासङ्गदशायां युगपज्ज्ञानानुत्पत्तेरुपपत्तेः अन्यत्र दीर्घशष्कुलीभक्षणादौ युगपज्ज्ञानोत्पत्तेरिष्टत्वादिति।

अत्रोच्यते। व्यासङ्गदशायामिन्द्रियाणां स्वस्वविषयसंबन्धेऽप्येकस्मात् ज्ञानं नान्यस्मादित्यनुभवसिद्धम्। अतो यस्यासंबन्धात् न युगपत् ज्ञानानि तदिन्द्रियसहकारि क्रमेण तदधिष्ठायकं मनः तदेव सुखादिग्राहकमिति तस्य धर्मिग्राहकमानबाधितं विभुत्वम्। तथा हि—चाक्षुषज्ज्ञानवतो

---

प्रकाशः

[1]गोऽसमवायी तन्मात्रे सुखाद्यनुपलम्भात् [2]न त्विति पर्यन्तं ग्रन्थलेखनम् अग्रे लघुत्वाचेत्यनन्तरं नशब्दलोपश्च दृश्यते तत्तु कल्पितं न सांप्रदायिकमित्याहुः।

सर्वत्र दोषमाह—नानेति। तथा चेति। आवश्यकत्वादिति भावः।

एतेनेत्येतदेव विवृणोति—(इन्द्रियत्व इति) [इन्द्रियत्वेनेति]। तथा हीति। इन्द्रियार्थसंनिकर्षाभावेनार्थान्तरवारणाय— [3]स्वस्वविषयसंब(न्धा) [द्धा] नीति। मैत्रस्यापि घ्राणादिकं स्वस्वविषयसाक्षात्कारजनकम्। तदापि तस्य पक्षान्तर्भावापत्तौ तत्र बाधो हेत्वसिद्धिश्च स्यात्। अत उक्तं चाक्षुषज्ज्ञानवत इति।

---

1. क. ०समविधायी
2. ख. नन्विति पर्यन्तग्रन्थसंनिकर्षाभावेनार्थान्तरलेखनमग्रे
3. ख. 'स्वस्वविषयसंबद्धानीति......मैत्रस्येति' इति ग्रन्थो नास्ति।

**मैत्रस्य स्वस्वविषयसंबद्धानि घ्राणरसनत्वक्श्रोत्राणि स्वस्वविषयसाक्षात्कार-हेतुसंयोगशून्यानि, तदानीं स्वविषयसाक्षात्काराजनकत्वात् इन्द्रियासंबद्ध-घटवत् ।**

---

**प्रकाशः**

कायव्यूहावस्थघ्राणादिसाधारणपक्षत्वे तत्रांशे बाधासिद्धी इत्यत आह— **मैत्रस्येति ।** कायव्यूहशून्यस्येत्यर्थः ।

[1]ननु साध्योऽत्र सामान्याभावो वा विशेषाभावो वा । नाद्यः, बाधात् । नान्त्यः, शरीरप्राणसंयोगशून्यत्वेनार्थान्तरादिति चेत्—न । तच्छून्यत्वेन [2]तदसमवहितत्वस्योक्तत्वात् । शरीरप्राणसंयोगसमवधानस्य च तदा सत्त्वात् । अन्यथा चाक्षुषज्ञानानुपपत्तेः । मैत्रीयत्वमपि साक्षात्कारविशेषणम् । अतः परकीयतद्विषयसाक्षात्कारहेतुसंयोगासमवहितत्वेन नार्थान्तरम् । न चैवमप्यागामितादृशविषयसंयोगाभावेनार्थान्तरम् । तज्जातीयसहकृतत्वस्यापि [3]विशेषणवात् । स्वपदद्वयं च [4]घ्राणादिमात्रपरमेव । न तु समभिव्याहृति[त]मात्रपरम् । तेन घटदृष्टान्तस्य निर्विषयत्वेऽपि स्वपदस्य घटपरत्वाभावात् न साध्यसाधनवैकल्यमित्येके ।

अन्ये तु—स्वविषयत्वं स्वजन्यसाक्षात्कारविषयत्वम् । तच्च घटे स्वस्मिन्नस्तीति न दृष्टान्तासिद्धिः । अयोग्ये च परमाण्वादौ स्वविषयाप्रसिद्ध्या हेत्वगमनान्न व्यभिचारः । द्रव्यपदमप्यधिकं हेतौ प्रवेश्यम् । अन्यथा [5]अयोग्यानुपलम्भा(द)भावात् अभावे साक्षात्काराजनके व्यभिचारः । न च विषयाभावादनुत्पन्नशब्दादिसाक्षात्काराजनके[6] श्रोत्रादौ व्यभिचारः । विद्यमानत्वेनापि स्वविषयविशेषणात् । न चान्धकारकाले स्वविषयसाक्षात्काराजनके[7] सुवर्णे व्यभिचारः

---

1. क. ननु भवतु साध्येऽत्र
2. क. तदसमवहितस्य
3. ख. विशेषणात्
4. ख. प्राणादिमात्र-
5. ख. अयोग्यानुपलम्भात् भावाभावे साक्षात्कारजनके
6. ख. ॰साक्षात्कारजनके
7. ख. ॰साक्षात्कारजनके

एकैकं वा पक्षः, अन्यथा हेतुसाकल्ये युगपज्ज्ञानोत्पत्तिप्रसङ्गः । न च वैभवेऽप्यदृष्टविलम्बाद्विलम्बः । तदितरहेतुसाकल्ये तस्यापि सत्त्वात् इन्द्रियान्तरविलोपप्रसङ्गाच्च । न च बुभुत्सावशात् क्रमः, दृश्यते हि नृत्यदर्शनवतो बुभुत्सातोऽभिमतविषयान्तरज्ञानमिति वाच्यम् । सा हि न स्वविषयज्ञाने हेतुः, [1]अबुभुत्सितेऽपि ज्ञानोदयात् । नाप्यन्यज्ञानप्रतिबन्धिका, घटबुभुत्सायामपि पटज्ञानोदयात् । बुभुत्सा च क्रियाहेतुमनोगोचरप्रयत्नद्वारा इन्द्रियान्तरादाकृष्याभिमतार्थग्राहिणीन्द्रियान्तरे मनो निवेशयन्ती बुभुत्सितग्रहे हेतुरन्यग्रहे प्रतिबन्धिका च, न तु साक्षात् ।

---

प्रकाशः

रूपाग्रहेण तदग्रहादिति वाच्यम् । रूपे [2]ह्यगृह्यमाण एव तद्ग्रहात् । [3]रूपग्रहसामग्री तद्धेतुर्न तु रूपग्रहः । तथा चोपष्टम्भकरूपग्राहकालोकासमवहितत्वेन साध्यसत्त्वात् ।

न च तदानीमित्यस्यासिद्धिवारकतया व्यर्थत्वम् । अप्रसिद्धिवारकत्वात् । न च [4]साक्षात्काराजनकत्वादित्येवास्तु, तच्च प्रसिद्धमेवेति वाच्यम् । तस्य परमाण्वादौ व्यभिचारित्वात् ।

दोषाद्यभावे सतीत्यपि विशेषणम् । अतो दूरत्वादभिभवाद्वा स्वविषय[5]साक्षात्काराजनके न व्यभिचारः । न चात्र कालिकव्याप्तौ साक्षात्कारक्षणे न व्यभिचारः । [6]अजनकत्वस्य फलानुपहितपरत्वात् अन्यथासिद्ध्यापत्तेः । न चैवमप्यप्रसिद्धिः घ्राणादिसंबन्धसमयस्य सामग्रीकालत्वेन तदानीं फलोपधानस्याप्रसिद्ध्या तदनुपहितत्वस्याप्यज्ञानादिति वाच्यम् । तदानीमित्यस्य तदव्यवहितोत्तरक्षणपरत्वादिति दिक् ।

---

1. ख. अबुभुत्सतोऽपि
2. ख: गृह्यमाणे
3. क. रूपसामग्री
4. ख. साक्षात्कारजनकमित्येवास्तु ।
5. क. ०साक्षात्कारजनकत्वेन
6. ख. 'अजनकत्वस्य....०क्षणपरत्वात्' इति ग्रन्थस्त्रुटितः ।

अत एव बुभुत्सासत्त्वेऽपि मनोगोचर[1]प्रणिधानाभावे सा न किंचित्करी।

ननु इन्द्रियमनस्संयोगविशेष एव विषयविशेषग्रहे हेतुः कल्प्यताम्। न चैवं सिद्धकारणभावस्य विशेषकल्पने हेत्वन्तरोच्छेदः, तस्याप्यन्वयव्यतिरेकित्वादिति चेत्—न। इन्द्रियमनस्संयोगे हि विशेषो न जातिरूपोऽनुगतहेत्वभावात् जातिसंकरप्रसङ्गाच्च। नापि सहकारिरूपः, तस्यैव हेतुतापत्तेः।

---

**प्रकाशः**

एकैकपक्षत्वेऽपीष्टसिद्धिरित्याह—**एकैकं चेति**। ननु साध्ये संयोगेति व्यर्थम्। तथा चादृष्टाद्यसमवहितत्वेनैवार्थान्तरमित्यत आह[2]—**न चेति**। ननु वन्ध्यासंप्रयोगवददृष्टविलम्बः स्यादित्यत आह—**इन्द्रियान्तरेति**। विभु सर्वविषय प्राप्तं सदेकमेवेन्द्रियमस्तु। युगपज्ज्ञानानुत्पत्तिरदृष्टविलम्बादेवेत्यपि सुवचम् स्यादित्यर्थः। तथा चान्यत्र यथा तथास्तु ज्ञानहेतुसाकल्ये नादृष्टविलम्बाद्विलम्ब इति भावः।

क्वचिद्बुभुत्सान्वयानुविधानमन्यथासिद्धमित्याह—**बुभुत्सा चेति**। एतच्च मनोऽणुत्वपक्ष एवोपपद्यत इति। **न चैवमिति**। दण्डादेरपि चक्रसहितस्यैव विशेषस्य कारणत्वापत्तौ चक्रादिहेतुत्वोच्छेद[3]प्रसङ्ग इत्यर्थः। **तस्यापीति**। चक्रादेरपि हेत्वन्तरवत् स्वतन्त्रान्वयव्यतिरेकित्वात् विनिगमनाविरहेणोभयोरपि हेतुत्वादित्यर्थः। **अनुगतेति**। क्वचिच्चक्षुरादिकर्मणा क्वचिच्चक्षुराद्यवयवसंयोगेन तदुत्पादनादित्यर्थः। अत एवाह—[4]**जातिसंकरेति**। अन्यतरकर्मजत्वादिनेति शेषः। त्वन्मते विभुमनःश्रोत्रसंयोगो नित्य एवेति तत्र वैजात्यमसंभवीत्यपि बोध्यम्। **तस्यैव**—अङ्गीकृतस्यैव क्रमिकसमवधानवतो मनस्त्वे किं विभुना अतिरिक्तेनेत्यर्थः **एवं करणमिति**। नानाकरणेनैकत्र पिण्डे नानापरत्वस्यैकदा जननात् व्यभिचारा-

---

1. ख. ०प्रयत्नाभावे
2. क. ०मित्याह
3. क. 'प्रसङ्ग' नास्ति।
4. क, जातिसंस्कारादिति।

अथास्तु करणधर्मत्वेन क्रियाक्रमः । एकं करणमेकत्र एकदा एकावच्छेदेन तुल्यदेशे वा एकजातीयामनेकां क्रियां न करोति, किं तु एकामेव । एकत्रेत्यादिविशेषणात् कुठाराग्निसंयोगशब्देषु न व्यभिचार इति चेत्—तर्हि चक्षुराद्यवच्छेदेन भिन्नदेशीयशब्दवत् परमाणाविव विजातीयामग्निसंयोगवदनेकां क्रियां कुर्यादेव ।

अथ ज्ञानकरणमेकत्रात्मन्येकदा एकमेव ज्ञानं करोति समूहालम्बनकरणवत् । कथमन्यथा [1]नानासामग्रीसत्त्वे समूहालम्बनमेकम् । यत्तु—[2]अपरज्ञानसामग्री यदि तदा कार्यावश्यंभावः । तदसत्त्वे किं करणधर्मत्वेन, तस्य सहकार्यन्तरपर्यवसायित्वादिति—तन्न । समूहालम्बनसाम्यात् । करणस्यैकदा एकमात्रजनकत्वेनापराजनकतया तत्र कारणाभावेनैव सामग्र्यसत्त्वादिति चेत्—तर्हि पञ्चसु यदेकं जनयति नापराणि, तत्र नियामकमास्थेयम् । अन्यथा ज्ञानजनने तेषां कलहं कः समादध्यात् ।

---

प्रकाशः

दाह—एकमिति । एकेनैव पिण्डेन तदुत्पादनात् दोषतादवस्थ्यादाह—करणमिति । पिण्डस्त्वधिकरणं न तु करणम् । एकेनापि मनसा क्रमेण नानाज्ञानोत्पादनात् एकदेत्युक्तम् । न चैकावच्छेदेनेति दत्ते एकत्रेति व्यर्थम् । एकस्य श्येनकर्मणश्चरणावच्छेदेन युगपच्छाखावृक्षनिष्ठसंयोगद्वयजनने व्यभिचारवारकत्वादित्येके । एतदस्वरसादेव तदुभयस्थाने तुल्यदेशे चेत्युक्तमित्यन्ये । शब्देष्विति । यद्यपि भट्टमते शब्दस्य विभुत्वादजन्यत्वान्न व्यभिचारः, तथापि परमतेन बोध्यम् । तस्येति । यथा परस्य सामग्र्यभावेन कार्यानुत्पादेन [3]सहकार्यन्तरस्वभावकल्पनं तथा न [4]करणधर्मकल्पनमपीत्यर्थः । एतच्च प्रतिबन्दिमात्रम्, न तु सदुत्तरम्, अत आह—करणस्येति । कारणाभावेनेति । करणधर्मत्वात्तदानीमपरज्ञानं प्रति तस्यासत्कल्पत्वादित्यर्थः । युगपज्ज्ञानमिति ।

---

1. ख. नानासामग्रीतः
2. ख. अपरज्ञानसामग्रीसत्त्वे ज्ञानावश्यंभावः
3. ख. सहकार्यान्तर-
4. ख. कारणधर्म-

किं चैवं युगपज्ज्ञानानि माभूवन् युगपज्ज्ञानं तु केन वार्यते, एकसमूहालम्बनवत्। न च चाक्षुषत्वादिजातिसंकरापत्तेः नैकज्ञानमिति वाच्यम्। एवं हि फलविरोधेन एकमपि ज्ञानं न जनयेत् अविशेषात्। उत्पद्यतां वा चाक्षुषादिविजातीयं ज्ञानं सामग्रीसत्त्वात् चित्ररूपवत्। फलबलात्तत्र तथेति चेत्—तर्हि अत्र फलाभावे हेतुः कल्प्यताम्, अन्योन्यप्रतिबन्धकस्य तत्त्वे वा ज्ञानमेव न स्यात् न त्वेकज्ञानमित्युक्तम्।

ननु चक्षुरादि न संभूयजनकमन्यविषयेऽन्यस्यासामर्थ्यात्। शीतं सुरभि शुभ्रं चन्दनमित्यत्रैव कारणान्तरानुपनयनाच्च। न च स्वस्वविषयज्ञानायोद्यतमिन्द्रियं कारणान्तरसहकारात् तत्तद्विषयमादायैव स्वस्वविषयं ज्ञापयेदिति वाच्यम्। भिन्नविषयप्रमाणानां संभूयाजनकत्वनियमात्। तत्तदिन्द्रियं तत्तज्ज्ञानांशे जनकमित्यपि न, विषयस्यांशत्वादिति चेत्—

मैवम्। न हीन्द्रियाणां संभूयकारित्वम्, किं त्वर्थः समाजः। प्रत्येकज्ञानसामग्रीसत्त्वात् एकदा नानाज्ञानप्रसक्तौ करणधर्मत्वेन मनः तावद्गोचरामेकामेव ज्ञानक्रियामुत्पादयेत् समूहालम्बनवत्। न चैकक्रियाजननदशायामपरविषयक्रियायां मनो न समर्थमिति कथं तां जनयेदिति वाच्यम्। भिन्नक्रियायामसामर्थ्येऽप्येकक्रियायां सामर्थ्यात्।

वस्तुतस्तु विशेषाभावादेकामिवापरामपि बुद्धिं जनयेदविशेषात्। न चैकामपीत्यनेकज्ञानोत्पत्तिर्ज्ञानानुत्पत्तिर्वा न त्वेकविषयज्ञानोत्पत्तिरिति

---

प्रकाशः

[1]एकदा पञ्चेन्द्रियजन्यमेकं ज्ञानमित्यर्थः। विषयस्येति। तस्य पञ्चेन्द्रियाजन्यत्वादिति भावः।

[2]ननु रूपादिषु मध्ये रूपादिग्राहकत्वेनैव चक्षुरादिसिद्धेः तदन्यगुणग्रहे तदसामर्थ्यान्नैकज्ञानमसंभवीत्यरुचेराह—वस्तुतस्त्विति। ननु [3]गोगोत्वनिर्विकल्पकानन्तरमन्यतरविशेषणकज्ञानोत्पत्ताविवादृष्टमेव नियामकमस्तु। तथा च

---

1. क. एकदापञ्चं चेदिन्द्रिय-
2. क. 'ननु' नास्ति।
3. क. 'गो' नास्ति।

नियामकमास्थेयम् । समूहालम्बने फलबलेन परस्परापेक्षितत्वेनैकैत्र सामग्री ।

ननु मनोऽणुत्वे कथं मन्दोऽपि बुभुत्सितः शब्दो गृह्यते नान्यः । अथ शब्दे बुभुत्सैवेतरग्रहप्रतिबन्धिका अग्रहस्य तदनुविधानात् । अनन्यगतिककार्यदर्शनात् बुभुत्सितशब्दग्रहसामग्र्येव वा बलवतीति यदि मन्यसे, तदा वैभवेऽपि तत एव युगपज्ज्ञानानुत्पत्तिरिति चेत्—

मैवम् । बुभुत्सा न रूपादिग्रहे हेतुः न वा इतरग्रहे प्रतिबन्धिकेत्युक्तत्वात् । किं च रूपादिसकलबुभुत्सायां परस्परप्रतिबन्धादज्ञानं बुभुत्साधीनसामग्रीबलवत्त्वाद्वा सर्वेषां ज्ञानं स्यात् न त्वेकस्य पञ्चावधानस्य । सर्वेषां ज्ञानं भवत्येवेति चेत्—न । तत्रापि क्रमानुमानात् । अन्यथा सर्वबुभुत्साधीनप्रणिधानेऽप्यन्येषां कथं न स्यात् ।

नन्वणुत्वेऽपि दशभिः पठ्यमानासु गाथासु तावद्गोचरबुभुत्सायां प्रणिधाने चोक्तरीत्या सर्वेषां ज्ञानमज्ञानं वा न त्वेकज्ञानमिति चेत्—

---

**प्रकाशः**

तत्र नोभयविशेष्यकं समूहालम्बनम् । तथात्र न युगपज्ज्ञानमिति चेत्—न । अणुना मनसा दृष्टेनैवोपपत्तावदृष्टकल्पनानवकाशात् । अन्यथा तदेव न कल्प्येतेति भावः । समूहेति । अत्र [1]जातिसंकराद्यभावात् फलैक्ये आर्थसमाज इत्यर्थः । रूपादितुल्यन्यायेन शब्दग्रहेऽपि बुभुत्सा न तन्त्रमित्याह—नन्विति ।

ननु मनोवैभवे श्रोत्रमनस्संयोगे विशेषाभावात् शब्दग्रहनियमो न स्यादित्येव दूषणम् । अतोऽणुत्वमेव (कल्प) [कल्प्य]मित्यरुचेराह—अनुगतेति । प्रतिबन्धकत्वमननुगतस्यापीत्यस्वरसादाह—हेतुत्वे चेति । जातिसंकर इति । यद्यपि अत्राप्यन्यतर[2]कर्मजत्वव्याप्यत्वमेव, तथापि [3]कग्रहहेतुर्गग्रहप्रतिबन्धक-

---

1. क. जातिसंकराद्यभावफलैक्ये
2. ख. °कर्मत्वव्याप्यमेव
3. ख. 'क' नास्ति ।

अत्र कश्चित् । श्रोत्रमनस्संयोगे आत्ममनस्संयोगे वा कश्चिद्विशेषः कार्योन्नेयः किंचिच्छब्दग्रहे हेतुः तदन्यग्रहे प्रतिबन्धक इति ।

तन्न । वैभवेऽपीन्द्रियमनस्संयोगविशेषस्य तथात्वे व्यासङ्गोपपत्तेः । अनुगतरूपाभावेन प्रतिव्यक्ति प्रतिबन्धकत्वे हेतुत्वे च व्यभिचारात् । संयोगे च विशेषस्य जातित्वे जातिसंकरः । उपाधित्वे स एव हेतुर्न मनः ।

अपरे तु—प्रत्यक्षानुकूलेन्द्रियमनस्संयोगद्वारा बुभुत्सा प्रणिधानं च प्रत्यक्षहेतुरिति चाक्षुषादिबुभुत्सितग्रहे क्लृप्तत्वात् ताभ्यां श्रोत्रे बुभुत्सितशब्दावच्छेदेन मनः संयुज्यत इति स गृह्यते नान्यः । क्वचित् प्रणिधानं विनैव तथा । अन्यत्र प्रणिधानाधीनक्रियया अश्रूयमाणशब्दावच्छिन्नात्मनो विभज्य बुभुत्सितशब्दावच्छेदेन मनः संयुज्यत इति तद्ग्रहो न सर्वस्येति ।

तत्तुच्छम् । युगपदुत्पद्यमानासु विंशतौ गाथासु तावद्गोचरबुभुत्सायां प्रणिधाने च तावद्गाथावच्छेदेन मनस्संयोगाद्युगपत् तासामुपलम्भप्रसङ्गात्, प्रत्येकसामग्रीसत्त्वात्, निकटाहन्यमानढक्कादिशब्दानां श्रोत्रव्यापकत्वनियमाच्च ।

अथ यत्र कोलाहले श्रूयमाण एव बुभुत्सितशब्दग्रहः तत्रोभयशब्दावच्छेदेन मनस्संयोगादुभयग्रहः कोलाहले तूपेक्षाज्ञानं तदिति तथा-

---

प्रकाशः

जातिरेका अन्या [1]विपरीता तयोरुभयगोवरसमूहालम्बनदर्शनेन तज्जनक[2] मनस्संयोगे सत्त्वेन संकर इत्यर्थः । स एवेति । यद्घटित उपाधिस्तदेव मनोऽस्तु अलं तदन्यमनःकल्पनयेत्यर्थः ।

ननु शब्दानामेकैकदिग्विश्रान्ततया सर्वावच्छेदेन श्रोत्रमनस्संयोगाभावान्नैकदा ग्रह इत्यत आह—निकटेति । तथात्रापीति । युगपत्पठ्यमानविंशति-[3]गाथानामग्रहो भवत्येवेत्यर्थः । अनयेति । प्रत्यक्षानुकूलेत्यादिकयेत्यर्थः ।

---

1. ख. 'विपरीता' इति नास्ति ।
2. ख. ०मनस्संयोगत्वेन
3. क. ०गाथानां ग्रहः

त्रापीति चेत्—तर्हि कृतमनया कुसृष्ट्या। अबुभुत्सिते उपेक्षाज्ञानमेवास्तु। न च तदपि। इतो न शब्दान्तरमश्रौषमित्यनुभवात्। अन्यथा वैभवेऽपि व्यासङ्गदशायामितरेषामुपेक्षाज्ञानमेवेति।

अत्रोच्यते। यद्यपि बुभुत्साप्रणिधाने न शब्दग्रहमात्रे सहकारिणी न वेतरग्रहप्रतिबन्धके। तथापि नानाशब्दसमवायदशायां यः शब्दग्रहस्तत्र तयोस्तथाभावः तथैव तयोरन्वयव्यतिरेकनियमात्। यद्वा कोलाहले श्रूयमाण एव बुभुत्सितग्रह इत्यन्येऽपि कोलाहलत्वेन तद्विषया एव। बहूनां चैकदा समवाये युगपत्संनिधाने वा व्यक्तिग्रहे तद्गतगत्वकत्वादिग्रहो न भवति। अगृहीतकत्वादिनानाशब्दस्य कोलाहलबुद्धिविषयत्वात्। तस्यां दशायां बुभुत्सितशब्दकत्वादिजातिग्रहे बुभुत्सैव शरणम्। एककालीनबहुशब्दबुभुत्सा च न हेतुर्व्यभिचारात्।

यत्तु कोलाहलात् अन्यत्रैकदा नानाशब्दग्रहे श्रोत्रं न समर्थम्, किंतु एकशब्दग्रहे विनिगमिका बुभुत्सैवेति। तन्न। एकगीयमानापेक्षया एकदा नानागीयमानसजातीयगीतादिषु सुखादिवैलक्षण्यानुभवात्।

---

प्रकाशः

इष्टापत्तिमाशङ्क्याह—न चेति। युगपत्तावद्गाथाग्रहो नानुभवसिद्धः। सर्वत्र बुभुत्सासत्त्वे क्वचित् उपेक्षाज्ञानमित्यस्यापि विनिगमकाभावेन वक्तुमशक्यत्वादित्यपि बोध्यम्।

इतो न शब्दान्तरमश्रौषमित्यनुभवे [1]विप्रतिपन्नः कल्पान्तरमाह—यद्वेति। तर्हि समीपे कत्वादेरपि ग्रहसंभवात्कथं कोलाहलधीरित्यत आह—[2]बहूनां चेति। ननु कथमेवं कल्प्यत इत्यत आह—अगृहीतेति। नन्वेवं तत एव बुभुत्सितस्यापि कत्वादिग्रहो न स्यादित्यत आह—तस्यामिति। अबुभुत्सितशब्देष्वेव कत्वादिग्रहप्रतिबन्धकत्वं बहुशब्दसमाजस्येत्यर्थः।

नन्वेवं बुभुत्सिततावद्गाथानां कत्वादिप्रकारेण युगपद्ग्रहापत्तिरित्यत आह—एककालीनेति। व्यभिचारादिति। तस्यां सत्यामपि तत्प्रकारकज्ञानानु-

---

1. क. विप्रतिपत्तेः
2. क. बहना चेति।

अथ दीर्घशष्कुलीभक्षणे कथं पञ्च ज्ञानानि। क्रमस्तत्रेति चेत्—न। ज्ञानानां यौगपद्यप्रत्ययस्य बाधकं विना प्रमात्वात्। व्यासङ्गो बाधक इति चेत्—तर्हि मनोऽवयव्यस्तु। तेन संकोचविकासाभ्यामुभयमुपपद्यत इति केचित्।

---

प्रकाशः

त्पादेनान्वयव्यभिचारादित्यर्थः। तथा च कोलाहलमात्रं तत्रेति भावः। एतच्च विजातीयबुभुत्सापरम्। सजातीयबहुशब्दबुभुत्सा तु हेतुरेवेत्याहुः।

यत्त्विति। तथा च कोलाहले श्रूयमाण एवाबुभुत्सितबहुशब्दग्रह इति भावः। एकेति। तथा च सुखवैलक्षण्यप्रयोजकमेकदा सजातीयनानाशब्दज्ञानमेवोपेयमिति भावः।

नन्वेवं वैभवेऽपि रूपादिसकलगोचरबुभुत्साया अहेतुत्वेऽपि तदन्यतमबुभुत्सा तद्ग्राहिका अन्यग्रहप्रतिबन्धिका चास्तामिति तुल्यसमाधिः। न च तादृशबुभुत्सायामपि सूचीसर्पादिवेधानुभवेन तादृश्यापि व्यभिचारान्नैवमिति वाच्यम्। शब्देऽपि तादृशबुभुत्सायां निकटाहन्यमानढक्कादिशब्दानुभवेन तुल्यत्वात्। तत्रापि यदि विशेषकल्पनं तदा तदपि तुल्यमिति।

मैवम्। [1]अणुना मनसैवोपपत्तौ तत्र तादृशबुभुत्साहेतुत्वादिकल्पनायामेव गौरवात्। शब्दग्रहे त्वयाप्यनन्यगत्या तत्कल्पनात्। किं च तथा सतीन्द्रियमनस्संबन्धस्य रूपादिग्राहकत्व एव मानाभावः। तस्माद्व्यासङ्गस्थले तदभावेन तदग्रहात्तस्याहेतुत्वम्[2]। तच्चाणुत्वपक्ष एव भवतीति। न ह्यनुमित्यादिकरणं मनःप्रत्यासन्नतया हेतुः, तद्धेतुत्वं च सर्वसिद्धमेवेति। न चाणुत्वेऽपि रसनसंयुक्ते द्रव्ये तत्र त्वचोऽपि सत्त्वात् रसद्रव्यविषयकं ज्ञानं स्यादिति वाच्यम्। रसनसंबन्धकाले मनस्त्वक्संबन्धे मानाभावादित्याहुः।

कृतमिति। यद्यपि सुखप्रतीतेरिन्द्रिय[3]जन्यतया मनस्सिद्धिरावश्यिकी, तथापीन्द्रियसंबन्धेन हेतुना कृतमित्यर्थः। अवयवित इति। विभुत्वे अवयव-

---

1. ख. गुणानां
2. ख. तस्य हेतुत्वम्
3. क. ०जतया

तन्न । यदि हि संकोचविकासहेतुरदृष्टं तर्हि तत एव तदुभयमस्तु, कृतं मनसा । नाप्येकपञ्चबुभुत्सया तौ भवतः, तस्या अहेतुत्वात् । हेतुत्वे वा अस्तु विभु मनः, अवयविनो लघुत्वात् ।

अथ यथा क्वचिद्बुभुत्सया क्वचित्तीव्रविषयेन्द्रियसंनिकर्षात् इन्द्रियमनस्संयोगः, एवं मनस्संकोचविकासयोः बुभुत्सादिकं हेतुरिति चेत्—तर्हि पञ्चबुभुत्सायां प्रणिधाने च सर्वदा सर्वेषां पञ्च ज्ञानानि जायेरन् । पञ्चावधानज्ञाने क्रम एव ।

एतेन अणु मनः पञ्चतयमस्तु अवयविनो लघुत्वात्, बुभुत्सादिवशात्तेषामेकपञ्चेन्द्रियसंबन्धादुभयमुपपद्यत इति निरस्तम् । पञ्चबुभुत्सायां सर्वेषां पञ्चेन्द्रिसंबन्धे व्यासङ्गानुपपत्तेः । कथं तर्हि दीर्घशष्कुलीभक्षणे गन्धरसरूपस्पर्शशब्दान् प्रत्येमीत्यनुव्यवसायः क्रमिकज्ञानपञ्चतयेन युगपत् मनस्संनिकर्षाभावादिति चेत्—न । अनुव्यवसायस्यैकत्वासिद्धेः अनुव्यवसायाः पञ्चैव, समयसौक्ष्म्यात्तेषां क्रमो न [1]गृह्यते ।

अथ वा क्रमिकानुव्यवसायाहितसंस्कारात् पञ्चज्ञानविषयस्मृतावनुभवत्वारोपात् युगपत् प्रत्येमीत्यनुव्यवसायः । विभुत्वे हेत्वभावात् आत्ममनस्संयोगाभावात् नात्मसुखाद्युपलम्भः स्यात् । द्रव्यत्वेनात्मसंयोगित्वसाधने त्वजसंयोगसिद्धौ तत एव तद्विभागित्वेऽपि सर्वदा तयोः परस्परविरुद्धसंयोगविभागप्रसङ्गः ।

ननु अणुत्वेऽसमवाय्यनुरोधात् चेष्टाहेतुप्रयत्नस्याणुदेशत्वं [2]शरीरदेशमात्रत्वं वा स्यात्, न तु शरीरतदवयवदेशत्वं येन क्रियानियमो भवेत्,

---

प्रकाशः

कल्पनाविरहादित्यर्थः । अवयविन इति । लक्षादिपरमाणुनिष्पाद्यत्वात्तादृशावयविनो लघुत्वादित्यर्थः । उभयमिति । व्यासङ्गो यौगपद्यं चेत्युभयमित्यर्थः ।

विभुत्वे बाधकान्तरमाह—विभुत्व इति । इष्टापत्तिमाशङ्क्याह—परस्परविरुद्धेति । यद्यपि विभागक्षणे संयोगसत्त्वेन भावाभावयोरिव स्वरूपतस्त-

---

1. ख. लक्ष्यते ।
2. ख. शरीरमात्रदेशत्वं

नियामकाभावात् । न च नोदनाभिघातादिवाव्यापिनोऽपि प्रयत्नात् शरीरादिक्रिया, अतिप्रसङ्गात् । एवमेकदा विंशतिप्रयत्नाभावात् कथमङ्गुलीषु विंशतिः क्रियाः । न च यौगपद्यभ्रमः, बाधकाभावात् । युगपत्संनिकर्षाभावेनाङ्गुल्यश्चलन्तीति समूहालम्बनानुपपत्तेः । विंशतिज्ञानानामेकदानुव्यवसायासंभवात् अग्रपश्चाद्भावे विनिगमकाभावाच्च । क्रमोत्पादे च भ्रूनयनकरचरणादिसकलशरीरावयवानां युगपद्विचित्रनानाकर्मसमूहरूपं नृत्यं न प्रत्यक्षं स्यात् । तथा च प्रत्येककर्मजन्यसुखात् विलक्षणसुखविशेषो नानुभूयेतेति ।

अत्र ब्रूमः । सुखे चन्दनादिवत् चिकीर्षैव नियामिका । यत्क्रियायां चिकीर्षा सा क्रिया तच्चिकीर्षाजन्यात् प्रयत्नाद्भवति । तत्र शरीरक्रियापि

---

प्रकाशः

योर्न विरोधः । किं तु विरोधिगुणत्वेन तन्नाश्यत्वप्रयुक्तः । तथा च ज्ञानेच्छयोरिव नित्ययोस्तयोरविरोधित्वेऽपि न दोषः । तथापि विभागप्रसङ्ग इत्यापाततः ।

परमार्थतस्तु—अप्रयोजकमात्मसंयोगित्वे द्रव्यत्वम् । मूर्तत्वे च सामग्र्येव विपक्षे बाधिका आत्मविभागित्वे मूर्तत्वमेव न (हेतुः) कुतो द्रव्यत्वम् । कपालद्वयसंयोगेन घटोत्पत्तिकाले आत्मविभागित्वस्य [1]नाशितत्वेन तदग्रिमसमये संयोगादिवद्विभागोत्पत्तिसामग्र्यभावेनात्मविभागानुत्पत्तौ व्यभिचारात् । न च तदग्रिमकाले तदुत्पादः, तदग्रिमकाले घटनाशस्यापि संभवादिति वदन्ति । एवं च मनोऽणु आत्मान्यत्वे सति द्रव्यत्वव्याप्यजातिमत्त्वात् परमाणुवदित्यादि साधनमूह्यम् ।

[2]असमवाय्यनुरोधेनाह—शरीरदेशमात्रत्वं वेति । अतिप्रसङ्गादिति । सर्वदा सकलशरीरावच्छेदेनैव क्रियोत्पत्त्यापत्तेरित्यर्थः । ननु तादृशसमूहालम्बनं न भवत्येव । किं तु तत्तदङ्गुलिचलनेषु [3]क्रमिकविंशतिज्ञानान्येव जायन्त इत्यत आह—विंशतीति । एवं विंशतिज्ञानानामेकदानुव्यवसायाभावात् विंशत्यङ्गुलिचलनान्यनुभवामीत्यनुव्यवसायो न स्यादित्यर्थः ।

---

1. ख. नाशितत्वेन
2. क. असमवाय्यनुरोधेनाह
3. क. क्रिमेकविंशति-

तच्चिकीर्षाजन्यादणुमात्रदेशादपि प्रयत्नात् भवति। अथ वा यस्य क्रियायां चिकीर्षा तदवच्छेदेन प्रयत्न उत्पद्यते। तेन शरीरावच्छेदेनोत्पन्नप्रयत्नादेव शरीरक्रिया। एवं विंशतिक्रियाचिकीर्षाजन्यादणुमात्रदेशादपि प्रयत्नाद्विंशतिक्रिया युगपदुत्पद्यन्ते अथवा अङ्गुलीविंशतिक्रियायां चिकीर्षेति विंशत्यवच्छेदेन विंशतिप्रयत्नाद्विंशतिक्रियाहेतव उत्पद्यन्ते।

एवं नृत्यादावपि एतच्चिकीर्षानुविधानात् क्रियाप्रयत्नयोरध्यवसेयम्।

तदेवम् अणुमनस्सिद्धौ तद्ग्राह्या आत्मविशेषगुणा बुद्धिसुखादय इति नाव्यापकं प्रत्यक्षलक्षणम्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे मनोऽणुत्ववादः

—:*:—

---

प्रकाशः

ननु सुखे [1](चन्दवत्) [चन्दनवत्][2]चिकीर्षा यत्नोत्पत्तौ नियामिका न तु चेष्टोत्पत्तौ। तत्र चिकीर्षाया अनिमित्तत्वात्। विभुकार्याणामेव [3]निमित्तानुरोधाच्चेत्यतस्तथैव सिद्धान्तमाह—(अथवेत्याहुः) [अथवेति इत्याहुः]।

विंशत्यवच्छेदेनेति। एकावच्छेदेनैव नानोत्पत्तौ विरोधादिति भावः।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे मनोऽणुत्ववादः

—:*:—

---

1. ख. 'चन्दवत्' नास्ति।
2. ख. चिकीर्षायत्नोत्पत्तौ
3. क. निरुक्तानुरोधाच्च

# अथानुव्यवसायवादः

—:*:—

ननु वर्तमानं ज्ञानं न मानसम्, किंतु स्वयमेव स्वव्यवहारहेतुः, स्वस्मिन् सत्येव स्वव्यवहारात्, न तु ज्ञानान्तरमपेक्षते, तदन्वयतिरेकाननुविधानात्। ज्ञानान्तरविरहदशायां स्वविरहादेव स्वव्यवहारविरहात्, स्वत एव स्वव्यवहारोपपत्तौ ज्ञानान्तरकल्पने गौरवाच्च। घटादिव्यवहारे ज्ञानान्वयव्यतिरेकादस्तु तदपेक्षा। स्वीयमतीतमनागतं परकीयं च ज्ञानं स्वव्यवहारे ज्ञानान्तरमपेक्षत एव, व्यवहारकाले तदभावात् ज्ञानान्तरान्वयव्यतिरेकानुविधानाच्च।

नन्वेवमिच्छादिकमपि स्वव्यवहारज्ञानं नापेक्षेत, ज्ञानतुल्यतया स्वयमेव स्वव्यवहारशक्तत्वादिति चेत्—न। व्यवहारस्य ज्ञानजन्यत्वनियमेनेच्छादिव्यवहारे ज्ञानापेक्षणात्।

अथ ज्ञानमात्रं न व्यवहारहेतुः अतिप्रसङ्गात्। किंतु व्यवहर्तव्यविषयमिति ज्ञानव्यवहारोऽपि तद्विषयज्ञानान्तराद् भवेदिति चेत्—सत्यम्। स्वस्यैव स्वविषयकत्वात्। यद्व्यवहारानुकूलशक्तियोगि यज्ज्ञानं तस्यैव तद्विषयकत्वात्। शक्तिश्च पदार्थान्तरं न कारणतेति नान्योन्याश्रयः। स्वव्यवहारे ज्ञानं शक्तमिति स्वविषयकम्। व्यवहारशक्तिसमवायादयश्च स्वभावत एव तदीयाः संबन्धान्तरेऽप्यनवस्थानात् स्वभाव एव शरणम्।

---

**प्रकाशः**

ननु मनोग्राह्या बुद्ध्यादय इत्ययुक्तम्। मनोग्राह्यत्वं हि मनस्संनिकर्षजज्ञानविषयत्वम्। स्वप्रकाशमते च बुद्धौ तन्न संभवतीत्याह—नन्विति। नन्वीश्वरज्ञानादौ न व्यवहारकालासत्त्वमिति हेत्वन्तरमाह—ज्ञानान्तरेति। स्वस्यैवेति। तथा च ज्ञानव्यवहारस्य स्वविषय[1]ज्ञानसाध्यत्वे साध्ये सिद्धसाधनम्। तादृशज्ञानान्तरसाध्यत्वे च गौरवेणाप्रयोजकमिति भावः।

---

1. ख. °ज्ञानव्यवहारसाध्यत्वे

एतेन भेदनियतो विषयविषयिभावः कथमभेदे इति निरस्तम्। स्वव्यवहारशक्तत्वस्य [1]स्वविषयत्वस्याभेदेऽपि संभवात्।

अस्तु वा ज्ञानस्य स्वभावविशेष एव स्वविषयत्वम्। संबन्धं विनैव स्वभावविशेषात् यथा ज्ञानं घटीयं घटव्यवहारजननयोग्यं [2]स्वीयमपि तथा। कोऽसौ स्वभावविशेष इति चेत्—न। आख्यातुमशक्यत्वेऽप्यनुभवसिद्धस्य स्वभावविशेषस्य माधुर्यादिविशेषवत् प्रत्याख्यातुमशक्यत्वात्। यद्यपि स्वभावविशेष इति वाक्येनाख्यायते एव, तथापि पदेनाख्यातुमशक्यत्वात्।

अथ व्यवहारो व्यवहर्तव्यभिन्नज्ञानसाध्यः कथं तेन विना स्यादिति चेत्—न। व्यवहारं प्रति व्यवहर्तव्यज्ञानत्वेन हेतुत्वात्, न तु व्यवहर्तव्यभिन्नज्ञानत्वेन गौरवात्। समूहालम्बनं च एकैकव्यवहारजनकत्वादेकैकविषयकमपि, न तु समूहविषयकमेव, अतिरिक्तस्य तस्यासत्त्वेन संनिकर्षाभावात्।

भ्रमस्थले रजतव्यवहारानुकूला शक्तिरस्त्येव रजतज्ञाने। किं तु दोषादभिभूतेव सा जायत इति न तया रजते व्यवहारः। रजतज्ञानं न

---

प्रकाशः

नान्योन्येति। तद्विषयत्वेन तद्व्यवहारजनकत्वम्, तदेव तद्विषयत्वमित्यात्माश्रयो नेत्यर्थः। प्रकृते संगमयति—स्वेति। ननु स्वव्यवहारः स्वीयो व्यवहारः तदीयशक्तेश्च तत्र समवायः। तत्समवायित्वं च समवायसंबन्ध इत्येतत्सर्वं संबन्धं विनानुपपन्नमित्यत आह—व्यवहारेति। नन्वेवमावश्यकत्वात् स्वभावसंबन्ध एव तद्विषयत्वमित्यरुचेराह—अस्तु वेति।

ननु समूहालम्बनं समूहविषयकं कथमनेकव्यवहारजनकं स्यादित्यत आह—समूहालम्बनं चेति। भ्रमस्थल इति। तथा च तत्र रजतस्मरणे रजतविषयत्वमक्षुण्णमेवेति भावः। कथं न तद्व्यवहार इत्यत आह—किं त्विति। अभिभवाभावोऽपि हेतुरिति तदभावान्न तद्व्यवहार इत्यर्थः। ननु तद्व्यवहारजनकत्वं

---

1. ख. स्वविषयत्वस्याभिन्नत्वेऽपि 2. ख. तथा स्वीयमपि।

शुक्तौ प्रवर्तकम्, किं तु इन्द्रियजन्यमिदंज्ञानमेव। रजतार्थिप्रवृत्त्यर्थं तु उपस्थितरजतभेदाग्रहमपेक्षत इति रजतज्ञानं कारणतावच्छेदकम्। एवं च स्वविषयत्वं स्वप्रकाशत्वम्, न तु स्वव्यवहारे ज्ञानान्तरानपेक्षत्वम्, गौरवात्। अन्यथा ज्ञानस्य स्वाविषयत्वेन संस्काराभावात् स्मरणं न स्यात्।

यत्तु स्वव्यवहारे ज्ञानान्तरानपेक्षत्वमुक्तम्, तत्स्वप्रकाशत्वनिर्वाहकतया। प्रमाणं च स्वप्रकाशे प्रत्यक्षमेव।

सर्वाः प्रतीतय इदमहं जानामीत्येवमाकाराः ज्ञातारं ज्ञानं ज्ञेयं चोल्लिखन्त्यो जायन्ते। तत्र [1]आत्मा कर्तृत्वेन ज्ञेयं कर्मतया ज्ञानं क्रियात्वेन भासते। अतो ज्ञातृज्ञेयस्वविषयं ज्ञानमनुभूयत इति त्रिपुटीप्रत्यक्षवादिनः।

ननु इदमिति व्यवसायः तदुत्तरमिदमहं जानामीत्यनुव्यवसायो मानस इति चेत्—न। स्वप्रकाशत्वेनोपपत्तौ [2]ज्ञानान्तरकल्पने गौरवात् परिशेषाच्च स्वप्रकाशत्वम्। परप्रकाशत्वे हि ज्ञानमेव न सिध्येत् माना-

---

प्रकाशः

यदि तद्विषयत्वं तदा रजतज्ञानमपि शुक्तिगोचरमिति तवान्यथाख्यात्यापत्तिरित्यत आह—रजतज्ञानमिति। तर्हि कथं तदपेक्षेत्यत आह—रजतार्थीति। अपेक्षते इदंज्ञानमिति शेषः। (अस्य) [स्वस्य] [3]स्वाविषयत्वेऽपि पारिभाषिकं [4]स्वप्रकाशत्वमिति स्वीकर्तृस्वैकदेशिमतं दूषयति—न त्विति। उपजीव्यग्रन्थविरोधं परिहरति—यत्त्विति। [5]वर्तमानज्ञानस्य स्वव्यवहारे ज्ञानान्तरसापेक्षत्वे स्वप्रकाशत्वमेव न निर्वहतीत्यर्थः। यद्यपि स्वव्यवहारानुकूलशक्तियोगित्वरूपं स्वविषयत्वं न [6]तद्ग्राह्यम्, तथापि स्वभावविशेषरूपत्वं स्वविषयत्वमिति तद्ग्राह्यमेवेति तत्पक्षाभिप्रायेणाह—[7]प्रमाणमिति। ज्ञानान्तरकल्पने गौरवादिति भावः।

ननु प्रतीतिकलहकवलितं प्रत्यक्षमित्यनुमानमाह—परिशेषाच्चेति। जिज्ञासेति। सुखे व्यभिचारवारणाय जिज्ञासापदम्।

---

1. क. ज्ञाता
2. क. ज्ञानान्तरे कल्पनागौरवात्
3. ख. स्वविषयत्वे
4. क. स्वस्वप्रकाश-
5. ख. वर्तमानस्य ज्ञानस्य
6. क. ग्राह्यरूपत्वम्
7. क. प्राणमिति।

भावात्। न हि तत्र ज्ञातता लिङ्गम्। अतीतानागतयोस्तदभावात्। नापि मानसं प्रत्यक्षम्। अजिज्ञासितस्य मानसत्वे ज्ञानाविरामादनवस्थानात् विषयान्तरासंचाराच्च। जिज्ञासितस्य ग्राह्यत्वे ज्ञानं न मानसं जिज्ञासाग्राह्यात्मधर्मत्वात् संस्कारवदित्यनुमानप्रतिरोधः। अत एव जिज्ञासां विनैव सुखादीनां मानसत्वम्।

जिज्ञासापि ज्ञानसाध्येत्यनवस्था, धर्मिज्ञानेच्छादिभिर्ज्ञानस्य नाशाच्च न प्रत्यक्षत्वम्।

अथ ज्ञानं मानसप्रत्यक्षं प्रत्यक्षात्मगुणत्वात् आत्मविशेषगुणत्वे सति क्षणमात्रस्थायित्वात् सुखवत्, ज्ञानं प्रत्यक्षजनकेन्द्रियसंनिकर्षाश्रयः प्रत्यक्षत्वात् सुखवदिति चेत्—न। मानसत्वेऽनवस्थानात्।

---

प्रकाशः

ननु पक्षताकाङ्क्षादिघटकजिज्ञासाजन्यानुमितिशाब्दविषयतया सुखे व्यभिचारतादवस्थ्यम्। न च ग्रहणपदं प्रत्यक्षपरम्, दृष्टान्तासिद्धेरिति चेत्—न। जिज्ञासानपेक्षप्रत्यक्षविषयभिन्नात्मधर्मत्वादित्यर्थात्।

अत्रात्मेत्यादिकमात्मन्येव व्यभिचारवारणायेत्याहुः। तच्चिन्त्यम्। जिज्ञासानपेक्ष[1]सुखप्रत्यक्षविषयत्वस्यात्मनोऽपि संभवेन तत्र हेत्वगमनात्। अन्यथा आत्मैकत्वादौ [व्यभिचारस्य] दुष्परिहरत्वादिति।

जिज्ञासापीति। धर्मिज्ञानं जिज्ञासासाध्यमित्येवं [2]पूर्वपूर्वमपीत्यनवस्थेत्यर्थः। जिज्ञासाग्राह्यत्वे दोषान्तरमाह—[3]धर्मीति। अथेति। प्रत्यक्षत्वं स्वप्रकाशत्वेऽपीत्यर्थान्तरवारणाय—मानसेति। मनस्संनिकर्षजप्रत्यक्षविषय इत्यर्थः। हेतौ प्रत्यक्षपदं संस्कारे, आत्मपदं रूपे, गुणपदं रूपात्यन्ताभावे व्यभिचारवारणाय। क्षणेति। चतुर्थक्षणवर्तिध्वंसप्रतियोगित्वादित्यर्थः।

---

1. ख. 'सुखप्रत्यक्ष' इति नास्ति।
2. क. 'पूर्वं' नास्ति।
3. क. धर्मं इति।

अत एव चक्षुर्जन्यं ज्ञानं न चक्षुर्जन्यज्ञानविषयः प्रत्यक्षत्वात् रासनवत्, नैतज्ज्ञानविषयो वा, एतज्जनकेन्द्रियसंनिकर्षानाश्रयत्वात् गगनवत्। चक्षुः न चाक्षुषज्ञानग्राहकं बहिरिन्द्रियत्वात् रसनवदिति प्रतिपक्षानुमानमपास्तम्। परप्रकाशत्वेऽनवस्थया ज्ञानासिद्धौ आश्रयासिद्धेः। स्वप्रकाशत्वेन तत्सिद्धौ धर्मिग्राहकमानबाधात्।

किं च स्वव्यवहारशक्तत्वं स्वविषयत्वं, तच्च स्वसंनिकर्षाजन्यत्वे स्वाजन्यत्वे च न विरुद्धम्। न च स्वव्यवहारे शक्तत्वस्याभाव एव साध्यः, अप्रयोजकत्वात्। स्वसंनिकर्षाजन्ये स्वाजन्ये व्यवहारशक्ते घटादौ व्यभिचाराच्च।

---

प्रकाशः

क्वचिदात्मविशेषगुणत्वे सतीति नास्ति [1]तत्रापि देयम्। अत्र हेतौ मानसप्रत्यक्षवृत्तिगुणत्वव्याप्यजातिमदिति साध्यं विवक्षितम्। अतो निर्विकल्पकजीवनयोनिप्रयत्नयोर्न व्यभिचारः।

प्रत्यक्षजनकेति। स्वप्रत्यक्षजनकेत्यर्थः। तेन सुखप्रत्यक्षजनकसंयुक्तसमवायस्य ज्ञानेऽपि सत्त्वान्न सिद्धसाधनम्। लौकिकत्वमपि संनिकर्षविशेषणम्। अतः सामान्यलक्षणादिसंनिकर्षाश्रयत्वेन नार्थान्तरम्। प्रत्यक्षत्वात्—[2]लौकिकप्रत्यक्षविषयत्वादित्यर्थः।

चक्षुरिति। न चक्षुर्जन्यलौकिकज्ञानविषय इत्यर्थः। तेन प्रमेयत्वादिसामान्यप्रत्यासत्तिजन्यचाक्षुषज्ञानप्रकाश्यतया स्वमते न बाधः। अत एव न स्वसमानकालीनचाक्षुषधीविषय इत्यर्थ इति निरस्तम्। प्रत्यक्षत्वात्। साक्षात्त्वादित्यर्थः। न च ज्ञानत्वादित्येवास्तु। साक्षात्त्वस्य जातित्वेन व्यर्थत्वाभावात्। रसनस्यापि रासनज्ञानग्राहकत्वं तन्मतेऽस्त्येवेति व्याप्तिग्रहो न स्यादित्यत आह—चाक्षुषेति। स्वमते व्यभिचारादाह—बहिरिति। ज्ञानासिद्धाविति। यद्यपि चक्षुःपक्षके नाश्रयासिद्धिः। तथापि रूपोपलब्ध्यैव चक्षुरनुमीयत इति तदसिद्धौ तत्राप्याश्रयासिद्धिरिति भावः।

---

1. क. अत्रापि
2. ख. लौकिकप्रत्यक्ष……'प्रत्यक्षत्वात्' इति ग्रन्थो नास्ति।

अत एव स्वप्रकाशत्वेन पूर्वानुभवविषयता तत्तानुभूतमात्रविषये स्मरणे उत्सर्गतो भासते ज्ञानान्तरस्यानावश्यकत्वात्। स्वस्य स्वाजन्यत्वे कथं स्वकर्मतेति चेत्—न। अतीतानागतयोरिव स्वविषयत्वं न तु कर्मत्वम्। विषयत्वं चाभेदेऽपि। स्वव्यवहारशक्तत्वस्य ज्ञानस्वभावविशेषस्य वा विषयत्वात्। न चाधीकर्मतया शशशृङ्गवदसत्त्वम्। तस्य कदाप्यप्रकाशात्। धीजन्यव्यवहारभागित्वं कर्मत्वं स्वप्रकाशेऽपि, तदन्यफलभागित्वं च घटेऽप्यसिद्धम्, ज्ञाततानिषेधात्। ज्ञानानपेक्षेन्द्रियसंनिकर्षजं ज्ञानं प्रत्यक्षम्, अतः सर्वं ज्ञानं ज्ञानानपेक्षात्ममनस्संनिकर्षजन्यत्वेन स्वात्मनि प्रत्यक्षम्। विशिष्टप्रत्यक्षं च न विशेषणज्ञानजन्यम्, निर्विकल्पकनिषेधात्।

---

प्रकाशः

ननु स्वप्रकाशत्व[1]परप्रकाशत्वसंदेहेऽपि ज्ञानगोचर[2]ज्ञानस्योभयसिद्धत्वाग्नाश्रयासिद्धिरित्यरुचेराह—किं चेति। तथा चाप्रयोजकत्वमिति भावः। चाक्षुषज्ञानं न स्वविषयकं स्वसंनिकर्षाजन्यत्वात् स्वाजन्यत्वाद्वेत्यनुमानाभिप्रायेणेदम्। तुल्यन्यायतया तूक्तानुमानेष्वप्रयोजकत्वं बोध्यम्। ननूक्तहेतुभ्यां [3]स्वव्यवहाराशक्तत्वमेव साध्यमित्यत आह—न चेति। घटादाविति तद्गुणसंविज्ञानबहुव्रीहिणा आत्मादेरभिधानम्, घटस्य स्वव्यवहाराशक्तत्वादित्याहुः।

प्रमुष्टतत्ताकस्मरणे [4]तदभानात् उत्सर्गत इत्युक्तम्। ज्ञानान्तरस्येति अनुभूतविषये अनुभवविषयताग्राहकस्येति शेषः। स्वस्येति। कर्मणः कारकत्वादिति भावः। तस्येति। तथा चाधीविषयत्वं तत्र प्रयोजकम्, तच्च प्रकृते नास्तीत्यर्थः। स्वेति। अत [5]एवाधीकर्मत्वेऽपि नातीन्द्रियत्वमिति भावः। तदन्येति। व्यवहारान्यधीजन्यफलभागित्वमित्यर्थः। तथा [6]चाधीकर्मत्वमसिद्धमिति भावः। ननु [7]स्वप्रकाशत्वेऽपि तदंशे न [8]प्रत्यक्षत्वम्। तत्संनिकर्षाजन्यत्वादित्यत आह—ज्ञानेति। यद्वा अनुमित्यादिकं स्वांशे अनुमित्यादिरूपमेव। तथा

---

1. क. 'परप्रकाशत्व' नास्ति।
2. क. ॰ज्ञानत्वोभय.
3. ख. स्वव्यवहारशक्तमेव
4. ख. तदभावात्
5. क. एवाधिकर्मत्वे
6. क. चाधिकर्मत्व-
7. क. 'स्व' नास्ति।
8. क. प्रत्यक्षम्

सविकल्पकत्वेन ज्ञानाजन्यज्ञानं वा प्रत्यक्षम्। तेन निर्विकल्पक-जन्यं जातिविशिष्टज्ञानं प्रत्यक्षम्, न त्वसाधारणेन्द्रियादिकरणकम्, तेन विनापि अनुमित्यादौ स्वात्मप्रकाशात्। इन्द्रियादिकं तु अर्थप्रकाश एव हेतुः, तस्यैव तत्प्रतिबद्धहेतुजन्यत्वादिति।

अत्रोच्यते। प्रत्यक्षं न स्वप्रकाशे प्रमाणम्, व्यवसायानामिदमहं जानामीत्याकारासिद्धेः। न चैवमनुभवविरोधः, अर्थनिश्चयेन प्रवृत्त्यादि-दर्शनात्। व्यवसायस्यार्थविषयत्वमात्रमनुभूयते न तु स्वविषयत्वमपि, गौरवेण तस्य स्वविषयभानतया [1]प्रवृत्त्यहेतुत्वात्। अनुभवोऽपीदं रजत-मित्याद्येव।

न चैवमिदमहं जानामीत्यनुभवापलापे उपेक्षणीयता। व्यवसायो-त्तरकालं तदुपगमात्, इदं रजतमित्यादिलौकिकानुभवात् व्यवसायस्य तदाकारतां निषेधामो न त्वनुव्यवसायस्य।

ननु भिन्नानुव्यवसायेऽनवस्थानात् व्यवसाय एवानुव्यवसाय इति चेत्—तर्हि परप्रकाशे बाधकात् स्वप्रकाशत्वसिद्धौ सर्वप्रतीतीनाम् इदमहं

---

प्रकाशः

च कथं स्वप्रकाशत्वे प्रत्यक्षमेव मानम्। अनुमित्यादेरपि प्रमाणत्वादित्यत आह—**ज्ञानेति**। **न त्विति**। न तु सर्वं ज्ञानं स्वात्मन्यपि विषये स्वस्वासाधारणकारणीभूतेन्द्रियलिङ्गादिकरणकं, तद्विनापि सर्वत्र [2]स्वांशप्रकाशा-दित्यर्थः। अत एव तदंशे नानुमित्यादिरूपत्वमिति भावः।

तथाचात्मप्रकाशने सर्वत्रात्ममनस्संनिकर्षस्यैवापेक्षा। बहिरर्थप्रकाशने त्विन्द्रियादिकमपि हेतुः, तेन विना तदसंभवादित्याह—**इन्द्रियादिकमिति**। **तस्यैवेति**। अर्थप्रकाशमात्रस्यैवेन्द्रियादिसहकृतहेतुजन्यत्वादित्यर्थः। **अनुभव-विरोध इति**। व्यवसायनिष्ठतादृशकारणताग्राहकानुभवविरोध इत्यर्थः। ननु स्वविषयत्वेन व्यवसायस्य प्रवर्तकत्वात् स्वविषयत्वमपात्यत आह—**गौरवेणेति**। **अनुभवोपीति**। व्यवसायरूपोऽनुभवोऽपि इदं रजतमित्याद्याकार एवेत्यर्थः। न च तत्र मानाभावः, सर्वसिद्धतादृशाभिलापस्यैव मानत्वादिति भावः।

---

1. ख. प्रवृत्त्याद्यहेतुत्वात्  2. ख. स्वप्रकाशत्वादित्यर्थः

जानामीत्याकारतासिद्धिः। तथा च स्वप्रकाशत्वासिद्धौ सर्वप्रतीतीनामिदमहं जानामीत्याकारत्वमसिद्धमिति न सा प्रतीतिः स्वप्रकाशत्वे प्रमाणम्।

अपि च क्रियायाः कृतेर्वा समवायित्वं कर्तृत्वम्, परसमवेतक्रियाफलशालित्वं करणव्यापारविषयत्वं वा कर्मत्वम्, धात्वर्थत्वमन्यद्वा क्रियात्वम्, इदमहं जानामीति व्यवसाये न भासते, तद्बोधकेन्द्रियसंनिकर्षाभावात्। किं तु इदंविषयकज्ञानत्वविशिष्टस्य ज्ञानस्य वैशिष्ट्यं आत्मनि भासते। न च स्वप्रकाशे व्यवसाये तादृशं स्वस्य वैशिष्ट्यं भासितुमर्हति, पूर्वं विशेषणस्य तस्याज्ञानात्। तस्मादिदमहं जानामीति न व्यवसायः, किंत्वनुव्यवसायः।

स्यादेतत्। कर्तृत्वादिज्ञानवैशिष्ट्यमात्मनि मा ज्ञायि, व्यवहारस्य स्वविषयकज्ञानसाध्यत्वसिद्धौ तदेव ज्ञानं स्वविषयकं कल्प्यते लाघवात्। ज्ञानवित्तिवेद्य आत्मापि तद्विषय इत्यात्मविषयत्वं सर्ववित्तीनामिति चेत्—

---

प्रकाशः

नन्वेवं ज्ञानान्तरकल्पनागौरवमित्यत आह—इदमिति। तथाच प्रामाणिकं तन्न दोषायेत्यर्थः। अनुव्यवसायस्यैतदाकारत्वेऽपि व्यवसायस्यैव तदाकारत्वं तयोरभेदादित्याह—भिन्नेति। बाधकादिति। अनवस्थालक्षणादित्यर्थः। वस्तुतो वित्तेरवश्यावेद्यत्वेनानवस्थैव नेति भावः।

तत्रात्मा कर्तृत्वेनेत्यादि दूषयति—अपि चेति। क्रियाया इति। धात्वर्थस्येत्यर्थः। अचेतनघटादिकर्तृत्वस्वीकर्तृवैयाकरणमतेनेदम्। आत्मानं जानामीत्यादावात्मनि [1]कर्मत्वं न स्यादित्यरुचेराह—करणेति। अन्यद्वेति। कृतित्वं [2]वेत्यर्थः। सर्वधात्वर्थे कृतिप्रवेशादित्याहुः। कार्यत्वं वेत्यर्थ इत्यन्ये। पूर्वमिति। न चाभावत्वविशिष्टबुद्धिरिव स्यादिति वाच्यम्। अभावत्वाभाने अभावाभाननियमात्। 'यद्येन विना न भासते' इति न्यायेन तद्विषयज्ञानं विनापि तत्संभवात्। प्रकृते ज्ञानाभानेऽपि सुखविशिष्टात्मभानान्नैवमिति विशेषणज्ञानसापेक्षैव तद्विशिष्टधीरिति। ननु विशिष्टबुद्धौ विशेषणज्ञानं हेतुरिति तव सिद्धान्तो

---

1. ख. कर्तृत्व    2. क. वेद्यर्थः

न। स्वजनकेन्द्रियसंनिकर्षानाश्रयत्वेन स्वस्य स्वाविषयत्वात्, विषयत्वनियामकेन्द्रियसंनिकर्षादेरभावे स्वविषयत्वानुपपत्तेः, कारणं विना कार्यानुत्पादात्, प्रत्यक्षाजनकस्य प्रत्यक्षविषयत्वानुपपत्तेश्च। आत्मधर्मप्रत्यासत्त्यनाश्रये प्रत्यक्षविषयताया जनकत्वव्याप्तत्वात्। ज्ञानस्य प्रत्यक्षत्वेन इन्द्रियसंनिकर्षाश्रयत्वात् मनस्संनिकर्षजन्यत्वेन मानसत्वम्।

तदयं प्रयोगः—[1]विवादाध्यासितमिन्द्रियजन्यं ज्ञानं [2]नैतज्ज्ञानविषयाश्रयः एतज्जनकेन्द्रियसंनिकर्षानाश्रयत्वात् एतदजनकत्वाद्वा असंनिकृष्टवत्। नैतज्ज्ञानविषयकं वा आत्मधर्मप्रत्यासत्त्यनाश्रयत्वे सति एतदजन्यत्वे च सति साक्षात्कारित्वात्। प्रत्यक्षविषयो ज्ञानं स्वप्रत्यक्षजनकेन्द्रियसंनिकर्षाश्रयः प्रत्यक्षविषयत्वादिति मनस्संनिकर्षग्राह्यम्। चाक्षुषं ज्ञानं न चक्षुर्जन्यज्ञानविषयः, चक्षुरसंनिकृष्टत्वात् घटवत्।

---

प्रकाशः

नास्माकमित्यभिप्रेत्य[3] शङ्कते—स्यादेतदिति। संनिकर्षानाश्रयत्वेन—संनिकर्षाद्यनाश्रयत्वेनेत्यर्थः। तथा च युगपदुभयसंनिकर्षाभावात् त्वदभ्युपगता विशिष्टधीसामग्री नास्तीत्यर्थः। संनिकर्षादेरित्यादिपदेन व्याप्त्यादिपरिग्रहः। न च पौनरुक्त्यम्। अप्रयोजकत्वशङ्कायां विषयत्वनियामकोत्कीर्तनेन तदभावात्। न च संनिकर्षादिवदभेदोऽपि विषयत्वनियामकोऽस्तु, अनुगमाभावस्य तुल्यत्वादिति वाच्यम्। प्रत्यक्षविषयत्वमात्रे संनिकर्षस्य हेतुत्वात् अन्यथा अननुगमापत्तेरिति वक्ष्यमाणत्वादिति भावः।

प्रत्यक्षेति। लौकिकप्रत्यक्षविषयत्वानुपपत्तेरित्यर्थः। यद्यप्येवमपि सामान्यप्रत्यासत्तिजन्यप्रत्यक्षविषये व्यभिचारः, तथापि लौकिकप्रत्यक्षविषयतायास्तत्प्रत्यक्षजनकत्वव्याप्यत्वादित्यत्र तात्पर्यम्। मनस्संनिकर्षजन्यत्वेनेति। [4]ज्ञानगोचरज्ञानस्येति शेषः। योगिप्रत्यक्षादौ भागे बाधासिद्धी इत्यत आह—विवादाध्यासितमिति। तथा च लौकिकज्ञानविशेषस्य पक्षत्वमिति भावः। [5]साध्यादावेतत्पदेन

---

1. ख. विवादपदम्
2. ख. नैतज्ज्ञानविषयं
3. ख. इत्यभिप्रायेण
4. ख. 'ज्ञानगोचर' नास्ति।
5. ख. साध्याभावे तत्पदेन

ज्ञानं प्रमेयमेवेति व्याप्तिज्ञानं ज्ञानत्वप्रत्यासत्त्या स्वविषयम् । ईश्वरज्ञानमहेतुकत्वेन सर्वविषयत्वात् स्वप्रकाशम् ।

ननु परप्रकाशकत्वे ज्ञानमेव न सिध्येत् अनवस्थानादिति धर्मिग्राहकमानात् स्वप्रकाशत्वसिद्धौ अनन्यगतिकतया स्वस्यासंनिकृष्टस्यापि प्रत्यक्षविषयत्वम्, अतो धर्मिग्राहकमानबाधितास्त्वदीयहेतव इति चेत्—न । वित्तेरवश्यवेद्यत्वाभावेनानवस्थाविगमात् । संयुक्तसमवायेन मनोवेद्यत्वाभावादपेक्षणीयान्तराभावाच्च उत्पन्नैव कुतो नावश्यवेद्येति चेत्—न । सुखादितद्बुद्ध्यादिसामग्र्या प्रतिबन्धात्, विषयान्तरसंचारदर्शनेन तस्या बलवत्त्वात् अनुद्भवादिति केचित् ।

---

प्रकाशः

च तस्यैव परामर्श इति सामान्यव्याप्तौ सामान्यप्रत्यासत्तिजन्ये अन्त्यहेतौ व्यभिचारेऽपि न दोषः, विशेषव्याप्तेरेवाभिमतत्वादिति बोध्यम् । आत्मेति । [1]अलौकिकप्रत्यासत्त्यजन्यत्व इत्यर्थः । न चैवमपीश्वरज्ञाने व्यभिचारः । साक्षात्कारित्वस्येन्द्रियजन्यत्वपरत्वात् । अत एवानुमित्यादावपि न व्यभिचारः । अनुव्यवसाये व्यभिचारादाह—एतदजन्यत्व इति । चाक्षुषमिति । चक्षुर्जन्यलौकिकज्ञानविषयो नेत्यर्थः । यद्यपि [2]चक्षुरसंनिकृष्टत्वमसिद्धम्, तथापि [3]लौकिकसंनिकर्षानाश्रयत्वादिति हेतुर्बोध्यः ।

नन्वेवं स्वजनकेन्द्रियसंनिकर्षानाश्रयतया ज्ञानं प्रमेयमेवेति व्याप्तिज्ञानमपि स्वविषयं न स्यादित्यत आह—ज्ञानमिति । तथा च ज्ञानत्वसामान्यलक्षणसंनिकर्षाश्रयतयैव स्वविषयत्वमित्यर्थः ।

नन्वेवमीश्वरज्ञानं न स्वविषयं स्यात् । तत्रोक्तगतेरप्यभावादित्यत आह—ईश्वरेति । तथा च संनिकर्षस्य जन्यप्रत्यक्षतामात्रनियामकतया अजन्यस्य [ईश्वरज्ञानस्य] सर्वविषयतया स्वविषयत्वं स्यादेवेति भावः । क्लृप्तहेत्वभावेनैव तदग्रहे संभवत्यनुद्भूतत्वकल्पनायां गौरवमित्यस्वरसात् केचिदित्युक्तम् ।

---

1. ख. लौकिकप्रत्यासत्तिजन्यत्व
2. क. चक्षुरसंनिकृष्टं सिद्धम्
3. क. लौकिकचक्षुरसंनिकर्षा-

योग्यात्मविशेषगुणत्वात् ज्ञानत्वात् ज्ञानं प्रत्यक्षमेवेति व्याप्तेः वित्तेरवश्यवेद्यत्वेन स्वप्रकाशत्वमिति चेत्—न। व्याप्तेरसिद्धेः, परप्रकाशकत्वेऽनवस्थानात्। स्वप्रकाशे कारणानुपपत्तेः संनिकृष्टमेव प्रत्यक्षं तद्विषयजन्यमेव प्रत्यक्षमिति व्याप्तेश्च। अन्यथा कारणं विना कार्यानुत्पत्तिव्याप्तेर्विनिगमकं कारणसत्त्वेऽपि प्रतिबन्धात् कार्यानुत्पादे कारणत्वमप्रत्यूह्यम्। क्लृप्तकारणं विना कार्योत्पादे कारणताभङ्गः कार्यानुत्पादश्च।

अपि च परप्रकाशेऽनवस्थानात् परिशेषानुमानेन ज्ञानस्य स्वप्रकाशत्वम्। तथा च स्वप्रकाशत्वानुमितेरपि स्वप्रकाशत्वमनुमित्यन्तरगम्यमेवं तस्यापीत्यनवस्था स्वप्रकाशत्वानुमितिपरम्पराद्वारा तवापि स्यात्। विषयान्तरसंचारस्य प्रतिबन्धकत्वं यावज्जिज्ञासं वा स्वप्रकाशत्वानुमितिरिति यदि, तुल्यं परप्रकाशत्वेऽपि।

न च ज्ञानं स्वप्रकाशमित्यनुमित्या स्वप्रकाशत्वमपि सामान्यप्रत्यासत्त्या विषयीकृतमिति वाच्यम्। परतःपक्षेऽपि तुल्यत्वात् त्वया तदनभ्युपगमाच्च।

किं चानुमित्यादौ जातिसंकरान्न [तव] प्रत्यक्षत्वम्। न च ज्ञानसापेक्षं मनो जनकमित्यनुमितिविषयवदात्मनि न तत्प्रत्यक्षम्। तस्य

---

प्रकाशः

योग्येति। एतच्च भावनावारणाय। असंनिकृष्टगन्धादौ व्यभिचारादाह—आत्मेति। इच्छादीनां पक्षसमत्वान्न व्यभिचार इत्याशयः। ननु योग्येति यदि व्यक्तिपरं तदा विशेषपदवैयर्थ्यम्। यदि योग्यजातीयपरं तदा जीवनयोनियत्ने [1]व्यभिचारादित्यरुचेराह—ज्ञानत्वादिति। निर्विकल्पकानभ्युपगमान्न व्यभिचारः। सिद्धसाधनभिया [2]प्रत्यक्षपदं प्रत्यक्षविशेषपरमवश्यं वाच्यम्। एवं सत्याह—व्याप्तेरिति। कारणेति। [3]स्वात्मरूपविषयसंनिकर्षादिकारणानुपपत्तेरित्यर्थः। ननूक्तव्याप्तिबलादसंनिकृष्टमपि प्रत्यक्षमस्त्वित्यत आह—संनिकृष्टमेवेति

---

1. क. व्यभिचारादित्याह
2. क. प्रत्ययपदं
3. ख. स्वात्मसंनिकर्षादिरूपविषय-

स्वविषयत्वे ज्ञानानपेक्षेति चेत्—न। ज्ञानं ज्ञानजन्यं, तच्च स्वविषये स्वात्मन्येकमेवेति कथं तदपेक्षं तदनपेक्षं च विरुद्धत्वात्। न च ज्ञानभिन्नविषयत्वं सापेक्षम्, तथात्वे बहिर्ज्ञानं प्रत्यक्षं न स्यात्।

अथान्यस्यान्यविषयत्वे संनिकर्षादिर्नियामकः, स्वविषयत्वे किं तेन, अनतिप्रसङ्गात् संनिकर्षस्याननुगमाच्च। व्यवहारे शक्तत्वं विषयत्वमभेदे संनिकर्षं विनापीति चेत्—न। अन्यत्र [1]प्रत्यक्षमात्रे संनिकर्षस्य हेतुत्वात्, अन्यथाननुगमापत्तिः। अथ या वित्तिः न वेद्या सा प्रमाणाभावादसतीति तदधीनसत्त्वस्य विषयपर्यन्तस्यासत्त्वं स्यादिति चेत्—न।

---

प्रकाशः

सामान्यप्रत्यासत्त्येति। स्वप्रकाशत्वानुमितीनां स्वप्रकाशत्वमवश्यवेद्यमपि न [2]निरन्तरानुमितिधाराक्रमेणैव गृह्यते, येनानवस्था स्यादित्यर्थः। ममापि सर्वं ज्ञानमवश्यं वेद्यमपि ज्ञानत्वप्रत्यासत्त्या गृह्यते, न तु निरन्तरानुव्यवसायधारयेति नानवस्थेत्याह—परतःपक्षेऽपीति। प्रत्युत तवैव दोष इत्याह—[3]त्वयेति।

ननु ज्ञानस्य स्वभावविशेष एव स्वविषयत्वम्, तदेव च स्वप्रकाशत्वम्। तच्च स्वग्राह्यमेवेति न तद्ग्राहकानुमितिधारानुसरणम्। अतो मम नानवस्थेत्यरुचेराह—किं चेति। ननु मम साक्षात्त्वं न जातिः, अपि तु ज्ञानानपेक्षेन्द्रियजन्यत्वमुपाधिरिति क्व संकर इत्यत आह—तवेति। विरुद्धत्वादिति। ननु यथा भ्रमो धर्मिविषयत्वावच्छेदेन दोषानपेक्षः तद्धर्मविषयत्वावच्छेदेन च तदपेक्षस्तन्मते, तथा ममाप्यनुमित्यादिकमर्थविषयत्वावच्छेदेन [4]ज्ञानसापेक्षं स्वात्मविषयत्वावच्छेदेन तदनपेक्षमस्त्विति चेत्—न। एकस्मिन्नेव कार्ये एकस्यैव कारणस्यापेक्षानपेक्षयोर्विरोधस्य ब्रह्मणापि दुरपनेयत्वात्। भ्रमे च धर्म्यंशेऽपि दोषादिकारणस्यापेक्षणात्। न चैवं धर्म्यंशेऽपि भ्रमत्वापत्तिः। न हि तदंशे दोषानपेक्षणादभ्रमत्वम्, किं तु स्वभावादित्येके। स्वविषयत्वस्य जन्यतानवच्छेदकत्वात् न स्वविषये

---

1. ख. प्रत्यक्षविषयमात्रे
2. ख. 'निरन्तरानुमिति ... ज्ञानत्वप्रत्यासत्त्या गृह्यते' इति ग्रन्थस्त्रुटितः।
3. ख. 'त्वयेति...नानवस्थेत्यरुचेराह' इति ग्रन्थो नास्ति।
4. क. ज्ञातसापेक्षं

[1]अविरललग्नतद्वित्तिवित्तिधारा नाभ्युपेयते । किं नाम केनचित्कदाचित्काचिद्वित्तिर्व्यवहारस्मरणलिङ्गादिना प्रतीयत इति सर्वा प्रमाणसिद्धैवेत्यभ्युपगमात् ।

अथ स्यादेव यदि घटोऽयं घटमहं जानामीत्यतोऽधिका घटतद्वित्तिधारावाहिविषयशतभारमन्थरा काचिद्वित्तिरस्मदादेरुत्पद्यमानानुभूयेत । न चैवम्, इति चेत्—न । अनुव्यवसायो विषयमात्रनिरूप्यः, न तु तद्विषयपरंपरानिरूप्यो गौरवात् । तथा च ज्ञानज्ञानत्वेन सर्वा वित्तिरस्मदादेरुत्पद्यमाना अनुभूयत एव । न चैवमनिर्मोक्षः । योगजधर्मप्रत्यासत्त्या सामान्यलक्षणया वा व्याप्तिज्ञानरूपस्याननुव्यवसायस्यापि स्वविषयत्वाभ्युपगमात् ।

---

प्रकाशः

प्रत्यक्षत्वम्, सामान्यसामग्र्यां ज्ञानत्वस्यैवावच्छेदकत्वात्, विशेषसामग्र्यां स्वविषयत्वस्य सर्वज्ञानसाधारण्येनातिप्रसक्तत्वादिति तात्पर्यमित्यन्ये ।

ननु स्वविषयत्वं ज्ञानभिन्नम् । तच्च ज्ञानानपेक्षमेवेत्याशङ्क्य निराकरोति —न चेति । निराकरणमाह—तथात्व इति । अस्तु वा ज्ञानभिन्ने विषयत्वे ज्ञानानपेक्षा तथापि ज्ञानं ज्ञानसापेक्षमनोजन्यमेवेति स्वात्मविषये प्रत्यक्षं न स्यादित्यर्थः । यद्येवं [2]विषयतानियामकाननुगमस्तदा तवापि तुल्यमित्याह—संनिकर्षस्येति ।संयोगादिसाधारणस्यैकस्य संनिकर्षत्वस्य दुर्वचत्वादित्यर्थः । एवं चाभेदोऽपि विषयतानियामकोऽस्त्वित्याह—व्यवहारेति । अन्यत्रेति । न च संनिकर्षत्वस्यैकस्याभावः । अन्ततः [3]संयोगाद्यन्यान्यत्वस्यैव तत्त्वात् । अभेदस्यापि तदन्तर्भावे गौरवादित्याहुः । वस्तुतोऽन्यान्यत्वेनाहेतुत्वादिन्द्रियार्थप्रतियोगिकसंबन्धत्वेन हेतुत्वम् ।

अथेति । तथा च वित्तेरवश्यवेद्यत्वे अनवस्था ध्रुवेति भावः । एवमप्यवश्यवेद्यत्वे पूर्वपूर्वज्ञानीयसर्वविषयावगाहिज्ञानोत्पादापत्तिरित्याह—अथेति । एवं च ज्ञानज्ञानत्वेन सर्वा धियः प्रतीयन्ते न तु तद्विषयत्वेनापीत्याह—तथा चेति ।

---

1. ख. अविरलवित्तितद्वित्तिधारा
2. ख. विषयतया नि-
3. क. संयोगाद्यन्योन्यत्व-

न च तद्व्यवहारशक्तत्वं तद्विषयत्वम् । तद्विषयत्वेन तद्व्यवहार-कारणत्वग्रहे सति तच्छक्तत्वज्ञानं, तच्छक्तत्वं च तद्विषयत्वमित्यन्योन्याश्रयात्, कारणत्वग्रहं विना शक्तेरग्रहात्, त्वन्मतेऽपि रजतज्ञानस्य शुक्तिविषयत्वापत्तेश्च । रजतार्थिप्रवृत्तौ रजतज्ञानं हेतुः, न तु तदवच्छेदक-मित्युक्तत्वात् । लाघवेन स्वविषये ज्ञानस्य प्रवर्तकत्वम्, सर्वैरेवाद्यप्रवृत्तौ तथावगमादिति चेत्—हन्तैवमन्यथाख्यातिरस्तु, न तु अन्यथासिद्धरजत-ज्ञानस्याप्रवर्तकत्वमिति ।

एतेन यथा तद्गुणसंविज्ञानबहुव्रीहिसिद्धं कुटादिपदमशक्यमपि कुटं गणमादायैव प्रधानमन्यपदार्थं बोधयति तथा ज्ञानमविषयमप्यात्मान-मादायैव स्वविषये व्यवहारं करोति संस्कारं च । स्वजन्यव्यवहारविषये ज्ञानस्य संस्कारजनकत्वात् । स्वजन्यव्यवहारविषयः स्वात्मा विषयश्चेति प्राचीनं गुरुमतमपास्तम् ।

अन्यत्र लाघवेन ज्ञानस्य स्वविषये व्यवहारसंस्कारजनकत्वकल्पनात् स्वविषये स्वात्मनि व्यवहारसंस्कारजनकत्वात् । व्यवहारसंस्कारयोः स्वविषयज्ञानैसाध्यत्वेन स्वाविषयकज्ञानासाध्यत्वात् ।

ननु ज्ञानस्य मानसत्वे कथं जानामीति विशिष्टबुद्धिः ज्ञानत्वनि-र्विकल्पकजन्यज्ञानक्षणे [1]विशेष्याभावेन प्रत्यक्षानुत्पत्तेरिति चेत्—न । ज्ञाननाशक्षण एव ज्ञाने ज्ञानत्वविशिष्टबुद्धिः विशेष्यस्य पूर्वक्षणसत्त्वात् । प्रत्यक्षे स्वसमयवर्तितया गौरवेण विशेष्यस्याहेतुत्वात् । जानामीति वर्त-मानत्वेन स्थूल उपाधिर्भासते न तु क्षणः, तस्यातीन्द्रियत्वात् । ततो ज्ञानविशिष्टबुद्धिरात्मनि विशेषणज्ञानस्य पूर्वसत्त्वात् । विशेषणं च न

प्रकाशः

ननु ज्ञानसिद्ध्यर्थं ज्ञानान्तरावश्यकत्वे काशेषविशेषगुणोच्छेदो मोक्ष इत्याह—न चेत्यमिति । यद्यप्येकस्य ज्ञातुः सत्त्वेऽप्यन्यस्य मोक्षः संभवति तथापि सर्व-मुक्तिर्न स्यादित्यर्थः । तद्विषयत्वेनेति । तद्विषयत्वज्ञानात् तद्व्यवहारकारणत्वज्ञानं, ततश्च तच्छक्तत्वरूपतद्विषयत्वज्ञानमित्यन्योन्याश्रय इत्यर्थः ।

1. ख. विशेष्यस्याभावेन प्रत्यक्षानुपपत्तेः

विशिष्टप्रत्ययहेतुः गौरवात्, किं तु तज्ज्ञानम्, आवश्यकत्वात्। अत एव तत्तां विनापि तद्बुद्धिः प्रत्यभिज्ञा।

यत्तु व्यवसायनाशक्षणोत्पन्नव्यवसायान्तरे ज्ञानत्वविशिष्टबुद्धिरिति। तन्न। तद्धेतोरभावात्। अनुमिनोमीत्यादावनुव्यवसाये अनुमितित्वाभावाच्च। यद्वा ज्ञानं ज्ञानत्वं च निर्विकल्पके भासते ततो ज्ञानत्ववैशिष्ट्यं ज्ञाने ज्ञानवैशिष्ट्यं चात्मनि भासते। विशेष्ये विशेषणं, विशेषणे विशेषणान्तरं च भासत इत्येव हि विशिष्टवैशिष्ट्यार्थः।

---

प्रकाशः

स्वाविषये शुक्तौ रजतज्ञानस्य प्रवर्तकतैव नेति शङ्कते—लाघवेनेति। (गुणं)[गणं]प्रधानम्। स्वसमयवर्तित्वेनैव विशेष्यस्य प्रत्यक्षहेतुत्वमिति मन्यमानस्य मतमाह—यत्त्विति। व्यवसायान्तरे तत्समानविषयके तदुत्पत्त्यग्रिमक्षण एव विशिष्टबुद्धिः, तदा तस्य विशेष्यस्य सत्त्वात् तदव्यवहितपूर्वक्षणे ज्ञानत्वनिर्विकल्पकस्य च सत्त्वादिति भावः। तद्धेतोरिति। । घटत्वज्ञानघटेन्द्रियसंनिकर्षादेरित्यर्थः। प्रत्यक्षे क्वचित्तथा संभवेऽपि[1] घटानुमितिस्थले सर्वथा तदसंभव इत्याह—अनुमिनोमीति। अनुव्यवसाये—अनुव्यवसायस्थले। [2]अनुमितिनाशक्षणोत्पन्नव्यवसायान्तर इति साध्ये पूरणीयम्। सिद्धसाधनेन तत्समानविषयानुमित्यसंभवादिति भावः। यद्वा अनुमिनोमीति स्थले अनुव्यवसाये [3]व्यवसायपाश्चात्त्ये तन्नाशक्षणोत्पन्नव्यवसायान्तर इत्यर्थः। तन्नाशक्षणे अनुमित्यात्मकस्य [4]व्यवसायान्तरस्यासंभवात् तदनुव्यवसायरूपमेव व्यवसायान्तरं तत्र वाच्यम्। तत्र चानुमितित्वासंभवादुक्तप्रकारासंभव इत्यन्ये।

विशिष्टवैशिष्ट्यज्ञाने न विशेषणतावच्छेदकप्रकारकज्ञानत्वेन विशेषणज्ञानं हेतुः गौरवात्। किं तु तृणारणिमणिन्यायेनोभयोरपि हेतुत्वम्। एवं च व्यवसायनाशक्षणे [5]तद्विशेष्यकं न तज्ज्ञानम्, किं त्वात्मविशेष्यकमेव। तथा च विशेष्यस्य स्वसमयवर्तित्वेन प्रत्यक्षहेतुत्वेऽपि न दोष इत्याशयेनाह—यद्वेति।

---

1. ख. 'अपि' नास्ति। 2. ख. अनुमितीयक्षणोत्पन्न-
3. ख. 'व्यवसायपाश्चात्त्ये तन्नाशक्षणोत्पन्न' इति नास्ति।
4. ख. व्यवसायस्य 5. ख. तद्विशेष्यकज्ञानं

वस्तुतस्तु ज्ञानमभाव इव विशिष्टज्ञानविषय एव, अनुव्यवसायस्य विषयरूपविशेषणविषयकव्यवसायसाध्यत्वेन विशिष्टज्ञानसामग्रीसत्त्वात्। ज्ञानत्वमपि तत्र भासते तज्ज्ञानसामग्रीसत्त्वात्। अंशे तत्सप्रकारकं निष्प्रकारकं चेति नरसिंहाकारम्। तत्रैव विशिष्टज्ञाने ज्ञानत्ववैशिष्ट्यं भासते। अनुमिनोमीत्यादौ तु न तथा, अनुव्यवसायेऽनुमितित्वाभावादिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे अनुव्यवसायवादः

—: * :—

---

प्रकाशः

ज्ञानमभाव इति। तथा च ज्ञानांशेऽपि निर्विकल्पकमित्येव पूर्वास्वरसः, पूर्ववद्विशिष्टवैशिष्ट्यबोधोऽत्रापि मते भवत्येवेत्यवधेयम्।

यद्यप्यनुमिनोमीत्यनुरोधात् उक्तप्रकारानुसरणमावश्यकम्, तथापि जानामीत्यत्र कदाचिदन्योऽपि प्रकारः संभवतीत्याह—तत्रैवेति। नरसिंहाकारज्ञान एव ज्ञानत्ववैशिष्ट्यं भासते, तदात्मकस्यैव ज्ञानत्वरूपविशेषणज्ञानस्य पूर्वं सत्त्वादिति भावः। एतेन वर्तमानावगाहिप्रत्ययोऽप्युपपद्यत इति बोध्यम्। विशिष्टज्ञानोत्कीर्तनेन [1]निर्विकल्पकस्यातीन्द्रियतया कथं तस्य प्रत्यक्षविषयत्वमिति निरस्तम्। वैशिष्ट्यानवगाहिज्ञान एवायोग्यत्वात् अस्य चातथात्वात्। ज्ञानमात्रस्यैव योग्यत्वं, संबन्धितावच्छेदकरूपेण संबन्धिनिरूपणं [2]विना न संबन्धनिरूपणमिति तद्विरहादेवान्यस्याप्यन्यत्र तद्विषयत्वेनाज्ञानादित्याहुः। अनुमिनोमीत्यादावित्युपलक्षणम्। नृसिंहाकारज्ञाने घटत्वप्रकारत्वाभावात तत्र ज्ञानत्ववैशिष्ट्यबोधे घटत्वेन जानामीत्याकारेण ज्ञानत्वघटत्वप्रकारोभयाश्रयज्ञानवैशिष्ट्यधीर्न स्यादित्यपि बोध्यम्।

[3]इति श्रीरुद्रदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
प्रत्यक्षखण्डे अनुव्यवसायवादः

—: * :—

---

1. ख. निर्विकल्पकत्वेनातीन्द्रियतया  2. क. विना नु
3. क. 'इदं Colophon' नास्ति।

# अथ निर्विकल्पकवादः

—:*:—

तच्च प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकं चेति। तत्र नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं निर्विकल्पकम्।

ननु ज्ञानत्वं सविकल्पकभिन्नवृत्ति इत्यत्र किं मानम्। न प्रत्यक्षम्, असिद्धेः, अतीन्द्रियत्वाभ्युपगमाच्च। न च व्यवहारः, तस्य सविकल्पकसाध्यत्वात्। नापीदं न विवेचितं पूर्वमधुना विवेचयामीत्यनुभवप्रमाणकावालोचनविकल्पौ, बहुविशेषणज्ञानाज्ञानाभ्यां तदुपपत्तेः।

ननु गौरिति प्रत्यक्षं विशेषणज्ञानजन्यम्, विशिष्टज्ञानत्वात् अनुमितिवदिति। अथ विशेषणविशेष्यज्ञानसामग्रीतः साकाङ्क्षोभयविषयमेकं विशिष्टज्ञानम्। तत्र प्रत्यक्षे योग्येन्द्रियसंनिकर्षात्, अनुमितौ पक्षधर्मताबलात् व्यापकत्वावच्छेदकप्रकारेण, शाब्दे योग्यतादिवशात् पदार्थतावच्छेदकरूपेणापूर्वमेव विशेषणं भासते, उपमितावप्येवमेवेति न क्वापि विशेषण-

---

**प्रकाशः**

ननु नृसिंहाकारज्ञानमसिद्धम्, निर्विकल्पकस्यैवासिद्धेरित्यत आह—**तच्चेति**। नन्वेवमपि तदनुपपन्नम्, [1]निर्विकल्पकत्वसविकल्पकत्वयोर्विरुद्धजात्योरेकत्रासमावेशादित्यत आह—**तत्रेति**। विपर्ययगर्भोपाधित्वं तयोर्न जातित्वमित्यर्थः। **नामयोजनारहितम्**—इत्यस्य वैशिष्ट्यानवगाहीत्यर्थः। तदेवाह—**वैशिष्ट्येति**। तदेव विवृणोति—**निष्प्रकारकमिति**। नन्वेवमपि निर्विकल्पके मानाभावात्तादृशज्ञानानुपपत्तिरेवेत्याह—**नन्विति**। तद्गोचरप्रत्यक्षाभ्युपगमे तवापसिद्धान्त इत्याह—**अतीन्द्रियत्वेति**। **न विवेचितमिति**। तथा चाविवेचनतया निर्विकल्पकमेवानुभूयत इति भावः। **साकाङ्क्षेति**। अगृहीतासंसर्गेत्यर्थः। अवच्छेद्यावच्छेदकभावापन्न इत्यर्थ इत्यन्ये।

---

1. ख. 'निर्विकल्पकत्व .... निष्प्रकारकमिति। नन्वेवमपि' इति ग्रन्थस्त्रुटितः।

ज्ञानं [1]जनकम् । न च प्रत्यभिज्ञायां तत्तानुभवस्तथा । तत्तानुभवेऽपि संस्कारस्यानुद्बोधात्, विलोपाद्वा प्रत्यभिज्ञानानुत्पादेन उद्बुद्धः संस्कार एव प्रत्यासत्तितया विशेषणज्ञानार्थमिन्द्रियसहकारी । सुरभि चन्दनमित्यादावपि विशेषणज्ञानार्थं तज्ज्ञानं प्रत्यासत्तिस्थानीयमिन्द्रियसहकारि । भ्रमो विशिष्टज्ञानमेव नास्तीति चेत्—

उच्यते । साध्यप्रसिद्धिपदार्थोपस्थितिवाच्यत्वज्ञानतत्तानुभवानामनुमित्यादिहेतुत्वम् । साध्यप्रसिद्ध्यादिकं विना [2]अनुमित्यादेरसंभवात् । साध्यादिकं च विशेषणमिति तज्ज्ञानमनुमित्यादिहेतुः । यद्यपि अनुमित्यादिप्रत्येकं प्रति साध्यादिविशेषणज्ञानत्वेन न कारणता । तथापि विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन कारणता, बाधकाभावात् ।

---

प्रकाशः

अपूर्वमेवेति । पूर्वाज्ञातमेवेत्यर्थः । एवमिति । तत्पदविशेषस्यापूर्वतया [3]तद्घटितं तद्वाच्यत्वमपूर्वमेवेत्यर्थः । संस्कार एवेति । यदि च स्मृतिरेव हेतुस्तदा सापि प्रत्यासत्तितयैव, सुरभीत्यादिवदिति भावः । भ्रम इति । [4]स्वमते वस्तुगतिमनुरुध्योक्तम् । विशिष्टज्ञानत्वपक्षेऽपि तत्र ज्ञानस्य प्रत्यासत्तित्वसंभवादिति ध्येयम् ।

साध्यप्रसिद्धीति । यद्यपि साध्यतावच्छेदकप्रकारकं व्यक्त्यन्तरस्यैव ज्ञानमनुमितौ हेतुः, एवमन्यत्रापीति न क्वापि विशेषणधीजन्यत्वमिति मतम् । तथापि विशेषणतावच्छेदकप्रकारावच्छिन्नव्यक्तिज्ञानमेव विशेषणज्ञानत्वेनाभिमतम् । तज्जन्यत्वं चानुमित्यादावुभयसिद्धमेवेत्यर्थः । स्वमतावष्टम्भेन तथोक्तमित्यन्ये ।

यद्यपीति । यद्यपि साध्यादिज्ञानत्वेनापि नैव कारणता, व्याप्तिज्ञानादिसत्त्वे तद्विलम्बेन कार्याविलम्बात्, व्याप्तिज्ञानादिरूपस्यास्य[5] व्याप्तिज्ञानत्वादिनैव हेतुत्वात् । तथापि विशेषणज्ञानत्वेन कारणत्वाभावमात्रे तात्पर्यम् । बाधका-

---

1. ख. हेतुः
2. ख. अनुमित्यादेस्तदभावात्
3. क. 'तद्' नास्ति ।
4. ख. स्वमतेति ।
5. क. 'अस्य' नास्ति ।

स्यादेतत् । वह्निमानित्यादिज्ञानं प्रति वह्निज्ञानस्य न विशेषणज्ञानत्वेन कारणता, द्रव्यत्वेन वह्निज्ञानेऽपि वह्निमानिति ज्ञानाभावात् । किं तु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन, अतो न विशिष्टज्ञाने विशेषणज्ञानं

---

प्रकाशः

भावादिति । एतच्चोपलक्षणम् । जन्यविशिष्टज्ञानलक्षणकार्यस्याकस्मिकतापत्त्या अनुगतहेतुगवेषणायामुक्तपर्यवसानात् । न चाभावत्वादेः [1]पूर्वमज्ञातस्यैव प्रकारत्वाभ्युपगमेन तद्विशिष्टप्रत्यक्षे व्यभिचारः । तदन्यत्वेनापि विशिष्टज्ञानविशेषणात् ।

वस्तुतोऽधिकरणविशेषणज्ञानजन्यत्वान्नोक्तव्यभिचारः । न चैवमन्यत्राप्यन्यविशेषणज्ञानादन्यविशेषणविशिष्टबुद्ध्यापत्तिः । [2]तद्विशिष्टप्रत्यक्षे [3]तद्विशेषणज्ञानस्य विशेषसामग्रीत्वादभावत्वविशिष्टग्रहस्योक्तसामान्यसामग्रीत एवोपपत्तौ तत्र विशेषसामग्र्यन्तराकल्पनात् । अस्तु वा अधिकरणरूपविशेषणज्ञानत्वेन विशेषसामग्रीकल्पनम् । तदिदं वक्ष्यति—'विशेषसामग्रीविरहेण तत्कार्यानुदयात्' इति ।

अन्ये तु तन्मत इव नास्माकमपि धर्मधर्मिगोचरमेव विशिष्टज्ञानम्, येन समूहालम्बनवदुभय[4]ग्रहसामग्रीमात्रादुत्पद्येत । किंतु वैशिष्ट्यगोचरज्ञानम् । तथा च वैशिष्ट्यस्य संबन्धरूपतया तज्ज्ञानस्य संबन्धिभूतविशेषणधीर्जनिका । संबन्धश्च प्रतियोगिनिरूप्यो न त्वनुयोगिनिरूप्योऽपि । रूपवानित्यत्र च रूपसमवायो भासते न तु द्रव्यप्रतियोगिकः । अन्यथा द्रव्यवद्रूपम् इत्यपि धीः स्यात् । संयोगे च व्यासज्यवृत्तितयोभयापेक्षेति वदन्ति ।

तच्चिन्त्यम् । एवमभावत्वानुपस्थितौ तद्विशिष्टधीरपि न स्यात् । न चातिरिक्तः संबन्धः संबन्धिनिरूप्य इति वाच्यम् । एवं च प्रथममेव घटाभाववद्भूतलमिति धीः स्यात् । यदि च यद्विशेषयोरिति न्यायानुसरणम्, तदा तदेवास्तु किमनया कुसृष्ट्येति । अतिप्रसक्तत्वादिति । द्रव्यत्वेन वह्निज्ञानेऽपि वह्निमानिति ज्ञानाभावादिति भावः । तादृशेति । विशेषणतावच्छेदकप्रकारकेत्यर्थः । विशिष्टेति ।

---

1. ख. पूर्वमनुपस्थितस्यैव
2. क. तत्र विशिष्ट-
3. क. तद्विशेषस्य
4. ख. 'ग्रह' नास्ति ।

हेतुः। विशेषणज्ञानत्वमपि तत्रास्तीति चेत्—न। तस्यातिप्रसक्तत्वात् अन्यथासिद्धेश्च। न च तादृशविशेषणज्ञानजन्यत्वं साध्यम्, बाधादिति।

तन्न। विशिष्टवैशिष्ट्यज्ञानं प्रति हि विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणमुभयसिद्धम्। अतो विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानं हेतुः। यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि बाधकं विना [1]कार्यकारणभावनियमात्, अन्यथा सामान्यकार्योच्छेदः। न चातिप्रसङ्गः, विशेषसामग्रीविरहेण तत्तत्कार्यविशेषानुदयात्। न च परोक्षत्वमुपाधिः। प्रत्यभिज्ञायां साध्याव्यापकत्वात्। नापि विशिष्टविशेषणकत्वं, पक्षेतरत्वादिति।

मैवम्। तवापि स्मृतिवत्पूर्वानुभवस्य संस्कारद्वारा जनकत्वात् सिद्धसाधनात्। न चाव्यवहितविशेषणज्ञानजन्यत्वं साध्यम्, अप्रयोजकत्वात् प्रत्यभिज्ञावत् स्मृत्यैवोपपत्तेर्वा। नापि तत एवाव्यवहितविशेषणानुभवजन्यत्वं साध्यम्, अप्रसिद्धेः प्रत्यभिज्ञानादौ व्यभिचाराच्च।

अथ तत्कालोत्पन्नरूपादिविशिष्टप्रत्यक्षे संस्काराभावेन स्मरणाभावात् पक्षधर्मताबलेन निर्विकल्पकसिद्धौ अन्यत्रापि सामग्रीतौल्यात्तत्सिद्धिरिति

---

प्रकाशः

ननु विशिष्टज्ञानसामग्रीद्वयसमाजमहिम्ना विशिष्टवैशिष्ट्यज्ञानोपपत्तौ तत्त्वं न कार्यतावच्छेदकं नीलघटत्ववत्। न वा तत्प्रकारकत्वं कारणतावच्छेदकमिति चेत्—न। सुरभि चन्दनमित्यादिचाक्षुषविशिष्टवैशिष्ट्यज्ञाने तदभावात्। न हि विशेषणज्ञानमात्रं विशिष्टज्ञानसामग्री, किं तु [2]योग्यविशेषणसंनिकर्षोऽपि। गन्धे चक्षुरयोग्यत्वेन सामग्रीद्वयाभावादिति।

गौरिति प्रत्यक्षमित्यत्र उपाधिमाशङ्क्य निराकरोति—न चेति। न च विशेषणज्ञानध्वंसानुव्यवसाययोः साध्याव्याप्तिः। अनुव्यवसायभिन्नभावत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात्। यत्तु विशेषणज्ञानत्वेन तज्जन्यत्वं साध्यम्, तच्च तत्र नेति नोक्तदोष इत्याह। तन्न। साध्याप्रसिद्धेः, अनुमित्यादौ तथा [3]अजन-

---

1. ख. तथात्वनियमात्
2. क. योग्यविशेष्य-
3. ख. जनक-

चेत्— न । प्रत्युत्पन्नविशेषणस्थले हि शुक्लत्वादिविशिष्टशुक्लवैशिष्ट्यबोधो वा अविशिष्टतद्विशिष्टबोधो वा, आद्ये शुक्लत्वादिस्मरणं प्रथमम्, ततः प्रत्यक्षेण तद्विशिष्टशुक्लबोधः, ततः शुक्लत्वादिविशिष्ट[1]शुक्लादिवैशिष्ट्यबोधः द्रव्य इति किमनुपपन्नम् । शुक्लत्वादिजातिस्मरणमेव वा सामान्यलक्षणया सकलरूपादिविषयमस्तु । द्वितीयेऽननुभवः । न हि शुक्लत्वादि-[2]प्रत्ययविलक्षणं शुक्लरूपादिविशिष्टबोधं कश्चिदनुभवति ।

अथ जागराद्यविशिष्टानुभवो विशेषणज्ञानजन्यो विशिष्टज्ञानत्वात् । न च तत्र संस्कारद्वारा पूर्वविशेषणानुभवः तज्जन्यविशेषणस्मरणं वा तत्र संभवति । उद्बोधकं विना संस्कारस्य स्मरणे विशिष्टबोधे वा सामर्थ्याभावादित्युद्बोधकं वक्तव्यम् । उद्बोधकं चान्यत्र ज्ञानं दृष्टमिति तदेव वाच्यम् । न च तद्विशिष्टज्ञानमेव, तत्रापि विशेषणज्ञानापेक्षायामनवस्थापत्तेरित्यालोचनसिद्धिरिति । तन्न । सत्यपि ज्ञाने संस्कारानुद्बोधात् । यस्मात् फलं भवति स ज्ञानविशेषस्तथेति चेत्—न । अननुगतत्वात् । यदनन्तरं फलं दृश्यते तदेवाननुगतमप्युद्बोधकं कल्प्यते फलबलादिति चेद्—तर्हि जागरकारणानन्तरं संस्कारोद्बोधोऽस्तीति तदेव कारणमस्तु, क्लृप्तत्वात् । अत एव संस्कारोद्बोधे न नियतो हेतुरिति ।

'सदृशादृष्टचिन्ताद्याः स्मृति(जीवस्य)[बीजस्य]बोधकाः' इत्याहुः ।

---

प्रकाशः

कत्वात् । प्रत्यभिज्ञायामिति । यद्यपि प्रत्यभिज्ञा तत्तांशे परोक्षैव, तथापि स्वमतदार्ढ्येनैतदुक्तम् । पक्षेतरत्वादिति । [3]पक्षपक्षसमेतरत्वादित्यर्थः । ननु दण्डिप्रत्यक्षविशेषादौ तत् प्रसिद्धमित्यरुचेराह—प्रत्यभिज्ञान इति । शुक्लत्वादिजातीति । यद्यपि मीमांसकानां नैतन्मतम्, तथापि तवैवमप्युपपत्तिरिति भावः । सामान्यलक्षणयेति । परंपराप्रयोजकत्वाभिप्रायेणेदमिति बोध्यम् । सत्यपीति । तथा च तन्नोद्बोधकमिति भावः । तदेवेति । [4]जागरकारणमेवोद्बोधकमित्यर्थः ।

---

1. ख. शुक्लवैशिष्ट्यप्रत्ययः
2. ख. °प्रत्यक्षविलक्षणम्
3. ख. 'पक्ष' नास्ति
4. क. जगत्कारणम्

[1]एवं च प्रणिधानादिसूत्रमपि संगच्छते। अपि च विशिष्टज्ञानत्वादित्यत्र व्यवच्छेद्यमविशिष्टज्ञानम्। तच्चाप्रसिद्धम्। सिद्धौ वा व्यर्थमनुमानम्। ज्ञानत्वं च स्वतोऽसिद्धव्याप्तिकं निर्विकल्पके व्यभिचारादनवस्थापाताच्च।

किं च विशिष्टज्ञानत्वं न तावत् वस्तुगत्या विशेषणविशेष्यविषयकज्ञानत्वम्, आलोचनेन व्यभिचारात्। नापि विशेषणत्वविषयकत्वम्। अतद्व्यावृत्तिबोधजनकज्ञानविषयत्वस्य विशेषणत्वस्य तत्राप्रकाशात्। नापि वैशिष्ट्यविषयकज्ञानत्वम्। तथा सति गौरिति विकल्पे वैशिष्ट्यं विशेषणमित्यालोचनस्यापि तद्विषयत्वेन विशिष्टज्ञानत्वे अनवस्थापातादिति।

नापि सप्रकारकज्ञानत्वम्, प्रकारश्च विषयताविशेष इति वाच्यम्। ज्ञानविषयस्वरूपातिरिक्ताया विषयताया अभावात्। न च विशेषणज्ञानजन्यत्वं सप्रकारत्वम्। यद्विशेषणज्ञानजन्यं यत् स एव तत्र प्रकार इति गौरिति विकल्पे तस्यैव साध्यत्वात्, ईश्वरज्ञानस्य निष्प्रकारकत्वापाताच्च। नाप्यतद्व्यावृत्तिविषयत्वं विशिष्टज्ञानत्वम्। अपोहवादनिरासेन गौरिति विकल्पे तथात्वासिद्धेः। नाप्यतद्व्यावृत्तिबोधजनकत्वं तत्। आलोचनव्यावृत्तानुगतरूपमन्तरेण अतद्व्यावृत्तबोधजनकत्वस्य ग्रहीतुमशक्यत्वात्। न च गौरिति

---

प्रकाशः

एवं चेति। तद्बोधकस्यानियम इत्यर्थः। प्रणिधानेति। 'निरन्तराभ्यास' इत्यादिसूत्रं संस्कारस्य प्रणिधानाद्यनेकोद्बोध्यत्वप्रतिपादकम्। स्वत इति। स्वतोऽपीत्यर्थः। तथा सतीत्यादि। विशेष्यविशेषणातिरिक्तं [2]न भासत इत्यभिमानेनेदम्। गौरिति। तथा च साध्याविशेष इति भावः। अपोहेति। अतद्व्यावृत्तेर्वैशिष्ट्यरूपत्वनिरासेन गोत्वादिजातेरतद्व्यावृत्तिरूपत्वनिरासेन चेत्यर्थः।

एतदन्येति। एतज्ज्ञानान्यसविकल्पकान्यदेतदेव निर्विकल्पकं वा संभवति। एतद्भिन्नत्वं च बाधितमिति पक्षधर्मताबलान्निर्विकल्पकभिन्नत्वं सिध्यती-

---

1. ख. अत एव    2. क. 'न' नास्ति।

ज्ञानमेतदन्यसविकल्पकान्यज्ञानभिन्नं प्रमेयत्वात्, यद्वा चक्षुः [1]चाक्षुषसविकल्पकज्ञानातिरिक्तज्ञानजनकम् इन्द्रियत्वादिति तत्सिद्धिः। अप्रयोजकत्वात्, उभयत्र सविकल्पकपदानन्तरं निर्विकल्पकादिपदप्रक्षेपेण तृतीयादिज्ञान[2]सिद्धिप्रसङ्गाच्चेति।

अत्रोच्यते। प्राथमिकं गौरिति प्रत्यक्षं ज्ञानं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत्। न च स्मरणं तत्र संभवति। तज्जन्मनि तेन गोत्वस्याननुभवात्।

अथ यथा बालस्याद्यप्रवृत्तिबलात् प्राग्भवीयसंस्काराद्व्याप्तिस्मरणं तथेहापि जन्मान्तरीयसंस्कारात् गोत्वस्मरणमस्तु, प्राथमिकविशिष्टज्ञानबलादिति चेत्—न। जीवनादृष्टेन तत्र संस्कारोद्बोधात्तथास्तु। इह तु न विलक्षणमुद्बोधकमस्ति।
अतो गोत्वासंनिकर्षेऽपि गोत्वस्मरणप्रसङ्गः। य एव गोत्वेन्द्रियसंनिकर्षस्तव निर्विकल्पके हेतुः स एव संस्कारोद्बोधक इति चेत्—तर्हि अत्र क्लृप्तकारणभावात् गोत्वेन्द्रियसंनिकर्षात् गोत्वानुभव एव स्यात्, स्मरणसामग्रीतोऽनुभवसामग्र्या बलवत्त्वात्। न च तद्विशिष्टज्ञानम्, पूर्वं विशेषणज्ञानाभावादित्यर्थान्निर्विकल्पकम्। अत एव न तत्र ज्ञानत्वेन विशिष्टज्ञानत्वानुमानम्, कारणबाधेन बाधात्। यदि चानुभवसामग्रीतः स्मरणं तदा नित्यानां वैदिकार्थानां च स्मरणं स्यात् न त्वनुभवः।

---

प्रकाशः

त्यर्थः। जन्येति। यद्यपि स्मरणे पूर्वानुभवस्य विशेषणज्ञानत्वेन न हेतुत्वमित्यपि प्रागुक्तम्। तथापि विशेषणज्ञानजन्यत्वमस्त्येवेति न तत्र व्यभिचारः। ज्ञानपदमनुभवपरं वा। संस्कारजन्यत्वे स्मृतित्वापत्तेः। स्मृतिजन्यत्वमेवाशङ्क्य निराकरोति—न चेति।

(यतो)[अतो]गोत्वेति। न च तदा गोत्वस्मरणमनुभूयत इति भावः। स एवेति। तथा च गोत्वासंनिकर्षेऽपि न स्मरणप्रसङ्ग इति भावः। न च

---

1. ख. चाक्षुषविशिष्टज्ञाना- 2. क. 'सिद्धि' नास्ति।

न च गोत्वज्ञानं गोत्वज्ञानजन्यं जन्यज्ञानजन्यं जन्यविशेषणज्ञान-जन्यं चेत्यन्यत्र दर्शनात् प्रथमं न गोत्वानुभव इति वाच्यम्। एकस्यैव जन्यजनकत्वानवच्छेदकत्वात् अनवस्थापाताच्च।

ननु गौरित्यत्र गोत्ववैशिष्ट्यं गवि भासते। तथा च तद्विषयकं ज्ञानं स्यात्, तच्च निर्विकल्पकमिति चेत्—गोत्वं हि तत्र विशेषणम्, न तु तद्वैशिष्ट्यम्।

---

प्रकाशः

गोत्वेति। गोत्ववैशिष्ट्यांशप्रवेशे गौरवादिति भावः। तथा चानुभवसामग्री तत्र नास्त्येव [1]कुतस्तत्रास्या बलवत्त्वमिति तात्पर्यम्। एकस्यैवेति। एवं च प्रामाणिकं गौरवमिति भावः।

अत्रेदं चिन्त्यम्। जन्यज्ञानत्वेन विशेषणज्ञानजन्यता, जन्यविशेषणज्ञान-त्वेन जनकतेति नोक्तदोषः। न च विशेषणेति गौरवम्, तवापि तुल्यत्वात्, उक्तदोषनिरासार्थमेव तदन्तर्भावाच्च। किं च बीजस्य बीजजन्यत्वे यथा [2]बीज-त्वमेवोभयावच्छेदकं तथेदमस्तु। यदि च पूर्वोत्तरबीजत्वेन तथात्वम्, तदा प्रकृतेऽपि तथास्तु। अनवस्थापाताच्चेत्यप्ययुक्तम्। कादाचित्कं सामग्रीजन्यम् इतिवत् प्रामाणिकत्वात्। न च [3]तत्र तथात्वेऽपि प्रकृते न तथात्वम्, जन्य-ज्ञानमात्रस्य जन्यज्ञानजन्यत्वे ज्ञानाविरामे प्रायणाद्यनुपपत्तेरिति वाच्यम्। अवि-रलभ्रमज्ञानधाराभ्युपगमे हि तथा स्यात्। प्रथमानुभवे च स्मरणस्य हेतुत्वात् तस्य च जन्मान्तरानुभवजन्यत्वात् एवं तत्पूर्वजन्मनीति प्रायणाद्युपपत्तेः। एवं चानवस्थाया: क्वचिद्विश्रामस्वीकारे सामान्यतो व्यभिचारावगमात् विशिष्टपदं सार्थकमित्यपि निरस्तमित्यपि बोध्यम्।

अपि च निर्विकल्पकाभ्युपगमेऽपि तस्यादृष्टद्वारा जन्यज्ञानजन्यतया जन्यज्ञानं ज्ञानजन्यमिति व्याप्तेरुभयसिद्धत्वात्कथं नानवस्था। प्राथमिकज्ञानस्या-दृष्टद्वारा जन्मान्तरज्ञानजन्यत्वादिति यदि, तदा प्राथमिकस्मरणस्य संस्कारद्वारा जन्मान्तरानुभवजन्यतया ममापि तुल्यमिति।

---

1. ख. कुतस्तथा चलत्वमिति
2. ख. ०बीजमेव
3. ख. 'तत्र' नास्ति।

ननु तथाभूतविशेषणधीजन्यविशिष्टज्ञाने विशेषणं स्वधर्मविशिष्टं कथं भासेत, पूर्वं तस्यानवगमात्। अवगमे वा तस्यापि विशेषणान्तरवतो विशेषणमिति अनवस्थेति चेत्—न। गौरिति विशिष्टज्ञाने [1]विशिष्टस्य गोत्वस्याभानात्।

अथ सर्वं विशेषणं विशेषणवदेव। गोत्वादावपि व्यक्त्यादेर्विशेषणत्वादिति चेत्—अस्तु तथा। किं तु विशेषणं विशेषणवदेव भासेतेति न नियमः। अन्यथा गौरिति ज्ञाने विशेषणतद्विशेषणानन्तपरंपराविषयत्वे विषयापर्यवसानप्रसङ्गः। क्वचिन्निर्विशेषणस्यापि भाने प्रथमतोऽपि तथा स्यादविशेषात्। न च विशिष्टज्ञानत्वादित्यत्र हेतोर्व्यर्थविशेषणत्वम्। येन विशेषणेन विना व्याप्तिर्ग्रहीतुं न शक्यते तस्यैव सार्थकत्वात्। व्यभिचारवारकस्यापि सार्थकत्वे एतदेव मूलम्। इहापि ज्ञानत्वविशेषणज्ञानजन्यत्वयोः विशेषणं विना व्याप्तिः ग्रहीतुं न शक्यते, अनवस्थानात् सामान्यतो [2]व्यभिचारावगमात्।

अत एव चक्षुस्तैजसत्वादिसाधने रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यादौ असिद्धिवारकमपि विशेषणं सार्थकम्। तेन विना रूपस्यैव

---

प्रकाशः

किं च जन्यानुभवत्वं जन्यतावच्छेदकमस्तु वैशिष्ट्यप्रवेशे गौरवात्, अनुभवत्वस्य जातित्वेन [3]बलवत्त्वात्। पूर्वोक्तयुक्त्या विशेषणज्ञानस्यानुभव[4]मात्रजनकत्वात्। एवं च प्राथमिकज्ञानहेतुस्मरणेऽपि न तदपेक्षेति कुतोऽनवस्थेति।

वैशिष्ट्यमपि विशेषणमिति [5]भ्रान्त्या देशयति—नन्विति। तस्यापीत्युपलक्षणम्। स्वधर्मविशिष्टविषयकस्य निर्विकल्पकत्वं न स्यादित्यपि बोध्यम्। अत एवेति। व्याप्तिग्राहकमात्रस्यैव सार्थकत्वादेवेत्यर्थः।

---

1. ख. अविशिष्टस्य मानात्
2. ख. व्यभिचारात्
3. ख. लघुत्वात्
4. ख. 'मात्र' नास्ति।
5. ख. भ्रान्त्योद्देशयति।

व्यञ्जकत्वादित्यस्याप्रसिद्धेर्व्याप्त्यग्रहात् । विशेषणं विनापि यत्र व्याप्तिग्रहस्तत्र व्यर्थविशेषणत्वम्, यथा नीलधूमत्वशरीराजन्यत्वादौ ।

यस्य यत्र यः संबन्धः स एव तत्र तस्य वैशिष्ट्यम् । तेन हि स्वासंबद्धेभ्यो व्यावृत्तो बोध्यते । यथा दण्डी पुरुष इति ज्ञाने दण्डसंबन्धः पुरुषेऽवगत इति तेनायमदण्डव्यावृत्तो बोध्यते तथा गौरिति विकल्पेऽपि । तथा च विशेषणवद्विशेष्यज्ञानत्वं विशिष्टज्ञानत्वम् । एतदेवातद्व्यावृत्तबोधजनकतावच्छेदकम् ।

ननु दण्डपुरुषसंबन्धा इत्यत्रापि दण्डसंबन्धः पुरुषेऽवगत इति ततोऽप्यदण्डव्यावृत्तपुरुषबोधः स्यादिति चेत्—भवत्येव, दण्डसंबन्ध एव पुरुषे दण्डज्ञानं विना न ज्ञायत इति ब्रूमः। यत्र विशिष्टज्ञानसामग्री नास्ति तत्र निर्विकल्पकम्, ज्ञानकरणजन्ये सर्वत्र विशेषणज्ञानजन्यत्वान्न तदिति प्रत्यक्षमेवैतदिति ।

अत एवाभावे न निर्विकल्पकम् । तद्बुद्धौ प्रतियोग्यधिकरणज्ञानयोः कारणत्वेन तदुभयविशिष्टज्ञानसामग्रीनियमात् । यद्यभावे न निर्विकल्पकं, तदा घटाभाववद्भूतलमिति ज्ञानं न स्यात्, विशेषणज्ञानं

---

प्रकाशः

ननु विशिष्टज्ञानत्वं वैशिष्ट्यज्ञानत्वम्, तच्चाप्रसिद्धम् । वैशिष्ट्यस्य पदार्थस्यास्माभिरप्यनभ्युपगमादित्यत आह—यस्येति । नन्वेतदेव कथमित्यत आह—तेनेति । स्वानाश्रयव्यावृत्तबुद्धि[1]जनकत्वस्यैव वैशिष्ट्यत्वादित्यर्थः। तथा चेति । विशेष्ये विशेषणवैशिष्ट्यविषयकज्ञानत्वमित्यर्थः । विशिष्टज्ञानस्योक्तरूपत्वे प्रमाणं [2]दर्शयति—एतदेवेति । दण्डिज्ञानस्येति शेषः । अन्यस्यासंभवादिति भावः । शङ्कते—[ ननु ][3]दण्डेति । भवत्येवेति । एतच्च यदि दण्डप्रतियोगित्वं पुरुषनिष्ठसंबन्धस्य तद्धीविषयस्तदा । वस्तुतस्तादृशसमूहालम्बने तथात्वानियम इत्याहुः । दण्डेति । अयमपि नियमः प्रत्यक्षे ।

---

1. ख. ०जनकस्यैव वैशिष्ट्यज्ञानत्वात्
2. क. सूचयति
3. ख. दण्डीति ।

विना तदभावात्। भावे वा न निर्विकल्पकसिद्धिः। विशिष्टज्ञानत्वस्य तत्रैव व्यभिचारादिति चेत्—न। प्रथमं भूतले घटो नास्तीति बुद्धिः। तत्र भूतलं विशेषणम्, अभावो विशेष्यः। विशेष्यज्ञानं च न कारणम्। पश्चाद्भूतलविशेष्यकं घटाभाववदिति ज्ञानम्।

ननु इन्द्रियसंबद्धविशेषणतया अभावो गृह्यत इत्युक्तम्। अतः कथं स विशेष्य इति चेत्—भूतलविशेषणतया स्वभावप्रत्यासत्त्या गृह्यत इति तदर्थः। न त्वभावस्य विशेषणतया भानमिति। अत एव वायौ रूपाभाव

---

प्रकाशः

शब्देन संबन्धोपस्थापने अन्यथापि। तथा समूहालम्बनसंभवादिति। प्रत्यक्षमेवैतदिति पदात् निर्विकल्पकमिति तु [1]मतान्तरेण बोध्यम्। तद्बुद्धाविति। अत एव संयोगादावपि न तदिति भावः। अधिकरणज्ञानमभावधीकारणमिति प्रायोवादः। शब्दाभावादिग्रहे तदभावादित्याहुः।

विशेष्यज्ञानं चेति। नन्वनुमित्यादौ पक्षादिज्ञानस्यापि हेतुत्वात् तुल्यन्यायेन विशेष्यज्ञानमपि हेतुरस्तु। तद्बलादभावादौ निर्विकल्पकमस्तु। विनिगमकाभावात्। [2]अथ लाघवेनाभावप्रत्यक्षत्वावच्छिन्ने अधिकरणादिग्रहस्य हेतुत्वाद्विशिष्टज्ञानसामग्रीसत्त्वेन तत्र तदिति चेत्—न। तदा विशेष्यज्ञानाभावादेव [3]विशिष्टज्ञानसामग्र्यसिद्धौ तत्संभवात्। एवं सामान्यप्रत्यासत्तिजन्यमपि निर्विकल्पकमस्तु। तथा च [4]तज्जन्यप्रत्यक्षे तद्व्यभिचारानवकाशः। यदि चावश्यकसंनिकर्षादेव तदुपपत्तौ न तज्ज्ञानं हेतुः, तदा विशेषणज्ञानेऽपि तुल्यम्। यद्विशेषयोरिति न्यायोऽपि तुल्य एव।

अथ सामान्यप्रत्यासत्तेः स्वप्रकारकज्ञानमात्रे सामर्थ्यात् तज्जन्यनिर्विकल्पकमिति चेत्—न। स्वभिन्नाप्रकारके तत्सामर्थ्यकल्पनात्। न चैवं गौरवम्, उक्तयुक्त्या तद्धेतुत्वे सिद्धे तन्मूलकत्वेन प्रामाणिकत्वात्। अन्यथा निर्विकल्पक-

---

1. ख. मतान्तरेणेति
2. ख. अन्यथा
3. ख. विशेष्यसामग्र्यसिद्धौ
4. ख. 'तज्जन्यप्रत्यक्षे...तुल्य एव। अथ' इति नास्ति

इति प्रतीतेश्चाक्षुषत्वमुक्तमाचार्यैः। अयोग्यविशेष्ये इन्द्रियस्यासामर्थ्यात्। ज्ञानत्वे च निर्विकल्पकं विषयविशिष्टत्वांशे सविकल्पकमपि। अनुव्यवसायस्य व्यवसायजन्यत्वेन नियमतः पूर्वं विषयरूपविशेषणभानात्तत्रैव ज्ञाने तदेव ज्ञानं निष्प्रकारकं सप्रकारकं चेति न विरुद्धम्, अंशभेदमादायाविरोधात्।

अत एव निर्विकल्पकत्वसविकल्पकत्वे न जाती, चाक्षुषत्वादिना संकरापत्तेः। गौरिति सविकल्पकमपि गोत्वांशे निर्विकल्पकमेव, तत्र प्रकाराभानात्, भाने वा अनवस्था निर्विकल्पकासिद्धिश्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे निर्विकल्पकवादः

—:*:—

प्रकाशः

कल्पनायामेव गौरवं स्यात्। अस्तु वा तथा, तथापि [1]पुरोवर्तिना वैशिष्ट्यविषयकत्वस्यापि तज्ज्ञाने संभवात् तदंशे स्वप्रकारकत्वमपि न दुर्लभम्। न चाप्रसिद्धसाध्यकानुमितौ व्यभिचारान्न तथा। तस्यैकदेशिमतत्वेन मतान्तरे तथाप्यप्रतीकारादिति [2]चिन्त्यम्।

[3]नत्विति। न तु अभावस्य विशेषणतयैव भानमिति तदर्थ इत्यर्थः। ननु तत्र वायुरेव विशेष्य इत्यत आह—अयोग्येति। नन्वेवं ज्ञानेऽपि निर्विकल्पकं न स्यात् विशिष्टधीसामग्रीसत्त्वात्, एवं च तत्तुल्यवित्तिवेद्यज्ञानत्वेऽपि तन्न स्यादित्यत आह—ज्ञानत्वे चेति।

अत एवेति। [4]अंशभेदेनाव्याप्यवृत्तेरेवेत्यर्थः। (संस्कारापत्ते)[संकरापत्ते]रिति। (संस्कारा)[संकरा]पत्तेश्चेत्यर्थः।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे निर्विकल्पकवादः

—:*:—

1. क. पुरोवर्तिनो
2. क. तच्चिन्त्यम्
3. क. नन्विति।
4. ख. अशंभेदेन

# अथ विशेषणोपलक्षणवादः

—: * :—

प्रकारश्च द्विविधः, विशेषणोपलक्षणभेदात् ।

ननु व्यावर्तकत्वाविशेषे कथं तयोर्भेदः । व्यावर्तकत्वे सति सत् विशेषणम्, असदुपलक्षणम्, यथा दण्डी पुरुषः कुरुणा क्षेत्रमिति चेत्— न । काकवद्देवदत्तगृहं जटाभिस्तापसः इत्यादावुपरि भ्राम्यतः काकस्य जटादेरसत्त्वेऽप्यविशेषणत्वात् उपलक्षणत्वाच्च ।

एतेन व्यावृत्तिबोधकाले व्यावर्तकं सद्विशेषणम्, असदुपलक्षणम् । तेन काकादीनां व्यावृत्तिबोधसमये सतां विशेषणत्वमेव, व्यावृत्तिबोधसमयेऽसतामुपलक्षणत्वम् । अत एव काकैः जटाभिः कुरुणेत्यादावित्थंभूतलक्षणे तृतीयेति निरस्तम् ।

व्यावृत्तिबोधसमये सतोऽप्युपरि भ्रमतः काकादेरविशेषणत्वात् उपलक्षणत्वाच्च ।

नापि विशेष्यवृत्तित्वे सति प्रत्याय्यव्यावृत्तिसमानाधिकरणत्वे सति व्यावर्तकं विशेषणम् । यद्वा यत्र विशेष्यत्वावच्छेदेन व्यावृत्त्या वा यत्स-

---

प्रकाशः

प्रसङ्गादाह—प्रकारश्चेति । व्यावर्तक इति शेषः । अव्यावर्तकप्रकारस्य प्रमेयत्वादेरुपरञ्जकत्वादिति भावः । व्यावर्तकत्वे सतीति । [1]व्यावृत्तिबुद्धिजनकज्ञानविषयत्वे सतीत्यर्थः । न हि धर्मः स्वरूपत एव विशेषणमुपलक्षणं वोच्यते, किंतु ज्ञानप्रकारीभूत [2]इति । अविशेषणत्वादिति । तथा च विशेषणलक्षणमतिव्यापकमुपलक्षणमव्यापकमित्यर्थः । अत एवेति । यत एवासदुपलक्षणमित्यर्थः । इत्थंभूत इत्यनेनातीतार्थकप्रत्ययेनासत्त्वस्य बोधनादित्यर्थः । सतोऽपीति । न च तदा तस्य विशेषणत्वमेव । तदाप्युपलक्षणत्वव्यवहार इति वक्ष्यते ।

---

1. ख. व्यावृत्तिबोधकज्ञान- 2. क. इत्यादि ।

मानाधिकरणत्वेन प्रतीयते तत्र तद्विशेषणम् । विशेष्यत्वं च प्रत्याय्यव्यावृत्त्यधिकरणत्वमिति जटाभिस्तापस इत्यादौ जटादावतिप्रसङ्गात् । न हि तापसे न जटा वर्तते ।

नापि विशेष्यसमानविभक्तिकत्वं विशेषणत्वम् । काकवत् देवदत्तगृहमित्यादावुपलक्षणेऽपि गतत्वात् । अनभिधानदशायामविशेषणत्वापाताच्च ।

अथ व्यावर्तकत्वे सति विशिष्टधीविषयत्वं विशेषणत्वम् । विशिष्टबुद्धिश्च न विशेषणत्वगोचरा गौरवात्, किंतु विशेषणविषया । विशेषणोपलक्षणसंदेहानुपपत्तेः ।

अत एव चाक्षुषत्वादिविरोधः । उपलक्षणत्वे तूपलक्षितं संस्थानादि विशिष्टधीविषयो न काकवत्त्वम्, तदभावेऽपि तद्गृहप्रतीतेस्ताद्रूप्यात् । अन्यथा भ्रमत्वापत्तेः । न च शब्दोपस्थापितस्य कथं शाब्दज्ञानबहिर्भाव इति वाच्यम् । तथैव व्युत्पत्तेः । न हि गङ्गायां घोष इत्यत्र प्रवाहोऽपि

---

प्रकाशः

क्वचित्प्रत्यये [1]किंचिद्विशेषणं न तु सर्वमित्यतो विशिष्याह—यद्वेति । यत्र प्रत्यये प्रतीयते विषयीक्रियत इत्यर्थः । तदिति । व्यावर्तकमिति शेषः । ननु विशेष्यत्वं विशेषणाश्रयत्वमित्यात्माश्रय इत्यत आह—विशेष्यत्वं चेति । न हीति । अत्र व्यावृत्त्यादिसामानाधिकरण्येन प्रतीयतेऽपीत्यर्थः । काकवदित्युपलक्षणम् । घटः पट इत्यभिधानात् तयोरप्यन्योन्यविशेषणतापात इत्यपि बोध्यम् । अनभिधानेति । न च तद्योग्यत्वम्, उपलक्षणव्यावृत्तयोग्यतावच्छेदकरूपापरिचयात् परिचये वा तस्यैव लक्षणत्वापत्तेरिति भावः ।

नन्विदं धीघटितं विशेषणं चाक्षुषं न स्यात्, तस्याश्चक्षुरयोग्यत्वादित्यत आह—विशिष्टबुद्धिश्चेति ।

तथा चेष्टापत्तेश्चाक्षुषत्वादिविरोधो न दोष इत्याह—अत इति । तदभावेऽपीति । यदि काकसत्त्वकाले तद्वत्त्वं विषयः स्यात् तदा काकाभावकाले

---

1. क. क्वचिद्विशेषणं

तीरावच्छेदकतया भासते। किंतु तीरत्वेन तीरविशेष एव। अन्यथा अजहत्स्वार्थासाम्यात्। न चैवमुपलक्षणपदस्य लाक्षणिकत्वम्, अन्वयस्य संस्थानादे[1]रुपस्थापनादिति वाच्यम्। उपलक्षणबुद्ध्युपस्थापितकारणान्तर-जन्यसंस्थानोपस्थित्या तदन्वये तात्पर्यादिति।

मैवम्। तथा व्युत्पत्तेरसिद्धेः। न ह्युपलक्षणपदातिरिक्तमुपलक्ष्योपस्थापकमस्तीत्युपलक्षणपदं स्वार्थमुपस्थाप्य, उपलक्ष्यमुपस्थापयतीति लक्षणैव स्यात्। अन्यथा लक्षणोच्छेदः। घटो नास्तीत्यत्रोपलक्षणस्य प्रतियोगिनोऽभावधीविषयत्वात् नियतोपलक्ष्याभावाच्च।

---

प्रकाशः

काकवत्त्वाकारा तद्गृहधीर्न स्यात्, बाधेन तदनवगाहित्वादिति भावः। बाधानवतारादिना तदवगाहित्वे वा भ्रमत्वापत्तिरित्याह—अन्यथेति। न चेष्टापत्तिः, प्रमात्वव्यवहारात्। तथा च भिन्नविषयत्वमिति भावः। तथैवेति। उपलक्षणादिपद इति शेषः। अन्यथेति। लम्बकर्णादिवदिति शेषः। उपलक्षणबुद्ध्या काकबुद्ध्या, उपस्थपितं कारणान्तरं तदधःप्रदेशादि तज्जन्यसंस्थानोपस्थितिरित्यर्थः[2]। उपलक्षणपदे तथैव व्युत्पत्तेरिति भावः।

तदेव दूषयति—न हीति। अधःप्रदेशादेः संस्थानोपस्थितिरित्यसंमतत्वादिति भावः।

अन्यथेति। अत्रापि गङ्गापदं नोपस्थापकम्, किं तु [3]पूर्वबुद्ध्युपस्थापितमत्स्यादीत्यस्य सुवचतया उपलक्षणत्वापत्तेरिति भावः। न चोपलक्षकपदस्य लाक्षणिकत्वे इष्टापत्तिरिति वाच्यम्। काकवन्त इति पदे काकवत्तया देवदत्तगृहस्य प्रतीतेरनुभवसिद्धत्वात्। न च [4]काकासत्त्वकाले भ्रमत्वापत्त्या संस्थानवत्तयैव तद्धीरिति वाच्यम्। कदाचित्काकसत्त्वविषयत्वेन पाकरक्ते श्यामताधीवद्यथार्थत्वादिति भावः।

---

1. ख. °रुपसंस्थानात्
2. ख. '°नोपस्थितिरित्यर्थः.... अत्रापि गङ्गापदं' इति ग्रन्थस्त्रुटितः।
3. ख. पुरबुद्ध्य-
4. ख. काकसत्व-

नापि व्यावर्तकत्वे सति क्रियान्वयि विशेषणम्, अन्यदुपलक्षणम्। क्रियाहीने [1]सुभगोऽयं दण्डी महाबाहुरित्यादौ दण्डादेरविशेषणत्वापातात्, परंपरया उपलक्षणेऽपि क्रियान्वयित्वाच्च।

अथ अतद्व्यावृत्तिर्वैशिष्ट्यम्। तथा च विशिष्टज्ञाने अतद्व्यावृत्तिर्विषयो न विशेषणमुपलक्षणं वा। तथा च विशिष्टधीकारणज्ञानविषयत्वे सति प्रत्याय्यव्यावृत्तिसमानाधिकरणं विशेषणमिति।

---

**प्रकाशः**

नन्वेवं प्रतीतिकलहः। तथा च संस्थानवत्त्वमेव तद्विषय इति लक्षणापत्तिरिष्टैवेति नोपलक्षणातिव्याप्तिरित्यत आह—घट इति। शाब्द्यामेवं संभवेऽपि प्रत्यक्षादौ काकविषयत्वे बाधकाभाव इत्यपि बोध्यम्। ननु तत्रापि तदुपलक्षितविषयत्वमेवास्तामित्यत आह—नियतेति। गृहे संस्थानवदभावे तादृशोपलक्ष्याभावादित्यर्थः। क्रियेति। विशेष्यान्वयिक्रियेत्यर्थः। अत एव विशेष्येऽतिव्याप्तिवारणाय सत्यन्तमित्याहुः।

ननु तत्राप्यस्तिक्रियाध्याहारो व्याकरणसिद्धेरित्यरुचेराह—परंपरयेति। अवच्छेदकतयेत्यर्थ इत्येके। काकवतो देवदत्तगृहान् पश्येत्यत्र गृहपरिचायकत्वेन काकस्यापि दर्शनक्रियान्वयादित्यर्थ इत्यन्ये। [2]प्रत्याय्येति। विशिष्टज्ञानविषयीभूतेत्यर्थः। अत एवातद्व्यावृत्तिर्वैशिष्ट्यमित्याद्युपपद्यत इत्याहुः। न च सत्यन्तं व्यर्थम्, सास्नादेरपि गौरिति प्रतीतिविशेषणत्वापत्त्या [3]तदतिव्याप्तिवारकत्वात्। घटत्वादावतिव्याप्तिदोषे सत्येवाह—[4]नीलमिति। तथा च व्यावृत्तिविषयत्वासिद्ध्या लक्षणासिद्धिरिति भावः।

ननु व्यावृत्तित्वेन ज्ञाने प्रतियोगिज्ञानापेक्षा, अन्यथा समवायस्यापि वैशिष्ट्यविषया भानं न स्यात् संबन्धतया ग्रहादित्यरुचेराह—नीलमिति। अन्यथा नीलव्यावृत्तं जानामीति स्यादिति भावः।

ननु व्यावृत्तिर्वैशिष्ट्यं प्रकारस्तु नीलत्वमेवेति तत्प्रकारत्वेनैवानुव्यवसीयते व्यवसायो, न तु व्यावृत्तिप्रकारकत्वेनेत्यरुचेराह—अपोहेति। गौरिति विशिष्ट-

---

1. ख. सुभगो हि महाबाहुर्दण्डी
2. ख. प्रकार्येति।
3. क. 'तद्' नास्ति।
4. ख. निश्चयमिति

तन्न। नीलमुत्पलमित्यादावनीलानुल्लेखे अतद्व्यावृत्त्यनुल्लेखात्, नीलं जानामीत्यनुव्यवसायविरोधात् अपोहापाताच्च।

अथ व्यावर्तकं साक्षात्संबद्धं नीलादि, परंपरासंबद्धं गृहोपरि भ्रमत् काकादि, तत्र व्यावर्तनीयमधितिष्ठति यद्धि साक्षादेव तद्विशेषणम्, अतो विपरीतमन्यत्।

दण्डी पुमानिति विशेषणम् अत्र दण्डः पुंसो, न जातिः अनुदण्डमसौ च तस्येति संबन्धिद्वयातिरिक्तसंबन्धघटकाभावे सति संबन्ध एव साक्षात्संबन्धः। स च संयोगसमवायस्वरूपसंबन्धसाधारणो ज्ञाने विषयस्याधिकरणे अभावस्य संबन्धिनि समवायस्यास्तीति तेषामपि विशेषणत्वमिति शिवादित्यमिश्राः।

तन्न। गौरनित्यो, रूपवान् चलति, रूपवति रस इत्यादौ जाते रूपस्य च साक्षात्संबन्धेऽप्युपलक्षणत्वात्। लोहितः स्फटिक इत्यादौ परंपरासंबन्धेऽपि लोहितत्वस्य विशेषणत्वात्।

अथान्वयप्रतियोग्युपस्थापकतया अन्वितमुपलक्षणम्, साक्षादन्वितं विशेषणम्। काकादेः संस्थानाद्युपस्थापकतया उपयोगात्, अतथात्वे

---

प्रकाशः

ज्ञानेऽप्यगोव्यावृत्तेरेव विषयत्वे तद्भिन्नविषयत्वे मानाभावात् सैव गोत्वमित्यपोह-[1]मतापात इत्यर्थः। वस्तुतो व्यावृत्तेर्वैशिष्ट्यत्वे मानाभाव इत्यपि तात्पर्यम्। विपरीतमिति। परंपरासंबन्ध[द्ध]मुपलक्षणमित्यर्थः।

न जातिरिति। अनुदण्डं दण्डे दण्डत्वं जातिः पुंसो न विशेषणम्, किं त्वसौ दण्डस्य विशेषणमित्यर्थः। न च प्रतियोग्युपलक्षणेऽतिव्याप्तिः। साक्षात्संबन्धेनाधेयत्वस्य विवक्षितत्वात्।

ननु साक्षात्संबन्धस्य संयोगादिरूपत्वेनाननुगमाल्लक्षणाननुगम इत्यत आह संबन्धीति। उपरि भ्रमत्काकादौ संबन्धिद्वयातिरिक्तः संबन्धघटक[2] इति भावः।

---

1. ख. °मतमापातवः    2. ख. 'घटक' नास्ति।

दण्डादिवद्विशेषणत्वमेवेति चेत्—न। उपलक्षणस्य लाक्षणिकत्वापत्तेः, प्रतियोगिनोऽभावे धर्मान्तरानुपनयाच्च।

अथ व्यावृत्तिबुद्धिसमये विशेष्यसंबद्धं व्यावर्तकं विशेषणम्, तदानीं विशेष्यासंबद्धं व्यावर्तकमुपलक्षणम्। न च जटा यदा यत्रास्ति तदा तत्रोपलक्षणम्। अत एव तत्रैव तदेव संबन्धसमये विशेषणम्, असंबन्धसमये उपलक्षणमिति।

तन्न। रूपवति घटे रस इत्यादौ रूपस्य विशेषणत्वप्रसङ्गात्। दण्ड्यासीदित्यादावतीते दण्डस्य अविशेषणत्वापाताच्च।

एतेन यत्र यद्विशेष्यतावच्छेदकधर्मेण व्यावृत्त्या वा समानाधिकरणत्वेन प्रतीयते तत्र तद्विशेषणमित्यपि प्रत्युक्तम्।

अत्रोच्यते। दण्डी पुरुष इति ज्ञानानन्तरं दण्डवत्यदण्डव्यावृत्तिरवगम्यत इति प्रत्याय्यव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते न

---

प्रकाशः

[1]साक्षात्संबन्ध[द्ध]काकजटादावतिव्याप्तिदोषे सत्येवाह—गौरिति। लोहित इति। परंपरासंबन्धेनैव तस्य विशेषणत्वम्। साक्षात्संबन्धविषयत्वेन तत्प्रतीतेर्भ्रमत्वे [2]शुक्तिरजतवदसंग्राह्यतापत्तेः।

अथान्वयेति। प्रकारभेदान्न पौनरुक्त्यमत्रेति ध्येयम्।

दण्ड्यासीदिति। विद्यमानध्वंसप्रतियोगिदण्डवानित्यादावित्यर्थः, न तु दण्डध्वंसवानिति, अत्र ध्वंसस्यैव पुरुषविशेषणतया[3] दण्डस्यातथात्वादिति। एतेनेति। एतेनापीत्यर्थः। अन्यथा प्रागेवास्य निरासेन पौनरुक्त्यापत्तेः। अत्र साक्षात्संबन्धेन समानाधिकरणत्वं विवक्षितम्, अतो न पौनरुक्त्यमित्यन्ये। दण्डवतीति। दण्डोपरागयुक्त एवेत्यर्थः। दण्डकालवृत्तिरेव व्यावृत्तिरवगम्यत इति तात्पर्यम्। अतिव्याप्तेरिति। [4]दण्डविगमदशायामुक्तव्यावृत्तिविरहिणि तस्मिन्नेव पुरुषे तत्सत्त्वादित्यर्थः।

---

1. क. साक्षात्संबन्धः काक-
2. ख. शुक्तिरजतसंग्राह्य-
3. ख. विशेषतया
4. ख. दण्डविनिगमकदशा-

पुरुषत्वेन, अतिव्याप्तेः । उपलक्षणे तु गृहतापसादिनिष्ठप्रत्याय्यव्यावृत्त्यधिकरणता न काकजटादिभिरवच्छिद्यते, तदभाववत्यपि व्यावृत्तिप्रतीतेः । किं तु संस्थानविशेषवत्त्वादिना ।

एवं च प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकं विशेषणम्, तदन्यव्यावर्तकमुपलक्षणम् ।

---

प्रकाशः

तदभाववतीति । तदभावकालीनाया अपि व्यावृत्ति[चे]स्ततः प्रतीतेरित्यर्थः । संस्थानविशेषवत्त्वादिनेत्यत्र आदिपदेन तापसादिनिष्ठव्रतविशेषधारित्वादिसंग्रहः । एवं चेति । [1]प्रत्याय्येति तत्तद्व्यावृत्त्यधिकरणलाभाय । तेन यद्व्यावृत्त्यधिकरणतावच्छेदकं यत्तदेव तद्व्यावृत्तिबोधे विशेषणमित्यर्थो लभ्यते । अन्यथा काकादेरपि किंचिद्व्यावृत्त्यधि[2]करणतावच्छेदकत्वेन सर्वत्र विशेषणतापत्तिः । व्यावृत्त्यधि[3]करणतावच्छेदकत्वं तु तदन्यूनानतिरिक्तकालीनविशेष्यसंबन्धवत्त्वम् । तेनोपलक्षणकाकादिव्युदासः । ततः [4]काकादिविरहकालीनाया अपि काकाद्यत्यन्तायोगवद्व्यावृत्तेः प्रतीत्या तस्य तदधिकरणतान्यून[5]कालीनविशेष्यसंबन्धवत्त्वात् । दण्डस्य न तथा, पुरुषे दण्डसंबन्धकालीनाया एव दण्डायोगवद्व्यावृत्तेस्ततः प्रतीतेः । दण्डद्वयमासीदित्यादितोऽपि यदा दण्डसंबन्ध आसीत्तदा तत्कालीनाया एवादण्डव्यावृत्तेः प्रत्ययात् । एवं द्वित्वविशिष्टप्रत्यक्षेऽपि बोध्यम् ।

गौरित्यादौ गोत्वादिसमनियतस्याप्रकारीभूतधर्मस्य विशेषणत्वप्रसङ्गवारणाय व्यावर्तकमिति । प्रत्याय्यव्यावृत्तिप्रत्ययानुकूलज्ञानप्रकार इत्यर्थः ।

न च प्रतियोगिन्यभावविशेषणतापत्तिः । [6]तस्यापि स्वविरहकालीनाया अप्यभाव[7]निष्ठव्यावृत्तेर्बोधकतया [8]तदधिकरणतानवच्छेदकत्वात् ।

अन्ये तु—तदवच्छेदकत्वं संयोगादाविव तेन समं स्वरूपसंबन्धविशेषः ।

---

1. ख. प्रत्ययेति ।
2. ख. °करणजनकताव°
3. ख. करणत्वं
4. ख. 'विरह' नास्ति ।
5. ख. °कालीनत्वेन विशेष्य-
6. ख. तस्या अपि
7. ख. 'निष्ठ' नास्ति ।
8. ख. तदधिकरणावच्छेदक-

**प्रकाशः**

स [1]चानतिरिक्तधर्म एव। एवं च प्रत्याय्यव्यावृत्तेरभावनिष्ठायास्तदसमानाधिकरणत्वेन प्रतियोगिनोऽनवच्छेदकत्वान्नोक्तदोष इत्याहुः।

एवं च [2]स्वायोगवद्व्यावृत्तिबोधे काकस्यापि विशेषणत्वम्। स्वात्यन्तायोगवव्द्यावृत्तिबोधे तु उपलक्षणत्वम्। गुरुत्ववति रस इत्यत्र गुरुत्वाभाववव्द्यावृत्तिबोधे [3]गुरुत्वस्य विशेषणत्वमिष्टमेव। नीरसव्यावृत्तिबोधे तस्य नोपलक्षणत्वमपीति व्यावर्तकत्वाभावादेवाप्रसङ्गः। उपलक्षणत्वव्यवहारस्तु यत्र यद्विशेष्यान्वयिना विधेयेनान्वयि तद्विशेषणम्, अन्यदुपलक्षणमिति मतान्तरेण पृथगेव। अन्यथा दण्डी पुरुष इत्यत्र पुरुषत्वानन्वयात् दण्डस्यापि तथात्वापत्तिरित्यपरे।

ननूक्तानां वैचित्र्यं कथमिति चेत्—अत्र वदन्ति। काकवन्तो देवदत्तगृहा इत्यत्र गृहे काकस्यात्यन्तायोगव्यावृत्तिरपि प्रतीयते, न तु तद्योगमात्रम्। सा च कदाचित्तत्र काकसंबन्धे जाते काकविगमदशायामस्तीति तदापि तत्प्रतीयत एव। तथा च तत्प्रतीत्या काकात्यन्तायोगवव्द्यावृत्तिरपि बोध्यते, तदानीं [4]तस्याश्च सत्त्वात्। दण्डीत्यत्र तु दण्डायोगव्यवच्छेदो न प्रतीयते, किं तु दण्डयोग एव। स च दण्डविगमदशायां तत्र नास्तीति तदा तत्र प्रत्येतुं न शक्यते। अत एव तदा तत्र दण्डसंयोगरहितव्यावृत्तिर्न प्रतीयते [5]न वा अस्ति। तदानीं दण्डयोगरहितत्वात्। काकादेरपि तथात्वे विशेषणत्वमिष्टमेव। न हि जात्यैव विशेषणत्वमुपलक्षणत्वं वेति।

ननु यदि दण्डविगमदशायां दण्डिनो दण्डयोगरहितत्वं तदा तद्व्यावृत्तिः कदापि न स्यात्, अन्योन्याभावस्य प्रतियोगितावच्छेदकविरोधित्वादिति चेत्—एकावच्छेदेनैव तयोर्विरोधेन दण्डकालावच्छेदेन तत्र तद्व्यावृत्तौ विरोधाभावात्। तस्मादन्योन्याभावस्याप्यव्याप्यवृत्तिमतेनेदम्। मतान्तरे तु चिन्त्यम्।

अन्ये तु विशेषणेन स्वात्यन्ताभाववद्व्यावृत्तिरेव बोध्यते। न तु स्वायोगवद्व्यावृत्तिः। भेदाभेदापातात्। [6]अत एवासत्यपि दण्डे पाकरक्ते श्यामधी-

---

1. ख. स चातिरिक्त-
2. ख. स्वायोगव्यावृत्तिबोधकस्यापि
3. ख. 'गुरुत्वस्य...यद्विशेष्यान्वयिना' इति ग्रन्थो न दृश्यते।
4. ख. तस्यास्तत्र सत्त्वादेव
5. ख. न चास्ति
6. ख. तथा सत्यपि

व्यावृत्त्युल्लेखानन्तरमेव विशेषणत्वबुद्धिः । तदाहुराचार्याः—'सदसद्वा समानाधिकरणं व्यवच्छेदकं विशेषणम्, व्यधिकरणमुपलक्षणम्' इति । अस्यार्थः स्वाधिकरणमात्रवृत्तिव्यावृत्तिबोधकत्वं स्वावच्छिन्नाधिकरणताकव्यावृत्तिबोधकत्वं स्वानधिकरणाधिकरणकव्यावृत्त्यबोधकत्वे सति व्यावृत्तिबोधकत्वं वेति। उपलक्षणं तु स्वानधिकरणेऽपि व्यावृत्तिं बोधयति ।

अथवा विवक्षितान्वयप्रतियोगितावच्छेदकं विशेषणम् । दण्डिनमानयेत्यादौ दण्डस्तथा । तदनवच्छेदकमुपलक्षणम्, काकेन देवदत्तस्य

---

प्रकाशः

वद्दण्डिधीर्यथार्था अदण्डव्यावृत्तिका च । एवं च काकजटादेरप्यकाकाजटादिव्यावृत्तिबोधे विशेषणत्वमेव । [1]अदेवदत्तगृहादिव्यावृत्तिबोधे चोपलक्षणत्वम् ।

नन्वेवं [2]व्यावर्तकत्वमेवास्तु, प्रतियोग्यवृत्तिधर्मज्ञानस्य [3]व्यावृत्तधीहेतुतया [4]प्रतियोगितावच्छेदकाभावस्यैव व्यावर्तकत्वं न तु काकादेरप्यदेवदत्तगृहव्यावृत्तिबोधकत्वम्, मानाभावात् । तथा च सत्यन्तवैयर्थ्यमिति चेत्—

मैवम् । व्यावृत्तिधीप्रयोजकस्यैव व्यावर्तकत्वेनोक्तत्वात् । देवदत्तगृहत्वादिविशेषणपरिचायकत्वेन काकादेरपि तथात्वात् । न हि दण्डिधीरपि साक्षाद्दण्डव्यावृत्तधीकारणम् । अधिकरणज्ञानानुपलब्ध्यादितद्धीसामग्रीसत्त्वे प्रतियोग्यवृत्तिधर्मग्रहं विना तद्धीविलम्बाभावात् । अपि तु प्रतियोगितावच्छेदकानुपलम्भसंपादकतया परंपरया, दण्डवत्त्वेनोपलम्भे अदण्डवत्त्वापलम्भाभावादित्याहुः ।

नन्विदं व्यावृत्तिगर्भं विशेषणत्वं तदनुल्लेखे विशिष्टबुद्धौ न भासेतेत्यत आह—व्यावृत्त्युल्लेखेति । विशेषणत्वं विशिष्टधीविषय एव न, यदि वा विषयतदा वैशिष्ट्यप्रतियोगित्वरूपं तदिति भावः । समानाधिकरणमिति । प्रत्याय्यः व्यावृत्तिसमानाधिकरणमित्यर्थः । यथाश्रुते तस्याव्याप्तिरेव स्यादिति । तात्पर्यार्थमाह—अस्यार्थ इति । स्वाधिकरणदेशकालमात्रवृत्तिव्यावृत्तिबोधकत्वं स्वाधि-

---

1. ख. देवदत्त-
2. ख. व्यावर्तकमेवास्तु
3. ख. व्यावृत्तधीहेतुमयात्
4. ख. 'प्रतियोगिता ... मानमावात्' इति ग्रन्थस्त्रुटितः ।

गृहा इत्यादौ काको न गृहस्य देवदत्तान्वयप्रतियोगितावच्छेदकः, तद्विरह-दशायामपि देवदत्तान्वयावगमात् । किं तु गृहविशेष एवोपलक्षणपरिचितः । अत एवान्वयाप्रतियोगित्वेऽपि नोपलक्षणवैयर्थ्यम् ।

यद्वा यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयेतरान्वयधीः तद् व्यवच्छेदकं विशेषणम्, अनेवंभूतं तदुपलक्षणम् । उपलक्षणानवच्छिन्नेऽप्युपलक्ष्ये तात्पर्यविषयीभूतान्वयबोधात् ।

---

प्रकाशः

करणत्वान्यूनानतिरिक्तदेशकालवृत्ति[1]व्यावृत्तिबोधकत्वं, [2]स्वानधिकरणावस्थधर्म्यधिकरणकव्यावृत्त्यबोधकत्वे सति व्यावृत्तिबोधकत्वं वेत्यर्थ इत्याहुः । चरमनिरुक्तौ ज्ञानाप्रकारीभूते अतिव्याप्तिवारणाय उत्तरपदम् । [3]स्वानधिकरणेऽपीति । स्वानधिकरणकालीनामपि व्यावृत्तिं बोधयतीत्यर्थः ।

नन्वरुणादौ विधेयान्वयिनियमे विशेषणत्वविचार उपयोगी । लक्षितविशेषणत्वं तु [4]क्वोपयुज्यत इत्युपयोगिशाब्दविशेषणत्वमाह—अथ वेति ।

यद्यपि वस्तुत्वविशिष्टं वस्तुपदशक्यमित्यादौ वस्तुत्वादेः शाब्दविशेषणत्वमर्हम्, अन्यथा वस्तुत्वस्याशक्यतापत्तेः । तथापि तत्र विशेषणत्वाव्यवहारात् तद् व्यावर्तयति—व्यवच्छेदकमिति । दण्डी देवदत्तपदवाच्य इत्यादावपि दण्डस्य विशेषणत्वं स्यात् अत [5]उक्तं विवक्षितेति । तथा च यत् अन्वयप्रतियोगितावच्छेदकं तत् तत्र विशेषणमित्यर्थः । किं त्विति । देवदत्तान्वय[6]प्रतियोगिगृहस्य विशेष उत्तृणत्वादिः तदवच्छेदक इत्यर्थः । न चैवं लक्षणापत्तिः । काकवत्त्वेनैव ज्ञायमाने गृहे स्वरूपत एव तस्य तदवच्छेदकत्वेनोक्तत्वादित्यर्थः । अत एवेति । गृहविशेषपरिचायकत्वादेवेत्यर्थः । यदन्विततयेति । यद्वत्तयैवेत्यर्थः । उपलक्षणस्थले तु काकात्यन्तायोगव्यवच्छेदमात्रवत्तयैव ज्ञाते तद्धीरित्याहुः ।

---

1. क. 'व्यावृत्ति' नास्ति ।
2. ख. स्वसमानाधिकरण-
3. ख. स्वाधिकरणेति ।
4. क. नोपयुज्यते ।
5. क. उक्तविवक्षेति ।
6. ख. प्रतियोगीत्यर्थः । गृहस्य

अयमेव कार्यान्वयि विशेषणं तदनन्वय्युपलक्षणम् इत्यस्यार्थः, न तु तात्पर्यविषयीभूतविशेष्यान्वयबोधविषयत्वं विशिष्टज्ञानविषयत्वं वा, प्रतियोग्यभावबुद्धिविषय इति मते तदभावात् ।

यद्वा विशेष्यान्वयिना यस्यावश्यमन्वयः तदवच्छेदकं विशेषणम्, तदन्यदुपलक्षणमिति । तत्तोपलक्ष्यविशेष्यमात्रान्वयात् ।

यद्व्यावर्तकं विशेष्यान्वयिनान्वीयते तद्विशेषणम्, तदन्यदुपलक्षणमिति वा ।

यद्वा तात्पर्यविषयान्वयप्रतियोगी उद्देश्यान्वयप्रतियोगी वा धर्मो विशेषणं तदन्यदुपलक्षणमित्यलं विस्तरेण ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ

प्रत्यक्षखण्डे विशेषणोपलक्षणवादः

—:*:—

---

प्रकाशः

क्वचिदन्वये काकस्यापि विशेषणत्वादतिव्याप्तिवारणाय **तात्पर्येति** । न च रूपवति रस इत्यादौ रूपादावतिव्याप्तिः । तन्मतद्वय इष्टापत्तेः ।

**विशिष्टज्ञानविषयत्वं वा तदर्थ** इत्यन्वयः । **तदभावादिति** । तदर्थस्यायुक्तत्वादित्यर्थः । यद्यपि प्रत्यक्षे इन्द्रियार्थसंनिकर्षात् तदविषयत्वेऽपि शाब्दे प्रतियोगिविषयत्वमुभयसिद्धमिति मतभेदाश्रयणमयुक्तम् । तथाप्यशाब्दविशेषणत्वमपि नास्त्येवेत्येतदभिसन्धिना तथोक्तमिति मन्तव्यम् ।

रूपवति रस इत्यादौ रूपादिकं न विशेषणमिति मतमाश्रित्याह—**यद्वेति** । सत्त्वदशायां काकस्यापि [1]गृहान्वयसंभवात् विशेषणत्वप्रसङ्गवारणाय—**अवश्यमि**त्युक्तम् । तदन्वये [2]तद्विशेषणत्वमिष्टमेवेति मतमाश्रित्य तदनन्तर्भावेणैव लक्षणमाह—**यद्व्यावर्तकमिति** । प्रमेयमभिधेयमित्यादौ प्रमेयत्वादेर्विशेषणत्वमिष्टमेवेति मतेनाह—**यद्वेति** । ननु विशेष्येऽतिव्याप्तिरिति धर्मपदान्तर्भावेण

---

1. क. गृहान्वयिदर्शनान्वयसंभवात् 2. क. तद्विशेषत्वं वेति

### प्रकाशः

लक्षणान्तरमाह—उद्देश्येति । अत एवोद्देश्यत्वमपि तात्पर्यविषयत्वपर्यवसन्नमिति पौनरुक्त्यमपास्तम् । [1]वा धर्म इति । धर्मो वेत्यर्थः । तथा च देवदत्तान्वय-प्रतियोगी न काक इत्युपलक्षणम् । दण्डिनमानयेत्यादौ दण्डस्तादृशान्वयप्रति-योगीति विशेषणम् । एवं रूपवति रस इत्यत्र रसान्वयाप्रतियोगितया रूपमुप-लक्षणमेव । रूपवति द्रव्ये चाक्षुषधीजनकत्वमेवेत्यत्र तद्विशेषणमेवेत्युक्तम् । अलमिति । विशिष्य जिज्ञासामात्रेण एतद्विचारितम् । वेदार्थविचारे शास्त्रान्तर एवास्योपयोगात् । तथा च प्रकृतमनुसराम इति भावः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

प्रत्यक्षखण्डे विशेषणोपलक्षणवादः

—: * :—

1. क. 'वा' नास्ति ।

# अथ सविकल्पकवादः

—: * :—

सविकल्पकं च विशिष्टज्ञानं यथा गौरयमिति। तच्च सामान्यादीनां परमार्थसत्त्वेनार्थजत्वादिन्द्रियजत्वाच्च प्रत्यक्षम्। क्वचित् संस्कारसहकारिवशेन तत्ताविशिष्टस्य इदन्ताविशिष्टाभेदाल्लेखी ऐन्द्रियको विकल्पः।

नन्वेककार्यसहकारित्वमन्यत्र, प्रत्यभिज्ञानं तु नैकं ज्ञानम् तदंशे पारोक्ष्यस्य इदमंशे चापारोक्ष्यस्यानुभवेन विरुद्धधर्मसंसर्गात्। न चेदं यथार्थम्। अनेकदेशकालसंबन्धस्य एकत्र बाधात्। एककालादिसंसर्गतदभावव्यवच्छेदवत् तदविनाभूतकालान्तरादिसंबन्धव्यवच्छेदात्। तदयथार्थत्वे बहु विप्लवेतेति चेत्—न। पारोक्ष्यापारोक्ष्ययोरिहासिद्धेः, इन्द्रियजन्यत्वेनापरोक्षत्वनियमात्, तत्तांशस्य च स्मृत्युपनीतत्वात् इन्द्रियसंबद्धविशेषणताप्रत्यासत्तेः।

---

**प्रकाशः**

ननु गौरित्यादिकं स्वविषयसामान्यस्यालीकत्वान्नार्थजमतो नेन्द्रियजमपीति न प्रत्यक्षम्। किन्त्वनादिवासनासमुत्थितमिति बौद्धमतमाशङ्क्याह—तच्चेति। प्रसङ्गात् स्थलान्तरमपि सविकल्पकस्याह—क्वचिदिति। अस्त्वयथार्थैव प्रत्यभिज्ञेत्यत आह—तदयथार्थत्व इति। एवं सति स्थैर्यादिकं न सिध्येत्, तस्य तदेकमानत्वादित्यर्थः। ननु तत्तांशे संनिकर्षाभावादिन्द्रियजन्यत्वमेवासिद्धमित्यत आह—तत्तांशस्येति।

एकस्मिन्निति। [1]बाह्यैरप्येकत्र परमाणौ नानादिक्संबन्धस्य एकत्रैव च ज्ञाने नानार्थसंबन्धस्योपगमादित्यर्थः। तत्तांशे साक्षात्कारित्वमनुव्यवसायादपीत्याह—साक्षात्करोमीति।

तदभावेति। यः कामनाविषय आसीत्सोऽयमिदानीमुत्पन्नः इत्यत्रातीतसमयसंबन्धाभावावगमेऽपि तत्तोल्लेखादित्यर्थः। एतेनेति। तज्ज्ञानेऽपि सोऽयं

---

1. ख. बौद्धैरपि

न चैककालसंबन्धः कालान्तरसंबन्धाभावाविनाभूतः, एकस्मिन् नानादिक्संबन्धस्य ज्ञानेऽनेकविषयत्वस्य च व्याघातापत्तेः। साक्षात्करोमीत्यनुव्यवसाये बाधकाभावाच्च।

ननु केयं तत्ता, न तावदतीतसमयसंबन्धः, अनागतगोचरस्मृतिप्रत्यभिज्ञयोस्तत्तोल्लेखात्, प्रत्यक्षानुभूयमानघटादौ अतीतसमयावच्छेदानुमाने तत्ताधीव्यपदेशयोरभावात्, अतीतसमयसंबन्धावगमेऽपि सोऽयं न वेति संशयात्, स नायमिति विपर्ययात्, तदभावावगमेऽपि सोऽयमिति प्रतीतेः, अतीतसमयविशिष्टः स इति सहप्रयोगात्, काले तदभावाच्च। एतेन ज्ञातधर्मान्तरवैशिष्ट्यं तत्तेति निरस्तम्।

न च तद्वृत्तिगुणादिकमेव तत्ता, तदवगमेऽपि तदनवगमात्, तदनवगमेऽपि तदवगमाच्च। नाप्यतीतज्ञानवैशिष्ट्यम्, परेण ज्ञात इति ज्ञानेऽपि स इति प्रयोगाभावात्।

नाप्येतज्जन्मातीतस्वज्ञानवैशिष्ट्यम्। तदवगमेऽपि तत्तासंशयविपर्ययदर्शनात्, अतीतज्ञानविशिष्टः स इति सहप्रयोगात्, अतीतानुभवविषयत्वस्य अनुभवाविषयत्वेन स्मृत्या तदुल्लेखानुपपत्तेश्च।

यत्तु अतीतानुभवविषयत्वं तत्ता। तच्चानुभवाविषयत्वेन यदा ज्ञानान्तरेण गृह्यते तदा स घट इति स्मरणम्, नो चेत् [1]प्रमुष्टतत्ताकं घट इति।

---

प्रकाशः

न वेति संशयादिनेत्यर्थः। न चेति। न गुणस्तत्ता न कर्मेत्येवंक्रमेण बोध्यम्। अन्यथा गुणाद्यन्यतमस्यानवगमे तदवगमस्यासंभवात् अन्त्यहेतोरसंगतत्वादित्याहुः।

ज्ञानवैशिष्ट्यमिति। [2]ज्ञानविषयत्वमित्यर्थः। [3]परेणेति। जन्मान्तरातीतस्वज्ञाने वैशिष्ट्यग्रहेऽपि व्योमादौ तत्तानुल्लेखादित्यपि बोध्यम्।

---

1. ख. प्रमुष्टतत्त्वांश
2. क. ज्ञानविषयमित्यर्थः।
3. ख. 'परेणेति।—— अतीतज्ञानविषयत्वस्येत्यर्थः' इति ग्रन्थो न दृश्यते।

तन्न। अतीतानुभवविषयत्वस्यानुमितौ भानेऽपि स इति धीव्यपदेशयोरभावात्, अतीतानुभवविषयत्वनिश्चयेऽपि तत्तासंशयविपर्ययदर्शनात् सहप्रयोगानुपपत्तेः, ज्ञानान्तरेण अतीतानुभवविषयत्वग्रहे तत्तोल्लेखापत्तेश्च।

अथातीतधर्मवैशिष्ट्य तत्ता। स धर्मः क्वचित् समयः क्वचित् ज्ञानादिः। न चातीतधर्मविशिष्टः स इति सहप्रयोगानुपपत्तिः। धर्मविशेषमादाय तदुपपत्तेः। तदप्रतीतावपि स इति प्रतीतिसिद्धेश्च। न चातीतधर्मविशिष्टप्रतीतावपि स न वेति संशयात् स नायमिति विपर्ययाच्च नैवमिति वाच्यम्। निश्चितधर्मतरधर्मविशेषविषयत्वेन तयोरुपपत्तेरिति चेत्—

नैवम्। यदि वस्तुगत्या योऽतीतो धर्मस्तद्वैशिष्ट्य तत्ता, तदा अनुभवेऽपि तद्विषयत्वात्तत्तोल्लेखापत्तिः। नाप्यतीतत्वेन यो भासते धर्मस्तद्वैशिष्ट्यं, भासमानधर्मस्यातीतत्वेनानुभवाविषयत्वात् प्रत्युत वर्तमानत्वेनानुभवात् स्मृतौ तदुल्लेखानुपपत्तेश्च।

न चानुभवानन्तरं यदा ज्ञानान्तरेणातीतधर्मवैशिष्ट्यभानं तदा स्मृतौ तत्तोल्लेखो नान्यदेति वाच्यम्। [1]अतीतधर्मस्यानुमितौ तत्तोल्लेखापत्तेः। इदन्तापि न तन्मात्रवृत्तिगुणादिकम्, अनुमानादिना तदवगमेऽपि अयमिति व्यपदेशाभावात्। प्रत्यक्षेण तदवगमे अयमिति व्यपदेश इति चेत्—न। वाच्यस्य प्रमाणगोचरतया व्यपदेशस्य नियन्तुमशक्य-

---

प्रकाशः

तत एवोद्धर्तुमाह—नापीति। अतीतानुभवेति। अतीतज्ञानविषयत्वस्येत्यर्थः। यत्तु पूर्वज्ञानपदमेवानुभवपरमिति। तन्न। अग्रिमाभेदापत्तेः। न चैतन्मत एव युक्त्यन्तरमिति वाच्यम्। निरासहेतौ पौनरुक्त्यापत्तेः।

[2]तद्विषयत्वादिति। न च तत्कालीनेत्यर्थो विवक्षितो न त्वनुभवोत्तरकालीनः स इति [3]वाच्यम्। उपनीतस्यातादृशस्यापि भानसंभवात्। अनु-

---

1. ख. अतीतधर्मवैशिष्ट्यस्य
2. ख. तदेति।
3. क. 'वाच्यम्। उपनी०' इति नास्ति।

त्वात् । गुणादावपि तन्निर्वचने अननुगमात् । न चैतद्व्यक्त्याश्रयत्वम्, इदमेतदोः पर्यायत्वात् । नापि प्रत्यक्षज्ञानगोचरत्वम् । अचाक्षुषत्वापत्तेः । अतीते तदनुमाने अयमिति बुद्धिव्यपदेशाभावात्, स्मृत्यापि तदुल्लेखापत्तेश्च ।

अत्र केचिदाहुः । तत्तेदन्ते स्मृत्यनुभवभासिन्यौ अखण्डे एवोपाधी क्लृप्तधर्मातिरेकिणौ । एवं चेदन्तासंस्कारेण इदन्तैव तत्तया स्मर्यते । न च तत्तायाः क्वचिदनारोपे कथमारोप इति वाच्यम् । प्रत्यभिज्ञायां तत्तांशे यथार्थत्वात् । इदन्तानुल्लेख्यनुभवप्रभवस्मरणे धर्मान्तरमेव तत्तया भासते । अत एवायं घट इति न स्मरणम् । अत एव सर्वा स्मृतिरयथार्था अयथार्थानुभवा च । हरिहराद्यनुचिन्तनं च कविकाव्यमूलज्ञानवत् मनोरथज्ञानवच्च साकाङ्क्षपदार्थज्ञानप्रभवमनुभवरूपमेवेति ।

---

प्रकाशः

मित्यादिविषयत्वे बाधकाभावाच्च । वर्तमानत्वेनेति । तथा च यत्र वर्तमानत्वेनैव तज्ज्ञानं तज्जन्यस्मृतौ [1]तत्तोल्लेखानुपपत्तेरित्यर्थः । अतीतेति । अतीतत्वेनेत्यर्थः । तदेति । अत एव क्वचित् प्रमुष्टतत्ताकमेव स्मरणमिति भावः । इदमेतदोरिति । तथा चात्माश्रय इत्यर्थः । स्मृत्यापीति । प्रत्यक्षज्ञानगोचरः स इति स्मरणेऽपि इदन्तोल्लेखापत्तेरित्यर्थः ।

तत्तेदन्ते इति । यदि तत्तेदन्ते स्मृत्यनुभवभासिनी इति पाठस्तदा तत्तेदन्ते स्मृत्यनुभवभासिनी अखण्डे वस्तुनी इत्येकोऽन्वयः, अतस्तत्तेदन्ते क्लृप्तधर्मातिरेकिणी उपाधी इत्यपरोऽन्वयो विवक्षित इत्याहुः ।

[2]नन्वेवमनुभवविषयतत्तासंस्काराभावान्न तद्विषया स्मृतिः स्यादित्यत आह—एवं चेति । तत्तयेति । [3]तत्तात्मतयेत्यर्थः । न चेति । क्वचित्प्रमितस्यैवारोप्यत्वादित्यर्थः । प्रत्यभिज्ञायामिति । तत्रेदन्तायाः पृथगेव भानेनैव नेदन्त्वं तत्तात्वेन भासते, किं तु तत्तैवेत्यभ्युपगमादिति भावः । अत एवेति । इदन्तात्वेनेदन्ताया अनुभवमात्र[4]भासित्वाभ्युपगमादित्यर्थः । यद्वा इदन्तागोचरसंस्कारस्य

---

1. क. तत्तोल्लेखानुत्पत्तेः
2. क. नन्वेवमनुभाव-
3. ख. तत्तात्मयेत्यर्थः
4. ख. °भासत्वाभ्यु°

तन्न । स्मृतेः पूर्वमिदन्तोपस्थितिं विना तत्र तत्तारोपासंभवात् । किंच तत्तांशेऽननुभूतगोचरत्वेन स्मृतेः संस्कारसीमालङ्घने इदन्ता तत्तया स्मर्यत इत्यत्र मानाभावात् । घट एव तत्तया स्मर्यत [1]इत्यस्तु लाघवात् इति ।

अत्रोच्यते । अनुभवे कालो धर्मान्तरं वा यो वर्तमानत्वेन विषयः स एव स्मरणस्य, अनुभवस्मरणयोरेकविषयत्वेऽपि स्मरणे तत्र तच्छब्द-प्रयोगः, संस्कारजज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात् ।

अत एव प्रत्यभिज्ञाने तत्र तच्छब्दप्रयोगः, प्रत्यक्षानुभवे तत्रैव इदंशब्दप्रयोगः न तु विषयकृतोऽनुभवस्मरणयोर्विशेषः ।

अत एवायं घट इत्यनुभवादयं घट इति न स्मरणम्, स घट इति स्मरणकारणं स घट इति नानुभवः ।

---

प्रकाशः

तत्तात्वेन स्मरणजननियमादित्यर्थः । अत इति । अतत्तामेव यतस्तत्तात्वेनाव-गाहत इत्यर्थः । नन्वेवं सर्वेत्ययुक्तम्, हरिहराद्यनुचिन्तनरूपस्मृतेस्तत्तानवगा-हितया अयथार्थत्वाभावादित्यत आह —हरिहरेति । प्रमुष्टतत्ताकस्मरणं नास्त्येवे-त्यभिमानः ।

स्मृतेरिति । आरोपविषय[2]ग्रहस्यारोपहेतुत्वादित्यर्थः । न च तदुल्लेखान-न्तरमेव तदारोपः । इदन्तात्वेन तदुल्लेखे विशेषदर्शनात् वस्तुत्वादिना तदुल्लेखे मानाभावादित्यर्थः । अखण्डोपाधिस्वीकारे जातिमात्रापलापापत्तिरित्यपि बोध्यम् । वर्तमानत्वेनेति । एतच्च काचित्काभिप्रायम् । तदा यो [3]धर्मोऽवगतः स एवाग्रे तत्त्वेन निर्दिश्यत इति तात्पर्यम् ।

केचित्तु [4]इदन्तारूपेणेत्यर्थः । यत्र च नेदन्तोल्लेखः तज्जन्यस्मरणेऽपि न तदुल्लेखः । अत एवेदन्तां विना घटत्वेन ज्ञाते घटे घटपदशक्तिग्रह इति घटादि-

---

1. ख. इत्यास्तां तु
2. ख. 'ग्रह' नास्ति ।
3. ख. धर्मोऽनुभूतः
4. ख. इदन्तारोपेणेत्यर्थः

यद्वा अयं घट इत्यत्र यद्धर्मवैशिष्ट्यं भासते तस्यातीतत्वं तत्ता। तद्वैशिष्ट्यमननुभूतमपि स्मृतिविषयः। इदन्ताविशिष्टगोचरसंस्कारात् कथं तत्तास्मृतिरिति चेत्—न। स घट इति स्मृतिं प्रत्यनुभवस्य हेतुत्वनिर्वाहकतया संस्कारस्य तथैव कल्पनात्। अयं घट इति स्मृतेः स घट इत्यनुभवस्यादर्शनाच्च। समानविषयत्वेन स्मृतेरयं घट इति स्मृतिः न स घट इति नानुभवश्च स्यात्। न चैवं स्मृतिरननुभूततत्तांशेऽनुभवः स्यात्। संस्कारासाधारणकारणकत्वेन स्मृतित्वात्। सहप्रयोगश्च धर्मविशेषमादाय प्रतिविधेयः। अत एव संस्कारहेत्वनुभवप्रामाण्यपारतन्त्र्येण यथार्थत्वेऽपि स्मृतिरप्रमेति सर्वतन्त्रसिद्धान्तः।

---

**प्रकाशः**

पदात् [1]प्रमुष्टतत्ताकमेव पदार्थस्मरण[2]मित्याहुः। अत एवेति। संस्कारप्रयुक्तज्ञानस्य [3]तद्धेतुत्वादेवेत्यर्थः। नत्विति। अत एव स्मृतेर्न संस्कारसीमातिलङ्घनमिति भावः।

अत एवेति। अत एवायं घट इत्येवाभिलप्यमानविषयादनुभवादयं घट इत्यभिलप्यमानविषयं स्मरणं नेत्यर्थः। एवमग्रेऽपि। तच्चेदत्तयोरभेदे यथाश्रुतस्यासंगतेः।

ननु व्यवहर्तव्यज्ञाने सति व्यवहारेऽधिकानपेक्षणादुभयत्रोभयशब्दप्रयोगापत्तिरित्यस्वरसादाह—यद्वेति। तस्यातीतत्वमिति। अतीतत्वविशिष्टधर्मस्तत्तेत्यर्थः। तद्वैशिष्ट्यमिति। अतीतत्वधर्मवैशिष्ट्यमित्यर्थः। अनन्यगत्या भिन्नविषयस्यापि संस्कारस्य तत्तास्मृतिजनकत्वं कल्प्यतामित्याह—स घट इति। उक्तपक्षयोरुपष्टम्भकमाह—[4]अत एवेति। यत एव पूर्वानुभवविषय एव धर्मस्तत्ता अत एव पूर्वानुभववत् स्मृतेर्यथार्थत्वे स्वजनकसंस्कारहेत्वनुभवप्रामाण्य[5]पारतन्त्र्यमात्रेण तत्राप्रामाण्यव्यवहार इति सिद्धान्त इत्यर्थः। [6]अतीतत्वधर्मवैशिष्ट्यमस्य यद्यप्यननुभूतं तथापि तदंशेऽप्यबाधितविषयतया यथार्थत्वमेवेति भावः।

---

1. क. प्रमुष्टमेव
2. ख. °मिति भावः।
3. ख. तद्धेतुत्वाभावात्
4. क. तवेति
5. क. °पारतन्त्र्येण
6. क. अतीतवैशिष्ट्यम्

यद्वा नेयं यथार्था। तथा हि स्मृतिः स्वविषयवर्तमानत्वविषया अतीतानागतागोचरप्रतीतित्वात् प्रत्यभिज्ञावत्। प्रतीतित्वाद्वा घटोऽस्तीति प्रतीतिवत्। प्रतीतेः समयविशेषविषयत्वनियमात् ज्ञानसामग्रीमहिम्ना चाननुभूतेऽपि समयांशे स्मृतिः, न तत्र संस्कारव्यापारोऽन्यथासिद्धत्वात्।

अत एव पाकरक्ते श्यामोऽयमिति धियोऽयथार्थत्वव्यवहारः लौकिकानां श्यामत्वस्य वर्तमानत्वेनावगमात्।

एतेन श्यामधीस्तत्र यथार्थैव घटे कदाचित् तत्सत्त्वात् इदानीमयं श्याम इत्याकार एव नेत्यपास्तम्।

अत एवातीतानागतवह्न्यगोचरत्वे विद्यमानधूमेन पर्वते वह्निरित्यनुमितेः वर्तमानवह्निविषयत्वादिदानीं वह्निनिश्चयेन वह्न्यर्थिप्रवृत्तिः। अन्यथा इदानीं तत्संदेहे प्रवृत्तिर्न स्यात्। यदा धूमस्तदा वह्निरिति व्याप्तावपि तदज्ञानदशायां प्रवृत्तेरन्यथानुपपत्तेः।

यद्वा स घट इति स्मृतौ तत्ताविशिष्टस्य वर्तमानता भासते। संस्कारस्य वर्तमानज्ञानसामग्रीसहितस्यैव हेतुत्वात्, सोऽयमिदानीमित्यादौ

---

**प्रकाशः**

नन्वनुभवे यद्धर्मवैशिष्ट्यभानं तस्य यत्र नातीतत्वमनागतस्मरणादौ तत्र कथं तत्तोल्लेखः। न च तत्र तदंशे स्मृतिरयथार्थैव यथार्थव्यवहारादिति चिन्त्यम्। वस्तुत आद्य एव साधुः संस्कारजज्ञानाद्यपेक्षणेऽपि [1]व्यवहर्तव्यज्ञानापेक्षणान्नोक्तदोष इति। अतीतेति। अतीतत्वानागतत्वागोचरत्वे सतीत्यर्थः। एतच्चातीतोऽनागतश्च घट इत्यादौ व्यभिचारवारणाय। न च स्वविषयातीतत्वादेरेव वर्तमानत्वं तद्विषय इति नोक्तव्यभिचार इति वाच्यम्। स्वविषयपदेन यावत्स्वविषयस्य विवक्षितत्वात्। अत एव यथाश्रुत एव साध्ये नोक्तव्यभिचार इत्याशयेनाह— प्रतीतित्वाद्वेति। स्वविषयकालविषय इति साध्याभिप्रायेणायं हेतुरित्येके। [2]अयथार्थत्वव्यवहार इति। अयथार्थत्वमिति वक्तव्ये व्यवहारग्रहणं तत्रैव प्रमाणसूचनाय। एतच्च प्राचीनमतेनेति न प्रागुक्तविरोधः।

---

1. क. व्यवहर्तव्यतानपेक्षणात्
2. क. 'अयथार्थत्वव्यवहार इति' इति नास्ति।

तथा कल्पनात्, गेहे स घट इति स्मरणान्निःशङ्कप्रवृत्तेश्च । अन्यथा तत्ताविशिष्टस्य इदानीं संदेहे सा न स्यात् । न च वर्तमानत्वांशेऽननुभूतविषयत्वम् । वर्तमानत्वेनानागतवर्तमानस्य पूर्वमनुभवात् ।

एवं च स्मृतेस्तथाभूतस्य वर्तमानता विषयः, तत्र विशेष्यस्य विशेषणस्य वा वर्तमानत्वाभावात् स्मृतिरयथार्थैव । न च पूर्वं तथा आसीदर्थ इति तद्यथार्थत्वम् । पाकरक्ते श्यामोऽयमिति ज्ञानस्य यथार्थत्वप्रसङ्गात् ।

प्रमुष्टतत्तांशे च स्मरणे [1]अविद्यमानधर्मावच्छेदो न भासते । तदाहुराचार्याः—'स्मृतेर्याथार्थ्यमपि कुतः' इति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
प्रत्यक्षखण्डे सविकल्पकवादः
प्रत्यक्षखण्डश्च समाप्तः

---

प्रकाशः

ननु कालगर्भव्याप्तिग्रहे तद्भानमसिद्धमेव । वर्तमानकालस्य पक्षतावच्छेदकतया [2]तत्र भानमस्त्विति स्मृतिमात्राभिप्रायेणाह—यद्वेति । तत्र बीजमाह—संस्कारस्येति । नन्वेतदेव कथमत आह—सोऽयमिति । तथाभूतस्येति । प्रागवस्थाद्यात्मक(स्य) तत्ताविशिष्टस्येत्यर्थः । अयथार्थैवेति । [3]उत्सर्गत इति शेषः ।

नन्वेवं पदार्थस्मृतेरपि यथार्थत्वाभावे तन्मूलकशाब्दज्ञानमयथार्थं स्यादित्यत आह—प्रमुष्टेति । पदात्पदार्थ[4]स्मरणमप्रमुष्टतत्ताकमेवेति तन्नायथार्थमित्यर्थः । तत्तोल्लेखिस्मरणाभिप्रायेणाह—तदाहुरिति ।

इति महोपाध्यायश्रीरुचिदत्तमिश्रविरचिते
तत्त्वचिन्तामणिप्रकाशे प्रत्यक्षखण्डः समाप्तः

—:*:—

---

1. ख. अविद्यमानत्वमवच्छेदः
2. ख. वा मानमस्तीति स्मृतिमात्रेक्षणाभि
3. क. उत्सर्ग इति
4. ख. ॰स्मरणं प्रमुष्ट-

# INDEX—I.

# प्रमाणवचनसूची

## तत्त्वचिन्तामणौ प्रमाणतया उपात्तानां वचनानां

## साकरा सूची

| पृष्ठम् | वचनम् | आकरः |
|---|---|---|
| ५०३ | अन्यस्य ह्यन्यथाभानं प्रतीत्यैव पराहतम् | (प्रकरणपञ्चिका P. 49) |
| ५०५ | अहो बत महानेष प्रमादो धीमतामपि | (प्रकरणपञ्चिका P. 59) |
| ७१ | आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय | (किरणावली P. 3) |
| ६२ | आग्नावैष्णवमेकादशकपालं चरुं निर्वपेत् | |
| ३४ | आरे भमे इन्द्रबाहुर्बद्धव्यः | (तक्षसूत्रम्) |
| ३७ | इडो यजति | |
| १०१ | ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा | |
| ५६४ | तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते | (तात्पर्यटीका 1-1-2) |
| ७६३ | दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टः | (ज्ञानश्री० क्षणभङ्गाध्यायः) |
| ३४ | पायसं ब्राह्मणो भोजयितव्यः | (तक्षसूत्रम्) |
| ५५४ | पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयते | (तन्त्रवार्तिकम् P. 819) |
| ४५७ | प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः | (आत्मतत्त्वविवेकः P. 62) |
| ११४ | प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः | (न्यायसूत्रम् 1-1-1) |
| ५०२ | प्रसक्तप्रतिषेधात्मा बाधोऽख्यातौ न युज्यते | |
| १०० | मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् | (मनुस्मृतिः 4-146) |
| ११२ | यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः | |
| ५०८ | संनिहितरजतशकले रजतमतिर्भवति | (प्रकरणपञ्चिका P. 53) |
| ८७७ | सदसद्वा समानाधिकरणं व्यवच्छेदकम् | (परिशुद्धिः 1-1-4) |
| ८६१ | सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः | |
| ७७ | सर्वे विघ्नाः शमं यान्ति | |

## तत्त्वचिन्तामणिप्रकाशे प्रमाणतया उपात्तानां

## वचनानां सूची

## न्यायशिखामणौ प्रमाणतया उपात्तानां वचनानां सूची

| पुटम् | वचनम् | आकरः |
|---|---|---|
| ६३ | तथा वैश्यः कृषिं कुर्यात् | |
| १६० | तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति | (बृ. उ. 6-4-22) |
| ५२ | तिष्ठन्तं पशुं प्रयजति | |
| ११५ | दुःखेनात्यन्तविमुक्तश्चरति | |
| ९९ | धर्मशास्त्रादिविद्यानां श्रुतीनां ब्रह्मवर्तिनाम् | |
| १२ | न विप्रः क्षणिको भवेत् | |
| १६० | नान्यः पन्था विद्यतेऽयनाय | (श्वेताश्वतर 3-8) |
| २२ | निष्फलानि च कर्माणि नारभेत | |
| ४४ | प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् | ( मीमांसासूत्रम् ) |
| ४६ | प्राजापत्यं चरुं निर्वपेच्छतकृष्णलम् | |
| ९९ | मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः | |
| १७२ | मृदब्रवीत्, आपोऽब्रुवन् | |
| ३९८ | यथार्थानुभवो मानमनपेक्षतयेष्यते | (कुसुमाञ्जलिः) |
| २४ | यूपहस्तिनो दानमाचरन्ति | |
| १६० | ये वै तन्वां विसृजन्ति धीराः | (ऋग्वेद. खिल.) |
| ४५ | यो वै देवताः पूर्वः परिगृह्णाति | (तै. सं. 1-6-7-21) |
| १३ | रात्रौ श्राद्धं न कुर्वीत | |
| २०५ | विरोधिप्रमाणतदसद्भावशङ्कया | (किरणावली) |
| १७ | विश्वजिता यजेत | |
| ४४ | वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान् | |
| १७२ | शृणोत ग्रावाणः | ( तै. सं. 1-3-13-22 ) |
| ६०१ | शृण्वन्तोऽपि बहवो यं न विद्युः | ( कठोप. 1-2-7 ) |
| ६०० | श्रोतव्यः श्रुतिवाक्येभ्यः | |
| ५७ | सदोपवीतिना भाव्यं सदा बद्धशिखेन च | (गोभिलस्मृतिः) |
| २९ | हरिर्हरिः | |

—:*:—

# INDEX — II

# ग्रन्थसूची

## प्रकाशे उल्लिखितां ग्रन्थानां सूची



## न्यायशिखामणावुल्लिखितानां ग्रन्थानां सूची

# INDEX—III

# ग्रन्थकर्तृसूची

## तत्त्वचिन्तामणौ निर्दिष्टानां ग्रन्थकर्तृणां सूची



## प्रकाशे निर्दिष्टानां ग्रन्थकर्तृणां सूची



## न्यायशिखामणौ निर्दिष्टानां ग्रन्थकर्तृणां सूची

-: * :-

# INDEX — IV.

## न्यायसूची

### उदाहृतानां न्यायानां सूची

## उदाहृतानां सर्वमीमांसाधिकरणानां सूची



—: * :—

# INDEX – V.

# दृष्टान्तसूची

## तत्त्वचिन्तामणौ प्रदर्शितानां दृष्टान्तानां सूची

| दृष्टान्तः | पृष्टम् |
|---|---|
| यथा ज्ञानान्तरमगृहीतप्रमाण्यमेव परप्रामाण्यनिश्चयरूपम् | ३९४ |
| यथा दण्डी पुरुष इति ज्ञाने दण्डसंबन्धः पुरुषे अवगतः | ८६६ |
| यथा पुत्रेष्टौ कर्मसादृगुण्ये ऐहिकफलाभावे आमुष्मिकं फलम् | ६१ |
| यथा बालस्य आद्यप्रवृत्तिबलात् प्राग्भवीयसंस्कारात् व्याप्तिस्मरणम् | ८६३ |
| यथा भिन्ने जुहोतीत्यत्र पात्रभेदवान् | ४८ |
| यथा वह्निरूपं परम्, आत्मानं च प्रकाशयति | ८०८ |
| यथा संयोगतदभावयोरव्याप्यवृत्तित्वम् | ४१५ |
| यथा संयोगस्य समवायेनाधारता हस्तसंयोगेनावच्छिद्यते | ६३१ |
| यथा सर्पादिदंशजन्यविषसंशये तन्नाशाय भेषजपानादौ | ४३ |
| यवप्रयोगे व्रीहेरिव | ७० |
| यागादिवत् प्रधानदेशकालान्वयस्तदङ्गे मङ्गले स्यात् | ५५ |
| युगपदुत्पन्नघटादिवत् | ८२६ |
| योग्यसंयुक्तसमवायाभावेन पृथिवीत्ववदनुपलब्धिसंभवात् | ६९१ |
| रूपग्राहि वा स्याच्चक्षुर्वत् | ७९६ |
| रूपप्रत्यक्षवत् | ८२३ |
| लाक्षावत् | ८१२ |
| वायाविव प्रत्यभिज्ञापि तद्वदेव | ७९३ |
| वायोश्च नयनवत् महावेगतया | ६३९ |
| विषक्तावयवत्वात् प्रभायामिव तेजसः | ७९८ |
| वीचीतरङ्गवत् | ६३९ |
| वेदः पुरुषप्रणीतः गामानयेति वाक्यवत् | ३८४ |
| व्यवसायस्य ज्ञानत्वे घटविषयकत्वे च यथा अनुव्यवसायविषयत्वान्न संशयः | २०२ |
| व्रीहियववद्विकल्पः | ६९ |
| शब्दमात्रस्य योग्यत्वमननुगतमेव गुणयोग्यत्ववत् | ६३० |
| शरीरे सुखमितिवत् | ६३८ |
| शशशृङ्गवदसत्त्वम् | ८४६ |
| शीतं सुरभि शुभ्रं चन्दनमित्यत्रेव | ८३३ |
| शीतस्पर्शस्य वायावारोपो दिङ्मोहवद्दोषमाहात्म्यात् | ८०४ |

## प्रकाशे प्रदर्शितानां दृष्टान्तानां सूची

## न्यायशिखामणौ प्रदर्शितानां दृष्टान्तानां सूची

—: * :—

# INDEX—VI.

## सविवरणपारिभाषिकपदसूची

[ तत्त्वचिन्तामणौ विद्यमानानां शास्त्रीयपदानां सर्वेषामपि सूची निर्मातव्येति आदौ मतिरासीत् । परं तु तथा निर्माणे बहुपृष्ठ-व्याप्तिर्भवेदिति मत्वा येषां पदानां मूले व्याख्यानयोश्च विवरणं वर्तते तेषामेव पदानां विवरणेन सह सूची अत्र दीयते ]

—: शुभमस्तु :—

—: * :—

# शुद्धिपट्टिका

## उपोद्घाते—

| पृष्ठम् - | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 5 | चतुण | चतुर्णाम् |
| 7 | 5 | वाकोवाबयम् | वाकोवाक्यम् |
| ,, | 6 | अन्वीक्षिकी | आन्वीक्षिकी |
| .13 | 10 | कुसुमाज्जलि | कुसुमाञ्जलि |
| 15 | 18 | शतक मिति | शतकमिति |
| 16 | 14 | गङ्गशीयं | गङ्गेशीयं |
| 17 | 10 | सौन्दड उपाध्याय: | सौन्दडोपाध्याय: |
| 19 | 13 | प्रासिद्ध्या- | प्रसिद्ध्या |
| ,, | 16 | बर्धमाना- | वर्धमाना- |
| 22 | 13 | -ग्रन्थात् | -ग्रथात् |
| ,, | 18 | सिद्धान्तित | सिद्धान्तितं |
| ,, | 23-24 | शुचिकर उपाध्याय: | शुचिकरोपाध्याय |
| 23 | 12 | विबरणं | विवरणं |
| 25 | 15 | बिद्वांस: | विद्वांस: |
| 27 | 16 | इङ्गालस | इङ्गाल्स् |
| 29 | 16 | रव्रैस्तव | क्रैस्तव |
| 30 | 12 | ग्रन्थानां | ग्रन्थकाराणां |
| ,, | 22 | न्याससिद्धान्त- | न्यायसिद्धान्त- |
| 38 | 17 | नूममेते | नूनमेते |
| ,, | 24 | -मसग्रतां | -मसमग्रतां |
| 41 | 7 | मघिकृत | मघिकृत्य |
| 42 | 19 | परस्परया | परम्परया |
| 44 | 10 | प्रमात्वोपचौ | प्रमात्वोत्पचौ |

## सव्याख्याने तत्त्वचिन्तामणौ—

| पुटम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 1 | न्या. शि. | 1 | अष्टभानु | उष्णभानु इति स्यात् । |
| 2 | ,, | 5-6 | मणिव्याख्यानो- | मणिर्व्याख्यानो- |
| 3 | ,, | 14 | सुस्वादि | सुखादि |
| 4 | ,, | 2 | -शङ्कय | -शङ्क्य |
| 5 | ,, | 2 | अभय- | उभय- |
| 6 | ,, | 7 | बिफला- | विफला- |
| 6 | ,, | 10 | प्रसिद्ध्यु- | प्रसिद्ध्यु- |
| 7 | प्र. | 5 | व्यप्तितया | व्याप्तितया |
| 8 | न्या. शि. | 2 | ताट्टश- | तादृश- |
| 9 | ,, | 5 | तद्गह- | तद्ग्रह- |
| 13 | ,, | 14 | श्राद्ध | इदं पदं निष्कासयितुं शक्यम् |
| 13 | ,, | 16 | संमावित- | संभावित- |
| 15 | ,, | 8 | समीप्तीतरा- | समाप्तीतरा- |
| 15 | ,, | 10 | 1 | इदं निष्कासनीयम् |
| 16 | प्र. | 4 | विशेषण | विशेषणं |
| 17 | ,, | 7 | अधिकारिभेद: | अधिकारभेद इति स्यात् |
| 27 | न्या. शि. | 10 | 11 | इयं संख्या निष्कासनीया |
| 33 | ,, | 6 | सकृतनु- | सकृदनु- |
| ,, | ,, | 11 | कर्माङ्गत्व- | कर्मानङ्गत्व |
| ,, | ,, | 13 | विश्वजिन्न्यादि- | विश्वजिन्न्यायादि- |
| 34 | प्र. | 5 | चक्र | 'चक्रावयव' इति स्यात् |
| 34 | न्या. शि. | 2 | भावागर्भ- | भावगर्भ- |
| 35 | त. चि. | 2 | लाकावगत- | लोकावगत- |
| 39 | प्र. | 4 | व्यत्वं कर्मा- | व्यकर्मा- |
| 41 | प्र. | 2 | अधिकारित्वं | अधिकारत्वं |
| 46 | न्या. शि. | 6 | कर्तव्या | कर्तव्यो |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 48 | प्र. | 5 | बोधनाच्च तत्प्रति | बोधनाच्च न तत्प्रति |
| 48 | न्या. शि. | 8 | संशयाऽपि | संशयोऽपि |
| 52 | ,, | 5 | तिष्टन्तं | तिष्ठन्तं |
| ,, | F. N. | | Nos to be corrected | |
| ,, | ,, | 4 | आचरादिति | आचारादिति |
| 60 | ,, | 6 | शिरवा- | शिखा- |
| 65 | ,, | 2 | तज्जनिप- | तज्जनित- |
| 68 | ,, | 5 | कारीरिवत् | कारीरीवत् |
| ,, | ,, | ,, | ,, | ,, |
| 69 | त. चि. | 3 | व्रहियव- | व्रीहियव- |
| 72 | न्या. शि. | 2 | विघ्यार्था- | विध्यर्था- |
| ,, | ,, | 6 | कारीरि- | कारीरी- |
| 76 | ,, | 9 | प्रायश्चित्ताभात् | प्रायश्चित्ताभावात् |
| 78 | ,, | 3 | वीहियव- | व्रीहियव- |
| 80 | ,, | 5 | उपाघ्मायोक्त- | उपाध्यायोक्त- |
| 87 | प्र. | 7 | कारीरितः | कारीरीतः |
| 95 | त. चि. | 2 | मङ्गल | मङ्गलं |
| 96 | न्या. शि. | 7 | प्रेत्यह | प्रेत्याह |
| 110 | ,, | 3 | यक्ति चिद्वद- | यत्किंचिद्वद- |
| 112 | ,, | 9 | भानं | मानं |
| 125 | न्या. शि. | 20 | तथा सति | तथा सति |
| 129 | प्र. | 1-2 | तदाग्रहात् | तदग्रहात् |
| 134 | न्या. शि. | 5 | अन्यथारव्यात्य- | अन्यथाख्यात्य- |
| 142 | ,, | 11 | सामग्रया- | सामग्र्या- |
| 153 | न्या. शि. | 10-11 | सामन्येति | सामान्येति |
| 160 | F. N. | 8 | तद्वार- | तद्द्वार- |
| 165 | ,, | 2 | तज्ज्ञानजन्य- | तज्ज्ञानाजन्य- |
| 187 | ,, | 3 | संज्ञयः | संशयः |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 191 | प्र. | 1-2 | अत्रत्यपदान्यनन्वितानि सन्ति । शुद्धपाठो न लब्धः । | |
| 196 | F. N. | 6 | धर्म | धर्म |
| 198 | प्र. | 4 | 2 | 1 |
| 198 | न्या. शि. | 3 | 1 | 2 |
| 203 | त. चि. | 5 | फलितोऽथः | फलितोऽर्थः |
| 217 | न्या. शि. | 8 | च्छित्यापादनं | च्छित्त्यापादनं |
| 222 | ,, | 5 | संशयर्थ- | संशयार्थ- |
| 230 | प्र. | 4 | यावात्स्वाश्रय- | यावत्स्वाश्रय- |
| 234 | न्या. शि. | 5 | सशया- | संशया- |
| 236 | ,, | 2 | सशये | संशये |
| 240 | ,, | 3 | इति | इति । |
| 240 | ,, | 16 | दाषाभाव- | दोषाभाव- |
| 241 | ,, | 7 | विशेष्कत्व- | विशेष्यकत्व- |
| 241 | , | 13 | पदस्याक्त- | पदस्योक्त- |
| 242 | ,, | 17 | संसविगमस्य | संसर्गावगमस्य |
| 244 | ,, | 9 | प्रवृत्ते गत्या | प्रवृत्तेरगत्या |
| 245 | ,, | 4 | तदृष्टान्ते- | तद्दृष्टान्ते- |
| 256 | न्या. शि. | 6 | यत्किंचित् | यत्किंचित् |
| 259 | प्र. | 6 | सिध्यतीत्यपरे | सिद्ध्यतीत्यपरे । |
| 267 | न्या. शि. | 2 | इति | इति । |
| 273 | प्र. | 2-3 | तदनुमानवमि- | तदनुमानमि- |
| 275 | न्या. शि. | 10 | प्रतत्वात् | प्रेतत्वात् |
| 276 | त. चि. | 5 | साध्य प्रसिद्धेः | साध्याप्रसिद्धेः |
| ,, | प्र. | 4 | स ध्यं | साध्यं |
| 280 | F. N. | 7 | 2 | 7 |
| 281 | न्या. शि. | 14 | वारण्याय | वारणाय |
| 286 | प्र. | 4 | सययादौ व्यभिचर | संशयादौ व्यभिचार |
| 289 | त. चि. | 1 | त्वकरचरणा- | शुद्धपाठो निरीक्षणीयः |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 289 | त. चि. | 10 | तत्स्मृयुपनीते | तत्स्मृत्युपनीते |
| 291 | न्या. शि. | 7 | ज्ञानान्तराप- | ज्ञानान्तरोप- |
| 292 | त. चि. | 7 | शरीज्ञानत्वस्य | शरीरज्ञानत्वस्य |
| 315 | न्या. शि. | 6 | प्रथमकृत- | प्रकृत- |
| 316 | ,, | 3 | दृष्टान्तेसाधन- | दृष्टान्ते साधन- |
| 319 | F. N. | 3 | 2 | 3 |
| ,, | ,, | 4 | 3 | 4 |
| 320 | प्र. | 1 | तदभय- | तदुभय- |
| 351 | न्या. शि. | 5 | हेतुत्वे | हेतुत्वे |
| ,, | ,, | 7 | अभिमानिनः | अभिमानिनः |
| 356 | ,, | 11 | -स्यावात् | -स्याभावात् |
| 359 | प्र. | 10 | तुघटत्व- | तु घटत्व- |
| 360 | F. N. | | अत्रत्याः संख्याः | यथाक्रमं शोधनीयाः |
| 381 | प्र. | 4 | आकाङ्क्षासत्त्योः | आकाङ्क्षाऽऽसत्त्यो |
| 397 | न्या. शि. | 10 | प्रवृत्यौप- | प्रवृत्त्यौप- |
| 398 | ,, | 11 | नि पेक्षत्वस्य | निरपेक्षत्वस्य |
| 399 | प्र. | 3 | संसर्गज्ञना- | संसर्गज्ञाना- |
| 400 | न्या. शि. | 1 | स्वतस्त्वंम् | स्वतस्त्वम् |
| 403 | F. N. | 2 | 1 | 2 |
| ,, | ,, | 3 | 2 | 3 |
| 405 | न्या. शि. | 1 | -स्यात्पत्तौ | -स्योत्पत्तौ |
| 406 | ,, | 1 | अप्रामाण्य | अप्रामाण्यं |
| ,, | ,, | 3 | प तस्त्वे | परतस्त्वे |
| ,, | ,, | 11 | दाष- | दोष- |
| 407 | ,, | 1 | -प्रामाण्य | -प्रामाण्यं |
| ,, | ,, | 4 | पृथग्युक्त्य- | पृथग्युक्त्या- |
| 415 | त. चि. | 10 | -प्यन्ताभाव- | -प्यत्यन्ताभाव- |
| 418 | न्या. शि. | 7 | सूक्ष्माकालो- | सूक्ष्मकालो- |

| पृष्टम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 420 | न्या.शि. | 12 | वषम्य- | वैषम्य- |
| 421 | प्र. | 2 | इत्यर्थः | इत्यर्थः |
| 425 | न्या. शि. | 8 | वुभयता | वुभयथा |
| 430 | प्र. | 1 | प्रकारें | प्रकारे |
| 431 | न्या. शि. | 1 | तादत्म्यं | तादात्म्यं |
| ,, | ,, | 5 | मुरव्यार्थ- | मुख्यार्थ- |
| 432 | प्र | 3 | भावभ्युप- | भावाभ्युप- |
| 438 | प्र. | 3 | व्यप्तिरिति | व्याप्तिरिति |
| ,, | ,, | 10 | अम्यथा | अन्यथा |
| 447 | न्या. शि. | 13 | स्वर्थ- | स्वार्थ |
| 448 | ,, | 2 | परत्वयोगात् | परत्वायोगात् |
| 460 | ,, | 11 | द्वैरुप्या- | द्वैरूप्या- |
| 466 | न्या. शि. | 7 | एतच्च पातत: | एतच्चापातत: |
| 468 | प्र. | 3 | शब्दादिवन्वि | (शब्दादिवन्वि) |
| 476 | न्या. शि. | 3 | साध्याता- | साध्यता- |
| 477 | ,, | 7 | तदशे | तदंशे |
| 479 | F. N. | | संख्या: शोधनीया: | |
| 486 | न्या. शि. | 19 | व्यर्थ | व्यर्थे |
| 488 | ,, | 16 | तादस्थ्यम् | तादवस्थ्यम् |
| ,, | ,, | 19 | मेद्- | भेद- |
| 490 | ,, | 15 | मेदाग्रह: | भेदाग्रह: |
| 491 | ,, | 8 | अद्येऽपि | आद्येऽपि |
| 492 | प्र | 4 | त्यथ: | त्यर्थ: |
| 495 | न्या. शि. | 13 | रजतानुमव- | रजतानुभव- |
| 497 | त. चि. | 1 | मेदाग्रहो | भेदाग्रहे, |
| ,, | न्या. शि. | 15 | -कारदित्यत | -कारादित्यत |
| 499 | ,, | 1 | विवक्षित | विवक्षितम् |
| 501 | प्र. | 5 | अभयेति | उभयेति |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 501 | न्या. शि. | 9 | वृत्त्यादि- | प्रवृत्त्यादि- |
| 505 | प्र. | 3 | योग्यता (पी) | योग्यता (पी) |
| 516 | न्या. शि. | 15 | -मिष्टो | -मिष्टौ |
| 526 | ” | 10 | तदन्यद्रूपवस्तु | तदन्यद्रूपवद्वस्तु |
| 527 | ” | 9 | भेदाग्रहस्येति | भेदाग्रहस्येति |
| 530 | त. चि. | 5 | -विंद ज्ञान- | विंदज्ञान- |
| 531 | प्र. | 2 | प्रवृत्त्याश्च | प्रवृत्त्योश्च |
| 532 | त. चि. | 1 | तत्रापीदं ज्ञानं | तत्रापीदंज्ञानं |
| 533 | ” | 1 | तेषामन्यथासिद्धावन्वय- | तेषामनन्यथासिद्धान्वय |
| 576 | न्या. शि. | 11 | प्रगल्भोक्त- | प्रगल्भोक्त- |
| 577 | Title | | अन्यथाख्यातिवादः | प्रत्यक्षलक्षणवादः |
| 578 | | | All Numbers should be corrected | |
| 579 | Title | | अन्यथाख्यातिवादः | प्रत्यक्षलक्षणवादः |
| 581 | ” | | ” | ” |
| 581 | न्या. शि. | 4 | जयदोवोक्त- | जयदेवोक्त- |
| 583 | Title | | अन्यथाख्यातिवादः | प्रत्यक्षलक्षणवादः |
| 584 | प्र. | 2 | संमवात् | संभवात् |
| 600 | न्या. शि. | 14 | नारहरि- | नरहरि- |
| 614 | न्या. शि. | 3 | नगु | ननु |
| 616 | त. चि. | 5 | बहिरिन्द्रियद्रव्य- | बहिरिन्द्रियजद्रव्य- |
| 617 | प्र. | 6 | योगत्वेनव | योगत्वेनैव |
| 626 | न्या. शि. | 11 | त्र्यसरेणोः | त्रसरेणोः |
| 633 | त. चि. | 1 | न चवं | न चैवं |
| 645 | प्र. | 2 | साधान- | साधन- |
| 662 | न्या. शि. | 4 | विशिष्ट | विशिष्टं |
| 666 | ” | 5 | वशिष्ट्या- | वैशिष्ट्या- |
| 667 | त. चि. | 3 | क्सल- | कलस- |
| 671 | न्या. शि. | 3 | वशिष्ट्या- | वैशिष्ट्या- |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 681 | प्र. | 6 | प्रत्यासत्व- | प्रत्यासत्तित्व- |
| 685 | न्या. शि. | 8 | नन्वनुपलल्ब्धि- | नन्वनुपलब्धि- |
| 698 | त. चि. | 1 | षरमाणु- | परमाणु- |
| 699 | न्या. शि. | 11 | इत्यशाङ्क्य | इत्याशङ्क्य |
| 700 | प्र. | 1 | पृष्ठलमति | पृष्ठकमेति |
| 702 | न्या. शि. | 11 | न चत्र त | न च तत्र |
| 705 | ,, | 4 | किमिन्द्रिय | किमिन्द्रियं |
| 710 | प्र. | 9 | -नुमान | -नुमानं |
| 711 | त. चि. | 7 | मेदात् | भेदात् |
| 716 | त. चि. | 1 | भुतल- | भूतल- |
| 729 | न्या. शि. | 5 | न्यामशिखा- | न्यायशिखा- |
| 732 | ,, | 7 | वुद्धिरेव | बुद्धिरेव |
| 734 | त. चि. | 4 | निस्सरण | निस्सरणं |
| 739 | प्र. | 3 | अन्यान्या- | अन्यान्या- |
| 740 | प्र. | 4 | -भ्युपम- | भ्युपगम- |
| 744 | न्या. शि. | 3 | वाच्यत् | वाच्यम् |
| 746 | प्र. | 8 | स्यात्मपिष्ठत्वेन | स्यात्मनिष्ठत्वेन |
| ,, | न्या. शि. | 5 | याप्ति- | व्याप्ति- |
| 747 | प्र. | 2 | जगदमाव- | जगदभाव- |
| 748 | प्र. | 3 | ग्रहणायव | ग्रहणायैव |
| 756 | त. चि. | 2 | तबुद्धि | तद्बुद्धि |
| 758 | ,, | 15 | व्यवतिहृ- | व्यवहृति- |
| 775 | प्र. | 5 | भाव | भावः |
| 778 | F. N. | 1 | 2 | 1 |
| 782 | न्या. शि. | 4 | व्यच्छेदार्थे | व्यवच्छेदार्थे |
| ,, | ,, | 5 | उकर्षा- | उत्कर्षा- |
| 783 | ,, | 5 | विजातीरूपं | विजातीयरूपं |
| 787 | त. चि. | 3 | श्रीमद्गङ्गेशो- | श्रीमद्गङ्गेशो- |

| पृष्ठम् | ग्रन्थः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 797 | ,, | 4 | सत्युद्भुत- | सत्युद्भूत- |
| 802 | न्या. शि. | 9 | तथाप्युभूत- | तथाप्युद्भूत- |
| 804 | F. N. | 2 | एतात्पर्यन्त- | एतत्पर्यन्त- |
| 809 | त. चि. | 9 | सबद्ध- | संबद्ध- |
| 811 | ,, | 9 | दुततेजसो | द्रुततेजसो |
| 828 | प्र. | 6 | स्वस्व- | यदा स्वस्व- |
| 829 | ,, | 9 | वात् | त्वात् |
| 831 | ,, | 3 | इन्दियान्तरेति | इन्द्रियान्तरेति |
| ,, | ,, | 15 | एवं | एकं |
| 835 | F. N. | 1 | विपरता | विपरीता |
| 847 | प्र. | 11 | मनाभावः | मानाभावः |
| 856 | ,, | 14 | श्रीरुदत्त- | श्रीरुचिदत्त- |
| 865 | त. चि. | 8 | कचिन्नि- | क्वचिन्नि- |
| 881 | ,, | 2 | दिद्रिय- | दिन्द्रिय- |
| 882 | ,, | 13 | वशिष्टयम् | वैशिष्टयम् |
| 883 | ,, | 10 | तद्वैशिष्टय | तद्वैशिष्टयं |

शुभमस्तु